॥ श्रीः ॥

# आनन्दवृन्दावनचम्पूः ॥

महाकविश्रीकविकर्णपूरप्रणीता, सुखवर्त्तनीव्याख्यया

सम्वलिता च ।

महर्षिश्रीमदुदयप्रकाशदेवतनूजैर्मुकुन्ददेव-
शास्त्रिभिः परिष्कृता च ।

सैषा

श्यामलाल श्रीकृष्णलाल गुप्ताभ्यां

लोकोपकृतये

Sa 80
KAR

मुम्बईमित्रयन्त्रालये मुद्रयित्वा
प्रकाशिता ।

ईसवी सन् १८६७ वत्सरे पञ्चविंशतितमाङ्कराज-
कीयधारानुसारेण सर्वेऽधिकाराः
स्वायत्तीकृताः ।

[illegible]

अयि विलक्षणा ! विचक्षणा ! आकर्ण्यतां कर्ण्यतां वहत्किमपि सुखं सहृदय हृदयस्य तोषदं दन्तोपितापि रसज्ञापि रसज्ञा रसज्ञापित सर्वस्वा न येन नयेन किं भविष्यतिअस्ति खलु तावदतिमशस्तैव चम्पूमात्रस्यापि रचनेति विदुषां धुरो नविशेषाविवादिषासुपेयुषामस्माकमयमकस्मादय भस्मावहुतमिव न भवति कस्मा अपि प्रयत्नः ॥

हंहो नैसर्गिक नीरक्षीरविवेचनचातुरीचमत्कार चमत्कृतजीवलोकपरमहं सपरमभागवताः ! शुभवन्तो भवन्तो हि मणिह्य इति श्रीमतामेव पुरस्तादिमां मणी मणीयसोपहारेण हारेणच समुचितामिव निवेदयामो वयामो वेदपरो वेदपरोऽपि न सारस्यम् ।
या पुरा वाचकवृन्दारकरानन्दवृन्दावनचम्पूरानन्दवृन्दावनहेतोः कस्मैचिन्न दीयते नससेऽपि गृहेऽतो जनेन सकलेन सकलेनापि पातुं पाययितुं च तद्रसं भूयते विपुलेन विकलेन विद्वत्सकुलेन ॥

इति प्रेक्षमाणैर्भक्तमनांस्युल्लिलासयिषुभिरस्माभिरतीवश्रमेण कतिपयखण्डानि कुतोऽपि कतिपयखण्डानि कुतोपीति कथमपि पूर्णतां संपाद्य संशोध्य पद्यानि चान्वयबोधकाङ्करङ्कितीकृत्य क्वचिद्दुर्बोधस्थले टिप्पणीमपि समावेश्य आयव्ययमनपेक्ष्य आत्मानुभूतमेतत्काव्यरसं तत्र भवतः श्रीमतो भवतोऽपि पाययितुं च्यापयितुं च श्रीमद्भागवतकल्पनिटपिनिटपान् सैषा मुद्राङ्कनं नीता ।

एषा सुप्रसिद्धजहांगीरमहीमहेन्द्रसभारत्नस्य पारसीक ( यावनी ) प्रभृतिविविधविद्यापारावारपारीणस्य अगाधशब्दसागरावगाहनोपार्जितान्यत्र दुर्लभ पद रत्नखनि सततभगवच्छ्रीमन्नारायणभक्तजनकण्ठाभरणस्य अवतारभूतस्य श्रीकर्णपूरकवेः कृतिः ।

तत्र च केनापि कारणेन कुत्रापि पदार्थयोरन्यथात्वप्रतिभानं चेत्तत्र सहसा कवेर्दुष्पणं नै कृत्यम् । एषोऽसाधारणः कविः । येन प्रायशः श्रीमद्दशमस्कन्धपूर्वार्द्धयावत् कथा लालित्येन वर्णिता यत्र क्वचित् काठिन्यांशोऽपि काव्यगुणमेवावलम्बते अस्यापरन्त एकदेशोऽपि विदुषा साधु पठितश्चेत् बलात्पूरयितुं मनसा भूयते स एषोऽत्र कवेर्वर्णयितुमशक्यो गुणो निबन्धे स्पष्ट एव किं बहुना ये केचिद् वाचकेषु संख्यावन्तः श्रोतृभिरीन्दरत्वेन प्रेक्ष्यमाणा आसन् सन्ति वा ते केवलमेनाध्य ग्रन्थस्याद्यपद्यलेनेवेति निश्चयम् । अस्मिन् ग्रन्थे त्रयस्तु मुख्या गुणाः सन्ति भक्तिशून्येऽपि भक्त्युत्पादनो भक्तेष भक्त्युद्रेकाद्यैकस्त्यागः यज्ञादीनां प्राण इवार्पितव्याकरणादीनांच्युतिच्युतादिकान्तिकदम्बकदत्ताको द्वितीयः । अधीतवे सति विद्वल्लोकद्विगर्पमन्त्कारदर्शनानुत्त्वाविजयमदः परोगामदो वा तृतीयः । अयगुणस्तु नारीणां प्रति पाद्रेक एव पद्यं चतुरैरपि अचतुरैः चतुर्भुजैरपि चतुर्भुजैर्न श्रूयते साक्षात् । सोऽयं वस्तुतः काव्यगुणशिरोरत्नमानमानिनो भवन्ति ॥

श्यामलाल श्रीकृष्णलाल

[illegible]

॥ ओ३म् ॥

श्रीहरिम्वन्दे

श्रीवृन्दावनविहारिणेनमः

# ॥ आनन्दवृन्दावनचम्पूः ॥

---

वन्दे कृष्णपदारविन्दयुगलं यस्मिन् कुरङ्गीदृशां वक्षोजेमणयीकृते विलसति स्निग्धोऽङ्गरागः स्वतः ॥ कांश्मीरं तलशोणिमोपरितनः कस्तूरिका नीलिमा श्रीखण्डं नखचन्द्रकान्तिलहरी निर्व्याजमाऽऽतन्वते ॥ १ ॥

---

वत्साऽऽस्वाद्य मुहु.स्त्वया रसनया प्रापय्य सत्काव्यतां ।
देयं भक्तजनेषु भाविषु सुरैर्दुष्प्राप्यमेतत्त्वया ॥
इत्याज्ञापयतेव येन निदधे श्रीकर्णपूराननं
बाल्ये स्वाङ्घ्रिदलामृतं गतिरसौ चैतन्यचन्द्रोऽस्तुन· ॥ १ ॥
नितान्तनैसर्गिककृष्णसारलीलाढ्यमुच्चैः पदमात्मनीनम् ॥
श्रीरूपसम्मत्यनुकूलमेव पूर्वैः श्रितं संश्रयते सुमेधाः ॥ २ ॥
नन्दोत्सवादिरासान्तां होलादोलादिकाधिकाम् ॥
श्रीकृष्णलीलां जग्रन्थ कर्णपूरो महाकविः ॥ ३ ॥
एकेन स्तवकेनाऽऽह वृन्दारण्यं तदास्पदम् ॥
बाल्यलीला ततः षड्भि. प्रादुर्भावमुखां हरेः ॥ ४ ॥
ततस्तु पञ्चदशभिर्लीला कैशोरवर्त्तिनीम्
एवं द्व्यधिकया चम्पूर्विंशत्या स्तवकै·कृता ॥ ५ ॥

अथ सोऽयं कविमुकुटमणिरास्वादितचरणसौरस्यः पुनरपि मनोमधुपराजेनोपभुज्यमाना पूर्वनव-नवमाधुर्य्यसम्पत्तिः श्रीभगवच्चरणकमलमानन्दावेशेन वन्दमान एव तन्निर्देशपरममङ्गलसुधाधारा-परम्परया निर्मीयमाणे प्रत्यूहतापानुद्गमगमकेऽपि प्रबन्धे सदाचारसम्माननार्थमवश्यकर्त्तव्यं । मङ्ग-लाचरणमप्यनुपञ्जयति ॥वन्देइति॥ अहं कृष्णपदारविन्दयुगलं वन्दे यस्मिन् कृष्णपदारविन्द युगले कुरङ्गदृशां प्रस्तोष्यमाणत्वाद्व्रजसुन्दरीणामङ्गरागः स्वतः स्वभावसिद्धः सन् विलसति । अत्र यस्मिन्निति पद तत्पदनिरपेक्षमेव । यथोक्तं काव्यप्रकाशे ॥ "यच्छब्दस्तूत्तरवाक्यार्थगत-

शोणस्निग्धाङ्गुलिदलकुलं जातरागं परागैः श्रीराधायाः स्तनमुकुलयोः कुङ्कुमक्षोदरूपैः ॥ भक्तश्रद्धामधु नखमहः पुञ्जकिञ्जल्कजालं जङ्घानालं चरणकमलं पातु नः पूतनारेः ॥ २ ॥

---

त्वेनोपपत्तिसामर्थ्यात्पूर्ववाक्यार्थगतस्य तच्छब्दस्योपादानं नापेक्षते" यथा "साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके। उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनरिति। कीदृशे तासां वक्षोजप्रणयीकृते वक्षोजयोः स्तनयोः प्रणयः प्रेम आश्लेषलक्षणं सम्बंधो यस्य तथाभूतीकृते। अर्थात्ताभिरेवेत्यर्थः। यद्वा वक्षोजाभ्यामेव प्रणयीकृते प्रणयोऽस्यास्तीति प्रणयी तथाभूतीकृते। तथाभावस्य सदातनत्वेऽपि "येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः" इतिवत् अभूततद्भावविवक्षामात्रेणैव च्विप्रत्ययः। अभूततद्भावोऽत्र प्राकट्यसमयमात्रदृष्ट्या वा। तेन तासां स्तनाश्लेषेण यद्यपि तदीयोऽङ्गरागोऽपि चरणद्वये संभवति तथाऽपि त्रैकालिकतत्सङ्गसूचनार्थं स्वभावादेवासौ तिष्ठतीति भावः। यद्वा निरन्तरतदाश्लेषात्तत्तदङ्गरागप्रलेपः पौनःपुन्येनैव स्वाभाविकतां गतश्चरणकमलतलादेः शोणिमादिगुणोऽभूदित्युत्प्रेक्ष्यत इति भावः तमेव विवृणोति। तलशोणिमा चरणयुगतलस्याऽरुणिमा काश्मीरं स्तनाग्रमण्डलवर्ति कुङ्कुमम्। उपरितन उपरिस्थनीलिमा श्यामता कस्तूरिका स्तनाधोमण्डलवर्त्तिमृगमदम्। तथा नखचन्द्राणां कान्तितरङ्गः। श्रीखण्डं स्तनमध्यमण्डलवर्तिचन्दनम्। निर्व्याजं यथास्यात्तथा तत्तदेवेदं ननु शोणिमादिकम् इत्येव मातन्वते विस्तारयन्ति ज्ञापयन्ति तलशोणिमादय इति। काश्मीरस्य जातिभेदेन हिङ्गुलवर्णत्वमपि प्रसिद्धम्। यथा "रमाननाभं नवकुङ्कुमारुणं विष्टब्धकपालारुणकुङ्कुमानना:" इत्यस्य वैष्णवतोषिण्यां व्याख्या च वाल्हीकदेशोद्भवकुङ्कुमस्यारुण्यमभिव्यक्तमिति। अत एवाऽमरे तत्पर्य्याये। रक्तसङ्कोचपिशुनं धीरलोहितचन्दनमिति। अभिधानान्तरेच "कुङ्कुमं रुधिरं रक्तमसृगुक्तं च पीतनमिति। वर्णभेदेन नामभेद इति ॥ १ ॥

वर्णितमेवार्थमवितृप्त्या पुनरत्यन्तसर्वोत्कृष्टतमत्वप्रतिपादकांशविशेषमाविष्कृत्य वर्णयँस्तथाभूत एव तत्र स्वाभीष्टवस्तुप्रार्थनया व्यञ्जयति। शोणेति। पूतनारेःश्रीकृष्णस्य चरणकमलं नोऽस्मान् पातु स्वसम्बाहनादिदानेन रक्षतु सेवायां नियोजनार्थं रक्षतु। पूतनारेरित्येतत्प्रतिबन्धकदुरितकूटदमने तत्कृपैव गतिरिति भावः। कीदृशं। शोणाः स्निग्धा अङ्गुलय एव दलकुलं यत्र तत्। श्रीराधायाः स्तनावेव मुकुलौ तयोः कुङ्कुमचूर्णरूपैः परागैरेव तदाश्लेषलब्धैर्जातरागम् अन्यस्य परागैरन्यस्य रागवत्तेत्याश्चर्य्यम्। भक्तानां श्रद्धैव मधु यत्र तत्। सतामेव श्रद्धायां तन्माधुर्य्यानुभवात्। श्रद्धैवमधित्युपचारेणोच्यते सातत्येन तदास्वादे प्रवर्त्तनार्थम्। साच भक्तानामेव संभवेत्तथापि भक्तपदोपादानाद्भुत्युत्तरकालभवा विशिष्टैरासक्तिरूपा ज्ञेया। भक्तिरसामृतसिन्धौ। "श्रद्धारतिर्भक्तिरनुक्रमिष्यतीत्यत्र श्रद्धापदस्य तथा व्याख्यानात् न तु प्राथमिक्येव सामान्यभूता तदानीं माधुर्य्यानुभवयोग्यतानुत्पत्तेरिति"। जङ्घे एव नाले यस्य तत् ॥ २ ॥

माधुर्य्यैर्मधुभिः सुगन्धि भजनस्वर्णाम्बुजानां वनं
कारुण्यामृतनिर्झरैरुपचितः सत्प्रेमहेमाचलः ॥
भक्ताम्भोधरधोरणी विजयिनी निष्कम्पशम्पावलि-
र्देवो नः कुलदैवतं विजयतां चैतन्यकृष्णो हरिः ॥ ३ ॥

---

तदेवं तच्चरणारविन्दमाधुरीवर्णनेनाऽऽगमनस्तत्सेवैकलालसत्यमभिव्यज्य पुनस्तमेव कलियुगाविर्भाविनगौरस्वरूपं स्वलोचनसाक्षादनुभूतचरसौन्दर्य्यमाधुर्य्यं भगवन्तं श्रीकृष्णचैतन्यदेवं वर्णयति **माधुर्य्यैरि**ति । चैतन्यनामा कृष्णश्चैतन्यकृष्णः । शाकपार्थिवादिः । प्रेम्णा भक्तचेतोपहरणात्स्वमाधुर्य्येण स्वपर्य्यन्तवैकुण्ठनाथादिसर्वचेतोहरणाद्वा हरिः । विजयतां विशेषेण स्वांशेभ्योऽपि परमोत्कर्षमाविष्करोतु । कीदृशः भजनानि नवविधानि श्रवणकीर्त्तनादीन्येव स्वर्णाम्बुजानि विरलप्रचारत्वाद्भक्तसरोवराविर्भावित्वाच्च तेषां वनं तद्रूपः अनेन श्रवणादिसाधनभक्तिमयस्वरूपत्वं गौराकृतित्वं भक्तमनोमधुकरामोदकत्वञ्चोक्तं कीदृशं वनं माधुर्य्यैर्मधुभिः सुगन्धि अम्बुजपक्षे माधुर्य्यैरेव मधुभिरितिमधूनामप्यत्रवैलक्षण्यम् भजनपक्षे साधनदशायामपि तेषां श्रवणादीनां केवलरागप्रवर्त्यमानत्वेन ऐश्वर्य्यज्ञाननिरपेक्षतया तत्तदद्भुतलीलादिनिष्ठानां यानि माधुर्य्याणि रोचकत्वलक्षणानि तान्येव मादकत्वान्मधूनि तैः सुगन्धि सुगर्वयुक्तम् । वैकुण्ठनाथादिविषयेभ्यो भजनेभ्योऽप्यात्मपरमोत्कर्षाविष्कारात् किं पुनर्ज्ञानयोगादिभ्य इति "गन्धो गन्धक आमोदे लेशे सम्बन्धिगर्वयो रिति **विश्वः**" अनेन स्वमाधुर्य्यामोदितनिखिलभुवनत्वमुक्तम् । पुनः कीदृशः । सतां शोभमानानां प्रेम्णां महाराशिरूपत्वात् हेमाचलः कनकगिरिर्मेरुः । तत्र सतामिति जात्याहेमाचल इति प्रमाणेनच प्रेम्णामन्यप्रेमत उत्कर्षः सूचितः । अनेन पूर्वोक्तताहृशश्रवणादिसाधनभक्ति जनितसाध्यप्रेमभक्तिमयस्वरूपत्वमप्युक्तम् । तथाभूताचलः कीदृशः भजनप्रवृत्तिकारणानि कारुण्यान्येवाऽमृतानि तन्मयैर्निर्झरैरुपचितः यास्तावी कारुण्यशक्तिः प्रेमभक्तिनिष्ठैव तदाधारेपूदयमाना प्रतीयते प्रेमांशं विना तस्यास्तत्राऽनुदयदर्शनात् । तथाह्युक्तं **भक्तिरसामृतसिन्धौ** । जातरतिभक्तनिरूपणे "उत्पन्नरतयः सम्यक्" इत्यादिना साधकभक्तस्य जातरतित्वमुदाहृतं चैकादशस्कन्धवचनम् प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यम इति । न साधकभक्तेऽपि तादृशकृपादि सम्भवतीति । अनेन स्वकृपामृतधाराप्लापितजगज्जीवकत्वमुक्तम् । अथ उत्पन्नप्रेमिकभगवत्साक्षात्स्वरूपप्रकाशचमत्कारेण स्वावारमलङ्करोतीति द्योतयन् विशिनष्टि । निष्कम्पानां स्थिराणां शम्पानां विद्युतामावलिः श्रेणी तद्रूपः । सा कीदृशी भक्ता एवाम्भोधराः प्रेमामृतवर्षणशीलत्वात्तेषां धोरणी श्रेणी तत्रैव विजयिनी परमोत्कर्षेण स्थायिनी अनेन प्रेमभक्तिमज्जनमात्रलभ्यसाक्षात्स्वरूपप्रकाशत्वमुक्तम् । तदेवं तदीय शुद्धसत्त्वविशेषस्वरूपमेवप्रथमं भक्तेषु श्रवणकीर्त्तनादि रूपेण तिष्ठति तदेव दृढाभ्यासेनाऽपिशक्त्या अनश्वरस्वरूपमेव प्रेमरूपतामापाद्यते तत्प्रेमैकसपरिकरभगवत्साक्षात्स्वरूपप्रकाशानुभवचमत्कारतां प्राप्नोतीति वैष्णवसिद्धान्तोऽपि ध्वनित इति ॥ ३ ॥

नमस्यामोऽस्यैवं प्रियपरिजनान् वत्सलहृदः प्रभोरद्वैतादीनपि जगदघौघक्ष-
यकृतः । समानप्रेमाणः समगुणगणास्तुल्यकरुणाः स्वरूपाद्या येऽमी सर-
समधुरास्तानपि नुमः ॥ ४ ॥
गुरुं नः श्रीनाथाभिधमवनिदेवान्वयविधुं नुमो भूपारत्नं भुव इव विभो-
रस्य दयितम् । यदास्यादुन्मीलन्निरवकरवृन्दावनरहःकथास्वादं लब्ध्वा
जगति न जनः क्वाऽपि रमते ॥ ५ ॥

---

वत्सलहृदः अर्थान्मादृशेषु सर्वेषु येऽमी स्वरूपाद्याः श्रीदामोदरस्वरूपश्रीरामानन्दरायश्रीरूपश्रीसनातनाद्याः कीदृशाः अस्यप्रभोरिव समानप्रेमाणः । यद्वा परस्परमेवसमानास्तारतम्येन मादृशैर्लक्षयितुमशक्यः प्रेमा येषां ते । तानपि नुमः स्तुमः । अधिकारादद्वैतादीनपि नुमः । तानपि नमस्याम इत्युभयत्रैवोभयं योजनीयम् । प्रभोरद्वैतादीन् प्रभोः स्वरूपाद्या इति श्लेषभङ्ग्यातच्छक्तिमया एव त इति बोधितम् ॥ ४ ॥

अवनिदेवा विप्रास्तद्वंशे विधुं चन्द्रम् तेन विप्रान्वयस्य समुद्रत्वमुक्तम् । भुवः पृथिव्या भूपारत्नमिव "उद्बाहुरिव वामनइति" दर्पणमुपकुरु शयनोपरिमामिव नूपुरमनुगतिशूरमिति एकावयवसंस्थेन भूषणेनेव कामिनीत्यादि प्रयोगदर्शनात् इवेन सह नित्यसमासवचनं विभक्त्यलोप इत्यस्य प्रायिकत्वप्रतिपादनाद्व्यस्तप्रयोगोऽयं नाऽनुपपन्न इति । चन्द्रोऽपि शिवमूर्त्तेर्भूपारत्नं भवति । अस्य विभो. श्रीचैतन्यदेवस्य यदास्याद्यन्मुखादुन्मीलन्त्याः निरवकरायाः निर्दोषायाः वृन्दावनस्य रहःसम्बन्धिकथाया आस्वादम् । तस्य विधुत्वात्तन्मुखोद्गीर्णत्वेन कथाया अमृतत्वमिति भावः । क्वाऽपि जगति भोग्यस्थाने न रमते नाऽऽसक्तो भवति वृन्दावन एव शीघ्रमागच्छतीति भाव इति स्वस्य वृन्दावनवासे हेतुरपि दर्शितः । अत्र यद्यपि श्रीगुरुवन्दनानन्तरमेव देवतावन्दनं श्रीसूतादिषु दर्शनात्सदाचारप्राप्तम् तथाऽपि श्रीशुकादौ विपर्य्ययेणाऽपिदर्शनादविरुद्धमेवेदम् । **किम्वा** वस्तुतो. दीक्षागुरुरप्यस्य श्रीभगवानेव । तदाज्ञापारवश्येनैव गुर्वन्तराश्रयणम् तथाहि कथा **श्रीचैतन्यचरितामृते** ॥ एकदा महाप्रभुर्द्वित्र प्रियसहचरसङ्गी स्वपार्षदप्रवरस्यैतत्पितुः शिवानन्दसेनस्य रथयात्रादर्शनच्छलेन स्वचरणान्तिकमागतस्यावासमागतस्तेन च ससम्भ्रमंवन्दितचरकमलस्तत्र च बाल्यविलासं प्रपञ्चयन्तं पञ्चषड्वर्षवयसं (श्रीमत्परमानन्दपुरी श्रीपादप्रसादपुरुषोत्तमक्षेत्रजातत्वात् पुरीदासनामानमेतं) पित्राकारितवन्दनमालोक्य साधुस्तत्राऽयं पुत्रो जात इत्यभिनन्द्य कृपयैतच्छिरसि चरणं दिधीर्षुर्बाल्यावेशेन मुखं व्याददत्तवन्तमेनं कौतुकेन चरणाङ्गुष्ठमास्वादयामास दिव्यकाव्यकर्तृत्वशक्तिमप्यलक्षितं सञ्चारयामास वद वद कृष्ण कृष्णेत्युवाचच । ततोऽसौ शिशुरुत्फुल्लमुखो ब्रूहि ब्रूहीति पित्रादिभिः प्रयुज्यमानोऽपि यदिनाऽनुजगाद प्रभुरपि विस्मयमभिनीय विश्वमेव कृष्णनाम ग्राहयितुमहमशक्तं न पुनरेनमेकमेवेत्युवाच । तदा श्रीस्वरूपगोस्वामिभिरुक्तं भगवता स्वयमेव स्वनाममहामन्त्रमुपदिष्टोऽस्मि कथं पुनस्तमुच्चैरुच्चारयामीत्येवमस्य गम्भीरहृदयमनु-

गते स्वस्वाभीष्टं पदमऽहह ! चैतन्यभगवत्परीवारे पर्य्याद्भृतवति
च यस्मिन्निजपदम् । विलुप्तो वैदग्धी प्रणयरसरीतिर्विगलिता
निरालम्बो जातः सुकविकवितायाः परिमलः ॥ ६ ॥
तव स्तवं किं करवाणि वाणि माणी न वक्तुं क्षमते त्वदीहाम् ॥
यतः सुवद्धैव तनोपि मानं तमन्यथा सन्तमपि क्षिणोषि ॥ ७ ॥
मातर्वाणि ! तवाऽनिशं करुणया लब्धप्रमोदा वयं किं नु त्वां स्तुमहे
त्वयैव यजेतां तोयेन कस्तोयधिम् । एतत् प्रत्युपकुर्महे भगवतः कृष्णस्य
लीलामृतस्रोतस्येव निमज्जयामि भवतीं नोत्थेयमस्मात् पुनः ॥ ८ ॥
आत्मनः प्रियतया तनुभाजां नात्मनः कृतिषु दूषणदृष्टिः ।

---

मीयत इति । परेद्यवि वत्स ! यद् किञ्चिदित्युक्त एव प्रभुणा शीघ्रं पद्यमेकं बबन्ध "श्रवसोः कुवलयमक्ष्णोरञ्जनमुरसोमहेन्द्रमणिदाम । वृन्दावनतरुणीनां मण्डनमखिलं हरिर्जयति" ततः संतुष्टेन भगवता कविकर्णपूर इति नाम तद्दिनमारभ्य कृतवता तदभीष्टमन्त्रराजमपि हृदैव स्वयमुपदिश्याऽपि लोकरीतिख्यापनाय समये श्रीनाथपण्डितद्वाराऽपि पुनरसावुपदिदेशेति ॥ ५ ॥

प्रारिप्सिते काव्ये वर्णयितव्यस्य रसस्य प्रेम्णश्च सामस्त्येनास्वादकानदृष्ट्वा खिद्यन्नाह । निजपदं प्रपञ्चागोचरं निजधाम प्रकाशविशेषमित्यर्थः । तदानीं तत्परीवाराणां कियतां प्राकट्येऽपि तच्छोकव्याकुलत्वेन वैदग्ध्याद्यनाविष्कारेण तदन्तिक गमनोन्मुखत्वेन च गतइत्युक्तम् । भाविकालदृष्ट्या वा । परिमलः चर्वणाविशेषविमर्दोत्थ आस्वादचमत्काररूपमनोहर गन्धः । विमर्दोत्थे परिमलो गन्धे जनमनोहर इत्यमरः । तेन कवितायाः पुष्पमञ्जरीत्वारोपेणास्वादनीयरसत्वं ध्वनितम् । निरालम्बः तदास्वादकतादृशरसिकभक्तमधुपानां विरलप्रचारत्वादिति भावः ॥ ६ ॥

श्रीभगवत्प्रसादजनित वैचित्रीकां स्ववाणीं संबोधयंस्तया श्रीभगवन्तमेव स्तोतुं प्रतिजानीते तवेति । सुष्ठुवद्धैव सती मानमादरं तनोषि अन्यथा न सुष्ठुवद्धा सतीवर्त्तमानमपि तं मानं क्षिणोषि नाशयसि । येन दृढं वध्यसे तस्यैव मानं विस्तारयसीति विचित्रा तव चेष्टा इत्यर्थः । अतः किमिति स्तवं करवाणि सुष्ठुवध्नाम्येवेति भावः ॥ ७ ॥

ननु प्रणयरसनया हृदि वद्धापि भक्तैर्भगवांस्तूयत एवेत्यतः स्तवे को दोषस्तत्राह । तवकरुणया लब्धः प्रमोदो यैस्ते वयं किं नु भोः त्वयैव वाण्यैव वाणीं स्तुमहे । जलेनैव जलधिं जलाशयं कः पूजयतु स्तवनसाधनस्याऽन्यस्याऽभावात् न स्तुमहे इत्यर्थः । त्वत्कर्तृकानन्ददानस्य एतदेव प्रत्युपकरणं कुर्महे । कृष्णस्यैव लीलामृतस्रोतस्येवनिमज्जयाम्येवेत्यर्थसौन्दर्यादेवकारश्लिष्टेन योजनीयः । अस्मादमृतस्रोतसः भवत्या पुनर्नोत्थातव्यमिति । स्रोतोऽम्बुवेगेन्द्रिययोरिति विश्वः ॥ ८ ॥

ननु पूर्वपूर्वमहाकविकृतकाव्येष्वप्यर्वाचीनैर्मम्मटादिभिर्दोषोत्थापनात्काव्यनिर्माणे कोऽयमाग्रहः सत्यं ये विद्वांसः परकृते काव्ये दोषान् विचिन्वन्ति तत्कृतेऽप्यन्ये तथेत्यनवस्थितिरेवेत्यर्थान्तर-

सर्वतस्तिमिरमस्यति दीपो नाऽऽत्ममूलतिमिरं विनिहन्ति ॥ ९ ॥

निर्मलेऽपि सुजनाः स्वचरित्रे दोषमेव पुरतः प्रथयन्ते ।
उज्ज्वलेऽपि सति धाम्नि पुरस्ताद्धूममेव वमति * स्फुटमग्निः ॥ १० ॥

अर्थादिपर्य्यालोकलनं विनापि प्रह्लादयन्ते सुकवेर्वचांसि ।
विनावगाहादपि दृष्टिमात्रान्मनः पुनन्त्येव हि पुण्यनद्यः ॥ ११ ॥

तावत् पदानि जायन्ते निर्दोषाणि पृथक् पृथक् ॥
यावत्स्वरसनासूच्या तानि ग्रथ्नाति नो कविः ॥ १२ ॥

निर्मलयसि भुवनतलं सततात्क्षिप्तेन परमलेन ।
खलरसने ! सम्मार्ज्जनि ! तदपि च भीति *भवत्स्पर्शे ॥ १३ ॥

न लवोऽपि लवेन च व्यथायाः परिवृद्धौ विदुनोति यस्य सर्वः ।

---

न्यासेनाह। तनुभाजामात्मनः प्रियतया हेतुना आत्माहि प्रियो भवतीत्यत आत्मनः कृतिषु दूषणदृष्टिर्नस्यात् किन्तु सा परकृतिष्वेव स्यादित्यर्थः। अस्यति दूरीकरोति। आत्ममूलतिमिरं दीपमूलस्थमन्धकारं दीपान्तरेण तस्यापि नाशः सम्भवतीति भावः ॥ ९ ॥

साधूनां कवीनां पुनरन्य एव स्वभाव इत्याह। पुरतः प्रथममेव +प्रथयन्ते ख्यापयन्ति पर्य्यालोचयन्तीत्यर्थः। स्वचरित्रे स्वक्रियायां न तु परकृते। धाम्नि स्वीयतेजसि निर्मलेऽपि सति ॥ १० ॥

ध्वनिगुणालङ्काराद्यवगाहनसमर्थ एव जने काव्यमिदं सफलीभविष्यति नान्यत्रेति चेदत आह- **अर्थादीति**। अर्थादीनां अर्थशब्दगुणालङ्काररसानां पर्य्यालोचनं विनापि। मनः पुनन्ति किं पुनर्देहेन्द्रियादीन्। पुण्यनद्यः श्रीगङ्गाद्याः ॥ ११ ॥

ननु परकरिष्यमाणं दोषासञ्जनं किमिति प्रथमं स्वयमेवाङ्गीकुरुषे निर्दोषैरेव पदैः किमिति न निबध्नासि तत्राह **तावदिति**। मिलितानि कृत्वा रसनासूच्या ग्रन्थने निर्दोषीकरणमतिदुष्करमेवेति भावः। तेन सहृदय हृदयविक्षेपका रसापकर्षका दोषा एव हेयाः केचित् यमकानुप्रासाद्यनुरोधेनोपादेया अपि सर्वथा निर्दोषस्यकाव्यस्यैकान्तमसम्भवादिति प्राचीनैरप्युक्तमिति ॥ १२ ॥

गुणालङ्काररसोत्कर्षेऽपि केवलं दोषमेव ये गृह्णन्ति ते परकीर्तिलोपचिकीर्षवः खला दूरे परिहार्य्या इत्याह **निर्मलयसीति**। हे खलजिह्वे सम्मार्ज्जनि स्वर्णमणिमयस्थलेऽपि कथञ्चिदलक्षितमकिञ्चित्करं सूक्ष्मतृणशर्करादिखण्डरूपं मलमेव ग्रहीतुं तत्र पवित्रे स्थाने निजस्पर्शादपावित्र्यमपि कर्तुं प्रविशतीति भावः ॥ १३ ॥

यस्य लवेन छेदेन व्यथाया लवोऽपि लेशोऽपि न भवति। यस्य परिवृद्धौ सत्यां सर्वोजनो विदु-

---

* स्फुटदग्निरित्यपिसाधीयान्पाठः स्फुरदग्निरित्यपिकेचित्।

+ घटाद्यन्तर्गतत्वान्मितां ह्रस्व इति ह्रस्वत्वम्।

* भवत्याःस्पर्शे + भवत्स्पर्शे सर्वनाम्नो वृत्तिमात्रे पुम्वद्भावः।

न खलो नखलोमतो मैतोन्यैस्तेमवद्धाः किल के न संत्यजेयुः ॥ १४ ॥
आनन्दवृन्दावननामधेयां चम्पूमिमां कृष्णचरित्रचित्राम् ॥
मनोविनोदाय रसग्रहाणां चक्रे * प्रमोदाय च कर्णपूरः ॥ १५ ॥
यथा तथा स्युः कुसुमानि माला चित्रायते गुम्फनकौशलेन ।
तत्रापि चेत्तानि सुसौरभाणि भवन्ति रम्याणि तदा पुनः किम् ॥ १६ ॥

अस्ति सकलवैकुण्ठसारमपि न वैकुण्ठसारं । अप्रभूतेष्वपि नवप्रभूतेषु चिन्महःसु समुत्पन्नम्। अकृतकमपि कृतकं प्रकृतिसिद्धमपि अप्रकृतिसिद्धम्। अतएव नित्यभूतमपि अनित्यभूतं सुरसार्थबहुलमपि सुरसार्थदुर्लभम् ॥ १७ ॥

---

नोति विशेषेण उपतप्तो भवति। दुनोतिरयमकर्मकोऽप्यस्ति "देहि सुन्दरि दर्शनं मममन्मथेन दुनोमीत्यादि" गीतगोविन्दादिदृष्टत्वात्। तथाभूतान्नखलोमतः खलोऽन्यो न मतः न ज्ञातः ॥ ये नखाः यानि लोमानि च छेदयितुमिष्टानि तत्स्वरूप एव खलोऽनुभूतस्ताद्धर्म्यादित्यर्थः तमेतादृशम् अबद्धाः स्वतन्त्राः किल निश्चितं के न संत्यजेयुः। ये बद्धास्तत्पारवश्यबन्धने पतितास्त एव न त्यजेयुरिति ॥ नखलोमान्यपि कारागारस्था एव न त्यजेयुरित्यनेनापि साधर्म्यात्। तमित्यस्य पुंस्त्वनिर्देशो दार्ष्टान्तिकपक्षस्यैवप्राधान्यात् ॥ पूर्वत्र तनुभाक् शब्दोक्तानांविदुषां परकृतकाव्यदोषोद्धृत्या तन्निष्ठरसालङ्कारगुणादिप्रकाशकत्वेन च घटपटादिनिष्ठतिमिरमात्रहारकतद्रूपादिप्रकाशकदीपेनसाधर्म्यम्। खलानां पुनः सतोऽपि गुणालङ्कारादीनाच्छाद्य काव्यलोपचिकीर्षया केवलदोषासञ्जनमेव कुर्वतां मुखपाण्यादिसौन्दर्य्याच्छादक देहशोषक नखलोमसाधर्म्यमिति विवेकः। आत्मन इत्यादिद्वयं सामान्यत एव साधूनामुत्तमत्वतारतम्यज्ञापकम्। तथानिर्मलयतीत्यादिद्वयं खलानामधमत्वतारतम्यज्ञापकमित्येवं पद्यचतुष्टयं मध्यपद्यद्वयानुरोधेन काव्यप्रकरण एव व्याख्यातमिति ॥ १४ ॥

इमां चम्पूं गद्यपद्यमयी या सा चम्पूरित्यभिधीयत इत्याद्युक्तलक्षणाम् आनन्दानां वृन्दम् अवति पालयति तथाभूतं नामधेयं यस्यास्तां श्लेषेण आनन्दरूपं वृन्दावनसम्बन्धिकृष्णचरित्रंच वर्णनीयत्वेन वर्त्तते यत्र तन्नामधेयं यस्यास्तां श्लेषेण कर्णपूर इति रसग्रहाणां कर्णावानन्देन पूरयतीति कविकर्णपूर इतिनाम्नो भगवता कृतत्वात्स्वकथनदोषसहनेनापि तन्निर्देशस्तत्राप्यतिलज्जया कविशब्दाप्रयोगः ॥ १५ ॥

सुसौरभाणि दशमस्कन्धसम्बन्धि कृष्णचरित्ररूपत्वेन रम्याणि तत्रापि वृन्दावनीयत्वेन सर्वोचित्ताकर्षकत्वात् ॥ १६ ॥

वर्णनीयानां श्रीकृष्णविलासमहारत्नानां खनिभूतत्वात् प्रथमं सपरिकरं वृन्दावनं वर्णयति। अत्र-दीर्घदीर्घेषु गद्येषु सुखबोधार्थं वाक्यमध्येप्यङ्का देयाः ॥ अतिहृस्वेषु तेषु बहुवाक्यान्तेऽपि क्वापि

---

* स्वमोदायेत्यपिपाठः ।

विपल्लवैरपि विपल्लवस्याप्यपदैः। अप्रसवैरपि सुप्रसवैः। लीलायतनैरपि अलीलायतनैः। शाखिभिराकीर्णं मन्दारबहुलमपि अमन्दारं। वकुलैरपि नवकुलैः। तमालैरपि नतमालैरुपशोभितम् ॥ १८ ॥

किं बहुना—भगवद्वपुरिव उज्जृम्भमाणमन्मथकरजलेखा रक्तचन्दनधवलकुचमियालताली भृङ्गरूपं पुरुकरुणञ्च ॥ १९ ॥

टीकाभावादपीत्येवमत्र नास्ति नियम इति। वृन्दावनं नामवनमस्ति। वर्त्तमानप्रयोगोऽस्यनित्यत्वबोधकः सकलेभ्यो वैकुण्ठेभ्यः सारं श्रेष्ठमपि न वैकुण्ठसारं न वै निश्चितं कुण्ठः सारो बलं यस्य तत्। सतापि महता परमैश्वर्य्येण न कुण्ठीभूतं महामाधुर्य्यरूपं बलमस्येत्यर्थः। एवमादिषु शब्दमात्रेणैव विरोधाद्विरोधाभास इति। यत्प्रभृतेषु केदाररूपेषु चिन्महःसु सम्यगुत्पन्नमिति प्रतीतिमात्रत्वज्ञापनाय वस्तुतस्तु अनादिसिद्धमेव पुंनपुंसकयोर्वप्रः केदारः क्षेत्रमित्यमरः। चिन्महसामपि जातिपरिणामाभ्यामुत्कर्षमाह। नवानि नित्यनवनवोल्लासमानानि च अनुरागविवर्त्तमयत्वात् प्रभूतानीति प्रचुरतमानि परिपूर्णतमत्वात् तेषु। अकृतकम्। अकृत्रिमं कृतकं कृतं कं सुखं येन तत्। प्रकृत्या स्वभावेन स्वरूपशक्त्यैव सिद्धं न च प्रकृत्या मायाशक्त्या सिद्धम्। अकारो विष्णुस्तस्य नित्यरूपाणि भूतानि प्राणिनः पृथिव्यादीनि वा यत्र तत्। युक्तेक्ष्मादावृते भूतं प्राण्यतीते समेत्रिष्वित्यमरः। शोभना रसा आस्वादायेषां तथाभूतैरर्थैः फलादिवस्तुभिः शृङ्गारादिरसैर्वा बहुलम्। सुराणां देवानां सार्थैः समूहैः दुर्लभम्। सङ्घसार्थौ तु जन्तुभिरित्यमरः ॥ १७ ॥

शाखिभिर्वृक्षैराकीर्णं व्याप्तम्। कीदृशैर्विशिष्टाः पल्लवा येषां तैः। विपदां लवस्य लेशस्याप्यपदैः। न विद्यते प्रसवो जन्म येषां तैः नित्यसिद्धत्वात्। शोभनाः प्रसवाः पुष्पफलादयो येषां तैः। प्रसवस्तु फले पुष्पे वृक्षाणामितिविश्वः। लीलानाम् आयतनैर्गृहरूपैः अलीनां भ्रमराणाम् इला वाचस्तासामयतनं यत्नाभावः सौलभ्यं यत्र तैः। भूगोवाचस्त्विडा इला इत्यमरः। मन्दारैर्देवतरुभिर्बहुलम् अमन्दानामुत्तमानामेव आरोगमनं यत्र तत्। ऋ गतौ घनन्तः। नवकुलैर्नूतनसमूहैर्नता नम्रा माला श्रेणी येषां तैः ॥ १८ ॥

उज्जृम्भमाणेन उद्गच्छता मन्मथेन कामेन हेतुना याः करजलेखाः नखलेखास्ताभीरक्तौ चन्दनेन धवलौ कुचौ यासां ताः प्रिया एव लताल्यस्तासु भृङ्गरूपम्। पक्षे उज्जृम्भमाणं प्रकाशमानं मन्मथादीनां वृक्षभेदानां रूपं सौन्दर्य्यं यत्र तत्। तत्र मन्मथः कपित्थः करजलेखा करञ्जश्रेणी रक्तचन्दनधवौ प्रसिद्धौ लकुचो डेहुआ इति ख्यातः। अत्र कचिदपभ्रंशभाषाप्रायो गौडीयानामेव लिख्यते। ताली ताडीपत्र इति ख्यातः। भृङ्गंगुडत्वक् इति। कपित्थे स्युर्दधित्थग्राहि मन्मथाः। करजश्च करञ्जके। लकुचो निकुचो डहुः। राजादनं प्रियालः स्यात्। ताली खर्ज्जूरी च तृणद्रुमाः। त्वक्पत्रं सुत्कटं भृङ्गमित्यमरः। पुरुकरुणं बहुकृपायुक्तं बहुकरुणवृक्षयुक्तञ्च। इत्येवमादिषु उज्जृम्भमाणेत्यादि शब्दमात्रसाम्येनैवोपमा सकलफलं पुरमेतज्जातं संप्रति सितांशुबिम्बामिवेत्यादिवत् विरोधाभास इव उपमाभासोऽयमिति कश्चित् ॥ १९ ॥

मुनिमण्डलमिव शाण्डिल्यलोमशादिसहितम् उपनतवानप्रस्थगणञ्च गायत्रीजपाकुलितञ्च । समरस्थलमिव अम्लानबाणकरवीरकुलाकुलितम् । चर्मिनिर्मितक्रीडञ्च पीलुपरिवृतञ्च ॥ २० ॥

कुरुपाण्डवायोधनमिव गाङ्गेयारुष्करार्जुनशरपरिपूर्णं शिखण्डिमण्डितञ्च स्वमिव निरन्तराशोकातिमुक्तपुरुषप्रायम् ॥ २१ ॥

निरन्तराल विराजमानज्योतिश्चक्रमपि अविकर्त्तनम् अनिशेशम् अभौमं विबुधम् अजीवम् अकविगम्यम् अमन्दं विकेतु वितमः निस्तारकम् ॥ २२ ॥

शाण्डिल्येति स्पष्टम् । पक्षे शाण्डिल्यो विल्वतरुः । लोमशा जटामांसी। विल्वे शाण्डिल्य शैलूषौ। जटामांसी जटिला लोमशा मिसिरित्यमरः । वानप्रस्थस्तृतीयाश्रमी महुआ इति ख्यातो मधूकश्च । मधुकेतु गुडपुष्प मधुद्रुमौ वानप्रस्थमधुष्ठीलावित्यमरः । गायत्रीति स्पष्टं पक्षे गायत्री खादिरः जपा ओड्रपुष्पे । गायत्री बालतनयः खदिरो दन्तधावनः । ओड्रपुष्पं जपा इत्यमरः । समरस्थलं युद्धस्थानम् अम्लानबाणयुक्तः करो यस्य तथाभूतेन वीरकुलेन आकुलितं व्याप्तं । पक्षे । अम्लानादीनां कुलेन व्याप्तम् अम्लानस्तु महासहा । नीला झिण्टी द्वयोर्बाणा इत्यमरः । चर्मिभिर्योधविशेषैः कर्तृभिर्भूर्जवृक्षैः करणैश्च निर्मिता क्रीड़ा यत्र तत् । भूर्जे चर्मिमृदुत्वचावित्यमरः । पीलुर्हस्ती वृक्षभेदश्च । द्रुमप्रभेदमातङ्गकाण्डपुष्पाणिपीलव इत्यमरः ॥ २० ॥

आयोधनं युद्धं गाङ्गेयस्य भीष्मस्य अरुष्करा व्रणकरा येऽर्जुनशरास्तैः परिपूर्णम् । व्रणोऽस्त्रियामीर्ममरुरित्यमरः । पक्षे गाङ्गेयं स्वर्णं तन्नामानागकेशरः अरुष्करो भल्लातकी अर्जुनशरौ प्रसिद्धौ। नागकेशरः काञ्चनाह्वयः । वीरवृक्षोऽरुष्करोऽग्निमुखीभल्लातकीत्रिष्वित्यमरः । शिखण्डी द्रुपदपुत्रः पक्षे मयूरः । यद्वा शिखण्डिपदेन कथञ्चिद्गुञ्जायूथिकयोरप्यभिधानं गुञ्जायां यूथिकायां शिखण्डिनीति विश्वः। स्वमिव वृन्दावनमिव निरन्तरं सदा अशोकाः शोकरहिताः अतिमुक्ता मुक्तानतिक्रान्ता भक्ता ये पुरुषास्तत्प्रायम् । प्रायो भूम्न्यन्तगमने चेत्यमरः । पक्षे निरन्तरा निरवकाशा निविडा इति यावत् । अशोका अतिमुक्ता माधवीलता पुरुषाः पुन्नागास्तत्प्रायम् । अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवीलता । पुन्नागेपुरुषस्तुङ्ग इत्यमरः ॥ २१ ॥

निरन्तरालं निविडं यथा भवत्येवं विराजमानं ज्योतिश्चक्रं यत्र तथाभूतमपि अविकर्त्तनं सूर्य्यरहितम् अनिशेशं चन्द्ररहितमित्यादौ सर्वत्रापि विरोधः । परिहारार्थश्च निविडं विराजमानं ज्योतिषां कान्तीनां चक्रं समूहो यस्य तत् । यद्वा निरन्तरं सर्वदा अलवि लवः च्छेदस्तद्रहितं केनाप्यनाश्यमित्यर्थः । तत्र्यानामच्छेदकमिति । राजमानज्योतिः प्रदीप्ततेजस्कं चक्रं सुदर्शनाख्यं यत्र तत् चक्रेण रक्षिता मथुरेति श्रुतेः । यद्वा निरन्तरमेव अलविराजमानं रविणा विनैव राजमानमित्यर्थः रलयोरैक्यस्मरणात् ज्योतिश्चक्रं प्रकाशमण्डलं यत्र तत् । अविकर्त्तनेत्यादि सूर्य्यचन्द्रादिरहितमित्येवार्थोऽभावि पक्षे सङ्गमनीयः । न तत्र सूर्य्यो न चन्द्रतारके न तद्भासयते सूर्य्यइत्यादि श्रुतेः।

---

१ न लवः अलवः सोऽस्ति यस्य तत्रेति वा मत्वर्थीयेनन्तम् २ अत्र देवताद्वन्द्वे चेति पदेन सूर्य्यचन्द्रादिरहितमिति न भ्रमितव्यम् देवतापदस्यान्यस्य प्रकाशकार्थपरत्वात् वृन्दावने च तेषां प्रकरण सामर्थ्यविरहात् न देवतात्वमिति श्रुतेरभिप्रायः ।

स्वतेजसा तु सुभास्वत् सुपीयूषकिरणं सुमङ्गलं सुबुधं सुजीवं सुकविगम्यं सुभानवं सुकेतु सुतमः सुतारकम् ॥ २३ ॥

भूविशेषकमपि न भूविशेषकम् सदा सक्षणमपि क्षणरहितं व्यापकमपि न व्यापकं किञ्चन निखिलगुणवृन्दावनं वृन्दावनं नाम वनम् ॥ २४ ॥

यत्र हि—क्वचिन्मरकतस्थली कनकगुल्मवीरुद्द्रुमाः

---

कविः शुक्रः मन्दः शनिस्तमोराहुः । अर्थान्तरञ्च । न विद्यते विशेषेण कर्त्तनं कालादिभिर्नाशो यत्र तत् अनिशमेव ईशः श्रीकृष्णो यत्र अनिशम् ईष्टेइति वा । अभौमं न भूमिविकारः अप्राकृतत्वात् । विशिष्टा बुधा विज्ञा यत्र तत् । अजीवम् अविद्यावृतपुरुषरहितम् । अकविगम्यं न कवेः पण्डितस्यापि गम्यं दुर्ज्ञेयत्वात् ।अमन्दम् उत्तमं विकेतु उत्पातादिचिन्हरहितम् । केतुर्द्युतौ पताकायां ग्रहोत्पातादि लक्ष्मचेति विश्वः । वितमः विगततमोगुणं निस्तारकं निस्तारकर्तृ ॥ २२ ॥

नन्वन्यदेशवत्तत्रापि सूर्य्यादयः प्रतीयन्त एवेत्याशङ्क्याह । **स्वतेजसेत्यादि** । स्वकान्त्या तु सुभास्वदिति स्वीयचिच्छक्तिप्रकाशविशेषमयत्वादप्राकृता एव सूर्य्यादयः प्राकृताइवप्रतीयन्ते श्रीकृष्णस्यनरलीलवत् तत्परिकराणां तेषामपि तथातथालीलात्वमित्यर्थः । तथाह्युक्तं **श्रीभागवतामृते** प्राकृतेभ्योग्रहेभ्योऽन्ये चन्द्रसूर्य्यादयोग्रहाः । लीलास्थैरनुभूयन्ते तथापि प्राकृता इवेति । सुभानवं शोभनो भानुपुत्रःशनिर्यत्र तत् । सुभास्वदित्यादीनां पूर्ववदर्थान्तरञ्च । सुभास्वत् शोभनच्छवियुक्तं शोभनाः पीयूषमयाः किरणा अंशवो यत्र तत् शोभनाभिर्माभिः कान्तिभिर्नवं सुकेतु शोभनपताकं सुतमः शोभनं सुखदापि तमः अन्धकारो यत्र तत् ब्रजाङ्गनानां कृष्णाभिसारसाहाय्यकारित्वात् शोभनं तारकं मोक्षदायक शक्तिविशेषो यत्र तत् ॥ २३ ॥

भुवः पृथिव्या विशेषकं तिलकरूपम् । तमालपत्रतिलकचित्रकाणि विशेषकमित्यमरः।न भूविशेषकं प्राकृतो भूमिविशेषो न तदित्यर्थः । स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यातिवर्त्तन्ते इति कन्नन्तस्य क्लीबत्वम् । अयमर्थः । यथा महावैकुण्ठनाथांशिनोऽपि श्रीकृष्णस्यनरलीलत्वं तथा तद्धाम्नो वृन्दावनस्यापि महावैकुण्ठांशित्वेऽपि भूविशेषलीलत्वम् अतएवभूतिलकायमानत्वं वस्तुतः । सिद्धान्तेऽपि श्रीकृष्णस्य नराकृतित्वेऽपि न प्राकृतनरत्वं यथा तथा वृन्दावनस्यापि भूविशेषाकृतित्वेऽपि न प्राकृत भूमिविशेषत्वमिति । एतदेवास्य वैकुण्ठतो वैलक्षण्यं यत्युगपदेव वास्तवमिथोविरोधिधर्मद्वयाश्रयत्वेन अकृतकत्वेऽपि कृतकत्वं क्षणराहित्यत्वेपि क्षणसाहित्यत्वं परिच्छिन्नत्वेऽपि व्यापकत्वमित्येवं प्रायः सर्वत्रैवार्थान्तरं विनैव सिद्धान्तविशेष प्रतिपत्त्यै व्याख्येयमिति । सक्षणं सोत्सवं क्षणेन विकारहेतुकालेन रहितम् । यद्वा निर्व्यापारस्थितिरहितम् निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षण इत्यमरः । व्यापारोऽत्र भगवल्लीला एव । नव्यस्यंसत्व्यस्य वस्तुनः प्रेम्णः श्रीकृष्णस्य वा आपकं प्रापकं पुस्तुतावित्यस्य रूपम् । निखिलगुणवृन्दस्य अवनं पालनं यत्र तत् ॥ २४ ॥

वर्णवैचित्र्यादौचित्येन सौन्दर्य्यवैचित्रीमाह । क्वचिन्मरकतमणिमयी स्थली अकृत्रिमभूमिः तत्र

क्वचित्कनकवीथिका मरकतस्य वल्ल्यादयः ।
क्वचित्कमलरागभूस्फटिकगुल्मवीरुद्द्रुमाः
क्वचित्स्फटिकवाटिका कमलरागवल्ल्यादयः ॥ २५ ॥

किञ्च—क्वचिन्मरकतद्रुमाः कनकवल्लिभिर्वेल्लिताः
क्वचित्कनकपादपा मरकतस्य वल्लीजुषः ।
क्वचित्स्फटिकभूरुहाः कमलरागवल्लीभृतो
द्रुमाः कमलरागजाः स्फटिकवल्लिभाजः क्वचित् ॥ २६ ॥

यत्रच—न सोऽस्ति मणिभूरुहो विविधरत्नशाखो न यः
सुचित्रमणिपल्लवा न खलु या न शाखाश्च ताः ।
न तेऽपि मणिपल्लवा विविधरत्नपुष्पा न ये
न पुष्पनिकरोऽप्यसौ विविधगन्धबन्धुर्न यः ॥ २७ ॥

यत्रच—विहारमणिपर्वतमकरतः पतद्भिर्मणि
द्रवैरिव सुनिर्झरैः स्वयमितस्ततः पूरिता ।

कनकमया गुल्मलताद्रुमाः सन्तीत्यर्थः। पूर्वोक्तस्यास्तीत्यस्य वचनविपरिणामेनाप्यनुषङ्गः। एवमग्रेऽपि यथासम्भवं ज्ञेयम् । कनकवीथिका कनकमयी वर्त्मभूमिः यद्वा क्वचिद्वनभूमौ कनकपङ्क्तिः स्वर्णश्रेण्येव नतु मृत्तिकापुञ्जस्तत्रैव मरकतस्य वल्लिगुल्मद्रुमाः ॥ २५ ॥

न केवलं भूमिद्रुमाद्यैरेव परमौचित्येन परस्पर विजातीयवर्ण रत्नमयतया सौन्दर्य्यं किन्तु परस्परमिलितयोर्वृक्षवल्ल्योरपीत्याह क्वचिदिति । वेल्लिता व्याप्ताः । वेल्लितं कुटिले प्रोक्तं वाच्यवत् विधुते प्लुत इतिविश्वः । एवमत्र पूर्वोक्ता वक्ष्यमाणाश्च वृक्षजातय एव काश्चिन्मरकतादि मणिमय्यः केवलं पत्राकृति स्कन्धविन्यासादिभिरेव परिचीयन्ते काश्चन स्वरूपेणापि स्थिता ज्ञेयाः भगवतो विचित्रलीलौपयिकत्वात् । अतएव क्वचित् क्वचिदिति शब्दप्रयोगः । न चैवमादीनामेतादृशत्वस्य कविवर्णनामात्र *प्रमाणत्वं वाच्यं बहुतर पुराणागमसंहिताश्रुतिभिरप्येवमेवोक्तत्वात् । किन्तु तथाभूतत्वेन कदाचित्कैश्चिद्दृश्यते न दृश्यते चेत्यादि स्तवकान्ते सप्रमाणकं व्याख्यास्यते इति ॥ २६ ॥

अथैकस्मिन्नपिवृक्षे तथा वर्णवैचित्रीमाह । स मणिभूरुहो नास्ति विविधरत्नमय्यः शाखा यस्य तथाभूतो यो न स्यात् । ताश्च शाखा न सन्ति सुचित्रा बहुवर्णा मणिमयाः पल्लवा यासु तथाभूता या न स्युः । तेऽपि विचित्रा मणिपल्लवा न सन्ति ये विविधरत्नमयपुष्पा न स्युः । असौ पुष्पनिकरोऽपि नास्ति विविधा माल्यादिगन्धा एव सजातीयत्वाद्बन्धवो यस्य तथाभूतो यो न भवति विविधानां गन्धानामाश्रयरूपत्वाद्बन्धुरिति वा ॥ २७ ॥

येषु वृक्षेषु आलवालानामावली अस्ति कीदृशी स्थलानां स्थलरुहां वृक्षाणाञ्च मणिभ्य इतरम-

* प्रमाणत्वम् ।

स्थलस्थलरुहां मणीतरमणीभिराकल्पिता
तथा मणिपतत्रिभिर्विलसिताऽऽलवालावली ॥ २८ ॥

येऽमी तरवः परमेष्ठिन इव स्वयम्भुवः। धूर्जटय इव सुजटाः। तरणय इव सुच्छायाः। सनकादय इव सदावालाः। चन्द्रा इव समाह्लादिपादाः। धनुर्भृत इव सुवलितकाण्डाः। विलासिन इव सुवल्कलाः। सुरसैनिका इव सदाच्छविशाखाः॥२९॥
काण्डा इव योधा इव सुपत्राः। स्वर्गा इव वर्षा इव विलसत्सुमनसः ॥ ३० ॥
कर्मयोगा इव शरा इव अव्यभिचारिफलाः। अवीजसमुत्पन्नाः अनारोपितश्रेणीवन्धाः अपरिपालितवर्द्धिताः अनभिषिक्तस्निग्धाः असमय नियम पुष्पफलाः ॥३१॥

---

णीभिः आसम्यक् कल्पिता निर्मिता। विहारसम्बन्धि मणिमयपर्वतानां प्रकरतो गलद्भिर्मणिद्रवैरिव सुन्दरनिर्झरैः पूरिता ॥ २८ ॥

स्वयमेव भवन्तीति स्वयम्भुवः। तरुपक्षे जटा जड् इति ख्यातः। शिफा जटे इत्यमरः। तरणयः सूर्य्याः। छाया कान्तिः पक्षे आतपाभावश्च। सन्ति शोभनानि आलवालानि येषां ते आह्लादिनः पादाः किरणाः अङ्घ्रयश्च येषां ते। पादा रश्म्यङ्घ्रि तुर्य्यांशा इत्यमरः। काण्डा वाणास्तरुशरीरयष्टयश्च। सुष्ठु वलन्त्यः कलाश्चतुःषष्टिसंख्या येषाम्। क्विबन्तो वल धातुः। सदा अच्छो निर्मलः विशाखः कार्त्तिकेयो यत्र पक्षे सदा च्छविः कान्तिर्यासु तथाभूताः शाखाः येषाम् ॥ २९ ॥

सुपत्राः काण्डपक्षे सुपक्षाः योधपक्षे सुवाहनाः वृक्षपक्षे सुदलाः। पत्रं वाहनपक्षयोः पत्रं पलाशं छदनमित्यमरः। सुमनसः देवाः मालत्यः पुष्पाणिच। सुमनसस्त्रिदिवेशादिवौकसः। सुमना मालती जातिः। स्त्रियः सुमनसः पुष्पमित्यमरः ॥ ३० ॥

न व्यभिचारीणि फलानि कर्मयोगपक्षे अदृष्टानि शरपक्षे लोहमयाग्राणि वृक्षपक्षे सस्यानि येषां ते। लाभे सस्ये शराद्यग्रे व्युष्टौ च फलके फलमिति शाश्वतः। वीजं विनैव समुत्पन्नाः कर्मणामनादित्वान्मूलवीजस्याशेषत्वेनाभावात् शराणां वाणानामपि शरवृक्षोद्भवत्वात्तेनैक्यं ततश्च तेषां च वीजं विनैव स्वजटोत्पन्नत्वात्। तरूणामप्यत्रत्यानां वस्तुतो नित्यसिद्धत्वात् त्रिष्वपि पक्षेषु तुल्योऽर्थः। न आरोपितः केनापि * श्रेणिवन्धो येषां ते। कर्मणां धारावाहिस्वरूपत्वात्। शरवृक्षाणामपि स्वत एव श्रेणिवद्धत्वात् अत्रत्य तरूणामपि भगवदिच्छया तथाभूतत्वात्। अपरिपालिता अपि वर्द्धिताः। अनभिषिक्ताः अपि स्निग्धाः। न समयस्य नियमो येषां तथाभूतानि पुष्पाणि फलानि च येषां ते। कर्मपक्षे भोगात् प्राक्परिणामविशेषाः पुष्पाणि शरपक्षे फलनिष्पत्तिः फलं वीजे च निष्पत्ताविति त्रिकाण्ड शेषः ॥ ३१ ॥

---

१ रत्नंमणिर्द्वयोरित्यमरोक्तत्वान्ङीषन्तो मणीति महेश्वरः।
* द्रुवान्तोपिश्रेणीशब्दः

चित्रलेखा इव सुकविव्याहारा इव अन्यूनानतिरिक्ताः । सर्वे एव समकालमेवाङ्कुरित पल्लवित मुकुलित कुसुमित फलित पच्यमान पक्वफलास्तदवस्था एव सर्वदा जरीजृम्भ्यन्ते ॥ ३२ ॥

किञ्च—येषां बिम्बितपल्लवैरुभयतो विस्तारभाजामिव ।
प्रस्फारस्फटिकालवालवलये स्फायन्मयूखाङ्कुरे ॥
स्नातुं निःसलिलेऽपि पूर्णसलिलभ्रान्त्या भृशं पक्षिणः ।
चञ्चूभिः परितो विकीर्य गरुतो धुन्वन्ति मज्जन्ति च ॥ ३३ ॥

क्वचन—आवाले ज्वलदिन्द्रनीलघटिते तद्रोचिषामूर्मिभिः ।
कालिन्दीपयसेव वातचपलेनापूरिते सर्वतः ॥
लक्ष्यन्ते तरवस्त एव कतिचिद्रोमाञ्चिताः कोरकैः ।
ध्यानावस्थितकृष्णकान्तिपटलाश्लेषप्रवृत्ता इव ॥ ३४ ॥

अन्येच—केऽप्यालवालकुरुविन्दमयूखवृन्दैर्लाक्षारसैर्निरवधीकृताभिषेकाः ।
अन्तर्नमान्तमिव सन्ततमेधमानं कृष्णानुरागरसमेव समुद्वमन्ति ३५

चित्राणां लेखाः श्रेणय इव सुकवीनां व्याहारा उक्तय इव न्यूनातिरेकदोषरहिताः । एककालमेव अङ्कुरिताश्च पल्लविताश्च मुकुलिताश्च कुसुमिताश्च फलिताश्च तथा पच्यमानानि पक्वानि च फलानि येषां ते पच्यमान पक्वफलाश्च ते तथा । तदवस्था वर्णितावस्थाः सन्त एव जरीजृम्भ्यन्ते अतिशयेन प्रकाशन्ते ॥ ३२ ॥

तेषां तरूणां प्रस्फारस्य प्रवृद्धस्य स्फटिकस्य आलवालानां वलये मण्डले निःसलिलेऽपि पूर्णसलिलभ्रान्त्या पक्षिणः स्नातुं गरुतः पक्षान् चञ्चूभिर्विकीर्य धुन्वन्ति कम्पयन्ति । गरुत् पक्षच्छदाः पत्र मित्यमरः । मज्जन्ति स्नान्तिच वलये कीदृशे स्फायन्तो वर्द्धमानाः मयूखानां स्फटिककिरणानां अङ्कुरा यत्र तस्मिन् । येषां कीदृशानां तत्र बिम्बितैः प्रतिबिम्बितैः पल्लवैः उभयतः अधश्चोपरि च विस्तारभाजामिव ॥ ३३ ॥

तद्रोचिषामिन्द्रनीलकान्तीनामूर्मिभिरेव वातचपलीकृतेन कालिन्दीजलेनेवापूरिते आवाले प्रतिबिम्बितत्वेन तएव तरवः ध्यानेनअवस्थितम् उपस्थितीकृतं यत् कृष्णकान्तिपटलं तस्य आश्लेषे प्रेम्णालिङ्गनकर्मणि प्रवृत्ता इव लक्ष्यन्ते ॥ ३४ ॥

केऽपि तरवः आलवालरूपाणां कुरुविन्दानां रत्नविशेषाणां मयूखवृन्दैरेव लाक्षारसैर्निरवधि निरन्तरमिव कृतोऽभिषेको येषां ते उत्प्रेक्षितमप्यर्थमपन्हुत्या पुनरन्यथा सम्भावयति । कृष्णानुरागरसमेव सम्यगुद्वमन्ति मूलेन उद्गिरन्ति न ते लाक्षारसा इत्यर्थः । अन्ययोगव्यवच्छेदकएवकार एवापन्हुतिलिङ्गम् । कथमुद्वमन्ति अन्तः आत्मदेहमध्ये न मान्तमवकाशमप्राप्नुवन्तं कुतः सन्ततम् एधमानं सदा वर्द्धमानम् ॥ ३५ ॥

१ आलवाले ।

सर्वे एव भगवदवतारा इव चिदात्मकतया विविधशक्तिमत्त्वेन चालौकिका एव लोके लौकिका इवदृश्यन्ते ॥ ३६ ॥

यत्र च—विलासिन्य इव ललितपत्राङ्कुराः। स्वाधीनभर्तृका इव प्रियेण तरुणाभिरामेण सदोपगूढाः। अनुरागिण्य इव समुत्कलिकाः। नाकसंसद इव विलसत्सुपर्वाणः॥३७

पुष्पवत्योऽपि नीरजस्काः। वक्रा अपि न वक्राः। चञ्चला अपि नाचिररोचिषः। सतत भ्रमरा अपि अभ्रमराः। मरुदान्दोलिता अपि न मरुत्स्पृष्टाः सर्वा एव सर्वकाममदा वीरुधः ॥ ३८ ॥

यत्र च-मणिमयालवालोपरिकृतोपधानतयेव सुखसुप्तेनेव विभुग्नवृन्तेन फलनिकुरम्बेण परितः कृतमूलमण्डनैरिव नारिकेलपोतैरभितोऽभिरमणीयानि ॥ ३९ ॥

तनुमध्यमा मध्यमानामिव करग्राह्याणां फलनिकराणां भरेणाधोमुखैरभितो विलम्बमानैर्वृन्दैः परितः कृतकण्ठमण्डनैरिवपूगतरुभिरितस्ततः कमनीयानि ॥४०॥

---

नन्वेवं भूतत्वेन किमिति सर्वैरेव लोकैः प्रकटं न दृश्यन्ते तत्राह सर्वएवेति। ततश्च तेषां यथा प्राकृततुल्याकारचेष्टादीनामपि वास्तवत्वचिन्मयत्वेनोपास्यत्वादिकं शास्त्रे निर्णीतं नतु मायिकत्वमपि तथा अमीषाञ्च ॥ ३६ ॥

पत्राङ्कुराः पत्रलेखाः पत्राणि अङ्कुराश्च प्रियेण। कीदृशेन तरुणश्चासावभिरामश्चेति तथा तेन। पक्षे तरुणेति तृतीयान्तम्। उत्कलिका उत्कण्ठा उत्कण्ठोत्कलिके समे इत्यमरः। पक्षे उत्कृष्टा कलिका, नाकसंसदः स्वर्गसभाः विलसन्तः सुपर्वाणो देवा यत्र पक्षे विलसन्ति शोभन पर्वाणि यासु ताः ॥ ३७ ॥

नीरजस्का मालिन्यरहिताः पुष्पवत्यः स्त्रियो हि रजस्वला भवन्ति एतास्तु न तथेति विरोधः। वक्रा अनृजु शरीरा अपि न वक्राः न क्रूराः पत्रपुष्पफलादिभिः सर्वेषां प्रियाचरणात्। वक्रः स्यात्कुटिले क्रूरे इतिविश्वः। न अचिररोचिषः किन्तु चिरसमयव्यापिकान्तयः। चञ्चला विद्युतोहि अचिररोचिषो भवन्ति। विद्युच्चञ्चला चपलापिच इत्यमरः। सतत भ्रमराः निरन्तरभ्रमरयुक्ताः न भ्रमं रान्ति ददतीति ताः न मरुद्भिर्देवैः स्पृष्टाः कृष्णलीलास्पदत्वात्। मरुतौ पवनामरावित्यमरः ॥ ३८ ॥

यत्र च वृन्दावने कानिचिदुपवनानि सन्ति। कीदृशानि नारिकेलानां पोतैः अभितः सर्वतःअभिरमणीयानि। पोताः पोधा इति ख्याताः। कीदृशैर्विभुग्नवृन्तेन सता भूमिलग्नेन पतितेन फलनिकुरम्बेण परितः कृतानि मूलस्य मण्डनानि यैस्तैः। फलसमूहेन कीदृशेन आलवालोपरिकृतमुपधानं येन तस्य भावस्तत्ता तया हेतुना सुखं सुप्तेनेव जनैरुत्प्रेक्ष्यमाणेनेत्यर्थः ॥ ३९ ॥

पूगतरुभिर्गुवाकवृक्षैः कमनीयानि। कीदृशैः फलनिकराणां वृन्दैः कान्दीति ख्यातैः परितश्चतुर्दिक्षु कृतानि कण्ठस्य मण्डनानि येषां तैः। वृन्दैः कीदृशैर्भरेणाधोमुखैः। अतएवाभितः सर्वतः

परिपाकेऽपि नाऽरङ्गलता नारङ्गलता फलनिकुरम्बेण सततसमुदितामितमङ्गलपरम्परा परम्परागतान्यग्रहमिव नभस्तलं विदधानानि ॥ ४१ ॥

सुपल्लवलीलंता ऽनटनेन लवलीलता नटनेन नयनरञ्जनानि ॥ ४२ ॥

केशरिनखरशिखरविदारविकसन्मौक्तिकनिकरेण रुधिरारुणेन करिकलभकुम्भनिवहेन कृतोपमैः परिपाकविलोहितैर्विदीर्य्यमाणतया व्यक्तबीजराजिभिस्तत्कालापतितशुकचरणाघातसमधिकावनतैः फलनिकरैः सुललितेन निखिलदिग्वधूसीमन्तसिन्दूरपूरमनुभावयत्सु कुसुमसमूहेषु सदालिमीलताऽवनेन दालिमीलतावनेन चमत्कारकारीणि ॥ ४३ ॥

षडूर्मि खर्जूरहितानि खर्जूरहितानि ॥ ४४ ॥

---

विलम्बमानैः । तनुमध्यमा उत्तमाङ्गनास्तासां मध्यमानां मध्यदेशानामिव करग्राह्याणां मुष्टिमात्रग्राह्यत्वात् पक्षे वृक्षाणामत्यनुच्छ्रितत्वात् मूले स्थित्वैव करेणैव ग्रहीतुंशक्यानां फलनिकराणाम् । मध्यमं चावलग्नञ्च मध्योऽस्त्रीइत्यमरः ॥ ४० ॥

नारङ्गलता नारङ्गीति ख्याता तस्याः फलसमूहेन सतत समुदिता अमिता अपरिमिता मङ्गलस्य मङ्गलग्रहस्य परम्परा क्रमबाहुल्यं तत्परं नभस्तलं विदधानानि कुर्वाणानि । मङ्गलस्य लोहितवर्णत्वादाकाशगतत्वाच्च एतत् फलसाधर्म्यम् । तेनैव हेतुना परागतः परास्तोऽन्यग्रहो यत्र तथाभूतमिव उत्प्रेक्ष्यमाणमित्यर्थः । फलनिकुरम्बेण कीदृशेन परि सर्वतोभावेन पाकेऽपि सति न अरम् अतिशयेन गच्छता स्रवता ॥ ४१ ॥

लवलीलताया लोआलीति ख्यातायाः नटनेन मन्दपवनान्दोलितत्वात् । कीदृशेन शोभनाः सुः पल्लवा यस्यां तथा भूता लीला यस्याः तस्याभावाः सुपल्लवलीलता तस्याः सुपल्लवलीलतायाः स्थितिः अनटनम् अगमनं किन्तुस्थितिरेव यस्मिन् तेन नटनेन ॥ ४२ ॥

दाडिमीलताया दाडिमीलताया वनेन डलयोरैक्यं यमकानुरोधात् । कीदृशेन निखिलानां दिग्वधूनां सीमन्तस्य सिन्दूरपूरमनुभावयत्सु सुखार्थयत्सु उत्प्रेक्ष्यमाणेषु यावत्पुष्पसमूहेषु सदा अलीनां भ्रमराणां मीलता मीलत्वं रसतृष्णतया तन्द्रामवर्त्तीति तथा तेन । मील्निमील-निमेषणे पचादिः । पुनः कीदृशेन फलनिकरैः सुष्ठु ललितेन । कीदृशैः विदीर्य्यमाणतया व्यक्ता बीजराजिर्येषां तैः तस्मिन्नेवकाले आपतितानां शुकानां चरणाघातेन समधिकं यथा स्यात्तथा अवनतैः । करिकलभानां हस्तिशावकानां कुम्भनिवहेन सहकृता उपमा येषां तैः । कुम्भनिवहेन कीदृशेन केशरिणां सिंहानां नखरशिखरैर्नखाग्रैर्विदाराद्विकसन्तो मौक्तिकनिकरा यस्मिंस्तेन अतएव रुधिरेण हेतुनाअरुणेन तदुद्गतरक्तमौक्तिकानामन्यावृत्त्यं प्रान्तगतं ज्ञेयम् ॥ ४३ ॥

षडूर्मय एव खर्जूर्य्योऽपितिशेषः कण्डूः खर्जूश्चकण्डूर्वेत्यमरः । तया रहितानि शोकमोहौ जरामृत्यू क्षुत्पिपासे षडूर्मयः पक्षे खर्जूरवृक्षैर्हितानि ॥ ४४ ॥

निःसारितौकोमलेन मृद्वीकामधुरेण मृद्वीकामधुरेणा वान्तरकाननेन मनोहारीणि ४५
अभितः फलिनीभिः फलिनीभिश्च परमरमणीयानि ॥ ४६ ॥

सकामजनमनांसीव सफलकर्मरङ्गानि स्वरङ्गनानीव ललितरम्भाणि सङ्गीतानीव विविधरमणीयतालानि । कर्म्मकाण्डानीव निरवधि सुपाककण्टकिफलानि । रूपकोपरूपकाणीव सफलशैलूषाणि । मेरुमन्दारशृङ्गविशेषतेजांसीव जम्बूजनित श्यामिमानि । नारायणतपांसीव बदरिकावनाधिकरणानि कानिचिदुपवनानि ॥४७॥

यस्यच कालातीतस्यापि षड्भिरेव ऋतुभिर्भगवल्लीलौपयिकतयाऽप्राकृतैरपि प्राकृतैरिव भासमानैः कृतविभागाः षड्विभागाः ॥ ४८ ॥

यथा वर्षाहर्षः शरदामोदो हेमन्तसन्तोषः शिशिरसुखाकरोवसन्तकान्तो निदाघसुभगश्चेति ॥ ४९ ॥

तेषुच भगवद्भक्तियोग इव सतत घनरसदः । ब्रह्मानन्दसाक्षात्कार इव सदानन्ददचिररोचिः पार्वतीविग्रह इव सदासमुत्कण्ठितनीलकण्ठः । न्यायग्रन्थ इव

---

निःसारितानि दूरीकृतानि ओकसो स्थानानां मलानि तृणपर्णजम्बालादीनि यत्र तेन मृद्वीकाभिर्द्राक्षाभि र्मधुरेण मृद्वीका गोस्तनी द्राक्षेत्यमरः अतएव मृद्वीनाम्अङ्गनानां कामधुरा वाञ्छितभारो यत्र तेन ॥ ४५ ॥

फलवतीभिः प्रियङ्गुभिः प्रियङ्गुलताभिः प्रियङ्गुः फलिनिः फलीत्यमरः ॥ ४६ ॥

सफले स्वर्गादिसाधके कर्मणि रङ्गः कर्त्तव्यत्वेन उत्साहो येषु तानि । पक्षे फलसहितः कर्मरङ्गः कामरङ्गा इतिख्यातो वृक्षो येषु तानि । स्वः स्वर्गस्य अङ्गनानि प्राङ्गणानि । ललिता रम्भा तन्नाम्नी अप्सरा नाट्यार्थमागता येषु तानि । पक्षे रम्भा कदलीवृक्षः । ताला नृत्यवाद्यनिष्ठाः तालवृक्षाश्च सुष्ठु पाके परिणामे सति कण्टकयुक्तानि फलानि स्वर्गादीनि येषु पातशङ्कामात्सर्य्यासूयादिदोषवाहुल्यात् । पक्षे सुपक्वपनसफलानि रूपकाणि नाटकादीनि उपरूपकाणि नाटिकादीनि सफलाः सार्थकाः शैलूषाः नटा यत्र तानि । शैलूषा जायाजीवाः कृशाश्विनः । भरता इत्यपि नटा इत्यमरः पक्षे शैलूषा बिल्ववृक्षाः । बिल्वे शाण्डिल्यशैलूषावित्यमरः । मेरुमन्दारो नाम सुमेरुपार्श्ववर्तिपर्वतः तत्रैव द्वीपाख्यापकस्य महाजम्बूवृक्षस्यसत्वात् बदरिकावनं बदरिकाश्रमः, अधिकरणम् आश्रयो येषां तानि । पक्षे बदरीवनस्याधिकरणानीति षष्ठीतत्पुरुषः ॥ ४७ ॥

यस्य वृन्दावनस्य षड्विभागाःसन्ति । कीदृशाः षड्भिर्ऋतुभिः कृता विभागाः प्रतिस्वं विशिष्य भागा येषान्ते ॥ ४८ ॥

तानेवाह वर्षाहर्षइति । वर्षाभिर्हृष्यति हर्षयतीति वा सः । सुखं करोतीति सुखप्रियादानुलोम्ये इति डाच्प्रत्ययान्तः सुराणाम् आकर इति वा ॥ ४९ ॥

तेषु विभागेषु मध्ये वर्षाहर्षोनाम विभागः । कीदृश. सततं घनं निविडं रसं श्रीकृष्णानुराग-

सदात्यूहकोलाहलः । गरुत्मानिव सदा सारङ्गरुतं बिभ्राणः । दिनकर इव विकाशित ककुभावलिः ॥ ९० ॥

लीलौपयिकतया लघु लघु निपतदम्बुकणनिकरनिरन्तरोत्पद्यमाननवमृदुलतृणाङ्कुरान्मरकतमणिशिलाकिरणाङ्कुरनिकुरम्बसम्भालनया परितः परिहाय मरकतमणिभूमिष्वेव तत्किरणकन्दलीर्वाप्यच्छेद्यसस्यधियाचामद्भिश्चमूरुचयैरभितोऽभितः शोभमानः ॥ ९१ ॥

मृदुमृदुसञ्चरदिन्द्रगोपनिकरैरितस्ततः सजीवैरिव कमलरागशकलैः कलितं नवतृणाङ्कुरमयहरितपट्टकूर्पासकं भुवोवक्षसि निधापयन्निव लघुतरशीकरनिकरवाहि कदम्बपरिमलविमलजलधरानिलशीतलः स किल वर्षाहर्षो नाम ॥ ९२ ॥

किञ्च—समुन्मिषितमालतीकुसुमसुस्मिता मेदिनी ।

लक्षणं ददातीति सः। पक्षे घनरसो जलं मेघपुष्पं घनरस इत्यमरः। सताम् आनन्ददं चिरं रोचिः प्रकाशो यत्र। पक्षे सदानन्दन्ती अचिरोचिर्विद्युद्यत्र सः। नीलकण्ठो महेशो मयूरश्च सदा अत्यूहे अतिशयतर्के विचारात्कोलाहलो यत्र सः। पक्षे दात्यूह कोलाहलेन सह वर्त्तमानः। दात्यूहो डाहुकः* इतिख्यातः पक्षी। गरुत्मान् गरुडः सदासारं सदाबलं गरुतं पक्षं बिभ्राणः। पक्षे सदा सारङ्गाणा चातकानां रुतं शब्दं पुष्णन्। सारङ्गे चातके भृङ्गे इति मेदनिः। ककुभानां दिशाम् आवलिः श्रेणी। टापञ्चापि हलन्तानामिति वचनात् दिशावाचेत्यादिवत् ककुभा शब्दोऽपि टावन्तोऽदृष्टः। तथाच कश्यपः। भूमिपुत्रादयः सर्वे यस्यामस्तमिते रवौ। दृश्यन्ते ककुभायां वै ततोऽनिष्टं विनिर्दिशेदिति। पक्षे ककुभोऽर्जुनवृक्षः ॥ ९० ॥

लीलौपयिकतया स्पृहणीयत्वेनेत्यर्थः। लघु लघु यथास्यात्तथा निपतताम् अम्बुकणानां निकरेण हेतुना निरन्तरम् उत्पद्यमाना जायमाना नवा मृदुलास्तृणाङ्कुरास्तान् मरकतमणिशिलानां किरणाङ्कुरा एवैते नूनं भवन्ति। न पुनस्तृणाङ्कुरा इति सम्भालनया सम्यग्दृष्ट्या निरूपणेन। परित इति वामतः दक्षिणतः पृष्ठतश्च परित्यज्य। आचामद्भिर्भुञ्जानैः। यथैवाचमनमतृप्तिकरं तथैव तेषामवास्तवत्वादतर्पकत्वाद्भक्षणाभिनयमात्रमिति भावः। चमूरवो मृगभेदाः ॥ ९१ ॥

मृदु मृदु यथास्यात्तथा सञ्चरद्भिरिन्द्रगोपसमूहैः। इन्द्रगोपाः लोहितवर्णसूक्ष्मकीटविशेषास्तैः सजीवैः प्राणवद्भिरिव पद्मरागखण्डैः कलितं जटितं नवतृणाङ्कुरमयं हरितं हरिद्वर्णं पट्टकूर्पासकं पट्टकञ्चुलिकां निधापयन् अर्पयन्निव। चोलः कूर्पासकः स्त्रियामित्यमरः। लघुतरशीकरनिकरवाहिनेति मान्द्यं कदम्बानां परिमलो यत्र तेनेति सौगन्ध्यं विमलजलधरसम्बन्धिनेति शैत्यमुक्तं तथाभूतेन अनिलेन शीतलः स्निग्धोऽयं वर्षाहर्षो विभागो ननु प्राक्तन निदाघवद्रुक्ष इति भावः ॥ ९२ ॥

सम्यगुन्मिषितैर्विकसितैर्मालतीनां कुसुमैरेव शोभनं स्मितं यस्याः सा मेदिनी यथापुलकिता पुल-

* पर्यायाइति ।

कदम्बतरुकोरकैः पुलकिता घनानां ततिः ।
अजस्रगलदस्रभृद् घनपयःकणानां गणै-
रपि द्युरमणी समं यदनुरागमातन्वते ॥ ५३ ॥

किञ्चयत्र—पुरन्दरधनुर्लतातिलकचारुभालस्थला ।
तडित्कनककेतकीदललसत्तमःकुन्तला ।
विलोलविषकण्ठिकाविमलमालभारिण्यसौ ।
नवोन्नतपयोधरा हरिमनोहरा दिग्वधूः ॥ ५४ ॥

सारङ्गीकुलकाकुकर्पणविधे राश्वासवाङ्मानिनी ।
मानक्षोदनपेपणीभ्रमिवलत्सुस्निग्धमन्द्रध्वनिः ।
नृत्यन्मत्तमयूरमौरजरवैः प्राणेशविश्लेपिणी ॥
प्राणाकर्पणमन्त्रपाठनिनदो मेघस्वनैः श्रूयते ॥ ५५ ॥

कदाचिदपि यत्र—दात्यूहाः परितो रुवन्ति गणशः कोयष्टिकाः सर्वतो ।
मण्डूकाः प्रचलाकिनस्तत इतो धाराधरा व्योमनि ।
आसाराः पयसां झपज्झपदिति स्निग्धाति मन्द्रस्वराः ।
सर्वे मुग्धदृशां रतान्तसमये स्वापोत्सवं कुर्वते ॥ ५६ ॥

कथती घनानां ततिः श्रेणी तथा द्युरमणी द्यौरेव रमणी सापि अजस्रं निरन्तरं गलत् अस्रं बिभर्त्ति कैर्घना मेवास्तत्सम्बन्धि पयःकणानां गणैर्यत् यत्र वर्षाहर्षविभागे समं तुल्यमेवानुरागं स्मितपुलकाश्रूणां हर्षानुभावकत्वात् । आतन्वते विस्तारयन्ति तिस्रो मेदिनीवनततिद्युरमण्योऽनुरागिण्य इवोत्प्रेक्ष्यन्तइत्यर्थः ॥ ५३ ॥

दिग्वधूः दिगेव वधूः हरेर्मनोहरा अपूर्वशोभयेत्यर्थः । पुरन्दर धनुर्लतेव तदाकारं तिलकं तेन चारु सुन्दरं भालस्थलं यस्याः सा। तडितो विद्युत एव कनककेतकीदलानि तैर्लसन्ति तमांस्येव कुन्तलाः केशाः यस्याः सा । विलोलाभिर्विषकण्ठिकाभिर्वकपङ्क्तिभिरेव विमलमालाभारवती । •इष्टकेषीका मालानां* चिततूलभारिष्विति ह्रस्वत्वम्। बलाका विषकण्ठिकेत्यमरः। पयोधरः स्तनो-मेघश्च स्त्रीस्तनाब्दौ पयोधरावित्यमरः ॥ ५४ ॥

सारङ्गीकुलानां चातकीसमूहानां काकुभिर्वैक्लव्यव्यञ्जकध्वनिविकारैर्यः कर्पणस्य विधिर्विधानम् आगत्यास्मान् शीघ्रं जीवयेति यत् प्रार्थनकरणं तस्माद्धेतोः तस्य आश्वासवाक् औत्कण्ठ्येन माविपीदत एषोऽहं वर्षाम्यैवमाकारेत्यर्थः। मानिनीनां मानस्य क्षोदनी पेषणी तस्या भ्रमिश्चूर्णीकरणार्थं घूर्णनं ततो हेतोर्वलन् सुस्निग्धो मन्द्रोगम्भीरश्च ध्वनिः। नृत्यतां मत्तमयूराणां मौरजः मुरजसम्बन्धी रवः । प्राणेशात्स्वकान्तात् विश्लेषवतीनां प्राणाकर्षणः प्राणनिष्काशकः मन्त्रपाठस्य ÷निनदः मेघस्वनः श्रूयत इति श्रूयमाणः सन्नेवमेवमुत्प्रेक्ष्यत इति भावः ॥ ५५ ॥

कोयष्टिकाः टिटीतिख्याताः +गणशः गणे गणे स्थिये वर्तमाना इत्यर्थः। प्रचलाकिनो मयूराः झपज्झपदिति वृष्टिशब्दानुकरणम् ॥ ५६ ॥

---

* अत्र भारि इति ग्रहणात् विमलमाला भारवतीतिनार्थनिर्देशे ह्रस्वत्वम्। ÷ नौगदनद पठस्वन इत्यन्तोनिनदशब्दः। +बहुगणवतुडतीति संख्याश्रयः संख्यैकवचनाच्चवीप्सायामिति शस्।

यत्र च—मध्ये गौरी परिणतफलैर्नम्रशालैरसालै-
रन्ते श्यामा रुचिभिरभितः पक्वजम्बूफलानाम् ।
प्रान्ते पाण्डुः स्फुटसुरभिभिः सूचिभिः केतकानां
मुद्यानश्रीः स्फुरति विविधैर्वर्णकैश्चित्रितेव ॥ ५७ ॥

द्वितीयस्तु भगवच्चरण इव कमलाकरलालितः । हरिभक्तजन इव निरवकरजीवनः परमनिर्मलाशश्च ॥ ५८ ॥

वैकुण्ठनाथमिव विलसच्चक्रं प्रफुल्लपद्मश्च । भगवतः पाण्डवदूत्यमिव समदधार्त्तराष्ट्रहेलितम् । अध्यात्मयोगमिव सञ्चरत्परमहंसं रामायणमिव अभिरामलक्ष्मणालापम् ॥ ५९ ॥

भगवद्यश इव कुवलयामोदम् ज्वलनदिग्विभागमिव प्रभिन्नपुण्डरीकम् । नैर्ऋतको-

---

वर्णकैर्हरितालादिघटितैर्मध्ये गौरी पीतवर्णा कुतः परिणतानि पक्वानि फलानि येषां तैः । अतएव नम्राः शालाः स्कन्धशाखा येषां तैः । स्कन्धशाखाशालेत्यमरः । एवं भूतै रसालैर्वर्णपरिणामिभिराम्रभेदैर्हेतुभिः अन्ते तद्बहिर्मण्डले श्यामा प्रान्ते प्रकृष्टे अन्ते सर्वतो बहिर्मण्डल इत्यर्थः । सूचिभिः सूचितुल्यैः पुष्पदलैः । अत्र आम्राणां श्रेष्ठत्वात् मध्यस्थत्वं जम्बूनां ततोऽवरत्वेन श्यामतया बहिष्ठत्वात् तदीय मरकतप्राचीरायमाणत्वम् । केतकीनां निष्फलत्वेनापकृष्टानां सूचितुल्यपुष्पदलतया शक्तयस्त्रधारि तदीय रक्षकगणायमानत्वमिति विवेक्तव्यम् ॥ ५७ ॥

द्वितीयः शरदामोदो नाम विभागः । कमलायाः कराभ्यां लालितः मृदु मृदु सम्वाहितः पक्षे कमलाकरैस्तडागैर्लालितः लळितीकृतः । निरवकरं निर्दोषं जीवनं जीवितं जलं च यत्र सः । परमनिर्मला आशा भक्तिविषया दिशश्च यत्र सः ॥ ५८ ॥

पुनः कीदृशः परितो जलाशयम् आसम्यग्दधानः धारयन् पुष्णन्निति वा । जलाशयमेव विशिनष्टि । चक्रं सुदर्शनं चक्रश्चक्रवाकपक्षी च । प्रफुल्ला प्रसन्ना लक्ष्मीर्यत्र पक्षे प्रविकसितानि पद्मानि कमलानि यत्र तडागे । भगवतः श्रीकृष्णस्य पाण्डवदूत्यं भारतप्रसिद्धम् । समदैर्धृतराष्ट्रपुत्रैर्दुर्योधनाद्यैर्हेलितम् अवज्ञातम् । पक्षे मत्तानां धार्त्तराष्ट्राणां हंसविशेषाणां हेलितं हेला यत्र तम् । धार्त्तराष्ट्राः सितेतरैः हेला लीलेति चामरः । संचरन् परमहंस ईश्वरः पक्षे संचरणशीलः राजा हंसो यत्र परमशेषो वा तम् । अभितः रामलक्ष्मणयोरालापो यत्र तत् । पक्षे अभिरामः कमनीयः लक्ष्मणायाः सारस्या आलपो यत्र तम् । हंसस्य योषिद्वरटा सारसस्य तु लक्ष्मणा इत्यमरः ॥ ५९ ॥

कुः पृथिवी तस्या वलयस्य मण्डलस्य आमोद आनन्दो यतस्तत् । पक्षे कुवलयस्य नीलोत्पलस्य आमोदो गन्धो यत्र तम् । ज्वलनो वन्हिः । प्रभिन्नो मत्तः पुण्डरीकस्तन्नामादि दिग्गजा यत्रतम् । प्रभिन्नो गर्जितो मत्त इत्यमरः । पक्षे प्रभिन्नानि विकसितानि प्रभेदयुक्तानि वा पुण्डरीकाणि

णमिव कुमुदमदामोदितमधुकरम् सायं समयमिव विलसद्रक्तसन्ध्यकम्। परितो जलाशयमादधानः ॥ ६० ॥

समरसमारम्भ इव विलसचन्द्रहासः। सत्यकाल इव पूर्णभावेन मदमुदितवृषविलासः शरदामोदो नाम ॥ ६१ ॥

यत्रच—दुर्जनवचनोत्तप्ताः सुजना इव वहिरुष्णतामन्तःशीतलतां दधाना महाहृदाः ॥ ६२ ॥

यत्रच—श्रीखण्डखण्डाङ्गरागा इव दिगङ्गनानां पवनावधूतसितसिचयाञ्चलखण्डा इव नभोलक्ष्म्याः। वितत्यातपे दत्तानीव कर्त्तनीयतूलिकानि पवनकन्यकानां सिततरजलदशकलानि ॥ ६३ ॥

येषाञ्च प्रतिविम्बे तरणिदुहितुरम्भसि सम्भृतविलाससम्भारे सति तस्या एव सलिलगतानि सैकतान्तराणीव अथवा भगवदवगाहनसौभाग्यमिवासादयितुकामा सुरसरिदेव गर्भवासमाससादेति सकलैरनुमीयते ॥ ६४ ॥

---

सिताम्भोजानि यत्र तम्। कुमुदः नैर्ऋतकोणस्थो दिग्गजस्तस्य मदेनामोदिता मधुकरा यत्र तम्। पक्षे कुमुदेषु मदामोदिता मधुकरा यत्र तम्। ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः। पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजा इत्यमरः। विकसन्ति विराजन्ती रक्ता सन्ध्या यत्र तम्। पक्षे विकसन्ति स्फुटन्ति रक्तसन्ध्यकानि यत्र तं हल्लकं रक्तसन्ध्यकमित्यमरः ॥६०॥

समरो युद्धम्। चन्द्रहासः खड्गश्चन्द्रप्रकाशश्च। वृषोधर्मः पुङ्गवश्च ॥ ६१ ॥

उष्णतां कृत्रिमकोपं तप्तत्वञ्च वहिः। अन्तः शीतलतां दयां शीतत्वञ्च दधानाः सुजना इव हृदाः यत्र शरदामोदविभागे ताः ॥ ६२ ॥

यत्र च सिततराणि अतिश्वेतानि जलदशकलानि मेघखण्डानि श्रीखण्डस्य चन्दनस्य खण्डभूता अङ्गरागा इव उत्प्रेक्ष्यन्ते इत्यर्थः। पुनस्तेषामाकाशमध्यगतत्वं चाञ्चल्यञ्च विलोक्यान्यथा उत्प्रेक्षते। पवनेन अवधूतानां चालितानां सितवस्त्राणां अञ्चलखण्डा इव आकाशशोभाभूतायाः स्त्रियाः। पुनरपि लघूनामिव तेषां प्रतिक्षणं विस्तारमालोक्य ततोऽप्यन्यथा उत्प्रेक्षते कर्त्तनीयानि सूत्रनिर्माणयोग्यानि तूलिकानि कार्पासभवानीत्यर्थः। अतएव वितत्य विस्तार्य्य सूर्य्यातपे दत्तानि अर्पितानि तानि पवनकन्यकानामिति अतएव पवनेन पित्रा शोषणार्थम् आतपे स्वयमेव चाल्यमानानीत्यर्थः ॥६३

येषां सितमेघखण्डानां प्रतिविम्बे कुत्र तरणिदुहितुर्यमुनाया अम्भसि तस्या एव यमुनाया एव सैकतान्तराणि वालुकामयपुलिनान्तराणीव लक्ष्यन्ते इत्यर्थः। सैकतं सिकतामयमित्यमरः। मेघखण्डानां चाञ्चल्यात् प्रतिविम्बानामपि प्रवाहवचाञ्चल्यमालोक्य अन्यथा उत्प्रेक्षते अथवेति आ-*सादयितुकामा प्राप्तकामा सुरसरित् गङ्गा गर्भवासं यमुनाया गर्भे वासम् ॥ ६४ ॥

---

*तुङ्काममनसोरपीति तुमुनो मकारो लुप्तः।

विकचकमलकल्हारहल्लकामोदमेदुरः । सप्तच्छदसौरभदानगन्धिरन्धितपुष्पन्धयोऽन्धकारितदिग्वलयः । पवनमतङ्गजश्च यत्र परमामोदमातनोति ॥६५॥

कूजत्सारसकाञ्चिका मृदुनदत्कादम्बपादाङ्गदा
चक्राह्वस्तनमण्डला दरदलद्राजीवकोपानना ।
नीलाम्भोरुहलोचना मधुकरश्रेणीभ्रमद्भ्रूलता
यत्राऽऽभाति परागरञ्जिवसना मूर्त्तेव देवी शरत् ॥ ६६ ॥

किञ्च—या किल देवहूतिरिव कर्दमे प्रस्थिते कपिलास्यनिरीक्षणक्षणा ॥ ६७ ॥

किञ्च। स्थलकमलवनान्तः कौसुमं यस्य तल्पं विमलवहुलतारं व्योम मुक्तावितानम्।
विकसितचलकाशाश्चामराणां समूहः सकतुरतुलकान्तिर्यत्र राजेव रेजे ॥६८।

किञ्च—अत्याकृष्टा इव हरिदिभै र्व्योमवृक्षस्य शाखाः ।
प्रत्याक्रान्ता इव जलधरैर्नम्रतां याः समीयुः ॥

---

विकचानां कमलादीनाम् आमोदैर्गन्धैर्मेदुरः। सान्द्रस्निग्धस्तु मेदुरः इत्यमरः। सप्तच्छदः छातिन इति गौडे सनपन इतिपाश्चात्येषु ख्यातो वृक्षस्तस्य सौरभेण दानगन्धिर्मदगन्धिः। हस्तिनां मदो, दानमित्यमरः। अतएव अन्धिता व्याकुलीकृताः पुष्पन्धया भ्रमरा येन सः। नासिकास्तनयोर्ध्माधेटोर्नाडी मुष्ट्योश्चेति योगविभागात् खश् प्रत्ययः। उन्मीलन्निजकान्तिकेतकसमाकृष्टाद्रुपुष्पन्धय इति कविकल्पलता। परमम् आमोदं गन्धम् आनन्दञ्च ॥६५॥

कादम्बः कलहंसः दर ईषत् दलन् प्रस्फुटन् राजीवकोष एवाननं यस्याः सा। पराग एव रञ्जि-द्रष्टृ रञ्जकं वसनं यस्याः सा ॥६६॥

या शरत् कर्दमे श्रीकपिलदेवपितरि पङ्के च प्रस्थिते प्रव्रजिते सति पक्षे गते नष्टे सतीत्यर्थः। कपिलस्य स्वपुत्रस्य पक्षे सञ्चरन्तीनां कपिलानाम् आस्यनिरीक्षणे मुखदर्शने उत्सवो यस्याः पक्षे समयविशेषो यस्याः सा। कालविशेषोत्सवयोः क्षण इत्यमरः॥६७॥

स ऋतुर्यत्रविभागे राजा इव रेजे दीप्तिं चकार। कौसुमं पतितकुसुमदलमयम्। मुक्तावितानं मुक्तामयश्चन्द्रातपः। विकसिताः पवनेन चलाः काशाः काशपुष्पाणि ॥६८॥

वर्षाहर्यात् प्रदेशात् यत्र शरदामोदे उपगता जना इत्थम् एवं तर्कम् ऊहं तन्वन्ति वर्षाहर्ये आकाशस्य सर्वतो मेघावृतत्वात् दिशां निकटवर्त्तित्वं हस्तप्राप्यमिव मत्वा शरदामोदे तु तदभावात् दिशां दूरवर्त्तित्वं लोचनाभ्यामप्यगम्यं परामृश्य एवमुत्प्रेक्ष्यन्त इत्यर्थः। व्योम एव वृक्षस्तस्य शाखा हरिदिभैर्दिग्गजैः अत्याकृष्टा इव अत्यन्तमाकृष्य अधःपातिता इवेत्यर्थः। याः शाखा जलधरैर्मेघैस्तेषां साहाय्यकारिभिरिव प्रत्याक्रान्ता उपरि आरुह्य आक्रान्ता इव नम्रतां समीयुः प्राप्ताः। इह शरदामोदे तु हरितः ता दिशः किमिव दूरं याताः यतस्तदीयैर्हस्तिभिर्व्योमवृक्षस्य शाखा नाकृष्यन्ते इति भावः। तत्र कारणमिव तर्कयन्तो विशिंषन्ति तैः जलधरैर्विमुक्ता इव तच्छाखाक्रमणार्थं

'दूरं यातां किमिव हरितैते' विमुक्ता इतीत्थं'।
यर्पोदर्पात् क्षणमुपगतौ यत्र तन्वन्ति तर्कम्॥ ६९ ॥

अथ तृतीयोऽपि यत्र भीम इव महासहो मोदमेदुरः। अर्जुन इव मधुसूदनप्रियसहचरः। महेश इव अनुगतबाणः कैलाश इव सदावलोध्रः॥ ७० ॥

श्रीभागवतग्रन्थ इव मधुरशुकोदितः। आयुर्वेद इव मरीचहारीतः। साधुसङ्ग इव सदा मदलावः। भगवदुपासक इव क्रमशीतली भवज्जीवनः॥ ७१ ॥

अहरहरुपचीयमानदोषोऽपि निर्दोषः। पद्मिनीग्लानिकरोऽपि क्षणदादैर्घ्येण पद्मिनीमहोत्सवकरः। स खलु हेमन्तसन्तोषो नाम॥ ७२ ॥

यत्र नवदिनकरकिरणपरामर्शोन्मुखजनमनांसि दिवसमुखानि। अभिनवारुणकिरणनिकरनिपातधिषणतया हरिणरमणीभिः क्षणमुपसेव्यन्ते कुरुविन्दमणिमयधरणितलानि नोपगम्यन्ते च हिमकरकिरणनिकरधिया स्फटिकमणिशिलाविलासवीथयः॥ ७३ ॥

---

तदुपरि गेधैरत्र नारुह्यन्ते अतः साहाय्याभावात्स्वीयगजानामतिदूरस्थशाखाकर्षणाशक्तेर्निवृत्ता इत्यनुमीयते इति भावः॥६९॥

यत्र विभागेषु तृतीयो हेमन्तसन्तोषः। महत्सहोबलं यस्य सः मोदेन हर्षेण स्निग्ध इति पदद्वयं पक्षे महासहा पुष्पविशेषवाची टाबन्तः। अम्लानस्तु महासहा इत्यमरः। मधुसूदनः श्रीकृष्णः पक्षे मधुसूदनानां भ्रमराणांप्रियः सहचरः पीतझिण्टी यत्र सः। इन्दिन्दिरश्चञ्चरीकोरोलम्बो मधुसूदन इति त्रिकाण्डशेषः। पीता कुरुण्टको झिण्टी तस्मिन् सहचरीद्वयोरित्यमरः। बाणो बलिपुत्रः। पक्षेनीलझिण्टी नीलाझिण्टीद्वयोर्बाणा इत्यमरः। अवलया भार्यया दुर्गया सह वर्त्तमानः उः शम्भुस्तं धरतीति सहावलोध्रः। पक्षे हात्र उल्लासको भावविशेषः सहावो लोध्रवृक्षो यत्र सः ७०

मधुरश्चासौ शुकात् व्यासपुत्रात् उदितः उदयं प्राप्तश्चेति स तथा। पक्षे मधुरं शुकानाम् उदितं कूजितं यत्र सः। हारीतस्तन्त्रशास्त्रप्रवर्त्तको मुनिः। पक्षे हारिताल इति ख्यातः पक्षिविशेषः। मदम् अहङ्कारं लुनातीति सः। पक्षे सतत मदयुक्तो लावः पक्षिविशेषो यत्रसः। क्रमेणोत्तरोत्तरप्राप्यमाणाविश्वेन भजनेन शीतेन च शीतलीभवन्ति जीवनानि जीवितानि जलानि च यस्य यत्र च सः ७१

अहरहः प्रतिदिनम् उपचीयमाना वर्द्धमाना दोषा रजनी येन सः टाबन्तोदोषाशब्दोऽव्ययोऽप्यस्ति। ततः कथाभिः समतीत्य दोषामारुह्य सैन्यैः सह पुष्पकन्तु इति भट्टिप्रयोगात्। प्रारम्भो दोषायाः प्रदोष इत्यमर टीका सुप्रदोषशब्दव्याख्यानाच। पद्मिन्यः कमलस्तम्बाः क्षणदा रात्रिः पद्मिन्यः सल्लक्षणस्त्रियः॥७२॥

दिवसमुखानि प्रभातानि। अभिनवानाम् अरुणस्य सूर्य्यस्य किरणानां निपाते धिषणा निश्चयवती बुद्धिर्यासां तासां भावस्तत्तातया हेतुना उपसेव्यन्ते शीतत्राणार्थमित्यर्थः। स्फटिकमणिमयीनां शिलानां विलासो यासु तथाभूता वीथयो भूमिप्रदेशाः पङ्क्तयो वा॥७३॥

किं बहुना शीतभीतेनेव भगवता किरणमालिनाऽपि दहनदिगुपकण्ठ एव सौत्कण्ठ्यमालम्ब्यते ॥ ७४ ॥

नवनवाङ्कुरनिकराकारकिरणकन्दलेषु मरकतमणिवीथिपरिसरेषु सचकितमभितोऽभितो निरीक्षमाणाश्चमूरुरमण्यो यवाङ्कुरधियैव चरन्त्यो निरवधि व्रजचमूरुनयनानयनचमत्कारं कारयन्ते ॥ ७५ ॥

यत्र च--क्रमोद्भानोरूष्मा ह्रसति हिमयोगेन महतां ।
वलन्ते वक्षोजद्वय परिसरे पूष्मविभवाः ॥
क्रमोद्दैर्घ्यं रात्रेर्भवति ह्रसिमा वाम्यरहसो ।
वधूनां शीतार्त्तप्रियतमपरिष्वञ्जनविधौ ॥ ७६ ॥

कुरुवककुसुमानि केशपाशेष्वलककुलेषु वहन्ति लोध्रधूलीः ।
स्रजमुरसि महासहाप्रसूनैर्व्रजसुदृशो न मणीन्द्रमण्डनानि ॥ ७७ ॥
कालीयकालेपनमङ्गरागे लीलागृहे केवलधूपधूमः ।
ताम्बूलमेलादिकटुप्रयोगं नोष्णेतरो यत्र गुणो गुणाय ॥ ७८ ॥

अथ चतुर्थोऽपि यत्र सुहृत्समागम इव समुल्लसितबन्धुजीवः । विश्वकर्मेव कुन्दारोपितप्रभाकरः । भगवद्वैकुण्ठनाथ इव सर्वदा नवदमनकः । महावर्षागम इव समुल्लसितमरुवकामोदः ॥ ७९ ॥

---

उपकण्ठः निकटदेशः कण्ठस्य समीपम् उपकण्ठं तस्मिन्निति सप्तम्यन्ततया व्याख्याने भगवतापि परदारकण्ठे सौत्कण्ठ्यमालम्ब्यत इति द्वितीयोऽपि विरोधो ज्ञेयः ॥७४॥

कन्दलं समूहः। कन्दलं तु समूहे स्यादुपरागे नवाङ्कुरे इति विश्वः। सचकितमभितोऽभितः कर्णिका अत्र सन्ति नवा सन्तीति निरीक्षमाणाः चमूरवो मृगविशेषास्तेषां रमण्यः ॥ ७५ ॥

वाम्यरहसो वाम्यसुरतस्य । रहोऽतिगुह्ये सुरते चेति विश्वः । ह्रसिमा ह्रस्वत्वं प्रह्वे वेति तिकारस्य संयोगपूर्वस्यापि लघुत्वं प्रियतमेति प्रमैवात्र हेतुरिति व्यज्यते ॥ ७६ ॥

अम्लानस्तु महासहा तत्र शोणे कुरुवक इत्यमरः । न मणीन्द्रेति तेषां शैत्यात् ॥ ७७ ॥

कालीयकं कलम्बक इति ख्यातम् उष्णेतरः शीतो गुणो यत्र न गुणाय किन्तु दोषायैव ॥७८॥

चतुर्थः शिशिरसुखाकरः। बन्धूनां जीव आत्मा पक्षे बन्धुजीवः दोपहरिया इति ख्यातः पुष्पविशेषः। स्वदुहितुः संज्ञायाः कठोरततेजःसंश्लेषदुःखदूरीकरणाय कुन्दे चक्रभ्रमौ आरोपितः प्रभाकरः सूर्यो येन । पक्षे कुन्दपुष्पे आरोपितां सम्यग् जनितां प्रभां कान्तिं करोतीति स तथा । कुन्दश्चक्रभ्रमौ माघ्ये इति विश्वः। सर्वेषां दानवानां दमन यस्मात्स. पक्षे सर्वदा नवानि दमनकानि दोना इति ख्यातानि यत्र स.। सम्यगुल्लासितो मरुभूमावपि बकानां हर्षो येन स.। पक्षे मरुवकस्य पुष्पविशेषस्यामोदः। भवेन्मरुवकः पुष्पभिन्द्वल्यट्टफणिज्झके इति मेदिनी ॥ ७९ ॥

मुनिसमाज इव प्रमुदितभारद्वाजः। लङ्कासमर इव क्रमशोवर्द्धमानमानवासरः॥८०।
दयितपद्मिनीवियोगनिर्विण्णतयैव कृतोत्तरापथप्रयाणेन सकलजनोपसेवितपादेन किरणमालिना विरोचमानः शिशिरसुखाकरो नाम ॥ ८१ ॥

यत्र अन्तर्वर्त्तमानमणिगणकिरणकन्दलैरिव जलतः समुदित्वरैर्धूमायमानैर्जलवाष्पैरलक्षितजलानि सरित्सरसीपल्वलवनानि धूमानुमितवन्हिमत्तयेवझटिल्यनासेवमानाभिर्हरिणतरुणीभिः सचकितमीक्ष्यमाणानि वासरमुखानि ॥ ८२ ॥
यवसशिखरसमुदीर्णविमलमौक्तिकजालैधियानिशानिःस्यन्दितुहिनकणपटलानि भगवता विभावसुनापि निजकोमलकराग्रेण ह्रियमाणानि यत्र दिवसमुखेषु मुहूर्त्तादेव विरलायन्ते ॥८३ ॥
घनतरदलनिकरविस्तारतया निरस्तहिमनिपातचटुलविटपिनिकरतलमध्यमध्या-

---

भारद्वाजः भरद्वाजवंशः पक्षे भरद्वाजपक्षिसमूहश्च व्याघ्राटः स्याद्भरद्वाज इत्यमरः । लङ्कायां समरो युद्धं मानवो मनुवंशोद्भवो राघवश्च आसरो राक्षसश्च क्रव्यादोस्रप आसर इत्यमरः । क्रमशो वर्द्धमानौ तौ यत्र सः । पक्षे वर्द्धमानं मानं परिमाणं येषां तथाभूता वासरा दिवसा यत्र सः ॥ ८० ॥

दयिता पद्मिन्येव दयिता पद्मिनी सल्लक्षणवती स्त्री तस्या वियोगेन निर्विण्णता किमतः परं गार्हस्थ्याश्रमेणेति निर्वेदस्तया हेतुना इव कृतम् उत्तरापथे वैराग्यार्थमिव प्रयाणं येन तेन ततश्च सकलजनैरुपसेविताः निजनिजपावित्र्यार्थमिव पादाः शीतनिवर्त्तकाकिरणा एव अङ्घ्रयो यस्य तेन किरणमालिना सूर्य्येण ॥ ८१ ॥

सरिदादीनि झटिति शीघ्रं न आसम्यक् सेवमानाभिः कुतः धूमैरनुमितो वन्हिस्तद्वत्तया अलक्षितजलत्वात्सरिदादीन्येव वनानि वितर्क्य एतानि वन्हिमन्ति धूमेभ्यः इत्येवमनुमायेत्यर्थः। झटिति इत्यनेन पूर्वं पूर्वं सञ्चारे तत्र जलस्य दृष्टचरत्वस्मरणात् सन्देहेन विशेषतो निभालनार्थं वासरमुखानि प्रभातानि वीक्ष्यमाणानि प्रकाशाकाङ्क्षयेत्यर्थः ॥ ८२ ॥

यवसानां तृणानां शिखरेषु समुदीर्णानि विमलानि मौक्तिकजालान्येव एतानि इति धिया निशायां निःस्पन्दितुं शीलं येषां तानि हिमकणवृन्दानि भगवतापि विभावतापि विभावसुना सूर्य्येणापि लेशेन घनवतापि । विभेत्यनेन प्रकाशवत्त्वात्सम्यग् निभालयितुं शक्नुवतापि कराः किरणा एव करास्तदग्रेण निजेत्यतिलोभान्नाप्यन्यद्वाराइत्यर्थः। कुत एतदवसीयते तत्राह यत्रेति दिवसमुखेष्वेव रात्रौतु सम्यक् स्थितानीत्यर्थः । मुहूर्त्तादेवेति तत्रापि चौर्य्यकर्मणि दक्षतेतिभावः ॥ ८३ ॥

घनतरा अतिनिबिड़ा दलनिकरा यत्र यथाभूतो विस्तारो येषां तद्भावेन हेतुना निरस्तो हिमानां निपातस्तेन चटुलाः श्लाघनीया विटपिनिकरा वृक्षसमूहास्तेषां तलमध्यमध्यास्य तत्रोपविश्य

स्य मन्थरमभ्यस्यमानरोमन्थमधुरैरतीतशीतभीतिभिरभितः कृष्णसारनिकुरम्बैरतिरमणीयाश्च यत्र वासरान्ताः ॥ ८४ ॥

परितप्तायःपिण्डप्रकाण्डसदृशतरणिबिम्बविनिपातजलधिजलोद्भूतबाष्पैरिव तुहिनकणैर्मलीमसेभ्यो दिशां मुखेभ्यः स्वस्वनिवासोन्मुखमुखरखगनिकरविततनभस्तलानि निशामुखानि ॥ ८५ ॥

परितश्च विनमदतिघनकिसलयनिकरसमासङ्गसङ्गतोष्मकुलायकुलकल्पस्थलविशेषकृतसुखशयनानां खगमिथुनानां निष्कूजस्तिमितैस्तरुभिरतिरम्याः शीतभिया चकोरैरप्यनभिसेव्यमानशशधरकान्तिकन्दलीकाः क्षणदाः ॥ ८६ ॥

किञ्च—गाढालिङ्गनरङ्गमेव शयनं मानोऽपमानं गतो
　　दीर्घैव प्रियसंकथा न रजनी क्षीणेति निद्राऽग्रहः ।
आलेपः परिरम्भणव्यवहितेः कर्त्तेति दूरे प्रियः
　　स्पर्शोष्मा प्रियंयोः स यत्र शिशिरः कालोऽप्यतिप्रेमदः ॥ ८७ ॥

न हि भवति तदानीं सम्भवो द्वेवगत्या चेदनु दिनमणिभासो गोचराः पद्मिनीनाम् ।
तदपि कुतुकयोगाद्दावलिः पद्मिनीनामुषसि भजति यस्मिन् पृष्ठतः सादरं ताः ॥ ८८ ॥

मन्थरं यथास्यात्तथा अभ्यस्यमानेन रोमन्थेन मधुरैर्दर्शनीयैरित्यर्थः । चटुलः सुन्दरे चले इतिधरणिः । निगीर्णघासादीनां पुनः सम्यक् चर्वणं रोमन्थः ॥ ८४ ॥

परितप्तम् अयःपिण्डप्रकाण्डं श्रेष्ठलोहपिण्डम् । प्रकाण्डमुद्धतल्लजौ प्रशस्तवाचकानीत्यमरः । प्रशंसावचनैश्चेति समासः । तत्सदृशस्य तरणिबिम्बस्य सूर्य्यमण्डलस्य निपातेन इव हेतुना जलधिजलेभ्य उद्भूतैर्बाष्पैरूष्मभिरिव उत्प्रेक्ष्यमाणैर्हिमकणैः । स्वस्वनिवासान् प्रति उन्मुखैर्मुखरैस्तदागमनकाले कूजद्भिः खगनिकरैर्व्याप्तं नभस्तलं येषु तानि ॥ ८५ ॥

विशेषेण नमताम् अतिनिविडानां किसलयनिकराणां समासङ्गेन हेतुना सङ्गतः प्राप्त ऊष्मा यत्र तथाभूतः कुलायकुलकल्पः नीडसमूहसदृशः स्थलविशेषस्तत्र कृतं सुखेन शयनं यैस्तेषां खगमिथुनानां स्त्रीपुंसौ मिथुनमित्यमरः । निष्कूजं शीतनिवर्त्तकोष्मसुखानुभवेन कूजनाभावः निर्मक्षिकमितिवत् समासः तेन हेतुना तत्सुखज्ञापनेन्यस्यानन्दरसेन स्तिमितैरव्याकुलत्वेनार्द्रैस्तरुभिः ८६

रजनी न क्षीणा इति हेतोर्निद्रायाम् अग्रहः नग्रहः आग्रहो नास्तीत्यर्थः । आलेपः कुङ्कुमादिसम्बन्धी दूरे त्यक्त इत्यर्थः । कुतः परिरम्भणस्य व्यवहितेर्व्यवधानस्य कर्त्ता इतिहेतोः । ततश्च प्रियसोः स्त्रीपुरुषयोर्गाढालिङ्गनेन स्पर्शे य ऊष्मा स एव प्रियः ॥ ८७ ॥

तदानीं पद्मिनीनां पद्मस्तम्बानां सम्भवो जन्मैव न भवति । क्वनु पुनर्दिनमणेः रत्नायकस्य सूर्य्यस्य भासः किरणाः तासां गोचराः स्युरित्यर्थः । तदपि तथापि यस्मिन् शिशिरसुखाकरे पद्मिनीनां सलक्षणस्त्रीणां श्रेणी उषसि प्रभाते ता दिनमणिभासः पृष्ठदेशेन सेवत इत्याश्चर्य्यम् ॥ ८८ ॥

१ ईषदन्नमानो फलम् ।

कचभर मयि वन्धुजीवमालां दमनकपल्लववल्लभोऽवतंसः ।
उरसि च नवकुन्दकोरकाणां स्रगिति वधूं न दधे मणीन्द्रभूषाम्॥८९॥

अथ पञ्चमोऽपि यत्र प्रियसंयोग इव अभिनवोत्कलिकाकुलरसालः। भगवत्त्वज्ञानाभ्यास इव सदोच्छ्वसदतिमुक्तः भगवद्भक्त इव प्रफुल्लरक्ताशोकः। शास्त्रार्थ इव नवस्तवककोविदारः ॥ ९० ॥

महासमरसमावेश इव प्रभिन्नपुन्नागनिकरः मत्त इव मधुरसामोदमन्दारः। रघुनाथसेनासन्निवेश इव विलसत्कपिकः। जीव इव संसारसुखलवङ्गत्वामोदितः॥९१॥ इक्ष्वाकुवंश इव सदावलमानवकुलः। स्वरसमूह इव स्फुट सप्तलापः। दानप्रवाह इव प्रभिन्नकरीरः। रागीव सदा मन्दकुसुमाशुगो वसन्तकान्तो नाम ॥ ९२ ॥

दमनकपल्लव एव वल्लभो यत्र सः ॥ ८९ ॥

पञ्चमो वसन्तकान्तः। अभिनवानाम् उत्कलिकानाम् उत्कण्ठानां समूहेन रसालः सरसः। पक्षे अभिनवम् उद्गतानां कलिकानां कुलं यत्र तथाभूतो रसाल आम्रवृक्षो यत्र सः। उच्छ्वसन्तः प्रेमानुभावरूपोच्छ्वासवन्तः। अतिमुक्ताः मुक्तानपि महिम्ना अतिक्रान्ता भक्ता यत्र सः। पक्षे उच्छ्वसन्तः विकसन्तोऽतिमुक्ता माधव्यो यत्र सः। प्रफुल्लश्च रक्तश्च भगवत्यनुरागी अशोकः शोकरहितश्चेति कर्मधारयः। पक्षे प्रफुल्लो रक्ताशोको यत्र सः। नवः नवीनः स्तवः श्लाघा येषां तथा भूतानां कोविदानाम् आरो गमनं प्रवेशो यत्र सः। पक्षे नवस्तवकः[१] नूतनमुकुलयुक्तः कोविदारः काञ्चनार इतिख्यातो वृक्षो यत्र सः ॥ ९० ॥

प्रभिन्नानां मत्तानां पुन्नागानां पुरुषहस्तिनां समूहो यत्र सः। प्रभिन्नो गर्जितो मत्त इत्यमरः। पक्षे विकसितानां प्रभेदवतां वा पुन्नागवृक्षाणां निकरो यत्र सः। मधुनो रसस्य आमोदेन मन्दम् इयर्त्ति गच्छतीति सः। पक्षे मधुरः सामोदो मन्दारवृक्षो यत्र सः। विलसन्तः कपयो वानरा यत्र सः। पक्षे विलसत्कं सुखं येषां तथाभूताः पिकाः कोकिलाः यत्र सः। सुखशीर्षजलेषु कमितिविश्वः संसारेषु संसृतिषु सुखलवं सुखलेशं गत्वा प्राप्य आमोदितः आनन्दयुक्तः। पक्षे सम्यक् सारं सुखं यस्मात् तथाभूतं लवङ्गं यत्र सः। संसारसुखलवङ्गो वसन्तः स्वयमेव तस्यभावस्तत्त्वं तेन आमोदितः सुगन्धयुक्तः ॥ ९१ ॥

सदावलं मानवकुलं मनुवंशसमूहो मनुष्यसमूहः तत्तत्प्रजारूपो वा यत्र सः। पक्षे सदावलमानानि बकुलानि यत्र सः। बलतेरयं शानच्प्रत्ययान्तः। स्फुटाः स्पष्टाः सप्तभिर्निषादाद्यैरेव लापा आलापा यत्रसः। पक्षे स्फुटा प्रफुल्ला सप्तलामाप्नोतीति सः। सप्तला नवमालिकेत्यमरः। प्रभिन्नकरिभ्यो मत्तहस्तिभ्य ईरति गच्छति स्रवतीति यावत्। पक्षे विकसितकरीरवृक्षः। अमन्दः कुसुमाशुगः कामोयस्य सः पक्षे मन्दः कुसुमसम्बन्धी वायुर्यत्र सः। आशुगो वायुविशिखावित्यमरः ॥ ९२ ॥

---

१ स्तव एव स्तवकः।

यत्राहि—हिमविगमविमलतयाऽमृतकरोऽपि मृतकरोपितमाण इव परिरभते मधुरजनीर्मधुरजनीः ॥ ९३ ॥

मधुराका मधुरा काशते ॥ ९४ ॥

कामधुरा का मधुरारामरामणीयकवती न भवति ॥ ९५ ॥

यत्र च शीलितकुसुमोपवनः पवनः सेवितारामा रामाः समदास्तरुणास्तरुणा कुसुमितेनामितेनानिशविहारा विहाराः ॥ ९६ ॥

कुसुमरजःपूर्णा अपि दिगवला गवलाभा मधुकरैर्नीरजसो नीरजसोत्कण्ठैरपि॥९७॥

मकरन्दकरन्ददानानपि न पिबति कुसुमसमूहान समूहान्मधुकरनिकरो निकरोति-मत्तयाततया प्रकामकामहेलालसमहेलालसदाननगन्धेन ॥ ९८ ॥

अस्य विशेषतः कामोद्दीपनत्वं वर्णयति। अमृतकरश्चन्द्रः श्लेषेण अमृतमयहस्तः सन् मधुरजनीर्व-सन्तरात्रीः श्लेषेण मधुरा वधूः। समाः स्नुषाजनी वध्व इत्यमरः। परिरभते आलिङ्गति कीदृशीर्म-धुरा जनिरुत्पत्तिर्यासां ताः। मृतकेष्वपि रोपिताः प्राणा येनेति सर्वसुखदायीत्यर्थः ॥९३॥

मधोर्वसन्तस्य राका पूर्णचन्द्रा रात्रिः मधुरा सती काशते प्रकाशते। अत्र मधुराका मधुरा-केति चतुर्भिरक्षरैर्यमकमेवमुपरिष्टादपि चतुःपञ्चादिभिर्ज्ञेयम् ॥ ९४ ॥

का कामधुरा कामिनी मधुरेषु आरामेषु रामणीयकवती रमणीयत्ववती न भवति अपि तु सर्वा एवेत्यर्थः। रामणीयकस्य सदातनत्वेऽप्यत्राधिक्यविवक्षया कथनम् ॥ ९५ ॥

तत्र हेतुं वर्णयति। शीलितं पुष्पोद्यानं येन सः। तथाभूतः पवनः अतएव रामा व्रजतरुण्यो ऽपि सेवितारामाः पुष्पचयनच्छलेन प्राप्तोपवनाः। अतएव तरुणा युवानः समदाः। अत्र वर्ण नीयस्य यूनः श्रीकृष्णस्य एकत्वेपि बहुत्वं प्रकाशबाहुल्यापेक्षया इति ज्ञेयम्। कीदृशास्तरुणा वृक्षेण कुसुमितेन पुष्पितेन अमितेन अपरिमितेन हेतुना अनिशं विहारो येषां ते। अतएव विहारा विग-लितहारा विशिष्टहारा इति वा ॥ ९६ ॥

कुसुमानां रजोभिः पूर्णा अपि नीरजसः निर्मलाः अतएव तद्गन्धेन बलादाकृष्यमाणत्वात् नीर-जेषु सोत्कण्ठैरपि मधुकरैर्दिगवला दिगङ्गना एव गवलाभाः गवलं शृङ्गभेदः श्यामत्व चिक्कणत्वा-भ्यां तदाभाः नतु सरांसि गवलाभानीत्यर्थः। गवलं माहिषं शृङ्गमित्यमरः। व्यवधानेनापि वि-रोधो यमकानुरोधादेव ॥ ९७ ॥

मकरन्दरूपं करं ददानान् प्रयच्छतोऽपि कुसुमसमूहान् न पिबति प्रत्युत निकरोति तिरस्करो-तीत्यर्थः। निकारः स्यात् परिभवे इतिधरणिः। तेन मधुकरनिकरस्य राजकीयपुरुषत्वं वस-न्तस्य च राजत्वमारोपितम्। कीदृशान् समूहान् सम्यक् ऊहः कथमस्माकं मकरन्दं न गृह्णाति किमपराद्धमस्माभिरित्येवंरूपःतर्को येषां तान्। प्रकामं यथास्यात्तथा कामहेला कामसूचक-भावविशेषः तया सजृम्भनया अलसानां सालसनामभिनयन्तीनां महेलानां महिलानां लसता आननगन्धेन या मत्तता तया आततया विस्तृतया। महेला महिलाचेतिद्विरूपकोषः। ॥९८॥

यत्रच—किंशुकचुञ्चवः किंशुकचुञ्चवः किममी वनान्ता इत्यसं पलाशं पलाशविपिनमनुतर्कयन्ति चञ्चरीकाः ॥ ९९ ॥

किं बहुना—माकन्दानां कलितकलिकास्वादनैः कोकिलोऽयं
चञ्चच्चञ्चुर्यदयमनदत् कण्ठमूलं धुनानैः ।
ग्रासीभूतैः सह कलिकया यत्र लब्धावकाशो
मूर्तो नादः कुहुरिति बहिर्याति यत्र द्विरेफः ॥१००॥

किञ्च—मदकलकलकण्ठकण्ठघण्टाध्वनिनिकरानुमितस्वतन्त्रचारैः ।
प्रतिसरति स यत्र मत्तधामाकलकलदैः स्मरगन्धसिन्धुरेन्द्रैः ॥ १०१ ॥

पुन्नागैरवतंसनं विदधती वासन्तिकाभिः स्रजं गुच्छार्द्धं बकुलैर्ललाटफलके-
सिन्दूरकं किंशुकैः । चाम्पेयैः कुचकञ्चुकं कटितटे शोणाम्बरं वञ्जुलै-
र्नित्यं मूर्त्तिमती सती विजयते श्रीर्यत्र पौष्पाकरी ॥ १०२ ॥

स्मितकुसुममञ्जुपो मरन्दवाष्पैः प्रविलसदङ्कुरजातरोमहर्षाः ।
निरवधि किल यत्र भाववत्यो वनलतिकाः कति का न संलसन्ति ॥१०३॥

अथ षष्ठोऽपि यत्र कश्मीरदेश इव सततोत्पद्यमानतया सुरभितया च विलसत्क-

---

किंशुकानां कीराणां चुञ्चवः । चुञ्चुश्चञ्चुस्तलस्ताळ इति द्विरूपकोषः । किममी वनान्ताः वनप्रदेशाः कीदृशाः किंशुकैः पलाशैः प्रथिताः । तेन वित्तश्चुञ्चुप्चणपाविति चुञ्चुप् प्रत्ययः । इति संदेहेन असंपलाशं सम्यक् पत्ररहितं पलाशविपिनम् । चञ्चरीकाः भ्रमराः ॥ ९९ ॥

माकन्दानाम् आम्राणां कलितं कृतं कलिकानाम् आस्वादनं येन सः । तदेव स्वप्रतिवादिकोकिलनिनदमाकर्ण्य यदयमनदत् कूजितवान् चञ्चन्ती चञ्चुर्यस्य सः । कण्ठमूलं कम्पयन् ततश्च कलिकया सह ग्रासीभूतः ग्रासत्वं प्राप्तो द्विरेफो लब्धावकाशः सन् बहिर्याति । कीदृशः कुहुरिति नादो मूर्त्तः मूर्तिमत्त्वेन उत्प्रेक्षित इत्यर्थः । कुहुः स्यात्कोकिलालापे नष्टेन्दुकलदर्शयो रिति-मेदिनिः । कुहूर्दीर्घान्ता ह्रस्वान्ता चेत्यमरटीका । तेन भ्रमरस्य मुकुललग्नस्य कोकिलागमनाननुसन्धानं कोकिलस्यापि भ्रमरोऽयं न कलिकेत्यवधानेप्यसामर्थ्यं तथाग्रासमुखत्वेऽप्युच्चैः कूजनञ्च मत्ततयैव इतिज्ञेयम् । यत्र वसन्ते ॥ १०० ॥

कलकण्ठाः कोकिलाः स्वतन्त्रचारः स्वच्छन्दगामी स्मर एव गन्धसिन्धुरेन्द्रः महामत्त दुर्दान्त हस्तिवर्य्यः ॥ १०१ ॥

गुच्छार्द्धं हारभेदम् हारभेदा यष्टिभेदाद्गुच्छगुच्छार्द्ध गोस्तना इत्यमरः । वञ्जुलैरशोकैः पुन्नागो वसन्तसन्दीपा ॥ १०२ ॥

का वनलतिकाः कति न संलसन्ति ॥ १०३ ॥

षष्ठो निदाघऋतुः । विलसत्कं सुखं यस्मात् तथाभूतं पीतनं कुङ्कुमं यत्रसः । अथकुङ्कुमं

पीतनः। कासार इव प्रफुल्लमल्लिकाशालितः। शरत्काल इव सम्पन्नपाटलः। नाक इव सदोत्फुल्लशक्रः ॥ १०४ ॥

कमलाकर इव स्फुटतरशतपत्रकः। पर्वतगतवन्ह्यनुमानप्रयोग इव नियतधूम्याटः। प्रह्लादान्वय इव प्रचण्डविरोचनः। वैष्णवजन इव स्पृहणीयविधुपादः ॥ १०५ ॥

ईश्वर इव अखण्डनमज्जनसुखः। साधुजनसङ्ग इव क्रमह्रीयमानदोषावसरः। हरिभक्त इव सदानुकूलजगत्प्राणः। पुण्यवान् जन इव भद्रश्री रसविलाससुखो निदाघस्तुभगो नाम ॥ १०६ ॥

यत्र च। घनघर्मजनितमर्मबाधया सर्वतः पलायमानेनैव शैत्यगुणेन व्रजपद्मिनीजनस्तनदुर्गाश्रय एव केवलं विधीयते इव। यत्र च। तरवो वीरुधश्च निदाघपीडिता इव निरन्तरमन्योन्यं लधुलघुविचलद्भिः किसलयव्यजनैः सदयं वीजयन्तीव। नजानजघनविटपच्छाययाच्छाद्य शिशिरीकृतेन मणिमयालवालसलिलेन कृपामपामिवोपकल्प्य परमातिथ्यकुशला इव खगमृगकुलस्य पिपासानिरासाय यतन्ते विश्रमयन्ति च पुण्यवत्स्विव सदाच्छायेषु निजतलेषु ॥ १०७ ॥

---

काश्मीरजन्माग्निशिखं वरं बाल्हीकपीतने इत्यमरः। पक्षे विलसन् प्रफुल्लः कपीतनः शिरीषो यत्र सः। शिरीषस्तु कपीतन इत्यमरः। प्रफुल्लैर्मल्लिकाक्षैर्हंसभेदैरलितः शोभितः। अल भूषणे धातुः। मल्लिनैर्मल्लिकाक्षास्ते इत्यमरः। पक्षे प्रफुल्लाभिर्मल्लिकाभिः शालितः शोभितः। पाटलः शरद्भवधान्यविशेषः। आशुर्व्रीहिः पाटलः स्यादित्यमरः। पक्षे पाटलापुष्पभेदः। शक्रः इन्द्रः कुटजवृक्षश्च। अथ कुटजः शक्रो वत्सक इत्यमरः ॥ १०४ ॥

शतपत्रं कमलं शतपत्रकः पक्षिविशेषश्च। अथ स्याच्छतपत्रकः दार्वाघाट इत्यमरः। नियताम् अव्यभिचारितां धूम्यां धूमसमूहम् अटति गच्छति अनुसन्धत्ते इति यावत्। समूहार्थे यत् प्रत्ययः। पक्षे नियतो धूम्याटः फिङ्गाइतिख्यातः पक्षिविशेषो यत्र सः। कालिङ्ग भृङ्गधूम्याटा इत्यमरः। विरोचनः प्रह्लादपुत्रः सूर्य्यश्च। विधुर्विष्णुश्चन्द्रश्च। पादश्चरणः किरणश्च ॥ १०५ ॥

अखण्डं पूर्णं नमतां जनानां सुखं यस्मात्सः। पक्षे न विद्यते खण्डनं यस्य तथा भूतं मज्जने सुखं यत्र सः। क्रमेण ह्रीयमानः क्षीयमाणो दोषाणां वैगुण्यानां रात्रीणाञ्च अवसरः उद्गमः क्षणश्च यत्र सः। सदा अनुकूला जगतां प्राणा यत्र सः। तथाचोक्तं। येनार्चितो हरिस्तेन तर्पितानि जगन्त्यपि। रज्यन्ति जन्तवस्तत्र स्थावरा जङ्गमा अपीति। पक्षे जगत्प्राणः पवनः जगत्प्राण समीरणा इत्यमरः भद्रा श्रीरविच्छिन्ना संपत्तिस्तया रसविलासात् शृङ्गारादिविलासात्सुखं यस्य सः। पक्षे भद्रश्री रस चन्दनद्रवः। भद्रश्रीश्चन्दनोऽस्त्रियामित्यमरः ॥ १०६ ॥

कृपाप्रपां कृपया पानीयशालिकां यतन्ते तरव इति पूर्वस्यैवानुषङ्गैः विश्रमयन्ति। विगतश्रमं कुर्वन्ति। विभक्तिविपरिणामेन खगमृगकुलमेव। छाया कान्तिरातपाभावश्च ॥ १०७ ॥

यत्र च खरतरदिनमणिकिरणानुविद्धदिनमणिपटलसमुद्घाटितदहनदाहनिर्वापणचणमणिमयविहारशिखरिशिखरनिःस्यन्दमानशिशिरतरनिर्झरजलप्रपातशीतलेषु घनतरविटपिविटपनिवारितवासरमणिमयूखजालेषु वनपथेषु परस्परकरासङ्गभङ्गिमरङ्गवल्यो क्वणझणायमानमणिनूपुरनिनदसरसं तादृश्यपि निदाघे वसन्तकाल इव सकुतुकं खेलन्ति व्रजदेव्य ॥ १०८ ॥

यत्र च। दिवसकरक्रूरनिकरज्वालजटालतया विषमविषधरनिःश्वासा इव करालतराः स्वयमेव स्वंस्वमेवोत्तापयन्तः सन्ततमनिर्वृता इव मति सलिलाशयं मज्जन्तोऽपि चात्मानं निर्वापयितुमसमर्था इव व्रजपद्मिनीजनस्तनपरिमलमिलनार्थमिवोपसर्पन्ति शीतला भवितुमनिलाः। यत्र च। दिवसादिव साध्वसात् क्षणादाऽऽप क्षणदापतिरुचिरा रुचिरामणीयकं जनानां तदा तदासङ्गेन ते निदाघमेव श्लाघन्ते ॥१०९॥

कर्पूरत्रसरेणुबन्धुभिरपां निःस्यन्दिभिर्बिन्दुभि-
श्चञ्चच्चामरचारुमारुतधुतैर्मुक्तावितानैरपि ।
आकीर्णे जलयन्त्रवेश्मनि सरोवाप्यादिमध्यस्थिते
कृष्णो यत्र मुदा निदाघदिवसे शेते समं कान्तयो ॥ ११० ॥

भालप्रान्तनिबद्धकुन्तलभरो मुक्तास्रजा स्थूलया ।
वासःकाञ्चनवारिहारि पवनस्पन्दानुमेयं दधत् ।
मल्लीकोरकमालया द्रुततरश्रीखण्डपङ्केन च ।
द्वित्रेणे प्रियमण्डनेन च कृताकल्पो हरिः क्रीडति ॥ १११ ॥

खरतैरतितीक्ष्णैर्दिनमणिकिरणैरनुविद्धेभ्यः दिनमणिपटलेभ्यः सम्य गुद्घाटितो यो दहनादिव दाहस्तस्य निर्वापणचणैर्निर्वापणेन प्रशस्तैर्मणिमयविहारपर्वतशिखरात् निःस्यन्दमानैः शिशिरतरैर्निर्झरसम्बन्धिजलप्रपातैः शीतलेषु ॥१०८॥

यत्र च निदाघे यदि क्षणदा रात्रिः क्षणदापतिना चन्द्रेण रुचिरा सती रुचिरामणीयकं रोचकत्वेन रमणीयत्वम् आप प्राप्तवती तत्र हेतुमुत्प्रेक्ष्यते। जनानां तदा दिवसादिव घर्मदुःसहात् दिनादिव साध्वसात् भयात् तद्विलोक्य कृपया निवारयितुमिवेत्यर्थः तदासङ्गेन तस्यां रात्रावासक्त्या तच्चैत्यसुखानुभवजनितया निदाघमेव धन्योऽयं निदाघसमयः यत्रैवैतादृशी रात्रिरिति श्लाघन्ते॥१०९॥

कर्पूराणां त्रसरेणुबन्धुभिः सूक्ष्मकणसहितैरपां बिन्दुभिर्निस्यन्दिभिर्नितरां स्रवद्भिः। मुक्तामयैर्वितानैश्च आकीर्णे व्याप्ते तैर्द्वयैः कीदृशैश्चञ्चतां चञ्चलानां चामराणां चारुणा मारुतेन धुतैः कम्पितैः ॥११०॥

भालस्य प्रान्ते निबद्धो द्विधा विभक्तः कुन्तभरो यस्य सः। वासः उत्तरीयं पवनस्य स्पन्देन चलनेन अनुमेयम् अनुमातुं शक्यं नान्यथेत्यति सूक्ष्मत्वात् काञ्चनजलमिव हारि मनोहरं। द्वित्रेणेति बहुतराणां धारणासहनात् तत्रापि प्रियेति स्वतः शैत्यगुणकेनेत्यर्थः॥१११॥

कर्णालङ्करणं शिरीषकुसुमैरुत्तंसनं पाटलै
मौलीमल्लिभिरङ्गदानि कुटजैः सम्पादयन्त्यात्मनः ।
आलीभिर्वनराजिभिः सह सदृग्भूषाभिरीशाङ्घ्रयः
सेव्यन्ते दिवसावसानसमये यस्मिन्निदाघश्रिया ॥ ११२ ॥

एवं द्वन्द्वशो द्वन्द्वशश्च ऋतुभिर्विभेदिता अपरेऽपि त्रयो विभागा इति नवकाननमेव वृन्दावनम् । मूलभूतन्तु षड्भिरेव ऋतुभिरुपसेवितमित्यङ्गाङ्गिभावेन दशविभागमिति ॥ ११३ ॥

यत्र षडृतुके विभागे—सीमन्ते नवनीपकं करतले नीलारविन्दं नव-
स्निग्धं लोध्ररजः कपोलफलके बन्धूकमालां गले ।
कर्णे वञ्जुलपल्लवं स्तवकिनं मल्लीस्रजं कुन्तले
बिभ्रत्यो व्रजसुभ्रुवः प्रतिदिनं कृष्णं सदोपासते ॥ ११४॥

यस्मिन्मञ्जुलकुञ्जमण्डपकुलं नानामणीन्द्रालयस्पर्द्धावर्द्धितसौभगं पिककुलैर्भृङ्गैश्च निष्कूजितम् । यस्मिन्नोषधयो ज्वलन्ति रजनौ दीपायिता सौरभं कस्तूरीहरिणाङ्गना विदधते लूमैश्च मय्यो मृजाम् ॥११५॥

एवं भूतस्य वृन्दावनस्य मध्ये इन्द्रनीलमणिहारयष्टिरिव इन्दीवरमालेव कज्जल-

उत्तंसनं शिरोभूषणम् ॥११२॥

एवं वृन्दावनस्य षड्विभागान् वर्णयित्वा अपरमपि त्रिभागचतुष्कं तत्तद्वर्णनेनैव वर्णितप्रायमुट्टङ्कयति द्वन्द्वशो द्वन्द्वश इति । अत्र शसैव वीप्सावगतौ द्विर्वचनं नोपपद्यते इति न वाच्यम् एकैकशो देहीत्यादौ द्विर्वचनेनैव तदवगतौ पुनः शस्प्रत्ययदर्शनात् तथाह्युक्तं न्यासकारेणापि भोजं भोजं प्रव्रजतीत्यादौ द्विर्वचनसापेक्षेणैव णमुला उच्यते पापच्यते इत्यादौ द्विर्वचननिरपेक्षेणैव यङा आभीक्ष्ण्यमुच्यते यथा ह्येक एव भारः कदाचिदेकेनैव केनचिदुह्यते कदाचिदन्यसापेक्षेणैव केनचिदिति द्वन्द्वशो द्वन्द्वशो द्वयेन द्वयेन कृत्वा ऋतुभिः शरदादिभिर्विभेदिता विभेदं प्रापिता यथा शरद्धेमन्तयोर्वर्णिततत्तल्लक्षणवत्त्वेन शरद्धेमन्तसंतोष एकः । शिशिरवसन्तकान्तोऽन्यः निदाघ वर्षाहर्षोऽपर इति त्रयो विभागाः अङ्गाङ्गिभावेनेति षडृतुकविभागः सर्वर्तुसुखदनामा खल्वङ्गी वर्षाहर्षादयस्तदङ्गानीत्यर्थः ॥११३॥

सीमन्त इति नीपारविन्दादीनि क्रमेण वर्षादिलक्षणसूचकानि । वञ्जुलोऽशोकः॥११४॥

यस्मिन् वर्णितलक्षणे वृन्दावने मञ्जुलं कुञ्जमण्डपकुलमस्ति । नाना मणीन्द्रा वैदूर्यादयस्तन्मयैरालयैर्मन्दिरैः सह या स्पर्धा तस्यां वर्द्धितं सौभगं यस्य तत् । निष्कूजितमिति कर्मणि क्तान्तम् । ततश्च ते भृङ्गादय एव यस्य गुणस्तवनार्थे वन्दिजनायन्ते इति भावः लूमैः पुच्छैः । पुच्छोऽस्त्री लूमलाङ्गूले इत्यमरः । मृजां मार्जनीकृत्यं विदधते कुर्वन्ति ॥११५॥

इन्द्रनीलेति लावण्येन इन्दीवरेति शैत्यसौगन्ध्यसौकुमार्यैः । कज्जलेति लोचनरोचकत्वेनांशेन

परिखेव असितशाटीव वृन्दाटवीदेव्याः काचन यमुना नाम नदी ॥११६॥

या खलु सतरङ्गापि नतरङ्गाधायिका। सकमलापि नश्यत्कमला। ससारसापि विसारसारस्या मज्जनसुखदापि न मज्जनसुखदा ॥११७॥

विविधलतिकाकारचित्रविचित्रितकञ्चुलिकयेव चिन्मणिशैवाललतिकावितत्या परिवृतवक्षःस्थलविलासिरथाङ्गपयोधरा कलितकल्हारादिपरागपटलचित्रपटा। भ्रमद्भ्रमरघटावद्धवेणिरिन्दीवरनयना विकसदरविन्दमुखी प्रफुल्लहल्लकलसदधरोष्ठी सारससारसनाञ्चितपुलिननितम्बा कलहंसहंसका मूर्त्तेव रमणीयता देवी तरलतरतरङ्गहस्तेनेव जलजकुसुमैः श्रीकृष्णाराधनमवाधमनिशमेव कुर्वाणा जरीजृम्भ्यते ११८

यस्याश्चोभयोरेव कूलयोःकुसुमभरभज्यमानविटपविटपिपटलप्रतिविम्बेन सलिलान्तरेऽपि कुसुमितं काननान्तरमिव व्यञ्जयन्त्यां सहप्रतिविम्बितं विहगकुलमपि वैसारिणा यत्र जिघत्सवस्तुण्डेन खण्डयन्तः क्षणमवतिष्ठन्ते ॥११९॥

रजनावपि विम्बितं नक्षत्रग्रहनिकरमपि सर्वतः केनापि विकीर्णं लाजजालमिव मन्यमानाः सफरा अपि प्रत्येकमुत्कण्ठन्ते ॥१२०॥

मध्ये च यस्याः कर्पूरपूरमयानीव तिमिरनिकरोद्वान्तकान्तकौमुदीशकलानीव

---

असितशाटीति अव्यभिचारिनेपथ्यसाधकत्वेन ॥११६॥

सतरङ्गा तरङ्गसहिता नतानां नम्रत्वाद्भक्तानां रङ्गस्य प्रेमसुखस्य आधायिका अर्पयित्री। सकमला पद्मसहितापि नश्यन्ति न ह्रासं प्राप्नुवन्ति कमलानि जलानि यस्याः सा। शो तनूकरणे श्यन्तः सलिलं कमलंजल मित्यमरः। णश अदर्शन इत्यस्य रूपे प्रथमोपस्थापिते विरोधः सारसः पक्षी विसारा मत्स्यास्तेषां सारस्यं वलं यस्यां सा। नमतां जनानां सुखदा॥११७॥

चिद्रूपाणां मणिमयीनां शैवाललतिकानां वितत्या निमज्ज्य उद्गतत्वेन परिवृतौ आवृतौ यमुनाया मध्यदेश एव वक्षस्थले तत्र विलासिनौ रथाङ्गावेव पयोधरौ यस्याः सा। सारसाः पक्षिण एव कूजनसाधर्म्येण सारसनं काञ्ची तेनाञ्चितः पुलिनरूपो नितम्बो यस्याः सा। कलहंस एव हंसकः पादकटकं यस्याः सा। जरीजृम्भ्यते अतिशयेन प्रकाशते ॥११८॥

कुसुमानां भरेण इव भज्यमानाः प्राप्यमाणभङ्गा विटपाः पल्लवाः यस्य तथाभूतस्य विटपिसमूहस्य प्रतिविम्बेन सह प्रतिविम्बितं विहगकुलं तत्रस्थपक्षिसमूहं जिघत्सवः अत्तुमिच्छवः वैसारिणा मत्स्याः अवतिष्ठन्ते। समवप्रविभ्यः स्थ इत्यात्मनेपदम् ॥ ११९ ॥

शफराः प्रोष्ठीनामानो मत्स्यभेदाः ॥ १२० ॥

कर्पूरप्रवाहमयानी .मेत्यनेन शैत्यसौगन्ध्यशौक्ल्यं ध्वनितम्। ततश्चमृगमदप्रवाहमय्या अर्पीति

---

१ विसरतीति ( ३।२।७८ ) विसारी मत्स्यः। ततः विसारिणो मत्स्य इति स्वार्थिकोऽण् इनण्यनपत्ये इति टिलोपाभावश्च।

वृन्दाटवीदेव्याः श्रीखण्डखण्डाङ्गरागपटलानीव विस्रस्तवेणीदण्डान्तारान्तरा विराजमानमालतीमाल्यखण्डानीव नवानि पुलिनानि ॥ १२१ ॥

येषु च कुत्रापि नवनवसमुज्जृम्भमाण मरकताङ्कुरायमाण मणितृणाङ्कुरेषु विविधान्येव कुसुमोपवनानि। अन्तरा अन्तरा मञ्जुलानि कुञ्जानि च। प्रतिपुलिनोपवनं चिन्मणिमयमण्डपाश्च ॥१२२॥

येषामङ्गनेषु सारससरारिकुररचक्रवाककलहंसादिभिः सह तत्काननचराः शुकपिकजीवञ्जीवचकोरकप्रभृतयो विहङ्गमाः सरभसमेव कृष्णकथालापेन मधुररसगोष्ठीमिव कुर्वन्तो वर्त्तन्ते। उभयतश्च पार्श्वयोर्यस्या विविधमणिवद्धेषु तटेषु अन्तरा अन्तरा मरकतकुरुविन्दवैदूर्य्यविद्रुमादि विविधमणिगणनिर्मिता अवताराः। येषामभिमुखसमानसुघटिततया तटयोरेव सोपानपरम्परे शोभादेव्या दशनपङ्क्ती इव दृश्येते ॥१२३॥

उभयतश्च येषां तिरस्कृतमणिमण्डपानि लतामन्दिरमण्डलानि ॥१२४॥

तानि च यथा। चत्वारस्तरवश्चतुर्षु सरुचः कोणेषु तेषामधो
द्वे द्वे चोभयतः मिथ इव लते विश्लेष्य तथोऽवर्द्धताम्।
तानाक्रम्य परस्परारावपुषः पुष्पैः फलैः पल्लवैः
साङ्गोपाङ्गमणीन्द्रमण्डपरुचं कुर्व्वन्ति सर्वा यथा ॥ १२५ ॥

---

व्यञ्जितया उत्प्रेक्षया जीवितो विरोधोऽपि द्योतितः। ननु कर्पूरपूरमयत्वेनोत्प्रेक्षसे चेत् पुलिनानि तर्हि कथं तेषां स्थैर्य्यमित्याशङ्क्यअन्यथोत्प्रेक्षते तिमिरेति। ननु तर्हि कुतः परस्परं पुनरपि वाध्यवाधकस्याभावस्तेषामित्याशङ्क्यपुनरन्यथोत्प्रेक्षते श्रीखण्डेति। ननु तर्हि नदीमध्यगतान्यपि तानि तया कथं न वाहितानीतिपुनरप्याशङ्क्यपुनस्ततोऽप्यन्यथा नदीसहितान्येव तान्युत्प्रेक्षते विस्रस्तेति १२१

येषु पुलिनेषु मध्ये कुत्रापि केषुचित् तेष्वन्यानि वहूनि पुलिनानि तृणगुल्मादिरहितानि स्वच्छवालुकामयानि सन्ति रासनाट्यलीलार्थमिति ॥ १२२ ॥

सारसादिभिर्जलचरैः शुकादयः स्थलचराः यस्या यमुनायाः द्वयोः पार्श्वयोरवतीर्य्यते एभिरित्यवताराः घाट इतिख्याताः ॥ १२३ ॥

येषां अवताराणामेवैकेषाम् उभयतश्च उभयोरुभयोर्वामदक्षिणपार्श्वयोः ॥ १२४ ॥

चतुर्षु कोणेषु चत्वारस्तरवः सरुचः रुचिरित्युपलक्षणं स्थौल्यदैर्घ्यविस्तारैरपि तुल्याः ज्ञेयाः तेषामेकैकस्य अधः उभयतः उभयोरुभयोः पार्श्वयो द्वे द्वे एका दक्षिणे पार्श्वे एका वामे एवं द्वे द्वे विधत् उपरि चतुर्दिक्षु च औचित्यानुरूपेण तथा अवर्द्धतां व्याप्तवत्यौ वर्द्धनेच्छेदनपूरणयोरिरस्य परस्मैपदिनो रूपम्। यथा तांस्तरूनाक्रम्य परस्परम् आत्तानि गृहीतानि जटितानि वपूंषि यासां तथाभूताः सत्यः सर्वा अष्टावेव लताः पुष्पादिभिरङ्गोपाङ्गसहितमणिमयमण्डपानामिव रुचं कान्तिं कुर्वन्ति ॥ १२५ ॥

तत्प्रकारो यथा । स्तम्भास्तेऽमीडिम्भ्यो नियतकुसुमिताः स्कन्धशाखास्तदीयो-
वल्लीनां पुष्पितानामपि विटपकुलैः कल्पितानि च्छदीपि ।
कैश्चिद्वारोपि भङ्गीविरचनरुचिरो भित्तयः कैश्चिदन्यैः
पुष्पैः प्रालम्बचूडाकलसविरचनाचामरादीनि कैश्चित् ॥ १२६ ॥

अथ यस्य वृन्दावनस्य मध्ये पुरुषावतार इव सहस्रशिराः सहस्रपाच म-
हाविनोदीव अमलमणिकटकः विविधमणिकुण्डलश्च शब्दग्राम इव विविधधातुयो-
निः भुव इव भूभृत्कुलभूषणोपि भगवदनुग्रहेण लङ्घितसकलोपरितनलोकः १२७
सुनासीरनासीर इव दुरवगाहगुहालङ्कृतः मलयइव सर्वतो भद्रश्रीरपि न भुज-
गावासः हर इव चन्द्रचूडोऽप्यनुग्रः । भगवानिव विचित्रवनमालः । आनन्द इव म-
होत्सवेष्टः॥१२८॥

भूवलय इव लोकालोकरमणीयः । आनन्दकन्दरवटोऽपि आनन्दकन्दरावटः ।
वनराजीसत्वानामप्यवनराजी सत्वानां गोवर्द्धनो नामगिरिवरः ॥ १२९ ॥

ते प्रसिद्धा अमी पूर्वोक्ताश्चत्वारस्तरवो भूमितः ऋजूभूयोत्थितत्वेन चत्वारः स्तम्भाः। तदीयास्तरु सम्बन्धिन्यःस्कन्धशाखा नियतं सुष्ठु वक्रीभूय परस्परं मिलिताः चतस्रोवडभ्यः। वल्लीनां विटपकुलैः पल्लवसमूहैः छदींपि छादीनीति ख्यातानि कल्पितानि। कैश्चिद्वल्लीनां विटपकुलैर्भङ्ग्या सन्निवेशकौशलेन यद्विरचनं तेन रुचिराश्चतस्रो द्वारोऽपि कल्पिताः। तथा तैरेवान्यैः कैश्चिद्भित्तयः तथा पुष्पैस्तादृशतादृश विन्यासवैशिष्ट्येन स्थितैः प्रालम्बादीनीति। तत्र प्रालम्बानि पटलेभ्यो लम्बमानमाल्यानि विरचना विविधपत्रावल्यादीनाम्। रचना स्यात् परिस्पन्द इत्यमरः॥१२६॥

सहस्रसंख्यानि शिरांसि मस्तकानि शृङ्गाणि च। पादाश्चरणाः प्रत्यन्तशैलाश्च। पादाः प्रत्यन्त पर्वता इत्यमरः। विनोदो विलासः। कटकं वलयः पक्षे कटकोऽस्त्री नितम्बोऽद्रेरित्यमरः। मणिमयानि कुण्डानि लातीति सः। धातवो भू या वा दिव प्रभृतयः मनःशिलादयश्च। भूभृत् राजा पर्वतश्च भूभृत् भूमिधरे नृपे इत्यमरः। उपरितनलोकोमहर्लोकः पक्षेवैकुण्ठः ॥ १२७ ॥

सुनासीर इन्द्रः नासीरस्तस्य सेना। गुहः कार्त्तिकेयः पक्षे देवखातविले गुहे त्यमरः। सर्वतो भद्रश्रीश्चन्दनतरुर्यत्र पक्षेसर्वेभ्योऽपि भद्राश्रीः समृद्धिर्यस्यसः। पर्वतपक्षे चूडा शृङ्गम् अनुग्रः सौम्यः। वनमाला आपादलम्बिमाल्यं वनश्रेणी च। महति उत्सवे मङ्गलकर्मणि इष्टः प्रशस्तः। पक्षे महद्भिरुत्सैः प्रस्रवणैर्वेष्टोवेष्टनं यस्य सः। उत्सः प्रस्रवण मित्यमरः॥१२८॥

लोकालोकस्तन्नामा पर्वतः पक्षे लोककर्तृकदर्शनम्। आनन्दानां कन्दं मूलं रान्ति तथाविधा वटवृक्षा यत्र सः। आनन्दरूपकन्दराणाम् अवटो गर्त्तो यत्र सः। सत्वानां प्राणिनाम् अवनेन पालनेन राजितुं शीलं यस्य सोऽवनराजी सत्वानां कीदृशानां वनराजीसत्वानां वनराजीषु सत्वं वर्त्तमानत्वं येषां तेषां मृगादीनामित्यर्थः। विरोधाभासद्योतकोऽपिकारः ॥१२९॥

यः खुल कैलासेनापि नोपमीयते अरूप्यत्वात् न च मेरुणापि अजातरूपत्वात् ॥१३० ॥

यत्र आदिरसवर्णनावर्णसमूह इव रूपकोपरूपकव्यापार इव माधुर्य्योपयोगी नटवर्गः ॥१३१॥

यत्र किल कालीयकतरुमूलवाहिना निर्झरेण परिमलपरिभावितासूपत्यकासु सकला एव तृणजातयोगन्धतृणतामभिपद्यन्ते ॥१३२॥

हरिन्मणिद्रुमूलवाहिषु शुकपक्षच्छविषु निर्झरेषु कृतावगाहाः सर्वा एव रुरुचमरचमूरुगवयगन्धर्व्व सृमररोहिषशशसम्बरप्रभृतयो हरिणजातयो हरिन्मणिघटिता इव परस्परं न परिचिन्वन्ति। यत्र क्वचन महानीलमणिशिलामयूखच्छविच्छुरितस्फटिकमणिगण्डशैलः कलितनीलनिचोलो हलधर इवदरीदृश्यते क्वचन चारुचामीकरशिलाकिरणच्छुरिताधोभागमहामरकतगण्डशैलः पीताम्बरोनारायण इव१३३

क्वचन।कनकमणिशिलापट्ट संघट्ट भासुरहीरकोपलभित्तिर्हरगौरीविग्रह इव।क्वचनच । मरकतगण्डशैलमनूभयतः प्रपातिनिर्झरजलोमण्डलीकृतकोदण्डः सीतापतिरिव ॥ १३४ ॥

क्वचनच।रजतगण्डशैलोपरिगतकमलरागशिलापट्टसन्निवेशो महाहंसाधिरूढ़ः कमलयोनिरिव ॥१३५॥

---

अरूप्यत्वात् रूपकेण वर्णयितुमशक्यत्वात् अदृष्टोपमत्वादित्यर्थः। पक्षे रूप्यं रजतं तन्मयत्वाभावात् कैलाशशैलोहि रजतमयो भवति अयं तु विविधमणिशिलामय इतिभावः। अजातरूपत्वात् नित्यसिद्धरूपत्वात्। मेरुस्तुप्रकृतिजन्यरूप इति। पक्षे जातरूपं कनकं तन्मयत्वाभावात् मेरुर्हिकनकमयो भवतीति ॥१३०॥

आदिरसस्य वर्णनायां यो वर्णसमूहस्तत्र माधुर्य्योपयोगी टवर्गो न भवति। तथाह्युक्तं। मूर्द्धन्यवर्गान्त्यगाःस्पर्शाःटवर्गा रणौ लघू। अवृत्तिर्मध्यवृत्तिश्च माधुर्य्ये घटनामतेति। रूपकोपरूपकयोर्नाटकनाटिकयोर्यो व्यापारस्तत्र माधुर्य्यमुपयुङ्क्ते नटानां नर्त्तकानां वर्गः। यत्रयो गोवर्द्धने नटाःशोणाल इतिख्यातास्तेषां वर्गोऽपि माधुर्य्योपयोगी। नटकद्रुद्रुडुण्टुका इत्यमरः ॥ १३१ ॥

कालीयकः कलम्बक इति ख्यातः। भावितासु वासितासु उपत्यकासु शैलसमीपवर्त्तिभूमिषु। १३२।

हरिन्मणिर्मरकतं दरीदृश्यते। दर्शियंइन्तः। चामीकरं कनकम् ॥ १३३ ॥

अनुलक्षीकृत्य उभयतः भागद्वये वक्रीभूय प्रपातीनि प्रपतनशीलानि निर्झराणां जलानि यत्र सः ॥ १३४ ॥

कमलयोनिर्ब्रह्मा ॥१३५॥

क्वचन । योच्चतरमणिगण्डशैलशिखरतः प्रबलतरतरसा निस्स्यन्दमानेन विविधमणिकिरणच्छटाच्छुरितेन निर्मलनिर्झरेण ऋजूभूयलम्बमानसुरपतिकोदण्ड इव ॥१३६॥

क्वचनच । विविधमणिपाषाणशबलीभावभासुरस्य सानुनः समुदित्वरेण किरणनिकरेण नभसि निर्मीयमाणः शक्रशरासन इव ॥१३७॥

क्वचनच । वैदूर्यमणिशिखरशिखसमुद्भूतकिरणकन्दलीभिरनवच्छिन्नधूमलेखाभ्रमेण भ्रमद्धूम्याटनिकर इव ॥१३८॥

क्वचनच । श्रीकृष्णस्य मणिसिंहासनायमानसुसीमसुषीमशिलाविलासः ॥१३९॥

क्वचनच । श्रीकृष्णस्यरासविलासविशेषसमुचितमणिस्थलीपरिसरः। क्वचनच। श्रीकृष्णस्यमणिमन्दिरायमानकन्दरनिकरः। क्वचनच। पवनसमुद्धूतविविधकुसुमपरागविततिर्वितन्यमानश्रीकृष्णार्थकासितावितानः । क्वचन चामूलविकसितलोध्रतरुनिकरेणाभितोऽभितः प्रतानितपटकुट्टिमपटलायमानः ॥१४०॥

धव खदिर पलाश शल्लकी निचुल शिंशपा करज मधूक पनस पियाल ताली प्रभृतिभिर्वनराजिभिरपहृतातपः सहजानिर्वैरविसदृशसत्त्वसमाकुलश्च। अपरे तत्पादा अपि तद्गुणा एव ॥ १४१ ॥

एवमुक्तप्रकारगोवर्द्धनसमः कश्चन तस्या दूरत एव नन्दीश्वराख्यो द्वितीय इव नन्दी

---

प्रबलतरतरसा अतिवेगिना निःस्यन्दमानेन निष्पतता निर्गलनिर्झरेण हेतुना विविधमणीनां किरणच्छटाभि च्छुरितेन तेनास्य रक्तपीतनीलादिविविधवर्णमयत्वेन इन्द्रधनुः सारूप्यम् ॥१३६॥

शबलीभावः मिश्रीभावः तेन भासुरस्य विविधकान्तिमत इत्यर्थः। सानुनः प्रस्थदेशस्य। प्रस्थः सानुरस्त्रियामित्यमरः ॥१३७॥

धूम्याटः धूमलवर्णः पक्षिविशेषः ॥१३८॥

शोभना सीमा यासां तासां सुषीमाणां शीतलानां शिलानां विलासो यत्र सः। सुषीमः। शिशिरो जडः इत्यमरः ॥१३९॥

वितानश्चँदोआ इतिख्यातः। प्रतानितैर्विस्तारितैः पटैरेव कुट्टिमं शिल्पचातुर्येण उच्चीकृतमणिबन्धभूभागविशेषस्तत्समूह इवाचरन् ॥ १४० ॥

शल्लकी गजभक्ष्य गन्धवृक्षः। निचुलो हिज्जल इतिख्यातः। करजः करञ्जः। वनराजिभिः कर्त्रीभिः धवादिभिः किरणैश्च अपहृत आतपो यत्र स :। सहजं निर्वैरं वैराभावो येषां तैर्विसदृशैर्व्याघ्रमृगादिभिः सत्त्वै समाकुलः। १४१ ।

नन्दीश्वरो महेशः अतएवास्य शुभ्रवर्णत्वमायातम् । चारुतरैर्वैचवृक्षैराक्रीड उद्यानं यत्र सः । माधवस्य आसम्यक्, क्रीडा यत्र सः । अत्र नञर्थो माशब्दो विरोधाभासगमकः । शुकवान् किं न अपि तु शुकयुक्तः । असूनां प्रणानां प्रस्था प्रकर्षेण तिष्ठन्ती शोभा भक्ष्यपेयादिवस्तु-

---

१ काकुः । अथवा कुत्सिताः श्रीराधाकृष्णेत्यादिरटनसालसाः येशुकाः कीरास्तद्वान्न अपितु तद्रटनोत्सहशुकवान् ।

श्वरः क्षितिधरः। यश्च चारुतरधवाक्रीडोऽपिमाधवाक्रीडः। किंशुकवानपि न किंशुकवान सुमस्थशोभोऽपि असुमस्थशोभः ॥ १४२ ॥

वामन इव सुरसार्थसमुत्पादनखनिःस्यन्दमानसलिलनिर्झरशीतशिवः ॥ १४३ ॥

प्रौढमानिनीजन इव सहचरीप्रसादरचनाभेद्यमनःशिलासारः। हर इव सदोपगूढशैलजः ॥ १४४ ॥

यत्र काचन राजधानी व्रजपुरः पुरन्दरस्य। यत्र खलु मेखला शृङ्खलादिष्वेव खल इति स्वस्वसरःस्वेव मत्सर इति चन्द्र एव दोषाकर इति परिमलादिष्वेव मल इति छत्रचामरादिदण्डेष्वेव दण्ड इति नीविरसनादिष्वेव बन्ध इति चन्दनकुङ्कुमादिपङ्केष्वेवपङ्क इति समाध्यादौ केवलमाधिरिति आपीडादौ पीडेति शब्दः श्रूयते ॥ १४५ ॥

किंच—कुन्तलादौ कौटिल्यं हारादौ लौल्यं करचरणादिषु रागः अवलग्नादौ मध्यमाख्या पलोन्मित एव पलितं कुसुमादिधूलीष्वेव रजः अन्धकार एव तमः रत्ना-

सौलभ्य लक्षणा यत्रस। यद्वा न सुष्ठु मस्थशः प्रस्थपरिमाणेन भा कान्तिर्यस्य अपि तु महाभारादिपरिणामेनैव कथञ्चिदित्यर्थः। प्रस्थोऽस्त्री सानुमानयोरित्यमरः ॥ १४२ ॥

शोभना रसा त्रिपादपरिमिता पृथिवी वृतिकरी भूमिस्तदर्थं समुद्गतस्य पादस्य नखात् निःस्यन्दमानेन सलिलनिर्झरेण गङ्गाख्येन शीतः शीतलीकृतः शिवो येन सः। यद्वा सुरसार्थे देवसमूहे विषये समुत्पादनः इति पृथक् पदं तथा पदनखेति पूर्ववदर्थः। गिरिपक्षे सुरसानामर्थानां वस्तूनां सम्यगुत्पादनः। खनयो यत्र सः। तथा निःस्यन्दमान सलिलनिर्झरेषु गङ्गायां घोष इतिवल्लक्षणया तत्तटेषु शीतशिवं शोफ महरीनि ख्याता लता यत्र सः। शिवः शीतशिवं शम्यां शैलेयशतपुष्पयोरिति विश्वः ॥ १४३ ॥

सहचरीभिः सखीभिः प्रसादरचनाभिरेव भेद्यो भेत्तुं शक्यः मन एव शिलासारो यस्य सः। पक्षे सहचरी पीतझिण्टी तस्याः प्रसादरचना प्रफुल्लता परिपाटी तया अभेद्यः आकृत्या भिन्नो मनःशिलासारो यत्र सः। सदा उपगूढा आलिङ्गिता शैलजा पार्वती येन सः। पक्षे उप समीपे गूढं शैलजं शिलाजतुरसो यत्र सः। शैलजं तु शिलाजतु इत्यमरः ॥ १४४ ॥

भग्नादि शब्देभ्यो यथाक्रमेण [illegible] तथाभूमरश्यामकमलेषु इक्षुदण्डभुजदण्डाम्बुधनुदण्डेषु। तथा काव्यबन्धेषु चन्दनकस्तूरीकर्पूरपङ्केषु तथा राजाधिकारे तथा मनोनिरोधादिकेन इतिशब्दः श्रूयते इतिपदद्वयेन सर्वत्रान्वयः। तेन खलजनमात्सर्यवैगुण्यादीनां तत्राभाव इति ॥ १४५ ॥

कुन्तला [illegible] क्रमेण कटाक्षे यत्र [illegible] मध्याङ्गुष्ठौ। कर्पूरलोभेन [illegible] इति। अत्र अवलग्नं मध्यदेशः। मध्यमं [illegible] द्वन्द्वं ननु कलहे। द्वन्द्वं कलहयुग्मयोरित्यमरः। इह व्यभिचारि [illegible] पूर्वोक्ताः

दिष्वेव काठिन्यं युग्म एव द्वन्द्वं पवनादौ मन्दता मध्यादावेव क्षीणता लोचनादावेव चाञ्चल्यं जलेष्वेव नीचगामिता व्यभिचारिभावेष्वेव ग्लानिशङ्कादैन्यविषादादयः ॥ १४६ ॥

मुक्तादिष्वेव छिद्रं कटाक्षादिष्वेव तैक्ष्ण्यं रसविशेष एव कटुता जातावेव सामान्यं रजत एवदुर्वर्णता ॥ १४७ ॥

यत्रच । सर्वे इव नानागुणखनयोऽपि मुक्तावस्थाः ॥ १४८ ॥

यत्रच-अरुणोदय इव प्रदेश प्राचीरागमः।उत्सव प्रदेश इव वितानितमणितोरणः। सूर्य्य इव हरिदश्मरश्मिमहारथ्यः । हरनटनविलास इव महाट्टहासः ॥ १४९ ॥

सूर्योदय इव निजमहसोरुचारिमणिनिशान्तः। नारायण इव चामीकरपटलः।

खलत्वमत्सरत्वादयोऽपि भावा भूषणावहा एव नतु दूषणावायकाः। यथा राधाचन्द्रावलीयूथयोः परस्परेष्टानिष्टबाधनसाधनाभ्यां खलत्वमात्सर्य्यदोषोद्गारादयो दृष्टा एव । तथा श्रीकृष्णपितामहादीनां शतशः श्रुतिस्मृत्यागमवाक्यसाधितनित्यसिद्धभावानामपि पालित्यादिकं वात्सल्यादिरसपोषकत्वात् लोकवल्लीलाकैवल्यमिति न्यायेन कालिकमिव प्रतीतमप्यविरुद्धमचिन्त्यत्वादेव नतु तर्कविरोधमेव प्रमाय नित्यसिद्धा मुकुन्दवदित्यादि वचनजातमविस्रम्यान्यथा प्रतिपत्तव्यम् अचिन्त्याःखलु ये भावानतांस्तर्केण योजयेदिति प्रभासखण्डवचनेन तत्र तत्र तर्कयोजनायानिषिद्धत्वादिति ॥१४६॥

आदिशब्दाभ्यां शृङ्गवंशीनलेषु । बुद्ध्यनुरागनखाग्रेषु । दुर्वर्णता दुर्वर्णशब्दवाच्यता दुर्वर्णं रजतं रूप्यमित्यमरः ॥ १४७ ॥

सर्वे भगवत्परीवाराः यथोचितं नानागुणानां वृद्धत्वतारुण्यपौगण्डबाल्यनिष्ठानां वात्सल्यादिरसपोषकानां गुणानां खनिरूपा अपि श्रीकृष्णपितामहादयः मुक्तावस्थास्त्यक्तकालिकभावाः कालकृतविकाररहिता इत्यर्थः। पूर्वोक्तयुक्तेरेव विशेषः कालिकोऽवस्था **इत्यमरः** सगुणत्वेपि मुक्तावस्थत्वमिति श्रवणाद्विरोधाभासः ॥ १४८ ॥

प्राच्यादिशो रागेण रक्तिम्ना मा शोभा यतः सः । पक्षे प्राचीरैरगमोऽगम्यः वितानितं वितानयुक्तं विस्तारितं च मणिमयं तोरणं वन्दनमाला सिंहद्वाराख्यवहिर्द्वारञ्च यत्र सः। हरिदश्मा हरिन्मणिस्तद्वत्रश्मयः किरणा येषां ते महारथ्या महान्तो रथवाहका अश्वा यस्य सः। अतएव हरिदश्व इति सूर्य्यनामप्रसिद्धं । रथ्यो वोढा रथस्य य इत्यमरः। पक्षे हरिदश्मानां रश्मयो यासु ता महत्यो रथ्याः प्रतोल्यो यत्र सः। रथ्या प्रतोलीविशिखे त्यमरः। रथ्यागलीति-ख्याता। अट्टहासो विकटहास्यं अट्टालिका प्रकाशश्च ॥ १४९ ॥

निजस्य महसा तेजसा उरुचारुमणि सति अधिकचारुतायां सत्यां निशाया रात्रेरन्तो नाशो यत्र सः। पक्षे निजमहसाउरुचारीणि मणिमयानि निशान्तानि मन्दिराणि यत्र सः। निशान्त वस्त्यसदनमि-त्यमरः। चामीकरं स्वर्णं तद्वर्णं पटं लातीति सः। पक्षे पटलं छाउनीति ख्यातम्। उपयुक्ता मुक्तावली मुक्ताश्रेणी यत्र सः। पक्षे उपयुक्ताभिराधिक्येन छग्नाभिरुपलक्षितं वल्मीकं पुञ्जा इतिख्यातं यत्र सः।

प्रमानन्द इव उपयुक्तमुक्तावलीकः । सत्सेनानीसार इव विदूरवलभीकः १९०। चकोरनिकर इव शशधरकान्तगोपानसीमः। रत्नाद्रिरिव विविधरत्नप्रघणः। हर इव सदा महोमाङ्गनः पुरनिकरः ॥ १९१ ॥

यस्यप्रधानतमप्रसारप्राचीरं मरकतगृहं हेमपटलं प्रवालस्तम्भालिस्फटिकवृत्तिवैदूर्य्यवडभिः । महानीलेन्द्राद्वं विमलकुरुविन्दोपलमहाप्रतीहारं नानाकृतिजितविमानावलिपुरम् ॥ १९२ ॥

कुड्ये यस्य मणिप्रवेकरचिते शिल्पक्रियाकल्पितैः ।
प्रत्यासज्य शुकैः समं गृहशुकैर्व्वासादितस्थेमभिः ।
सम्प्राणाः किममी इमे किमथ वेत्युन्मीलितः संशया
द्दातुं दाडिमबीजकानि सुचिरं मुह्यन्ति मुग्धाङ्गनाः ॥ १९३ ॥

यत्र पुरे मूर्त्त एव वात्सल्यरसः।शरीरभृदिव शुद्धसत्वम्।सार इव सकलसौभाग्यस्य।द्वीपइवानन्दसमुद्रस्य श्रीनन्दोनाम व्रजराजः । यः खलु भगवत्पितृभावभावुक सुभगम्भावुकः । चिद्विलास इव सदैकावस्थः ॥ १९४ ॥

---

वली कनीध्रे पटलप्रान्ते इत्यमरः । यद्वा उपयुक्ता मुक्ता आवलीकं वलीकपर्य्यन्तं यत्र सः सारो मुख्यः विदूरा वलानां सेनानां भीर्यस्मात्सः यमाश्रित्य सेनापरेभ्यो न विभ्यतीत्यर्थः। पक्षे विदूरा वलभी पार्श्वतिख्याताम् अन्तर्गृहोर्द्धवर्त्ति दारुखण्डं यत्र सः ॥ १९० ॥

शशधरस्य चन्द्रस्यैव कान्तानां कमनीयानां गवां रश्मीनां पाने सीमा मर्य्यादा यस्य सः। पक्षे चन्द्रकान्तमणिमयीभिर्गोपानसीभिर्श्चाडि इतिख्यातिभिर्मा शोभा यस्य सः। गोपानसीतु वडभी च्छादने वक्रदारुणीत्यमरः। विविधैरत्नैः प्रघनः अतिनिविडः। पक्षे विविधरत्नमयालिन्दः। प्रघाणप्रघणालिन्दा वहिर्द्वारप्रकोष्ठक इत्यमरः। सदा मह उत्सवो यस्यां सा । उमा पार्वती अङ्गना यस्य सः। पक्षे सदाम दामयुक्तं होमाङ्गनं होमचत्वरं यत्र सः । पुरनिकरः उपनन्दादिस्वामिकः ॥ १९१ ॥

प्रधानतमं श्रीमन्नन्दस्वामिकं पुरं प्रतीहारो द्वारं नानाकृतयो विविधचित्राणि ॥ ९२॥

कुड्ये भित्तौ मणिप्रवेको मणिश्रेष्ठः। ध्वाने प्रधानं प्रमुखप्रवेकानुत्तमोत्तमा इत्यमरः। चित्रितैः शुकैः सह प्रत्यासज्य प्रत्यासत्तिं कृत्वा सख्यं विधायेत्यर्थः। अतएव आसादितः स्थेमा स्थैर्य्यं स्वीकृततद्दर्शनया निस्पन्दत्वं येस्तेषु उन्मीलतः संशयात् उन्मीलन् उद्भवन् यः संशयः सन्देहस्तस्माद्धेतोः॥१९३॥

भगवत्पितृभावः पितृत्वं तदेव भावुकं तेन सुभगम्भावुकः सुभगो भवतीति सः । सदा एकावस्था यस्य सः। श्रीकृष्णस्य चरमकैशोरे नित्यस्थितिवत् अस्यापि तिलतण्डुलितकेशताप्रादकप्रथमवार्द्धके वयसि नित्यस्थितिरित्यर्थः अस्मिन्नपि तथाविध एव नन्दे उपलक्षणमेतत्।अन्येषामपि भगवत्तथा तथा ध्यायतां त्रैकालिकानामुपासकानामनादिपरम्परा एव तत्तत्साक्षात्कार एव श्रवणात् श्रुतिस्मृत्यागमीयपरः शतवचनेभ्य यौवनकैशोरपौगण्डादन्य।उपलक्षणमेतदन्येषामपि भगवत्परिवाराणां स्वस्वरसपोषकत्वेन तथा तथा भावे एवैव युक्तिरनुसन्धेया ॥ १९४ ॥

यस्यच भगवत्प्रकाशफलाकल्पवल्लीव मूर्त्तिमतीव वात्सल्यरसश्रीः सञ्चारिणीव तेजोमञ्जरी स्वकुलयशोदा यशोदा नाम सधर्मचारिणी ॥ १९५ ॥

यत्रच--राजधान्यां वहव एव गोदुहः । सर्वे पशुपतयोऽपि अहरा अभवा अनुग्राश्च गव्याजीवा अपि न गव्या जीवाः ॥ १९६ ॥

तत्रच--केचन व्रजराजस्य सनाभयः केचन परम्परासम्बन्धभाजः तेषामपत्यानि श्रीकृष्णसहचराः। केचन गोदुहो मूर्त्ता इव भगवद्धर्मास्तत्पत्न्यश्च मूर्त्ता इव भक्तिवृत्तयः । तदुत्पन्नाः कन्या भगवत्प्रेयस्यः ॥ १९७ ॥

येतु श्रीकृष्णसहचरा बालकास्ते सर्वे श्रीसनकादय इव नित्यकौमाराः ॥१९८॥

वनप्रदेशा इव सवयसः हारभेदा इव परस्परतोऽविसदृशगुणाः। शरत्पद्माकरा इव बृहस्पतिवंशा इव सदाच्छविकचाः । ईशानदिग्विभागा इव समदसुप्रतीकाः।१९९।

शरद्विलासा इव पद्मास्याः । षड्जमध्यमपञ्चमस्वरा इव समानश्रुतयः कुसुमसमूहा इव सुप्रागाः ।१६० ।

---

यस्यच सधर्मचारिणी यशोदा नामेत्यन्वयः ॥ १९५ ॥

गोदुहोगोपा, अहराः चौरगहिताः अभवाः संसाररहिताः अनुग्राः सौम्याः हरादीनां पशुपतिवाचकत्वेन विरोधः। गव्यमेव आजीवो जीविका येषां ते। गोः पृथिवी तद्भवा गव्याः दिगादित्वाद्यत् । ते जीवाः गव्याः पार्थिवा न भवन्ति किन्तु चिन्मया इत्यर्थः॥ १९६ ॥

सनाभयः सपिण्डाः ॥ १९७ ॥

नित्यकौमारा इति श्रीकृष्णसवयस्त्वात् प्रायोनित्यकैशोरत्वेऽपि तत्क्रियाकारित्वासम्भवान्नित्यकौमारा एवोच्यन्ते। अतः श्रीकृष्णसखिषु बलदेवादिकं विना सर्वेषां चेटविटपादीनां शृङ्गाररससाहाय्यचातुर्य्येऽपि सनकादिभिरेवसाधर्म्यम् ॥ १९८ ॥

वयांसि पक्षिणस्तैः सहिता पक्षे समानं वयो येषां ते।खगवाल्यादिनोर्वय इत्यमरः। गुणाः सूत्राणि सौहार्दादयश्च। पद्माकरपक्षे सदा अच्छा निर्मला विकचा प्रफुल्लाः पद्मानां प्रफुल्लत्वेन पद्माकरेऽप्युपचर्य्यते बृहस्पतिवंशपक्षे । सदाच्छविः सदाकान्तियुक्तः कचः शुक्राचार्य्यशिष्यत्वेन प्रसिद्धः येषु सहचरपक्षे कचाः केशाः सुप्रतीको दिग्गजः पक्षे समदा मृगमदचर्चायुक्ताः शोभनाःप्रतीका अङ्गानि येषां ते ॥ १९९ ॥

इदानीं मुखादिचरणपर्य्यन्तं प्रत्येकमङ्गशब्दसाधर्म्येणोपमिमानो विशिनष्टि। पद्मानाम् आस्या स्थितिर्येषु । स्यादास्यात्वासनं स्थिति रित्यमरः। पक्षे पद्मतुल्याननाः । समानास्तुल्यसङ्ख्याकाः श्रुतयो येषां ते तथाहि सप्तस्वराणां द्वाविंशतिश्रुतिकत्वे षड्जमध्यमपञ्चमानां चतस्रश्चतस्र इति द्वादशश्रुतयः । निषादगान्धारयोर्द्वे द्वे इति चतस्रः । ऋषभधैवतयोस्तिस्रस्तिस्र इतिषट् इत्येवं द्वाविंशतिरिति । पक्षे समानकर्णाः ॥ ११० ॥

अक्षदेविन इव चञ्चलाक्षाः । रघुनाथसहाया इव ओजस्विसुग्रीवाः । करभा इव पीनायतहस्ताः । मथ्यमानक्षीरनीरधितरङ्गा इव प्रसन्नवक्षोभाः ।१६१ ।

करिण इव पीनकटाः सदा सुखिन इव महोरवः चन्द्रा इव कोमलपादाः । सदैकदशा अपि त्रिदशैकाधिकास्ते च श्रीदामसुदामवसुदामसुबलादयः ॥ १६२ ॥

द्वितीयगोदुहान्तु ताः कन्याः । सुकविता इव सुकुमारपदाः । मनोवृत्तय इव निरुपमजङ्घालताः । वनवासप्रवृत्तरामराज्यश्रिय इव स्ववरजानुगतसकलसौभाग्याः । उत्सवभूमय इव घनोरुरम्भास्तम्भारोपाः ॥ १६३ ॥

दुरूहग्रन्थवृत्तय इव प्रकटितटीकाः । बन्धुजनचिरकालासङ्गतय इव बन्धुरोदराः । भगवन्नामकीर्त्तय इव सदावर्त्तनाभीकाः । भगवत्कृपा इव दीनावलग्नाः ।।१६४।।

वर्षाश्रिय इव नवपयोधराः । हेमन्तश्रिय इव सुवलितायतदोषाः अभिषेकावसानशिरःश्रिय इव कम्बुकन्धराः । नारायणकरशाखा इव मार्जितकमलाननाः ।१६५।

चञ्चलौ अक्षौ पाशकौ येषां ते । अक्षमिन्द्रिये ना द्यूताङ्गे इत्यमरः। पक्षे स्पष्टम् । ओजस्वी सुग्रीवो येषु ते । पक्षे ओजस्विनी शोभना ग्रीवा येषां ते । कृष्णेन सह कौतुकसङ्गरार्थं तथौचित्यात्। कलभा हस्तिशावकाः। प्रकर्षेण सीदतीति प्रसत्लदेर्गत्यर्थत्वात्। प्रसत् प्रसरन् नवः क्षोभो येषां ते। पक्षे प्रसन्ना वक्षसो भा दीप्तिर्येषां ते ॥ १६१ ॥

कटो गण्डः कटिश्च । गण्डः कट इति । कटो ना श्रोणिफलकं कटिरिति चामरः। महेन उत्सवेन उरवः प्रवीणाः । पक्षे स्पष्टम् । पादा रश्मयश्चरणाश्च सदा एकैव दशा येषां ते । श्रीकृष्णस्य चरमकैशोराविर्भावकाले ये यद्वयसस्ते तथावयस्त्वेन नित्यस्थितिमन्त इत्यभिप्रायः ।१६२।

अथ भगवत्प्रेयसीरपि चरणादिकेशान्तं तथैवोपमिमानो विशिनष्टि । निरुपमा जङ्घालता शीघ्रगामिता यासां ताः। जङ्घालोऽतिजव इत्यमरः । पक्षे स्पष्टम्। शोभने अवरजे कनिष्ठे भरते अनुगतं सकलं सौभाग्यं यासां ताः । पक्षे स्वयोर्वरयोर्जानुनोर्गतं प्राप्तं सकलं सौभाग्यं किं पुनः सर्वाङ्गेषु यासां ताः । घनो निविडः उरूणां विपुलानां रम्भास्तम्भानाम् आरोपो यासु ताः।पक्षे घनाभ्याम् ऊरुभ्यां रम्भास्तम्भो सौन्दर्य्येण आलुम्पन्तीति ताः । रलयोरैक्यात् ॥ १६३ ॥

टीकाविवरणम् पक्षे।प्रकृष्टा कटितटी यासां ताः।बन्धूनां रोदं रोदनं रान्तीति ताः।पक्षे बन्धुरम् अश्वत्थदलवदुन्नतानतम् उदरं यासां ताः। सदा आवर्त्तनेन पुनः पुनरुच्चारणेन न विद्यते भीर्भयं कुतश्चिदपि याभ्यस्ताः।पक्षे सन् शोभन आवर्त्तो यस्यां तथाभूता नाभीर्यासां ताः। दीनेषु अवलग्नाः सङ्गताः । पक्षे दीनम् अवलग्नं मध्यदेशो यासां ताः ।।१६४।।

सुष्ठु वलिता प्रतिदिनं वर्द्धमाना अतएव आयता दीर्घा दोषा रात्रिर्यासु ताः । पक्षे सुवलिते आ ईषदायते दोषे बाहू यासां ताः दोषा रात्रौ भुजेऽपि चेति विश्वः। अभिषेकस्य अवसाने अन्ते शिरसः शोभा इव कम्बुः शङ्खस्तदीयं कं जलं धरन्तीति ताः। पक्षे कम्बुवत्त्रिरेखाङ्कितग्रीवाः । करशाखाः कराङ्गुल्यः।मार्जितं कमलाया लक्ष्म्या आननं याभिस्ताः। पक्षे मार्जितं विमलीकृतं कमलमिवाननं यासांताः ।।१६५।।

---

१ कदलीस्तम्भानाम् ।

वसन्तश्रिय इव तिलकुसुमगन्धवहाः भगवन्मूर्त्तय इव ईक्षणानुगृहीतकुवलयाः। भगवद्गुणकथा इव श्रवणरम्याः। कुवेरपुरश्रिय इव विलसदलकाभिख्याः। पश्चिमदिग्विभागलक्ष्म्य इव अभिरामकेशकलापाः ॥ १६६ ॥

आसां मध्ये सकलरमणीमौलमणिमालेव। वैदर्भीरीतिरिव माधुर्य्यौजः प्रसादादि सकलगुणवती सकलालङ्कारवती रसभावमयीच। कनककेतकीव प्रेमारामस्य। तडिन्मञ्जरीव मधुरिमजलधरस्य कनकरेखेव सौन्दर्य्यनिकषपाषाणस्य। कौमुदीवानन्दकुमुदवान्धवस्य। भुजदर्पावलिरिव कुसुमायुधस्य। सारश्रीरिव लावण्यजलधेः। हासलक्ष्मीरिव मधुमदस्य। आकरभूरिव कलाकलापस्य। खनिरिव गुणमणिगणस्य। कापि श्रीराधिकानाम ॥ १६७ ॥

या खलु गौरी च गौरीसहस्राधिका। तथापि श्यामा अनादिरपि किशोरी। सुरूपापि असुरूपा सखीनिकुरम्बस्य। सौकुमार्य्यवतीचासौ कुमार्य्यवतीह सकलसौभाग्यम् ॥ १६८ ॥

---

तिलकुसुमस्य गन्धं वहन्तीति ताः। पक्षे तिलकुसुममिव गन्धवहा नासिका यासां ताः। ध्रांत्रे घ्राणं गन्धवहा इत्यमरः। ईक्षणेन अवलोकनेनैव अनुगृहीतं कुवलयं भूमण्डलं याभिस्ताः। पक्षे ईक्षणाभ्यां नेत्राभ्याम् अनुगृहीतं स्पर्द्धायोग्यत्वासंभवात् अनुकम्पितं कुवलयं नीलोत्पलं याभिस्ताः। श्रवणेन श्रवणाभ्यां च रम्याः। श्रिय इव सम्पद इव विलसन्ती अलकायाः पुर्य्याः अभिख्या शोभा याभ्यस्ताः।अभिख्या नाम शोभयोरित्यमरः। पक्षे विलसद्भिरलकैश्चूर्णकुन्तलैः शोभा यासां ताः।अभिरामस्य केशस्य कं जलं तस्येश्वरस्य वरुणस्य कलाः शिल्पानि पान्तीति ताः। पक्षे रमणीयकेशसमूहवत्यः ॥१६६॥

वैदर्भीति तथाचोक्तमलङ्कारकौस्तुभे।"अवृत्तिरल्पवृत्तिर्वा समस्तगुणभूषिता। वैदर्भी सा तु शृङ्गारे करुणेच प्रशस्यते"इति। केतकीतो विलक्षणा अति मधुरगन्धा कनककेतकीति तत्प्रेम्णः सर्वप्रेमाच्छादकस्ववैभवकत्वमुक्तम् तडिदिति सर्वमाधुर्य्यगुणस्याऽपि मधुरताधायकत्वं तन्माधुर्य्यस्य। कनकेति सर्वसौन्दर्य्यगुणेनाऽपि सर्वोत्कृष्टत्वपरीक्षया उत्तीर्णत्वं तत्सौन्दर्य्यस्य। कौमुदीति सर्वानन्दगुणस्याऽपि विशिष्टानन्दकताधायकत्वं तन्निष्टानन्दस्य।तथोक्तं शशी व्योमोत्सङ्गंशशिनमभितःकान्तिलहरीति। भुजदर्पेति निजविजयिनरनारायणाद्यवतारिणः श्रीकृष्णस्याऽपि तयैव विजयात्।तेनच सर्वकान्तागणाशक्यवशीकारस्य कृष्णस्यमानसरोधकत्वं तत्कामतान्त्रिकतायाः। सारश्रीरितिसर्वलावण्यस्याऽपि मूलभूतसम्पत्तिरूपत्वं तल्लावण्यस्य। हासेतिभुजदर्पेतिवत्। मधुर्वसन्तः। तेनच तत्कामतान्त्रिकतायाः समयगतवैलक्षण्यस्याऽपि सार्वदिकत्वप्रतीतिः आकरभूरिव खनीनां जन्मभूमिरिव। तेन सर्ववैदग्ध्यगुणस्याविर्भावकप्रकाशलवकत्वं तदीयवैदग्धीनाम्।खनिरिति तथैवार्थः। गुणाः पूर्वोक्तेभ्यो भिन्ना दयाक्षान्त्यादयो ज्ञेयाः ॥१६७॥

गौरी गौरवर्णा गौरीसहस्रात् पार्वतीसहस्रादप्याधिका। "श्यामा शीतकाले भवेदुष्णा उष्णकालेच शीतला। स्तनौ सुकठिनौ यस्याः सा श्यामा परिकीर्त्तितेत्युक्तलक्षणा"।असुरूपा प्राणरूपा। पुंसिभूम्न्यसवः प्राणा इत्यमरः। असौ कुमारी सकलं सौभाग्यम् अवति वशीकरोति।कीदृशी सौकुमार्य्यवती ॥१६८॥

यां खलु महालक्ष्मीरिति केचन लीलेति तान्त्रिकाः आनन्दिनीशक्तिरिति केचिदामनन्ति ॥ १६९ ॥

यस्याश्च विशाखाललितादयः समानगुणरूपास्तत्प्रतिच्छायारूपाः प्रियसख्यः ॥ १७० ॥

द्वितीया च काचिद्यूथपा चन्द्रावलीव परमाह्लादिनी । प्रकृतिरिव गुणमयी नयनेन्द्रियवृत्तिरिव रूपवती । अपां वृत्तिरिव रसमयी । कुसुमावलिरिव परमोदारा श्रीचन्द्रावलीनाम ललनारत्नम् । यस्याश्च पद्मा शैव्यादयः प्रियसख्यः। एवं श्रीराधासपक्षा श्यामा नाम कापि यूथपेति बह्व्य एव यत्र यूथपाः ॥ १७१ ॥

अथ यत्र राजधान्यां मूर्त्ता इव भगवद्धर्माश्चोर्वीगीर्वाणाः परमदयालवः शमदमतितिक्षोपरतीनां मूर्त्तय इवाऽपि सात्वतशास्त्रप्रवक्तारः । तदनुकूलवेदाभ्यासनिरताः केचन पञ्चरात्रनिष्ठाः व्रजराजकृतदानमात्रप्रतिग्रहीतारः । तदेकयाचकाः ॥ १७२ ॥

ये खलु ज्ञानानन्दयोः कातर्य्योपयुक्ता अपि न कातर्य्योपयुक्ताः। विद्याविद्योतेषु परमचातुर्य्यवन्तोऽपि चातुर्य्यवन्तः ॥ १७३ ॥

सदारमाधुर्य्या अपि नरमाधुर्य्याः । प्रकृतिगुणशावल्या अपि न प्रकृतिगुणशावल्याः ॥ १७४ ॥

---

आनन्दिनी ह्लादिनी । तथाह्युक्तं "ह्लादिनी या महाशक्तिः सर्वशक्तिवरीयसी" । तत्सारभूतेति । केचिदित्यत्रैव सारस्यम् आनन्दिनीभिः स्वाभिः शक्तिभिरिति रासान्ते स्वयं वर्णयिष्यमाणत्वात् महालक्ष्म्यास्तु एतद्वीयैश्वर्य्यवैभवमयांशभूतात्वेन तथालीलाशक्तेश्च पाद्मकार्त्तिकमाहात्म्यप्रसिद्ध्या एतद्दीपविहारकाननपालिवृन्दात्वेन च वैष्णवतोषण्यादिषु निर्द्धारितत्वाच्चेति ॥१६९॥

ललितायाः ज्येष्ठत्वेऽपि विशाखायाः प्राधान्यं राधया सह ऐक्यदृष्ट्या । तथाह्युक्तं नामरूपगुणादीनामैक्यात् श्रीराधिकैव येति ॥१७०॥

वृत्तिशब्दोऽत्र स्वरूपवाचकः । कुसुमावलिपक्षे परेषां मोदं हर्षम् आसम्यक् रातीति सा॥१७१॥

उर्वीगीर्वाणा विप्राः । शमो भगवन्निष्ठबुद्धिता । दम इन्द्रियवशीकारः । तितिक्षा क्षमा । उपरतिर्वैराग्यम् । सात्वतशास्त्रं श्रीभागवतादि । नारदपञ्चरात्रोक्तधर्मपराः तमेकं व्रजराजमेव याजयन्ति नान्यम् ॥१७२॥

प्रस्तुतत्वात् श्रीकृष्णसम्बन्धिनोर्ज्ञानानन्दयोर्मध्ये कातर्य्ये कतरस्यैकतरस्य भावः कातर्य्यम् तत्र उपयुक्ताः श्रीकृष्णस्य ऐश्वर्ये केचित् प्रविष्टाः केचिन्माधुर्य्ये चेत्यर्थः। एवमपि न कातर्य्ये कातरत्वे उपयुक्ताः अन्यानुपपाद्य सिद्धान्तज्ञा इत्यर्थः । तथाविद्यानामष्टादशानां विद्योतेषु विचारादिभिः प्रकाशनेषु । न च आतुर्य्यम् आतुरत्वं पराजयस्तद्वन्तः ॥ १७३ ॥

सदैव रमाणां सम्पत्तीनां धुर्य्याः दारसहितानामिव माधुर्य्यं येषां ते इति वा । नराणामिव माधुर्य्यं येषां ते । प्रकृत्या स्वभावेनैव ये गुणा मैत्र्यादयस्तैः शावल्यं वैचित्र्यं येषां ते । किन्तु न प्रकृत्या गुणैः सत्त्वादिभिः शावल्ये मिश्रीभावो येषां ते । अप्राकृताः शुद्धसत्त्वमया इत्यर्थः ॥१७४॥

किं बहुना—तैलिकताम्बूलिकमालिककाम्बविकगान्धिकस्वर्णकारघटकारव्योकारपट्टकारादयोऽपि चिद्रूपा अपि मनुष्यधर्माणः मनुष्यधर्माणोऽपि श्रीदा अपि पुण्यजनेश्वरा अपि नकुबेरा नैकपिङ्गा न नरवाहनाः ॥ १७५ ॥

किं बहुना । पुलिन्दा अपि यत्र वर्षाभ्रमरा इव जातिनाम्नैव विकला अपि सकलसुमनसां रतिमदाः ॥ १७६ ॥

यत्रच—अतिदीर्घतरमहास्फटिकमणिभित्तिचतुष्टयमपि मरकतगोपानसीखण्डाचटुलचरमभागदीर्घतरकनकवंशाकीर्णाः चतुःकोणावस्थितमहागोपानसीचतुष्टयावष्टम्भसुस्थितकुरुविन्दमयकौणिकचतुष्टयावष्टम्भमहावढभीकाः ॥१७७॥

भूधरभूमय इव विमलनानामणिपटलाः विचक्षणा इव निस्तम्भाः सहृदया इव विशदप्रकीर्णतराः महाराजपुरगोपुरनिकरा इव परितोविराजितद्रुमतीहाराः स्फुरत्पवनधूतधूलयः परितो महागोगृहाः ॥१७८॥

येषामङ्गनेषु सरस्वतीशरीरमिव पूर्णिमानक्तमिव सवंशुक्रम् नीलमणिशैलाग्रमिव

काम्बविकः शङ्खवणिक्। व्योकारो लोहकारकः। मनुष्यधर्माधाश्रयस्तथा कुबेरायाश्च त्रय एकपर्य्याया एवेति विरोधः। न कुत्सितं वेरं शरीरं येषां ते। न एकः पिङ्गोऽपि येषु ते। विष्टितो वेतनतो वा न नरा वहनक्लेशभाजः। नैककीर्तिर्नैकयशा इतिवन्नञो नलोपाभावः न शब्देन सह सुप्सुपेतिवा समासः ॥१७५॥

जातिर्मालतीपुष्पं तन्नाम्नैव विकला अपि आनन्दावेशेन विह्वला अपि सकलसुमनसां सर्वपुष्पाणां रतिप्रदाः। पक्षे पुलिन्देति नाम्नैव विकला निन्द्या अपि सकलदेवानां रतिप्रदाः। सुपर्वाणः सुमनसस्त्रिदिवेशो दिवौकस इत्यमरः ॥१७६॥

यत्रच राजधान्यां। महागोगृहाः कीदृशा अतिदीर्घतरे महास्फाटिकमणिमये भित्तिचतुष्टये यानि मरकतमणिमयानि गोपानसीखण्डानि चत्वारीत्यर्थात्। तेषु अचटुलैरचञ्चलैर्दृढनिबद्धैरित्यर्थः। चरमभागो दीर्घतरो येषां तैः कनकमयैर्वंशैर्बरगा इतिगौडे ख्यातैः काष्ठखण्डैराकीर्णाः व्याप्ताः। पुनः कीदृशाः चतुर्षु कोणेषु अवस्थितेन मरकतमयं यन्महागोपानसीचतुष्टयम्। तत्रावष्टम्भेन पूर्वगोपानसी उपरिगता क्षुद्रा इयन्तुपटलोपान्तगता महती ज्ञेया। अतएव सुस्थितेन निश्चलेन कुरुविन्दमणिमयेन कौणिकानां कोणा इव इतिख्यातानां चतुष्टयेन अवष्टब्धा महावडभीपाडि इति ख्यातम्। ऊर्ध्वगतं दारुखण्डं येषां ते ॥१७७॥

विमलानां नानामणीनां पटलं समूहो येषु ते। पक्षे विमलं नानामणिमयं पटलं छाउनि इतिख्यातं येषांते निस्तम्भा निरहङ्काराः स्थूणारहिताश्च विशदा निर्मलाः प्रकीर्णतराः असङ्कुचिताः पुरगोपुराणि पुरद्वाराणि प्रतीहारा द्वारपालाः द्वाराणिच ॥१७८॥

घना निविडा आयता दीर्घा वालहस्ताः केशसमूहा यस्य। पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे इत्यमरः। पक्षे वालहस्तः पुच्छपूर्वभागः। वालहस्तस्तु वालधिरित्यमरः। महसां तेजसा

श्यामशृङ्गम्। अङ्गनानिकुरम्बमिव घनायतवालहस्तम्। भगवच्चक्रमिव महसारिपुच्छम् ॥ १७९ ॥

तीर्थसलिलमिव अतितरसा स्नानमितम्। गणिपतिशरीरमिव महापीनम्। मन इव अवशम् ॥१८०॥

तपस्विकुलमिव सदा सुव्रतं चिन्तामणिकुलमिव सकलकामदुघं निदाघकाननमिव सदोत्फुल्लवत्सकं सुकविकाव्यमिव नानावर्णविन्यासञ्च नैचिकीनिकुरम्बम् ॥ १८१ ॥

यत्र च। भुवि निपतिताः कौमुदीनां सजीवा इव गर्भाः। सञ्चरन्त इव शिलाखण्डाः कैलासस्य। ग्रन्थय इव हरहासस्य। हिण्डीरा इव क्षीरसमुद्रस्य। मांसपिण्डा इव शुद्धसत्त्वस्य तत इतो धावमाना वत्सनिवहाः ॥१८२॥

यत्र च। गण्डशैला इव स्फटिकाचलस्य। महोर्मय इव महोदधेः। मुनय इव सार्यं गृहाः। जीवन्मुक्ता इव स्वैरचारिणः ॥ १८३ ॥

दिग्गजा इव पराविषाणाः। नृपा इव महाककुदाः। मत्ता इव स्तब्धारुणलोचनाः। महागर्ववन्त इव सदाहम्वादाः। विरक्ता इव लम्बमानगलकम्बलाः। विविधमणिवमोत्खातरेखाशबलितशृङ्गतया नानावर्णविषाणा इव खुरक्षुण्णमणिध

रिपुं छ्यति छिनत्ति। छो च्छेदने कप्रत्ययान्तः। पक्षे महेन उत्सवेन निरन्तरश्रीकृष्णदर्शनजनितेन सारि प्रसरणशीलं पुच्छं यस्य तत् ॥ १७९ ॥

अतितरसा अतिवेगेन स्नानविषये नितं मानयुक्तम्। यद्वा स्नानं लोककर्तृकमज्जनम् इतं प्राप्तम्। पक्षे अतितरसा नाम्ना गलकम्बलस्य नमितम्। महापीनम् अतिविपुलम्। पक्षे महत् आपीनम् ऊधो यस्य तत्। ऊधस्तु क्लीबमापीनमित्यमरः। अवशमनधीनम्। पक्षे न विद्यते वशा वन्ध्या यत्र। वशा वन्ध्येत्यमरः ॥१८०॥

सदा सुनियमयुक्तम्। पक्षे सदा सुव्रता यत्र तत्। सुव्रता सुखसन्दोह्या इत्यमरः। सकलान् कामान् दोग्धि पूरयतीति तत्। पक्षे सकला अपि कामदुघा यत्र तत्। सदा उत्फुल्ला वत्सकाः कुटजपुष्पाणि वत्साश्च यत्र तत्। नानावर्णानां माधुर्यादि व्यञ्जकाक्षराणां विशिष्टो न्यासः सन्दर्भो यत्र तत्। पक्षे श्वेतनीलपीतादिवर्णयुक्तम्। पूर्वोक्तं सर्वगुणरत्नं नैचिकनिकुरम्बमपेक्ष्य ज्ञेयम्। अतोऽत्रनिकुरम्बमिति जात्याश्रया एकवचनम् ॥१८१॥

कौमुदीनामित्यत्र शुभ्रत्वप्राधान्येनात्र कौमुदीनामित्याह्लादकत्वं प्राधान्येनोक्तम्। कैलासस्येति श्वेतिम्ना स्वहासस्य मनोज्ञत्वकुशलत्वम्। हिण्डीरा इति मार्दवम्। शुद्धसत्त्वस्येत्यत्राह्लादत्वम्। धावमाना इति चाञ्चल्यमावरुणम् ॥१८२॥

स्फटिकेति स्वच्छत्वं दृढत्वञ्च प्राधान्येनोक्तम्। महोर्मय इति दुर्वारवेगवत्त्वम्। सायमेव गृहा आश्रयो येषां ते ॥१८३॥

महान्ता गुरुशृङ्गाश्च विषाणेस्याम्। पशुशृङ्गे दन्ते इत्यमरः। महाककुदा इति। प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियामित्यमरः। सदा अहमेव दिवान् सुर इत्येवं वादो येषां ते।

रणिरजोभिरभितो धूपरा मूर्त्तिमन्तश्चतुष्पादा धर्मा इव महोक्षाः। यस्य गोकुलस्य कलाकलांशेन सुरभिलोकः समपादि ॥ १८४ ॥

यस्य शाखानगरेषु शृङ्गाटकानामभितोऽभितः समसूत्रनिपातपातिता इव श्रेणीकृता महाराजविजयसमया इव विलसत्पताकिन्यः मुक्तास्फोटा इव मौक्तिकमालम्बाः। वसन्ततरव इव प्रवालमयघणाः विविधमणिघटाघटिता विपणिविततयः ॥ १८५ ॥

काश्चिद्वसन्तश्रिय इव नानाकुसुमसौरभसुवासिताः काश्चिन्महाशैलाधित्यका इव विविधगन्धद्रव्यसुगन्धयः। काश्चिन्मणिखनय इव विविधमणिगणकान्तिकन्दलिताः। काश्चिद्विलासिजनवक्षस्तट्य इव चन्दनागुरुकस्तूरीघनसारसौरभोद्गाराः। काश्चित् पक्वशालिकेदारविततय इव शालिपरिमलोद्गारगरीयस्यो वणिजां निवासभूताः ॥ १८६ ॥

एवं विधस्य व्रजपुरस्य परितश्च महानगरं जलधितटानीव समुल्लसितविद्रुमाणि। महासैन्यानीव विविधकुञ्जराणि नानाविधगुल्मानिच। तपस्विकुलानीव नानाप्रकारव्रततीव्रातानिः रसिकानिकुरम्बाणीव सदाविलासेनामोदितवयांसि विपिनान्तराणि ॥ १८७ ॥

येषु अविरलगलदनाविलवल्गुगुग्गुलुनिर्यासपिच्छिलेषु वर्त्मसु परस्परनिबद्धकरकमलमभिसरन्ति विपिनदेव्यः। वनवृषभककुदरकपणचूर्णीभूतबदरतरुषण्डसमुत्पद्यमानजतुरजोभिरनवरतनिःस्यन्दमानमकरन्दभरनिर्भरतिमिततया चरणकमलेष्वनायासयावकपङ्कानुलेपो जरीजृम्भ्यते वनदेवतानाम् ॥ १८८ ॥

पक्षे हम्बा इतिशब्दम् आददतीति ते। वप्रः प्राचीरकोणादिगतो वुरुज इतिख्यातः। सुरभिलोको गोलोकः ॥ १८४ ॥

शाखानगरेषु नगरप्रान्तेषु शृङ्गाटकानां चतुष्पथानामिति षष्ठी समसूत्रेत्यनेनान्वयात् पश्चादभितोऽभितो वर्त्तमाना इत्यनेनान्वयेऽपि न द्वितीया। नहि प्रसक्तो वचनशतेनाऽपि निवर्त्तयितुं शक्यते इतिन्यायात्। समया इवेति समयशब्दो भुजाशब्दवत् टावन्तो दृष्टव्यः। मुक्तास्फोटाः शुक्तयः। मौक्तिकानां मुक्तानां प्रकृष्ट आलम्बो येषु। पक्षे मौक्तिकैः प्रालम्बम् ऋजुलम्बि माल्यं यासु ताः। प्रवालैः [illegible] प्रवालमयाः अलिन्दा यत्र ताः। विद्रुमः पुं- [illegible] ॥ १८५ ॥

शैलाधित्यकाः शैलोपरिगता भूमयः। घनसारः कर्पूरम्। शालयोधान्यानि। वणजामिति माल्यगन्धरत्नचन्दनधान्या शुणजीविनाम् ॥ १८६ ॥

व्रजपुरस्य सम्बन्धिमहानगरं श्रीमन्नन्दराजाधिवासं परितस्तस्यचतुर्दिक्षु अभितः परितः समयेत्यादिना द्वितीया विद्रुमाः प्रवालाख्यरत्नानि विशिष्टद्रुमाश्च। कुञ्जरा हस्तिनः पक्षे विविधकुञ्जयुक्तानि गुल्माः सैन्यविशेषाः वीरुधश्च। नानाप्रकारेषु व्रतेषु तीव्रःआतः प्रवेशसातत्यं येषां तानि। अत सातत्यगमने इत्यस्मात्घञ्। पक्षे व्रतत्यो लताः। वयांसि आयूंषि पक्षिणश्च १८७

ककुदां दरकषणं कण्डूयनार्थमीषद्घर्षणम्। तिमिततया स्तिमितत्वेन तिम ष्टिम आर्द्रीभावे धातू। जरीजृम्भ्यते अतिशयेन प्रकाशते ॥ १८८ ॥

मदमुदितरोमन्थमन्थरवनमेषमुखकुहरसमुदीर्णजीर्णकङ्कोलफलसौरभसुवासितानि दिशां मुखानि। वनमहिषविषाणशिखरक्षुण्णशरलसुरदारुचारुत्वगामोदमेदुरं गगनतलम्। वनकरिकरभघटाभग्नलग्नशल्लकीपल्लवास्तीर्णानि गिरितटानि १८९ वनधेनुगणास्वादितगन्धतृणरुचिरशाद्वलसौगन्ध्यवन्धूनि धरणितलानि। कर्णपूरीभूतसुललितमरिचगुच्छकाभिरभितः पुलिन्दसुन्दरीभिः करतलभग्नकर्पूरकदलिकानिर्यासंसंवासितदलितताम्बूलीदलदंशसरसाभिरवगाढा विपिनसीमानः। कपिकुलकवलीकृतनिस्तुलनिस्तलगोस्तनीफलगुच्छसमाच्छन्नानि भुवस्तलानि १९०

किञ्चान्यान्यपि काननानि। रसालपनसार्जुनक्रमुकनारिकेलासनैः। पलाशवटपर्कटीखदिरबिल्वजम्ब्वादिभिः। मधूकगिरिमल्लिकाबकुलनागपुन्नागकैरशोकवकपाटलीकनकचम्पकैश्चम्पकैः ॥ १९१ ॥

शिरीशधवशिंशपालकुचलोध्रकोशातकीप्रियालनटशल्लकीशरलशालपीलवादिभिः। कपित्थकरमर्दकैः प्रियकतिन्दुकाम्रातकैः करीरकरवीरकैः कदलिकालवल्यादिभिः ॥ १९२ ॥

तमालनवमालिकाकनकयूथिकायूथिका-
कुरण्टकलवङ्गिकादमनकातिमुक्तादिभिः।
अपि स्थलसरोजिनीविचिकिलादिभिः कन्दली-
प्रियङ्गुतुलसीमुखैरपि विचित्रवीरुद्गणैः ॥ १९३ ॥
सितासितविलोहितोत्पलसरोजकह्लारकै-
रथाङ्गबकसारसैः कुररहंसकारण्डवैः।
विराजिततरङ्गकैर्विमलवारिभिर्वापिका-
तडागसरसीमुखैः परिवृतानि तोयाशयैः ॥ १९४ ॥

तेषामेकतमं बृहद्वनं नाम वनम्। यत्र व्रजपुरपुरन्दरस्य यथोक्तप्रकारं राजधान्यन्तरमास्ते ॥ १९५ ॥

---

शल्लकी गजभक्ष्यो गन्धवृक्षः। गजभक्ष्या तु शल्लकीति त्रिकाण्डशेषः ॥ १८९ ॥

वर्तुलं निस्तलं वृत्तमित्यमरः। गोस्तनी द्राक्षा ॥ १९० ॥

अन्यानि वर्णितलक्षणाद्वृन्दावनादितराणि काम्यवनादीनीत्यर्थः। रसालादिभिः परिवृतानीति चतुर्थश्लोकस्थेनान्वयः। क्रमुको गुवाकः। पर्कटी प्लक्षः ॥ १९१ ॥

लकुचो डहुः। कोशातकी घीय तोरई इति ख्याता। ज्योत्स्नी पटोलिका याच कोशातकीत्यमरः १९२

अतिमुक्तो माधवी विचकिलो मल्लिका। आद्यन्तयो रसालतुलस्योर्निर्देशः सर्वेषामपि वृक्षाणां मङ्गलमयत्वसूचकः ॥ १९३ ॥

तोयाशयैर्जलाशयैः परिवृतानि कीदृशैः सितेत्यादिभिर्जलस्थपुष्पैः रथाङ्गादिभिर्जलचरपक्षिभिश्च विराजिताः शोभितास्तरङ्गा येषां तैः। वापीसरस्योर्महदल्पत्वाभ्यां भेदः ॥ १९४ ॥

उक्तप्रकारं श्रीनन्दाश्रममनतिक्रम्य ॥ १९५ ॥

उक्तमेतदखिलमलौकिकमपि भगवदिच्छया स्वीकृतलोकमध्यपातित्वं मांसचक्षुषो लौकिकमेव पश्यन्ति नयनदोषवशाच्छङ्खमपि पीतमिव ॥ १९६ ॥

भगवदिच्छा तु यथा ॥ १९७ ॥

आसाते पितृमातृभावभविकौ कृष्णस्य यत्राधिपा-
वेको नन्द इति प्रथामुप ययावन्या यशोदेति यौ ।

उक्तम् अस्ति सकलवैकुण्ठसारमित्युपक्रम्य वर्णितम् अलौकिकं प्रकृतिजन्यलोकभिन्नं केवलसच्चिदानन्दरसमयमपीत्यर्थः। भगवदिच्छयेति अनादिसिद्धयेच्छयेत्यर्थः। ततश्च तथाभूतत्वेनैवास्य नित्यत्वेऽपि द्विपरार्द्धावसाने प्रपञ्चाभावेऽपि योगमायाकल्पितस्य प्रपञ्चस्यान्तर्वर्त्तित्वं ज्ञेयम्। तथाभूतस्वरूपत्वेनैवास्य श्रीकृष्णस्य नराकृतित्वेनैव लौकिकालौकिकसर्वतो विलक्षणलीलादिभिर्महावैकुण्ठनाथादिभ्योऽपि चमत्कारकारित्वमिव महावैकुण्ठादिभ्योऽप्युत्कर्षो निःसीममाधुर्य्यातिरेकेण भागवतामृतादिषु सिद्धान्ततो घटत इति। किञ्च प्रपञ्चान्तर्वर्त्तित्वेऽपि सर्वप्रपञ्चव्यापकत्वमस्य भगवद्विग्रहस्येव अतर्क्यतयैवास्ति। एतत्प्रदेशैकदेशेऽपि ब्रह्मणां सपरिकराणां ब्रह्माण्डकोटीनां साक्षाद्दृष्टत्वादिति लौकिकं देशान्तरसाधारणं नयनयोर्दोषः पित्तप्रकोपस्तद्वशात्। देशान्तरसाधारण्यमस्य सर्वतो वैलक्षण्येन निरुपाधिचित्ताकर्षकत्वलक्षणमहागुणानुभवादपि ज्ञेयम्। परानन्दो यस्मिन्नयनपदवीभाजि भविता त्वया विज्ञातव्यो मधुवरवशोऽयं मधुरिपुरिति यत्र प्रकृत्या रतिरुत्तमानां तत्रानुभव एव परमोऽनुभावः. इत्यादेर्भगवतस्तदीयानां भक्तधामादीनां च चित्ताकर्षकत्वलक्षणगुणेनाऽपि परिचितत्वोक्तेः। अतस्तथाभूतचित्ताकर्षकत्वतारतम्येनाऽपि तेषामुत्कर्षतारतम्यं लक्ष्यते भक्तसुधीभिः तथैवाकृष्टचेतस्तारतम्येनैव तत्तद्द्रष्टुरप्युत्तमत्वतारतम्यं ज्ञायते ननु वर्णितलक्षणमणिमयवृक्षभूम्यादिमयत्वस्यादर्शनादेव उत्तमत्वहानिकरं मांसचक्षुर्भिरवाच्यम्। भगवदिच्छया विना दृष्टियोग्यजनैरपि तस्य द्रष्टुमशक्यत्वात्। यथोक्तं भागवतामृते लीलाढ्योऽपि प्रदेशोऽस्य कदाचित् किल कैश्चन। शून्य एवेक्ष्यते दृष्टियोग्यैरप्यपरैरपीति"। तथासामान्याकारेण दृष्टानामपि वृक्षगुल्मादिमयभूमीनामपि चिन्मयत्वमेव प्रतिपादितं ननु तदन्यथात्वम्। अलं विचारविस्तारेण। मल्लानामशनिरित्यादौ विराट्त्वेन दृष्टस्य कृष्णस्येव मांसचक्षुर्भिरनाकृष्टमनस्कैरासुरभावाक्रान्तैरपि दृष्टानां तत्तत्प्रदेशानां नाचिन्मयत्वं किन्तु कृष्णनिष्ठस्वरूपं स्यादृदृश्यैः सुगमं जनैरिति रीत्या तदानीं तत्तदर्थक्रियाकारित्वाभाव इति ॥ १९६ ॥

भगवदिच्छेति तादृशलीलास्थितेस्तद्धेतुकत्वेऽपि तच्छब्देनाभिधानमुपचारेणैव। सच तस्याः विलक्षणमाधुर्य्यापादकतदिच्छामात्रैकरसत्वबोधक इति ॥ १९७ ॥

प्रकटाप्रकटा चेति लीला सेयं द्विधोदितेत्यादिना भागवतामृतोक्ताया द्विधाभूताया एव लीलाया नित्यस्थितिपरिपाटीमाह **आसाते इति**।

यत्र गोकुले यौ अधिपौ अधीश्वरौ आसाते नित्यं विराजमानौ वर्त्तेते इत्यर्थः। कीदृशौ कृष्णस्य पितृमातृभाव एव भविकं मङ्गलं ययोस्तौ। कौ तावित्यपेक्षायामाह। एको नन्द इति अन्या यशोदेति प्रथां ख्यातिम् उप वसुदेवदेवक्यादिभ्योऽप्याधिक्येन ययौ। ताभ्यां एव श्रीकृष्णो नित्यकिशोरः

१ उपइह उपोऽधिके चेति कर्मप्रवचनीयसञ्ज्ञस्टीकाकारैर्द्योतितचर एव।

ताभ्यां नित्यकिशोर एष शिशुवत् प्रादुर्भवन्मोदते—
लीलायाः किमशक्यमस्ति भगवद्रूपस्य लीलानिधेः ॥ १९८ ॥
वात्सल्यमामोदयितुं तयोस्तत् शिशुर्भवन्पालनलालनाभ्याम् ।
अलौकिकैरेव समस्तभावैः सलौकिकत्वं स्वयमेति लोके ॥ १९९ ॥
गोगोपगोपीनिकरैर्विलासोऽलोकेऽपि तस्मिन् भवितुं क्षमेत ।

शिशुरिव प्रादुर्भवन् । शिशुवदिति कैशोराच्छादनांशमात्रविवक्षया वस्तुतस्तु शैशवादीनामपि नित्यत्वमग्रिमग्रन्थे स्पष्टमेव स्थापयिष्यते ग्रन्थकृता । मोदत इति वर्त्तमाननिर्देशात् निरन्तरमेव तत्राप्रकटलीलायां परस्परासंपृक्तस्वरूपैर्बहुभिः प्रकारैः । प्रकटलीलायां तु कदाचित्क्वचन ब्रह्माण्डवृन्दे एकेनैव प्रकारेण तत्र प्रत्येकमन्तरान्तराप्रकटितावान्तरप्रकारेणेति भेदः । ननु नित्यकिशोरत्वं शैशवादिमत्त्वञ्च एकत्र युगपद्विरोधित्वात्तत्राह लीलायाः किमशक्यमस्ति अचिन्त्यशक्त्या सर्वमपि सुशक्यमेवेत्यर्थः । किमशक्यमित्यनेन सूचितेन दुर्घटत्वेन शैशवादीनामपि नित्यत्वमत्रापि सूचितमभूदेव इति । भगवद्रूपो महावैकुण्ठनाथादिभ्योऽपि वर्य्यस्य श्रेष्ठस्य । केन वर्य्यत्वमित्यपेक्षायां हेतुगर्भितं विशिनष्टि लीलानिधेरिति । तदुक्तं लीलाप्रेम्णा प्रेमाधिक्यमित्यादीति ॥ १९८ ॥

ननु तस्य लोकवल्लीलात्वे किं प्रयोजनमित्यपेक्षायां भक्तविनोदनं विना नान्यन्मुख्यं प्रयोजनमिति सामान्येन वक्तुं विशिष्य तदेवैकमाह तयोर्नन्दयशोदयोः शिशुर्भवन् सन् पालनलालनाभ्यां तत्प्रसिद्धम् शैशवादिचेष्टान्वं वात्सल्यम् आमोदयितुं प्रकाशयितुं तदादिसर्वभक्तसुखार्थम् । यद्वा । अनुमोदयितुम् अप्रकटलीलायां तदादिताद‍ृशसिद्धान् प्रकटलीलायान्तु साधकान् समस्नानयितुमर्थः । अलौकिकैः कुत्राप्यदृष्टाश्रुतचरेण माधुर्य्येण तदाच्छादितैश्वर्य्येण च लोकमतिक्रान्तैः समस्तभावैर्वात्सल्यगोगणादिभिर्लोके अप्रकटे प्रकटेऽपि लौकिकत्वं नरलीलत्वम् एति प्राप्नोति । स्वयं लौकिकत्वेनैतान्नेन लौकिकत्वस्यैव स्वरूपत्वलक्षणत्वमितिभावः ॥ १९९ ॥

ननु कथं केवलं वात्सल्यानुमोदनार्थमित्युच्यते मधुररसस्य तत्र प्राधान्ये सत्यपीतिसत्राह । तस्मिन् प्रसिद्धे अलोकेऽपि प्रपञ्चाद्बहिर्भूते महावैकुण्ठोपरिगोलोकेऽपि विलासः शृङ्गाररसनिष्ठः भवितुं क्षमेत सुखेन । भवतीत्यनुक्त्वा भवितुं क्षमेतेत्यनेन यथालौकिकमाधुर्य्यपोषणस्तथा न संभवन्तीति सूचयति । प्रियः कान्ताः कान्तः परमपुरुष इति लक्ष्मीसहस्रशतसंभ्रमसेव्यमानमित्यादि ब्रह्मसंहितानुसारेण सपरिकरस्य श्रीकृष्णस्य देवलीलत्वेन ऐश्वर्य्यस्यैव पोषकाधिक्यात् । तथाप्यसौ तत्र शोभन एव किन्तु वात्सल्यादिलीला यथा अनुलोमलीलायामेव सोल्लासं विना शोभा नास्त्येव । तत्रापि देवलीलत्वात्तैश्वर्य्यसत्त्वाकारेण तत्र वात्सल्यस्याकिञ्चित्करत्वात् । यथा मत्तोऽनन्तो नास्ति परतरम् अन्यत्किञ्चिदस्ति ब्रह्मणिन्यादिश्रुतिस्मृतिलोकानुसारेण धर्मिणो विभक्ताभी ब्रह्मत्वेन तत्र वर्त्तमानायां मधुरनरलीलायाश्च तदेव देवलीलनया महैश्वर्य्यत्वया मधुररसस्यापि किञ्चित्कराणीति । अतस्तदनुमोदनोल्लङ्घनम् । अत एव वात्सल्यानुमोदनस्यैव हेतुत्वकथनात् प्राधान्येन स्वादेशात्मकत्वमिति न्यायेन वात्सल्यमा-

१ प्रादुर्भवि[illegible] ।

बाल्यादिलीलासुरनाशलीले लोकं विना नार्हत एव शोभाम् ॥ २०० ॥

इत्यानन्दवृन्दावने भगवत्स्थानतत्ववल्लीविस्तारे प्रथमःस्तवकः ॥ १ ॥

---

मोदयितुमित्युक्तम्। न पुनर्मधुररसानुमोदनादीनां हेतुत्वाभाव एव। केवलमिति गोलोकस्य ऐश्वर्यमयत्वं भागवतामृते व्यक्तम्। यथा। यत्तु गोलोकनाम स्यात्तच्च गोलोकवैभवम्। तदात्मवैभवत्वञ्च तस्य तन्महिमोन्नतेः। यथा पातालखण्डे। अहो मधुपुरीधन्येत्यादीति। अतः साधूक्तमपि ग्रन्थकृता वर्णनारम्भ एव। अस्ति सकलवैकुण्ठसारं वृन्दावनं नाम वनमिति। तथा ब्रह्मलोकदर्शनप्रस्तावेच श्रीनन्दादीनामनुभवेनाऽपि व्यञ्जयिष्यते चास्यैव गोकुलस्य परमोत्कर्ष इति ॥ २०० ॥

इत्यानन्दवृन्दावनटीकायां सुखवर्त्तिन्यां प्रथमस्तवकसङ्गमनम् ॥१॥

आनन्दवृन्दावनसुप्रवेशे टीकास्तु दस्या सुखवर्त्तनीयम्।
संशोध्यतामर्हतु तैर्महद्भिर्येषां स्वसर्वस्वमियंहि लीला ॥



## ॥ द्वितीयः स्तवकः ॥

---

अथ तयोः पित्रोस्तथाविधसौभाग्यमेधयितुं राजन्यापदेशसुरेतरयूथपायुतनिर्भरभरभज्यमानवपुषो धरणिदेव्याः परमाभीलमाभीलमालोक्य परिदूनेन परमेष्ठिना निवेदितक्षीरोदशायिविज्ञापितमात्मानञ्च लौकिकलीलया रसयितुमवतितीर्षुरवनितलेऽपि भगवान् श्रीकृष्णः सकलमुक्तमकारमाविर्भावयामास ॥ १ ॥

विशेषतस्तूक्तप्रकाराणां नित्यसिद्धानां गोपदुहितॄणां लोकमध्याविर्भावसमयेसममेव तत्कामकामिताः श्रुतयो मुनयश्च दण्डकारण्यवासिनः सीतासखस्यदाशरथेर्विलासमालोक्य तथाजातमनोरथास्तत्तत्साधनैः सिद्धदशामापद्यमानास्तत्तत्सौभाग्यभाजनं वपुरासाद्य उक्तप्रकाराणां द्वितीयगोपमिथुनानां भवने प्रादुरभूवन् २

योगमायाच भगवती भगवतो निरुपमा शक्तिरशेषविशेषदुर्घटघटनापटीयस्त्वमुररीकृत्य भगवत्प्रेमपितैव तत्रालक्ष्यविग्रहैवावततार ॥३ ॥

तत्र तावद्बृहद्वन एव भगवदवतारतःप्रागेव श्रीनन्दादयोऽवतीर्णाः। भगवदवतारानन्तरं भगवतः सखायः प्रेयस्यश्च नित्यसिद्धाः। अनन्तरं द्विविधा अप्यन्या इति ॥ ४ ॥

---

द्वितीये स्तवके कृष्णजन्मलीला स्थलद्वये।<br>पुरे बृहद्वने वर्ण्या समासव्यासतः क्रमात्॥१॥

तयोर्नन्दयशोदयोः एधयितुं वर्द्धयितुमित्येकोहेतुः। आत्मानञ्च शृङ्गारादिरसैरसयितुमिति द्वितीयः। ननु एतत् हेतुद्वयम् अप्रकटलीलायां योगमायाकल्पितप्रपञ्चान्तर्वर्त्तिषु श्रीगोकुलप्रकाशेषु वर्त्तत एवेत्यत आह अवनीतलेऽपीति। मायिकप्रपञ्चान्तर्वर्त्तिभूर्लोकेऽपि अवतत्वसाधारणन्तु हेतुत्रयम् आत्मारामान्मधुरचरितैरित्यादिना वक्ष्यते। कीदृशमात्मानं धरणिदेव्याः आभीलं कष्टमालोक्य परिदूनेन परमेष्ठिना ब्रह्मणा तत्त्राणार्थं निवेदितो यः क्षीरोदशायी पालनकर्त्ता विष्णुस्तेन विज्ञापितम् अवतारार्थमित्यर्थः आभीलं कीदृशं परमां भियं लाति ददातीति तत्। स्यात्कष्टं कृच्छ्रमाभीलमित्यमरः। उक्तप्रकारं पितृमातृबन्धुकुलम् ॥१॥

विशेषत इति उक्तप्रकारादप्रकटलीलागतादप्यन्तु विशेष इत्यर्थः। नित्यसिद्धानां श्रीराधाचन्द्रावल्यादीनां तासां कामे अभिलाषे कामितं कामना यासां ताः। सममेव सहैव श्रुतयो बृहद्वामनादिषु प्रसिद्धाः। तथा तेनैव प्रकारेणस्वेष्टदेवश्रीमदनगोपाले जातो मनोरथो येषां ते। २।

तत्रगोकुले यशोदायामित्यर्थः। वसुदेवेन ततो देवक्यास्ततः कंसादिभिश्च लक्ष्यविग्रहत्वं तस्या अंशभूताया एव तत्तल्लीलासिद्धयर्थम्। पूर्णतमा तु गोकुलादन्यत्र क्वापि न गच्छति पूर्णतमः श्रीकृष्ण एवेति सिद्धान्तः॥३॥

बृहद्वन एवेति तदानीं केशिभयेन नन्दीश्वरे तत्पित्रा पर्जन्येन स्थातुमशक्यत्वात्। अन्याः साधनसिद्धाः द्विविधाः श्रुतिचर्य्या मुनिचर्य्याऽपि अवतीर्णा इति पूर्वेणान्वयः॥४॥

एवमासन्ने भगवदवतारसमये चिरसमयसमुपसीदद्दयिता दयिता इव हर्षभर-पृथ्वी पृथ्वी ॥ ५ ॥

भगवदुपासकमनांसीव सुप्रसन्नानि मोदितभुवनानि भुवनानि ॥ ६ ॥

पाञ्चजन्य इव दक्षिणावर्त्तः समुज्ज्वलनो ज्वलनोऽपि ॥ ७ ॥

भगवज्जनाङ्गसङ्ग इव शीतलस्निग्धमधुरो जगत्पवनः पवनः ॥ ८ ॥

भगवद्भक्तहृदयमिव नैर्मल्यपुष्करं पुष्करम् ॥ ९ ॥

हरिभजनजनजननानीव सदा सुफलानि निराकुलानि कुलानि विटपिनाम् ॥१०॥

विबुधद्रुहामायुष इवापलितानि पलितानि ॥ ११ ॥

फलोन्मुखानीव द्विपदामाशालतानिकुरम्बाणि कुरम्बाणि ॥ १२ ॥

हरितो लब्धप्रसादा हरितोऽलब्धप्रसादा मनोवृत्तय इव भागवतानाम् ॥ १३ ॥

मन्त्रौषधिमणिभिरपहृतानीव धरण्याः किल्बिषाणि विषाणि । प्राणिनामेव दुःखानि प्रशमितानि शमितानि च भुवनजनमनांसि ॥ १४ ॥

प्रवर्त्तितमिव जनानामङ्गलतामङ्गतालतारुण्येन उल्लसितमिव सकलगुणसभाजनेन सभाजनेन ॥ १५ ॥

---

तत्र सर्वेषां तत्त्ववस्तूनामुपलक्षणत्वेन प्रथमं पञ्चानामपि भूतानां हर्षेण तात्कालिकवैलक्षण्यमाह । चिरसमयेभ्यः बहुकालानन्तरं समुपसीदन् सम्यक् समीपमागच्छन् दयितः कान्तो यस्याःसा । दयिता इव हर्षभरेण पृथ्वी विपुला । विसङ्कटं पृथु बृहदित्यमरः॥५॥

मोदितभुवनानि आनन्दितलोकानि भुवनानि जलानि । जीवनं भुवनं वनमित्यमरः॥६॥

पाञ्चजन्यो विष्णुशङ्खः । सम्यगुत्कर्षेण ज्वलति द्योतते॥७॥

जगत् विश्वमेव पुनाति॥ ॥

नैर्मल्येन पुष्करं पुष्कलं पुष्टमित्यर्थः।यमकानुरोधेन लयोरैक्यम् पुष्करमाकाशम् ॥ ९ ॥

हरिं भजन्ते इति हरिभजना जनास्तेषां जननानि जन्मानि ॥ १० ॥

विबुधद्रुहामसुराणामायुषः पलितानि जराविकृतानि आपलितानीव आगतानीव इति सम्भावना। तेषामासन्नमरणलक्षणदर्शनात्। पल गतौ धातुः । पलितं जरसा शौक्ल्यं केशादावित्यमरः ॥११॥

कुरम्बाणि क्षौपृथिव्यां लभ्यमानानि रथितर्वाण्यादि गम्यर्थाः ॥ १२ ॥

हरितो दिशः लब्धप्रसादाः प्राप्तप्रकाशाः हरितो हरिं प्राप्य॥ १३ ॥

किल्बिषाणिपापिष्ठासुरसमूहभररूपाणि विषाणि।तदेवविशिष्यविवृणोति प्राणिनामिति शमिनानिशं कल्पाणमितानि प्राप्तानि ॥ १४ ॥

अङ्गलतायां मङ्गलस्य यत्तारुण्यं तेन प्रवर्त्तितमिवेति कर्मविशेषानुक्तेरङ्गनिष्ठरूपगुणचेष्टादिकं कर्मसामान्यमेव ज्ञेयम् । तत्र वृत्तमपि प्रकर्षेण वर्त्तितमित्यर्थः। सकलैर्गुणैः सभाजनं स्तुतिर्यस्य तथाभूतेन सता ॥१५॥

फलितमिव सकलभुवनजनानां सुकृतेन सुकृतेन। उन्मीलितानीव चक्षुष्मतां चक्षुषामशातानि शातानि ॥ १६ ॥

एवं परिपूर्णमङ्गलगुणतया दूषणद्वापरान्ते द्वापरान्ते निरन्तराल भाद्रपदे भाद्रपदे मासि मासिते पक्षेऽपक्षे परहिते हितेरसमये समये गुणगणारोहिणीं रोहिणीं सरति सुधाकरे सुधाकरे योगे ॥ १७ ॥

योगेश्वरेश्वरो मध्ये क्षणदायाः क्षणदायाः पूर्णानन्दतया जीवबज्जननीजठरमन्धाभावाद्वन्धाभावाच्च केवलं विलसत्करुणयाऽरुणया तथाविधलीलालीलासिकया कयाचन पुरन्दरादिगङ्गनोत्सङ्ग इव रजनीकरः स्वप्रकाशतया प्रादुर्भावमेव भावयन् ॥१८॥

अग्रे पूर्वपूर्वजनिजनिततपःसौभाग्यफलेनोपलब्धपितृमातृभावयोः श्रीवसुदेवदेवक्योर्वासुदेवस्वरूपेणाविर्भावं भावयित्वा स्तनन्धयत्वाभिमानमेव क्षणं तयोः प्रकटय्य पश्चान्नित्यसिद्धपितृमातृभावयोः श्रीनन्दयशोदयोरपि श्रीगोविन्दस्वरूपेण स्वरूपेण तनयतामाससाद ॥१९॥

---

सुकृतेन सुष्ठु कृतेन सुकृतेन पुण्येन। चक्षुषां शातानि सुखानि अशातानि अदुःखानि। "शो तनूकरणे" इत्यस्य रूपम्। शातं शितञ्च दुर्बले इति मेदिनी ॥१६॥

दूषणस्य द्वापरः सन्देहस्तस्यापि अन्तो नाशो यत्र तथाभूते द्वापरयुगस्यान्ते निरन्तरालस्य निविडस्य भाद्रस्य भद्रसमूहस्य पदे आश्रये। समूहार्थे भिक्षादित्वादण्। मासिते असितेपक्षे गुणगणमारोढुं शीलं यस्यास्तां सरति प्राप्नुवति सति सुधाकरे आयुष्मति योगे ॥१७॥

क्षणदाया रात्रेः क्षणदाया उत्सवदायिन्याः। विलसन्ती या करुणा तयैव हेतुभूतयेत्यर्थः। अरुणया अरुणवर्णया सर्वजीवं प्रति अनुरागवत्येत्यर्थः। कीदृश्या तथाविधानां लीलानाम् आली श्रेणी तस्या लासिकया प्रकाशिकया। यद्वा तथाविधा करुणाव्यञ्जनमयी लीलैव। आली सखी तस्या लासिकया नर्तक्या कयाचन अनिर्वचनीयया भावयन् कुर्वन्। करोत्यर्थस्य यः कर्ता भवतेः स प्रयोजकः इति स्मृतेः। तत्र कथनं प्रादुर्भावादयो लीलाश्चिन्मय्यःस्वतन्त्रा एव वर्त्तन्ते लोके तासां प्रकटनेन स्वस्य प्रयोजकतामात्रमिति ज्ञापनार्थम् ॥ १८ ॥

अग्रे प्रथमम् उपलब्धः प्राप्तः पितृमातृभावो याभ्यां तयोः उपलब्धिस्तु तयोर्नित्यसिद्धत्वं रहस्यस्याद्गोपनतः। स्वगेव पूर्वसर्गेऽभूः पृश्निः स्वायम्भुवे सति। तदायं सुतपानाम इत्यादिना तादृशभक्तिज्ञापनार्थं तदा तदा अवतरनः साधकरूपान् तत्तदंशानेव तत्त्वेन निर्दिशतो भगवतो वचनादेव वसुदेवस्तु नित्यसिद्धयोरेव तयोरत्तत्तदंशप्रवेश एव साधनसिद्धत्वज्ञापकः। तदानीं भगवता सर्वोक्तिस्तु तयोर्भक्तिवृद्ध्यर्थमैश्वर्य्यज्ञापनादेव। द्रोणधराशिनोर्नन्दयशोदयोरपि तथाभूतत्वेपि नित्यसिद्धपितृमातृभावयोरित्युक्तिस्तदानीं तथात्वेन येनापि तयोरज्ञापितत्वात् बादरायणिनैव द्रोणो वसूनां प्रवर इत्यादिना परीक्षिते प्रोक्तत्वादिति स्वरूपेण स्वेनैव पूर्णतमेन रूपेण लीलानुकूलेनात्मरूपेणेत्यर्थः। भागवतामृतेऽप्येवमेवोक्तम् स्फुटः प्रादुर्भवेदायोगृहआनकदुन्दुभेरित्यादिना। यशोदागर्भे तत्रान्यतोऽपि तथा तदन्तरङ्गपन्तेन ॥१९॥

तदनु कंसभिया वसुदेवानीतवसुदेवस्वरूपेण सहैक्यं गते सति तत्रशङ्खचक्रादीन्यङ्करूपेण करचरणयोरेव स्थितानि कौस्तुभवेणुवनमालाः सहावतीर्णा अपि समयं प्रतीक्षमाणा अलक्ष्य तथैव स्थिताः ॥ २० ॥

तत्रच पूर्वमेव नृशंसकंसभिया देवकीतरभार्याकदम्बस्य स्थानान्तरप्रापणविधौ वसुदेवेन प्रियसखस्य श्रीव्रजराजस्य भवन एव मापितायां श्रीरोहिणीदेव्यां देवक्याः सप्तमे गर्भे भगवतो धामविशेषे श्रीसंकर्षणे भगवदिच्छयैव भगवत्या योगमायया तद्गर्भे मापिते सति समये सापि तत्रैव भगवदवतारात् प्रागेव तमजीजनत् ॥२१॥

अथ। आत्मारामान्मधुरचरितैर्भक्तियोगे विधास्यन्–
नानालीलारसरचनया नन्दयिष्यन् स्वभक्तान्।
दैत्यानीकैर्भुवमतिभरां वीतभारां करिष्यन्–
मूर्तानन्दो व्रजपतिगृहे जातवत् प्रादुरासीत् ॥ २२ ॥

आविर्भूतिभूतिसमकालमेवमेव योगमायामायासराहित्येनैव सम्पादयन्मणिभित्तिभिचिमितततनुच्छायाच्छायामिषेण सच्चिदानन्दगुणनिकायकायव्यूहमिव निदधानः कुसुमसुषमाभरपराजिताऽपराजितावल्लिमण्डपमिव परमरमणीयतासूतिसूतिकासदनं सदनन्दयत् ॥२३॥

---

तत्र गोविन्दे स्थितानीति तदङ्कैः सहैक्यं गतानीत्यर्थः। शङ्खचक्रादीनीति गदायाः करतल एव स्थितिर्ज्ञेया ॥ २० ॥

सापि रोहिणीदेव्यपि तत्रैव व्रजराजस्य भवन एव तं सङ्कर्षणम् अजीजनत् जनयामास।२१

प्रादुर्भावे यथापूर्वं श्रैष्ठ्येन कारणत्रयमाह आत्मारामानिति। तथा परमहंसानां मुनीनाम-महात्मनाम्। भक्तियोगविधानार्थमित्यादिभ्यः। वीतभारां गतभारां जातवत् प्राकृतो बालो यथा-जातस्तद्वत् ॥ २२ ॥

सत्सुन्दरं सूतिकासदनम् अनन्दयत् कदा आविर्भूतेराविर्भावस्य या भूतिस्तत्पत्तिर्यद्वा। आविर्भूतिरूपाया भूतिः सम्पत्तिस्तस्याः समकालमेव। योगमायां रासमहिषीविहारादिषु मूलग्रन्थोक्तानुवादरीत्या युगपदेकस्यैव कायस्य पृथक् पृथग्बहुविधप्रकारप्रकाशिकां स्वरूपभूताचिन्त्याद्भुतशक्तिम् आयासराहित्येनैव सम्पादयन् तां शक्तिमनालम्ब्यैव तत्कार्य्यमिव प्रकटयन्नित्युत्प्रेक्षेयम्। ननु तदैवेति तत्रतत्कार्य्येषु बिम्बप्रतिबिम्बत्वापोगान्मणिभित्तीनां भिदो भेदाः। सम्पदादिक्विप् तासु तिमिता स्निग्धा यास्तनुच्छाया एकस्यैव देहस्य प्रतिबिम्बास्तासां छाया शोभा तन्मिषेण प्रतिबिम्बास्ते न भवन्ति किन्तु देहा एवेत्यपन्हुताइत्यर्थः सच्चिदानन्दगुणानां निकायो येषु एवम्भूतानां कायानां व्यूहं समूहमिव ततश्च। सूतिकासदनं कथम्भूतमिव कुसुमानां शोभा-भरेण पराजितं पराक्रान्तं यत् अपराजितालतामण्डपं तदिव। अतएव रमणीयताया सूतिरुत्-पत्तिर्यस्मिन् तत् ॥ २३ ॥

ततश्च । अनाघ्रातं भृङ्गैरनपहृतसौगन्ध्यमनिलै-
रनुत्पन्नं नीरेष्वनुपहतमूर्म्मीकणभरैः ।
अदृष्टं केनापि क्वचन च चिदानन्दसरसो
यशोदायाः क्रोडे कुवलयमिवौजस्तदभवत् ॥ २४ ॥
निद्राणे सति सूतिकापरिजने मात्रा समं सर्वतः ।
सद्यो जातशिशुस्वभावसरसं चक्रन्द बालो हरिः ॥
ओङ्कारः किमिवातनोद्गवतःकण्ठोपकण्ठं गतः ।
तल्लीलोत्सवकर्मणोऽस्य महतः प्राङ्मङ्गलद्योतनाम् ॥२५॥

अथ तस्य कलरोदनस्वनमाकर्ण्य तत्कालजागरिता व्रजपुरपुरन्ध्रयः। अभ्यक्तमिव सुरभितमस्नेहेन उद्वर्त्तितमिव सौरभ्येण स्नातमिव माधुर्य्येण मार्जितमिव लावण्येन ॥२६॥

---

उक्तलक्षणो मूर्त्तानन्द एव ओजस्तेजः स्वरूपं तत् यशोदया क्रोडे कुवलयमिवाभूदित्यन्वयः। अत्र तदादिशब्दानां क्वचिदुद्देश्यलिङ्गत्वं क्वचिद्विधेयलिङ्गत्वञ्च भवेत् यथा शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः। नियमस्तु स यत्कर्मानित्यमागन्तुसाधनमिति। अतएवात्र तत्शब्दो विधेयस्योजसो लिङ्गं धत्ते इति भृङ्गैरनाघ्रातंपूर्वं पूर्वभक्तैः नारायणादिरूपमेवास्वादितमित्यर्थः। अनिलैरिति-पूर्वपूर्वमहाकवीश्वरैर्नारायणादियश एव वर्णनैर्विस्तारितमित्यर्थः ॥ नीरेष्विति प्रपञ्चलोकेषु नाविर्भूतमित्यर्थः ऊर्म्मीकणेति प्रपञ्चगतगुणतरङ्गैरस्पृष्टम्। क्वचन वैकुण्ठादावपि केनापि जनमात्रेणैव श्लेषेण ब्रह्मणाप्यदृष्टम् किम्बा। तन्माधुर्य्यादेः प्रतिक्षणमेव नवनवस्वभाव वत्त्वात्तस्याप्यनुरागिभक्तायैरपि अनाघ्रातत्वादिकमिव भवति सदैव किमुतसाक्षात्तदवतारारम्भ एवेति तथोक्तम् यद्वा तदानीं लोकैरनुभवेन तथैव प्रतीतत्वात्तथा वर्णितमिति ॥२४॥

सद्योजातशिशूनां स्वभावेन सरसं यथास्यात्तथा चक्रन्द ओङ्कारस्यैव नासास्वरविशेषेण पुनःपुनरुच्चारितस्यतत्क्रन्दनमाजातस्यात्तथोत्प्रेक्ष्यते। ओङ्कारः कण्ठस्योपकण्ठं समीपं गतः सन् प्राक् प्रथमारम्भे मङ्गलद्योतनां किम् अतनोत्। यदुक्तम् ओङ्कारश्चाथशब्दश्च द्वावेतौब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभाविति ॥२५॥

ऐक्षिषत दृष्टवत्यः। तत्कालोचितमभ्यङ्गोद्वर्त्तनादिकं तस्य स्वत एव सिद्धमित्युत्प्रेक्षते। सुरभितमेन निरुपाधिना स्नेहेन वात्सल्यरतिपरिणामविशेषेण वस्तुप्रभावतो हठाज्जनितेनेत्यर्थः। अन्योऽभ्यङ्गस्तु स्नेहाश्रयतैलादिनैव भवति। ततोऽस्य वैलक्षण्यमपि ध्वनितम् एवमग्रेऽपिज्ञेयम् सौरभ्येण स्वतः सिद्धस्याङ्गसम्बन्धिना। उद्वर्त्तनन्तु कस्तूर्य्यादिगन्धवद्द्रव्यघटितमेव भवति। माधुर्य्यस्य आपादमस्तकव्यापित्वात्तेन स्नातमिव स्नानन्तु माधुर्य्यवतैव जलादिना भवति। किञ्च तत्स्नानं हि तात्कालिकीं कामपि सर्वाङ्गस्य शोभां जनयति। एतन्माधुर्य्यन्तु सार्वकालिकामिति ध्वनितम्। यदुक्तमुज्ज्वलनीलमणौ "रूपं किमप्यनिर्वाच्यं तनोर्माधुर्य्यमुच्यते"। लावण्येनेति तल्लक्षणं तत्रैव। मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु लावण्यं तदिहोच्यते इति। अन्यत्र मार्जनादेव दर्पणायमानत्वकारिलक्षणकं लावण्यं कस्यापि स्वच्छाङ्गस्यैव जायते। अत्र तु स्वयं लावण्येनैव मार्जनमित्यतिवैशिष्ट्यम् ॥२६॥

अनुलिप्तमिव सौन्दर्य्येण भूषितमिव त्रैलोक्यलक्ष्म्या पूजितमिव भवनदेव्या गन्धफलीभिरेव सूतिभदीपकलिकामतिच्छायाभिः स्तोकानामप्यवयवानां किसलयानामोजसा कुर्वन्तमिव कुवलयकलिकायमानानि सूतिभदीपनिकुरम्बाणि ॥२७॥

अङ्कुरमिव नवनीलमणीन्द्रस्य पल्लवमिव तमालस्य कन्दलमिव नवाम्भोदस्य कस्तूरिकातिलकमिव त्रैलोक्यलक्ष्म्याः सिद्धाञ्जनमिव सौभाग्यसम्पदः ॥२८॥

सरसीकुर्वन्तमरिष्टमपि सकलारिष्टशमनं बालकमपि नवालकम्। मृदुमधुरतरकरशाखाभिर्भगवल्लक्षणानि मत्स्याङ्कुशादि लक्ष्माणि गोपयितुमिव मुष्टीकृतकरकमलकोरकमुत्तानशायिनं मुकुलिताक्षमैक्षिपत ॥२९॥

अनन्तरमासामेव हर्षनिःस्वनेन जागरिता जननीच ।
ज्ञात्वा जातमपत्यमीक्षितुमथ न्यञ्चत्तनुस्तत्तनौ-
बालोऽयं प्रतिबिम्बितां निजतनूमन्येति शङ्काकुला ॥

॥३०॥

अथ कस्तूरीकर्दममिव श्यामामृतमहोदधिमथनसमुद्भिन्ननवनीतपिण्डमिव मृगमदरसमेचकितं पयःफेनशकलमिव सुकुमारतनुरपि सम्भाव्यमाननिजतनुपारुष्यभयेन

अनुलेपस्तु उचिताङ्गविन्यस्तैः सौन्दर्य्यजनकैरेव कुङ्कुमादिभिर्भवति। भूषितमिति त्रैलोक्यस्यापि लक्ष्म्या समुदितशोभायैव भूषणन्तु यत्किञ्चल्लक्ष्मीवद्भिरेव कुण्डलादिभिर्भवति। भवनदेव्या गृहाधिष्ठात्र्या देवतया गन्धफलीभिश्चम्पकैः कुवलयं नीलोत्पलं तत्कलिकासदृशानि एतेनाभिरूप्यमुक्तम्। तथाच तल्लक्षणम्। यदात्मीयगुणोत्कर्षैर्वस्त्वन्यन्निकटस्थितम्। सारूप्यं नयति प्राज्ञैराभिरूप्यं तदुच्यते ॥२७॥

श्रीमूर्त्तिनिष्ठान् गुणानभिव्यज्य साक्षात् श्रीमूर्तिस्वरूपं वर्णयति अङ्कुरमिति। स्वच्छत्वेन स्तोकत्वेनच पल्लवमिति मृदुलत्वेन कन्दलमित्यतिस्निग्धत्वेन कस्तूरीतिलकमिति। सौरभत्वेन सर्वोत्कृष्टत्वेन च सिद्धाञ्जनमिति चैकण्येन सर्वाकर्षणशक्तिमत्वेच उपमा ॥२८॥

अरिष्टमपि सूतिकागृहमपि सकलान्यरिष्टानि शमयतीति तथा तम्। अरिष्टं सूतिकागारे चक्रे चिन्हे शुभेऽशुभे इतिविश्वः। नवा अलकाश्चूर्णकुन्तला यस्य तम् ॥ २९ ॥

ईक्षितुं न्यञ्चन्ती तनुर्यस्यास्तथाभूता सती निजतनुमेव तत्तनौ बालकतनौ प्रतिबिम्बितामालोक्य अन्या इति शङ्कया आकुला मत्प्रसवकाले मायया मदाकारधारिणी बालकहारिका योगिनी काचिदत्र प्रविष्टेति त्रासेन विह्वलेत्यर्थः। ततश्च आरात् दूरे गच्छेतितन्निरासनपरा नृसिंह नाम स्पष्टतया तन्निःसारणप्रवृत्तेत्यर्थः। तदैव भयश्वासोत्थ स्वनिश्वासयोगवशात् प्रतिबिम्बादर्शने सति अमुष्य आननं पश्यन्ती मुक्ताहारमिवेति। निःसीमहर्षावेशेन तं त्रासमपि विस्मृतवतीति भावः ॥ ३० ॥

कस्तूरीत्यादित्रयाणामेषां सौकुमार्य्येणोत्तरोत्तरं वैशिष्ट्यं ज्ञेयम्। तदपिकस्तूरीति सौरभ्यश्यामल्याभ्यामपि। कर्दमशब्दोर्द्रार्चादिः। श्यामामृतेति। स्नेहमयस्वरूपत्वेनापि अद्भुतोपमेयम् तत्र श्या-

स्वाङ्कमारोपयितुं बिभ्यतीव क्षणमवनततनुरेव स्नेहस्नुतपयोधरा पयोधराग्रमधरपुटे विन्यस्य पयः पाययामास ॥३१॥

तदनु व्रज गुरुपुरन्ध्रीभिरभितः शिक्ष्यमाणा निजाङ्कमारोप्य पुनः पयोधरं पाययन्ती स्नेहावेगेन निराबाधरीयमाणं मूर्तममृतरसमिव स्तनरसमशेषपानासमर्थतया मृदुलबिम्बाधरप्रान्ततो निपत्य कपोलतलमाप्लावयन्तं तमथ चीनतराञ्चलेन निःसारयन्ती स्तनदानतो विरम्य सादरं सस्नेहं तमालोकयन्तीच परमविस्मयमापन्ना ३२

नीलमणिनेव सकलावयवानां कुरुविन्देनेव बिम्बाधरस्य कमलरागेणेव पाणिपादस्य शिखरमणिनेव नखरनिकरस्य निर्माणमिति मत्वा कदाचिन्मणिमयोऽयमिति वा ॥३३॥

इन्दीवरेणेव सकलावयवस्य बन्धूकेनेव बिम्बाधरोष्ठस्य जपाकुसुमेनेव पाणिपादस्य मल्लीकोरकेणेव नखरनिकरस्येति कदाचिदयं कुसुममयो वा केनापि निरमायि न ममायं तनुज इत्यसम्भावनया वितर्कयन्ती ॥३४॥

वक्षसि दक्षिणभागे मृणालतन्तुक्षोदसोदर-सुभग-सुस्निग्ध-श्रीवत्साख्यरोमराजिलक्ष्म लक्षयित्वा स्तन--रस--कण--निपात विन्यासविशेषोऽयमिति पुनरपि मृदुतरचीनांशुकयाञ्चलेनापसारयन्ती यदा तन्नापसरति तदा किमपीदं महापुरुषलक्षणमिति चिन्तयन्ती ॥ ३५ ॥

पुनरपि वक्षसो वामभागे लक्ष्मरूपां लक्ष्मीमालोक्य तनुतरपीतविहङ्गिकापोतेन

मेति तदीयवर्णसाजात्यार्थम् अमृतेति तदीयस्नेहस्यातिमधुरत्वार्थम् मृगमदस्य रसेन मेचकितं श्यामलीकृतम् दुग्धफेनखण्ड मिवेति पावित्र्येणापि। कालश्याममेचका इत्यमरः। एवं सुकुमारशरीरापि सा जननी स्वबालकस्याङ्गसौकुमार्य्यमालोक्य तदपेक्षया सम्भाव्यमानं यन्निजतनोः पारुष्यं कठोरत्वं तस्माद्धयेन मत्क्रोडाभिमर्शेन व्यथां प्राप्स्यति बालकोऽयमिति शङ्कया किञ्चित्कुब्जीभूय अवनततनुःपयोधराग्रे स्तनाग्रं स्ववामहस्तेनैव धृत्वा कृष्णस्याधरपुटे विन्यस्य ॥३१॥ सद्योजातबालक एवमङ्के ध्रियत इति हस्तनिधापनादिना अभितः सर्वतोभावेन शिक्ष्यमाणा जननी निराबाधं निर्व्यवधानं यथास्यात्तथा रीयमाणं क्षरन्तम् रीङ् स्रवणे देवादिकः। तं स्तनरसं चीनतरेण अतिसूक्ष्मेण अञ्चलेन ॥३२॥

शिखरमणिना माणिक्यभेदेन। पक्वदाडिमबीजाभं माणिक्यं शिखरं विदुरित्यभिधानात्॥३३॥

पुनश्च तदङ्गानामतिमार्दवं परामृश्य मणिमयत्वे काठिन्यं प्रसज्जेतेत्यन्यथा सम्भावयति इन्दीवरेणेत्यादिना मल्लीकोरकस्य जातिभेदात् प्रान्तारक्तत्वेन नखसाधर्म्यम् ॥३४॥

मृणालतन्तूनां क्षोदस्य चूर्णस्य सोदरं सदृशञ्च तत्सुभगं चेत्यादिलक्ष्म लक्षयित्वा दृष्ट्वा प्राग्भवं कपोलाप्लाविन स्तनरसं स्मरन्ती निश्चिनोति स्तनरसेति ॥ ३५ ॥

तनुतरेणातिसूक्ष्मेण पीतवर्णेन विहङ्गिकापोतेन क्षुद्रपक्षिबालकेन परंपरितश्लेषेण तु विहङ्गिका बहुका अत्का इति प्रसिद्धा तस्याःपोतेन अतिसूक्ष्मतया तयेत्यर्थः।लक्ष्मीचिन्हस्यापि तथाका-

कृतावासं तमालपल्लवमेवेदं सहजातयैव विद्युत्कलिकया कलितो जलधराङ्कुर एवायमिति कनकरेखया रञ्जितं निकषपाषाणशकलमेवेदमिति ॥ ३६ ॥

पुनर्निभालयन्ती कदाचिदरुणतरकरचरणपल्लवतया चतुः पञ्चारुणकमलकोपं यमुनातरङ्गमिव मन्यमाना ॥ ३७ ॥

सद्योमकरन्दसन्दोहातिपानमदातिशयेन भ्रमणासमर्थतया निश्चलं मधुकरनिकरमिव कुटिलकचकलापम्, भाति नवान्धतमसाङ्कुरानिवाऽलकमकरान्मुकुलितनीलोत्पले इव लोचने। द्रुततरनीलमणिजलमहाबुदबुदायमानं गण्डयुगलम्। श्याममहोलतिकायाः प्रत्यग्रोन्मिषितपल्लवयुगमिव श्रवणयुगलम् ॥ ३८ ॥

तिमिरद्रुमाङ्कुरायमाणं नासिकाशिखरं तरणितनयातनुबुद्बुदायमानं नासापुटकं द्विदलजवाकोरकायमाणमोष्ठाधरं परिपक्वस्तोकतरयमलजम्बूफलायमानं चिबुकमपि निरूप्य परिणतमिव मे नयननिर्माणफलमिति मन्यमाना स्नातमिवात्मानमानन्दजलनिधावियमात्मानं विदाञ्चकार ॥ ३९ ॥

तत्समयसमकालमेव महाभागवततनयो जात इति पुरन्ध्रीजनमुखतश्चिरतरानिदाघद्राघिमपरिशुष्यमाणस्य पल्वलस्य विदारविवरं सरसीकृत्य पूरयन्तममृतासारमिव चिरतरतनयवासनाफलप्रतिबन्धपर्युषितस्य हृदयस्य परमनिर्वृतिकरं कमपि शब्दमाकर्ण्य सुस्नात इव हर्षवर्षासु प्रविष्ट इव अमृतमहार्णवेषु आलिङ्गित इवानन्दमन्दाकिन्या ॥ ४० ॥

---

त्वात्। अत्र पल्लवविहङ्गिकयोरौत्पत्तिको न संयोग इत्यन्यथोत्प्रेक्ष्यते सहजातयेति। तत्र कालिकयेति सूक्ष्मत्वविवक्षया तदपि विद्युतः स्वाभाविकमस्थैर्य्यमाशङ्क्य कनकरेखयेति अत्रापि नित्यसंयोगित्वार्थं सहजातयेत्यनुवर्त्यम् ॥ ३६ ॥

पुनरिति सामान्यतः प्रथमं सर्वाङ्गमित्यर्थः। चत्वारो वा पञ्च वा अरुणकमलकोषा यत्र तम्। तत्र पञ्चवेति नाभेरपि रक्तकमलकोषसाम्यमभिप्रेत्येत्यवसीयते ॥ ३७ ॥

ततो मुखारविन्दं पश्यन्ती तदवयवान् क्रमेणोत्प्रेक्षते सद्य इत्यादिना। प्रतिनवं नवान् नवान् अन्धतमसाङ्कुरानिव प्रत्यग्रोन्मिषितम् अभिनवप्रकाशितम्। प्रत्यग्रोऽभिनवो नव्य इत्यमरः ३८

तिमिरस्यातिनिबिडत्वेनातिकाठिन्येन द्रुमेण रूपकम्। ततश्च तस्याङ्कुरतुल्यमिति श्यामत्वचिक्कणत्वयोरपि लाभः। शिखरमग्रदेशः तत्पार्श्वद्वयगतं तादृशबुद्बुदद्वयं भवति चेत् तदा नासिकायाः सादृश्यमित्यर्थः परिणतमिव परिपाकं प्राप्तमिव इयं श्रीयशोदा ॥३९॥

पुरन्ध्रीजनानां मुखतः कमपि शब्दमाकर्ण्य कमिव चिरतरस्य बहुकालव्यापकस्य निदाघस्य द्राघिम्ना दीर्घत्वेन हेतुना सर्वतः शुष्यमाणस्य पल्वलस्याल्पसरसः। अमृतासारम् अमृतमयं धारासम्पातमिव। निर्वृतिरानन्दः सुस्नात इति आपादमस्तकं सर्वाङ्गमेव हर्षपुलकाकुलितं जातमिति भावः। वर्षास्विति विश्वमपि हर्षपूर्णं मन्यमान इतिभावः। प्रविष्ट इति स्वकर्तृकप्रवेशोऽपि तादृशानन्दे आलिङ्गित इत्यानन्दकर्तृकप्रवेशोऽपि स्वस्मिन्नित्युभयान्वयेन आनन्दमहासंमर्दजनितां मूर्च्छां प्राप्तवानितिभावः। मन्दाकिन्या इति तस्यानन्दस्य शुद्धसत्वात्मकत्वं दर्शितम् ॥ ४० ॥

तदवलोकनोत्कण्ठासमुत्पत्तेरग्रत एव ब्रह्मानन्दसाक्षात्कारचमत्कारेण वपुष्मते-व स्वयमुपव्रज्य सूतिभवनं प्रवेशित इव चिरसमयसमुपचित–सुकृतचयचातुर्य्येण दत्तहस्तावलम्ब इव उत्कलिका भगवत्या पृष्ठतः समधिकं नुन्न इव ॥ ४१ ॥

त्वरितमभ्यर्णमभ्येत्य वीजमिव घनानन्दस्य ॥ ४२ ॥

अङ्कुरमिव जगन्मङ्गलमङ्गलोदयस्य ॥ ४३ ॥

पल्लवमिव सिद्धाञ्जनलतायाः ॥ ४४ ॥

कुसुममिव चिरतरसमयसमुत्पन्नसुकृतकल्पमहीरुहारामस्य ॥ ४५ ॥

फलमिव सकलोपनिषत्कल्पलतावितते: । व्रजेश्वरीव पुरपराजितालतायाः प्रसूनमिव तनयमालोक्य ॥ ४६ ॥

तामेवानन्दमूर्च्छां सर्वेन्द्रियव्ययसाधर्म्येणोत्प्रेक्षते ब्रह्मानन्देति वपुष्मता मूर्त्तिमता। तदा सूतिकागृहप्रवेशोऽसम्भवन्नपि तया आनन्दमूर्च्छयैव स्वकारणतद्वार्त्ताश्रवणानन्दसंस्कारविशेषवशात् कारित इत्यर्थः । ननु स्खलनमपि तदा कुतो नाभूत्तत्राह चिरसमयेति। सुकृतचयस्य चातुर्य्यम् अन्यतो वैलक्षण्येन स्वप्रकाशकारित्वं तेन कर्त्रा स्वयं दत्तो हस्तावलम्बो यस्य सः। इत्यग्रत आकर्षणं पृष्ठतोनुन्न इति स्वहस्ताभ्यां पृष्ठं धृत्वा बलेन चालित इव इत्यर्थः । उत्कण्ठोत्कलिके समे इत्यमरः। उत्कण्ठासमुत्पत्तेरग्रत एव मूर्च्छाया जातत्वेपि तस्याः पश्चादुत्कण्ठायाः प्राकट्यं पूर्वोक्तहेतोरेवेत्यर्थः ॥४१॥

उत्कण्ठयैव वृद्धिं गच्छन्त्या मूर्च्छाया भङ्गे कृते सति अभ्यर्णे निकटमभ्येत्य तनयमालोक्य अलौकिकीं दशामासाद्य स्थितः। कीदृशं व्रजेश्वरीवपुरेव अपराजिता लता तस्याः कुसुममिव तथा घनानन्दस्य वीजमिवेति । एतस्मादेव सर्वोप्यानन्दो जायत इतिभावः । यद्वा तस्या तदानीमेव निःसीमानन्ददायित्वेऽपि अग्रे भाविबाल्यपौगण्डादिविलासमयं घनानन्दमपेक्ष्य वीजमिव तत्सूचकत्वादित्यर्थः ॥४२॥

जगतां मङ्गलस्य मङ्गलेन स्वस्तिमत्वेन न त्वल्पकालमात्रनश्वरत्वेन य उदयस्तस्य अङ्कुरमिवेति वीजमिव पूर्वं गर्भस्थस्यैव तस्य तद्वीजायितत्वसिद्धेरिति भावः ॥४३॥

सिद्धाञ्जनेति अञ्जनस्य नेत्रसुखदत्वात् सिद्धत्वे जगद्दर्शीकारित्वात् कृष्णस्यापि स्वसौन्दर्य्येण तथाभूतत्वात् तल्लतायास्तु दृश्यवस्तुत्वादङ्कुरवीजदशयोर्नोत्तनिजवर्णानुपलब्धेः कृष्णस्यापि गर्भस्थितिचित्तस्थितिदशयोर्नयनाननुभूततादृग्रूपत्वात् तत्पल्लवायितत्वमेव युक्तमित्यर्थः ४४

चिरतरेति चिरतरात्सम्यगुत्पन्नानां परिणत्या प्राकट्यमिव गतानां पुण्यकल्पवृक्षाणाम् आरामस्य कुसुममिवेति पुण्यानां वाञ्छितमहादुर्लभार्थप्रसवित्वात् कल्पवृक्षत्वम् । वहुतरत्वादारामत्वं श्रीकृष्णस्य तादृशपुण्यचयपरफलभूतत्वात् वृक्षाणां च फलप्रयोजनत्वात् फलस्याप्युत्पत्तिदशायां कुसुमत्वात् कृष्णस्य तद्दिनोत्पन्नस्य कुसुमेनोपमायुक्तैव ॥ ४५ ॥

उपनिषत्कल्पलताश्रेण्यास्तु कृष्णस्य प्राकट्यमनपेक्ष्यापि नित्यविराजमानत्वं प्रतिपादयन्त्यास्तदेकमात्रप्रयोजनायाः फलेनैव सदैव कृष्णस्योपमायुक्तैव। एवं क्रमेण वीजत्वाङ्कुरत्वपल्लवत्वकुसुमत्वफलत्वानाम् एकस्यैव यौगपद्येन वर्णनाद्विरोधालङ्कारः ॥४६॥

सम्पन्न इव सकलमनोरथसम्पत्त्या सिद्ध इवानन्द साक्षात्कारचमत्कारेण उत्कीर्ण इव लिखित इव पुनः सुप्तोत्थित इव वलमानविपुलकपुलकमानन्दवाष्पकणनिकरनिपातनिस्तिमितामलौकिकीं दशामासाद्य स्थितः ॥ ४७ ॥

सानन्दैरुपनन्दसनन्दादिभिर्भूसुरवरेण पुरोधसा कारितजातकर्मादिक्रियः स्वतनयाभ्युदयाय दीयमानैः कलधौतकलधौतविषाणखुरैर्मणिमयमाल्यलालयमानकण्ठैर्नवप्रसूतैर्गवां निकुरम्बकैरवनिनिर्जराणां प्रतिगृहमेव सुरभिलोकमेकैकमुत्पादयामास ॥ ४८ ॥

प्रत्यङ्गणमपि तिलपर्वतं हिरण्यपर्वतं मणिपर्वतमपि तेषामेकैकशो निर्मितवान् निमेषमात्रेणैव व्रजराज इति ॥ ४९ ॥

तस्य वितरणसमये चिन्तामणिकल्पतरुकामधेनुगणश्च शक्तिहीन इव रत्नाकरा अपि यादोमात्रावशिष्टा इव । किं बहुना । त्रैलोक्यलक्ष्मीरपि लीलापद्मकशेषा बभूव ॥ ५० ॥

अनन्तरंच श्रीव्रजपुरपुरन्दरस्य शुभकुमार आविरासीदिति जगन्मङ्गलमङ्गलो ध्वनिरध्वन्यध्वानि मुखान्मुखतो यदैव समन्ततः सञ्चार तदैव तदग्रतो या सान-

सम्पन्न इवेति वैषयिकस्य सिद्ध इवेत्यैश्वरस्यापि सर्वसुखस्य प्राप्तिर्व्यञ्जिता उत्कीर्णइवेति आनन्दसाक्षात्कारभावेन प्रथमं विक्षिप्त इव प्रतिपत्तव्यो मूढ इवेत्यर्थः । ततस्तेनैव जडीकृतो लिखितश्चित्रित इव ततस्तं वोढुमशक्तत्वादिव प्राप्तमूर्च्छत्वेन आदौ सुप्त इव तत उत्थित इवेति । कृष्णदर्शनसुखं पुनरनुभावयितुमिव चेतनादेव्यैव प्रतिबोधितत्वेन इति भावः। वलमानं विपुलात्कारसुखाद्धेतोः पुलकं यत्र तद्यथा स्यात्तथा दशामासाद्य स्थितः । वलमानमिति शानजन्तो वलतिः । सुखशीर्षजलेषु कमितिविश्वः । निःस्तिमितां निःशेषेणार्द्रीभूताम् ॥ ४७ ॥

कलधौतेन सुवर्णेन कलधौतेन रूप्येणच यथासंख्यं युक्तानि विषाणानि शृङ्गाणि खुराश्च येषां तैः । कलधौतं रूप्यहेम्नोरित्यमरः । यद्वा । कलधौतयोः स्वर्णरूप्ययोः करैः किरणैरलयोरैक्यात् क्रमेण धौतानीव शृङ्गाणि खुराश्च येषां तैः । अवनिनिर्जराणां भूदेवानाम् ॥ ४८ ॥

तेषां मध्ये एकैकशः एकस्यैकस्य विप्रस्य प्रत्यङ्गनमङ्गनेऽङ्गने तिलादिपर्वतत्रयं निर्मितवान् तेन तदानीं दत्तानि वस्तूनि पर्वतादिक्रमेणैव कथञ्चित् गणयितुं शक्यानि नतु टङ्कादिक्रमेणेति भावः ॥ ४९ ॥

तदालोक्य तदानीन्तनजनानां सम्भावनामाह चिन्तामणीत्यादि । अन्येषां स्वपुरस्थकनकादीनां का कथा योऽयं नन्दस्य दानाविशो लक्ष्यते ततश्चिन्तामण्यादीनां गणश्च शक्तिहीनो बभूव रत्नानि प्रसवितुमित्यर्थात्। भविष्यतीति वक्तव्ये भूतप्रायत्वसम्भावनया बभूवेत्युक्तम्। यादोमात्रेति तदीयरत्नानि तु आनीय दत्तप्रायाण्येवेति भावः ॥ ५० ॥

तदग्रतो येत्येवमिव सम्भाव्यत इत्युत्प्रेक्षैवेयम् । विहङ्गिका वाहुका इति ख्याता । विहङ्गिका भारयष्टिरित्यमरः । मथित उदश्वित् गोरस आमिछेना इतिख्याता। तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्द्धाम्बु निर्जलम्। आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगत इत्यमरः । गोदुहः

न्दोपनन्दसन्नन्दप्रभृतयः सर्व एव गोकुले निजपरिजनैर्विविधपट्टसूत्रकल्पित-शिग्भिर्मणिमयविहङ्गिकाभिर्मणिघटपटलपूरितान् घृतदधिनवनीतमथितोदश्विदामिक्षादि विविधगोरसान् समानाय्य विविधमणिमण्डनमण्डितामङ्गलहारिद्रवसनानुकारि क्षणप्रभाप्रभातिरस्कारि चारुचामीकरवसनैः कृताकल्पाः कनकमणिदण्डपाणिकमलाः समुन्मर्य्यादपरमानन्दवारांनिधेर्महोर्मय इव सकला एव दिशो व्यानशिरे ॥ ९१ ॥

तत्समकालमेव यावज्जनुरननुभूतप्रभूतामोदमुदितमेदुरमना मनोरथातीतं कमपि तदुदन्तमत्यन्तकमनीयं कर्णावतंसीकृत्य कृत्यपरिहारेण सता लसता ललित कण्ठोत्कण्ठोत्तरला ॥ ९२ ॥

तरलायमानमाणिक्यशकलाऽशकलातिमञ्जिमकङ्कणा कङ्कणायमानहीरकनिकरशुभगाङ्गदाऽङ्गदाक्षिण्यकारि सकलाभरणा ॥ ९३ ॥

भरणार्हमहार्हकाञ्चिकाञ्चितजघना घनारोहारोहातिमुखरकिङ्किणीका ॥ ९४ ॥

कनककमनीयहंसका हंसकान्तगतिर्विलोलकेशबन्धा केशवन्धामनिकामकमनीयं तत्कालाविर्भूतमवलोकयितुं कनकभाजनोपनीत मङ्गलनिर्मञ्छनिकार्हफल

---

कीदृशाः मङ्गलैरनर्गलमङ्गलसूचकैर्हारिद्रैर्हरिद्रारसाक्तैर्वसनैस्तथातेपात्वातितुच्छत्वात् तदनुकारिभिस्तत्सदृशैर्माङ्गलिकजन्मोत्सवे हारिद्रवस्त्राणां प्राधान्यात् क्षणप्रभाणां विद्युत्कान्तीनां तिरस्कारिभिश्चारुचामीकररसाक्तैश्च वसनैः कृत आकल्पो वेशो यैस्ते समुन्मर्य्यादस्य मर्य्यादातः सम्यगुत्क्रान्तस्य परमानन्दसिन्धोः व्यानशिरे व्याप्तवन्तः ॥९१॥

तत्समकालमेव व्रजराजसदनं नागरीणामावलिः इयायेत्यन्वयः। कीदृशी यावज्जनुर्जन्मपर्य्यन्तं न अनुभूतः प्रभूतः प्रचुर आमोदस्तेन मुदितं प्रासंहर्षं मेदुरं सान्द्रस्निग्धं मनो यस्याः सा। तदुदन्तं जन्मवार्त्तां कृत्यपरिहारेण गृहकृत्यमनपेक्ष्येत्यर्थः किञ्च गमनाङ्गभूतस्वप्रसाधनादिकृत्यमपेक्षांचकारेत्याह हारेणेत्यादि सता वर्त्तमानेन साधुना वा लसता कान्तिमता हारेण ललितः कण्ठो यस्याः सा उत्कण्ठाभिः उत्तरला॥९२॥

तरले हारमध्यगमणौ अयमानं घटमानं माणिक्यशकलं माणिक्यखण्डं यस्याः सा। अशकलोऽखण्डःपूर्ण एव मञ्जिमा मञ्जुत्वं येषां तानि कङ्कणानि यस्याः सा॥ तरलो हारमध्यग इत्यमरः। कमिति मान्तमव्ययं जलवाचकं तस्य कणायमानैः कणसदृशैर्हीरकनिकरैः सुभगमङ्गदं यस्याः सा। अङ्गानां दाक्षिण्यकारीणि अनुकूलानि सकलान्याभरणानि यस्याः सा ॥ ९३ ॥

भरणार्हया मञ्जूषिकान्तर एव रक्षणाधारणार्हया किञ्च महार्हया उत्सवयोग्यया उत्सवसमयमात्रधार्य्येत्यर्थः। काञ्चिकया अनुकम्पितकाञ्च्या अञ्चितं पूजितं जघनं यस्याःसा। घने निविडे आरोहे नितम्बे आरोह आरोहणं यस्याः साचासौ मुखराच किङ्किणी यस्याःसा। आरोहस्त्ववरोहेऽपि वरारोहाकटावपीति मेदिनी ॥ ९४ ॥

हंसकः पादकटकः। हंसस्येवकान्ता गतिर्यस्याः सा केशवं श्रीकृष्णं धाम्ना स्वकान्त्या-

कुसुमदधिदूर्वाक्षतमणिदीपनिकरादिकमतिमृदुलचीनहारिद्रवसनशकलेनापिधाय निजनिजकरकमलतलेनोपगृह्य । झणझणायमान मणिनूपुरकलनिनदैर्मुखरयन्तीव दशदिशो व्रजराजसदनमियाय व्रजनगरनागरीणामावलिः ॥९५॥

अनन्तरं प्रविश्य सूतिकासदनमालोक्यच तमभिनवं नवं नयननिर्माणस्यफलमिव संविज्जन्मनो विफलीभावाभावमहौषधिपल्लवमिव निजवात्सल्यसरसो नीलमहोत्पलमिव चिरञ्जयेति मङ्गलाशीःप्रसूनैरभ्यर्च्य विनिमेषमनुवेलमीक्षमाणा व्रजेश्वरीसौभाग्यसारः शरीरवानयमिति तामेव स्तुवत्यः ॥ ९६ ॥

मुहूर्त्तानन्तरमलिन्दतलमासाद्य मङ्गलसङ्गीतिस्फुरीतिललितवदना अन्तरगुञ्जदलिपुञ्जकलमधुरझङ्कारकोलाहललुलितकमलाः कमलिन्य इव ॥ ९७ ॥

परस्परमतिकौतुकेन केनचन प्रणयभरसरसकरसरसीरुहकुड्मलेन परस्परवदनशशधरमण्डलमतिविमलसुरभितरतैलहारिद्रद्रवनवनवनवनीतादिभिरभितो दशनकिरणभरालसल्लसदमलबन्धूकबन्धुराधरकिसलयं हसन्त्य एव लिम्पन्त्यो यदा त्रैलोक्यलक्ष्मीसौभाग्यमधरी चक्रुस्ता नागर्य्यः ॥ ९८ ॥

तदैवाङ्गनभुवि व्रजपुरपुरन्दरंसमया समयासादितपरमानन्दसन्दोहास्त एव गोदुहो महाप्रमदमुदिता इव इन्दुकन्दुकैरिव नवनीतपिण्डैः स्थूलतरकरकानिकरैरिव आमिक्षागेण्डुकैः दधिजलधिकर्दमगोलैरिव चन्द्रिकापललखण्डैरिवदधिपिण्डैः ९९

परस्परं निःसाध्वसमभिघ्नन्तो मणिमयजलयन्त्रपूरितानां पयोदधिमण्डमथितोदश्विदादीनां द्रुतकनकपयसामिव हारिद्रसलिलानामपि महासुगन्धितैलानां च-

---

निकामं यथेप्सितमेव कमनीयम् ॥ ९९ ॥

सम्विदोऽनुभवमय्या बुद्धेर्जन्मनो विफलीभावो वैफल्यं तस्य अभावे निमित्ते महौषधिपल्लवमिव नयनेति वहिः सुखस्य सम्विदित्यान्तर्यसुखस्य निजेति सुखमयसाहजिकभावस्यच प्रकाशः॥९६॥

अन्तरे मध्ये गुञ्जताम् अलिपुञ्जानां भ्रमरसमूहानां कलो मधुरास्फुटध्वनिरेव मधु तत् राति ददाति वर्षतीति यावत् तथाभूतो झङ्कारकोलाहलस्तेन लुलितानि आकुलितानि कमलानि अग्रस्थितत्वान्मुखाकाराणि पुष्पाणि यासां ताः। लुलविमर्दने सौत्रोधातुः। कमलिन्यः कमललता इव अत्र मङ्गलसङ्गीतीनां भ्रमरझङ्कार उपमानं मुखाना कमलानि तासां नागरीणां कामलवल्ल्य इति ९७

प्रणयस्य भरेणैव सरसेन करकमलकुड्मलेन दशनकिरणानां दन्तकान्तीनां भरेण भारेण अलसं लसतः कान्तिमतोऽमलबन्धूकादपि बन्धुरं सुन्दरम् अधरकिसलयं यत्र तद्यथा स्यात्तथा हसन्त्यः अधरीचक्रुर्न्यूनीचक्रुः ॥ ९८ ॥

अङ्गनभुवीति । अलिन्देतु स्त्रीभिरावृतत्वेन तत्रानवकाशात् व्रजपुरस्य पुरन्दरमिन्द्रं श्रीनन्दं समया श्रीनन्दस्य निकटे इत्यर्थः। अभितः परितः समयेत्यादिना द्वितीया। समयान्तिकमध्ययोरित्यमरः। गोदुहोगोपाः। करका वर्षोपलः। आमिक्षाया एव निविडत्वात् निस्तलत्वाच्च गेण्डुकतुल्यत्वं गोलो गोढा इति ख्यातो वर्त्तुलपिण्डः। चन्द्रिकायाः पललखण्डैर्मांसपिण्डैरिवेति सुखस्पर्शत्वमुक्तम् ॥९९॥

चर्चरिकादयो गीतच्छन्दो भेदा एवम्भूतनानाविधगानं कर्म। तम् अपूर्वं कुमारं प्रयोज्य कर्म

---

१ णौ गद-नद-पठ-स्वन इत्यवन्तो निनदशब्दः।

धारापातैः परस्परं सिञ्चन्तो मृदुमृदङ्गपणवडमरुझर्झरमृडुलमर्दलकुलकाहलभेरी-प्रभृतिमङ्गलविचित्रवादित्रनिनदानुगततालक्रमं नृत्यन्तो गायन्तश्च मङ्गलसङ्गीतान्तर्गतचर्चरिकाद्विपदिकाजम्भलिका तेनादिनानाविधगानमनाकलितमपि साक्षात्कारयन्त इव तत्काला विर्भूतं तमपूर्वं कुमारं व्रजराजमाह्लादयां चक्रुः ॥ ६० ॥
इतस्ततश्च उर्वीगीर्वाणसञ्चयमङ्गलाशीःस्वनसहचरवेदनिर्घोषैरभितोऽभितः सकलजनमुखोद्गीर्णजयजयरवैः परितश्च चारुचारणमागधसूतवन्दिवृन्दोपनीतवास्तवस्तवस्तवकैरपि नादब्रह्ममय इव समयः समपादि ॥ ६१ ॥
ततश्च तमतिमहोत्सवमहारसं जरयितुमसमर्थेव सा व्रजपुरभूरभूत् पुरप्रणालिकानिकरमुखनिःसृतदधिदुग्धादिधाराप्रपातमिषेण मुहुर्वमन्तीव सुरभयति स्म च पुरमार्गान् ॥ ६२ ॥
यद्धाराजलं गृहीतविहगाकाराः नाकिनोऽपि सादरमुपस्पृशन्तिस्म पिबन्तिस्म च ॥६३॥
तस्मिन्नेव समये सकला एव धेनवो नवोन्नीतनवनीतहरिद्रातैलरूषिताः कनकमणिविभूषणभूषिताः सवत्सा जगत्सारभूता निजनिजमनसि कृष्णाविर्भावभावुकसुभगंभावुका हर्षहम्बारवेण मुखरयन्त्यो भुवनतलमात्मानमपि सस्मरुः किमुताहारपानादि ॥ ६४ ॥
एवमतिकालकलितमहोत्सवमाभीरीनिकुरम्बं भगवती श्रीवसुदेवपत्नी रोहिणी तैलसिन्दूरमाल्यवसनाभरणादिभिरभिपूज्याभिनवशुभकुमाराभ्युदयमभ्यर्थयामास। बहिश्चेतरेतरमनवरतरभसरभसावशात्सहसहर्षकृतयज्ञावभृथस्नानास्त एवोपनन्दादयो व्रजपुरपुरन्दरं पुरस्कृत्य प्रतिजनमेव मणिमयमण्डनमहार्हवसनमालाचन्दनताम्बूलादिभिरभ्यर्च्य सविनयमभिनवशुभकुमारमङ्गलोदयमाचकाङ्क्षुः॥६५॥
इत्यानन्दवृन्दावनेप्रादुर्भावलीलालताविस्तारे द्वितीयःस्तवकः॥२॥

भूतं साक्षात्कारयन्त इव अनुभावयन्त इव । किम्वा गानमेव प्रयोज्य कर्मभूतं साक्षात्कारयन्त इव तं कुमारमित्यर्थः । गानं कीदृशम् अनाकलितमपि पूर्वमनभ्यस्तमननुभूतमपि तदानीं भगवदिच्छयैव सहसा स्फुरितमित्यर्थः ॥६०॥
चारणा नटाः । सूताः पौराणिकाः प्रोक्ता मागधा वंशशंसकाः । वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयइति ॥६१॥
जरयितुं जीर्णं कर्त्तुं असमर्था इव सा व्रजपुरभूः मुहुर्वमन्तीव अभूदित्यन्वयः। पुरस्य प्रणालिकानिकरा एव मुखानि तेभ्यो निःसृतो यो दधिदुग्धादिधाराप्रपातः तन्मिषेणवमन्तीवाभूदिति सम्बन्धः । ६२ ॥
नाकिनोदेवाः ॥६३॥
कृष्णाविर्भाव एव भावुकं मङ्गलं तेन सुभगंभावुकाः सुभगा भवन्त्य इत्यर्थः ॥६४॥
रभसस्य हर्षस्य रभसाद्वेगस्तद्वशात् । रभसा टावन्तोऽप्यस्ति । रभसा हर्षवेगयोरिति त्रिकाण्डशेषपाठात् ॥६५॥
इत्यानन्दवृन्दावनटीकायां सुखवर्त्तिन्यां द्वितीयस्तवकसङ्गमनम् ॥२॥

तथासति इयं खलु व्रजपुरन्दर मन्दिरावतीर्ण - परममहापुरुषचरणपरिचरण-चातुर्य्यधुर्य्यतया त्रैलोक्यलक्ष्मीरेव समुपसर्पतीति पुनस्तैरेवमेव निरटङ्कि ॥५॥

अनन्तरं चौरमूर्त्तिरिव महासाहसा । लोभोपहता जनतेव निर्लज्जा । कोपवृत्तिरिवासमीक्ष्यकारिणी ॥ ६ ॥

सा भवनं प्रविश्य ज्वलन्तमिव सकलाशुभसमूहभस्मीकरणमहानलस्फुलिङ्गम् । निखिलरिपुनिकरबहलतमः समुद्घाटनपाटवैकचटुलं विलक्षणं दीपशिखरमिव । संसारविषमविषमहाकूपारनिःशेषनिःशोषकारिणं मुनिविशेषमिव । मथ्यमानचन्द्रिकाचयफेनधवलशयनतलशायितं कर्पूरधूलिकेदारतटसमुत्पन्नं महामरकताङ्कुरमिव ॥७॥

खलवाणीव बहिः सरसा वारीव बहिराद्दता मणिकोपाञ्चिता कालायसकरपालिकेव दर्शनसुखदा कल्पलतिकायमाना विषलतिकेव ॥ ८ ॥

सस्नेहं जननीव तमङ्कमारोपयितुं कृतमतिर्जनन्या व्रजपुरपरमेश्वर्य्या वसुदेवभार्य्ययाप्यया च किमियं भगवती गौरी किमियं भूतधात्री किमियमिन्द्राणी किमियं

पुनः तैरेव जनैः इदमेव निरटङ्कि निर्णीतम् । अत्र पूतनायामाविश्य भगवती योगमायैव लीलासिद्ध्यर्थं तादृशसौन्दर्य्यं स्फोरयित्वा तान्मोदयामासेति ज्ञेयम् । तस्या वराक्यास्तामस्या तया मायया शुद्धसत्वाचरणसामर्थ्यान्यथानुपपत्तेरिति ॥ ५ ॥

महासाहसेति सहसा अन्तःपुरप्रवेशसामर्थ्यमुक्तम् । निर्लज्जेति स्वकार्य्यसाधन एव तात्पर्य्यम् असमीक्ष्यकारिणीति तादृश सुभगश्रीमूर्त्तिदर्शनेऽपि घातुकत्वव्यवसायात्यागः ॥६॥

सा तमङ्कमारोपयितुं कृतमतिर्जनन्या न प्रत्यषेधि । कीदृशं तं सकलानामशुभानां काष्ठस्थानीयानां भस्मीकरणंच भस्मीकरणेन ख्यातं महाग्निकणम् । एतेनाधिकारिविशेषानियमेनैव स्पर्शमात्रेणैव निःशेषपापहारित्वमुक्तम् । निखिला रिपुनिकरा एव बहलानि तमांसि तेषां सम्यगुद्घाटनस्य पाटवे दक्षतायाम् एकं चटुलं चञ्चलं परमसमर्थमित्यर्थः । एतेन रिपुप्रवर्त्तमानदुर्व्यापारारम्भ मात्रेणैव अक्षोभेण । तन्नाशकारित्वभावत्वमुक्तं संसार एव विषमस्य विषस्य महाकूपारः समुद्रः तस्य निःशेषेण निःशोषकारिणम् एतेन तादृश - शत्रूणामपि संसारबन्धच्छेदकत्वेन परमदयालुत्वम् । इत्येव तटस्थलक्षणेन महागुणानुद्दङ्क्य । तदानीं स्वरूपलक्षणेनापि परममाधुर्य्यं वर्णयति मथ्यमानेति । मथ्यमानानां चन्द्रिकाचयानां फेनमिव धवलम् इत्युपलक्षणम् शीतलं कोमलं च यत् शयनतलं तत्र शायितम् । अत्रोत्प्रेक्ष्यते कर्पूरधूलीत्यादि ॥७॥

बहिःप्रकाशरूपेण सरसा अन्तः स्वगतरूपेण अतिक्रूरा वाणी । पूतनापि बहिर्वात्सल्यप्रकाशिनी अन्तस्तु मारणव्यवसायवतीत्यर्थः । दुर्मदगजानां बन्धनेन वशीकारार्थं वारी यथा तृणादिभिर्बहिरावृता अन्तस्तु विवरमयी तथा सापीत्यर्थः । कालायसकरपालिका रत्नादिगर्भखड्गलतिका ॥८॥

वसुदेवभार्य्यया रोहिण्याच न प्रत्यषेधि । गौरीत्यनुपमसौन्दर्य्यदृष्ट्या भूतधात्रीति परमक्रोड-

वरुणानी किमियमग्नायी मदात्मजं प्रति वत्सलतया समुपसन्नेति वितर्कपरया न प्रत्यपेधि ॥ ९ ॥

किमहमस्य माता किमियं वेति निर्द्धारयितुमसमर्थायामिव व्रजेश्वर्य्यां निःसाध्वसमेव तमर्भकमङ्के विधातुमारेभे ॥ १० ॥

ऊरीकृताङ्गभावेन ज्ञानघनविग्रहेण भगवतापि परमकारुणिकेन जननीवेषमात्रपरिलोचनपरितुष्टेनेव तया स्पृष्टमात्रेणैव तदङ्कतलमारुरुहे। सा च सादरमङ्के निधाय मात्रोः पश्यन्त्योः परमवत्सला जननीव पयोमुखं विषकुम्भमिव पयोधरमधरे निधापयामास ॥ ११ ॥

ततश्च—पिबन्नें दुग्धं स्निग्धोदरदलितवन्धूककलिका-
दलद्रोणीताम्राधरपुटचमुत्कार-कलया ॥
अमूं चक्रे लीलामयनवशिशुः प्राणधमनी-
समाकृष्ट्या सद्यः सकलकरणग्लानिविवशाम् ॥ १२ ॥

अनन्तरम्—मुञ्चेति व्यथमानमानसतया क्षिप्तोऽपि गाढं तया ।
चूषन्नेव सुकोमलाधरपुटे स्नातुर्स्तत्कौतुकी ॥
विभ्रत्याः सहजाकृतिं विपर्ययैः पीत्वाऽष्टिवत्तां तनूं ।
मावासान्निरसीसरद्धरिरसौ तत्क्रोदवर्त्ती च सः ॥ १३ ॥

यदुक्तया इन्द्राणीति स्वःविकारप्रकाशनदृष्ट्या वरुणानीति स्निग्धच्छविदृष्ट्या अग्नायीत्यतिदुर्द्धर्षत्वदृष्ट्या वितर्कः ॥९॥

अङ्के क्रोडे ॥१०॥

ऊरीकृतोऽङ्गीकृतोऽङ्गभावोऽङ्गत्वं येन तस्य सर्वदा मधुरलीलाभिव्यक्तावपि उत्पातागमकाले सहसैवैश्वर्य्यस्फुरणस्वभावत्वात् ॥ ११ ॥

अमूं पूतनां सकलानां करणानाम् इन्द्रियाणां ग्लानिभिर्विवशां चक्रे। प्राणधमनी प्राणनाडी-तस्याः समाकृष्ट्या सम्यगाकर्षणेन। कथं तदाकर्षणमित्यपेक्षायां तद्विशिनष्टि। स्निग्धम् उदरं यस्याः सा च दलिता दलवती या वन्धूककलिका तस्या दलमेव द्रोणी पानपात्री तद्रूपं यत्ताम्रवर्णम् अधरपुटं तेन या चमुत्कारस्य कला वैदग्धी तया दुग्धं पिबन्। आवेशेन चूषणशब्दानुकरणं चमुत्कारः ॥ १२ ॥

मुञ्चेति "बालं न मुञ्चन्त्यपि मान्त्रिकेण या मुञ्च मुञ्चेत्यपसारितापि। तां पूतनां मुञ्चति नैव बालः स्वं मुञ्च मुञ्चेत्यपसारयन्तीम्" सहजाकृतिं बिभ्रत्याः पूतनायाः विपर्ययैः पीत्वेति तदानीं दुग्धापसरया संहारिकया शक्त्यैव तत्पानम् तस्य तु व्यपदेशमात्रं शक्तिशक्तिमतोरभेदादिति न्यायादेतत्र वर्णविन्यासादावानव्पानप्रसङ्गवदेव ज्ञेयम् तस्यास्तां विकटां तनुं स्वभावसिद्धाम् आवासात् नगरादिनिरसीसरन् निःसारयामास। नगरमध्ये तत्संमर्देन बहुतरलोकनाशं परामृश्य बहिर्विनिःसार्य। एवं तत्क्रोडवर्त्तीचाहो आश्चर्य्यमिति ॥ १३ ॥

तदनुच चक्रवर्त्तिराज इव सकलप्रजाकरालः। लङ्कापरिसर इव विभीषणमाहात्म्यः । गानव्यवहार इव तालप्रवेष्टः । महामहीध्र इव गण्डशैलपयोधरः ॥ १४॥
बलिरिव पातालास्यः ।महाशैल इव कन्दरागम्भीरगन्धवहः।महायोधसमूह इव संयुगप्रबलदन्तः । ध्वजिनीसङ्घ इव महाध्वजिह्वः ॥ १५ ॥
यादोगण इव महाहृदोदरः । वनप्रदेश इव महावटाक्षः शालोरुश्च । सार्द्धयोजनव्यापी तद्देहस्तदानीं पुरवाह्यवनपरिसरे निपतन्नवनिरुहानपि पातयामास१६
तदनु तदेतत्कुहकमिति जानती तमात्मजमनवेक्षमाणा व्रजराजमहिषी वत्सवत्सला गौरिव अहो कष्टमहो किमिदं क मे तनय इति मूर्च्छन्ती व्रजपुरपुरन्ध्रीभिराश्वास्यमाना संज्ञामवलम्ब्य हा धिक् हा बत नीलोत्पलमिति क र्णावतंसीकर्त्तुं किमपहृतो नाकनारीभिः नीलरत्नमिति शिरःशेखरीकर्त्तुं चोरित इव नागनागरीभिः तमालकुसुममिति चिकुरोत्तंसीकर्त्तुं किमपसारितो गन्धर्वीभिः सिद्धाञ्जनमिति निह्नुत्य रक्षित इव योगिनीभिः तुहिनकिरणकोरक इति जटाटवीं प्रापितो धूर्ज्जटिना । किं ममैव प्रबलतरदुर्नियतिदेव्या विलसितमिदं किमहमयोग्या जननीति स्वयमेव जनन्यन्तरमासादितवानिति पुनस्खलन्ती मूर्च्छामेव कालक्षेपकरीमुररीचकार१७

तद्देहःक इव चक्रवर्त्ती राजा सर्वमण्डलेश्वरः स इव सकलानां प्रजानां करम् आलाति गृह्णातीति सः। वाक्यार्थकथनमात्राय किंतु आलातीति रालादाने आतश्चोपसर्गे कः ततः षष्ठीसमासः पक्षे सकलप्रजानां सम्बन्धे करालो भीषणः। विभीषणस्य माहात्म्यं महिमा यत्र। पक्षे विशिष्टं भीषणं भयप्रदं माहात्म्यं महाकायत्वं यस्य सः। तालानां प्रकर्षेण वेष्टनं यत्र सः। पक्षे तालौ तलवृक्षाविव प्रवेष्टौ बाहू यस्य सः ।भुजबाहू प्रवेष्टो दोरित्यमरः। महामहीध्रो महापर्वतो मेर्वादिः स इव गण्डशैलेषु पयोधरा मेघा यस्य सः। पक्षे गण्डशैलाविव पयोधरौ स्तनौ यत्र सः१४
पाताले आस्या स्थितिर्यस्य सः। पक्षे पातालवत् आस्यं मुखं यस्य सः। कन्दरासु गम्भीरो गन्धवहो वायुर्यत्र सः।पक्षे कन्दरे इव गभीरे गन्धवहे नासिके यस्य सः। गन्धवहो, घोणा नासा च नासिकेत्यमरः। संयुगे युद्धे एव प्रबलन्। अन्तः मरणं यस्य सः। पक्षे सम्यक् युगा इव प्रबला दन्ता यस्य सः। रथसीराङ्गयोर्युग इति विश्वः। ध्वजिनीसङ्घः सेनासमूहः। ध्वजिनी वाहिनी सेनेत्यमरः। महाध्वजिनं सेनान्यं ह्वयते इति सः। पक्षे महानध्वा मार्ग इव जिह्वा यस्यसः१५।
महाहृदेष्वेव उत्कर्षेण इयर्त्ति गच्छतीति पचाद्यच् पक्षे महान् हृद इव उदरं यस्य सः। महान्तो वटा अक्षाश्च वृक्षभेदा यत्र सः। अक्षो वहेडा इति ख्यातः।पक्षे महान्तौ आवटौ गर्त्ताविवाक्षिणी यस्य सः।गर्त्तावटौ भुवि श्वभ्रे इत्यमरः।शालाभिःशाखाभिः शालवृक्षैर्वा उरुर्वृहत्।पक्षे शालवृक्षाविव ऊरू यस्य सः। अवनिरुहान् कंसोपभोग्यफलान् तदारामस्थान् तामसप्रकृतीनाम्रादीन् इति हेयम् ॥१६॥
तदानीन्तनं व्रजेश्वरीचेष्टितं वर्णयति कुहकमिति। यदयं तस्या दिव्यवेशः। व्याजमयं यत्रवात्सल्यम् अङ्कनिधापनं स्तनदानं च तदेतत्सर्वम्। अनु कुहकमिति जानतीचभवन्ती। संज्ञा चेतनां दुर्नियतिर्दूरदृष्टं सैव देवी तस्याः ॥ १७ ॥

तदनन्तरमविलम्बमेवानया तनयो लभ्यतामिति स्वयमेव मूर्च्छया त्यज्यमानेव सा पुनः संज्ञामवलम्ब्य हंहो के जानीथ कथयत केनाप्यपहृतं मेऽपत्यं क गताऽहं लप्स्ये इति प्रबलतरपवनभुग्नलवलीलतेव मलिना पदे पदे स्खलन्ती व्रजपुरपुरन्ध्रीजनैर्धार्य्यमाणाऽपि सोरस्ताडनमुच्चैस्तरां रुदती विगलितचिकुरकलापा करुणस्य मूर्त्तिरिव यावत् पुरतोरणमाससाद ॥ १८ ॥

तावदेव किमिदं विना वात्ययैव निपतितं गिरिशृङ्गं किमयं पृथिव्या एव मृतगर्भः किमयं नभसो गलित एव मांसपिण्डः किमयं दिशामस्थिसङ्घातः किमयं राक्षसीदेह इति ॥ १९ ॥

परितो धावद्भिराभीरैस्तदुरसि निःसाध्वसमेव खेलन्तं सर्व एव मां पश्येयुरिति करुणया तद्व्यपदेशेन बहिर्भूतमिव महागिरिवरोपरि जलधराङ्कुरमिव लीलाशिशुं तमालोक्य अहो अद्भुतमिदं पुरनिवेशसमये येयमवलोकिता सैवेयं व्रजपुरपुरन्दरनन्दनद्रोहार्थमागता स्वयमेव तेनैवापराधेन ननाशेति किमहो भाग्यमस्माकमिति वितर्कयद्भिर्दृश्यमाना एव व्रजपुरपुरन्ध्रयो गिरितटमिव तद्देहमारुह्य तदुरस्तः स्मितसुभगवदनमकुतोभयं तमादाय करात् करान्तरमुपसादयन्त्यो व्रजपुरेश्वरीं प्रति अयि सुकृतिनि तनयोऽयमयं ध्रियतां ध्रियतामिति यदोचुस्तदा तद्दुदीरितां गिरमपि स्वप्नवाणीमिव मन्यमाना किं प्रतारयन्तिमां भवत्य इति शोकग्रहाभिभूतेव सा यदा न मत्येति तदोत्सङ्गेऽर्पितस्य सुतस्य स्पर्श एव मत्याप यांचकार ॥२०॥

तदनु शोकनिद्रातो लब्धजागरेव पुनरासादितजीवनेव पुनरुत्पन्नसंविदिव मूर्च्छयैव परिवर्जितसकलेन्द्रियवृत्तिरिव तनयमुखमभिवीक्ष्य यावन्निर्वृणोति तावदेव कृतकौतुकमङ्गलं गोपुच्छभ्रामणगोमूत्रस्नपनादिभिः संस्कार्य्य रोहिणीसहिता उप

अन्यथा मूर्च्छया त्यज्यमाना लवली लोआलि इतिख्याता पुरतोरणं पुरबहिर्द्वारम् ॥ १८॥

गिरिशृङ्गमित्युच्चत्वेन मृतगर्भ इति लालावृतत्वेन मांसपिण्ड इति अतिचितत त्वादलक्ष्यमाणमुखाद्यवयवविशेषत्वेन। अस्थिसंघात इति दन्तनखादिप्रदेशदृष्ट्या पृथिव्या नभसो दिशामिति क्रमेण अधस्तः उपरितः अभितो वा आगतोऽयं तिसृभ्य एताभ्यो विना कुतस्त्योयं भविष्यति चतुर्थपदार्थस्याऽसंभवादिति भावः ॥१९॥

तद्व्यपदेशेन पूतनाप्राणकर्षणच्छलेन वितर्कयद्भिराभीरैर्दृश्यमाना इति तेभ्योऽप्यतित्वरया तासां प्रथमं तत्र गमनात् । तं प्रजेश्वरीतनयं करात्करान्तरमिति सर्वासामेव तासां तद्ग्रहणौत्सुक्यात् तत्र महति जनसंघट्टेऽवकाशाभावादेकया तमादाय शीघ्रमागन्तुमशक्यत्वाच्च इत्यर्थः अयमयमित्यति हर्षेण द्विरुक्तिः ॥२०॥

लब्धजागरेवेति तदपि पूर्णाक्षरवादीनि इव कार्यमालिन्यादीनि प्रथमं तस्या न नष्टानीति भावः। आसादितेति ततश्च जीवात्मना तस्या देहे पुनः प्रविष्टमिवेतिभावः। उत्पन्नेतितलो

नन्दसन्नन्दप्रमुखभार्य्या व्रजपुरपुरन्ध्रीभिः समं निजनिजमत्यनुसारेण सारेण भगवन्नामग्रामेण तदङ्गरक्षां विदधतिस्म ॥२१॥

अपरतश्च सर्व एव गोदुहो महाटङ्कैरिव गिरिवरपाषाणान् कुठारैः पूतनावयवान् खण्डशः कृत्वा नयनयोरपरिचितां चितां विधाय पुरुभिरिन्धनै रिन्धनैकाभ्रंलिहेन पुरुतरशिखावता शिखावता दीपयाञ्चक्रुः ॥२२

भगवदुपभुक्ततया तच्चिताधूमस्तु कालागुरुधूपधूम इव गगनतलमारुह्योपरितनसप्तभुवनजनघ्राणतर्पणो बभूव ॥२३॥

किं बहुना यदुत्पन्ना धूमयोनयोऽपि यानि यानि सलिलानि वेगुस्तैरपि भूरपि सौगन्ध्यवती समपद्यतेत्यहो किं वक्तव्यं भगवतः कारुण्यं यदियं विषमविषमयपयः—प्रदानार्थं गृहीतजननीवेशाभासाऽपि जननीलोकमासादिता॥२४॥

एवं सति दूरतो मथुरातः प्रतिनिवर्त्तमाने व्रजपुरपुरन्दरे तदनुवर्तिनो धूमलेखामवलोक्य संदिहानाः स्वामिनमूचुः। व्रजराज किमयं द्योदेव्या आप्रपदीनो धूमलनिचोलः पवनेन व्याधूयते किममूर्वा मूर्वाच्छवयो धरणितलमाच्छिद्य रसातलत एव महाहिमण्डलीफणमणिविशेषभासो विश्वमेव जगदण्डभाण्डविवरं पिदधाति किंवा दिक्करिण एव परस्परं युध्यमाना इतस्ततो धावन्ति ॥ २५ ॥

किंवा जलधरा एव भुवि निपत्य पुनरुद्गच्छन्तो मलिनयन्ति दिशां मुखानि। किंवा धरणिरेव रजोभावमासाद्य दिवमारोहति। किम्वा अकालसन्तमसान्येतानीति ॥२६ ॥

बुद्ध्यापि। परिवर्त्तितेति तत एव इन्द्रियैरपीति। तनयमुखमिति तत एव दर्शनं समभवदितिभावः। सारेणश्रेष्ठेन ॥२१ ॥

टङ्कैः। टाँकीतिख्यातैः टङ्कः पाषाणदारण इत्यमरः। अपरिचिताम् अविषयां दूरे इत्यर्थः इन्धनैः काष्ठैः शिखावता वन्हिना। शिखावानाशुशुक्षणिरित्यमरः। कीदृशेन पुरुतर शिखावता बहुतरज्वालायुक्तेन अत एव इन्धनेन दीप्त्या एकं मुख्यम् अभ्रं दूरगतमेघमपि लेढि व्याप्नोतीति तेन दीपयांचक्रुः ज्वालितवन्तः ॥२२॥

उपरितनानां सप्तभुवनानां भुवः स्वर्महर्जनस्तपःसत्यवैकुण्ठानां ये जनास्तेषां घ्राणतृप्तिकारी२३

धूमयोनयो मेघा वेगुर्ववृषुरिति यावत् अत्र वमेर्दन्त्योष्ठ्यवकारादित्वेऽपि वेमतुर्ववमतुरित्युभयस्यापि भागवृत्तौ दृष्टत्वात्। तथैव कविकल्पद्रुमेऽपि फणादिमध्ये पठितत्वात् न शशाददवादिगुणानामित्यादिप्रतिषेधः प्रायिकः ॥२४॥

द्यौरेव देवी तस्या नीलः प्रच्छदपटः आप्रपदं प्राप्नोतीति खः प्रत्ययः। पृथिवीतस्तदुद्गमं सम्भाव्य पुनः संशयाना आहुः। मूर्वा तृणविशेषस्तत्तुल्यदीप्तयः। विश्वमेवसर्वमेवापिदधाति आच्छादयन्ति। पुनरितस्ततो वृहत्तरान् धूमखण्डानालोक्याहु दिक्करिण इति ॥२५॥

पुनरति नैविड्येनैकीभूय उद्गच्छतो मूलधूमानवलोक्याहुः। जलधरा मेघाः। पुनस्तत्रत्यं भूतलं धूमेनाच्छन्नमालोक्याहुः किंवा धरणिरेवति ततश्च इतस्ततः सर्वमेव व्याप्तुमुपक्रामन्तं धूमसमूहमालोक्याहुः अकालेति। विश्वक् सन्तमसम् तम इत्यमरः ॥२६॥

कियदासन्नतया विभक्ताकृतित्वेनाऽहोधूमलेखेवयमिति यदा निश्चिक्युस्तदैव तत्सारभेण पुनर्जातसंदेहाः कथमकस्मादेवेतावानगुरुधूपधूमः। किंवा पृथिव्या निजगुणो गन्ध एव धूमाकारतामासाद्य स्वात्मना नभसः शब्दगुणजिगीषया विश्वमेव व्याश्नुते ॥ २७ ॥

इति वितर्कयत्सु तेषु व्रजराजेऽपि किमिदं किमिदमिति शङ्कमाने त्वरितमुपव्रजद्भिर्व्रजस्थैः कथिते सकल एव वृत्तान्ते च पूतनाख्ये बालग्रहे ॥ २८ ॥

कुमारानामयरसमयविवरणसमावेशपेशलतया त्वरितमेवोपगम्य कृतनये तनयेक्षणक्षणपरवशे ॥ २९ ॥

रवशेषविरतौ सुतमङ्कमारोपयति रोपयति च परमानन्दबीजानि हृदये मूर्द्धानमाजिघ्रति ॥ ३० ॥

मनस्यऽमानिव प्रमोदभरो हर्षाश्रुभरमिषेण नयनाभ्यामुत्ससर्पेव ॥ ३१ ॥

इत्यानन्दवृन्दावने पूतनावधलीलालताविस्तारे तृतीयः स्तवकः ॥ ३ ॥

निश्चिक्युः निश्चितवन्तः व्याश्नुते व्याप्नोति ॥ २७ ॥

वृत्तो निर्व्यूढोऽन्तो नाशो यस्य तथाभूते बालग्रहे कथिते सति सकल एव वृत्तान्ते कथिते इत्यनेनैव पूतनागमननाशपर्य्यन्तकथनस्यापि सिद्धत्वात् वृत्तान्ते च पूतनाख्ये इति पुनः कथनं पूतनास्तनपानादिकथाश्रवणे व्रजराजस्य मूर्च्छारम्भमालोक्य कथामन्तरान्तरा सा तु पूतना मृतैव मृतैव तव पुत्रस्तु मातुरङ्के संप्रति खेलन्नेव वर्त्तते किमिति क्लाम्यसीति सान्त्वनार्थम् ॥ २८ ॥

कुमारस्य अनामयरसमयविवरणम् आरोग्यनिमित्तकरसमयगोमूत्रस्नपनादिस्वस्त्ययनविवृतिस्तत्र समावेशे पेशलतया चतुरतया त्वरितं निकटमागत्य कृतो नयो येन तथाभूते श्रीव्रजराजे तनयस्य ईक्षणेन क्षण उत्सवस्तत्परवशे ॥ २९ ॥

रवाणाम् आनन्दकोलाहलानां शेषस्य विरतौ सत्यां सुतं क्रोडमारोपयति आरोहयति सति परमानन्दानां बीजानि हृदये क्षेत्ररूपे मनसि रोपयति सति अत्र सुतस्य यदङ्कारोपणं तत् परमानन्दबीजानां हृत्क्षेत्रे रोपणमिवेत्युत्प्रेक्षा। हृदये आनन्दबीजानां रोपणेन सह सुतस्याङ्कारोपणमिति सहोक्तिर्वा व्यङ्ग्या ॥ ३० ॥

एवंभूते व्रजराजे प्रमोदभरो मनसि अमानिव अतिवृद्धया अवकाशमप्राप्नुवन्निव हर्षाश्रुभरच्छलेन हर्षाश्रुभरास्ते न भवन्ति किन्तु प्रमोदभर एव नेत्राभ्यामुत्ससर्पेव उच्छलितवानित्यपन्हुतिः। अत्रानन्दबीजानां हृत्क्षेत्रे तदानीमेव रोपणम् तदानीमेव प्रमोदभरवृक्षरूपेणाऽतिवृद्ध्या तत्रावकाशाभावेन बहिःप्रसरणमिति समुच्चयालङ्कारस्य व्यञ्जिके सहोक्त्यपन्हुती इति ॥ ३१ ॥

इत्यानन्दवृन्दावनटीकायां सुखवर्त्तिन्यां तृतीयस्तवकसंगमनम् ॥ ३ ॥

——:(*):——

## चतुर्थः स्तवकः

अथ कियता विलम्बेन कदाचिदौत्थानिके कर्मणि जन्मनक्षत्रयोगे ॥ १ ॥

वत्सलता-लतानामिव मुत्सवभूतानामुत्सवभूतानामिव सुकृतमहोदयानामहोदया ऽनारतरतहृदयानामहृदयानामतिकौतुकालं कौतुकालङ्कुर्वतीनां तीव्रजयोषितां व्रजयोषितां श्रेणीमादाय ॥ २ ॥

कृतनयं तनयं मङ्गलाभ्यङ्गोद्वर्त्तनविवर्त्तनानन्तरमभिषिच्य मङ्गलाभिवाद्य-वाद्यनिर्घोषे घोषेश्वरी कृतमार्जनं कृतमार्जनं मङ्गलकज्जलेनाऽकज्जलेनाऽञ्जित-नयनं नयनान्दितपुरजनावृताऽनावृता नन्दव्रजराजं व्रजराजं पुरस्कृत्य कृत्यकोविदया दयादिसकलगुणाधिरोहिण्या रोहिण्या समं कर्पूरपूरवलक्षलक्षमूल्यतल्पतले शनकैः शाययित्वा ॥ ३ ॥

---

चतुर्थेऽनरतृणावर्त्तौ स्थैर्य्यचाञ्चल्यशालिनौ। खण्ड्येते शिशुना मातुः शोकश्च स्वावियोगजः ॥ कियता विलम्बेनेति तृतीये मासीत्यर्थः त्रैमासिकस्य च पदा शकटोऽपवृत्त इति द्वितीयस्क-न्धात्। उत्थानं शिशोरङ्गपरिवर्त्तनं तदर्हे कर्मणि घोषेश्वरी योषितां श्रेणीमादाय तनयमभिषिच्य शनकैः शाययित्वा वोपयोषितामर्चनं विदधती मृदङ्गादिनिनदादिभिः तस्य शिशो रोदनकलं नाकलयामासेत्यन्वयः श्रीयशोदा ॥ १ ॥

व्रजयोषितां कासामिव वत्सलतायाः वात्सल्यस्य लतानामिव मुत् आनन्दस्तस्याः सवभूतानां यज्ञरूपाणम्। यज्ञः सवोऽध्वरो याग इत्यमरः। उत्सवस्य भुवि स्थाने उत्पत्तौ वा उताना-मिव प्रथितानामिव सुकृतानां महान् उदयो यासु तासाम् अहो आश्चर्य्ये दयायाम् अनारतम निरन्तरमेव रतं हृदयं यासां तासाम् अकारो विष्णुस्तत्रैव हृदो मनसः अयः शुभावहो विधि-र्यासाम्। कौ तु पृथिव्यां तु कालं समयम् अतिकौतुकेन अलम् अलंकृतं कुर्वतीनां श्रेणीं की-दृशीं तीव्रजयोषितां तीव्रस्य जयस्य महोत्कर्षस्य उषितां निवासभूमिम् अधिकरणे निष्ठा। यद्वा तीव्रेण जयेन महता सर्वोत्कर्षेण उषितां कृतवासाम् ॥ २ ॥

तनयं कीदृशं कृतनय कृतो नयो नीतिस्तद्दिनोचिताचारो यत्र तम्। मङ्गलैरपि अभिवाद्यानां नमस्कर्त्तुं योग्यानां वाद्यानां मृदङ्गादीनां निर्घोषे सति अभिषेकानन्तरं कृतं मार्जनं यस्य तम्। अत एव कृतं मा शोभा तस्याः अर्जनं येन तम्। अकं दुःखमिवाचरत् जलं रसो यस्य तेन आचारे क्विबन्तात् क्विप् अकज्जलेनाऽकुत्सितजलेन। नयेन नीत्या नन्दितैः पुरजनैरावृता। अनावृते आवरणशून्ये आनन्दव्रजे सुखसमूहे राजत इति तम् व्रजराजं पुरस्कृत्य दयादीनां सकलगुणानाम् अधिरोहिण्या निःश्रेणीरूपया निःश्रेणिस्त्वधिरोहिणीत्यमरः। कर्पूरपूरादपि वलक्षे शुक्लवर्णे लक्षाणि मूल्यं यस्य तस्मिन् शय्यातले शनकैरिति निद्राभङ्गशङ्कयेति भावः ३

समायातानां घोषयोषितामर्चनं विदधती मृदुमृदङ्गपणवभेरीकाहलदुन्दुभिनिर्ह्रादैरवानिस्तुरवराशीराशिनिःस्वनैः सूतमागधवन्दिवृन्दोदीरितगुणगणोद्गारकोलाहलैः संगीताचार्य्यवर्य्यसंगीतसंगीतकलकलतरङ्गैश्च मुखरितेषु दिग्वलयेषु क्षुद्बाधया स्तन्यकामस्य तस्य लीलाशिशोर्लीलाशिशोभस्य रोदनकलं नाकलयामास ॥ ४ ॥

अनाकलिते च तस्मिन् रुदितकले रुकले सविधगतशकटशकलीकरणायनवदलवदलसविलसदङ्घ्रितलमय माश्चर्य्योत्तानशायी समुन्मील्य समुदक्षि समुदक्षिपत् ॥ ४ ॥

तच्च तच्चरणयुगं मृदुलकमलदल मलदललिततालुलितं न वार्द्धितं न वर्द्धितंसनम् ६

नच तदति निकटमेव शकटं तथापि तथा पिञ्जलतया कटकटायमानविकटकदुरटनपुरस्सरं विघटितकुप्यघटघटीवदाकमारादेव विदलिताक्षकूवरवरमासङ्गसङ्गतभूमितलमितस्ततो व्यस्ततया पर्य्यवर्त्तत ॥ ७ ॥

---

अनन्तरं निपततस्तमनसोऽस्तमनसो रवमाश्रुत्य श्रुत्यरञ्जकं सर्व एव जनास्त-

संगीताचार्य्याणां गानशास्त्राध्यापकानां वर्य्यैः श्रेष्ठैः सम्यग् गीतानि सङ्गीतानि तेषां कलकलतरङ्गैः लीलाशिशोः श्रीकृष्णस्य कीदृशस्य ईराशिशोभस्य ईराशेर्लक्ष्मीसमूहस्यापि शोभा यतस्तस्य रेफद्वयस्य लत्वं यमकार्थम् ॥४॥

शकलीकरणाय खण्डीकर्तुम् अयम् आश्चर्य्यरूप उत्तानशायी बालकः। नूतनदलवत् अलसं विलसच्च अङ्घ्रितलं समुदक्षि सानन्दनयनं यथास्यात्तथा सम्यक् तदक्षिपत् उत्क्षिप्तवान्। मातरमवधापयतुं रोदनरावैरपारयन् कृष्णः। शकटविघट्टनशब्दैः क्रुधेव तामाकुलीचक्रे ॥ ९ ॥

आश्चर्य्योत्तानशायीत्युक्तमाश्चर्य्यत्वं विवृणोति। तच्च तस्य कृष्णस्य चरणयुगं शकटभङ्गकार्य्यार्थं नृसिंहावतारस्येव हिरण्यकशिपुविदारणार्थं न जातैव कठिनमित्याह। मृदुलस्य कमलदलस्यापि मलदा तिरस्कारकारिणी या ललितता लालित्यं तया अलुलितम् अखण्डितम्। न च वामनावतारस्य इव कटाहभेदार्थं तात्कालिकी वृद्धिप्राप्तमित्याह न वर्द्धितमिति कीदृशम् नवा नवीना क्षाद्रिर्यत्र तथाभूतं तंसनम् अलङ्कारो यत्र तत् ॥६॥

*पिञ्जलतया अत्याकुलतया समुत्पिञ्ज पिञ्जलौ भृशमाकुले इत्यमरः।* तथा पर्य्यवर्त्तत यथा अनन्तरं सर्वएव तदुपकण्ठम् उत्ससर्पुरित्यन्वयः कटकटइति तद्भङ्गशब्दानुकरणम् तद्वत् कटुरटनं पुरस्सरं यथा भवत्येवम् इतस्ततो व्यस्ततया भग्नावयवत्वेन पर्य्यवर्त्तत पातित्वा वैपरीत्येनातिष्ठत्। कीदृशं शकटं विघटिता कूप्यादीनां घटा यत्र तत्। कुप्यानि स्वर्णरजतातिरिक्तकांस्यादिमयपात्राणि घटघट्योर्गुरुत्वाल्पत्वाभ्यांभेदः। आरात् शिरोनिकट एव विदलितैःखण्डितैरक्षादिभिः संगतं भूतलं यत्र तद्यथास्यादेवम् अक्ष आख इति ख्यातः। कूवरस्तु युगन्धरः। आसङ्गा युगः ॥ ७ ॥

निपततोऽनसः शकटस्य तं रवम् आश्रुत्य अस्तानि क्षिप्तानि मनांसि येषां ते। रवं कीदृशं श्रुतीनां कर्णानामरञ्जकम्। तस्य शिरोवेदना पीडा तस्या वेदना ज्ञापनं शकटाघातशब्देनैवे-

द्वेदनावेदनावेदनातुरा इव धावमाना धावमानाकुलमानसास्त्वरितमेव तदुपकण्ठमुत्कण्ठमुत्ससृ्पुः। उपसृत्य च अहो! किमिदमाकस्मिकं नः सङ्कटम् ॥ ८ ॥

यदिदं प्रभूतकालमेवं विधमेव निर्व्याहतमेव निस्पन्दमेव भवनमध्ये मङ्गलभूतमिव वरीवृत्यते कस्मादकस्मादद्य विना विनाशसामग्रीं विपर्य्यस्तं शकटम् ॥९॥

कथं वा सुसम्पन्नसुकृतपरिपाकस्य पाकस्य शयनतलं परिपत्यपरितःपरितस्थुषां घटादीनां कतमदपि मदपिच्छिल इवावयवे न लग्नमिति ॥ १० ॥

व्रजपुरेश्वर! शुभवतो भवतो निखिलसभार्य्यस्य सभार्य्यस्य कीदृशं स्तवकीदृशं स्तवनार्हं भागधेयमितिच ब्रुवाणेषु तेषु ॥ ११ ॥

तदभ्यर्णसमुपस्थिताः शिशवो यथावलोचितं वलोचितं कलस्वरमनेनसानेनसाक्रोशं नाम रुदता मरुदताण्डवितकमलकोरकाचरणौ चरणौ समुदस्यताऽस्य तादवस्थ्यं विघटितं घटितं च भूमौ निपतनमिति यदोक्तवन्तस्तदा न केऽपि श्रद्दधिरे; दधिरे तु मनसा किमप्यलक्ष्यं कारणमिति ॥ १२ ॥

अथ तत्पतनसमकालमेव तनयं प्रति शङ्कमाना व्रजराजमहिषी महीतलमधि निपपात। ततश्च सवैयग्र्यं पुरन्ध्रीभिः सह रोहिण्या सत्वरमुत्थाप्य कुमारस्य सौवस्तिकवृत्तवार्त्तवार्त्तया समाश्वासिताऽसितापाङ्गी संज्ञामासाद्य बाष्पमुज्जगार।१३।

त्यर्थः। तया या वेदना स्वपीडा तया आतुराः इव धावमानाः। धावमानानि पैशुन्यादिदोषराहित्येन शुद्धानि अत एवाकुलानि मानसानि येषां ते धावु गतिशुद्ध्योः इत्यस्य रूपम्। तस्य शिशोरुपकण्ठं निकटम्। उत् उर्द्धीकृतः कण्ठो यत्र तद्यथा स्यादेवम् ॥ ८ ॥

यद्यस्मादिदं शकटं प्रभूतकालं बहुतरकालं व्याप्य वरीवृत्यते अतिशयेन वर्त्तते ॥ ९ ॥

पाकस्य बालकस्य। पोतः पाकोऽर्भको डिम्भ इत्यमरः। शयनतलं परितः शय्यातलस्य चतुर्दिक्षु परितस्थुषात् अभितः स्थितवतां घटादीनां मध्ये कतमदपि मदपिच्छिले मृगमदे न पिच्छिले इव अवयवे अङ्गे न लग्नम् ॥ १०॥

हेव्रजपुरेश्वर!शुभवतःमङ्गलयुक्तस्य निखिलासु सभासु आर्य्यस्य श्रेष्ठस्य भवतो भागधेयं भाग्यं स्तवनार्हं कीदृशं तद्भागधेयं निर्वक्तुं वयं न शक्नुम इतिभावः। स्तवकिनी स्तवकयुक्ता ईर्ल्लक्ष्मीः संपत्तिरिति यावत् तां पश्यतीति इगुपधत्वात्कः। स्तवकीदृशं संपत्तिलतायाः स्तवकं व्यञ्जयति तव भाग्यमित्यर्थः अग्रे तु पुष्पफले अपि व्यञ्जयिष्यतीति भावः ॥११॥

यथावलोचितं यथादृष्टं वलोचितं श्रीकृष्णपराक्रमोचितं कलस्वरं यथास्यात्तथोक्तवन्तः। अनेन कुमारेण अनेनसा एनोऽपराधस्तद्रहितेन साक्रोशं रुदता क्रन्दता क्षुधातुरोयं स्तन्यं पातुं न प्राप्नोतीति कोस्याऽपराधः अत एवायं नोपालभ्य इति भावः। चरणौ समुदस्यता रोदनवैकल्यमुद्रया उत्क्षिपता अस्य शकटस्य तादवस्थ्यं तदवस्थत्वं विघटितं चरणौ कीदृशौ मरुता वायुना अताण्डवितयोः अनर्त्तितयोः कमलकोरकयोरिव आचरणं स्वधर्मो ययोस्तौ ॥१२॥

सौवस्तिकं स्वस्तिरूपं यद्वृत्तं चरित्रं विनयादिभ्यष्ठक् तेन हेतुना वार्त्ता निरामया या वार्त्ता वृत्तान्तः। वार्त्तो निरामयः कल्य इत्यमरः। तया समाश्वासिताऽसितापाङ्गी श्रीयशोदा संज्ञां चेतनाम्१३

बालो मे नवनीतलश्च मृदुलस्त्रैमासिकोऽस्यान्तिके
हा कष्टं शकटस्य भूमिपतनात् भङ्गोऽयमाकस्मिकः ।
तच्छ्रुत्वाऽपि न मे गतं यदसुभिस्तेनाऽस्मि वज्राधिका
धिङ्मे वत्सलतामहो ! सुविदितं मातेति नाम्नैव मे ॥ १४ ॥

किंच—यन्निष्पातजवैर्मही विचलिता यस्या रवैः सर्वतः
सर्वेऽमी बधिरीकृता निपतिते तस्मिन् समीपे शिशुः ।
लब्ध्वा भूरिभयं यदेष तदितः संस्मृत्वाऽपि जीवत्यहो !
मद्दुर्दैवफलं महत्तं व्रजपतेर्भाग्यैः कियद्वार्य्यताम् ॥ १५ ॥

इति सत्वरमुपसर्पन्ती ससाध्वसा साध्वसाव ऽतिविधुरा विधुरामणीयकहारिवदनं तमङ्कमारोप्य मारोप्यमाणसौभगं समालोक्य समालोक्यमधुरिमा धुरि मानसं मानसंतोषतो न चकार ॥ १६ ॥

अनन्तरं नरङ्गितमङ्गलस्वस्त्ययनादिनाऽऽदिना नीराजितं नीराजितं स्वमहसैव सैवमतिस्नेहस्नुतं स्तनरसं नरसंकाशं परं ब्रह्मबालकमपि नवालकं मूर्त्तमपि अमूर्त्तं पाययित्वा निद्राणमिव मत्वा पुनरन्यशयने शयनेयतया संयोज्य यावत्स्वापयाति तावदेव वसुदेवभार्य्या सुदेवभार्य्या महोत्सवागतव्रजवनितानितान्यमानपूजावशेषं समापयामास घोषाधीशोऽपि कतमधरामरोदीरितमङ्गलस्वस्तिवाचनादिना पुनरपि शकटं तथैवाचारलब्धतया स्थापयामास ॥ १७ ॥

---

माता इति नाम्नैव मम न तु मातृकार्य्यकारित्वमित्यर्थः ॥१४॥

आरवैः शब्दैः तस्मिन् शकटे समीपे निपतिते सति यदेष शिशुः भूरिभयं लब्ध्वा इत अस्मादेव स्थानात् तत्शकटपतनं स्मृत्वाऽपि अहो आश्चर्य्यं जीवति तत्तस्मादनुमितस्य मद्दुर्दैवस्य फलं महदिदं पूतनागमनशकटपतनाद्युत्पातबाहुल्यम् । तथापि तत्तच्छान्तिदर्शनलिङ्गेन अनुमितैर्व्रजपतेर्व्रजराजस्य भाग्यैर्बहुभिः कियन्निवार्य्यताम् । नजाने पुनरप्यग्रे मद्दुर्दैवं कीदृशं फलिष्यतीति भावः ॥१५॥

साधु सुष्टु अतिविधुरातिशयेन व्याकुला विधोश्चन्द्रस्यापि रामणीयकहारि रमणीयत्वहरणशीलं वदनं यस्य तम् । मा शोभा तया रोप्यमाणं प्रकाश्यमानं सौभाग्यं यस्य तम् । यशोदा कीदृशी समालोक्यः अङ्कगतेन कृष्णेन हेतुना सम्यगालोकयितुं योग्यो मधुरिमा माधुर्य्यं यस्याः सा । ततश्च मानाश्चित्तसमुन्नतिः तेन संतोषतो हेतोर्धुरि चिन्तायां मानसं मनो न चकार ॥१६॥

स्वस्त्ययनादिना कीदृशेन आदिना कारणेन प्रथमतः कृतेन नीराजितं निर्मञ्छितं कीदृशं स्वमहसा स्वकान्त्यैव निःशेषेण राजितं नरसंकाशं नराकारेणैव सम्यक् काशः प्रकाशो यस्य तं नवा नवीना अलका यस्य तम् । अमूर्त्तम् । अकठिनम् मूर्त्तः काठिन्यकाययोरित्यमरः । निद्राणमिवेति निद्रापूर्वभावो व्यञ्जितः । शयनेयतया शयौ पाणी ताभ्यां नेयतया प्राप्यतया । पञ्चशाखः शयः पाणिरित्यमरः । वसुदेवभार्य्या रोहिणी कीदृशी शोभनस्य देवस्य देवजातेरिव भा कान्तिस्तया आर्य्या पूज्या । महोत्सवागताभिर्व्रजवनिताभिः सह तासामेव वा नितरां तान्यमानायाः विस्तार्य्यमाणायाः पूजाया अवशेषम् ॥१७॥

अथ कस्मिन्नपि रसमये समये मणिकिरणमघणे मघणे सदयं मुत्सङ्गमुत्सङ्गमारोप्य जनन्या जनन्यायविदुया श्रीयशोदया श्रीयशोदाश्रिया लाल्यमानो मानोन्नतधीरधीनमायो मायोगरुचिरो रुचिरोपितनरदारकलीलो ज्ञानघनोऽज्ञानघनोदकोभ्रमयन् कृतप्राकृतचरितोऽचरितोहः स बालकृष्णः संगस्यमानमतिरंस्यमानमति

कस्मिन्नपीति एकवर्षवयःप्राकट्ये । एकहायन आसीनो ह्रियमाणो विहायसा इति दशमस्कन्धोक्तेः । तदन्तरालवर्त्तिनामकरणादिलीलोल्लङ्घनेन प्रथमत एवैतद्वर्णनं तु दशमस्कन्धोक्तक्रमानुरोधेनैवेत्येवमेवान्यत्रापि ज्ञेयम् । स बालकृष्णः संगस्यमानं प्रबलानिलरूपं दानवं प्रमाय गरिमाणं ततानेत्यन्वयः । प्रघणे अलिन्दे कीदृशे मणीनां किरणैः प्रकर्षेण घने निबिडे मुदाम् आनन्दानां सङ्गो यत्र तद्यथास्यात्तथा उत्सङ्गं क्रोडम् आरोप्य जनन्या जनानां न्यायं पुत्रोपलालनाद्याचारं वेत्तीति । इगुपधात्कः । तया । श्रीः समृद्धिश्च यशश्च दयाच ताभिः श्रीः शोभा यस्यास्तथाभूतया यशोदया लाल्यमानः स बालकृष्णः संगस्यमानं संगतीभविष्यन्तं प्रबलानिलरूपं तृणावर्त्तरूपं दानवं स्वयं कथम्भूतः अम्बरान्तः आकाशमध्ये अतिशयेन रंस्यमाना मतिर्यस्य सः । आकाशसञ्चाररूपक्रीडार्थमित्यर्थः । तम् कीदृशम् उपशमाय नाशाय इष्यमाणं सङ्कल्प्यमानं प्रमाय निर्द्धार्य्य तद्वधार्थमपीत्यर्थः । इति प्रयोजनद्वयमुद्दिष्टम् तदा तस्मिन् समये नवम् अभूतपूर्वं गरिमाणं गौरवं ततान विस्तृतवान् । ननु केवलमाधुर्य्यानुभवशालिश्रीयशोदादिवात्सल्यरसावेशमयलीलस्य तस्य कुतस्तथा स्फूर्त्तिर्यतस्तृणावर्त्तागमज्ञानेन निजभारकल्पनमित्यत आह मानेन प्रमाणेन उन्नता धीर्यस्य सः । तदानीमुत्पातागमे निजसेवावसरमाज्ञाय सहसैवोपस्थितायामैश्वर्य्यशक्त्यां बुद्धिवृत्त्या अवधानादित्यर्थः नन्वन्यदा तस्य निजैश्वर्य्यास्फूर्त्तौ मायावृतं तत्त्वं केनचित् किमिति नाशङ्कयतेत्यत आह । अधीना वशवर्त्तिनी माया यस्य सः । ननु कदाचिदैश्वर्य्यस्फूर्त्तिः कदाचिन्नेत्येवमनियत लीलत्वं कथंतस्येति तत्राह । मायोग रुचिर इति मा शोभा सौन्दर्य्यं तस्या योगेन रुचिं राति ददाति गृह्णातीति वा सः । निखिलशक्तिकदम्बसेव्यमानस्य यथा यथा लीलायाः सौन्दर्य्येण रोचकत्वं भवति तथातथैवावसरे स्वशक्त्यनुमोदनमित्यर्थः । तेन न केवलम् असुराद्यागमे तद्वधार्थं स्वजनपालनार्थं च ऐश्वर्य्यसुखानुभविभक्तागमे च तत्प्रसादार्थं निजमहैश्वर्य्यस्फुरणं किंतु माधुर्य्यास्वादो यथा न व्याहन्येत प्रत्युत प्रणयगाढ़तया निजसंबन्धमननस्यातिदार्ढ्येनसनर्मविस्मयकौतुकासक्त्या परिपुष्येतैव तथा निजनिखिलकान्ताचक्रवर्त्तिनीनां महामाधुरीविवर्त्तवर्त्तिनीनां श्रीराधिकादीनामपि संसदि दशावतारशेषशय्यादिलीलाविस्फारार्थमपीयत्तं विस्तरेण ननु यदि तदानीमैश्वर्य्यं स्फुरितं तदा वामनादयवत् । रेपु त्रिविक्रमादिरूपवत् तद्वधानुरूपं बृहत्स्वरूपं किमिति माविश्चक्रे तत्राह रुचिरोपितेतिति रुच्या रोपिता नरदारकस्येव लीला येन सः । बालकवपुषैव तादृशदुष्टवधे विस्मयवैलक्षण्यं स्यात् व्रजवासिनां माधुर्य्यास्वादविघातश्च न भवेदिति भावः । ननु ईदृशानेकप्रयोजनककार्य्यचातुरी सहसैव तस्य कथमभूदिति तत्राह ज्ञान घन इति । प्रयोजनान्तरमप्याह अज्ञानतृणावर्त्तादीन् भ्रमयन् बालकाकारज्ञापनेन भ्रान्तान्

रम्बरान्तरिष्यमाणमुपशमाय प्रमाय प्रबलानिलरूपं दानवं तदा नवं ततान गरिमाणम् ॥ १८ ॥

मत्कृते मम कथं जनयित्री परिभवं समुपैतु । इत्थमङ्कगत एव स तादृक् स्तोक एव बहुदुर्वह आसीत् ॥ १९ ॥

सा च तदा तदाक्रमणपीडिताऽपीडिता भुवनजनैर्वत्सलतया लतया फलभरनतया सदृशी कथं चिदेकरसं चिदेकरसं तमात्मजमात्मजवेन स्खलन्तं तत्रैवोपवेशयामास ॥ २० ॥

अथ भगवदिच्छयाऽच्छया च्छुरितमानसा मानसारतया । विवेकेनैव नैव चिन्तयित्वा विहायाऽपि तं हा यापितं तं समयमविदती विदती च सहानीतमिति मितिहीनमभावन्तं मभावन्तं गृहमध्ये प्रविश्य यदा कार्य्यान्तरनियुक्ता तस्थुषी॥२१॥

तस्मिन्नेवाऽवसरे युगपद्विप्रयुक्तनागनागरीनिकुरम्बस्य दीर्घोष्णनिश्वास इव काललोहकारेणास्फालिताया भूभस्त्रायाः समुच्छ्वास इव युगपदेव दिङ्मातङ्गानां श्रवणसूर्पास्फालनतः कम्पमानस्य नभसः स्पन्द इव ॥ २२ ॥

कर्तुं तथापि तेष्वपि मुक्तिदायित्वेन दयालुत्वमाह अघनोदकः अघ संसारदुःखं नुदति दूरीकरोतीति सः । नच बालत्वेऽपि सिंहबालकस्येव असुरान् प्रति भयानकत्वप्रदर्शनमित्याह कृत प्राकृतचरित इति । अत एव न चरितः ऊहस्तर्को यत्र सः ॥१८॥

भावप्रकटने मुख्यं प्रयोजनमाह मत्कृत इति ॥ १९ ॥

भुवनस्थजनैः सर्वैरपि ईडिता स्तुता कथंचित् कष्टसृष्ट्या उपवेशयामास एकरसम् एकरूपस्वरूपम् चिदेकरसं तदानीं ज्ञानैकधैर्य्यम् । शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रस इत्यमरः ॥ २० ॥

अथ सा यदा कार्य्यान्तरनियुक्ता तस्थुषी स्थितवती तस्मिन्नेवावसरे तृणावर्त्ताख्यः कोऽपि वात्याविवर्त्त आविरासीदित्यन्वयः । अच्छया निर्मलया भगवदिच्छया हेतुना मानस्य पुत्रातिभरप्रमाणस्य सारतया निविडतया अविवेकेनैव छुरितं मानसं यस्याः सा । अत एव तम् पुत्रं विहाय बहिः स्थापयित्वापि नैव चिन्तयित्वा हा खेदे यापितं गमितं तं घोरं समयम् अविदती अजानती । किंच अङ्गना यदा गृहं प्रविष्टवती तदैव पुत्रमपि सह स्वेनैव आनीतं विदती भ्रमादेव जानती ननु कथं तादृशीनामेवं भ्रमस्तत्राह मितिः प्रमाणं तया हीनः प्रभावो यस्य तं तदिच्छाप्रभावेणैव विभ्रमोपि जनित इति भावः ननु विकटबालतया बहिःस्थितस्यतस्याऽतिसुकुमारत्वेन परिभवः संभवेत् तत्र नहि नहीत्याह । प्रभावन्तमैश्वर्य्यविशेषेण देदीप्यमानम् ॥ २१ ॥

युगपदेककालमेव विप्रयुक्तानां विरहिणीनां नागनागरीणां समूहस्य निश्वास इति अति कटुत्वेन भूभस्त्राया इति अतिविततत्वेन स्पन्दः क्षरणं विदीर्य्य उपरितोऽधःपतनमिति यावत् इत्यतिभयानकत्वेन ॥ २२ ॥

वातात्मकोऽपि पित्तकफव्याधिरिव रजस्तमोबहुलः[*] ॥ २३ ॥ खल इव बहिःशर्करावर्षी अन्तर्दुरधिगमः । मद इव अन्धङ्करणः । पितज्वर इव महावेगः । संग्राम इव प्रसरत्करेणुसङ्घातकृतान्धकारः ॥ २४ ॥ पञ्चभूतात्मकतामपनीय एकभूतात्मकं कुर्वन्निव त्रिभुवनं कंसमहितस्तृणावर्ताख्यः ।

उर्द्ध्वोर्द्ध्वं वर्त्तनृत्यत्प्रचुरतृणरजःशर्करापूरदूर-
भ्रंशैरभ्रंलिहाग्नौ ग्लपितजनततुः कोऽपि वात्याविवर्त्तः ।
कल्पान्तप्रज्वलिष्यत्फणिपतिवदनव्यूहवह्नेरुदीर्णैः ॥
क्षौणीं निर्भिद्य धूमैरिव भुवनजनानन्धयन्नाविरासीत् ॥ २५ ॥
अयमेति महानिलोऽसुरः स्वयमेव स्वविनाशकारणम् ।
उररीकुरुतामिति प्रभुर्गरिमाणं न तथा ततान सः ॥ २६ ॥

एवमन्धतमसान्धतमसारूप्यं गतेषु सकलेषु परितस्तृणरजःशर्करावर्षे च महति हतिकारके सति भवनमध्यमध्यवस्थाय चिन्तयत्सु पुरजनेषु च मात्रा यथैवोपवेशितं तथैवाकुतोभयस्य कुतोभयस्य कथाऽपीति निरातङ्कं तं कञ्जनयन नयनन्दितभुवनजनं भुवनजनन्दिकरचरणतलं रणतलं गतानां गतानाञ्छानां सुरद्रुहामन्तकमन्तकरणाय स्वस्य स महासुरो हरति स्म ॥ २७ ॥

*वातधातोः सात्विकत्वेनायुर्वेदशास्त्रे उक्तत्वात् विरोधः । पित्तकफयोस्तु राजसत्वतामसत्वाभ्याम् पक्षे रजोधूलिः तमोऽन्धकारः ॥२३॥

शर्करा सिता कर्परा च । प्रसरद्भिः करेणूनां हस्तिनीनां संघातैः कृतोऽन्धकारो यत्र पक्षे प्रसरन्ति कानि सुखानि येभ्यस्तथाभूतैरेणुसंघातैरिति ॥ २४ ॥

एकभूतात्मकं पवनमयम् । कीदृशः ऊर्द्ध्वोर्द्ध्वम् उपर्युपरि आवर्त्तो भ्रमिस्तत्र नृत्यतामिव तृणरजःशर्करापूराणां दूरतो भ्रंशैर्ग्लपिता जनानां तनवो येन सः । कल्पान्ते प्रकर्षेण ज्वलिष्यन् यः फणिपतेरनन्तस्य वदनव्यूहतो वह्निस्तस्य धूमैरिव क्षोणीं निर्भिद्य उपरिगतभुवनस्थजनान् अन्धयन् अन्धीकुर्वन् ॥२५॥

नतथेति पूर्वं यथा मातुरङ्के तथा न किंतु तद्बलानुरूपं तु ततानैवेत्यर्थः । अन्यथा अतिलाघवेन सद्य एव अत्युच्चदेशोन्नयने स्वस्य श्रमः संभवेदिति ॥२६॥

अन्धतमसेन गाढध्वान्तेन हेतुना अन्धतमैरतिशयान्धैः सारूप्यं तुल्यरूपतां गतेषु परितः सर्वतः हतिकारके घातके सति तं कञ्जनयनं कमलनेत्रं स्वस्य अन्तकरणाय मारणाय महासुरो हृतवान् नयेन नीत्या तादृशदानववधनिबन्धन तादृशचातुर्य्यमय्या नन्दिता भुवनजनाः देवादयो येन तम् । भुवनं जलं तत्र जातं कमलं तद्वत् नन्दि शैत्यसौरभ्यसौकुमार्य्यादिसमृद्धियुक्तं करचरणतलं यस्य तम् गोप्यसिदुरात्मत्वेन तस्य निर्दयत्वमुक्तम् । किंच सुरद्रुहामसुराणामन्तकं कीदृशानां रणतलं गतानाम् आङ्घि आयामे आञ्छ आयामः न आञ्छोऽनाञ्छः गतोऽनाञ्छो येषां दैर्घ्यमायामनतामित्यर्थः ॥ २७ ॥

---

* वातदोषस्य * आत्मसुभगस्थूलपतितानामनान्धेतिव्युत्पन्तम्

सच बालब्रह्म ब्रह्मरुद्रादिसेवितो वितादः प्रकटामोदो मोदोद्धुरः पटे निबध्य नीयमानोऽनल इव कण्ठशोधनार्थं कण्ठे कृतः कालकूट इव स्वयं निमन्त्र्यानीयमानो मृत्युरिव तेनाह्रियमाणः ॥ २८ ॥

सुरपुरपुरन्ध्रीकृतदर्शनार्त्तिपूर्त्तय इव तत्स्वरूपया निःश्रेणिकया नाकतलमुज्जिगमिषुरिव कियद्दूरमुद्यातः । प्रियसुहृदमिव तं मृगमदमेचकितविसवल्लीवल्लीलेन स्तोकेनैव भुजवलयेनाऽधिकण्ठतटं तथा शनैः शनैर्निपीडयामास यथाऽस्य निर्गच्छन्तोप्यऽसवो विलम्ब्य विलम्ब्य सपदि चूर्णपेषं पिष्टा इव निर्जग्मुः अहो कौशलं कुशलिनः खेलाशिशोस्तस्य भगवतः ॥ २९ ॥

अथ विगतासौ गतासौभगे भगवदङ्गसङ्गादङ्गसङ्गानसमुचिते प्रागावेगवेगतो गतोत्कर्षेऽपि पांशुशर्करावर्षिणि पवमाने पवमाने स्वकुलं तस्मिन्नपि निपतति तत्कण्ठावलम्बितनीलमणिहार इव अलब्धभूतलस्पर्श एव तेन सह भुवस्तलं यावदालम्बते तावदेव शाम्यति वात्यावर्त्ते पूर्वमेव तनयानवलोकशोकशुष्यमाणमना मनागप्यवस्थातुमसमर्था समर्थामेव मूर्च्छामवलम्ब्यावलम्ब्याहतधीरधीरतया व्रजेशवनिता नितान्तमवनितले निपपात ॥ ३०

व्रजपुरपुरन्ध्रीभिरभिरभ्यमाणा जीवनानुमापकश्वासाश्वासामान्द्येन बोधयन्तीभिर्धयन्तीभिरिव तच्छोकानलकीलाः कीलालेन मुखमासिञ्चन्तीभिः किमपि समूचे ॥ ३१ ॥

---

वितादः गतव्यथः प्रकटः ब्रह्मरुद्रादिलोकपर्य्यन्तं वात्यया संचार्य्यमाण आमोदोऽङ्गसौरभ्यं यस्य सः मोदेन तद्वधोत्साहमयहर्षेणउद्धुरः । तेन तृणावर्त्तेन पटे निबध्येति तेनाकर्षणं कृष्णस्य । कण्ठेति कृष्णेनाकर्षणं वात्याद्वीत्येव तत्कण्ठस्य स्वयमिति । ततश्च तस्य मृत्युरेवेत्युक्तम् । अनलस्य जलादिना प्रतीकारोऽस्तीति कालकूट इति तस्यापि मन्त्रादिनेतिचेत्मृत्युरिति २८

सुरपुरस्य पुरन्ध्रीभिः कृता या दर्शने आर्त्तिरुत्कण्ठा तस्याः पूर्त्तये वात्याकारया निःश्रेणिकया सिढी इतिख्यातया मृगमदेन मेचकितायाः श्यामलीकृतायाः विसवल्ल्या मृणाललताया इव लीला यस्य तेन शनैः शनैरिति एकदैवातिपीडने सहसैव तत्प्राणत्यागे सति दूरतो वेगत एव तद्वपुषः पतने स्वश्रमः आपद्येतेति भावः । चूर्णपेषमिति शुष्कचूर्णरुक्षेषु पिष (३।४।३) इति णमुल् । चूर्णवत् पिष्टात्यर्थः । विलम्ब्य विलम्ब्य निर्जग्मुरिति तेन शनैः शनैस्तद्वपुषो निपतने सति निःश्रेणिकयेवावतरणमपि भगवतः सुखेनैवाभूदिति भावः ॥ २९ ॥

विगता असवो यस्य तस्मिन् तथापि गतम् असौभगं यस्य तस्मिन् । कुतः भगवतोऽङ्गस्य सङ्गात् अङ्गे तस्मिन्नाकारेऽपि सङ्गानमुत्कर्षस्तस्य समुचिते पवमाने वायौ स्वकुलं पवमाने पवित्रीकुर्वति तस्मिन्नसुरे निपतति सति अलब्धभूतलस्पर्श इति व्यथाभावो व्यञ्जितः ।३०।

अभिरभ्यमाणा आलिङ्गनाकारेण ध्रियमाणा । आश्वासस्य अमान्द्येन आधिक्येनेत्यर्थः । धयन्तीभिरनुभवन्तीभिरितियावत् कीलाः ज्वालाः कीलालेन जलेन आसिञ्चन्तीभिः सर्वतः क्षालयन्तीभिः अपस्मारामूर्च्छया मुखस्य लालाक्लिन्नत्वात् ॥ ३१ ॥

सुकृतिनि ? हे कृतिनि? परमपरभागधेयेन भागधेयेन येन तादृशो दृशोरतिरसदो-रसदोहवितत नयस्तनयः समासादि ॥ ३२ ॥

तेनैव स्वस्ति स्वस्तिमानसौ मानसौभाग्योदयो वां दम्पत्योः पत्योर्व्रजपुरस्य रस्य एव ॥ ३३ ॥

तदलमलं मोहेन मोहेन क्लेशयमानसं मा न संतापी हि मानसज्वरः स खलु कुशली संप्रति संप्रतिपत्स्यतेऽकस्मादेव कस्मादेवमुत्ताम्यसीति तासां चिराश्वासगिरा लब्धजागरेव सा यच्चेतनामापद्यतेस्म सैव तस्याः शोकोद्गारिणी समजनिष्ट ॥ ३४ ॥

तद्यथा ॥ इत एवं मयोपवेशितो वत्स ! वोढुं ह्यसमर्थयो भरम् ॥
मम दुर्नियतिस्वरूपयो तर्नयो ह्यधिगेऽहोरि वात्सयो ।
क्व शिशोर्वत तादृशो भरैः सहते यं वत ! न मसूरपि ।
अत एव तथाऽनुमीयते मम दुर्दैवविजृम्भितं हि तत् ॥ ३५ ॥
नवनीतमिवातिकोमलो व्यथते यो वत मातुरङ्कतः ।
स कथं खरपांशुशर्करातृणवर्षं सहते स मे सुतः ॥ ३६ ॥
स यथैव निशाचरीविपस्तनपानाच्छकटस्य पाततः ।
अवितः किल येन वेधसा स इदानीमपि तं सदाऽवतु ॥ ३७ ॥
अधुना परमेश्वरेण चेदवितोऽसौ यदि लभ्यते सुतः ।
न कदापि तदाऽङ्कमध्यतो वत भूमौ विजहामि हा ! पुनः ॥३८॥
त्वरितं परितोऽवलोक्यतां क नु नीतः क नु पातितोऽर्भकः ।
मम यावदुपैति जीवनं न वहिस्तावदमुं समानय इति भूयो मूर्च्छति ॥ ३९ ॥

हे पुण्यवति हे कृतिनि पण्डिते येन भागधेयेन भाग्येन । कीदृशेन परमः परभाग उत्कर्षो धेयो धार्यो यस्य तेन अतिरसदोऽतिसुखदः । रसस्यानुरागस्य दोहेन पूर्णेन विततो विस्तृतो नयो येन सः ॥ ३२ ॥

तेनैव भागधेयेन हेतुना स्वस्तिमान् कुशली असौ तनयः स्वस्ति सुखेन अस्ति कीदृशः वां युवयोर्व्रजपुरस्य स्वामिनोर्मानसौभाग्ययोरुदयरूपः रस्य इति तथात्वेनैव सर्वैरनुमननीय इत्यर्थः ॥ ३३ ॥

मा ऊहेन अपायतर्केण मानसं क्लेशय मानसज्वरो हि मा न संतापी अपितु सन्तापक एव मा इति निषेधे ॥ ३४ ॥

तत्शोकोद्गारणं यथा दुर्नियतिर्दुरदृष्टं संभवेदित्यर्थः ॥ ३५ ॥

व्यथते व्यथां प्राप्नोति ॥ ३६ ॥ स सुतो येन पूर्वम् अवितो रक्षितः ॥ ३७ ॥

परमेश्वरेण अस्मदिष्टदेवेन ॥३८॥ क नीतः चाल्यतेत्यर्थः ॥ ३९ ॥

ततश्च भूयस्ताभिः कृताश्वासा श्वासापितमपि जीवितं जहती ह तीव्रतरधीवैधुर्य्या धुर्य्या मलिनवदनारविन्दा रविं दारुणमिव दहन्तं शोकमावहन्तीव यदा जनमनांसि ॥ ४० ॥

तदैव पुरतोरणस्य पुरतो रणस्य प्रथमारम्भ इवा ऽरं भ इवाऽतिसमीचीने निर्जितविपक्षोऽपक्षोदभूतस्य भूतस्य रिपोरुरसि रसिको महाकण्टकगहने विकचमेकमपराजिताकुसुममिव ॥ ४१ ॥

तृणस्तम्वान्धजीर्णसरसि समुद्दण्डमेकमसितोत्पलमिव घनतरतिमिरपटलोपरिदीपाङ्कुर इव महामोहोपरि परमज्ञानामृतमिव मरुभुवि सरतरु कडण्व इव परमदुःखवृक्षशिखरेसान्द्रानन्दकुसुममिव सवालकृष्णो रोचते स्म ॥ ४२ ॥

तमकुतोभयमर्भकमाकलय्य क्रमसमुपचीयमाने मानेन हीने जननिचये केचन-अयमेव पामरोऽमरोदयद्वेषी वात्याकृत्याकृत्यान्तरायभूतो भूतो दमिव कुर्वन् व्रजराजकुमारमपहर्त्तुं कृतोद्यमोऽद्यमोहितःस्वयेव किल्बिपविपज्वालयाऽऽलयान्तमपि गन्तुमशक्तोनभस्त एव निपपातेति ॥ ४३ ॥

केऽपि च । अये अयमेवमहाप्रभावप्रभावाद्विष्णुःरीशिता शितास्त्रममोघांमेव सदा नवोऽपि दानवोत्तमानां प्रावल्यमवधाय वधाय तेपामवनतारेव तेनारम्भ एव

श्वासेन पूर्वमूर्च्छाभङ्गानन्तरं निश्वासेन आपितं प्रापितमपि जीवितं जहती त्यजन्ती ह स्फुटं धुर्य्या श्रेष्ठा दारुणं रविमिव दहन्तम् ॥ ४० ॥

तदैव पुरतोरणस्य पुरबहिर्द्वारस्य पुरतोऽग्रतः रिपोरुरसि स बालकृष्णो रोचते स्म इत्यन्वयः । कीदृशः रणस्य युद्धस्य प्रथमारम्भ इव अरं शीघ्रं भे नक्षत्रे अतिसमीचीने स्वभावेन स्वराशिगणनगत्या च शीघ्रविजयप्रद इव निर्जितो विपक्षो येन सः । रिपोः कीदृशस्य अपक्षोदभूतस्य चूर्णीभूतस्य अतिशयेन नष्टस्येत्यर्थः भूतस्य भुवि पृथिव्याम् उतस्य स्यूतस्येवेत्यर्थः । विकचं विकसितम् । तत्रस्थं समुत्प्रेक्षते महाकण्टकेति ॥ ४१ ॥

स्थाकृष्टविकटतृणस्तम्बशर्करापुञ्जभरितत्वेन तृणास्तम्वान्धेति । बहिस्तृणाद्याच्छन्नत्वेन तदाकारस्य दुर्लक्षतया घनतिमिरेति तत्साहजिकवर्णत्वेन दीपाङ्कुर इवेत्यनेन पूर्वोक्तापराजिता कुसुमत्वनीलोत्पलत्वाभ्यं तस्य प्राप्तं तत्सङ्गजनितकिञ्चित्कृष्णत्वं वारितम् । ज्ञानामृतमित्यनेन तत्साहित्येऽपि तेन स्पृष्टुमशक्यत्वंध्वनितम् । तन्मोक्षदायकत्वंच । मरुभुवीति अतिकठोरत्वेन सुरतर्वीति अतिविस्मयास्पदत्वेन तदुत्प्रेक्षा परमदुःखेति सान्द्रानन्देत्याभ्यां तत्र गतजनानाम् असुरशरीरं श्रीकृष्णं च युगपत् पश्यतां निःसीम दुखं च युगपदेव जातमिति व्यञ्जितम् ४२

क्रमेण समुपचीयमान इति प्रथमं दश ततो विंशतिस्तत्रस्त्रिंशदिति क्रमेण संख्यावृद्ध्येत्यर्थः । अतः क्षणमात्रेणैव मानेन परिमाणेन हीने सति जनसमूहे अमराणां देवानाम् उदयद्वेषी भुवः पृथिव्यास्तोदं व्यथामिव कुर्वन् आलयान्तं गृहसमीपम् ॥४३॥

केऽपीति महादुर्जयस्याऽसुरस्य पतने स्वयैवेत्याद्युक्तं युक्त्याभासमकिंचित्करं मन्यमानाः स्वबुद्धिप्रतिभतेनानुमानेनैव वास्तवार्थस्फूर्तिमन्त इत्यर्थः अयं बालकः ईशिता ईश्वरः असुरयथार्थम्

परिपूतनामा पूतना मारकोऽयमनो भञ्जको मनोऽभञ्जको जनानामधुनाधुनानमिव भुवनमिमं च घातयामासेति ॥ ४४ ॥

केचिदपि । अये व्रजपुरपुरन्दरस्यैव पूर्वं पूर्वजनिजनिततपस्सु कृतं सुकृतं यत् पुञ्जितं जितं तेनैव तदृते यदिदमस्य दमस्य सकलापदां पदान्तरं नाकलयामः॥४५॥

इति गदन्तोऽगदं तोकं तमादाय दायलब्धं महाधनमिव निःसंकोचतयाङ्के कुर्वन्तो निजजनानामन्तः पुरमन्तःपुरं प्रापयामासुः ॥ ४६ ॥

हर्षकलकलेनाऽनुमाय कुशलितां तदनु दनुजदमनस्य मनस्यऽतीवपीवरेण वरेण हर्षतरङ्गेण रङ्गेण विकसद्वदनाभिर्व्रजपुरपुरन्ध्रीभिर्निजगदे ॥ ४७ ॥

जगदेकपूज्ये! भाग्यवति! भवति! भवद्भाग्येन समुपसन्नो[illegible]ऽयं भवत्तनय इति हर्षकथासादितरसा तरसा पूर्णजलदावलीजलदावलीढवनभूमिरिव जीविताङ्कुररुचिररुचिरामणीयकस्निग्धा क स क स इत्युत्कलिकोत्कलिकोदयवश्याऽवश्यायलिप्तकमलाकृतिनयनाकृति-नय-नामानुरूपगुणा सद्य एव भवन्ती तनयावलोकनार्थमुद्गता मुद्गताधिक्येनात्मानमपि न सस्मार यशोदा ॥ ४८ ॥

ततस्तु ततस्तुतिपराभिरपराभिरयमयमिति मृतसंजीवनौषधमिव स तदुत्सङ्गे संगेयमहिमा न्यधायि ॥ ४९ ॥

---

गोयं तादृशाश्चर्यमिव ईश्वरत्वेन निश्चयाभावात् । अवततार इवेति सदा एव नः सनातनाऽपि नित्यनूतनप्रतीतिको ननु वस्तुत इदानींतन एवेत्यर्थः । अनसः शकटस्य भञ्जकः मनसश्चेतसो न भञ्जकः न दूषकः सर्वसुखदायित्वात् ॥ ४४ ॥

केचिदपीति । यदुक्तमतिसाहसं मत्वा दृढेन युक्त्यन्तरेणैव समादधाना इत्यर्थः । सर्व एव एते तत्प्रेममाधुरीविवर्त्तवर्त्तिन इव यथोत्तरश्रेष्ठा ज्ञेयाः । तपस्सु मध्ये पुञ्जितं यत्सुकृतं पुण्यं कृतं तेनैव जितम् उत्कर्षेण वर्त्तितम् । तदृते तद्विना अस्य सकलापदां पूतनादिप्रयुक्तानां दमस्य दमनस्य नाशस्येति यावत् पदान्तरं लक्षणान्तरम् ॥ ४५ ॥

अगदं निरामयं तोकं बालकम् । कीदृशं निजजनानाम् अन्तः अन्तःकरणं पिपर्ति पूरयतीति क्विप् तुग् ॥ ४६ ॥

मनसि अतीव पीवरेण पुष्टेन जगदे यशोदेत्यर्थात् अधिकमधिकं पुष्टीभवता वरेण श्रेष्ठेन ४७

हे भवति असन्नः अविसन्नः । तरसा वेगेन पूर्णजलदावलीनां जलेन दावलीढावनभूमिरिव जीवितेन अङ्कुरेण तृणादिसम्बन्धिना । पक्षे जीवितस्य जीवनस्य अङ्कुरेण रुचिरा उत्कलिकाया उत्कण्ठाया या उत्कलिका उद्गतः कोरकः तस्या उदयेन हेतुना वश्या मूर्च्छात्यापनादिना वशीकर्तुं शक्या अवश्यायेन नीहारेण लिप्तयोः कमलयोरिव आकृतिर्ययोस्तथाभूते नयने यस्याः सा। अत्र नयनप्राप्तिहर्षोत्थत्वादश्रूणां शैत्यान्नीहारेणोपमा। इति मुद्गतम् आनन्दनिष्ठम् यत् आधिक्यं तेन ॥ ४८ ॥

ततस्तुतिपराभिर्विस्तृतस्तवकर्त्रीभिः । स श्रीकृष्णः ॥ ४९ ॥

---

१ भवत्या भाग्येनभवद्भाग्येन । वृत्तिमात्रे सर्वनाम्नःपुम्वद्भावइतिदीक्षितवृत्तिः

सा च नष्टलब्धधनमिवाङ्कमारोप्य सस्पृहमीक्षमाणा ऽक्षमाणामानन्दानुभववहनस्य करणानां करणाऽनान्ध्य इव जाते क्षणं स्तिमितमनाः सती तनयमुवाच ९०

जात! जातमात्र एव मात्रएवमतिखेदमुपनयसि नयसिद्धिरियं न भवतः। अथवा किं ते दूषणं बहिरवस्थाप्य भवन्तं गृहागतां दारुदारुणां नाम्नैव मातरं मां प्रति मातृनाम्ना ऽनाम्नातपारुष्यो रुष्योद्रेकं न गतो गतोऽपि यत् पुनरागा निरागा नितरामतो भवान्मातृवत्सलो वत्स! लोकातीतोऽसि ममैवाग इति चिरं लालयन्ती स्नेहस्नुतं स्तनरसं नरसंकाशं तमथ मूर्त्तमानन्दं सानन्दं सा पाययामास* ॥ ९१ ॥

इत्यानन्दवृन्दावने बाल्यलीलालताविस्तारे शकटतृणावर्त्तविवर्त्तो नाम चतुर्थः स्तवकः ४ ॥

सा यशोदा करणानाम् इन्द्रियाणां करणेषु स्वस्वव्यापारेषु अनान्ध्येचक्षुष्मत्त्वे जाते सति पूर्वं मूर्च्छया तेषामान्ध्यमासीदित्यर्थः। करणानां कीदृशानाम् आनन्दानुभवानां वहनस्य धारणस्य अक्षमाणाम् असमर्थानाम् ॥ ९० ॥

हेजात! हेपुत्र! जातमात्र एव मात्रे जनन्यै मह्यम् एवम् अतिखेदम् उपनयसि ददासि इयं भवतो नीतिसिद्धिर्नभवति मातृनाम्ना मातृत्वस्य नाममात्रत्वेन हेतुनाऽपि न आम्नातं न अभ्यस्तं पारुष्यं कठोरत्वं येन सः। यतो रुष्योद्रेकं क्रोधोद्रेकं न गतः। भावे कृत्यप्रत्ययः। यत् पुनरागाः आगतोऽसि अतो निरागाः निरपराधः स्वयमाक्रम्य संस्थाप्य मन्मनश्चक्रमारुतम्। गोकुलं गोकुलानन्द तेनाऽन्धीकृतमुद्धर ॥९१॥

इत्यानन्दवृन्दावनटीकायां सुखवर्त्तिन्यां चतुर्थः स्तवकः ॥ ४ ॥

१ स्वापयामासेतिश्रीरामनारायणप्रकाशितवङ्गाक्षरेपुस्तकपाठेः स्तनरसमितिअनन्वितत्वादसङ्गतःभवति

## ॥ पञ्चमः स्तबकः ॥

अथ कस्मिन्नपि दिवसे तनयं लालयन्ती व्रजपुरपरमेशानामेकविश्रामभूतस्य तस्य जृम्भमाणस्य वदनकमलं कमलं कुर्वदिव निरीक्षमाणा तत्रैव धरणि धरणिधरजलधिपुरतरुप्रभृतिभुवनकोषप्रभृतिभुवनकोषगृह इवाऽऽत्मानमात्मनः पतिं चाऽवलोक्य चरितातीततत्वेन परमविस्मितैवासीत् ॥ १ ॥

तथैवापरेद्युरपि तनयमङ्कमारोप्य लालयन्ती तन्मुखकमलकोषमालोकयन्ती च व्रजपुरपरमेश्वरी किमपि सकौतुकमाजगाद ॥२॥

जृम्भस्व तात ! वदनं परिलोकयामि दन्ताङ्कुरास्तव किमुन्मिषिता नवेति ।
व्यादत्त एवं वदनेऽस्य ददर्श माता लग्नान्निजस्तनरसस्य कणानि वै तान् ॥३॥

जृम्भणं रिङ्गणं नामकरणं गव्यमोषणम् । मृद्भक्षणं विश्वरूपदर्शनं पञ्चमे क्रमात् ॥

व्रजपुरपरमेशाना श्रीयशोदा तनयं लालयन्ती जृम्भमाणस्य तस्य वदनकमलं निरीक्षमाणा धरण्यादिकं विलोक्य परमविस्मितैवासीत् । तत्र जृम्भणकालस्यात्यल्पप्रमाणत्वात् तन्मध्य एव धरण्यादिसमस्तपदार्थप्रत्येकावलोकनमसंभवदपि दुस्तर्कभगवदैश्वर्य्यशक्त्या एव तदानीं तन्नयनवृत्तिमाविशन्त्या निर्वाहितमित्यवसेयम् ।आशानां मनोरथानां वदनकमलं मुखपद्मं कं सुखम् अलम् अतिशयेन कुर्वदिव निर्मिमाणमिव कं सुखमपि भूपयदिवेति वा । तत्रैव सजृम्भमुखकमल एव धरण्यादिप्रभृतिवस्तुजातमित्यर्थः । तत्र कीदृशे भुवनकोषं प्रकर्षेण बिभर्त्तीति क्विप् तस्मिन् । भुवनकोषगृह इवेत्यत्र भुवनकोषपदस्य उदेति सविता ताम्रस्ताम्र एवास्तमेतीत्यादिवदुद्देश्यप्रतिनिर्देश्यत्वेन पौनरुक्त्यमदोषः । लोके भवं लौक्यं चरितं तदतिक्रान्ततत्वेन । अत्र कारिकाः । पूतनादिवधैश्वर्य्यं न प्रेमसमचूक्षुभत् । प्रत्युतावर्द्धयत्तस्मिन्नरिष्टपरिशङ्कया ।१। नन्दभाग्यादिहेतूनां तत्राभूयदिकल्पनम् । ततो निर्हेतुकैवैषैश्वर्यशक्तिरागता ।२। विभुत्वदर्शिका कृष्णदेहे प्रकटमेवहि । तथापि विस्मितैवासीन्मत्पुत्रस्येदमद्य किम् । ३ । नत्वैश्वर्यज्ञानसंभ्रान्त्या वात्सल्ये शीतलाऽभवत् । नवाऽत्रसंभवेत् किंचित् पूर्ववत् हेतुकल्पनम् ।४। नचापि वस्तुतोगाढप्रेमोर्मिमयमेवहि । इति निष्कम्पता प्रेम्णः ख्यापिताऽस्या मुहुर्मुहुः ॥ ५ ॥ एवं च । प्रेमदेव्यापरीवार्थमागच्छन्त्यन्तरान्तरा । शक्तिरेषाहरः किंतु तया दासीकृता भवेदिति ॥ ६ ॥ १ ॥

अपरेद्युः अपरस्मिन्दिने ॥ २ ॥

व्यादत्ते प्रकाशिते सति एतान् दन्ताङ्कुरान् ॥ ३ ॥

---

१ किमितीत्यपिक्वचित् २ शिथिलेति पुस्तकान्तरस्थः पाठः ।

३ व्यादत्तइतिप्रकृष्टोभावःप्रभावइतिवत्उपिरेणेण (समीपंस्थित्वा) आसमन्ताच( धृष्टयालेने यत्तंयमपिमुखंविवृत्यच )दत्ते( मातृचक्षुर्विषयीकृते )इतिकथमपिसमाधेयम्अन्यथाप्रभवइव ( भिर्माभुवोऽनुपसर्गे )अत्रापि अच उपसर्गाच्च इतिव्यात्त इत्येव स्यात्

अथैवं बालनिशाकर इवाऽऽशाकर इवाऽहरहःपुष्टिदेव्यासेव्यमानोऽव्यमानोऽपि-पितृभ्याऽमकालकृतविशेषोऽपि तत्कालकृतविशेष इव जानुकरचङ्क्रमणचातुरीमुरीचकार ॥ ४ ॥

मन्दं सुकोमलकराम्बुजजानुयायी—काञ्चीकलेन चकितः स्थगितत्वमेत्य ।
पश्चात्सविस्मयविवर्तितकम्बुकण्ठमालोकयन् वितनुते जननीप्रमोदम् ॥ ५ ॥

किंच । कराभ्यां जानुभ्यां लघुलघुचलन् रत्नघटित-
प्रघाणे तत्प्रान्तावरणमणिदण्डेषु वसताम् ।
प्रतिच्छायां वीनामऽरुणमृदुलैरङ्गुलिदलैः
कृतारम्भो धर्तुं व्रजपुरपुरन्ध्रीः सुखयति ॥ ६ ॥

कदाचिदपि चिदापिहितेव स बालमूर्तिरमूर्तिरातिरमणीयः पूर्णज्ञान घनो ज्ञानमवधारयितुं कौतुकेन ॥ ७

क्व वक्त्रं क्व श्रोत्रं क्व तव दृगिति स्निग्धमुदितैः
पुरन्ध्रीभिस्तान्यङ्गुलिकिसलयेनाऽधिगमयन्।
क्व दन्ता इत्युक्तैः करकमलमाधाय वदने
स्मितेनैवैतत्पन्नौ मम न तमितिव्यक्तमवदत् ॥ ८ ॥

आशासु दिक्षु कराः किरणा यस्य सः। पक्षे आशासम्पादकः। पुष्टिरेव देवी तया अहरहः प्रतिदिनं सेव्यमान इवेत्यन्वयः। इवेन सह नित्यसमासवचनमित्यस्य उद्वाहुरिव वामन इत्यादिदृष्ट्या प्रायिकत्वात् पितृभ्याम् अव्यमानोऽपि निजाङ्कवक्षःकण्ठादौ रक्ष्यमाणोऽपि जानुभ्याम् कराभ्यांच चङ्क्रमणस्य चातुरीम् अलिन्दादौ अङ्गीचकार। न कालेन कृतो विशेषो परिणामो यस्येत्यप्राकृतत्वात्तथापि तत्कालकृतेति नरलीलत्वादित्युभयत्वस्यैव वास्तवत्वं तस्याचिन्त्यशक्तिसिद्धमिति सार्वत्रिक एव सिद्धान्तः ॥ ४ ॥

तन्माधुर्य्यं वर्णयति मन्दमित्यादिभिः ॥ ५ ॥

रत्नघटिते प्रघाणे अलिन्दे वीनां कपोतादिपक्षिणां प्रतिच्छायां प्रतिबिम्बम् अङ्गुलिदलैर्दक्षिणकरसवन्धिभिः वामकरस्य भूम्यऽवष्टम्भत्वादित्यर्थः। वीनां कीदृशानां तस्य प्रघाणस्य प्रान्तावरणे उपरितने ये मणिदण्डाभित्तिपटलयोस्तिर्य्यगवष्टम्भास्तेषु वसताम् ॥ ६ ॥

अपिहिता चिदिव आवृतं चैतन्यमिव जीवधर्मानुकरणात्। अमूर्तिः अतिसुकुमार इत्यर्थः। मूर्तिः काठिन्यकाययोरित्यमरः। पुरन्ध्रीभिः कृष्णस्य ज्ञानमवधारयितुमुदितैः ॥ ७ ॥

तानि वक्त्रादीन्यङ्गानि प्रत्येकप्रश्नानन्तरम् अङ्गुलिकिसलयेन स्पृष्ट्वा अधिगमयन् ज्ञापयन् ॥ ८ ॥

---

१ सपुरन्ध्रीभिरुदितइत्युत्तरेणान्वयः

किंच । कौ ते प्रसूजनयिता तव कोऽत्र देति पृष्टः कयाचिदनतिस्मितपेशलास्यः
तौ तं च कोमलकराम्बुजपल्लवेन संदर्शयन् प्रणयिनौ मुदमाततान ॥९॥

अथ तदैव वक्तुं क्षमो नवेति नवेऽतिकौतुके वात्सल्यरससधात्र्या धात्र्याच ॥१०॥

नाम्नो नयोः किमपि तात ! वदेतिपृष्टो मन्दस्फुटाक्षरमलक्ष्यवचाः संचारु ।
मातेति तात इति नामयुगादिवर्णौ मातेति मात्रमतिमात्रमलं जगाद ॥११॥

कदाचिदपि—जानुभ्यां करयुग्मकेन च चलन् रत्नप्रघाणोदरे
स्वच्छायामवलोक्य चारुचकितस्तां पाणिना लुम्पति ।
भूयस्तामपि तादृशीं प्रति भिया संकोचमेवाचरन्
मातुः क्रोडतलं निवृत्य चलनात्सा शङ्कमारोहति ॥ १२ ॥

अथ कियता कालेन मणिमयभित्तिमवष्टभ्य मनागुत्थित एव प्रथमपादविहार एव निपतन्तमिवाऽऽत्मानं मन्यमानो निजप्रतिविम्बमेव करालम्बनाय करकमलदलेनैकेन दधानो निरवलम्बन एव यदा स्खलति तदा विम्लानवदनो मातृवदनमीक्षमाणः क्षणं रुदन्नेव मात्रा च करकमलदलाभ्यामाभिमृश्य स्वाङ्गुलिदलं ग्राहयित्वा लघुलघुसंचार्यमाणः पूर्वरोदनमलिनमाननचन्द्रं स्मितसुधया धावयन्मातृमोदमातनुते स्म ॥१३॥

तत इतस्ततस्ततश्चरणविहारोहारोल्लसितवक्षसोऽस्य यदा समघटत तदा तदालोकनकुतुकिनो व्रजराजस्य समक्षमेव जनन्या धात्री कौतुकेन तमुपदिशति स्म ॥ १४ ॥

वत्स ! स्थालीमानय पीठमानय घटीमप्यानयेति क्रमाद्यस्यैवानयनक्षमो भवति तत् स्मिरवैव किंचित्तराम् । पाणिभ्यामवगृह्य चारुजठरे संयोजयन मन्थरं विश्रम्याऽऽनयते न यत्र पटुता स्पृष्ट्वैव तन्मुञ्चति ॥ १५ ॥

---

कयाचिदित्युपनन्दपत्न्येति ज्ञेयम् । अनतिस्मितेनपेशलं सुन्दरम् आस्यं यस्य सः।तां प्रसूं यशोदां तं जनयितारं नन्दञ्च प्रत्येकप्रश्नानन्तरमिति सर्वत्र ज्ञेयम् ॥ ९ ॥

नवे नवीनेऽतिकौतुके ॥ १० ॥

माता इति वक्तव्ये मा इति तात इति वक्तव्ये ता इतिमात्रं जगाद तत्रापि अतिमात्रं यथास्यात्तथा मात्रा संस्कृतादिनियमः तमतिक्रम्येत्यर्थः । तेन तात इत्यत्रादिवर्णे ता इति वक्तव्ये अपभ्रंशभाषया वा इति जगादेत्यर्थः । प्रश्नस्याऽप्यपभ्रंशरूपत्वात् ॥ ११ ॥

तां स्वच्छायां तादृशीम् अलुप्ताकारां तां प्रति अत एव भिया भीत्या संकुचिताकारः सन् चलनात् जानुचङ्क्रमणान्निवृत्य ॥ १२ ॥

धावयन् क्षालयन् ॥१३ ॥

ततस्तदनन्तरम् इतस्ततश्चरणविहारः कीदृशः । ततो विस्तृताः जनन्या यशोदाया धात्री श्रीमुखप नाम्नी ॥ १४ ॥

विश्रम्य मध्यवर्त्मनि क्षणं भूमौ स्थापयित्वा पुनरुत्थाप्य आनयत इत्यर्थः ॥ १५ ॥

तदा व्रजराजसमक्षमुपनन्दसनन्दपत्न्यौ तदवलोकनमनसौ लोकगमनसौभाग्यचणचरणं तमङ्कमारोप्य वत्स ! मुञ्च मुञ्च त्वमीश्वरपुत्र ईश्वरोऽसि किमनेन तेऽनुचितेन परिश्रमेणेति धात्रीं गञ्जयन्त्यौ तदुत्तारयतः ॥ १६ ॥

एवं कदाचिदपि—

भो वत्स ! कृष्ण ! नवनीतमिदं मदास्ये नृत्येति कौतुकवशेन कयाचिदुक्तः
नृत्यन् सुतालमभिनीतकरं सुपादविन्यासचारु जननीमुदमातनोति ॥

कदाचिदपि—

भो वत्स ! वक्षसि विराजति किं तवैतत् पाञ्चालिकेव कनकस्य सुचारुचिन्हम्
किं ते वधूरिति रसेन कयाचिदुक्तो धुन्वन् शिरो हसति हासयते च सर्वान् ॥ १७

कदाचिदपि—मात्रा संपरिधापितां सकुतुकं श्रद्धालुना चेतसा

पीतां चारुकटीतटीसमुचितां श्लक्ष्णातिसूक्ष्मां धटीम् ।
साऽनभ्यासवशादुपद्रवकरीत्याक्रन्ददीनाननैः
पाणिभ्यामपसारयन्नतितरां मातुर्मुदेऽवर्तत ॥ १८ ॥

कदाचिदपि—रहसि पुरपुरन्ध्रीमण्डले मण्डनेन
व्रजपतिदयितायाः कुर्वति प्रीतिभूषाम् ।
चपलमतिहठेनाऽऽकृष्य सर्वं तदस्या
मनियतपदमेव प्रापयामास भूषाम् ॥ १९ ॥

अथ भगवद्बाल्यलीलावलोकेन लोकेनवन्द्यदेवककन्यातोऽपि धन्यातोऽपि धर्ममयी सुकृतशतावरोहिणी रोहिणीयं कियत्कालं गर्भे धृतवती स खलु भगवदग्रजानितया जनितया सततवर्त्तमानसमानमहिमतया सुप्रसिद्धः सिद्धमुनिचारणादिवन्दितोऽद्वितीयोऽपिद्वितीयत्वेन भगवत्सहचरो यदा समजनि ॥ २० ॥

---

लोकानां भक्तजनानां नारदादीनां नमनेन यत्सौभाग्यं तेन प्रथितौ चरणौ यस्य तम् । तेन चित्तश्चुञ्चुप्चणपाविति चणप् । ईश्वरस्य राज्ञः पुत्रोऽसि ॥ १६ ॥

पाञ्चालिका पुत्तलीति ख्याता पञ्चालिका पुत्रिका स्यादित्यमरः । श्रीकृष्णेन उत्तरे न दत्ते सति पुनस्तयोक्तः ते तव किम् इयं वधूर्भार्या गौरवर्णत्वात् प्रियतमत्वेन वक्षसि कृतत्वाच्च युक्तं चैतत्सम्भवेदेव यल्लज्जयैव नाम नोच्चारयसीति भावः । धुन्वन् शिर इति शिरो धूननं सम्मतिद्योतकम् ॥ १७ ॥ साधटी ॥ १८ ॥

रहसि पुरुषाद्यगोचरे विविक्ते मण्डनेन बालपादयादिना प्रीतिभूषां प्रीतिमयीं भूषां कुर्वति सति तत्सर्वं बालपारवादिकम् आकृष्य अस्याः स्वमातरि यशोदायाम् अनियतपदम् अयथास्थानं यथास्यात्तथा भूषां प्रापयामास स्वहस्तेनैवेत्यर्थः ॥ १९ ॥

अथ श्रीबलदेवसाहित्येन तन्माधुर्य्यं वर्णयितुमुपक्रमते । अथेति लोकानाम् इनैः पतिभिर्ब्रह्मादिभिर्वन्द्या । इनः सूर्ये प्रभावित्यमरः । देवककन्या देवकी या ततोऽपि धन्या भगवतोऽग्रे जनिराविर्भावो यस्य तस्य भावस्तत्ता तया सततमेव वर्त्तमानः अतः सत्य एव मानमहिमा आदरगौरवं यस्य तस्य भावस्तत्ता तया जनितया प्रकटितया सुष्ठु प्रसिद्धः ॥ २० ॥

तदा स्फटिकमणिनेवमहामरकतः । चन्द्रमसेव जलदाङ्कुरः । पुण्डरीकेणेव नीलोत्पलं । हंसेनेव यमुनातरङ्गः । ज्योत्स्नाशकलेनेव तिमिरकदम्बो विडम्बितनरवाललीलः खेलालोलः स व्यरोचत ॥ २१ ॥

तत्रच—शुद्धस्फटिकनीलरत्नमहसौ खेलालसेनाऽलसौ—
रेजाते यदि जङ्गमाविव निधी तौ शङ्खनीलौ तदा ।
अन्योन्यद्युतिभिर्विभिन्नवपुषोरन्योन्यभेदाक्षमा—
रामे कृष्णमतिर्बभूव जननी कृष्णेचरामभ्रमा ॥ २२ ॥

किंच—दृष्टानामपि शृङ्गिणामभिमुखं निःशङ्कमाधावति
व्यालान् धित्सति पावकस्य च शिखामाऽऽक्रान्तुमाकाङ्क्षति ।
बाल्येनातिशयेन लब्धकुतुके भ्रातृद्वये निर्भये—
तन्मात्रोरनुतापभीतिकरुणाशङ्काङ्किताऽऽसीन्मतिः ॥ २३ ॥

अथ शुद्धसत्व वसुदेवेन वसुदेवेन महितः प्रहितः सर्वयदूनां दूनांहोरंहाः स्वतनयस्य नामकरणाय नामकरणायतपाटवः ॥ २४ ॥

यज्ञवितान इव मन्त्रात्मा कपिलावतार इव अधीततत्वग्रामः । स्वरसमूह इव

---

तदेति स्फटिकमणिमरकताभ्यां स्वच्छत्वमुक्तं तत्र प्राप्तस्फटिकमणेः स्ववर्णतिरोधानं द्वयोः काठिन्यं च धारयितुमन्यथोपमिमीते । चन्द्रेति द्वयोः स्निग्धत्वं । मिथः सौन्दर्य्यपोषश्च । पुण्डरीकेति सौरभ्यसौकुमार्य्ये । हंसेति सुखमयचेष्टावत्वं । ज्योत्स्नेति छविमात्रमयत्वं । कदम्बोऽङ्कुरः विडम्बिता तिरस्कृता नरबाललीला येन सः एवं चेष्टितं ते पुनः के वराका इति भावः २१

खेलानां रसेन अनुप्रासार्थं रलयोरैक्यस्मरणम् । अन्योन्यद्युतिभिरिति द्वयोराभिरूप्यनाम्नो गुणस्योद्गमः कदाचित्कोऽयं ज्ञेयः सार्वदिकत्वेनाऽतिसारस्याभावात् ॥२२॥

शृङ्गिणां वृषादीनाम् आधावतीत्यादिकं सप्तम्यन्त शत्रन्तं भ्रातृद्वये निर्भये एवमेवंभूते सतीत्यर्थः अनुतापेत्यादिस्वशब्दवाच्यत्वं रसदोष इति नाशङ्कनीयम् । तदुक्तं काव्यप्रकाशे । न दोषः स्वपदेनोक्तावपि संचारिणः क्वचित् । यथा औत्सुक्येन कृतत्वरेत्यादीति ॥२३॥

शुद्धसत्वमेव वसु धनं तन्मयेन देवेन द्योतमानेन तेन दीव्यतीति वा अनेन वसुदेवशब्दार्थ एव व्यञ्जितः । सत्वं विशुद्धं वसुदेवशब्दितमिति चतुर्थस्कन्धोक्तनिरुक्तेः । प्रहितःप्रेषितः कुतः प्रकृष्टं हितं यस्मात्सः । दूनं क्षीणम् अन्धसां पापानां रंहो वेगो यत्र यस्माद्वा सः । इत्याभ्यां काकाक्षिगोलकन्यायेन यदूनामित्येतस्य उभाभ्यामेवान्वयात् । अस्य यदुकुलपुरोहितत्वसूचकं तेषामैहिकपारत्रिकहिताचरणमुक्तं । नामप्रकाशे करणानाम् इन्द्रियाणां त्रैकालिकसार्वत्रिकविषयवस्तुनि आयतं दीर्घं पाटवं तदुचितकर्मठता यस्य सः एतेन उपनिषज्ज्योतिषागमकर्मतन्त्रादभिज्ञत्वेन नामकरणे सामर्थ्यमुक्तम् ॥२४॥

सूचितमर्थं स्पष्टयति । वितानो विस्तारः । मन्त्रा एव आत्मा यस्य तान् विना तस्य व्यर्थत्वात् । पक्षे मन्त्रे मन्त्रणायाम् आत्मा बुद्धिर्यत्नो वा यस्य सः । आत्मा यत्नो धृतिर्बुद्धिरित्यमरः । अधीनेति प्रभा । पक्षे अधिगतः इनस्य सूर्य्यस्य प्राधान्यात् सर्वग्रहोपलक्षकस्य तत्वग्रामः संचारातिचारः

श्रुतिसंपन्नः अम्भोधिरिव न दीनः ॥ २५ ॥

विरोचन इव तमोपहः परममहातपः मकाशवहुलश्च कुलधरः ॥ २६ ॥

कुलधरणीधर इव प्रावृडम्भोधर इव महासारः ॥ २७ ॥

परमात्मा परमात्मा यदुकुलाचार्य्यो मुनिर्गर्गो नाम यदृच्छया प्रागूढ-गूढभावः सन व्रजराजभवनमाऽऽजगाम ॥ २८ ॥

तमथ समासाद्य स मासाद्यमानमानमभिवाद्य पाद्यादिभिरभिपूज्य च हृदि निभृते निभृते हर्षसंपदा पत्नीजनीरप उपस्पृश्य सविनयमूचे व्रजाधिनाथः२९ मुने किमु! न मुनयो नवोद्धुरकरुणा भवादृशा दृशा पुनन्ति जगददो गददोषवहुलं। तदपि भाग्यवतामतिमतिसुखदं भवचरणजलाचमनं तदपि मम घटितमित्यहो! मे अगाधेयं भागधेयसंपत्तिः ॥ ३० ॥

पादरेणुनाऽणुनापि भुवनं पुनानानां नानांहोरंहसः सततशुभवतांभवतां भवतां शुभागमनभागमनवरतमाशासानानामाशा सा नानाऽद्यापि केषामपि विश्राम्यति। तदऽनायासेनैव संपन्नमित्यहो!अद्यैव मे फलितोऽफलितोभागधेयविटपी ॥३१॥

दियाधार्य्ये येन सः श्रुतयो द्वाविंशतिः । पक्षे वेदाश्चत्वारः । नदीनाम् इनः प्रभुः । इनः सूर्ये प्रभा वित्यमरः। पक्षे न दीनो न दरिद्रः ॥२५॥

विरोचनः सूर्य्यः। तमोऽन्धकारोऽज्ञानं च। परमे महान् आतपः किरणसमूहो यस्य सः। तथा प्रकाशेन वहुलश्च गर्गपक्षे परममहतां तपसां प्रकाशे वहुलः कुलधरः। स्वनाम्ना वंशप्रवर्त्तकः इति केवलं गर्गस्यैव विशेषणम् कुलधरपदस्य यमकानुरोधात् उपमा मण्डलमध्यपातित्वमदोषः २६

कुलधरणीधरो मेर्वादिपर्वतः स इव महासारः महास्थिरः। अम्भोधरपक्षे महान् आसारो धारासम्पातो यत्र सः। गर्गपक्षे महम् उत्सवं प्रतिआसरतीति स तथा कर्मण्यण् ॥२७॥

परेषां मा लक्ष्मीः संपत्तिर्यस्मादेवंभूत आत्मा यत्नो गमनादिव्यापारो यस्य सः। अएतव परमः श्रेष्ठ आत्मा स्वभावो यस्य सः। प्राक् प्रथमम् ऊढगूढभावः धृतगूढाभिप्रायः। श्रीव्रजराजेनाऽपि मया प्रार्थितं मत्पुत्रस्य नामकरणं संस्कारं न करिष्यतीत्येवमेव प्रथमं ज्ञापितत्वात्। तदनन्तरं तु तत्संमत्या तेनाज्ञाताभिप्राय एवाऽभूदित्यर्थः ॥ २८ ॥

तं गर्गं समासाद्य समीपमागत्य स व्रजाधिनाथः। माभिः शोभाभिः साद्यमानः प्राप्यमाणः मानः संमाननं यत्र तथयाऽस्यादेवम् अभिवाद्य प्रणम्य निभृते विविक्ते देशे ऊचे हृदि कीदृशे हर्षसंपदा नितरां भृते पुष्टे सति ॥ २९ ॥

भवादृशा मुनयः दृशा दृष्ट्या एव जगत् किमु न पुनन्ति अपि तु पुनन्त्येव गदो जन्ममरणादिलक्षणो व्याधिस्तद्दोषवहुलम्। अहो आश्चर्य्यं मे भाग्यसंपत्तिः इयम् अगाधा ॥३०॥

नानांहसां विविधपापानां रंहसो वेगात्। शुभवतां मङ्गलयुक्तानां युष्माकं शुभागमनमेव भागः सर्वप्राप्यत्वेन दायांशः तम आशासानानां वाञ्छतां सा नानाविविधा ऐहिकसुखभगवत्प्राप्तिसद्भजनाद्यभिलाषलक्षणा आशा केषामपि न विश्राम्यति मम तु तद्वाञ्छितं संपन्नं जातम्। नासीत् फलिता फलवन्तं यस्य सः अद्यैव फलितः ॥ ३१ ॥

मत्कृतार्थीकरणमात्रकामस्याऽकामस्यात्र भवतो भवतोदकस्य संयोजनवार्त्ता वार्त्ताङ्गस्य किंपृच्छामः ॥ ३२ ॥

किन्तु साध्वसं साध्वऽसंतोषकरमिदानीमिति मितिरहितो नानोत्कण्ठागौरवेण समुन्नमना न मनागऽपि विलम्बं सहमानेन सह मानेन समुज्वलन्नलोभवान् भवान्मया मार्थ्यते ॥ ३३

भगवन् ! प्रियसखस्याऽऽनकदुन्दुभेर्दुन्दुभेरिव प्रसिद्धघोषस्य प्रसिद्धघोपस्य मम चाऽपत्यं नाम नामकरणेन चेदऽनुगृह्णासि तदानुगृहीतो गृही· तोषवानहं भवानीति नीतिविरम्नु किंबहुना ॥ ३४ ॥

स च मुनिरवादीदवादी ॥ ३५ ॥

दक्षिणाशय ! व्रजनाथ ! नाथति यदिदंभवान् दम्भवान्न भवति भवति सदा विनीत एव नीत एव वशतामनेनैव विनयेन सर्वः ॥ ३६ ॥

न हि तुहिनकरो न करोति कुमुद्मुदमितिममैतत्तव समीहित हित संपादनं युक्तमेव ३७

भवतोदकस्य संसारनाशकस्य भवतः अत्रागमनस्य प्रयोजनवार्त्ता किं पृच्छामः वार्त्ताङ्गस्य निरामयविग्रहस्य वार्त्ता निरामयः कल्य इत्यमरः ॥ ३२ ॥

किंतु इदानीं साध्वसं विवक्षितेऽर्थे मम भयं साधु सुष्ठु असन्तोषकरम् इति अत एव हेतोः भवान् मया प्रार्थ्यते । कीदृशः मितिरहितः अप्रमेय इत्यर्थः । ननु समयान्तरे तत् प्रार्थ्यताम्-इदानीमेव कोऽयमाग्रहस्तत्राह । नानोत्कण्ठाया गौरवेण अतिभारेण हेतुना मनागपि विलम्बं-न सहमानेन सोढुमशक्नुवतेत्यर्थः । नन्वेवं चेत् त्वत्प्रार्थितसंपादनेन ममाप्यऽभिप्रेत--स्वतो धनादिलाभो भविष्यतीत्यतः प्रार्थने का चिन्ता नाम तत्राह । भवान् न लोभवान् न लोभी तत्र हेतुः । मानेन सर्वलोककृतेन संमानेन सह समुज्वलन् तव संमानोऽपि महाप्रदीप्त इत्यर्थः । लोभी तु अतितिरस्कृत एवेति भावः । तर्हि प्रार्थने किमिति निःशङ्कोऽसि तत्राह समुन्नमनाः सम्यगार्द्रचितः तव कृपालुस्वभावमालक्ष्य तत्र सङ्कोचो मम न जायत इति भावः ।३३।

प्रसिद्धो घोषो वादनसंबन्धी च शब्दो यस्य तस्य मम च प्रसिद्धगोपस्य अपत्यं रामं कृष्णं चेत्यर्थः । तदा अनुगृहीतस्त्वया अनुकम्पितः गृही गृहस्थः ॥३४॥

अवादीत् उवाच अवादी अनुकूलः ॥ ३५ ॥

यदिदं भवान् नाथति याचते तेन भवान् दम्भवान् न भवति किं तु सदा विनीत एव-अनेनैव मुने! किमु न मुनय इत्यादिवचनपरिपाटीयोत्थेन विनयेन सर्व एव वशतां नीतो भवति किंपुनरस्मदिन्यर्थः ॥ २६ ॥

मम पुनर्दूरस्थत्वेऽपि सदा त्वयि प्रीतिस्त्वद्विनयादिनिरपेक्षा साहजिक्येवेत्याह । नहि तुहिनेति ॥ ३७ ॥

---

१ उन्दी आर्द्रीभावे इति समुदायस्य निष्टान्तःप्रयोगः  २ इतिलोडुत्तमैकवचनम्

१ प्रसिद्धघोषस्येति साधीयान् पाठः

किन्तु कंसनृशंसो नृशं सोऽस्ति न सहते सह तेन न कोऽपि परिस्पर्द्धी ॥ ३८ ॥

स्वयं खलताफलमपि विषलताफलवत्स खलु सकलमेव जनमुद्वेजयति । जयतिच सुरानपि न पिहितं भवति कुत्राऽपि तत्तेजः ॥ ३९ ॥

विशेषतश्च वसुदेवसुतः क्वचन वर्त्तत इति जपन्नगपन्नगवन्निश्वसन् सावधानमेव वरीवर्त्ति ॥ ४० ॥

वेत्ति मां यदुकुलाऽऽचार्य्यं चार्य्यं ते यदिदं चेत्कार्य्यमीहेऽमी हेव्रजराज ! राजपुरुषा गूढवेशेन सर्वतश्चरन्तस्तदेव तस्मै निवेदयिष्यन्ते ॥ ४१ ॥

दर्पयिष्यन्ते न च ते भोजापसदाः । कंसनामानो नामाऽनोकहकोटरकुहरदहनवज्ज्वलन्तोऽलं तोदयिष्यन्ति ते न दुष्करमेतत् ॥ ४२ ॥

तन्निशम्य शम्यऽपि घोषाधीशो धीशोकं गतः पुनरपि निजगाद ॥ ४३ ॥

ब्रह्मन् ! युक्तमुक्तं जीवन्मुक्तं जीवन् को द्वेष्टि तथापि अपडक्षीणामिदमक्षीणापि-

कंसनामा नृशंसः क्रूरः नृशं नुर्मनुष्यस्य शं कल्याणं सः प्रसिद्धः अति अतीव न सहते किञ्च तेन सह कोऽपि न परिस्पर्द्धी ॥३८॥

खलतायाः खलत्वस्य फलं दुःखमेव तद्रूपोऽपि निरन्तरस्वमृत्युभावनाविपद्ग्रस्तोऽपीत्यर्थः श्लेषेण आकाशलताफलभूतोऽपि अद्य श्वोवामरिष्यमाणत्वादविद्यमानप्रायत्वेन ज्ञातोऽपीत्यर्थः । न पिहितं नाच्छादितं कुत्रापि इन्द्रपुरादावपि किं पुनरत्र तदीयदेश एवेति भावः ॥३९॥

नगपन्नगवत् पर्वतवर्त्तिसर्पवत् ॥४०॥

चेद्यदि इदं कार्य्यं त्वत्पुत्रनामकरणादि आर्य्यं श्रेष्ठं चकारस्य वेत्ति पदस्याऽन्तेऽन्वयः । यद्वा चार्य्यम् आचरणीयं कर्त्तुं योग्यमिति यावत् ईहे चेष्टे करोमीत्यर्थः । तदा अमी राजपुरुषाः हेव्रजराज ! ॥४१॥

ननु निवेदयन्तां नाम तथाऽपि तन्मण्डलाध्यक्षमुख्ये मयि सदा सानुकम्प एवाऽसावनुभूतः सत्यं तथाप्यसौ भेतव्य एवेत्याह । दर्पयिष्यन्त इति बहुवचनं प्रायस्तत्सनामवासनानां तद्भ्रात्रादीनामन्येषामपि ग्रहणार्थं कंसनामानः कंस्ते हिनस्तीति कंस इत्येवं स्वस्वनामयोगार्थं नैव-त्यक्ष्यन्तीति भावः । अनोकहः वृक्षः तादृशानलदृष्टान्तोऽत्यन्तानिवार्य्यत्वेन ॥४२॥

शम्यपि परमधृतिमानपि धीशोकं धियैव शोकम् अतिगाम्भीर्य्येण बहिस्तल्लक्षणानभिव्यक्तेरित्यर्थः ॥४३॥

जीवन्मुक्तं भवन्तं तेन भवद्द्वेषेण मय्यऽपि द्वेषो न भविष्यति फलतस्तस्येति भावः । तथापि शङ्कास्पदमिदमिति चेत् हेअक्षीणमित् अक्षीणस्नेह ! मि मिदा स्नेहने क्विबन्तः । त्वया मयि स्नेहः किंत्वतुं शक्य इति भावः । इह मदन्तःपुरे परमविविक्ते इदं कर्म अपरो न वेत्स्यति कथंभूतम् अपडक्षीणं न विद्यन्ते षट् अक्षीणि यत्र तत् । स्वान्तरङ्गपरिवारसहितोऽहमेक एव

१ दर्पयिष्यन्तइतिक्रियापदस्यकर्मीभूतत्वादधीगर्थदयेशांकर्मणीतिषष्ठ्यन्तंतेइतिनभ्रमितव्यंनचवाहादेशयुक्तइति तादृगादेशस्यदौर्लभ्यात् २ तेनहेतुनापतद्दुष्करमकिन्त्वपरंतच्चेद्दुष्करंनेतिकाकुः

दपर इह बहिरङ्गः कोऽपि जनो न वेत्स्यति ॥ ४४ ॥

मूर्त्तिमता परममङ्गलेन भवता भवतापहारकेण क्रीयमाणस्य कर्मणः किमुच्चावचमङ्गलकार्य्योपयोगिनाऽऽतोद्यादिनाऽतोऽद्यादिना केवलेनैव स्वस्तिवाचनेन भवतैव संपादनीयमिदमिति ॥ ४९ ॥

तद्वचनानन्तरं स्वयमावृतमप्यान्तरं रसं विकाशयन्तीव काचगर्गरी गर्गरीतिरासीन्मुखप्रसादेन ततस्तु मातृभ्यामुपनीतयोस्तयोर्बालकयोः प्रथमं व्रजेश्वरीक्रोडगतं श्रीकृष्णमवलोक्य स मुनिर्मनसि परामम्मर्श ॥ ४६ ॥

अहो किमेतत्—हन्तेऽयं किमनादिमोहतमसः सद्रत्नदीपाङ्कुरः
किन्त्वीशप्रतिपादकोपनिषदां प्रामाण्यमाप्तं वपुः।
किं नः सौभगकल्पभूरुहवनस्याद्यः प्रसूनोदयः
सान्द्रानन्दसुधाम्बुधेः किमयमसौ कापि जन्मस्थली।४७।

किंच—यं ब्रह्मेति वदन्ति केचन जगत्कर्त्तेति केचित्परे—
स्त्वात्मेति प्रतिपादयन्ति भगवानित्येव केप्युत्तमाः।

ज्ञेयस्त्वं च इत्येवं द्वाभ्यां कृतमित्यर्थः। अपडक्षाशितङ्ग्वलंकर्मालंपुरुषाध्युत्तरपदात् ख इति खः प्रत्ययः ॥४४॥

आतोद्यादिना वाद्यादिना अतो हेतोःअद्यादिना अद्य अमुकेमासि अमुके पक्षे इत्यादिसंकल्पवाक्येन। यद्वा अद्य अत्र दिने आदिना कर्मप्रथमगतेन स्वस्तिवाचनेन ॥४९॥

गर्गरीतिर्गर्गस्य चेष्टितं परिपाटी काचस्य गर्गरीव काचेन निर्मितेत्यर्थः।रसं तैलादि प्रेमरसं च ४६

हन्तेति विस्मये रत्नेति अन्यदीपो हि तैलाद्युपचयाभावेन वातादिविघ्नेन च निर्विशेषज्ञानयोग इव काले नश्यत्यपीति भावः। तत्रापि सदिति अवतारान्तरवैलक्षण्यार्थमुक्तम्। अत्र प्रामाण्यापेक्षा चेदत आह ईशस्य सविशेषस्य षडैश्वर्य्यवतो भगवत इत्यर्थः। प्रामाण्यमेव कर्तृ वपुः शरीरं प्राप्तंप्राप। प्रत्यक्षीभूतमभूदित्यर्थः। ननु निर्विशेषब्रह्मप्रतिपादकानामुपनिषदां प्रामाण्यमिव केवलमप्रत्यक्षमिति भावः। नन्वेतदद्भुतभाग्यं कथं समभवत् तत्र स्वयमेव वितर्कयन्नाह। नोऽस्माकम् एतेनैवानुमितं यत्सौभगं तदेव कल्पभूरुहवनं तस्य आद्यः मूलभूतः। तस्य प्रार्थितविविधान्यफलदायित्वेऽपि स्वजात्यैव जनिष्यमाणाय कस्मैचित् अतिमूल्याय फलाय यः प्रसूनोदयः स एव। अस्माकं सर्वेषाम् अद्भुतप्रेमफलकारणमेव मूर्त्तिधारीत्यर्थः यद्वा प्रसूनोदयः फलोदय एव प्रसूनं पुष्पफलयोरित्यमरः। अथ तदेव तादृशप्रेमफलोपलब्धेर्हेतुकं रसास्वादभरमऽनुभूयाह सान्द्रेति सा प्रसिद्धा पूर्वं शास्त्रमहाजनप्रसिद्ध्या श्रुतैव न त्वनुभूतेति भावः। कापि अनिर्वचनीया इदानीन्तु अनुभूयमानमात्रत्वेन वक्तुमशक्येत्यर्थः। जन्मस्थलीति तेन महावैकुण्ठनाथादावपि तरतमभावेन स्थितानामानन्दानामेतदानन्द एव मूलकारणमिति भावः ॥ ४७ ॥

ब्रह्मेति ज्ञानाभ्यासिनः। जगत्कर्त्तेति अणिमाद्यखिलैश्वर्यपरास्तार्किकाः। आत्मेति योगा-

नो देशान्ने च कालतो वेत परिच्छेदो स्ति यस्याजेसो
देव : सोऽयं मवार्य नन्ददयितोत्सङ्गपरिछिन्नताम् ॥ ४८ ॥

अहो—अतिभूमिरियं विस्मयस्य यदयं मातुरङ्कगत एव मे ।
कर्पूरवर्त्तिरिव लोचनमङ्गकानि पङ्कौ यथा मृगमदस्य कृतानुलेपः ।
घ्राणं धिनो त्ययमगुरुधूप इवाऽयं मु बैरानन्दकन्द इव चे तसि च प्रविष्टः ॥४९॥
किंच—धैर्यं धिनोति वत कम्पयते शरीरं रोमाञ्चयत्यतिविलोपयते मतिं च ।
हन्ताऽस्य नामकरणाय समागतोऽहमालोपितं पुनरनेन ममैव नाम ॥ ५० ॥
तदधुना किमीहिष्ये ।
पादौ दधामि यदिमौ वद तां जनो ऽयमुन्मत्तमेव वत वक्ष्यसि चेत्करोमि ।
तद्यातिचापलमहो न करोमि वा चेदौत्कण्ठ्यमेव हि लवित्र्यति धैर्यबन्धम् ५१
भवतु तथापि—
जन्माऽद्य साधु सफलं सफलेन नेत्रे विद्या तपः कुलमहो सफलं समस्तम् ।
आचार्यता भगवती हि यदो :कुलस्य मां मद्य हन्त नितरामऽकरोत्कृतार्थम्॥५२॥

इति स्नात इवाऽऽनन्दसिन्धौ पीतवानिव पीयूषं जाग्रदेव निद्राण इव ज्ञानवान् मुह्यन्निव जीवन्नेव मुर्छन्निव पश्यन्नपि अन्ध इव शृण्वन्नपि बधिर इव वदन्नपि मूक इव बद्धधैर्योऽपि चपल इव यदि क्षणमेवमासीत् ।

तदा समीपमम्बाभ्यामुपनीतयोस्तयोः कुमारयोरयोन्नीतस्वस्तिवाचनोऽयं नामकरणायोद्यतोद्यतोखिलमशुभं शुभंय्वोरनयोरनयोपशमनाय नानार्थनिरुक्त्या नामचिकीर्षुरुवाच ॥ ५३ ॥

ऽम्यासवन्तः । भगवानिति भक्त्येकनिष्ठाः उत्तमा इति एषामेव श्रेष्ठ्याम् केषामिति वैरस्यं च तेनस्वारस्यमपि अत्रैव ध्वनितम् ॥ ४८ ॥

प्रविष्ट इति धिनोतीत्यनयोः सर्वत्रान्वयः ॥४९॥

मम नाम प्रसिद्धिः गर्गो नाम ऋषिर्महाधीरोऽतिगम्भीरो चपलो निर्विकारः परममतिमानित्यादिका सर्वलोकघोषिता ख्यातिरित्यर्थः । तत्र धैर्यं धुनोतीत्यौत्सुक्यचापल्ये कम्पयत इति प्रीतरत्याख्यः स्थायी रोमाञ्चयतीति तदङ्गभूतो विस्मयः मतिं विलोपयत इत्युन्मादः ॥५०

तदपि पादौ दधामीत्यादिपरामर्शगर्भो धृतिरपि रसपरिपाटीभङ्गाभावाय लीलाशक्त्यैव तस्मिन् समर्पितेतिज्ञेयम् ॥ ५१ ॥

हन्तेत्यनुकम्पायाम ५२ तथापि प्राप्ततादशाधृताविपि गर्गे तस्मिन् प्रेमा स्वकार्यं स्यकुमशक्नुवन्नियोदगादेवेत्याह । स्नात इवेति दैहिकसुखस्य बहिःप्रकाशाधिक्यं पीतवानिति मानससुखस्य अन्तरेवेति । ततश्च जाग्रदित्यादिकं पूर्वपूर्वं धृतिलक्षणं निद्राण इत्यादिकम् उत्तरोत्तरं प्रेमलक्षणमिति ॥ ५२ ॥ अयेन शुभावहविधिना। उन्नीतं स्वस्तिवाचनं येन सः। यतोः खण्डयतोः शुभंय्वोः फल्या पवतोः अहंशुममोर्युस् । अनयस्य उपशमनाय नानार्थनिरुक्त्येति तां विना ईश्वराणां नाम कस्मान्मनुष्यसुतेऽर्प्यते इत्यनयोः लोकदृष्ट्या स्यात् तथैव वक्ष्यमाणेन कृष्णवर्णादिभिरित्यादिना परमाशित्वरूपताप्पर्यायविव्रतिं विना तत्वदृष्ट्यापि अनयः स्यादिति ॥५३॥

१ नामार्थनिरुक्त्येयपि पाठोबहुपुस्तकेषुमुद्रानुसारीटीकागतोस्ति ।

अयं वसुदेवसुतो देवसुतोत्तमबलो बलोत्कर्षात् बलो बलेन देवनमस्येतिबल-देवेतित्वलदेवेतिहासोचितं नाम ॥ ९४ ॥

महापुरुषत्वेन पापसंकर्षणेसंकर्षणेति च समुचितमभिधानम्। सर्वाभिरामतया रामतया चैष गमिष्यति प्रसिद्धिं बलेन रमत इति बलरामश्च ॥ ९५ ॥

अयं तु तवाऽऽत्मजो भगवद्भक्तियोग इव चातुर्वर्ण्योपयुक्तः। स्वभावत इन्द्रनीलमणितया सिद्धोऽपि प्रतियुगमंशतः करुणाच्छविग्रहं विग्रहं दधदनेकवर्णतां प्रकटयति ९६

धर्माविकृते कृते शुक्लः। सवर्णस्त्रेतायास्त्रेतायामपि। द्वापरेऽद्वापरेण श्याम ए-

देवसुतस्येव उत्तमं बलं पराक्रमो यस्य सः। अस्येति एतत्संबन्धि देवनं मल्लयुद्धादिक्रीडनं बलेनैव प्रतिभटनिघ्नेन भवति नान्यथेत्यर्थः। बलेन दीव्यति इत्युक्तिरेषे व्याख्यास्यमानेन बलेनं रमत इत्यनेनैकार्थ्यात् बलदेवेतिहासोचितं चेति एतत् प्रियनर्मसखैः कदाचिदिमं क्रीडामयकौतुकयुद्धे पराजित्य विरुद्धलक्षणया हेदेव त्वं बलबलं प्रकाशयेति लोडन्त बलतिप्रयोगेण करिष्य-माणो यो हासस्तदुचितं च बलदेवेति नाम इत्यर्थद्वयम् ॥९४॥

महापुरुषत्वेन सिद्धपुरुषत्वेनेति प्रकटोऽर्थः। महत्स्रष्ट्रादिपुरुषेभ्योऽपि महत्त्वेनेति वास्तवः। पापानां सम्यक् कर्षणे निमित्ते ॥९५॥

चातुर्वर्ण्ये चतुर्षु ब्राह्मणादिषु उपयुक्तः कर्तुं योग्यः। स्वार्थे ष्यञ् प्रत्ययः। पक्षे चत्वारो वर्णाः शुक्लादयो यस्य तस्य भावश्चातुर्वर्ण्यं तत्रोपयुक्तः। तदेव विवृणोति स्वभावत इत्यादिना विग्रहं देहं कीदृशं करुणया छविं कान्तिं गृह्णातीति तं पूर्णकृपायास्तु तत्तदंशिनि श्रीकृष्ण एव सम्यक् संभवादिति भावः ॥९६॥

धर्माणां तपः शौचादीनाम् अविकृतं विकाराभावो यत्र तस्मिन् परिपूर्णधर्ममये सत्याख्ये युगे इत्यर्थः। त्रेताया अग्नित्रयस्य तुल्यवर्णो रक्त इत्यर्थः। दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः। अग्नित्रयमिदं त्रेतेत्यमरः। अद्वापरेण असंदेहेन अस्मिन् द्वापरयुगे तस्य श्यामस्य अस्मिन् कृष्ण एव ऐक्यमासत्वादयमेव स इत्येवमभिन्नतालक्षणेन। संदेहद्वापरौचेत्यमरः। कलौ कलहे मूर्तियुक्त इव पीत इति एतदव्यवहिते आगामिनि कलावेवेति ज्ञेयं न तु सर्वत्र। प्रति सत्यादि शुक्लादीनामिव प्रति कलियुगम्। कथ्यते वर्णनामभ्यां शुक्लः सत्ययुगे हरिः। रक्तः श्यामः क्रमात् कृष्णस्त्रेतायां द्वापरे कलौ इत्यनेन भागवतामृते कृष्णवर्णस्यैव युगावतारत्वेन निरूपितत्वात्। तथैवात्रापि पञ्चदशे स्तबके कलौ कृष्ण इति वक्ष्यमाणत्वात्। अत्र पीत इत्युक्तिः 'शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः। इति मूलानुसारानुरोधेनैव। मूले चैकादशस्कन्धे नानातन्त्रविधानेन कलावपि तथा शृणु। कृष्णवर्णं त्विषाऽकृष्णमित्यादिना कलियुगावतारत्वेन कृष्णवर्णस्यैव निरूपयिष्यमाणत्वेऽपि दशमस्कन्धे तथा पीत इदानीं कृष्णतां गत इत्युक्तिरिदानीन्तने कलौ पीतवर्ण इतिविजिज्ञापयिषयैव। किं च आसन्निति भूतकालानुरोधेन आपाततः सुघटे व्याख्यान्तरे क्रियमाणे द्वापरयुगावतारस्य पीतत्वे द्वापरे भगवान् श्यामः पीत

व मूर्त इव कलौ कलौपीत इति ॥ १७ ॥

ककृषणाभिः पञ्चभिर्वर्णैः समवेतस्य कृष्ण इति नाम्नः चतुर्भिरेव वर्णैश्चतु-

वासा निजायुध इत्यनेन विरोधः स्यात् नच तत्रस्थश्यामपदस्यार्थान्तरं कल्प्यमिति वाच्यं पीत-वासा इत्यनेन श्यामत्वस्यैव सुष्ठु निर्द्धारितत्वात् श्यामस्यैव पीतवसनौचित्यात् ततश्चायमर्थः यत्तदोर्नित्यसंबन्धात् । यथा इदानीं द्वापरान्ते कृष्णतां गतः स्वयमयमवतारी तथा तेनैव प्रका-रेण स्वयमवतारित्वेन इत्यर्थः । इदानीं कलियुगादिभागेपीत इति किंचित् स्थूलकालमवलम्ब्य इदानीमितिपदार्थ उभयत्राप्यन्वेतीति । ननु तर्हि अधुना साक्षात् क्रियमाणोऽस्य कृष्णवर्णः इदानीन्तन एव किंवा पूर्वमप्यासीदेव तस्यैव प्राकट्यमधुनेति तत्र न केवलं कृष्णवर्ण एव पूर्वमासीत् किंतु अन्येऽपि वर्णा आसन्नेव इत्याह आसन्निति अनुयुगं तनूर्गृह्णतोऽस्य अनु-क्तोप्यन्यः शुक्लो रक्तस्तथा उक्तः पीतः एवं त्रयोऽपि वर्णाः यथासंभवं तत्तद्युगे तदानीं दृश्य-माना अपि आसन्नेव तत्तद्युगे पूर्वमपि स्थितानामेव तदानीं तदानीं प्राकट्यम् । नतु ते तदानी-मेवाऽपूर्वा अभवन्नित्यर्थः । द्वापरकलियुगावतारयोः श्यामकृष्णयोः कृष्णवर्णत्वाभेदात् पृथग-नुक्तिः । एवं च वैवस्वतमन्वन्तरगताष्टाविंशचतुर्युगीयद्वापरकलियुगयोः स्वयमेवावतारी कृष्णः पीतश्चप्रादुर्भवति । तद्युगद्वयावतारौ तदा तत्रैवान्तर्भूतौ तिष्ठतः । तत्र पीतस्य वैशद्येन क्वाप्य-ऽनुक्तिरितिरहस्यत्वात् । छन्नः कलौ यदभवस्त्रियुगोऽथ स त्वमिति सप्तमस्कन्धे श्रीप्रह्लादेनापि च्छन्नत्वेनैवोक्तत्वात् । तच्छन्नत्वं च स्ववर्णस्वरूपयोरन्यस्वीयवर्णभावाभ्यामावृतत्वेन तदानींतन-जनैः प्रायो दुर्लक्षत्वमेवेति । दुर्लक्षत्वंच तत्तस्य रहस्यवस्तुजातव्यञ्जकताहेतुकमेवेति भक्तसु-धीभिरवश्यमवगम्यम् । तत एव तत्प्रमापकस्य नानातन्त्रविधानेन कलावपि तथा शृणु । कृष्णवर्णं त्विषा कृष्णमित्यादिवचनस्य युगावतारप्रकरणमध्यपठितस्य तथैव च्छन्न एवार्थोऽति गूढत्वादवसीयतेऽर्थान्तरेण । स यथा नानाकलौ प्रतिकलियुगे अपिकारात् वैवस्वताष्टाविंशच-तुर्युगीयकलावपि तन्त्रविधानेन तन्त्रात्स्यन्यायविधिना श्वेतो धावतीत्यादिवत् एकप्रयत्नोच्चार्येण एकदैवार्थद्वयबोधकेन शब्देनेत्यर्थः । शृण्विति शृण्वन्तमपि राजानं प्रति पुनःप्रेरणं रहस्यत्वेन तन्त्रेणो च्यमानमर्थं विशिष्यावधापयितुं परीक्षितं प्रतितु पूर्वोक्तशुक्लो रक्तस्तथापीतइतिपद्यस्थ तथा पीतशब्दस्मारकेण अत्रत्य तथा शब्देन शङ्कितं स्पष्टमेव तमर्थं कृष्णेति प्रति कलियुगपक्षे कृष्ण-वर्णं कृष्णवर्णविग्रहम् । रूक्षत्वं व्यावर्त्तयति त्विषा कान्त्या अकृष्णम् इन्द्रनीलमणिवदुज्वलमि-त्यर्थः । एककलियुगपक्षे कृष्णवर्णं किंतु त्विषा कान्त्या अकृष्णं पीतम् अन्तः कृष्णं वहिर्गौ-रमित्यर्थः । यद्वा कृष्णं प्रसिद्धं कृष्णावतारं वर्णयति तद्रूपलीलादिमाधुर्य्यं सर्वत्रोपदिशतीतिति तम् । साङ्गोपाङ्गेत्यादिकमुभयपक्षेपि अप्रच्छन्नत्वं प्रच्छन्नत्वाभ्यां तुल्य एवार्थ इति । जानामि वा न जानामि त्वं पुष्णाम्येव केवलम् । शुद्धं लिखाम्यशुद्धं वा क्षमन्तांसाधवोऽखिलम् ॥१७॥

वर्णैरक्षरैरेव ककार ऋकार षकार णकारैर्वर्णान् क्रमेण शुक्लरक्तश्यामपीतान् दधाति धार-यति वर्णशब्दस्य उभयार्थवाचित्वात् । ततश्च क-ऋ ष-णा-वर्णा यत्र स चासौ अश्चेति वि-ग्रहोऽभिप्रेतः । शाकपार्थिवादित्वाद्वर्णपदलोपः । एवंच विद्वन्मानसहंसेतिवत् शब्दश्लेषेण कादयश्चत्वारो वर्णा एव वर्णाः शुक्लादय इति ततश्च नामनामिनोरभेदात् कृष्णनाम्नितेषां वर्णा-

युगवर्णान् दधाति। वर्णानामादिभूतेनाकारेण स्वयमादिभूतो नीलेन्द्रमणिसावर्ण्यं दधत्कृष्ण इत्याख्यां भजते ॥ ५८ ॥

कर्षति भजतामघं कर्षत्यऽनुरक्तानां मनांसीति च कृष्णः ॥ ५९ ॥

कृषिः सत्तार्थः ण आनन्दार्थः तेन च सत्तानन्दरूपतया च कृष्ण इति मुख्यं नाम ॥ ६० ॥

कदाचिदयं वसुदेवादपि जातोऽजातो विमुक्तादिति वासुदेवोऽपि लोकैरुद्घुष्यते ६१

नारायणसमो गुणैरित्युक्त सरस्वती तमेवार्थमात्मगतं व्याख्याति स्म नारा-

ना समवायः। नामिनि कृष्णेऽपि तेषांशुक्लादीनाम् इदानीम्अन्तर्भावः इति भावः। अकारेण पञ्चमेन आदिभूतेनेति अकारस्य सर्ववर्णादिभूतत्वमेव कृष्णस्य शुक्लाद्यवतारादिभूतत्वं ज्ञापयतीति। किंच अकारस्य केवलस्यापि विष्णुवाचकत्वेनाऽर्थवत्त्वमिव न तेषां ककारादीनां तथाभूतत्वमतो न तेषां स्वयन्त्वम् अस्य तु तन्नैरपेक्ष्येऽपि स्वतः सिद्धेः स्वयन्त्वमिति। सर्वोऽप्ययं वस्त्वर्थ एव विवृतः श्रीनन्दं बोधयितुमिष्टस्तु कोऽप्येवंविधमहापुरुषः शुक्लाद्यवतारोपासनया तदा तदा प्राप्ततत्तत्सारूप्यः संप्रति कृष्णोऽभूदित्येतत्प्रकारः प्रकट एवार्थः॥ ५८ ॥

कर्षति दूरीकरोति कृष विलेखिने इत्यस्मात्॥ ५९ ॥

मुख्यमिति नाम्नां मुख्यतरं नाम कृष्णाख्यं मे परन्तपेति प्रभासपुराणात् सत्तानन्दयोर्लक्षणमन्वयश्च शक्तिरूपत्वं च धर्मरूपत्वेऽपि धर्मित्वमित्यादिकं विस्तरभयादत्रानुपयोगाच्च भागवतसन्दर्भादौ व्यक्तत्वाच्च न विवृतमिति ॥६० ॥

कदाचिदिति पूर्वस्मिन् जन्मनीति श्रीनन्देन बुध्यते ततश्च श्रीवसुदेवस्याऽपि पूर्वजन्मनि वसुदेव इत्येव नामासीदितिच अजातो मायातः ॥ ६१ ॥

नारायणस्य सम इति नन्दंबोधयितुमिष्टोर्थः। तेन च अग्निर्माणवक इति यदुपचारेण इमं नारायणमपि वदिष्यन्ति जना इत्यवसीयते स्मेति नारायणः समोऽस्येति तु वास्तवः स्वाभिप्रेतः तमेव वास्तवमेव आत्मगतम् अनन्यबोध्यं गुणैरेव सत्यं शौचं दया क्षान्तिस्त्यागः सन्तोष इत्यादिभिः प्रथमस्कन्धोक्तैरेव न त्वऽसाधारणैर्वेणुमाधुर्यरासविलासादिभिर्महागुणैरपीति न त्वंशित्वेनाऽप्यभेदोपचारतो नारायणमप्येनं वदिष्यन्तीति तेन गुणैरेवाऽभेदोपचारतो नारायणमप्येनं वदिष्यन्तीत्यर्थ आयाति अत्र च नारायणमिति अनुवादपदम्एनमितिविधेयपदं नारायणमिति विश्वस्थित्यादिकर्तृत्वेन प्रसिद्धमपि किंवा कृष्णांशांशभागरूपमपि एनंश्रीकृष्णं वदिष्यन्तीति ततश्च सत्यदयाक्षमादीन् मोक्षदायित्वादींश्च गुणान्मूलभूतत्वेन कृष्णनिष्ठान् पर्यालोच्य नारायणे च तादृशत्वेनैव स्थितान् विमृश्य माणवके अग्निपदमिव नारायणेपि कृष्णपदं प्रयोक्ष्यन्तीत्यर्थः तेन अभेदोपचारोऽप्यत्रगौण एवेति भावः न त्वंशित्वेनाप्यभेदोपचा

१ कृषतीति तुदादीयः क्वचित् कर्षतीतिभ्वादीयोऽपि २अनन्यबोधमितिपुस्तकान्तरेदृश्यते।

३ एषा द्वादशाक्षरी बहुषु पुस्तकेषु न दृश्यते।

यणश्चास्य गुणैरेव समो न स्वांशित्वेनाऽप्यभेदोपचारतो नारायणमप्येनं वदिष्यन्तीति ॥ ६२ ॥

ततः स एवाह किं बहुना । अस्य महिमा नहि मादृशां वाग्विषयः । अयं ते सर्वसौभाग्यफलमानेन सर्वमेव तरिष्यसि दुर्गं दुर्गन्तव्यं न मनोरथमवाप्स्यसि। य एतस्मिन्रतिमन्तो भविष्यन्ति तेषामपि सौभाग्यं सर्वज्ञा अपि न ज्ञास्यन्ति ६३

न चेदं कचन प्रकाशनीयमतिरहस्यमिति समुत्कण्ठाकाकुमारौ कुमारौ तावऽङ्कीकृत्वा सपुलकमात्मगतं कृष्णमालोक्य ॥ ६४ ॥

अहो—किमिदं महस औज्ज्वल्यम् ।

इन्दीवरेन्द्रमणिवारिधराञ्जनाद्यैः । किं भौतिकैरिदमभौतिकमस्य तेजः ।
औपम्यमेतु यदतीन्द्रियमेतदेके ब्रह्मेति यन्मणिमणिद्युतिवद्गृणन्ति । ६५

इति सादरादराभिलापमालिङ्ग्य क्षणमपि तु पितुरङ्कं लम्भयित्वा जिगमिषुरभिवादितो वादितोऽपि शुभाशिषं कुमारौ प्रति व्रजपतिना अनुयातश्च कियद्दूरं स मुनिर्यथागतं निरगात् ॥ ६६ ॥

अथ क्रमत उपरमत्प्राये जानुचङ्क्रमणे स्तनपानेच चरणकमलाभ्यामेव शनैः शनैर्विहरता हरता च नवनीतं क्रियमाणेच बाल्यलीलाकौतुके कौ तु केन प्रकारेण न जनित आनन्दः परमानन्दकन्देन तेन ॥ ६७ ॥

एकदा—शून्ये चोरयतः स्वयं निजगृहे हैयङ्गवीनं मणि—
स्तम्भेस्वप्रतिबिम्बमीक्षितवतस्तेनैव सार्द्धं भिया ।
भ्रातर्मा वद मातरं मम समो भागस्तवापीहि तो ।
भुङ्क्ष्वेत्यालपतो हरेः कलवचो मात्रा रहः श्रूयते ॥ ६८ ॥

---

रस इति कृष्णस्य तदंशित्वसंभवेपि कृष्णांशांशरूपत्वात्तस्य मृदयं कृष्णांशत्वं नास्तीत्यंशांशिसंबन्धेन मुख्य उपचारो न सभवेदिति सरस्वत्या अभिप्रायः कृष्णे नारायणादिशब्दप्रयोगस्तु नारायणादीनामवताराणां कृष्णेऽन्तर्भावादिति ॥ ६२ ॥

**ततः स एवाहेति** वक्ष्यमाणवाक्यस्य सरस्वतीकर्तृकत्वनिरासार्थम् न ज्ञास्यन्तीति एतावत्वनिश्चयेनेत्यर्थः **सर्वज्ञा अपीति** नहि खपुष्पाज्ञाने सार्वज्ञ्यं निहन्तीति न्यायात् ॥ ६३ ॥

अङ्कीकृत्वेत्यत्र हेतुः समुत्कण्ठया यः काकुस्तस्य निरासकौ आहेति पूर्वेणैवान्वयः ॥ ६४ ॥

यद्यस्मात् अतीन्द्रिय यत् एतत्तेजः एके मुख्यवादिनः ब्रह्मेति निगृणन्ति एतत्तेजसोब्रह्म न भिन्नमित्यर्थः । तत्र दृष्टान्तः **मणीति** मणिस्थानीयः कृष्णःमणिद्युतिस्थानीयं ब्रह्मेति । अत्र प्रमाण ब्रह्मणो हि प्रतिष्ठाऽहमित्यादि गीतादिवाक्यानि ॥ ६५ ॥

सादरं च तत् आदराभिलापम् अनल्पाभिलापं चेति तद्यथास्यादेवमालिङ्ग्य पदर्थेदराव्ययमिति विश्वः। वादितोऽपीतिशुभाशीर्वादं कारित इत्यर्थः। ज्योतिर्विदोवचस्तस्य गर्गस्य मुखनिःसृतम्।

चित्तभित्तौ लिखंश्चिन्तांहित्वानन्दो ननन्दसः ॥ ६६ ॥

कौतु पृथिव्यान्तु ॥ ६७ ॥ तेनैव स्वप्रतिबिम्बेनैव ॥ ६८ ॥

कौतुकेनोपसन्नायाञ्च तस्यां समतिमं स्वप्रतिविम्बमुद्दिश्य तामुवाच ।

मातः ! क एष नवनीतमिदं त्वदीयंलोभेन चोरयितुमद्य गृहं मविष्टः ।
मद्वारणं न मनुते मयि रोषभाजि रोषं तनोति न हि मे नवनीतलोभः ६९

अन्येद्युरपि कार्य्यान्तरगतायां जनन्यां तथैव नवनीतं चोरयति सति दैवादागतया तया तमनालोच्य समाजुहुवे ॥ ७० ॥

कृष्ण ! क्वासि करोषि किं पितरिति श्रुत्वैव मातुर्वचः ।
साशङ्कं नवनीतचौर्य्यविरतो विश्रम्य तामब्रवीत् ॥
मातः ! कङ्कणपद्मरागमहसा पाणिर्ममातप्यते ।
तेनायं नवनीतभाण्डविवरे विन्यस्य निर्वापितः ॥ ७१ ॥

तदाकर्ण्य कर्णरम्यंच जननीच एहि वत्स ! एहीति तमङ्कमादाय पश्यामि वत्स ! ते पाणिं कीदृक् तप्त इति पाणिं प्रसारयतस्तस्य पाणिमालोक्य चुम्बयित्वा अहह सत्यमेव तप्तोऽयं पाणिस्तदितः पद्मरागा दूरीकर्त्तव्याइति वदन्ती लालयामास ॥ ७२ ॥

अपरेद्युरपि । क्षुण्णाभ्यां करकुड्मलेन विगलद्बाष्पाम्बुदृग्भ्यां रुदन् ।
हुं हुं हुमिति रुद्धकण्ठकुहुरादस्पष्टवाग्विभ्रमैः ।
मात्रासौ नवनीतचौर्य्यकुतुके प्राग्भर्त्सितःस्वाञ्चले ।
नोऽऽमृज्याऽस्यमुखं तवैतदखिलं वत्सेति कण्ठेकृतः ७३ ।

अथ—कदाचन । पूर्णचन्द्रिकाधौते निजमणिमयाङ्गणे । व्रजपुरपुरन्ध्रीभिः सह कृतगोष्ठ्यां मातरि तत्रैव खेलन् । कृष्णचन्द्रश्चन्द्रमवलोकयामास । ततश्च ।

पश्चादेत्य हृतावगुण्ठनपटे वेणीकराभ्यां मृदु

मातरिति त्वमपि लोभेन चोरयितुं गृहं प्रविष्ट इति चेत्तत्राह । नहि मे इत्यादि अहं तु एतद्वारणार्थमेव प्रविष्ट इतिभावः ॥ ६९ ॥

समाजुहुवे इति भावसाधनमेव कर्मणोऽविवक्षितत्वात् ॥ ७० ॥

पितरिति वात्सल्येन सम्बोधनम् पद्मरागमहसेति तस्य वह्नितेजः सारूप्यदृष्ट्या तादृशत्वं ज्ञापयति तेन वपः समुचितं स्वमौग्ध्यञ्च मातरमनुभावयति अयं पाणिः ॥ ७१ ॥

सत्यमेव तप्तोऽयं पाणिरिति तन्मौग्ध्यानुमोदनं पुनरपि तथाविधवाल्यचापलेऽवकाशं वर्द्धयितुम् ॥ ७२ ॥

क्षुण्णाभ्यां मर्दिताभ्यां करकुड्मलेनेति जातावेकत्वं कुड्मलीभूतपाणिभ्यामित्यर्थः । विगलद्बाष्पाम्बुयथास्यात्तथा । रोदने हेतुः मात्रेत्यादि । अस्य कृष्णस्याखिलं तवैति तेन स्ववस्तुग्रहणे चौर्य्यं न भवति मयातु वृथैव भर्त्सितमतो मारोदीरिति भावः ॥ ७३ ॥

हृतः शिरः प्रदेशादधः पातितोवगुण्ठनपटो येन तस्मिन् । लुलितां स्खलितां जनन्याः पृष्ठं तुदति उपरि पाणिभ्यां वेणीं धृत्वा तामालम्ब्य भूमितः स्वपादावुत्थाप्य ताभ्यां तस्याः

१ भर्त्सितमिति नपुंसके भावे क्तः

स्निग्धाभ्यां लुलितां विधाय जननीपृष्ठं तुदत्यात्मजे ।
देहीत्यस्फुटगद्गदं विरुदति स्नेहार्द्रचिन्तापरं ।
पार्श्वस्थालिजनेषु लोचनयुगं व्यापारयामास सा । ७४ ।

तदा ताश्च सविनयप्रणयोत्साहनपुरःसरं परस्परं स्वसविधमानीय निजगदुः
वत्स ! किमर्थयसे । किं क्षीरं न किमुत्तमं दधि ननु किं कूर्चिका वा ननु

मिष्टा किं ननु किं तवेप्सितमहो हैयङ्गवीनं घनम् ।
दास्यामो न विषादवत्स ! नेतरां कुप्यस्व मात्रे गृहो -
त्पन्ने नो रुचिरित्युदङ्गुलिदलैः शीतांशुमालोकयत् ॥७५॥

ततस्ता अपि पुनरूचुः ।

कलयं ने पितरेतद्धन्तं हैयङ्गवीनं प्रतरति कलहंसो व्योमवीथीतडागम् ।
अहमपि कलहंसं प्रार्थये खेलनार्थी तदुपनयत यावन्नाप्यपारं प्रयाति ।

इति भूयः सोत्कण्ठं चरणयुगं भूतले नाटयन् कराभ्यामासामपि कण्ठतटं धृत्वा देहि देहीति पूर्वतोऽप्यधिकतरं रोदिति स्म । ततश्चैवं बाल्यावेशेन रुदन्तं तमन्या ऊचुः
वत्स ! आभिः प्रतारितं मैयं नहि राजहंसः पीयूषरश्मिरयमम्बरमध्यवर्त्ती ।

देहीनमेव महतीह मदीयवाञ्छाखेलिष्यते तदधुनानय दे "हि देहि" ।

इतिभूयःसमधिकमेव रुदन्तं माता तमङ्कमानीय वत्स ! ॥

हैयङ्गवीनमिदमेव न राजहंसः पीयूषरश्मिरपि नैप न तत्प्रदेयम् ॥७६॥
पश्योऽत्र दैववशतो गरलं विलग्नं तन्नैतदुत्तममपीह न कोऽपि "भुङ्क्ते" ॥

ततश्च अम्बाम्ब ! कथमत्र गरलं लग्नं तद्वा किमिति पूर्वावेशाविरहेण रसान्तरमापन्नस्य कृष्णस्य कथाश्रवणश्रद्धायां सत्यां समीचीनमिदं जातमिति कृत्वा जननी समालिङ्गय वत्स ! श्रूयतामिति किमपि मधुरमधुरमुवाच ॥७७॥

वत्स ! स्वस्ति कश्चन क्षीरोदधिर्नाम । मातः ! कीदृशोऽसौ । वत्स ! यदिदं दुग्धमवलोक्यते तन्मयः समुद्रः । मातः ! कियतीभिर्धेनुभिः प्रस्नुतं तत्पयेन समुद्रो जातः ॥७८॥

---

पृष्ठमवष्टभ्य पीडयति सतीत्यर्थः । सम्भ्रमेतश्चापलं विस्ताश्यमाणकथावेशात् सखीभि सह मातरं स्वप्रार्थनेऽवधापयितुमेवेति पार्श्वस्थालीजनेष्वपि यूयमेव पृच्छत किमसौ याचत इतिभावः॥७४

कूर्चिका क्षीरविकृतिरित्यमरः । गृहोत्पन्ने तत्र हैयङ्गवीने. न रुचिरिति कृष्णोत्तरम् । तर्हि कुत्रत्ये रुचिरिति ततश्च उदङ्गुलिदलः उन्नमिततर्जनीकः सा सम्यक् अदर्शयत् । आकाशोत्पन्ने अमुष्मिन् हैयङ्गवीनखण्डे मम रुचिरित्यर्थः ॥ ७५ ॥

अहमपि इत्यादि कृष्णोक्तं देहि देहीति एकैका प्रतिकथनादेकवचनम् यथमुत्तरत्रापि गरलं लिप्तमिति कलङ्कचिह्नं दर्शयति ॥ ७६ ॥

-अत्र प्रकरणे सम्भ्रमवशदेव श्रीकृष्णयशोदयोरुक्तिप्रयुक्ता ज्ञेये । तद्वा गरलमेव वा किमेतन्न उत्तरम् अपि कालकूटं नामेति ॥ ७७ ॥ तत् दुग्धम् ॥ ७८ ॥

वत्स ! गोदुग्धं तन्नभवति । मातः ! प्रतारयसि मां विना गाः कथं दुग्धम् । वत्स ! येन गोषु दुग्धं सृष्टं स एव ता ऋतेऽपि तत्स्रष्टुमर्हति । मातः ! कोऽसौ । वत्स ! भगवान् जगत्कारणम् । मातः स एव कः । वत्स ! स भगवान् अगः । स गन्तुं न शक्यते । मातः हुं सत्यमेव ब्रवीषि तत्कथय । वत्स ! स एकदा दुग्धोदधिः सुरासुराणां कलहे असुरमोहनाय तेनैव भगवता मथितः । तत्र मन्दरो नाम गिरिर्मन्थानदण्ड आसीत् । वासुकिर्नाम नागराजो रज्जुः । एकतोऽसुरा अन्यतश्च सुरा एवाकर्षकाः । मातः ! यथा गोप्यो दधि मथ्नन्ति । वत्स ! हुं । एवं मथ्यमाने तस्मिन् कालकूटोनाम गरलमुत्पन्नं । मातः ! दुग्धे कथं गरलं सर्पेष्वेव तत् । वत्स ! तस्मिन्महेशेन पीते सति तच्छीकरा ये निपतिताः तानेव पीत्वा भुजगा विषधरा आसन् । तेन भगवत एव सा शक्तिर्यत् दुग्धेऽपि गरल । मातः ! हुं सत्यमेतत् । वत्स ! इदमपि हैयङ्गवीनं तत एवोत्थितं । तेनात्र तस्यापृदोषोऽप्यङ्कः । पयसमिमं कलङ्क इति सर्वे गायन्ति । तद्गृहोत्पन्नं भुङ्क्ष्वनेदामिति श्रूयमाणे लीलानिद्रावशमागतं जननी च कर्पूरधूलिधवले महापरार्द्ध्यशयनतले तमारोप्य शनैरसूषुपत् ॥७९॥

अथानुदित एव मयूखमालिनि दधिनवनीतादि समुपसाद्य वत्स जागृहि जागृहीति करतलेनामृश्य निर्मञ्छनं यामि पर्य्युषितयैव क्षुधा तिष्ठसि तदिदानीमुत्तिष्ठेति समुत्थाप्य सुरभिसलिलेनाननकमलं धावयित्वाङ्कमारोप्य कनकभाजनोपनीतं नवनीतादि दर्शयित्वा वत्स ! यदभिरोचते तदश्यतामिति जनन्या निगदितोऽभ्यासवशातस्त्यक्तमपि पयोधरमेव तस्याः पातुमारेभे ॥ ८० ॥

सा च क्षणं पाययित्वा वत्स ! नवनीतं ते प्रियमिदमश्यतां मातर्नापरमिदमश्नामि गतायां निशायां मृषा कथयाऽहं निद्रां गमितोऽस्मि क्षुद्बाधयैव मया स्थितम् । वत्स ! कस्तदा चोरयिष्यति नवनीतं । मातर्मया कदा ते चोरितं नवनीतं मृषा वदसीति लीलाबालकेन तेन बाल्यलीलापरिपाट्या बहुनैव प्रकारेण जननी मनोरञ्जनमाततान । कदाचिदपि । गोशालचत्वरतले विचरन् द्रवन्तं वत्सं विधृत्य विनिपात्य निजाङ्कमूले । दोर्भ्यां विगृह्य मुखमस्य मुखाम्बुजेन चुम्बन् प्रियश्च कुतुकञ्च तनोति मातुः ॥ ८१ ॥

अङ्गने निजगवां धृतपुच्छस्तर्णके सपदि धावति धावन् ।
नैग एष तदनावृततमेव ब्रह्म मूर्त्तमहरञ्जनचेतः ॥ ८२ ॥

अगः न गच्छतीत्यगः सर्वत्रैव यस्तिष्ठतीत्यर्थः । तथापि गन्तुं तन्निकटे यातुं न शक्यते यतस्तम् अद्य त्वां दर्शयामीत्यर्थः । सरस्वती तु अगः गकारहीनो भगवान् भवानेवेत्यर्थः । इतिश्लेषेण तमेवोक्तवती ॥७९॥ पर्य्युषितया श्वस्तनया ॥८०॥ जननी इतिकर्तृपदम्॥८१॥
निजगवामिति टजभावः । शूद्रस्वामिकगोवधप्रायश्चित्तमित्यादि प्राचां वाक्येन गोरत्तद्धितलुकीति टचोऽनित्यत्वज्ञापनात् श्रीव्रजराजेन कौतुकवशात् कृष्णस्वामिकत्वेन काश्चनगावः स्थापिता इति ज्ञेयम् । तर्णके वत्से नग्नो दिगम्बरः ॥ ८२ ॥

अङ्कितोनिजगवाङ्गणपङ्कैः शङ्क्यते मृगमदैरिव लिप्तः
पश्यतां नयनयोरभिरामैः सुन्दरैहि किमसुन्दरमास्ते ॥ ८३ ॥

कदाचिदपि—
उष्णीषमीषदतिचारु निबध्य मूर्द्धिन मात्रा विशिष्य परिधापितपीतवासाः ।
गोरोचनारचितचित्रतमालपत्रैः स्निग्धाञ्जनाक्तनयनो बहिरप्युपैति ॥८४॥

त्रैलोक्यमोहनमवेक्ष्य कुलोकदृष्टिर्माभूदिहेति कृतलौकिकमातृभावम्
मात्रा थुथूत्कृतिदरक्षरदास्यचन्द्रपायूषबिन्दुभिरपूजि सुतस्य मूर्द्धा ॥ ८५ ॥

कण्ठे रुरोर्नखमनुत्तमहेमनद्धं श्रोणौ महार्हमणिकिङ्किणिदाम बिभ्रद्
मन्दं पुरो ह्रि रूपेत्य करोति खेला मार्भिरनीरजदृशां भवनाङ्गनेषु ॥ ८६

अथ कदाचित्सकला एव व्रजयोषितो जयोषितोदयस्य सदयस्य तस्य सतत-बाल्यधार्ष्ट्यं कौतुकं कौ तु कं नरं न रञ्जयति जयति वा न कुत्रेति मनसि न सिद्धवेदनावेदनाय तथापि व्रजराजदाराणामुदाराणामुपजग्मुरभ्यासम् ॥ ८७ ॥

आगत्य चसहासं समणयं सकौतुकं किमपि सपृच्छुः । ८८ ।

अयि व्रजराजभाविनि भावि नितान्तदुरन्तभावोऽयं तव कुमारः । यदयं द्विपत्र एवाऽधुनाधुनान इव भुवनमवलमानसम्पल्लीलोपि पल्लीलोपि चरितमभ्यस्यति स्थित्वा किं वा विधास्यति ॥ ८९ ॥

---

पश्यतां सर्वेषामेव ॥ ८३ ॥

कदाचिदपीति यात्रोत्सवादौ । तमालपत्रं तिलकम् । तमालपत्रतिलकचित्र कार्णीविशेषकं इत्यमरः ॥ ८४ ॥ इह श्रीकृष्णशरीरे ॥ ८५ ॥ रुरोर्व्याघ्रस्य ॥ ८६ ॥

जयेन उषितः उदयो यस्य तस्य यस्य उदये विजयः सदा तिष्ठतीत्यर्थः । अतएव सन् सदा वर्त्तमानः शोभनो वा अयः शुभावहो विधिर्यस्य तस्य यद्वा सदयस्य दयायुक्तस्य ईदृशमधुरलीलाविष्कारैलोकेषु तस्य दयैव कारणमिति भावः।कौ तु पृथिव्यां तु कं नरं कं मनुष्यमात्रमपि किं पुनस्ताः परमवात्सल्य प्रेमवतीरित्यर्थः कुत्र वा न जयति अपितु सर्वत्रैव जयति उत्कर्षमेव प्राप्नोति नतु संकोचमित्यर्थः। इति अतएव हेतोः प्रतिदिन गव्यभाण्डस्फोटनादिभिरपि ताः सिद्धवेदनाजात पीडा मनसि न भवन्ति किन्तु कौतुकार्थं मुग्धमात्र एवेत्यर्थः तथापि मनसि पीडिता इव वेदनाय तद्धार्ष्टयविज्ञापनाय श्रीव्रजदाराणां श्रीयशोदायाः अभ्यासं समीपम् ॥ ८७ ॥

सहासमिति भावि नितान्तेत्यादि सप्रणयमिति लुम्पति तं स्मितेनेति सकौतुकमिति दूरे स्थितो गर्जतीत्यादि विशेषविचारेतु सर्वत्रैव सर्वमिति ॥ ८८ ॥

भावी नितान्तं दुरन्तः भावश्चेष्टा यस्य सः कथमनुमीयते इति चेत्तत्र हेतुमाहुः यदयमिति द्विपत्र एवेति वृक्षोपमया। न जानीमो जनिष्यमाणानां शाखापल्लवपुष्पफलादीनां कीदृशमुद्वेजकत्वं भविष्यतीतिभावः । न वर्त्तमाना सम्पत्संमृद्धिर्यस्याः तथाभूता लीला यस्य सोऽपि पल्लीलोपि पल्लीं नगरं लुम्पतीति तच्चरितं स्थित्वा या इत ऊर्द्ध्वमित्यर्थः ॥ ८९ ॥

25825 LIBR 101

तथाहि—अदुग्धदुग्धेषु गवां गणेषु निपाययत्येष विमुच्य वत्सान् ।
संभूय भूयः क्रियते यदा तु रोषस्तदा लुम्पति तं स्मितेन ।९०।
निह्नुत्य यत्नाद्गहनान्धकारे हैयङ्गवीनादिसुरक्षितं यत् ।
प्रविश्य पश्यन् स्वमहः प्रकाशै रेतत्समानीय बहिष्करोति ।९१।
हेलालसं तत् कियदेव भुङ्क्ते शाखामृगान् भोजयते प्रकामम् ।
नैभुञ्जते ते यदि तृप्तिमन्तो भूमौ क्षिपत्येव विभिद्य भाण्डम् ९२
करालभ्ये पीठं विरचयति पीठोपरि पुन-
स्तदूर्ध्वेतत्राऽन्यत्तदुपरि समारोप्य चरणौ ।
समुद्वाहः शिक्यादधि च नवनीतादि च हरन्
निपिद्धश्चेत्कैश्चित्क्षिपति सकलं तूर्णमवनौ ॥ ९३ ॥
धृतः कयाचिद्यदि कौतुकेन वा विमोच्य पाणी सहसाऽपसर्पति ।
दूरे स्थितो गर्जति तिष्ठ तिष्ठ भो दग्ध्वा गृहं ताडयितास्मि बालकान् ९४
चोर एष इति केनचिदुक्तः क्रुद्ध एव निगदत्ययमतिधृष्टः ।
त्वंहि चोर इदमेव मदीयं गेहमस्य सकलं हि ममैव ॥९५॥
वास्तौ लिप्ते सुललितमृदा चित्रिते चारुचूर्णै
र्धूलीपत्रादिभिरशुचिभिः शुद्धिहानिं करोति ।
त्वत्सान्निध्येऽधिकसुचरितोऽस्मादृशामालयेषु ।
रेतेनोधृष्टः प्रखरमुखरः क्रोधनो गर्द्धनश्च ॥९६॥
इत्येवं व्रजवनिता नितान्तमृषा परुषा गिरो यदिनिजगदु ॥९७॥
जगदुत्सवकरोऽपि तदा तदालापवैयर्थ्यं प्रतिपादयितुं मृषाश्रुकालितनयनो न-
यनोदापराद्धोऽपि राद्धोऽपि धापयितुं तत्सकलं स कलं व्याजहार ॥९८॥
अम्ब ! आसां मध्ये कस्याश्चिदपि सुस्निग्धता न वर्त्तते न वर्त्ततेह वचसि । सत्यमे-
ता अनृता अनृता चासां समस्तानामिव ॥९९॥

---

संभूय मिलित्वा ॥९०॥ निह्नुत्य संगोप्य ॥ ९१ ॥ शाखामृगान् वानरान् ॥९२॥
तदूर्ध्वे तस्य पीठस्य ऊर्द्धम् उपरि अन्यच्च तत् पीठं विरचयति ॥ ९३ ॥
कयाचित् गृहिण्या ॥९४॥ केनचित् गृहपतिना अस्य गेहस्य गेहस्थितमित्यर्थः ॥ ९५ ॥
गर्द्धनो लोलुपः ॥ ९६ ॥
नितान्त मृषा अत्यन्तमिथ्याभूतया रुषा रोषेण परुषा गिरो निष्ठुरवाक्यानि ॥ ९७ ॥
मृषा अश्रुभिः कालिते व्याप्ते नयने यस्य सः । नयस्य नीतेर्नोदेन दूरीकरणेन हेतुना अ-
पराद्धोऽपराद्धः अपराधवान् जातः। यदपि अपिधापयितुम् आच्छादयितुं तत्सकलं दधिचौर्य्यादि ।
स कृष्णः कलं मधुरम् ॥ ९८ ॥
नवा ऋतता सत्यता इह वचसि अदुग्धदुग्धेष्वित्यादिवाक्ये अनृता अत्यन्तानृतभाषित्वेन
अनृतरूपा एवैताः सत्यमित्यर्थः । आसाम् अनृता न नृता मनुष्यता नास्ति । अमानुष्य एवैता
इत्यर्थः । वस्त्वर्थोऽपि स सहसा आपतित इति ॥ ९९ ॥

यत आसामबालकेषु बालकेषु मे स्वभाव-भाववत्ता तेन तदीक्षणाय क्षणायत्त-तया प्रत्येकमासां निशान्ते निशान्ते सत्येव मया गम्यते ॥१००॥

तदवलोच्य वलोच्यमानमिदमनृतं वचो मा प्रतीहि मातः! परमे मातः परमेव बन्धुदर्शनाय गन्तव्यमिति भिया रुदन्मुखं तनयमङ्के कृत्वा व्रजेश्वरी व्रजयोषितः सस्मितावहित्थमब्रवीत्। अयि मिथ्याभाषिण्य एव भवत्यः अयमेव सत्यवादी तन्मैवं निरपराधोऽयमस्मद्बालकः पुनरुपालभ्यो भवतीभिरिति ताभिः सह प्रीति संकथया क्षणमवस्थाय रोहिणीद्वारैव तासां बन्धुसपर्य्यां विधायच विसर्जयामास १०१

अथ निर्गतासु तासु कृष्णजननी जननीति कोविदा तनयमङ्केनिधाय वत्स लोभवान भवान् निजगृहेजगृहे यदतिचापलं तदिह शुशुभे शुभेनैव परसदनेऽसदनेकं कर्मनसुशोभ ते चरितमिदं नातिललितं । निजाङ्गनएव खेल इत्युपदिशन्ती लालयामास ॥ १०२ ॥

तस्मिन्नेव समये व्रजराजोऽपि तत्रैवागत्य वागत्यधिकमाधुर्य्येण किमपि तमपिहितमभावमपि हितप्रभावमात्मजमात्मजनसुहृदं सम्बोध्य निजगाद ॥१०३॥

एह्येहि वत्स पितरेहि[६] ममाङ्कपूर्ण्य्मित्युक्ते एवं जनकेन स मातुरङ्कात् ।
आगत्य कण्ठमवलम्ब्य जुगुप्सते मां मातां कथं वत पितरित कलं जगाद१०४

सदा तदाकर्ण्य किन्तदिति पृच्छति घोषाधीशेधीपेवधिरिव स आश्चर्य्य बालोऽवलोच्य मातरं मातरञ्जसात्वमेव कथयेति निजगाद।साच गोपनारीणां रीणांमधुधारामिव कथितां कथां कथितवती ॥ १०५ ॥

तव तीव्रतरापराधोऽयं यदनागसि सततनये तनये मम मृषा दोषासञ्जनसञ्जननकुतुकिनीनां गोपरमणीनां परमणीनां दर्शने समत्सुराणामिव जनानां वचसि म-

अबालं तरुणं के सुखं येभ्यस्तेषु स्वभावेन निसर्गेण भाववत्ता प्रेमवत्ता तेन हेतुना तेषाम् ईक्षणाय क्षणायततया उत्सवाधीनत्वेन निशान्ते गृहे निशान्ते प्रातःकाले ॥ १०० ॥

वलेन उच्यमानं हे मातः! हेपरमे पूज्ये! इयात्मनः सुचरितत्वं व्यज्यते । अतः परं मा एव गन्तव्यम्। बन्धुसपर्य्या तिलकादिक्रियाम् ॥ १०१ ॥

जनानां नीतिषु कोविदा । लोभवान् लोभयुक्तः । असत् चौर्य्यादिनेकं कर्मेह सुशोभ ते तव। ॥ १०२ ॥

वाचाम् अत्यधिकमाधुर्य्येण आत्मजं सम्बोध्य किमपि निजगादित्यन्वयः । अपिहितः आच्छादितः प्रभावो यस्य तं । किञ्च हितां प्रभां कान्तिम् अवति रक्षतीति तम् ॥ १०३ ॥

जुगुप्सते उपालभते कलम् अतिमधुरम् अस्फुटञ्च बाल्यत्वादिति ॥ १०४ ॥

पृच्छति सति । धीशेवधिः धीनिधिः । हेमातः। अञ्जसा शीघ्रं रीणां क्षरितां रीङ् स्रवणे इत्यस्मात्। ॥ १०५ ॥

सततमेव नयः विनयो नीतिर्या यस्य तथाभूते मम तनये विषये मृषा दोषासञ्जनं दोषा-

स्यय इति महिषीमवहित्थया अनुयोज्य तात मदङ्कमूल एव तिष्ठ मापरमस्या अङ्कं गाः । ॥ १०६ ॥

इत्युक्त एव पितुरङ्कात् मातुरङ्कं जवेनारोहति तनये नयेन तौ दम्पती एव जहसतुः। ॥ १०७॥

तदनु दनुजदमनमात्रा सहसहर्षहसितमेव कृतप्रकृतप्रवृत्तितया व्रजराजः किमपि प्रास्तौषीत्। ॥ १०८ ॥

अयमेक एव वहिरेति न प्रवलो वलोऽपि तेनोरुभयोरुभयोरेव नैकाकिविहारित्वं समीचीनमतः खेलासहचराः परिचरणचतुराः परिचारकाश्च कल्पनीयाः। यथाऽमी सततमनयोः सविधचारिणो भवन्तीति विचार्य्य कियन्तो धीसचिवाः कियन्तो वालपरिचारकाश्च तदवधि तेन नियुयुजिरे ॥१०९॥

वालसहचरास्तु प्रागेव गृहाद्गृहादेव मिलितवन्तः। एवं सवलः सवालसहचरश्च सवालदासश्च धीसचिवैरुपलक्षणत्वेनैव वीक्ष्यमाणः प्रतिपुररथ्यं धूलिखेलाकौतुके कारिवरकलभ इव चपलकरदण्डताण्डवसमुद्धूतधूलीपटलेनात्मानं। परञ्चधूसरयन् सहसंवासतया शिशुतया च निः सङ्कोचमेव व्रजवालिका अपि सहखेलन्तीः सहचरवालकसाधारण्येनैव खेलया परितोषयन् कदाचिदपि ताभिस्तैरपि कलहायमानस्तास्तानपि ताडयन् ताभिस्तैश्च ताडितः कदाचिद्धसति कदाचिद्धसति कदाचित्कुप्यति न कुप्यतिच ॥११०॥

कदाचिदपि धूलीभिरेव प्राचीरपुरगृहादि निर्मिमीते कदाचिदपि पर

रोपस्तस्य सञ्जनने उत्पादने कुतुकिनीनां वचसि प्रत्ययः प्रतीतिरिति परमर्णानां परकीयरत्नानां दर्शनेसमत्सराणामिति श्रीकृष्णप्रोत्सहनेन ताः प्रत्यसूययाच स्वस्य अन्तरङ्गतायोतनं यशोदायास्तु मातृत्वेऽपि तद्वयाभावात् वहिरङ्गत्वज्ञापनम् अवहित्थया अनुयोगश्चेति स्वाङ्कमूलस्य रोचकत्वे हेतुत्रयमिति ॥ १०६ ॥

तर्हि तातः स्वाङ्कएव वद्धा वा मां रक्षिष्यति तथासति मातुरङ्के स्थातुं न प्राप्स्यामीत्यत इदानींमेव वलादितोऽपसृत्य तत्र यामीत्येष वाल्यस्वभाव ज्ञापकः कृष्णस्य मनसि विचार एष जवेन मातुरङ्कारोहणे हेतुर्ज्ञेयः नयेनेति वालकस्य नीतिरेवेयमिति ज्ञात्वेत्यर्थः ॥ १०७॥

कृता प्रकृता प्रस्तुता प्रवृत्तिर्वार्त्ता येनतस्य भावस्तत्ता तया प्रास्तौषीत् प्रस्तावमकरोत्॥१०८॥

वलोऽपि वलभद्रोऽपि। उर्वी भा कान्तिर्ययोस्तयोः। कल्पनीयाः मया कल्पयितुमर्हाः। धीसचिवा मन्त्रिणः मन्त्रीधीसचिव इत्यमर ॥१०९॥

उपलक्षयन्ति इत्युपलक्षणास्तत्त्वेन रथ्या प्रतोली ॥११०॥

के सुखे निमित्ते अलम्अतिशयेन खेलन्तं खमिन्द्रियसुखे स्वर्गे इति विश्वः। पक्षेके आ-

निर्मितं भनक्ति । तेऽपितन्निर्मितं भञ्जन्ति । पुनरपि तन्निर्मिमीते पुनरपि भनक्तीत्येवमवसरे दिवि दिविषदस्तदेव कुतुकं पश्यन्तो मनसि सकौतुहलं परामम्रृशुः । यदीयो भ्रूभङ्गः कति न जगदण्डानि शतशः प्रसूते सम्पाति क्षपयति न तत्र प्रयतते । स एवायं धूलीपुरगृहविनिर्माणरभसे भृशं श्रान्तः खिन्नस्तदपि न विरामं रचयति इति सप्रमोदमालोकयन्ति स्म । एवमतिकालखेलया गृहागमनमपि विस्मृत्य रथ्यासु खेऽलन्तं खेलन्तं बालसूर्यमिव तत्पुरपुरन्ध्रयो मातृवदतिवत्सलाः सलालित्यमभिदधति ॥१११॥

एह्येहि लाल ललिताङ्गैरस्मदीयं तत्रैव खेल शिशुभिः कियदप्यशान । इत्युक्ते एव विहसन् मृदु भाषते ऽसौ नो यामि नोऽप्ययमवसरो मम तावदास्ते ॥११२॥

इत्युक्ते सति ताभिरप्यतिशयं मातृवदतिशयाग्रहग्रहिलाभिः प्रसभेन सभेन करकमलमाधृत्य धृत्यनवस्थिततया ततया स्वगृहमानीय मानीयमानसौभाग्योऽसौ भाग्योचितया मज्जनमार्जनादिसपर्य्यया पर्य्यपातस्नेहयापरिचर्य्य स्नेहमय्यादया दयालुभिः किञ्चित्सरनवनीताद्याशयित्वा सह सहचरैर्गृहाय प्रहीयते ॥११३॥

एवं खेलन् कदाचिदनुरक्ताया व्रजभुवो महिमानं वर्द्धयन्निव जठरगतजगत्पावनायेव मृदं भक्षितवान् । तदथ बलोऽवलोक्य कृतसुकृतपाकैः पाकैश्च सहचरैः सह चरैरेव भद्राभद्रयोश्चपलमेव व्रजेश्वरीमासाद्य साद्यमानमानसो न साम्प्रतं मातरेष यन्मृदमादमादत्ते चास्माकमपि वचनं च नन्दयति तददन एव लालसामिति निजगाद ॥११४॥

सा च तदा तदाश्रुत्यश्रुत्य समञ्जसं रुषा परुषा परया रयानीत यष्टिकया कयापि भ्रुकुटिकुटिलयावलोकनमुद्रया भाययन्ती कथमदान्त मृदमत्सिमत्सितादिकं न लभ्यते मृदि कः स्वादः ॥११५॥

---

काशे अनन्तं शोभमानंतम् ॥१११॥

हे लाल लल ईप्सायां घञ् हे लालनीय इत्यर्थः । अशान भुङ्क्ष्व ॥११२॥

प्रसभेन हठेन कौतुकेन सभेन भा शोभा तत्सहितेन परमनःसत्स्यभ्रमसूचकत्वात् कृच्छ्रप्रसभस्यापि सशोभत्वमित्यर्थः । धृतौ धैर्य्ये अनवस्थिततया आततया विस्तृतया प्रेमभरेण धैर्य्यं कर्तुमसमर्थाभिस्ताभिरित्यर्थः। मा शोभा तयैव आनीयमानं सौभाग्यं यत्र सः असौ । परि सर्वतो भावेनापि अयातः प्राप्त एव स्नेहो यस्यां तया सरोदुग्धदध्यादीनाममोघनमागः ११३

पाकैर्बालकैः पोतः पाकोऽर्भको डिम्भ इत्यमरः। चरैः सहैव चपलमेव सत्वरमेव सत्वरं चपलं तूर्णमित्यमरः । हेमातः साम्प्रतं साद्यमानं दम्दमानं मानसं यस्य तथाभूतं एष न भवति यत्यस्मान्मृदम् आद भुक्तवान् । अस्माकमपि वचनं मा इति नेत्यर्थे न गृह्णातीत्यर्थः। नन्दयति बहुलीकरोति ॥११४॥

श्रुत्योः कर्णयोरसमञ्जसं परया रुषा परुषा रूक्षा । मत् मत्स.सितादिकं शर्करादिकम् ११५

न च परगृहापराधवत् प्रतारयितुं तारयितुञ्च स्वदोषमधुना शक्ष्यसि । तवाप्रज्ञोऽप्रज्ञो यस्तव सहचराश्च सर्वे साक्षिणश्च इति जगाद ॥ ११६ ॥

तदा जननीभिया कृतापन्हुवोऽपराद्धोप्यनपराद्ध इव मृषाश्रुकलाकलिलनयनो ऽनयनोदाय मातर्न मया मृदशिता सर्वेऽमी मृषा भाषन्ते ॥ ११७ ॥

यदि न प्रत्येषितदवलोकय मे मुखमिति यदायमुवाच । तदा व्यादेहि वदनमिति व्रजराजमहिषी निजगाद । समनन्तरमनन्तरहासि हासितपुरस्सरं व्यादत्तवदने निखिल सौभगवति भगवतिपारावारवारपरिवारित सप्तान्तरीपां तरीपारावारादियुत नदनदी नदनदीर्घां सवनोपवनां पवनान्दोलितलतातरुगुल्मां मृगमृगराजराजमानमेरुलोकालोकावधिविविधाचलामचलामखिलनागनागरीगणोपसेव्यमान नागनायकादिमण्डितं नागलोकञ्च कञ्चन ॥ ११८ ॥

निखिलतारका-ग्रहनक्षत्रकृत दिनभोगं नभो गन्धर्वसिद्धकिन्नरचारणविद्याधरादिविद्याधरादि मुनिगणगणनीयशोभं यशोभं नाकमपि कमपि महर्लोकादिकमन्यञ्च न्यञ्चदुदञ्चज्जीवनिकायकायमखिलमेवब्रह्माण्डमात्मानमात्मनः पतिमात्मनोऽपत्यं तमपि स व्रजलोकमालोकयामास ॥ ११९ ॥

आलोक्यच किमयं मम भ्रमः । किमयं मे स्वप्नः । किमियं देवमाया । किमिदमैन्द्रजालिकं किमस्यैव भ्रामकः शक्तिविशेष इति निर्णेतुमपारयन्ती रयं तीव्रमाप मोहस्य । तदनन्तरं तदनन्तरंहसोऽस्य वैभवमितिविज्ञाय विज्ञायत्नतोऽपि-

अप्रज्ञो योऽप्रवर्त्ती ॥ ११६ ॥

अनयनोदाय अनीतिदूरीकरणाय । अशिता भक्षिता ॥ ११७ ॥

पारावाराणां समुद्राणां वारेण समूहेन परिवारिताः सप्त अन्तरीपा द्वीपा यस्यां तां तरी नौका पारावारे तीरे आदिशब्दात्तत्रस्था मनुष्यादयस्तैर्युतानां युक्तानां नदनदीनां नदेन गर्जनेन दीर्घां मृगराजः सिंहः अचलां पृथ्वीं भूर्लोकमित्यर्थः ॥ ११८ ॥

निखिलतारकादिभिः कृतो दिनस्य भोगो ज्योतिःशास्त्रोक्तो यत्र तथाभूतं नभः आकाशं भुवर्लोकमित्यर्थः । विद्याधरादयो विद्यानां धरा धारकाः । आदिमुनिगणाः मरीच्यादय एतैर्गणनीया शोभा यत्र तं यशसां तत्रत्य सम्बन्धिनां भा दीप्तिर्यत्र तं नाकं स्वर्गम् अखिलमेव समस्तमेव ब्रह्माण्डम् । कीदृशं न्यञ्चतां कीटपतङ्गादीनाम् उदञ्चतां महेन्द्रादीनां जीवनिकायानां काया यत्र तम् ॥ ११९ ॥

इन्द्रजालं भवमैन्द्रजालिकम् । मोहस्य तीव्रं रयं वेगम् आप प्राप्तवती । अस्य वैभवमिति विज्ञायेति नाहं भ्रान्ता नापि शयाना नापि कश्चिदपि देवे सापराधा नाप्यत्र कश्चिदैन्द्रजालिकोऽस्ति किंच गर्गपुत्रस्यास्य नामकरणसमये पूर्वसिद्धं योगैश्वर्य्यमपि गर्गेणोक्तमिति वितर्कान्ते

न विस्मरन्ती यदधीनतयानतया मयेदमालोकितं स एव मे शरणं तदवलोकेन-केनचनाद्भुतचरितस्य तस्य तदलौकिकं वैभवं वैभवंच मोहयितुं समर्थमिति जानती तमेव सुतमेव सुतरामीश्वरत्वेनावगच्छन्तीच्छन्ती च पुत्रभावमुभयोरेव भयोरेवमतिभरेण भुग्ना पूर्वभावं विहाय चरम एव भावेमसज्य पुनरङ्के निधाय लालयामास ॥ १२० ॥

इत्यानन्दवृन्दावने बाल्यलीलालताविस्तारे मृद्भक्षणसक्षणोनाम पञ्चमःस्तवकः॥ ५ ॥

---

निश्चयादिति भावः। तत् विश्वदर्शनम् अनन्तरंहसः अपारैश्वर्यवेगस्य विज्ञा पण्डिता आनतया आनम्रतया तदवलोकेनेन विश्वदर्शनेन वै निश्चितं भवं महेशञ्च। इच्छन्तीच पुत्रभावामिति तथा भूतैश्वर्य्यदर्शनेऽपीयतः पुत्रभावस्य प्रभावस्यप्रावल्यं दर्शितम्। तेन देवक्या खलु ऐश्वर्य्यभावेन पुत्रभावो विलाप्यते विरोधित्वात् अस्यास्तु पुत्रभावेनैव ऐश्वर्य्यभावो विलाप्यते बलवत्त एव बाधकत्वसंभवादिति भावः। युगपदेव उभयोरीश्वरभावपुत्रभावयो र्येभे शोभे तयोः एवम् अनेन प्रकारेण अतिभरेण भुग्ना रुग्णादयोरेव कान्तिच्छटाघातेन पीडितेत्यर्थः। पूर्वभावं विहायेति तस्यागन्तुकत्वेन दौर्बल्यात्। चरमे इत्यस्य स्वाभाविकत्वेन प्रावल्यादत्रसमाहितं श्रीवैष्णवतोषिण्यां यथा तादृश तदैश्वर्य्यशक्तिरेव तु स्वयं वातमालिङ्ग्य वा तदभीष्टलीलारससम्पादनाय मातरि कोपाच्छादकभाव्यन्तरापादनेन तथा सर्वमेवास्यान्तर्विद्यते न किमपि भक्षयतीति तद्वचः सत्यापनेन च निजप्रभुसाहाय्याय विस्मयादिद्वारा मातुस्तत् प्रेमपोषाय च विश्वं दर्शितवतीति ॥ १२० ॥

इत्यानन्दवृन्दावनटीकायां सुखवर्त्तिन्यां पञ्चमस्तवकसंगमनम् ॥ ५ ॥

## षष्ठः स्तवकः ।

अथैवं शैशवकलाकौशलवान् स बालभगवानेकदाऽनेक दासीगणेषु विद्यमानेषुविद्यमानेषु कार्य्यान्तरकरणाय नियोजितेषु जितेषु निजाज्ञया ॥ १ ॥

स्वयमेव दामसमुत्कर्षकर्षण-जनित-पर्य्याय पर्यायस्तेन चलमरकतवलयनटनटनझङ्काररमुखरेणखरेणामलतरेण मदकारणरणदलिदलितकमलमलकारिणा करपल्लवेन मृणालदण्डदण्डनपण्डितेन भुजयुगलेन चाङ्गलता गलता श्रमजलकणभरेण निर्भरेण निर्भरितम् ॥ २ ॥

अलककुलाकुलायमान-भाल भा-ललितम् । पीवरकुचतटविहारहारलतान्दोलदोलत् कञ्चुलिकम् ॥ ३ ॥

अमलतरश्रुतियुगल-गलदलाव-लावण्य-सुधासुधारायमाण कर्णभूषामणि किरणमञ्जरीजरीजृम्भ्यमाण-माधुर्य्यधुर्य्यतर-भुजशिरो-भुजशिरोधिकम् ॥ ४ ॥

भाण्डस्फोटो दामबन्धोऽर्जुनमोक्षः फलक्रयः । वृन्दावने प्रयाणञ्च षष्ठे विस्तार्य वर्ण्यते ॥

सबालभगवान् मातरं स्वयमेव करपल्लवेन दधिमथनमादधानां वीक्ष्य मन्थानदण्डमादधारेत्यर्थः। विद्यमानेषु दधिमन्थनार्थमेव तत्रागत्य वर्त्तमानेषु मयैवाद्य मथनीयं युष्माभिः कार्य्यान्तरं क्रियताम् इति नियोजितेषु मथनकर्मत्याजन एव तात्पर्य्यम्। कार्य्यान्तरेऽन्यासां बह्वीनां दासीनामत्र तत्र सदा तत्पराणां सद्भावादेवेत्यर्थः । तत्र तत्त्याजने हेतुर्विदि तादृश मथनेन तादृश नवनीतोत्क्रमणज्ञाने विषये न विद्यते मानः संमानो येषां तेषु। स्वसुतलोभ्य तादृश नवनीतोत्क्रमणयोग्यता महाचतुरास् तासु दासीषु वर्त्तमानापि न संभाविता प्रेमचापल्यादेवेति भावः। ननु जनिष्यमाणं तस्यास्तत्र महाश्रमं ज्ञात्वापि दासीगणेन ततः किमित्यपसृतं तत्राह निजाज्ञया जितेषु पराभूतेषु मत्श्रममालक्ष्य बलादेता दास्य एव मथिष्यन्ति इत्याशङ्क्य तत्र तया स्थातुमपि न दीयते यात यातेति मुहुर्मुहुर्विसृज्यन्त एव किं कर्त्तव्यं ताभिरिति भावः ॥ १ ॥

करपल्लवेन कथंभूतेन दाम्नां सम्यगुत्कर्षेण यत् कर्षणम् आकर्षणमवकर्षणञ्च तस्य जनितः पर्य्याय पुनः पुनरावृत्तिस्तेन हेतुना परिसर्वतो भावेन आयस्तेन परिश्रान्तेन मदकारणेन मत्तता रूपनिमित्तेन रणन्तो गुञ्जतोऽलयो भ्रमरा यत्र तथाभूतं दलितं प्रफुल्लदलं यत् कमलं तस्यापिमलकारिणा मालिन्यकारिणा अङ्गलताया गलता स्रवता निर्भरेण अतिशयेन निःशेषेण भरितं पूरितं यस्मात्तथास्यात्तथा ॥ २ ॥

अलकानां कुलैराकुलायमानस्य भालस्य भा कान्तिर्ललिता यतस्तत् पीवरे कुचतटे विहारो यस्यास्तथाभूताया हारलताया आन्दोलेन दोलन्ती कञ्चुलिका यतस्तत् ॥ ३ ॥

अमलतरात् श्रुतियुगलात् गलन्ती निःसरन्तीच । अलावं विच्छेदरहितं लावण्यं यस्यास्तथाभूता च सुधाया अमृतस्य सुष्ठु धारायमाणाच या कर्णभूषास्थमणीनां किरणमञ्जरी तस्यास्तया वा जरीजृम्भ्यमाणम् अतिशयेन प्रकाशमानं माधुर्य्यंस्तस्य धुर्य्यतरा अतिशयेन धारका भुजशिर आदयो यतस्तत् तत्र भुजशिरसी स्कन्धौ भुजौ बाहू शिरोधिः कन्धरा ॥ ४ ॥

अधिकमञ्जुल-पृथुल-श्रोणिभार-भा-रमणीयमणी-यमित-झणझणायमानकाञ्चि काञ्चितम् ॥५॥

अतिशिथिल कवरीकलाप-कलाप-विस्रंसमान-समान-कुसुमनिकरापदेशेन तिमिर-निकररम्यमाणतारावतारावनिकृतशोभाभरम् ॥६॥

अनिवरविवर विव्रियमाण घनघोरघोषोदधिदधिगर्गरीमुखसमुच्छलदच्छल-द-क्ष-दधि शीकरनिकरनितान्ताकीर्ण स्वर्णशाटिकान्तकान्तम् ॥७॥

स्वननयनयनलोभनीय नवनवनीतनीतमानसत्वेन मानसत्वेन दधिमथनमादधानां मादधानां वीक्ष्य मातरमातरलहृदयो विरचितपयोधररसाकाङ्क्षाकाङ्क्षामतामभिनीय कुरु विलम्बं मा मथनतो मा मथ न तोदय देहि मे स्तनरसमिति सकलजनमनोमन्था मन्थानदण्डमादधार ॥८॥

तदपहाय समनन्तरमनन्तरमणीयचरितमतिकोमलं बालकं लम्बालकं तमङ्के निधाय स्तनरसंपाययन्त्यां मातरिमातरिश्वना क्षुभितदहनज्वालयालयान्तिकान्तिकाव दनाधिश्रितपयःस्थाली स्थालीनपयः समुच्छ्वसनवेगमवलोक्य तदुत्पलनाशङ्कया कयाचन भवनोदर तनयापवेशमीहित्वा हित्वा च तं मयातवत्यां मातरि ॥९॥

---

श्रोणिभारस्य भा कान्तिस्तया रमणीया च मणिभिर्यमिता जटिता च झणझणायमाना च या काञ्चिका तया अञ्चितं पूजितम् ॥ ५ ॥

कलापः कला भूषणशिल्पविन्यासः । ताराणाम् अवतारः अवतरणं पतनं यत्र तथाभूतायाः अवनेः पृथिव्याः कृतः शोभाभरो यतस्तत् ॥ ६ ॥

अनिवरपृथुलत्वात् अतिवरे विवरे विव्रियमाणो घनः मान्द्रो घोरो घोषोदधिः शब्दसमुद्रो यस्यां तथाभूताया दधिगर्गर्य्या मुखात्सम्यगुच्छलन्तोऽच्छलदक्षा न कस्यचिद्व्याजे चतुरा ये दधिशीकरनिकरास्तैर्नितान्तं सन्ततम् आकीर्णःस्वर्णशाटिकाया अन्तः कान्तः कमनीयो यतस्तत्

तादृशे नवनीते नीतं प्रापितं मानसं यया तस्याभावस्तत्वेन हेतुना मानस्य मथनवैशिष्ट्येन विलक्षणनवनीतोत्पादने अहमेव चतुरास्मीत्येवं लक्षणगर्वस्य सत्वेन विद्यमानत्वेन । मादस्य हर्षस्य धानं धारणं यस्यास्तां । क्षामतां क्षुधाक्षीणतां मथनतो हेतो र्मा कुरु विलम्बम् अतएव मा मथ मथनं मा कुरु । मन्थ विलोडने इति भौवादिकः । न तोदय न दुःखं दापय अन्यथा भाण्डादिस्फोटनेनापि त्वामुद्वेजयिष्यामीति भयदर्शनम्। सर्वमिदं तस्याः प्रेमपोषकमेव । मनोमन्था इति कर्त्तरि प्रयुक्तम् ॥ ८ ॥

तदपहाय दधिमथनं त्यक्त्वा मातरिश्वना पवनेन आत्यन्तिके वासगृहनिकटे अन्तिका चुल्ली अधिश्रयणी चुल्ल्यन्तिके स्मरः । तस्या वदने अधिश्रिता आरोपिता पयःस्थाली दुग्धपाकपात्रम् अत्रस्थस्य आलीनस्य पयसः सम्यगुच्छ्वसनं ससमस्कारेण पृथुलभवनं तस्य वेगमवलोक्य तस्य पयस उत्प्लवनाशङ्कया ॥९॥

कृतमनोऽरुणा रुषा तत उत्थाय त्वरितमेव शिलाशकलेन दधिगर्गरीं विभिद्य विभिद्यमानमनाः रोषभयाभ्यां सर्वतः सरीसृप्यमाणमथितधाराधौते प्रघनतले भवनान्तर गतो रङ्गतो विजनगतं जनगतं च यत्र भवति तदपि हैयङ्गवीनं नवीनं नवप्रयत्नेन समुत्तार्य्य कियदाशित्वा कियदवचिन्वानोऽन्वानोदितकोपस्तदादाय यावज्जननी नायाति तावदेव देवदेवेन्द्रादिवन्दितचरणो जननीभियाऽभियातः। [१०]

पलायनसपक्षपक्षद्वारेण निष्क्रम्य बहिरङ्गने रङ्गनेयचरितोऽवहननसमयान्य समयान्यथाभूतावस्थितरुदूखलस्य खलस्य निहन्ता हन्ताऽवलम्ब्य पृष्ठं चकित चकित एव शाखामृगशावकानवकानवनीतं तदाशयन्नवतस्थे ॥ ११ ॥

अथ पयःस्थालीमवतार्य्य तार्य्यमाणजगज्जना निजसौभाग्येन भाग्येन केनापि लब्ध तादृशतनयानयासादितयशोभारा यशोभारामणीयकवती तनयमङ्के कर्त्तुमुपसीदन्ती च यथा स्थानमवस्थापितमनालोक्य क्व गत इति तमनुसन्दधती दधती च मनसि खेदं वीक्ष्य च पुरतो। भग्नदधिगर्गरीगर्गरीयोऽगणितमथितधाराधवलितवलितपच्छिल्यं भवनोदरं नोदरंहसा शकलितकर्पर परःशतञ्च किमिदमहोऽकस्मात्कस्माद्धनेयं दधिगर्गरीति गीतिनिर्णयं कर्त्तुमशक्नुवाना शिलाशकलाकलनेन तस्यैवेदं दुर्ललितमिति नासिकाशिखरनिहितललितवामतर्जनीकं क्षणमवलोकयन्ती स्मयमाना ॥ १२ ॥

---

तद्द्रवद्रवस्तुन्यपि काप्यपेक्ष्यता मया पुनः सोऽपि समेत्युपेक्ष्यताम्। प्रेम्णो विचित्रापरिपाट्युदीरिता बोध्या तथा प्रेमवतीभिरेव या अत्र दुग्धावर्त्तनकारिण्योदास्योऽपि तत्राविचक्षणता दोषारोपेण पूर्ववदहमेव स्वस्तनयमक्षणियं दुग्धमावर्त्तयितुं जानामि इत्यभिमानेन तया विसर्जिताएवेति ज्ञेयम्। रुषा क्रोधेन हेतुना कीदृश्या कृतमनोव्रणया व्रणो ऽस्त्रियामीर्मरुरि त्यमरः। रोषभयाभ्यां विशेषेण भिद्यमानं मनो यस्य सः। ततश्च प्रघनतले तथाभूते सति। अवचिन्वानः तत्तत् पात्रेभ्योऽग्रमग्रं भागमुत्थापयन् तत् नवनीतम् आदाय गृहीत्वा कीदृशः। अनु तदनन्तरं आसम्यक् प्रकारेण नोदितः दूरीभूतः कोपो यस्य सः। कोपस्य स्वकार्य्यनाश्यस्वरूपत्वात्। यदुक्तं कामस्यान्तन्तु क्षत्तृड्भ्यां क्रोधस्यैतत् फलोदयादिति आद्या दधिगर्गरीभेदेने सत्यपि पूर्वकोपशेष आसीदिति द्योतितम् ॥१०॥

पलायनस्य सपक्षं सहाययुक्त पक्षद्वार खिड्किीद्वार इति ख्यातं तेन पक्षः सहायेपी त्यमरः। रङ्गे नाट्यादिस्थले नेयम् अभिनेतुं योग्यं चरितं भाण्डस्फोटनपलायनादिकं यस्य सः। अवहननसमयादन्यस्मिन् समये अन्यथा भूता अधोमुखतया अवस्थितिर्यस्य तस्य पृष्ठमवलम्ब्य चकित चकित इति मातुरागमनवर्त्मनि दत्तनेत्रतया सावधान इत्यर्थः। आशयन् भोजयन् ॥ ११ ॥

यशश्च भा कान्तिश्च ताभ्यां रामणीयकवती। नोदरंहसा निःक्षेपवेगेन शकलितानां खण्डितानां कर्पराणां परः शतञ्च वीक्ष्य परः शताद्यास्ते येषां परासंख्या शतादिकादित्यमरः। अशक्नुवाना इति ताच्छील्यवयोवचनशक्तिषु चानशिति चानश् शिलाशकलस्य शिलाखण्डस्य आकलनेन दर्शनेन लिङ्गेन ॥ १२ ॥

स्मयमानाभ्यामपि समवदातहृदया दयालुरपि कृतकृतकमतिघाऽमतिघातमहसौ महसोत्सूयमानमानस्य मानस्य तस्य सुतस्यान्वेषणाय यदा बहिरियाय ॥१३॥

सदैव तामालोक्य सहसा सह साध्वसेनोत्थिता चपला पलायनपरा ॥ पराक्रमेण क्रमेण सजवं धावमानाऽवमाना शङ्कमाना सङ्कोचनश्यामलाम्तनन्धयी मोहनदेवता त्वरितमनुधावन्त्या जनन्या जनन्यायविदापि निजगदे जगदेकधूर्तमाधाव माधावेति ॥ १४ ॥

स च पलायमानो मानोन्नतमना मनाग्विवर्त्तितग्रीवमायाति न वेति नवेऽतिभये मातरमातरलितमनसमाधावमानां माधावमानाङ्गीमालोक्य धावतिस्म ॥१५॥

ततश्च— । धावं धावमतित्वरं स चकितः पश्यन्मुहुर्मातरं ।
ग्रीवाभङ्गमनोहरं तरलिते पश्चाद्दृशौ विक्षिपन् ।
स्तोभक्षुब्धतया न धावितुमलं यावत्तदा कातरः ।
शीर्तः शीतलयाञ्चकार कृतकक्रोधं जनन्या मनः ॥१६॥

साप्यूचे धूर्त कत्येवं धाविष्यसि क्व वा गन्तव्यं तन्माधाव तिष्ठ । तया तथोक्ते यदि न ताडयसि करतश्च यष्टिं पातयसि तदा मापरं धावितव्यमित्युक्तवन्तं दूरत एव स्थितम् ।

सापुनरूचे–ताडने यदि तवातिशयो भीस्तत्किमत्र दधिभाण्डमभाङ्क्षीः ।
मातरेवमपरं न करिष्ये पातय स्वकरतो वत यष्टिम् ॥१७॥

तदाकर्ण्य मनसा स्मयमाना बहिःकृतकोपा निकटमनुसरन्ती धर्त्तुं यदारेभे तदैव पुनरपि सत्वरं धावमानः पुनरनुधावमानां मातरमवलोक्य कातरमनाः ।

पुनरूचे—मातः ! पातय पाणितः खरतरां यष्टिं नमत्ताडनं ।
कार्यं चेति कुरुष्व सत्यमनघे तद्यामि ते सन्निधिम् ।
इत्याकर्ण्य सुतस्य कातरवचः सा पाणितोऽपातय ।
द्यष्टिं दूरत एव वीक्ष्य तदसौ विश्रान्तवान् धावनात् ॥१८॥

मुग्धस्य शिशोरपि कथमीदृशी प्रगल्भता अभूदिति स्मयो विस्मयः । मयि सर्वत्र महासावधानायां सत्यामप्येवं कर्त्तुमशकदिति मानो अहङ्कारस्ताभ्यां हेतुभ्यां सद्भ्यामपि सम्यक् अवदातं शुद्धं हृदयं यस्याः सा । कृता कृतका कृत्रिमा प्रतिघा क्रोधो अगर्वो वा यया सा प्रतिघा रुट्क्रुधौ स्त्रियामित्यमरः । नास्ति प्रतिघातो यस्य तन्महो यस्य तस्य महेलौघाचार्भ्यामुत्सवे सोऽसूयमानोऽतिशयेन जायमानो मानो ज्ञानं गर्वो वा यस्य तस्य ॥ १३ ॥

जनन्यायविदा जनन्या जनानां न्यायं नीतिं वेत्तीति तया ॥ १४ ॥

मनेन मानेन उन्नतं मनो यस्य सः । आयाति नवा आयाति माता इति नवे नूतने अतिभये सति मा श्रीस्तया धावमानानि निर्मलान्यङ्गानि यस्यास्तां मातरमालोक्य ॥ १५ ॥

धावितुं यावन्न अलं न समर्थः तावत्तदा कातरः सन् शीर्तः अलसः शीतः । कालो ऽलसो-ऽनुष्ण इत्यमरः कृतकः क्रोधो यत्र तत् मनः । ॥ १६ ॥

श्यामः प्रत्यूचे मातरेवमित्यादि ॥ १७ ॥ सत्यं शपथम् । सत्यं शपथतथ्ययोरित्यमरः १८

  

एवमति कौतुकं दिवि दिविषदो विलोकयन्तः परमविस्मय स्मयजुषः परस्परमूचुः ॥ १९ ॥

अहोऽतिचित्रं ।

यद्ब्रह्मणोऽपि च परार्द्धयुगावसाने वैकल्यकारि परमं किमुतोऽपरेषाम् ।
तद्दैर्द्द भयं नियतमेव यतो बिभेति सोऽयं प्रसूकलितयष्टिकृतेऽतिभीतः ॥ २० ॥

तदाश्वसित समीरणान्दोलितकञ्चुलिकाञ्चलाश्रमजलकणालङ्कृतवदनसरोजा. श्लथमानकचकलापाक्षणधावनावसन्नपदकमला तनयस्य करं यदा गृहीतवती । तदा सकातर्य्यं मातर्मा ताडयिष्यसि माताडनीयमिति गलदश्रुकलाकलिलमीक्षणकमलयुगलमभिनवपद्मपलाशकोमलाभ्यां करतलाभ्यां विमृजन्मन्दमन्दगद्गदकलवचनसुधाविन्दुभिः स्यन्दतुन्दिलवदनचन्द्रबिम्बो भीतभीत एव रुदन् विलोकनीय आसीत् । तदैव माता मनसि विचारय मास । क्षणमयं बद्धापरिरक्षणीयः । यद्ययं न बध्यते तदा कदाचिदमर्पणोऽयममर्षवशात् यत्र कुत्रापि वनादौ गन्तुमर्हति । तत्संप्रति बन्धनमेव करोमीति विकसित चारुदन्तं रुदन्त तमादाय २१

तस्यैवोलूखलस्य सविधमागम्य गम्यमानेतरमहिम्नो विहितानुबन्धाय बन्धाय दासीगणमाहूय अयि कुरङ्गवति!अयिलङ्गवति लुलितललितपट्टदामानमानय द्रुतमिति ।२२।

ताभ्यां समानीतया तया जगदेकबधुंबन्धुं समुद्यतायां मुद्यतायां व्रजेश्वर्य्यां वात्सल्यसारमणीषु रमणीषु सकलसम्पल्लीलासु पल्लीलासु कासुचन समागतासु ताभिःसमं समुपसन्नेषु नवालकेषु बालकेषु यदभूत्तदति चित्रम् ॥ २३ ॥

तद्यथा । आद्य दाम कटीरवेष्टनविशौवीक्ष्यमगृह्यङ्गुलन्यूनं तत्र जुगुम्फ यत् परमहो तच्चाभवत्तादृशम् । तत्तान्यच्चजुगुम्फ यत्सुकृतिनी तच्चेदृशञ्चेदहो व्रजैवाजनिह्रासवृद्धिरहिता सा द्व्यङ्गुलन्यूनता ॥ २४ ॥

परमविस्मयेन स्मयजुषः मन्दहास्ययुक्ताः ॥ १९ ॥ परार्द्धयोर्युगस्य युगलस्यावसानेऽन्ते २०
अमर्षणः क्रोधनः ॥ २१ ॥

गम्यमानात् इतरः अगम्यमानः दुर्विगाह्यो महिमा यस्य तस्य कृष्णस्य बन्धाय बन्धनार्थं विहितो योऽनुबन्धः उपायस्तस्मै तं सम्पादयितुमित्यर्थः। क्रियार्थोपपदस्येत्यादिना चतुर्थी । लुलितां मार्जितां ललितां कोमलां पट्टदामानं नतु कर्कशामित्यर्थः ॥ २२ ॥

ताभ्यां कुरङ्गवतीलवङ्गवतीभ्यां तया तादृशपट्टदाम्ना जगतामेकं मुख्य बन्धुमिति बन्धनानर्हत्वेन विरोधः । मुदि आनन्दे दाम्नः कोमलदर्शनेन जनितेइत्यर्थः युतायां रतायां पल्लीं नगरं लान्ति वासार्थं स्वीकुर्वन्तीति तासु पुरवासिनीष्वित्यर्थः । नवालकेषु नवीनालकयुक्तेषु ।२३।

द्व्यङ्गुलन्यूनमिति तत्पुरुषस्याङ्गुले रित्यादिनाऽच समासान्तः। तेषां सर्वेषामेव दाम्नां सा द्व्यङ्गुलन्यूनता व्रजतुल्या अजनि अभूत् ह्रासवृद्धिराहित्यसाधर्म्यात् । अथ निज प्रभोर्हठवत्ता रक्षणाय विभूता शक्तिर्यत्र सा दर्शिता इतिभावः ॥ २४ ॥

ततस्तस्याः कौपावेशमुपश्यन्तीभिः पुरपुरन्ध्रीभि सा निजगदे ॥ २५ ॥
जगदेकधन्ये चित्रमिदं यदतिपरिमितपरिमाणेन कनकमेखलासूत्रेण वेष्टितमिदमस्य कटितटं तदधुना गृहस्थितेन यावतैव दाम्ना न परिमीयते सर्वमेव दामनिकुरम्बं द्व्यङ्गुलन्यूनमेव सम्पद्यते तदवश्यमेव केनापि रहस्येन भवितव्यं तदितः परमेव विरमेति तद्वचनाविरतौ विस्मयोत्कर्षपरवशया अवधिरस्यावश्यमेव विलोकयितव्यइ ति कृतनिर्बन्धया सस्मितमूचिरे ता अपि। अयिमद्गृहेनैतादृशान्यपराणि सन्तिदामानि भवतीनां गृहेषु यानि वा सन्तितान्यप्यानयतेति ततश्च ॥ २६ ॥

न क्रोधान्न च वैरतो व्रजपुरेश्वर्य्या न च त्रासतो
यासा येषु गृहेषु सन्ति परतो यावन्ति दामान्यथ।
तावन्त्येव हि ताभिरत्र परमादा नन्दकौतूहलै
र्लोकातीतचरित्रवीक्षणवशादानिन्यिरे तत्पुरः ॥ २७ ॥

तमथ तथैव शैशवनाट्य परिपाट्यनिशकृत नयनकमलजलकणनिपात परिमृजा दुःस्थितकर सरसिजमतिगद्गदगदन कलभास्वरस्वरमतिमृदु मधुरतरं रुदन्त मपि २८
कपटरोपावेशेन पुनस्तानि सकलानि कलानिपुणतया प्रत्येकमेव संग्रथ्य कटितटविघटितपूर्वसंग्रथितदामानि संयोज्य बध्नती ग्रन्थती गूढतरमन्तः कुतुकेन विलसन्तीषु हरिणनयनासु सौहृदेन कृष्णरोदनमालोक्य चारुदत्सु बालकेषु पुरेव सर्वाण्येव द्व्यङ्गुलन्यूनान्यवलोक्य ॥ २९ ॥

उप आधिक्ये नश्यन्तीभिर्दूरीकुर्वतीभिः शो तनूकरणे इत्यस्य रूपम् ॥ २५ ॥

केनापि रहस्येनेति अस्य ललाटपत्रे विधात्रा बन्धनं न लिखितमित्यनुमीयत इतिभावः विरमेति तदन्यथाकरणं त्वया अशक्यमितिभावः ॥ २६ ॥

सन्ति साधूनि कोमलपट्टमयानीत्यर्थः तत्पुरस्तस्या यशोदायाः अग्रे ॥ २७ ॥

अथपुनरपि तंबध्नती सा सर्वाण्येव दामानि द्व्यङ्गुलन्यूनान्यवलोक्य पुनर्बन्धनोपायं चिन्तयामासेत्यन्वयः। शैशवनाट्यस्य परिपाट्या अनिशकृता निरन्तरमेवकृताया नयनकमलयोर्जलकणानां निपातस्य परिमृजा परिमार्जनं तया दुःस्थिते करसरसिजे यस्य तम् अत्र शैशवस्य नित्यत्वेऽपि मुख्यत्वेन गत् प्रत्यापनं तदेव कपटं मुख्य मन्तु वास्तुतः कैशोरस्यैव यदुक्तं वयसोविविधत्वेऽपि सर्वभक्तिरसाश्रयः धर्मीकैशोर एवात्र नित्यनानाविलास वानिति अत्राप्यग्रे विविच्य समाधास्यते इति ॥ २८ ॥

तानि ताभिरानीतानि दामानि। अन्तः कुतुकेनेति कृष्णस्यादृष्टगतं बन्धनं नास्तीत्यस्म द्वचनममानितवत्या व्रजेश्वर्य्याः प्रौढिः कियदवधिर्भविष्यति इत्यद्य पश्याम इति। चारवो दन्ता येषां तेषु रोदनार्थे मुखव्यादाने दन्तानां प्रकाशात्। बालकेषु सुबलादिषु कृष्णवयस्येषु २९

श्वसनसमीरणवेगवेपमानवक्षःस्थलमवयवकिशलयसमुद्भ्रान्तकान्तश्रमजलकणभरनिर्भरमाकुलविगलत्कवरीभारविस्रंसमानमालतीदाम श्रममात्रशेषकोपफला निष्फलप्रयासेव पुनर्बन्धनोपायं चिन्तयामास || ३०. ||

ततश्च—निःस्यन्दानि विलोचनानि विगलत् श्रद्धानि गेहं प्रति।
स्वान्तानि प्रहतौः समस्तविषये संस्कारशेषा अपि।
निर्दामानि बभूवुरेव भवनान्याभीरवामभ्रुवां।
मात्रा कौतुककुप्सयाऽद्भुतशिशोर्बन्धानुबन्धे कृते || ३१ ||

न क्वचिदपि केनापि चिद्बन्धुं शक्यते नचानन्दो नच ज्ञानं न महोऽपि तत्कथमहोपि तत्कथमहो चिदानन्दज्ञानमहोमयवपुषं तमसौ बध्नातु || ३२ ||

तथापिहि—अन्तर्यस्य न विद्यते नच बहिर्या नैव हिश्चित्तयो।
नैन्द्रत्वेन महस्तया च सदृशः पूर्णोऽपरिच्छेदवान्।
नो पूर्वं न परश्च यस्य तमहो माता कथं कोपतो।
बध्नीयादिति तत्कृपैव कृतिनी चिन्तान्विता वर्त्तते||३३||

अथ तथापि बन्धनिर्बन्धनिर्भरपरिश्रमलुलितकलेवरां मातरमभिवीक्ष्य सञ्जातकरुणो भजज्जनपरिश्रमो निजकृपा चेति द्वाभ्यामेवायं बद्धो भवति नान्यथे-

---

श्वसनसमीरण इत्यादिना श्रमबाहुल्यम् अवयवकिशलयेत्यादिना श्रमस्य बहुकालव्यापित्वम्। आकुलविगलदित्यादिना बन्धनार्थप्रयत्नैकाग्रमनस्त्वं व्यञ्जितं। श्रममात्रमेव शेषः अवशिष्टं कोपस्य फलं यस्याः सा || ३० ||

कौतुकेन कुप्यतीति कौतुक कुप् तस्याभावस्तत्ता तया हेतुना अद्भुतशिशोरिति नच देहो वर्द्धते अतिपरिमितपरिमाणेन कनकमेखलासूत्रेण वेष्टितमस्य कटितटमिति पूर्वोक्तेः नच दामान्यपि ह्रसति यावतैव दाम्ना सर्वमेव दामिनि कुरुध्वमित्याद्युक्तेः प्रत्यक्षमेव यथारूपत्वेन तेषां दृश्यमानत्वात्। अतः शिशुनिष्ठमेवाद्भुतत्वमिति || ३१ ||

अत्र समादधाति। नक्वचिदिति चित् चैतन्यं ज्ञानम् आनन्दनिष्ठमनुभवम् || ३२ ||

उक्तमर्थमेव विशदयन् प्रस्तुतोपयोगित्वेन शक्त्यन्तरप्रादुर्भावमाह अन्तरिति बन्धनं बहिः परीतेन दाम्नान्तरावृत्तस्य संभवति। यस्य अन्तर्न विद्यते बहिश्च न विद्यते। तत्र क वा दाम्ना स्थातव्यं। किं वा तेन वेष्टनीयम्। अत्र अन्तर्भावे बहिरभाव एव हेतुर्बहिरभावे च अन्तर्भाव इति द्वयोः परस्परसापेक्षत्वेन सिद्धत्वात् किन्तु सर्वेषामेव वस्तूनाम् अन्तर्बहिश्चसदृशस्तुल्य उभयत्रापि विद्यमानत्वात् किञ्च पूर्वापरविभागवद्वस्तु पूर्वतो दाम धृत्वा परतो बध्यते यस्य न पूर्वं न परञ्च तं कथं बध्नीयादिति। अत्र पूर्वं मातर्न मत्ताडनादिकं कार्य्यमित्यादिकाकुभिः कारित सत्याया अपि मातुः स्वबन्धनव्यवसायमालोक्य कृष्णस्य कुपित शिशुहठवत्ता स्वाभाव्येन बन्धनाऽसम्मतौ जातायां मत्प्रभुं का बध्नीयादिति तत्र विभुता शक्त्या स्वय-

ति यावत्तद्वयाऽनुत्पत्तिरासीत्तावदेव दाम्नां द्व्यङ्गुलन्यूनतासीत्संमत्युभयमेव जातामिति पुनरुद्यममात्रे तया क्रियमाणे एव बन्धनमुरीचकार ॥३४॥

ततः सिद्धार्थैव सा । सहचरबालकान् प्रति भो भो भवद्भिरवलोकनीयोऽयं स्वयमात्मानं मोचयित्वा यदि पलायते तदाऽहमाकारणीयेति प्रोच्य पुरपुरन्ध्रीभिः सह भवनमध्यमाविवेश। गतायां च तस्यां विगतरोदनमालिनिमाननचन्द्रं प्रसन्नमादधानो जननीकृतो बन्धः कार्य्यान्तरोपयोगी भवत्विति परमयोगीन्द्रस्य निजपरमप्रियभक्तस्य नारदस्य नारदस्य वचनामृतममृतमेव कर्त्तुं तदभिशापलब्धं तरुजन्मनोर्धनदतनुजन्मनोर्नलकूबरमणिग्रीवयोरनुग्रहग्रहिलमना मन्दमन्दमुदूखलं विकर्षन् जानुकरचङ्क्रमणेन तयोरभ्यासमभ्याययौ ॥ ३५ ॥

तदनु सहचरबालका अपि चलितवन्तो दूरे सदसत्तोरिव एकमूलयोः । ज्ञानकर्मणोरिव पृथक् पृथक् काण्डयोः सामयजुषोरिव बहुशाखयोः । महाराजकीर्त्तिप्रतापयोरिव विदूरविस्तारयोर्गिरिवरघनवरयोरिव महासारयोर्वर्षाशरत्कालयोरिव बहुतराब्दयोः । ब्रह्माण्डविराड्विग्रहयोरिव महास्थूलयोः । भीमार्जुनकार्त्तवी-

मेव प्रादुर्भूते ततश्च तथापि बन्धननिर्बन्धाऽनिर्वृत्ति अतिश्रमञ्च मातुरालोक्य कृष्णस्यैव स्वप्रौढित्यागेच्छायां विभुताशक्त्या तत्रैवान्तर्भूतम् । कृष्णतद्भक्तयोर्मध्येभक्तस्यैव प्रौढिर्बलवत्त्वदर्शनात् । स्वनिगममपहाय मत्प्रतिज्ञामित्यादिरिति । ततश्च मातुः श्रमदर्शनजनितस्नेहपरवशतया अधुना मम बन्धनमेव ममसुखदमित्याकारायां मनोवृत्तौ कृपाशक्त्या शक्त्यन्तरवृत्तिपराभाविन्या प्रादुर्भूतमित्याह । तत्कृपैवेति कृतिनी पण्डिता अतिविरुद्धमपि समाधातुमित्यर्थः ॥ ३३ ॥

न्यूनतायां द्व्यङ्गुलमात्रत्वे रहस्यप्रदर्शकं निदानमाह। भजज्जनेपरिश्रम इति सिद्धसाधकतारतम्येन श्रमस्याल्पत्वे तारतम्यं ज्ञेयं तथानुसारेण कृपाया अपि तारतम्यं ज्ञेयं श्रमत्वञ्च लोकप्रतीत्येव जातरतिषु भक्तेषु कृष्णसम्बन्धेन तस्य सुखमयत्वे नैवानुभवात् द्वाभ्यामिति प्रथमो भक्तनिष्ठः द्वितीयः कृष्णनिष्ठो गुणस्ताभ्यां हेतुहेतुमद्भ्यां मित्यर्थः। तया यशोदया॥ ३४ ॥

नारदस्य न्द विक्षेप इत्यस्माकारं तयोर्मदिराकृत विक्षेपं श्यति शापव्याजेन खण्डयतीति तस्य यद्वा नृनय इत्यस्य रूपं नीतिप्रदस्य इत्यर्थः । ऋतमेव सत्यमेव अभ्यासं निकटं। प्रणयरमनाया तन्मानसोदूखलान्तः श्वपचमपि निबन्धो मोचये मृत्युपाशात् । विधिमपि परिबन्धान्नीदर्श चेदयन्दामणि मपि नयकारगारमध्ये क्षिपामि । इतिवन्मम बन्धस्यैव यन्मोचकत्वं मतामि हजनन्यां सार्थकत्वं प्रयाति । तदुपपुरभुवो द्रागर्जुनौ मोचयामीत्यमृशदिवमुकुन्दस्तत्समीपं जिहानः ॥ ३५ ॥

सदसतोः स्थूलसूक्ष्मतत्त्वयोः एकमूलयोर्द्वयोरेव प्रकृतिपुरुषमयत्वात् तुल्यकारणकयोः विस्तारो विस्तृतिः पक्षे विटपःविस्तारोविटपोऽस्त्रियामित्यमरः। महासारयोरिति गिरिवरे सारः स्थैर्यं घनवरे आसारो धारासम्पातः महीरुहयोः सारो मज्जा इति बहुतराब्दयोरिति वर्षासु अब्दाः मे-

र्ययोरिवार्जुननामधेययोर्नकुलसहदेवयोरिव यमयोर्महीरुहयोः समीपमुपसर्पन्तं तमालोक्य दिनकरकिरणासहिष्णुतयानयोर्मूलमवलम्ब्यत इति यदा वितर्कयाम्बभूवुः ॥ ३६ ॥

तदैव दृश्यमान एव तयोर्मूलमध्यमध्यस्य तिर्यक्कृतोलूखलः खलहन्ता स आश्चर्यबालकोऽवालकोऽमलवपुरपूर्वचित्रचरित्रो विना प्रयत्नेनैव तावदुलूखलसंघट्टनतः समूलमुन्मूलयामास ॥ ३७ ॥

एवं तन्नामकीर्त्तनेन सवासनेहं दुःसङ्घे इव तेन समुन्मूलिते तरुद्वये जगदण्डभाण्डविवरवर्ती सकलशब्दनिर्वापकः कश्चन प्रलयघनघटानिर्मुक्तमहाशनिनिकरभैरवारावानुकारी मडमडेति ध्वनिविक्षेपः सविशेषमुत्पपात। पतितयोश्च तयोर्मध्य एव स उलूखलनिबद्धस्तादृशेनापि भैरवेण रवेणनतरामुद्विग्नमनामनागपि नचकितः प्रसन्नवदनस्तयोरात्मानाविव मूर्त्तिमन्तौपरमतेजस्विनौ दिव्यमूर्त्ती पुरुषावालोकयामास। तावपि शापनिर्मुक्तौ नित्यमुक्तमपि बद्धं नित्यशुद्धमपि नवनीतापहारदूषितं जगद्बन्धमोचकमपि मातृवात्सल्येन स्वीकृतबन्धं तमभितुष्टुवतुः॥ ३८ ॥

जय जय सच्चिदानन्दघन! घनघटामेदुर! दुरवगाहलीललीलयाकृत धरणितलावतरण। रणसर्वदानवपराभव भवत् पटिमचटुल भुजबल ॥ ३९ ॥

जवलोत्खात महार्जुनद्वन्द्वनिर्द्वन्द्वनिर्भरपुरुरूप कृपणजनवत्सल जनवत्सललितविलासव्रज व्रजपुरमङ्गलावतार तारकेशक्लेशकर वदनबिम्बबिम्बबन्धूकरुचिर मधुराधर धरणितलालङ्कारकार ॥ ४० ॥

कारणहीनकृपा कृपाणलतिका लूनयाऽनाद्यविद्ययानन्दितमतिमज्जन ॥ ४१ ॥

घाः शरदि अपां दा शुद्धिः दैप शोधन इत्यस्मादङि अब्दा महीरुहयोः अब्दाः तद्द्वयोः परिच्छेदकवत्सराः ॥३६॥

अवगता व्यस्ततया लम्बिता अलकाश्चूर्णकुन्तला यस्य सः अमलशरीरः। संघट्टनतः संचालनात् ॥३७॥

प्रलयकालीनाभिर्मेघघटाभिर्निर्मुक्तानां निसृष्टानां महावज्रप्रकराणां यो भैरवो भयप्रदः आरावो ध्वनिस्तम् अनुकर्त्तुं शीलं यस्य सः ॥३८ ॥

रणे युद्धविषये सर्वदैव नवा अतिबलिष्ठत्वान्नवीना इव सर्वे दानवास्तेषां पराभवानिमित्ते भवत् उत्पद्यमानं पटिम्नि चातुर्य्ये चटुलं त्वरायुक्तं भुजबलं यस्य हे तथाभूत ॥३९॥

जलवत् लोकानुकारी सललितो विलाससमूहो यस्य ॥४०॥

कारणहीना निर्हेतुका कृपैव कृपाणलतिका खड्गलतिका तया लूनया छिन्नया अनादिरूपया विषयाहेतुना आनन्दिता मतिमन्तो जना येन ॥ ४१ ॥

मतिमज्जन निर्विप लीलाऽकूपार! पारमहंस्यपथाधिगम्यचरणकमल ! कमलज-शितिकण्ठादि कण्ठाभरणीकृत गुणगण! गणनातीत लोकोत्तरप्रभाव! प्रभावहुल! वहुललितविहार ! हारविलसद्वक्षःस्थल! स्थलकमलविमलपदयुग ! युगचतुष्क-कृतांशावतार! तारकावदगणेयनामरूप! निर्मलयशोवदात! ॥४२॥

दातरभिमतानामभिमतानामखिललोकनाथ! ॥ ४३ ॥

नाथ नमस्ते नमस्ते जगति समस्ते समस्ते कोऽपरः परमपुरुष! तव कुहकं कुह-कं न मोहयति दुर्घटघटनचातुरी चाऽऽतुरीकरोति कस्य न मनो मनोरम!॥४४॥

मूर्त्तानन्द नन्दनन्दन नन्दनवनविहारिणां मुकुटमहामारकत ! कतमो भवन्त मुत्तमश्लोकमुपश्लोकयितुमर्हति ॥ ४५ ॥

त्वमसि मूर्त्तामूर्त्तानन्दत्वेन व्यक्ताव्यक्ताकारतया नन्दयसि निजभजनकारिणो अध्यात्मविदश्च। तेन निरर्गलगलदमन्द चिन्मकरन्दमन्दाकिनीमेदुरे तव चरणा-रविन्दे विन्देव रतिमरातिमपाकुरु॥ ४६ ॥

किञ्च—वाञ्छावहे किमपि नोऽपरमार्त्तवन्धो त्वत्पादपङ्कजपरागनिषेविसङ्गात्।
शापोऽपि येन्मुनिपतेरभवत् प्रसादे केनाद्रियेत तदहोमहतां प्रसङ्गः।
योगऽस्तु ते स्तुतिषु तावकपादपद्मध्याने मनस्तव कथाश्रवणे श्रुती च।
किं भूरिणा वत हृषीकपतेस्मदीयैः सेवारसेन रसिकोऽस्तु हृषीकवर्गः।
देवार्पिणा तव पदाब्जमधुव्रतेन भूयानकारि वत नोऽशपताप्रसादः।
लीलालवोढजगदण्डपरस्सहस्रो येन त्वमक्षिविषयोऽद्भुतवालखेलः॥४७॥
के वर्णयन्तु भगवन्! भवता जनन्योः सौभाग्यमेतदिति भूरि ययोसि वद्धः।
यस्यैकलेशशतभागमपीह नापुर्व्रह्मा शिवः शतमखश्च महर्षयश्च।
नेज्ञानिनां सकलवेदविदां च भूमन्! योगैकनिष्ठमनसां च भवान्सुखापः।
तेषांमतीव सुलभस्त्वमसीह येषां नन्दात्मजे त्वयि रतिर्नववालखीले ॥४८॥

---

मतेर्वुद्धेर्मज्जनं आप्लावो यत्र सच निर्विषयो विषयातीतश्च लीलासमुद्रो यस्य समुद्रे ऽब्धिरकूपार इत्यमरः। निर्मलैः यशोभि रवदातश्वेतक्रितेत्यर्थः ॥ ४२ ॥

अभिमतानाम् अभिमानविषयानाम् अभिमतानाम् अभीप्सितानां दातः हेदायक! ॥४३

नमस्ते नमस्ते इति हर्षेण द्विरुक्तिः। समस्ते जगति ते तव समः अपरः त्वमेव त्वत्सम इत्यर्थः। तत्र हेतुः तव कुहकं माया कुह कुत्र कं न मोहयति कुत्रेत्यर्थे कुहेत्यव्ययम् आतुरीक रोति व्याकुलीकरोति ॥ ४४ ॥

उपश्लोकयितुं श्लोकैरुपस्तोतुम् ॥ ४५ ॥

मूर्त्ता मूर्त्तेत्यादिधासंख्येनार्थो ज्ञेयः विन्देव लभेवहि ॥ ४६ ॥

लीलालवेन ऊढम् आत्मनि धृतं जगदण्डानां परस्सहस्रं येन सः तथाभूतोऽपि अद्भुता वालखेला यस्य सः ॥ ४७ ॥ यस्य सौभाग्यस्य ॥ ४८ ॥

तदऽनुजानीहि नाथ ! नाथय नौ मनोरथं यथा भवदीय चरणारविन्द एव रतिमुद्वहन्तौहन्तौचित्येन प्रारब्धफलमुपभुञ्जानौ समयं गमयावहे ।४९।

इति यावदन्तर्हित्य तौ दिशमुत्तरामुपययतुस्तावदेव देव दिङ्नागनागपुरनागरीवाधिर्य्यकारिणा त्रासितघोषेण घोषेण तेन पततोर्लब्धशापसंयमयोर्यमयोरर्जुनयोर्गतरसा तरसा सैव वालवृद्धनरनारीसंहतिर्व्रजेश्वरीच । वितर्कं पुरस्कृत्य कृत्यपराङ्मुखहृदया हृदयारूढपरमशङ्कया कयाचन तत्रैवोपससाद ॥ ५० ॥

आगत्य च भगवते वालकृष्णाय दण्डवत्प्रणामर्थं पतिताया भुवो हस्ताविव पातालविवराद्युगपदूर्द्ध्वमुत्थाय पृथग्गियासन्ताविव जगराविव भगवतैव युगपत् पातितावादिदैत्यौ मधुकैटभाविव पतितौ महाद्रुमावन्तराऽन्तराय रहितमऽनाकुलमकुतोभयंकुतोऽभयं वितरन्तमिव तं वालमुकुन्दं मुकुन्दं निधिमिव विलोकयन्तः ५१

किमिदं किमिदमहो विनावात्यया ऽत्ययासादनेन भुवि निपतितावेतौ महार्जुनौ कस्मादकस्मादयं वोभयतोभयतोदकरावेतावन्तगान्तरालेख्यगतं नवपयोदशकलमिव शिशुरयं समुज्जिहीते तेन भाग्यं नोऽधिकतरं वलीयो यदयं निराकुल एवास्ते।५२।

किमेनयोश्चिरकालीनतयोपनतयोपप्लवकारिण्या जरवत्तरतयामूलमेवविजीर्णम् । तेन निजविस्तारभारेणैवानयोर्निपातः । नच तथा । मूलमनयोः सरसमेव समे वहुलशिफानिवहे स्निग्धता स्थूलता च इति मीमांसमानेषु समानेषु सुखदुःखाभ्यां व्रजजनेषु व्रजपुरपुरन्दरोऽदरोदितस्मित सुधालेशपेशलास्यं लास्यं कुर्वतैव मनसा त्वरमाणेन पितरमालोक्य समुल्लसन्तमुल्लपन्त वालकृष्णं मोचयित्वा

---

नौ आवां मनोरथं वाञ्छितं नाथय याचय प्रार्थनां कारय ॥ ४९ ॥

दिङ्नागा दिग्गजाः त्रासितो घोषो गोकुलं येन तेन घोषेण हेतुना गतो रसो यस्याः सा ॥५०॥

हस्ताविति इयत्तया द्वयोरप्यूनानतिरिक्तत्वम् अजगराविवेत्यतिदैर्घ्ये मधुकैटभाविवेति भयानकत्वम् उक्तम् अन्तरा मध्ये अन्तरायैर्विघ्नैरहितं कुत इति कुः पृथिवी तस्यैसार्वविभक्तिकस्तसिः अभयं वितरन्तं ददतमिव मुकुन्दं तन्नामानं । तथाच क्रमदीपिकायाम् । इन्द्रनीलमुकुन्दाद्यान्मकरानङ्गकच्छपान् । शङ्खपद्मादिकांश्चैव निधीनष्टौ क्रमाद्यजेदिति ॥ ५१ ॥

अत्यया सादनेन नाशप्राप्त्या दिष्ट्यान्तः प्रलयोऽत्यय इत्यमरः । कृष्णस्य भयकरौ आत्मनश्च तोदकरौ इत्युभयतोदकरौ अन्तरालेख्यम् अन्तश्चित्रं समुज्जिहीते समुद्गच्छति हीति विस्मये ५२

उपनतया प्राप्तया । समे द्वयोरपि तुल्ये शाखासमूहे मीमांसमानेषु विचारयत्सु । सुखदुःखाभ्यामिति कृष्णस्य स्वस्ति दृष्ट्वा भयसम्भावनया च । पेशलं सुन्दरं पेशलो रुचिरे दक्षे इति विश्वः । समुल्लसन्तमिति पितरमित्यस्य विशेषणं मुदा लपन्तमिति वालकृष्णमित्यस्य स नन्दः भार्य्यां यशोदां सभासु आर्य्याम् अनार्य्यां निन्द्यं जुगुप्समानो निन्दन् गर्गगिरं नारायणसमोगुणैरित्यादिकां स्मृत्यविरोधेन धर्मराजोक्तं यत्कृष्णस्यैश्वर्यं तद्यथार्थतया प्रकारान्तरेण ज्ञातमपि नन्दवात्स-

ऽङ्कृत्य कृत्यकोविदामपि सभार्य्या सभार्य्या महदनार्य्यं कृतं भवत्येति जुगुप्समानो गर्गगिरमनुस्मृत्य स्मृत्याविरोधेन ज्ञातमहिम्नः पुत्रस्यैवेयं कृतिरिति मनसि विदाश्चकार ॥ ५३ ॥

तस्मिन्नेव समये सहचराः शिशवोऽपि भो भो अनेनसानेन साम्प्रतं तिर्य्यगेव कृत्योलूखलं समेखलं समेतभरेणाकर्षणेन समूलमुन्मूलितावेताविति यद्रूचिरे चिरेणाऽपि न तत्केऽपि प्रतीयुः अनन्तरं कृतस्वस्त्ययनं सकलस्वस्त्ययनं तं बालकृष्णं दधिदूर्वाक्षतादिनाक्षतादिनारायणगुणाधिकगुणं निर्मञ्छ्य कृतमङ्गलतूर्य्यघोषेण भवनं प्रवेशयामास घोषाधीशः ॥ ५४ ॥

अथ तथैव कदाचन धूलिखेलालसं वयस्यवालकेषु निजपरागपटलेन धूसरमिन्दीवरमिव धूलिधोरणि कलिलममलकलेवरमभ्रविभ्रमं भ्रमन्तमितस्ततस्ततखेलनकुतुकावेशेन गमितामितकालं सरामगभिरामचरितं यथाकालमालयमप्राप्तमवलोक्य ॥ ५५ ॥

सखेदया दयावत्या व्रजपुरपरमेश्वर्य्याप्रहीयमाणाऽहीयमानानन्तपरमसुकृताधिरोहिणीरोहिणीदेवी त्वरितमागत्य गत्यवसादेनाप्यसन्नपदकमला दूरत एव तात भ्रातरारभ्य सन्तत तन्तन्यमानखेलयाऽऽलयागमनमपि विस्मृतम् ॥ ५६ ॥

गगनमध्यमध्यवरुह्य तपति ललाटन्तपस्तपन एष कथमनेन नवनीतकोमलेन वपुषा घनघर्माघातमपि सहसे सहसेमं खेलारसमपहाय सह सहचरैरेव समेहि समेहि काले कृतमज्जनो भवदभिरामेण रामेण पूर्वजनिना सह कृताशनो जननीमनः प्रमोदयेत्यूचे ॥ ५७ ॥

---

त्यस्य विरोधं नाकरोदित्यर्थः। यद्वा स्मृतिरिच्छा तदविरोधेन पुत्रप्रभावः पित्रोः सुखायैव स्यादिति स्मृतिरिच्छा तयोर्धर्मसंहितायामपि स्मृतिरिति विश्वः ॥ ५३ ॥

अनेनसा अनघेन अनेन कृष्णेन समेखलं मेखलासहितं समेतभरेण संप्राप्तभरेण तस्य आकर्षणेन अक्षतं क्षताभावम् ॥ ५४ ॥

धूलिखेलायां रसो यस्य से लालसीतीति लालस्यत इति वा पचाद्यच् लालसं धूलीनां धोरणीभिः श्रेणीभिः कलिलं संकीर्णम्। अभ्रविभ्रममिति पुनरभ्रोपमा इतस्ततो भ्रमणसाधर्म्येण लीलामृततृष्णया च ततो विस्मृतः खेलने एव यः कुतुकावेशस्तेन ॥ ५५ ॥

प्रहीयमाणा प्रस्थाप्यमाना वर्त्तमानसामीप्ये वर्त्तमानवत्त्वात् प्रहितेत्यर्थः। अहीयमानानि स्वगुणयोग्यानि अनन्तानि परमसुकृतानि अधिरोढुमधिरोहयितुं वा शीलमस्याः सा। न सन्ने विशीर्णे पदकमले यस्याः। रामकृष्णयोर्दर्शनसुखावेशादिति भावः ॥ ५६ ॥

ललाटन्तप इति असूर्य्यललाटयोर्दृशि तपोरिति खश् ॥ ५७ ॥

इति तदुक्तयापि यदि खेलातो न विरराम रामकनीयान् तदा गृहागतायां राममातरि मातरिश्ववेगतो गतोत्साहा व्रजेश्वरी स्वयंस्वयन्त्रणया त्वरितमागत्य राममामन्त्र्य निजगाद वत्स! राम त्वरितमेहि मे हितं वचनमाकर्णय तव मुखमीक्षमाणो व्रजपुरपुरन्दरोऽपि निरशन एव वर्त्तते ॥ ५८ ॥

विशेषतश्च आह हे वत्स! कृष्ण! भवतोऽद्य जन्मर्क्षयोगे मङ्गलाभिषिक्तः क्षितिसुरवराशिषा समार्चितः समाचारसमुचितं त्वमपि तेभ्यः कनकवसनादि जनकोपनीतमुपकल्प्य। जनकेन सह भोक्तुमर्हसि ॥ ५९ ॥

इति निगदन्ती दन्तीन्द्रगामिनी निकटमभ्येत्य वत्स एहीति कृष्णकरकमलमाधृत्य वलदेवमग्रतः कृत्वा सहचरानपि सहानयन्ती नयं तीव्रमुपपादयन्ती स्वयमेव सहोदरयो रयोपनायितमङ्गलाभ्यङ्गो द्वर्त्तनस्नपनमार्जनपरिधापनानुलेपनभूषणमालादिसकलसामग्रीकादलदिन्दीवरसोदरतः कलेवरतो वरतो धूलीमपनीयाऽतिमितातिमितवसनशकलेन परिमृज्य च पुनरभ्यङ्गादिनोपचर्य्यतदवसरमीक्षमाणस्य व्रजराजस्याभिमुखमुपनिनाय रामकृष्णौ ॥ ६० ॥

उपसन्नयोश्च तयोः प्रमुदितमना मनाक् स्मितपूर्वमवेक्ष्यवदनं निजमङ्कमारोपयामास व्रजराजः ॥६१॥

तदनुतनयाभ्यां सहभोजनारम्भे सहोपसन्नान् सहचरानपि भगवज्जननी निजतनयसाधारण्येन भृत्यजनैः कारिताभ्यङ्गादिसकलोपचारान् समाहूय कृष्णेन सहैव विधिवदाशयित्वा निजगृहान् प्रापयिषुरपि वत्सा मापरमेतावन्तं कालं खेलनीयं यद्यप्ययमतिचञ्चलो मद्बालः खेलां न परिहरति। तथापि भवद्भिः क्षणमेव खेलित्वा मद्गृहे स्वगृहे वा गन्तव्यम्। तथा सति कथमेकक एव खेलतु इति सदयं तान् विसर्जयामास। अथापरेद्युरपि कयापि फलविक्रयिण्या केन क्रयाणि फलानीति नीतिचतुरया स्यासादितव्रजराजपुरद्वारया पुनरुदीरिते व्याहारे

मातरिश्ववेगतः पवनवेगेन त्वरितमागत्य स्वयन्त्रणया स्वखेदेन ॥ ५८ ॥

स्वभावतःएव सदा दानप्रियं कृष्णं तदुत्साहमुत्पाद्य खेलातः निवर्त्तयति विशेषतश्चेति ५९.

नयं तीव्रमिति मातुरीदृशेयव नीतिः प्रशस्यते यत् पुत्रस्य रोद्धासुखमपीयं न सहते भोजनापेक्षयेति भावः। रयेन वेगेन उपनायिता दासीवृन्दद्वारैव निकटमानायिता मङ्गलाभ्यङ्गोद्वर्त्तनादि सामग्री यया सा॥विकसितनीलाम्बुजसदृशादङ्गात् प्रथमं स्वपाणिभ्यां स्वाञ्चलेन वा धूलीमपनीय पुनरतिसूक्ष्मधूलीनिरसनाय अतिमितम् अतिपरिमितं महासूक्ष्मतन्तुमयत्वात् तिमितम् आर्द्रीकृतं तिम ष्टिम आर्द्रीभावे इतिधातुः ॥६० ॥

तयोर्वदनं स्मितपूर्वं मनागवेक्ष्येति हर्षसंगोपरूपमतिगाम्भीर्य्यं द्योतितम् ॥६१

करपुटे एव पुटकिनी प्रसूने कमले साम्यां नाडीकिनी पुटकिनी विसिनी नलिनीति चेति

1 फलंगोनिर्वैक्रिय। इति इन्नन्तात् ईकान्तः। 2 शब्दे

हारेणविलसदुरः स्थलः स्थलकमलचरणः करपुटपुटकिनीप्रसूनाभ्यां गृहान्तरतः क्रमनिर्गलनेन द्वित्रधान्यावशिष्टं धान्याञ्जलिमादाय झणझणत्कारिकाञ्चनकिङ्किणीको बहिरियाय यदा तदा जलमुग्धामुग्धाऽमलं मूर्त्तानन्दकन्दकल्पं तमालोक्य मुग्धात्मानमपि विस्मरन्ती सा सुकृतवती कृतवती करकमलाञ्जलिमपूरं फलवितरणम्। अथ तस्या भाजनान्तरेजनान्तरेणालक्षितानि रत्नान्येव बभूवुः ॥९२॥

अथ कदाचिदपि तेनैवान्तर्यामिणा प्रेर्यमाणान्तःकरणैरुपनन्दसन्नन्दादिभिः स्थविराभीरमुख्यैः सरभससमास्थानीमास्थानितमानसतया समास्थाय व्रजराजः सादरमूच ॥ ९३ ॥

व्रजेश्वर! तव संपदा संपदास्माकी मानवं न वंहिष्ठसौभाग्यं क्वापि भवत्सदृशमीक्षामहे ॥ ९४ ॥

महेच्छ! यस्य तवायमीदृशः सकलजनकाकुमारः कुमारः समजनि ॥ ९५ ॥

समजनिकालमेवास्य जायमानान्यरिष्टान्यरिष्टान्तराराभ्य किमद्यप्रभृति न दृश्यन्ते ॥ ९६ ॥

प्रथमं निशाचरी चरीकरीति स्म मलयमिव। ततः परमनो निपातो मनोनिपातोपमः सर्वेषां तदनु तृणावर्त्तवात्या वात्याहितं किं न चकार। साम्प्रतमुच्चैरनयोरनयो निपातेन संवृत्तः ॥ ९७ ॥

तत्किमत्र निदानं नाऽस्य जन्मलग्नलग्नमस्ति किमपि दूषणम्। सर्व एव शुभमात्रग्रहाग्रहाः। तत्रापि लोकोत्तरमेवादृष्टं दृष्टम्। येनैतज्जगत् पत्यंशकलितमपत्य शकलितमहापदकस्मादेव देवदुर्लभं संपादितमस्ति ॥ ९८ ॥

हारावली। जलमुग्भ्यो मेघेभ्योऽपि धाम्ना कान्त्या मुग्धं मनोहरं च तममलञ्च तं यमकानुरोधेन विधेयांशाविमर्शः सोढव्यः। मुग्धा मूढाः ॥९२॥

आस्थानीम् आधा इति पाश्चात्येषु ख्यातां सभां समास्थाय सम्यगालम्ब्य आस्थया अपेक्षया आनीतं करिष्यमाणमन्त्रणायां भद्राभद्रविवेकार्थमेकाग्रीकृतं न क्वापि चालितं मानसं यैस्तेषां भावस्तत्ता तया आस्था चालम्बना स्थानयत्नापेक्षासु कथ्यत इति विश्वः ॥९३॥

भवत्सदृशं वंहिष्ठसौभाग्यं मानवं वयं कुत्रापि न पश्यामः ॥ ९४ ॥

महेच्छहेमहाशय। महेच्छस्तु महाशय इत्यमरः। काकुमारः शोकादिकृत दुःखहन्ता ॥९५॥

जन्मसमकालमेव व्याप्य अरिष्टान्तः सूतिकागृह मित्यमरः ॥९६॥

चरीकरीति स्म अतिशयेन कृतवती अनोनिपातः शकटनिपातः तृणावर्त्ताख्यया वात्या वा किम् अत्याहितं न चकारअत्याहितं महाभीतिरित्यमरः। अनयोरनयः प्रस्तुतत्वात् अर्जुनवृक्षयोर्निपातेन उच्चैरनयः महान् अन्यायः ॥ ९७ ॥

ग्रहाः सूर्याद्या नव। दृष्टफलदर्शनेन साक्षात्कृतं च। येन अदृष्टेन अकस्मादेव एतावत्पर्यन्तम् अपत्यं संपादितमस्ति जगत्पतेर्नारायणस्य अंशेन कलितं कृतं गर्गवाक्यप्रामाण्यादिति भावः। अत एव शकलिता खण्डिता महती आपत् विपत्तिर्येन तत् ॥९८॥

---

१ कर्मणि लिट् तेन व्रजराज इति कर्म

तदस्माभिरिदमनुमितमस्यैव स्थलस्य दूषणमेतत् । तदिदमपहाय हायनमध्ये सर्वदा सुखदं सर्वर्तुगुणवृन्दावनं वृन्दावनं नाम वनं यामः ॥ ६९ ॥

यदतिबहुतृणं बहुतृणं भवति यदासादितवतां त्रैलोक्यलक्ष्मीः ॥७०॥

लक्ष्मीश्च यत्र निरन्तरकृतवासेव सेवमाना वर्त्तते । यत्र गोवर्द्धनो गोवर्द्धनोनाम गिरिः ॥ ७१ ॥

यदि भवति मतिर्मतिमतांवर भवतो भव तोषप्रदोऽस्माकं तदा तदासादनेन ॥ ७२ ॥

तदा तदाकर्ण्य घोषाधीशो धीशोधितस्तानुवाच ॥ ७३ ॥

ममता ममतावदिह भवादृशां कृते कृते भवद्भिरस्यैतादृशि दोषावलोके लोकेन, कथमत्र स्थातव्यम् ॥ ७४ ॥

तदधुना साधुना सामञ्जस्येन चलघताभिति तेनानुमते परिजनैः सह प्रथमम-नसां मनसां च द्रढिमानमाऽऽनयन्तः सर्व एव मुमुदिरे ॥ ७५ ॥

अनन्तरं ऐरावतैरिव चतुर्दद्भिः । गृहीतमौनव्रतैरिव नवदद्भिः । सुमेरोरवय-

---

तद्दिन एव यियासुत्वेऽपि हायनमध्य इत्युक्तिस्तात्पर्यप्रकाशसङ्कोचेन । सर्वेषाम् ऋतूनां वसन्तादीनां गुणवृन्दम् अवति स्वस्मिन् रक्षतीति यावत् । यामः यास्यामः वर्त्तमानसामीप्येलट् ।६९।

यत् वृन्दावनं अतिबहूनि तृणानि यत्र तत् गवां सुखदत्वादित्यर्थः । न केवलमेतावदेव किंतु यत् आसादितवतां प्राप्तवतां जनानां त्रैलोक्यलक्ष्मीः त्रैलोक्यस्य संपत्तिर्बहुतृणं तृणतुल्यां भवति ईषदसमाप्तयर्थेविभाषा सुपोबहुजित्यादिना पुरस्तात् बहुच् प्रत्ययः लघुर्बहुतृणं नव इति यत् प्रकृतिवल्लिङ्गत्वम् ॥ ७० ॥

गोवर्द्धनः गवां वृद्धिकरः ॥ ७१ ॥

तदा तदासादनेन तत्र गमनेन तत्र अस्माकं तोषप्रदो भव ॥ ७२ ॥

धीशोधितः धीशोधः संजातो यस्य सः शुद्धबुद्धिरित्यर्थः ॥ ७३ ॥

ममतावत् भवादृशां कृते निमित्ते इह वृन्दावने ममता ममत्वम् ॥ ७४ ॥

अनसां शकटानां दार्ढ्यं बहुविधवस्त्वादिचालनार्थं-मनसां च आपन्नामनुशोचनाभावार्थम् ॥ ७५ ॥

अनडुद्भिःतिरर्णायेषु शकटेषु स्वस्वपरिकरानारोप्य गाः पुरोगाः कर्तुं विचारयन्तो यदाऽवतस्थिरे तदा प्रादुर्भूतो हेतोर्धेन्वावालेः शकटावलिश्च क्रमतः प्रयातुं न घटते इयतस्ते धेन्वावलिश-कटावली युगपदेव पङ्क्तिद्वयेन चलिते तनो गम्यं गन्तव्यदेशं प्राप्ते अपि हेयं त्यक्तव्यं पदं वृन्दावनार्थं न जहितो न त्यजत इत्यन्वयः । अनडुद्भिःकीदृशैर्निरदद्भिः मौनिपक्षे न कथयद्भिः अनडुत्पक्षे रदं राय दन्तानां चतुःसंख्यावनरक्षेत्रे यथोन्यूनाधिकत्वम्पञ्चके । सृष्टाः सच-

वैरिव कनकशृङ्गैः। रामबलैरिव सुवृत्तहनुवन्मुखैः। संगीताचार्यैरिव प्रखरखुरलीलैः ॥ ७६ ॥

आदिच्छन्दोभिरिव समचतुःपादैः। वलक्षैरपि नवलक्षैः। प्रचलायतवालधिलतैरपि अवालधिवपुर्दधानैः। अनस्योतैरपि नस्योतैः। किङ्किणीजालमालालङ्कृतकन्धरैरनडुद्भिरतिरमणीयेषु ॥ ७७ ॥

उपरि परितानितसितहरितपाटलपाण्डुरपीतारुणकिर्मीरचीरमण्डपेषु परितो वृतीकृतनानाविधपरार्द्ध्यपट्टवसनेषु कनककलसोपरिपरिपतत्पताकानिकररसनाभिरिव दिनकरकिरणकलापं कलापण्डिततया लेलिहानेषु परिहस्यमानामरविमानेषु विमानेषु ॥७८॥

साधुजनेष्विवनिर्दोषप्रासङ्गेषु। हरिभक्तेष्विवस्वक्षेषु। तडागेष्विव सुचक्रेषु अलकापुरिपरिसरेऽष्विव सदासन्नलकूवरेषु शकटेषु स्वस्वपरिकरानारोप्य केषुचन कनकरजतारकूटताम्रकांस्यादिनिर्मितानि विस्मितसकलसभाजनानि भाजनानि च पुरोगाःपुरोगाः कर्त्तुं विचारयन्तश्चारयन्तश्च पदाऽवतस्थिरे चल स्थिरेणैव मनसा सर्वे ॥७९॥

प्राञ्चुर्यतो न घटते क्रमतः प्रयातुं धेन्वावलिश्च शकटावलिरप्यथेति"।
पङ्क्तिद्वये न चलिते युगपत्त दाते गम्यं गते अपि पदं जहि तो न हेयम् ॥

---

रित्रा हनुमदादयो यत्र तैः पक्षे सुवृत्तानि सुचरितानि हनुयुक्तानि मुखानि येषां तैः। प्रखरां प्रगल्भां खुरलीं नृत्याभ्यासं लान्ति ददतीति तैः। अभ्यासः खुरली योग्येतित्रिकाण्डशेषः ७६

आदिच्छन्दोभिः श्री नारी मृगी समानिकेन्द्रवज्रादिनामभिः। वलक्षैर्धवलैः वलक्षो धवलोऽर्जुन इत्यमरः। नवलक्षसंख्याकैः। प्रचला आयता वालधिलता येषां तैः। वालहस्तस्तु वालधिरित्यमरः। न वाला जड़ा धीर्यत्र तत् महाबुद्धियुक्तं वपुरित्यर्थः इङ्गितमात्रविज्ञत्वात्। अनसि शकटे ओतैर्योजितैर्नसि नासिकायाम् ओतैर्ग्रथितैः ॥ ७७ ॥

उपरि प्रदेशे परितानिता विन्यासविशेषविस्तारेण निर्मिताः प्रत्येकं सितादिचीरमयमण्डपा येषु तेषु। परितस्तेषां मण्डपानां चतुर्दिक्षु वृतीकृतानि प्राचीरीकृतानि नानाविधानि स्वेतरक्तादिवर्णानि परार्द्ध्यानि बहुमूल्यानि पट्टवसनानि येषु तेषु। लेलिहानेष्विति लिह आस्वादने यङन्तविमानेषु विशिष्टमानेषु ॥७८॥

प्रासङ्गः। प्रकृष्टा आसक्तिः शकटावयवश्च प्रासङ्गोनायुगाद्युग इत्यमरः। अक्षमिन्द्रियं च चक्रं चक्रवाकश्च सदासन् वर्त्तमानो नलकूवरः कुवेरपुत्रो यत्र तेषु। पक्षे आसन्नम् आसत्तिर्भाव क्तान्तं तत् लातीति आसन्नलः कूवरो येषु तेषु कूवरस्तु युगन्धरइत्यमरः। आरकूटः पित्तल एव प्रसिद्धः। पुरः प्रथमं गा एव पुरोगाः अग्रगामिनीः कर्त्तुं परामृशन्तः ततस्ताश्चालयन्तश्च रलयोरैक्यात् ॥७९॥

अनुयमुनं यमुनावदीर्घा अनुर्यत्समया यस्य चापाम इति समासः। कृतवितर्कोति किंचिद्दूर-

एवमनवच्छिन्नतया आवृन्दावनसीम आवृहद्वनमध्यमनुयमुनं चलन्ती साधेनुपङ्क्तिरचलन्तीवकृत वितर्कावितर्कान्तरास्पदं बभूव ॥८०॥

यमुनायाः समीपं गता धेनुपङ्क्तिः किमियं यमुनया सह रहःकथाभिलापुकतया समागता सुरधुनीधारा। किमियं वृन्दावनरेणुजिघृक्षया त्वरया समुपसीदन्ती क्षीरनीरधेस्तरङ्गपरम्परा किमियं क्षीरोदशायिनः शयनभावमपहाय वृन्दावन दिदृक्षयैव समुपसीदन्ती भोगीन्द्रस्य परमद्राघीयसी भोगकाण्डलता। किमियंभुवो मुक्तावली ॥८१॥

एवं विलसत्कनककलसाग्रजाग्रद्विचित्रतरपताकानिकरकरम्बितललिताट्टगोपुरघटाघटितपरमपरभागं दुर्गप्राचीरमिव। यमुनातटघटमानखेलालसाः शिशवइति करुणया कुलिशकरेणाकृतपक्षच्छिदा कनकगिरि-कैलाश-गौरीगुरु-प्रभृतिमहामहीधरराजनिकराणां पङ्क्तीभूय चलन्ती कुमारश्रेणिरिव शकटानि पथि जनैर्व्यदृश्यन्त ॥८२॥

एवं चलत्सु तेषु तथैव नभसि श्रेणीभूता धूलीपटली निरालम्बं मार्त्तिकं दुर्गमिव समपद्यत ॥८३॥

अथवा—गोरूपेण पुरा सुरारिकदनव्याहारहेतोर्गता
श्रीकृष्णस्य पदाब्जसंगमसुखं व्याहर्त्तुकामा किमु।

स्थैर्जनैरित्यर्थः ॥ ८०॥

अथवा यमुनादैर्घ्यसदृशदैर्घ्योपलक्षिता धेनुपङ्क्तिः सुरधुनी गङ्गा तत्र तदानीमेव रहःकथाकारणमलक्षयन् तद्देशमात्रवर्तिनीरुद्रतधूलीश्रेणीश्च पश्यन् मत्तमहोक्षपङ्क्तीनां धेनुपङ्क्तीनां च उच्चनीचत्वमन्तरान्तरा परामृशन् अन्यथोत्प्रेक्षते किमियमिति। क्षीरनीरधेर्भगवद्धामत्वेऽपि वृन्दावनस्यतत उत्कर्षो व्यञ्जितः। पुनस्तस्या अपि वृहद्वनमूलत एव निःसरणं ननु ततः परत इति पातालोत्थितत्वे नोत्प्रेक्षते किमियं क्षीरोदेति भोगीन्द्रस्य शेषनागस्य तत्रापि तस्यतदाधारत्वेपि पूर्ववदुत्कर्षः। पुनश्च अतिश्वेतिमचाकचक्यं भुवः शोभां चालक्ष्याह मुक्तेति ॥ ८१ ॥

धेनुपङ्क्तिं वर्णयित्वा शकटपंक्तिमपि वर्णयति एवमिति विलसतां चाकचिक्यवतां कनककलसानामग्रे जाग्रद्भिश्चित्रतरैः पताकानिकरैः करम्बितानां ललिताट्टपुरद्वाराणां घटाभिर्घटितः कल्पितः परमः परभागः शोभा यत्र तत्। तर्हि कुतो जङ्गमत्वमित्यत आह यमुनातटेति कनकगिरिः सुमेरुः गौरीगुरुर्हिमालयः कुमारश्रेणिः कीदृशी यमुनातटे-घटमानः खेलारसो यस्याः सा। अत एव पङ्क्तीभूय निर्विवादेन चलन्ती ननु पक्षच्छेदकपरमशत्रुवज्रधरस्य विद्यमानत्वेऽपि कथमेवं प्रागल्भ्यं तत्राह शिशव इति हेतोर्विस्रम्भेण खेलत्सु शिशुषु वज्रनिक्षेपेण वैरसाधनमतिजुगुप्सितमिति स्वयमेव परामृशेत्यर्थः ॥ ८२ ॥

मार्त्तिकं मृत्तिकाविकारम् ॥ ८३ ॥

तस्या ऊर्द्धोर्द्धप्रचलनं न संभवतीत्यत आह अथवेति अगात् धातुर्धाम ब्रह्मलोकमित्यन्वयः गोरूपेणेति अतिखेदेन स्वरूपं समृद्धं विहाय दैन्यज्ञापनार्थमित्यर्थः। अधुना पुनः स्वं धाम

धूलीधोरणिभिर्धरेयमधुना धूताभिरुद्धानि नै ।
धीतुर्धावति धाम धैर्य्यरहितो स्वं धाम धृत्वा पुनः ॥ ८४ ॥

एवमितरेतरमेहि याहि नयाऽऽनय चालयानिधापयेत्यादि प्रत्येकमग्रत एकीभूतेऽपि क्रमशः संभूय भूयस्त्वमासाद्य पश्चादुभयोरेव वक्तृवक्तव्ययोः श्रवणदुर्विभाव्यत्वमागते वचसि केवलं हस्तसंज्ञयैव व्यवहार आसीत् ॥ ८५ ॥

किंच—तुर्य्यारवैर्वोपजनमेणादैरनः स्वनैर्धेनुगणमेघोपैः ।
नष्टेऽन्यशब्दे नभसस्तदानीं त एव शब्दा गुणतामुपेयुः ॥ ८६ ॥

अथैकमेव मणिमयखेलागिरिकुहरमधिविरोचमाने एकैकजगन्मङ्गलमङ्गलफलसफलोत्सङ्गे सुकृतसिद्धौपधिलतिके इव एकमेव शकटरत्नमारूढे निजनिजकुमाराल‍ङ्क्रियमाणक्रोडतले श्रीयशोदारोहिण्यौ श्रीकृष्णगुणगानकलस्वरभास्वरं व्यतिभाते स्म ॥ ८७ ॥

इतस्ततः शस्त्रधारिणोऽपि केचन शकटगताः केऽपि पदातयः शतश एव पुरतः परितश्च पश्चात् चलितवन्तः । एवं चलति व्रजबले जवलेलिह्यमानगगनेव सा महावनराजधानी श्रीमूर्तिमतीव स्वयमग्रत एव गन्तव्यस्थलीमलङ्कर्तुमिव चलितवती केवलं भूमात्रमेव तत्रावशिष्टमिव ॥८८॥

अथाग्रगामिनो गन्तव्यावधिमासाद्य विवृत्यानुयायिनो निरीक्षमाणाः क्रमत उपचीयमानानिव वीक्षन्ते न तु मूलस्यावधिमिति तस्मिन्नहनि यमुनापारप्रयाणमघटमानमिति तत्रैव वसतिमिच्छवो विनापि घोपाधीशाज्ञया देशकालज्ञास्त एव तथा सन्निवेशं कारयाञ्चक्रुर्यथा सैव पुरश्चलिता राजधानी श्रीः स्वयमेव स्वसन्निवेशमकरोत् ॥८९॥

---

निजरूपं धूलेति अतिहर्षबोधनार्थमित्यर्थः । तत्रापि धावति तत्रहेतुर्धैर्य्यरहितेति । धोरणिभिः श्रेणिभिः । पूर्वं महादुःखमपापिजनभारासहिष्णुतया खेदेन शनैः शनैर्गमनम् अधुना श्रीकृष्णपदाब्जसंगमयहर्षमहाभारासहिष्णुतया द्रुतमेवास्यागमनमिति भावः ॥ ८४ ॥

संभूय तत्रैवोपगतानां बहूनां तादृशवचोभिः सह मिलित्वा भूयस्त्वं बहुतरत्वं । हस्तसंज्ञया हस्तसङ्केतेन । संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चाऽर्थसूचनेत्यमरः ॥ ८५ ॥

गुणतामिति शब्दगुणमाकाशमित्यभ्यासशास्त्रात् ॥ ८६ ॥

मणिमयक्रीडागिरिरिव स्थानीयं शकटगृहम् अधिकृत्य विरोचमाने विशिष्टकान्तियुक्ते एकैकमेव जगतां मङ्गलस्यापि मङ्गलरूपं यत् फलं तत्स्थानीयमपत्यद्वयमित्यर्थः । तेनसफलक्रोडे व्यतिभाते परस्परशोभां तन्वते स्म ॥ ८७ ॥

जवेन महावेगेन लेलिह्यमानमिव गमनं यया सा ॥ ८८ ॥

अनुयायिनः पश्चादागच्छतः कर्मभूतान् ॥ ८९ ॥

---

१ कर्त्तरिकर्मव्यतिहारइत्यात्मनेपदम्

तथाहि। आतानिताः पटगृहाः परितो वितानश्रेण्यस्ततोऽर्ध्वमभितः पटभित्तयश्च। शृङ्गाटकक्रमत एव समानसूत्रसुश्रेणया विपणयो वणिजां विरेजुः ॥९०॥

किंच। यत्रादौ प्रथमागता कतिपयी तस्थौ गवां संहतिस्तत्रैव क्रमतः समेत्य शनकैर्वृद्धिं प्रयान्ती ततः। ज्योत्स्नाखण्डमिवाग्रतः समभवत् पश्चादभूत् पायसः कासारः क्रमतोऽभ्यपद्यत तदा क्षीरस्य वारां निधिः ॥९१॥

एवं कृतवसतिसन्निवेशेषु श्रीनन्दसनन्दोपनन्दादिधुरन्धराणां प्रथमागतेषु परिजनेषु यथास्थानं तेष्वपि समासाद्य विश्रान्तेषु परितश्चापरेषु यथास्थलं स्थितेष्वाभीरेषु चिरेण मूलविच्छिन्नासीत् धेनुपङ्क्तिः शकटपङ्क्तिश्च ॥९२॥

अथैवं शकटपटलादवतरत्सु सकलजनेष्ववतार्यमाणेषु तत्समयोपयोगिभाजनेषु मोचितेष्वप्यनडुत्सु तदाहारोपपादनपरेषु तदधिकारिषु यथायथं क्रयविक्रयपरेषु परिचारिकादिषु रसवत्यादिस्थलपरिष्कारपरेषु तदधिकारिषु भगवानपि मयूखमाली यामचतुष्टयगम्यं गमनपथमतिक्रम्य श्रान्त इव वरुणदिङ्नागरीगृहे वासं विधित्सन्निव समपद्यत ।९३।

ततश्च कुलायकुलाय समुन्मुखतया नभसि समुड्डीयमानेषु कलितकलरवेषु खगकुलेषु उच्चतरं तरुपनुकृतोपवेशेषु मयूरादिषु मण्डलीभूय सर्वतो दिगभिमुखं निपत्यरोमन्थमन्थरेषु मृगनिकुरम्बेषु कमलकुहरविहरणवशतया वन्दीभवत्सु मधुकरनिकरेषु तिमिरनीलपटावगुम्फनेनाभिसारिकाभावमासादितवतीष्विव दिगङ्गनासु अभिलषितसमयासादनेनेव हसितविकसितवदनासु कुमुदिनीषु भवद्विरहविधुरतया करुणतरमितरेतरमनुशोचत्सु केषुचिदेकेनैव विसलताखण्डेन परस्परचञ्चुपुटमावध्नत्सु रथाङ्गमिथुनेषु आतपापायमलिनतया च्छायास्वेव विजातीय-

---

वितानं चन्द्रातपाख्यम् ऊर्ध्वगतं महाप्राचीरायभागाः पटभित्तयश्च दिग्चतुष्टयगताः परितः सर्वतो मध्यस्थास्तु पटगृहा इति। शृङ्गाटकानि चतुष्पथानि पुरीमध्यगतानि तत्क्रमेणैव प्रागुक्तसमानेन सूत्रेण सूत्रपातेन श्रेणिर्यासां विपणयो हट्टवर्त्मानि ॥ ९० ॥

पायसो दुग्धमयः ॥ ९१ ॥

श्रीनन्देति । अत्र उपनन्दोऽपि सनन्दस्याभ्यर्हितत्वं श्रीनन्देन सहाव्यवहितसन्निधिकत्वात् । तथोक्तं गणोद्देशदीपिकायाम् । उपनन्दोऽभिनन्दश्च पितृव्यौ पूर्वजौ पितुः । पितृव्यौ तु कनीयांसौ स्यातां सनन्दनन्दनाविति ॥ ९२ ॥

मोचितेष्विति भूतकालप्रयोगोऽवतरणात्तु पूर्वमेव तेषां मोचनात् । अत्रोक्तिस्तु तदाहारलक्षणानुबन्धेन ॥ ९३ ॥

कुलायकुलाय वासस्थानाय । कुलायो नीडमस्त्रियामित्यमरः । रथाङ्गमिथुनेषु चक्रवाकद्वन्द्वेषु छायास्वेवेति कथञ्चिन्नक्षत्रादिप्रकाशसम्भावितास्वित्यर्थः । विजातीयत्वेनेति स्थौल्याति-

त्वेन दरीदृश्यमानेषु दीर्घदीर्घतरजनचयच्छायानिचयेषु । प्रतिपटभवनकुहरमधि ज्वाल्यमानेषु बहिरपि सहृदयहृदयप्रकाशेष्विव दृश्यमानेषु दीपेषु प्रतिसरणि समुपविष्टेषु यामिकेषु कापि प्रदोषलक्ष्मीर्भगवन्त मुपचरितुमाजगामेव । तत्र तदा । आयातास्वऽखिलासु धेनुषु समं वत्सैर्यथेच्छं मुदा विश्रान्तासु निराकुलं विरचिताहारासु तृप्तासु च । भूयान् दोहरवैः पयोधिमथनध्वानाकृतिर्दोहनीगर्भभ्रान्तगभीरमुग्धमधुरैः कृष्णस्य रस्योऽभवत् ॥९४॥

तत्र च । नामग्राहं प्लुतवचनया गोदुहाऽऽहूयमाना हम्बारावैः प्रतिरवकरी धाविता धेनुवृन्दात् । अभ्यायाता निकटमसकृत्पाणिना मृष्टगात्री काचित्काचित् कथन रुचिरा नैचिकी दृश्यतेस्म ॥९५॥

एवं सुखविहितपानाहारविहारेषु व्रजनगरनरनारीनिकरेषु पर्य्यायजाग्रतां यामिकानां निजनिजजागरणकौशलप्रकाशिकाभिरभितो मुहुरुदित्वरीभिर्गीर्भिरपशङ्कं यथासुखमभिनिद्राणेषु च यामैकशेषा रजनी यदि समजनि । तदा शयनतलादुत्थितवतीभिरतिशुचितरवेशभूषाभिराभीरभीरुभिरपि प्रतिभटगृहालिन्दं दीपितदीपं कृतवास्तुबलिभिरभितो भगवद्बालकृष्णगुणगणगानकलरवकर्णरम्यं युगपद्विधीयमानस्य दधिमथनस्य मणिमयमञ्जुमञ्जीर वलयादिविविधभूषणाशिञ्जितसहचरेण गर्गरीकुहरविहरमाणमसृणतरगभीरनिनदेन गानकलरवमधुरिमसरसतयाऽतिशयसुललितेन । जगदमङ्गलसमूलनिर्मूलीकरणकुशलेन दिगङ्गनागणकृतानुध्वननविरचितपरिपोषेण तत्क्षण ममराङ्गनानामपि पतिशयनजुगुप्सया त्वरितमेव जाग्रतीनामेकान्तभावेन तमेव घोषनिर्घोषमाकर्णयन्तीनां श्रवणानन्दो जन्यतेस्म ९६

रायचन्द्रयादिच्छायातः । एवकारश्छायानामेव स्थौल्यदैर्घ्ययोर्बहुतरत्वेन हेतुना परस्परविजातीयत्वेनोपलब्धिः । व्यक्तीनान्तु तयोरल्पत्वेन विशेषतो लक्षयितुमशक्यत्वात् तथात्वेनानुपलब्धिरिति ज्ञापनार्थः । यामिकेषु प्रहरिया इति ख्यातेषु वर्त्मरक्षकेषु । दोहनीगर्भे भ्रान्तः अतएव गभीरः मुग्धः मनोहरः मधुरः माधुर्य्येण मनोहरणात् ॥ ९४ ॥

नामग्राहं हिही शबलि हिही धवलीत्येवं नामगृहीत्वा गोदुहा गोदोहकगोपेन प्रतिरवकारीति तन्नीरवटप्रत्ययान्ते काचित्काचिदित्यनेन तद्दिने अतिश्रान्तत्वेःसगवीनां दोहनाभावः सूचितः ॥ ९५ ॥

कृतो वास्तुबलिः वास्तुपूजोपहारो याभिस्ताः । गर्गरीणांकुहरे विवर एव विहारमाणः अतएव मसृणतरो गभीरश्च यो निनदस्तेन अमराङ्गनानां तत्क्षणमेव जाग्रतीनां श्रवणानन्दो जन्यते स्म उत्पाद्यतेस्म इत्यन्वयः ॥ ९६ ॥

१ नाम्न्यादिशि ग्रहोरिति णमुल् ॥

२. इति यद्वा मोहिगर्भितगोन्तकर्मधारयस्य तत्पुरुषत्वेन गोरतद्धितलुकीति टजन्तात्ङीप् ।

समनन्तरमुद्यति भगवति किरणमालिनि किरणमालिदुहितुरपारपारगमनसमुद्योगयोग्येषु तेषु प्रथममेव व्रजराजनिर्देशेन तत्तदधिकारिणो धेनुवृन्दमेव पारमासादयितुमारेभिरे । यथा । हीहीकारध्वनिभिरसकृदुद्वेल्लैः प्रेर्यमाणं हम्बारावैरनुमतिकराण्युत्तराणीव कुर्वत् । स्फायद्घोणं श्वासितपवनैरुन्नमत्पूर्वकायं पार्श्वस्रोतःस्तब्धं यमुनां धेनुवृन्दं ततार ॥९७॥

शृङ्गाभाववशोद्धृतानि वदनान्युच्चालयन्तः सुखं ।
स्तोकत्वादपि वर्ष्मणोऽतितरसा निर्लङ्घयन्तो जलम् ।
पुच्छानां सलिलाप्लुतौ गुरुतया नोल्लासनेऽतिक्षमाः ।
क्षेमं वत्सतराः प्रतेरुरभितः स्वस्वप्रसूपूर्वतः ॥ ९८ ॥

किंच—ग्रीवापीठेषु कृत्वोरसि मृदुचरणान् बाहुनैकेन रुद्ध्वा
वत्सान् सर्वैः प्रसूतान् प्रतरणपटवो बाहुनाऽन्येन केचित् ।
स्वच्छन्दं संतरन्तः कलितकलघनश्यामनेपथ्यभाभिः
पश्चात्संगम्यमानास्तरणिदुहितरं गोदुहः संप्रतेरुः ॥ ९९ ॥

पूर्णाभोगे तरङ्गान् प्रमर्दति ककुदे जर्जरीभावमाप्तान् ।
ग्रीवाभङ्गाभिरामं प्रकुपितमनसस्तोदयन्तो विषाणैः ।
स्रोतोवेगेऽपि हंसे त्वरितमृजुतरं पुङ्गवाः पुङ्गवाना ।
मुन्मूर्धानोऽतिदीर्घश्वसितजवभराद्धूतमम्भः प्रतेरुः ॥ १०० ॥

---

स्फायन्ती वृद्धिं यान्ती घोणा नासा यस्य तत् । पार्श्वयोर्द्वयोरपि स्रोतो यस्य तत्स्रोतस्तम्बाध्यमानमित्यर्थः ॥ ९७ ॥

वर्ष्मणो देहस्य स्तोकत्वात् अल्पत्वात् स्वस्वप्रसूपूर्वत इति तेन तासां चिन्ताऽभावः सू-चितः [illegible] ॥ ९८ ॥

कृत्वा ग्रीवापीठे स्वचरणान् स्वग्रामदक्षिणस्कन्धयोः द्वे कृत्वा उरसि वक्षसि आनीतान् एकेन वामेन बाहुना धृत्वा अन्येन दक्षिणेन बाहुना सन्तरन्तः ॥ ९९ ॥

पूर्णं आभोगः परिपूर्णता यत्र तस्मिन् तरङ्गान् अतिशयमर्दनेन [illegible] ककुदि द-[illegible] [illegible] सह मुदापि संग-ता इति [illegible] पुङ्गवानां मध्ये पुङ्गवाः श्रेष्ठाः अन-[illegible] ॥ १०० ॥

अथ—उत्तीर्णा घनसारधूलिपटलस्वच्छे ततः सैकते ।
श्रेणीभूय समन्ततः स्थितवती श्रान्तेव संतारतः ।
एकत्रस्थितिवाञ्छयेव मिलिता पूर्वं ततो विच्युता ।
कालिन्द्या सह जाह्नवी व रुरुचे सा नैचिकीनां ततिः ॥ १०१ ॥

अथ अपारङ्गतास्वपि पारं गतासु निखिलासु नैचिकीषु पातालतलादुत्थिता इव नागनागरी खेलामणिगिरिद्रोणयःसुरशिल्पिनो निज शिल्पकलाकौशलेन व्रजराज समाजमानन्दयितुकामस्य गगनगङ्गाप्रवाहत इव यमुनामिलितानां निजविज्ञानानां मूर्तय इव द्युमणिदुहितुरन्तरतःसमुत्तीर्णा इव बहुपद्यो विचित्रजलजन्तुविशेषवध्व इव तत्कालमितस्ततो बहुकेनिपाताः समुपसन्नास्तरणयः ॥ १०२ ॥

तासु सर्वतः समीचीनां मृदुपवनपातदरचलितललितपताकां मध्यमध्यासित विचित्रभवनामेकामेव तरणिं निजनिजतनयमङ्कमारोप्य श्रीव्रजराजराजमहिषी श्रीवसुदेवरमणी च युगपदारुरुहतुः । उभयोरपि परिचारिकाश्च । तत्र च निजाङ्करुचिररुचिरमधितरणि तरणिदुहितुर्लघु तरतरङ्गभङ्गिमानमत्कन्धरमालोक्य जननी-सन्निधानतो निधानतोऽपि तरणिमान्तमागत्य गत्यनवस्थतया भुजादण्डं प्रसार्य्य करकमलेनाऽऽलोडयितुकामं श्रीकृष्णमालोक्य मातरावेव तरावेव मातङ्कं तकञ्चन प्राप्तवत्यौ यदा निवारयितुं न शेकतुः तदा तदाशङ्कयैव व्रजराजेऽपि तामेव तरणिं मारुह्य तमात्मजमात्मजवसहजञ्चर्द्धं निजाङ्कतलमानीय सावधान एव तस्थौ तरणिवाहिनोऽवाहयन्त तरणिम् । एवमपरेऽपि यथेच्छमतिसुलभासु समानवृद्धि मादृग्गुणासु तरणिषु युगपदेव विमानसदृशीषु कृतारोहा सह परिजनैरेव सुखसन्निविष्टाः समानकालमेव पारमीयुः ॥ १०३ ॥

---

घनसारः कर्पूरं । सैकते वालुकामये देशे ॥ १०१ ॥

अपारं गणयितुमशक्यमवधिमित्यर्थः । यद्वा अपगता अरङ्गता रङ्गाभावत्वं यासां तासु श्रमापनोदनानन्तरमित्यर्थ । पातालतलादिति कुत्राप्यनुपलभ्यमानत्वेनैव लक्षितातिवेगवत्त्वेन निकटोपस्थितत्वात् किम् अधस्त इहैव उत्थिता इति संभाविता इत्यर्थः गगनमेव गङ्गा तस्या प्रवाहत इतिकिम् इहैव आकाशात् पतिता इति यमुनामिति निजनप्रत्वेन तत्रैव सङ्गितानां विज्ञानानां शिल्पकौशलानां मूर्तय इत्यनेन मणिस्वर्णादिरचितत्वं निर्माणवैचित्र्याभावावधित्वं चोक्तम् केनिपाताः नौकादण्डाः चहडि इति ख्याताः ॥ १०२ ॥

अधितरणिमध्यमनुनायां चलन्त्यां नौकायाम् ईषत् नमन्ती कन्धरा यत्र तद्यथास्यात्तथा आलोडन नौकोपरितनगृहमध्ये स्थितवेति ज्ञेयम् ततश्च निधानं निधिस्तद्विशेषकेणैव तोषेणैव नागृहादहिर्भूय तरणेः प्रान्तमागत्येति मध्यनौकायामेव तदेकपार्श्वमागत्येत्यर्थः । तत्र गत्यनवस्थयेति तत्र गमनेऽनवस्थत्वेन हेतुना वामहस्तेन तरणिप्रान्तभित्तिमवलम्ब्य दक्षिणं भुजादण्डं तस्य प्रसार्येति ज्ञेयम् एवं दुर्निवारमन्यथाऽङ्कं कृष्णमालोक्य मातरौ श्रीयशोदारोहिण्यौ तरौ नौकायाम् एवम् अनेन प्रकारेण तं प्रसिद्धं कंचन अपूर्वम् आतङ्कं शङ्कां प्राप्तवत्यौ ॥१०३॥

## सप्तमः स्तवकः

आगोवर्द्धनमाकलिन्दतनयातीरादनोमण्डले ।
रानन्दीश्वरमर्द्धचन्द्रवदऽभूद्वासः स तात्कालिकः ।
पश्चादेमकटैव पूर्वभणिता या राजधानी तया ।
प्राकट्यं गतया नि जैर्गुणगणैरन्यूनयाऽभूयत ॥ १ ॥
नित्यत्वं सकलस्य यद्यपि हरेर्धाम्नः सुसिद्धं तथा ।
ऽप्येकास्मिन्नपरस्य सम्मिलनतो नोऽनित्यता ईक्ष्यते ।
तेजस्तेजसि वारि वारिणि यथा लीनं च नो हीयते ।
तद्वत्सा च महावनस्थितपुरीलक्ष्मीरिमामाविशत् ॥ २ ॥

अत उभयोरेव पुरश्रियोरेकीभावे तदनन्तरश्रिया-श्रिया सर्वतोभावेन सेव्यमानतायां च सत्यां किं वर्णनीया तदानींतनी वृन्दावनस्य रामणीयकसंपत्तिः ३

तथापि । नानाचित्रपतत्रि हारि हरिणन्यङ्क्वादिनानामृगं ।
नानाभूरुहकुञ्जगुल्मलतिकावापीसरःपल्वलम् ।
कालिन्दीपुलिनैः समुज्वलमथो गोवर्द्धनेनोद्धतं ।
वृन्दारण्यमभीक्ष्य ते मुमुदिरे गोपाश्च गोप्योऽपि च ॥ ४ ॥

अथ पूर्वोदितायां व्रजराजपुर्य्यां व्रजराजो विवेश सनन्दादयोऽपि स्वस्वपुरेषु तदितरेऽपि निजनिजपुरीषु गोशालास्वपि गावो विपणिवीथिस्वपि वणिजः । स्वस्वविपणिस्वपि ताम्बूलिकमालिकादयः ॥ ५ ॥

सर्व एवाऽप्रकटवत् प्रकटेपि तथा बभूवुरित्येवमापुलिन्दमात्मात्मभवनसुखसन्निविष्टेषु सकलजनेषु चिरकालवाससुस्थितवत् । विस्मृतपूर्ववासेषु वृन्दावनतृणसमास्वादमोद्यत्प्रमोदेषु गोधनेषु गूढतया सेवमानेषु नवनिधिषु दासीवत् परिचरन्तीष्वष्टसिद्धिषु च गूढतया स्वयं संव्रियमाणमहैश्वर्य्योपि निरर्गलदुर्निवारतया कदाचित्कदाचिदसंव्रियमाणनिजैश्वर्य्योपि भवति लीलाबालको भगवान् ॥ ६ ॥

वत्सासुरबकाघानां वधः पुलिनभोजनम् । वत्सबालहृतिर्ब्रह्ममोहस्तोत्रे च सप्तमे । आगोवर्द्धनमित्यादौ आङ्मर्य्यादायां सा च दूरसीमवाचिनी ज्ञेया । व्रजस्याऽष्टक्रोशीपरिमितत्वात् राजधानी नन्दीश्वरवर्त्तिनी निजैर्गुणगणैः प्रथमस्तवके वर्णितैः ॥ १ ॥

पुर्य्याः लक्ष्मीः संपत्तिः इमां गोवर्द्धनकालियहृदयोरन्तरालवर्त्तिनीं शकटावर्त्ताख्यां राजधानीम् २

उभयोर्बृहद्वनवृन्दावनयोः एकीभावे मिलने सतीत्यर्थः तदन्तरं तन्मध्ये श्रयतीति तदन्तरश्रीस्तया श्रिया शोभया ॥ ३ ॥ हारि मनोहारि ॥ ४ ॥

अथ इतिकतिपयवर्षानन्तरं पूर्वोक्तायां नन्दीश्वरवर्त्तिन्याम् । स्वस्वपुरेषु सेमरसाहारादिनामभिः ख्यातेषु आविविशुः ॥ ५ ॥

लीलाबालक इति स्वपितृभ्यां तत्सजातीयैश्च लीलामयबालकत्वेनैव सदैव प्रतीयमानइत्यर्थः ॥ ६ ॥

१ सायंचिरप्राद्देइयादिनाद्युः टिप्याबडीपु

अथात्र कियता कालेन वत्सपालनक्षमतामाविर्भावयामास ॥ ७ ॥

सत्स्वपि तत्कर्मसमुचितेषु दासकुमारेषु तथाविधलीलाकौतुकग्रहिलतया भगवतैव प्रेरितान्तःकरणे परमसुकुमारोपि परमदुर्ल्लीलोपि वत्सपालनकर्मणि नियोजनीयोयमिति विचारयति व्रजराजे ॥ ८ ॥

तदुपाकर्ण्य वात्सल्यपारदृश्वरीश्वरी व्रजनगरस्य रस्यमनवगच्छन्तीच्छन्तीच तदपाकर्त्तुं तदसहमाना स्तनन्धयोयमधुना कथमकाण्डे क्लेशयितव्य इति यदा जगाद ॥९॥

तदा स एव लीलावालको लीलावालकोऽमलो मातर्मातः परमेवं वक्तव्यं वत्सपालनकर्मणि ममातीव तोषोऽतोऽसोढव्यंते वचनमिदं मिदं तेनेमामुरीकरोमि १०

तदादिश जननि ! जननिकरेण बालसहचरेण सह वत्सान् चारयिष्ये कौतुकेन कौ तु के न रज्यन्ति। इति बाल्यनिर्बन्धेन यदा मातरमुवाच ॥११॥

अग्रेतनीमेव नन्दीश्वरवासरीतिमत्रैव प्रसङ्गेन वर्णयित्वा इदानीं वत्सपालनादिलीलां वर्णयितुमुपक्रमते । अथेत्यारम्भे अत्रेति शकटावर्त्ताख्यराजधान्याम् ॥ ७ ॥

भगवतेति पदं तदीयांशोऽन्तर्याम्यपि भगवच्छब्देनोक्तः साक्षात्तस्य तु पित्रोः सन्निधौ सर्वदा लीलावेशमयत्वात् तत्कार्य्यायोग्यत्वात्। तथाविधलीलाकौतुकग्रहिलतयेति तदीयांशस्य अन्तर्यामिणस्तथा प्रेरणे हेतुरुक्तः । विचारयति सुहृद्भिः कैश्चित्सह तया भार्य्ययैव वा सह इति मन्त्रणां कुर्वति सतीत्यत्रापि कृष्णस्य तथाविधलीलाकौतुकग्रहिलतयेत्येव हेतुर्ज्ञेयस्तत्रैव स्वपुत्रप्रीतिमालक्ष्य तदनुकूलतथाविधप्रेमोदयात् ॥ ८ ॥

वात्सल्यस्य पारं परां मर्य्यादां दृष्टवतीति दृशेः क्वनिप् वात्सल्यपारदृश्वरीतितदसहने हेतुः ईश्वरीति । तन्निवारणयोग्यतायां तत्कर्मरस्यं स्वरसोचितम् अनवगच्छन्ती न ह्यनुभवन्ती-अत एव तत् दूरीकर्त्तुमिच्छन्ती । अकाण्डे अनवसरे । स्तनन्धयोयमित्यद्याप्यस्य स्तनपाने वैरस्यं न जातमित्यकाण्डत्वम् ॥ ९ ॥

लीलया अवगता इतस्ततश्चलिता अलकाघूर्णकुन्तला यस्य सः । अमलः सुन्दरः । हेमातः ! अतः परं मा एवं वक्तव्यम् अतो हेतोरसोढव्यं सोढुमयोग्यम् इदं वचनम् ननु तत्रैव क्लेशमाशङ्क्य स्नेहेन ब्रवीमि तत्राह ते तव इमं मिदं स्नेहं न उरीकरोमि न अङ्गीकरोमि । मिदमिति ञिमिदा स्नेहने भावे क्विबन्तं पदम् ॥ १० ॥

जननिकरेण जनसमूहेन कौ पृथिव्यां तु के जनाः कौतुकेन न रज्यन्ति अपि तु सर्व एव ॥ ११ ॥

---

१ सम्पदादिभ्यः क्विप्

तदा साऽपि शिथिलनिर्वन्धा यदि न किंचिदप्यपरमूचे । तदा व्रजेश्वरोऽपि रोपितकौतुको हृदि सुदिनाहमालोक्य सह वलभद्रेण भद्रेण सहचरद्भिर्वालसहचरैश्च वत्सपालनाय स्वयमेव गवाङ्गनमागत्य कतिपयानेव वत्सानग्रतः समुपपाद्य तनुतरां लोहितयष्टिकामेकां करे धारयित्वा वत्सैः सह चाल्यमानं तनयं स्वयमप्यऽनुचचाल ॥ १२ ॥

एवमनुयान्तं पितरमनुयान्तीं च मातरं विलोक्य निवर्त्तेतां भवन्तावयमत्राऽभियुक्ता नात्र शङ्का करणीयेति वदति तनये"मा दूरं गाः" इति एवाद्य चारय स्ववत्सान् मा विलम्बश्च कार्य्यःशीघ्रमेवागन्तव्यमिति च ब्रुवाणौ पितरावथ निवर्त्त्य सवलः सवालसहचरः सकौतुकमेव प्रथमेऽहनि कृताभ्यास इव वत्सान् चारयमास ॥ १३ ॥

एवमहरहरहतविक्रमः क्रमसमेधमानसमेधमानसोल्लासनया तया वत्सचारणखेलया खेलयारूढमनमः मर्सृमरानमरानवरतवरतनुसहितान् संहितान प्रमोदयन्मोदयन्नपि व्रजवासिनः सहसहचरैर्वलभद्रेण च भद्रेण चरितवैचित्र्येण जननीजनकयोरानन्दं मुहुस्तन्वानस्तन्वा नवघनघटाश्यामलयाऽमलया व्रजभुवं च श्यामलयनयदि तस्यामेव लीलायां कुशलो वभूव तदा यावन्तो वत्सास्तावतामेवचारणायपर्य्युत्सुक आसीत् ॥ १४ ॥

तथा सति प्रतिदिवसमनुदित एव किरणमालिनि त्रिभुवनजनपावनजनन्या जनन्यायकोविदया दयालुहृदयया स्वयमेव शयनोत्थापन-मुखधावन-परिमार्जनाऽभ्यञ्जनोद्वर्त्तन-स्नपनाऽनुलेपनाऽलङ्करणकौशलानन्तरमाशयित्वा शाययित्वा च क्षणमनुगतेऽर्द्धपथपर्य्यन्तमित एव निवर्त्त्यतामिति प्रतिमुहुरतिवत्सलां मातरमेनामतिमृदु लमधुरतरेण वचसा निवर्त्य ॥१५॥

सह वलेन सुवलेन सुदाम्ना सुदाम्ना सुललितवक्षाः सहचरैरपरैश्च शाद्वलतलमासाद्य नवनवशष्पाङ्कुरनिकरसमास्वादासादितमोदेषु वत्सनिकरेषु चरत्सु विविधाविविधकौमारखेलाकौतुकेन गमयन् समयम् ॥१६॥

सुदिनाहं शोभनस्य दिनस्य अहोरात्रस्य संबन्धि यदहस्तत् ।१२। अभियुक्ता अभिज्ञाः ।१३।

क्रमेण पूर्वदिनतोऽप्यपरस्मिन् दिने तस्मादप्यन्यस्मिन् दिने सम्यक् एधमानो वर्द्धमानः समेधस्य मेधासहितस्य मानसस्यचेतस उल्लासो यस्य तस्य भावस्तत्ता तया । तयालोके प्रसिद्धया खे आकाशे लयम् आनन्दमूर्च्छाम् आरूढं मनो येषां तान् अमरान् अनवरतं निरन्तरं वरतनुसहितान् स्त्रीसहितान् । स श्रीकृष्णः हि निश्चितं प्रमोदमोदयोः कदाचित्कायसार्वदिकत्वाभ्यां भेदः तन्वा शरीरेण मुहुरानन्दं तन्वानः विस्तारयन् ॥ १४ ॥

पावनजनन्या पवित्रोत्पादिकया आशयित्वा भोजयित्वा अनुगतः कृतानुगमनः ॥ १५ ॥

सुदाम्ना तन्नामसख्या सुदाम्ना शोभनमाल्यया । शाद्वलः नवतृणहरितवर्णदेशः ॥१६॥

---

१ सृमरो गवयः शशा इत्यमरः । तत्र सृमरः सरणशीलोमृगविशेषः ॥

पुनरपि समयमाकलय्य माध्यन्दिनाशनार्थं निजपरिजनेनाऽऽहृतमेव व्रजपुरपरमेश्वरीप्रेषितं सुकविकाव्यमिव सुरसं पुरुषार्थसार्थमिव नियतचातुर्विध्यं पुरुषार्थसाधनमिव अशीतलप्रायं विश्वमिव प्रभूतमन्नमासाद्य सह सततचरनिकरेण कुतूहलिना हलिना च समं समन्ततो मण्डलीभूय सपरिहासहासकौशलं भुक्त्वा पुनरपि वत्सानुपदीनो दीनोद्धरणः काननविहरणरणत्किङ्किणीकः कोमलतलचरणकमलाभ्यां धरणीहृत्तापमुत्सारयामास ॥१७॥

एवमनुदिनमेव यामार्द्धशेषे दिवस एव सकलवत्सनिकुरम्बमवधाय नालयमालयाभिमुखं यदागच्छति. तदाऽध्वनिकृतनयना ध्वनिकृतश्रवणा च तनयवत्सलतयोत्कण्ठमाना पुरतोऽभिव्रजति व्रजतिलकवल्लभा साऽपि तज्जननी ॥१८॥

आयाते च भवनं सत्स्वपि दासदासीनिकरेषु स्वयमेव पूर्ववदवयवकिसलयपरिमार्जनादिना परिष्कार्य्य कार्य्यकुशला सासायाशनमाशयित्वा प्रदोषं प्रदोषं समुत्तार्य्य परार्द्धशयनमारोप्य शाययामास ॥१९॥

इत्येवं गतेषु कतिपयेषु दिवसेषु कस्मिंश्चिदहनि वत्सांश्चारयता वत्सगणानामन्तरेव विहितसात्वतवेशो महाशाक्त इव परमताजिघृक्षया विस्तारितास्तिकाकारश्चा

नियतं चातुर्विध्यं धर्मार्थकाममोक्षाणां चर्व्य चोष्य लेह्य पेयानां च यत्र तं तच्च । अशीतलम् अनलसम् अधिकारिणम् प्रकर्षेण अयते प्राप्नोतीति तत् । पक्षे स्पष्टम् प्रभौ ब्रह्मणि उतम् । पक्षे प्रचुरम् । वत्सानामनुपदम् अन्विच्छन्तीति वत्सानुपदिनः सुबलादयः तेषाम् इनः श्रेष्ठः कोमले तले ययोस्ताभ्यां चरणकमलाभ्याम् ॥ १७ ॥

दिवसे यामार्द्धशेषे सति यदा आगच्छति तदा अध्वनि कृते नयने यया साध्वनौ वत्सपालादीनां कृते श्रवणे यया सा व्रजस्य तिलकतुल्यः श्रीनन्दः तस्य वल्लभा श्रीयशोदा ॥१८॥

आयाते तनये सति सा यशोदा प्रदोषं प्रकृष्टभुजं श्रीकृष्णं सायं अशनं भोजनं यस्य तथाभूतमन्नाद्याशयित्वा भोजयित्वा प्रदोषं समुत्तार्य्य प्रदोषसमयानन्तरं प्रदोषे शयनानौचित्यात् प्रेम्णश्च औचित्यग्राहित्वस्वभावत्वात् ॥ १९ ॥

वत्सान् चारयता तेन कृष्णेन वत्साकारः कोऽपि कंसानुचरो यमसदनं गमयाम्बभूवे इत्यन्वयः। विहितसात्वतवेश इति महाचतुरसभायां तथात्वस्य अकिंचित्करत्वं प्रत्युत तस्यैव लज्जावज्ञादण्डादिप्राप्तिरिति भावः। विस्तारित आस्तिकाकारो वेद प्रामाण्यग्राहित्वलक्षणो येन तस्य नास्तिकत्वं प्रच्छाद्य स चार्वाको बौद्धः तथापि विद्याचातुर्यवतो महापण्डितस्य नास्तिकेन दुर्ज्ञेयमतत्वम् अजेयत्वं च प्रत्युताऽचिरादेव निजस्वरूपाविष्कारो दण्डश्च तेन लभ्यत इति भावः। मित्रभावश्चौर इति तथापि महाधार्मिकं सदैव धर्मो रक्षति चौरस्य तु नाश एवेति भावः। यद्वा महत्तमस्य स्वभावेनैव तत्राकस्मादेव चौरोऽयमिति बुद्धिः स्फुरति ततश्च तस्य नाश एव इति भावः। चारीगर्त्त इति मत्ततामये हस्तिन्येव तत्फलोदयो न तु मनुष्यमात्रे कस्मिंश्चिदपीति

र्योक इव सर्वस्वजिहीर्षया समुपसादितमित्रभावश्चौर इव मृदुलतरतृणाच्छादितमुखो वारीगर्त्त इव कोऽपि कंसानुचरो वत्साकारः सह वत्सगणैरेव चरन् २०

न केनाऽपि प्रकारेण लक्ष्यमाणः केनचिदपि तेन सकृदेवाऽवलोक्य विपक्षोयमिति जानता निखिलसत्त्वज्ञचक्रचूडामणिना. पूर्वजं प्रति आर्य्य! किमयं व्रजचरो वत्स उत वा कृत्रिमः कोऽपीति वदता तदनिर्णीयमान एव पश्यत्सु सकलेष्वेव सहचरेषु मृदुतरकमलकुड्मलकोमलेन वामकरतलेन पश्चात्तलं चरणयुगलमाकृष्य धृत्वा समुन्नीय मुहुरलातचक्रवदाऽऽघूर्णयता कपित्थतरुकाण्डमधि निष्पिंषताभयाणाभिमुखेषु प्राणेषु धृतनिजविकृताकारो यमसदनं गमयां बभूवे ॥ २१ ॥

बभूवेदमेव सुरसभारसभावकारि कारिहननं हरविरिञ्चिमुखमुखरितं च वस्तुतो दुर्घटघटनपटीयसो दुष्करकर्मकर्मठस्य नैतदद्भुतम् ॥ २२ ॥

तदनु दनुजदमनो मनोरमहेलालसो लालसो निजसहचरनिकरेषु गगनाङ्गनचरमभागभागऽशीतकरकरमालिन्यमलिनतामरसमयं समयं वीक्ष्य दिनान्तरवत्सानुचरो भवन् भवनमाजगाम ॥ २३ ॥

भवनमागम्य गम्यमानेतरचरितस्य तस्य ललितवपुष्कलं पुष्कलं वत्सवत्सर्वावयवस्य दानवस्य मारणं रणं विनैव कृतवतो लीलाविलसितं सर्वमेव सर्वे निजनिजजननीजननीयमाना अपि शिशवः प्रथममेव व्रजपुरपरमेश्वर्ये कथयां बभूवुः ॥ २४ ॥

---

तेन यद्यप्यसौ चिरादपि तथाऽवर्त्तिष्यत् तदपि कृष्णसखानां किञ्चिद्भयं नाभविष्यत् । प्रत्युत तस्यैव सदा कृष्णभयाद्चेतन प्रायत्वमेवावस्थास्यात् इतिभावः ॥ २० ॥

तेन श्रीकृष्णेन तैः सखिभिरनिर्णीयमान एव निष्पिषता वेगक्षेपेण संचूर्णयता यमसदनमिति तदानीतनलीलापरिकरलोकप्रतीत्यभिप्रायेणोक्तम् वस्तुतस्तु यमोपलक्षितस्याष्टाङ्गयोगस्य सदनरूपं ब्रह्मस्वरूपमित्यर्थः ॥ २१ ॥

इदमेव कारिहननं ईषत् शत्रुहननं सुरसभाया देवसमूहस्य रसेन भावकारि प्रीतिकरणशीलं बभूव अघबकादिमहासुरहननम् अग्रेतनं तु किं वक्तव्यमितिभावः। ईषदर्थे इति कोः कादेशः कर्मठो निपुणः ॥ २२ ॥

हेलालसः खेलारसः लालस अतिशयकान्तियुक्तः।समयं वीक्ष्य कीदृशः गगनमेवाङ्गनं तस्य चरमभागं पश्चाद्भागं भजते प्राप्नोति अशीतकरः उष्णकिरणः सूर्य्यस्तस्य कराणां किरणानां मालिन्येन हेतुना मलिनानि तामरसानि पद्मानि तन्मयं वत्सानाम् अनुचरतीति तथाभूतो भवन् सन् ॥ २३ ॥

गम्यमानादितरं अगम्यं चरितं यस्य तस्य कृष्णस्य लीलाविलसितं कीदृशं ललितं आनन्दानुभवेन शोभितं वपुः वक्तृद्रष्ट्रश्रोतॄणां करोतीति तत् रलयोरैक्यात् पुष्कलं श्रेष्ठं वत्सतुल्यसर्वाङ्गस्य निजनि जजननीजनैर्भिजभर्थ्यासह मामानुपथपर्य्यन्तमागतैर्निज गृहकर्म प्रति नीयमाना अपि बलात्ततो निवर्त्य इत्यर्थः। महाबलस्य दैत्यस्य गोवत्सत्वं कुतो भयात् । तद्वधे वा शिशोः शक्तिः केनिमेन मूर्पैव सा ॥ २४ ॥

भगवानपि जनकजनकनीराजितो जननीराजितो दिनान्तरवत् कृतसायंतन-स्नानानुलेपो जनकेन सह कृतसायाशनः सुखसुप्तो रजनीमनैषीत् ॥ २५ ॥

परेद्यवि द्यवि चाऽनुदित एव यमुनाजनके जनकेलिकलाकुशलः कृताहारो हारोल्लसद्वक्षाः स एव मिलितेषु सहचरेषु सबलेन बलेन सहपूर्ववत्सकलवत्सकलनया नयाऽविरोधेन वनान्तरमासाद्य नवशाद्वलतलमालोकयन् क्वचन जलाशयोपकण्ठे ललितानि नवनवाङ्कुरितानि शष्पाणि पानीयसन्निकर्षेसुमेदुराणि समालोक्य वत्सकुलं तत्रैव निवेशयामास ॥२६॥

समनन्तरमनन्तरसः स वत्सपालः पालयिता रराज सकललोकपालानामनतिदूरे पूतनासहोदरोऽदरोत्तुङ्गवकशरीरः कंससम्मतो महावीरः कोपि दनुतनयो नुतनयोऽखिलदानवगणेन गणेनइव भगवन्तमनुसंदधानो दैवगत्याऽवगत्याऽयमेव स इति धरणितलमुन्नमयमन्निव धरणितलनिहिताधरचञ्चुर्दिवमवनमयन्निव सुतलनिवेशितोर्द्ध्वचञ्चश्च युगपदेव देवदनुजमनुजादिसकलजीवजीवनाकर्षणाय वितताय तमहासन्दंशं विवृत्य स्थित इव कालपुरुषः सकलैरेव भयभरनिर्भरभज्यमानमानसैरातङ्कपङ्क्तिलैरिव सहचरैरालुलोके ॥ २७ ॥

आलोक्य च सखे! नायं पक्षी। अपि तु सकलानेव नो गिलितुमिव कृतारम्भेण गुरुतरदम्भेन केनापि वकाकृतिना दानवेनैव भवितव्यम्। तदितः पलायनमेवाऽस्माकं पथ्यम्। अथवा कैलाशशिखरिशिखरद्राघीयसः शरीरादपि दीर्घदीर्घतराचञ्चुपुटादस्य कथं पलायनमपि ॥ २८ ॥

इति तेषु मीमांसमानेषु प्राणसमानेषु प्राणरक्षणार्थं नाशङ्कनीयमिति दरहसितसुधापेशलसलालित्यमभाषमाणमकुतोभयमभयदमखिललोकस्य सहेलमभिमुखमु-

जनकजननीभ्यां सह राजिता दीप्तः जनैः सर्वैरेव निर्मञ्छितः प्रेम्णेत्यर्थः ॥ २५ ॥

परेद्यवि परदिने सद्यः परुत्परार्यैषमः परेद्यव्यद्यपूर्वेद्युरित्यादिनासिद्धम्। द्यवि आकाशे यमुनाजनके सूर्ये सकलवत्सानां सर्वसहचरवत्सानां कलनया संमेलनेन ॥ २६ ॥

पालयिता सकललोकपालानामित्यनेन तादृशखेलाविशयस्यापि तस्य मनसिदुष्टागमसमयलब्धस्वसेवावसरा ईश्वरी शक्तिदुष्टसंहाराय सहसैवपर्य्यस्फुरदितिद्योतितम्।अदरम् अनल्पं नुतः स्तुतो नयो नीतिर्यस्य सः। गणयन्तीति गणा. गणकास्तेषाम् इनःदैवज्ञश्रेष्ठइव गणयित्वा अवगम्येत्यर्थः। धरणितलेनिहितो वेधप्रकारेण अर्पिताः उत्तरचञ्चुरधश्चञ्चुर्येन सः किमर्थमिव धरणितलमुत्पाट्य उन्नमयन्निव ऊर्ध्वं नेतुमिव एवं दिवं स्वर्गम् अधो नेतुमिव पुनश्च महाधातुकस्वभावमालक्ष्य अन्यथोत्प्रेक्षते। युगपदेव इति सन्दंशं संडासी इति ख्यातम् ॥ २७ ॥

सखेहे श्रीकृष्णकैलाशशिखरिणः शिखरादपि द्राघीयः अतिदीर्घं यत् शरीरं तस्मादपि दीर्घतरात्तस्य चञ्चुपुटात्कथं पलायनमपि शक्यमित्यर्थः ॥ २८ ॥

मीमांसमानेषु विचारयत्सु सत्सु वयस्येषु तं श्रीकृष्णं गिलति स्म इत्यन्वयः। दरम् ईषत्ह-

पसर्पन्तं तमखिलभुवनैकबन्धुमनुपधिनिरवधिकरुणैकसिन्धुमव्ययमव्याहतमहाप्रभावमतिसाहसः स पामरोऽमरोपहतिकरः करालतरतुण्डः सहसोपपत्य पश्यत्सु सकलेषु दिवि दिविषत्सु गिलति स्म ॥ २९ ॥

तदनु तदनुपायमपायमिवात्मनां मन्यमानाः सर्व एव सहचरा सहचरामेण हाहेति निगदन्तो गदं तोदमतिमहान्तमापद्यमाना दिवि च दिविचराः अहो कष्टमिति व्यथमाना मानापहारेण यदामुह्यन्ति स्म ॥ ३० ॥

तदैव ज्वलदनलमिव काकुदं काकुदं दहन्तं क्रमेलक इव प्रमादेन गिलितं नवसहकारपल्लवमिव प्रबलतरगलदण्डाकुञ्चनप्रसारणविकलः सत्रासपक्षतिविधूननकातरस्तरसा निर्यद्भिःप्राणैरिव बहिर्निःसार्यमाणं तमतिवेगेनैव विवृतगलचञ्चुपुटस्तत्क्षणेनैव वचाम ॥ ३१ ॥

ततोद्गीर्ण एव विधुन्तुदवदनतो निष्क्रान्तश्चन्द्र इव घनतरघनघटाकोटरतो वहिर्गतः किरणमालीव गिरिवरगुहाकुहरतो विनिष्क्रान्तः कण्ठीरवशावक इव दन्तुरतमतमःसमूहसमूढसंसारकूपतो निर्मुक्तः स्वभक्तजन इव तद्गलगलितक्लेदलवा-

न्तितसुधया पेशलं सुन्दरं सलालित्यं च यथास्यात्तथा । अमराणां देवानाम् उपहतिम् उपघातं करोतीति सः ॥ २९ ॥

तदनु तदनन्तरं तत्र बकासुरेण कृष्णस्य गिलनम् आत्मनाम् अनुपायम् उपायशून्यम् अपायं विपदं मन्यमानाः गदं व्याधिम् । रोगव्याधिगदामया इत्यमरः । कीदृशं तोदं व्यथाकरं मनापहारेण चेतनापहारेण मन् ज्ञानेघञन्तः ॥ ३० ॥

तदैव तं श्रीकृष्णं काकुदं शोकभीत्यादिमयविकारप्रदं कुतः ज्वलन्तमनलमिव काकुदं तालुदहन्तं तत्क्षणेनैव वचाम इत्यन्वयः । तालु तुकाकुदमित्यमरः। क्रमेलक उष्ट्रः। सहकारः आम्रः। प्रबलतरं यथास्यात्तथा गलदण्डस्य आकुञ्चनं रोधपीडानुभवेन संकुचितीकरणं प्रसारणं तद्वमनार्थं विस्तृतीकरणं ताभ्यां व्याकुलः पक्षती पक्षौ तयोर्विधूननमितीवैयन्यलक्षणं निर्यद्भिर्निर्गच्छद्भिः ॥ ३१ ॥

चन्द्र इवेति वयस्यान् प्रति व्यथाशोकविस्मारणार्थं स्वमाधुर्यज्ञापनया किरणमालीवेति असुरान् प्रति त्रासनार्थं दुःसहोमस्वप्रतापव्यञ्जनया गिरिवरेतिकण्ठीरवेत्याभ्यां देवान् प्रतिशङ्कानिरासार्थं स्वव्ययाऽभावसूचनया। प्रत्युत क्रीडासुखास्पदत्वबोधनया च स्वभक्तजन इवेति वैकुण्ठगतसाधनसिद्धपार्षदान् प्रति तत्तत्पूर्वानुभवस्मारणार्थं तथाकारमात्रदृष्ट्याऽपि कौतुकभरेण सादृश्यसंभावनया उत्प्रेक्षा इति क्लेदलवैर्लिप्तानि वसनभूषणानि यस्य तथाभूततया ग्रासमुक्ते चन्द्रे पटलवर्गलेशो राहुचिह्नविशेषः शोभेव मेघमुक्ते किरणमालिनि मेघखण्डलेशर्भ पङ्कः दुःसहतेजस्त्वप्रतिपादक एव दुर्दिनोदिते सूर्ये लोके तथानुभवात् गिरिगुहाकुहरनिष्क्रा

१ काकुः स्त्रियां विकारोयः शोकभीत्यादिभिर्ध्वनेरिति काकुं ददातीति तम्

क्विन्नवसनभूषणतया शोभातिशयमेव बिभ्राणो न भेतव्यमिति मधुरतरसमणयकल स्वरमखिलसखिजनान् मूर्च्छितो विरमय्य ॥३२॥

पुनराक्रोशेन चञ्चुपुटविघट्टनया निष्कासयितुमापाततः पततस्तस्य वामकरकमलकुड्मलेनोर्ध्वचञ्चुदलं दक्षिणकरकमलकोशेनाऽधरचञ्चुदलमवधृत्य सहचरबालकानां दुःखशोकाभ्यां सह संतापभरनमदमरनिकरान्तः करणानां भयेन सह मवलतरदनुजदैतेयपरिषदां हर्षोत्कर्षेणसह सहसैव हसन्मुखकमलो हेलयैव वीरणतृणस्येव विदारणं विधाय निरर्गलगलदस्रगधाराधौतधरणि तलमभितोऽभितश्छिद्यमान नाडीनालमविरल मेदःस्रुति वपुषः शकलद्वयं गिरिशिखरद्वयद्वयसं पातयामास ॥ ३३ ॥

पततोश्च तयोः शकलयोः पतति स्म मदमुदितविबुधघनघटाछुप्यमाणनन्दनवनकुसुमसंहतिरपि दिवो हर्षभरजनितनयनसकज्जलजलबिन्दुभिरिव देवद्रुमविलासिभिरलिभिः समं समन्ततश्च गन्धर्वकिन्नरयुवतयो बत योजितहर्षं ननृतुरभितोऽभितश्च दुन्दुभयोऽभयोदीरिता नेदुरतिसुमहदाश्चर्य्यं तदिति मन्वाना मन्वानायिता मुनयोपि तुष्टुवुः ॥३४॥

इह च सहचराः प्रमोदभरभज्यमानहृदया हृदयाधिनाथं तमेकैकशो बकरिपुं करिपुङ्गवगामिनमधाऽऽलिङ्गय लब्धजीविता इव विलोक्य दिवसावसानमशेषमपि दिगन्तरवत्सामवहाय्य वत्सकदम्बकंकदम्बकन्दुकलसितकरकमलेन तेन प्रियसखेन-सकलसौभगवता भगवता समं भवनमागत्य गत्यवसादासादितमान्थर्य्यमाधुर्य्यधुर्य्य-मुत्कण्ठा कण्ठाग्रीक्रियमाणमिव तदेव बकहननं व्रजपुरपरमेश्वर्य्यै कथयांबभूवुः ३५

न्ते कण्ठीरवेऽपि तदीयगैरकादिचिह्नलेशः खेलाकौतुकद्योतक एव संसारनिर्मुक्ते भक्तजनेऽपि सिद्धदशा प्रथमक्षणे बाधितानुवृत्तिन्यायेन स्वप्रभङ्गसति स्वप्नानर्थाऽनुसंधान लेप इव विषयसुखानुभवलेशो विस्मयावह एवेति चतुर्ष्वपि साधर्म्यकल्पनं द्योतितमिति ॥३२॥

विघट्टनया चालनेन निष्कासयितुं ठोत्कारेण अर्दयितुम् आपततः आगच्छतः पततः पक्षिणः। पतत्पत्ररथाण्डजा इत्यमरः । निरर्गलं निर्निवारं गलन्त्या अस्रग्धारया धौतं धरणितलं यथा स्यात्तथा अविरला मेदसां स्रुतिः स्रावो यत्र तत् यथा स्यात्। शकलद्वयं खण्डद्वयम् गिरिशिखरद्वयप्रमाणम् प्रमाणार्थे द्वयसच् प्रत्ययः ॥ ३३ ॥

तयोः पततोः सतोः। पतति स्म अपतत् नयनसकज्जलेति दिवो नायिकात्वमारोपितम् बत विस्मये योजितहर्षं यथा स्यात्तथा अभयम् असुरादिभ्यो निःशङ्कत्व । तेन उदीरिताः। मनुना वैवस्वतेन आनायिताः स्वजनद्वारा तत्र प्रापिता इत्यर्थः ॥ ३४ ॥

अत्यवसादेन अत्यौत्सुक्यात् अतिशीघ्रगमनश्रमेण हेतुना आसादितं मान्थर्य्यं अतिश्वासभूम्ना एकप्रयत्नेन उच्चारणासामर्थ्यं तेन यन्माधुर्य्यं तस्य धुर्य्यं यथास्यात्तथा कथयांचक्रुः । धूर्वहे धुर्य्यधौरेयधुरीणा इत्यमरः । बकस्य बकासुरस्य हननं हननवृत्तान्तं। कीदृशम् उत्कण्ठया कण्ठाग्रीक्रियमाणमिवेति समासो यमकानुरोधेन कृतः ॥ ३५ ॥

पावः परं मातः परं कौतुकं कौ तु कं न विस्मापयति तत् । यदय सख्या स ख्यापितभुजपराक्रमः पराक्रमः कृतः ॥१६॥

तथाहि । निजमदपर्वतायमानं पर्वतायमानं सर्वानेव नो गिलितुमुद्यतं मुदतं ज्वलन्तमिव पावकं वकं तीक्ष्णचञ्चुं चञ्चूर्यमाणं करसरोजाभ्यामाभ्यामाहितहेलं हेऽलंसुकृतिनि ! तव ! कुसुमसुकुमारः कुमारः सपदि वीरणतृणमिव पाटयामास १७

इति वत्सपालक बाल कलवचनमाश्रुत्य श्रुत्यतिकौतुकमदमाति भयदमुभयदशायामेव विस्मयस्मयननकमथपुरपुरन्ध्रीभिः सह सहसा व्रजेश्वरी किमपि कथयितुमारेभे ॥ १८ ॥

हंहो । यैदर्थमजैहाँगेहं वेत ! महावनावस्थितिं
तैदेतैद्ऽतिभीतिर्दं दितिजकृत्यमुन्मीलति
अयं परमचञ्चलः परमसौहसोऽसाध्वसः
कै यामि करवाणि किं हतविधेनं वे द्धी हितम् ॥१९॥

इति क्षणमनुचिन्त्य दिनान्तवद्वालकान् स्वालयान् विसृज्य तनयस्य समयोचि-

हे मातः अतः परं कौतुकं मां न संभवेत् इत्यर्थः । तत्कौतुकं कौ पृथिव्यां तु कम् अपि तु सर्वमेव जनम् । सख्या श्रीकृष्णेन स अघासमदृश्यत्वेन प्रसिद्धः परस्य शत्रोः पराक्रमः सखिकर्तृकः तस्य पराभव इत्यर्थः । कीदृशः । ख्यापितो भुजस्य पराक्रमो यस्मात् सः॥१६॥

निजमदेन यत् पूर्वं उत्सवस्तेन तायमानं विस्तीर्यमाणं गिलितुमुद्यतं कृतोद्यमं मुदतं मुद्भ्यः आनन्देभ्यो यतम् उपरतम् आसन्नमृत्युत्वात् । चञ्चूर्यमाणं कुटिलगामिनम् उत्परस्यातः चरफलयोश्चेत्येलुगागमौ । करसरोजाभ्याम् आभ्यामिति कृष्णहस्तौ स्वतर्जन्या स्पृष्ट्वादर्शयन्ति आहितहेलं यथास्यादित्यायासाभावसूचनं। हे अलम् अतिशयसुकृतिनि तवैव-सुकृतवशादेव तादृशवत्सवदुष्टवधे अस्य भुजयोर्बलम् उदयतो अन्यदातुक्रीडाबाहुयुद्धे अस्माभिरपि कतिवारं पराजितस्याऽस्य कुतस्तथा श्वतोबलसंभावनेति भावः । सुकृतिनीत्यस्यसंबोधनपदस्यैतन्मातृभिरेवं विविधविपत्तौ व्रजेश्वर्या बहुधा प्रयुक्तस्य बालस्वभावाद्यथाश्रुतधारणया अनुकथनरीत्या एभिरपि प्रयोगः कृत इति ज्ञेयम् ॥ १७ ॥

कुशलिनः पुत्रस्याद्भुतचरित्रमिति श्रुत्योरतिकौतुकप्रदं गिलितुकामस्य महाबकस्य वधः पुत्रकर्तृक इतिभयदं।युगपदेव उभयदशायांकौतुकदशायां भयदशायांच विस्मयेन स्मयो मन्दहास्यं तस्य जनकम् । तथाविधचरित्रत्रेपि पुत्रस्य कुशलित्वदर्शनमिति कौतुकदशायां विस्मयः। विस्मयोऽद्भुतमाश्चर्यमित्यमरः । तादृशबकस्य कोमलाङ्गशिशुनापि विदारणमिति भयदशायां च विस्मय इति ॥ १८ ॥

अजहांत्यक्तवत्यस्मि अयं मत्पुत्रः ॥ ३० ॥

प्रगये व्यवसायो यस्याः सा । सायाशनं सायंकाले अशनं भोजनं यस्य तत् पानकाश-

ताभ्यञ्जनोद्वर्त्तनादि कारयित्वा प्रणयव्यवसाया सायाशनमाशयित्वा तात ! गृह एव भवता स्थीयतां नाऽतः परे वनान्तरे गन्तव्यं वत्स ! वत्सरक्षणक्षणस्ते विरमतु वत्सरक्षणे बहवः सन्ति । किं तवाऽमुनाऽयासेनेति मननीजननीतिकरवचनमाकर्ण्य मातर्मा तव भयं किमपि सर्वेऽमी मृषैव वदन्ति । तदलं चिन्तयेति निद्रामभिनयतिसति लीलाबालके भगवति जननी च तमतिपरार्द्ध्यशयनतले सलालनममूषुपत् ॥ ४० ॥

एवं लीलालस्य लस्यमानचरितस्य तस्य नित्यसलीलताकल्पलताकल्पभूतमेतत् शैशवादि विवादि विरुद्धाते यदपि मूर्त्तानन्दत्वेन नित्यकिशोरतयाऽविकारित्वात् । तथापि तथापिहितपरमैश्वर्य्यस्य हितपरमैश्वर्य्य-स्यद-ललितं तस्य तल्लीला-

ष्कुलीलड्डुकादि जननीतिकर इति वचनविशेषणम् अतिपरार्द्धे परार्द्धमूल्यमप्यातिक्रान्ते शय्यातले । असूसुपत् स्वापयमास॥ ४० ॥

एवं शैशकौमारमुपसेदुषः श्रीकृष्णस्याकस्मादाविर्भूतं वेणुगानाभ्यासवनमालादिप्रसाधनैर्माधुर्य्यस्याऽतिवैलक्षण्यं वर्णयिष्यन् प्रसङ्गान्नित्यकैशोरेऽपि तस्मिन् बाल्यपौगण्डलीलयोराविर्भावतिरोभाववत्योरपि नित्यस्थितिपरिपाटीप्रकारमुपाक्षिपयति एवमिति । एवं लीलां लाति गृह्णाति तस्य इत्यनेनवर्णितान्यपि लीलान्तराणि सूचितानि । नित्यसलीलता नित्यलीलावत्वं सैव कल्पलता कल्पवल्ली तत्तदनुरक्तविविध भक्तवाञ्छितपूरणात् तत्कल्पभूतं शैशवादि तत्तन्नित्यलीलामयमेवेत्यर्थः । आदिशब्दात् पौगण्डञ्च यदपि यद्यपि विरुध्यत इति बाल्यकैशारयोः परस्परविरुद्धस्वभावत्वात् । ननु जानुचङ्क्रमणादिनिकुञ्जविहाराद्योर्बाल्यकैशोरलीलयोर्युगपदेव श्रीकृष्णे धर्मिणि विरोधः कालभेदव्यवस्थया तु कुतस्तयोर्विरोधस्तत्राह नित्यकिशोरतयेति । ननु यद्येवं तर्हि जन्मारभ्य प्रकृतबालकस्येवास्य कथं तथा तथा विकारित्वप्रतीतिस्तत्राह अपिहितम् आच्छादितं परमैश्वर्य्यस्वयं भगवत्वेन महाषडैश्वर्य्यं यस्य तदिच्छावशाल्लीलाशक्त्यैवेत्यर्थः तस्य श्रीकृष्णस्य तेन नित्यभूतं षडैश्वर्य्यमिव नित्यकिशोरत्वस्वरूपमपि तदानीं तयैव बाल्यलीलारसपुष्ट्यर्थमाच्छादितं तिष्ठतीत्यर्थः॥ ननु कथमेवमुच्यते पूतनादिवधविश्वरूपदर्शन बन्धनदामद्व्यङ्गुलन्यूनत्वापादकविचित्रैश्वर्य्यसंवलितत्वेनैव तत्तद्बाल्यलीलाया अपि दृष्टत्वादित्यत आह हितं विस्मयाऽनिष्टाशङ्कादिभिर्वात्सल्यरसस्य पोषकं न तु तद्विघातकं यत् परमैश्वर्य्यं तस्य स्यंदेन वेगेन ललितं प्राप्तशोभं तत् प्रसिद्धं तस्य तथा लीलायितं येन नित्यकैशोरे एव वपुषि तथा बाल्यादिप्रकाशः । कीदृशे सकलान् वात्सल्यसख्यमधुरादीन् सर्वानेव भावान् पुष्णातीति तस्मिन् तेन बालादिवपुः तादृशत्वाभावात्तत्प्रकाशत्वमेव तथोक्तं "भक्तिरसामृतसिन्धौ" वयसो विविधत्वेपि सर्वभक्तिरसाश्रयः। धर्मीकिशोर एवात्रनित्यनानाविलासवानिति प्रकाशे को हेतुस्तत्राह स्वस्ववासनासु वात्सल्यादिभावमात्रमयीषु वासो नैश्चल्यं येषां तथाभूता ये नानाविधभक्तास्तेषामनुग्रहाधीनतया तेन अनादिसिद्धवेदागमादिप्रसिद्धतत्तदुपासनापरम्पराप्रवाहादेव तत्त-

१, एपदोजवे इति न लोपो निपात्यते ।

यितं येन स्वस्ववासनावासनानाविधभक्तानुग्रहपरवशतया सच्चिदानन्दघने नित्यकैशोर एव सकलभाववपुषि वपुषि तथा तथा प्रकाशः न तु साऽवस्थाकालिकी किंत्वचिन्त्यवैभवत्वे वै भवत्वे तदेव सकलं बाल्याद्यपि निस्तर्कनित्यमेव ॥ ४१ ॥

एवं निर्व्यलीकमुरलीकलमुरलीकुर्वन् कलगानगाऽनवद्यत्वेन वैणविकत्वेन व्रजपुरपुरन्ध्रीणां विस्मयमाततान ॥ ४२ ॥

आगत्य च तास्तस्य सन्निधिम् ।

हे कृष्ण! मातृकुचचूचुकचूषणेऽपि नालं यदेतदधरोष्ठपुटं तवाऽऽसीत् ।
तेनाऽद्य ते कतिपयेषु दिनेष्वकस्मात्कस्माद्गुरोरधिगतः कलवेणुपाठः ॥
निर्मञ्छनं तव नयामि मुखस्य तात वेणुं पुनर्ललन! वादय वादयेति ।
ऊचुर्यदा स्वजननीजनकोपकण्ठे तं वादयन्नथ तदा सरसीकरोति ॥ ४३ ॥

तमालवर्णं तमालवर्णं वाङ्मनसावसानं वसानं च वसनं केशरपरागभरपिञ्जरतमालिनमिव वनमालिनमिव वनकुञ्जरशावकं वकवैरिणमालोकयितुमहरहरेवनभसि भसितधारिणा देवेन सह सहकमलजनिना च देवेन सुरनगरनागराः समुपसीदन्ति ॥ ४४ ॥

लीलाया नित्यत्वं सूचितम् । अत एव नित्यस्थितस्यैव बाल्यादेः प्रकाश एव न तु कालिकी कालकृता ननु स्वस्वोचितकाल एव तस्यास्तस्या अवस्थाया जन्यत्वेनैव प्रतीतेः कथं कालिकत्वखण्डनं प्रतीतिरवास्तवीति चेत् प्रतीतिमयान्येव सर्वाणि तानि तानि लीलायितानीतितेषामप्यवास्तवत्वप्रसक्तिरित्याशङ्क्याह किंत्विति न चिन्त्यं चिन्तयितुं शक्यं वैभवं यस्य तस्य भावस्तत्त्वे सति तस्याचिन्त्यशक्तिमत्त्वसर्वाकारसत्तान्यर्थः वैनिश्चितं निस्तर्केति अचिन्त्या खलु ये भावा न तांस्तर्केण योजयेत्। प्रकृतिभ्यः परं यत्तु तदचिन्त्यस्य लक्षणमिति तत्र तर्कयोजनस्य निषिद्धत्वादिति ॥ ४१ ॥

निर्व्यलीकं प्रियम् व्यलीकमप्रियकार्य्यवैलक्ष्येष्वपि इत्यमरः इति विश्वः । कलगानगं मधुरास्फुटगानप्रापकम् अनवद्यत्वं प्रशंसार्हत्वं तेन वैणविकत्वेन वेणुवादनशीलत्वेन ॥ ४२ ॥

हे ललन । हे लालनीयेत्यर्थः । तं वेणुं सरसीकरोति ॥ ४३ ॥

तं श्रीकृष्णं आलवर्णं वसनं वसानं परिदधतं तालमालं च हरितालकइत्यमरः । पुनः कीदृशं वाङ्मनसयोश्चिन्तनवर्णनाभ्याम् अवसानं सीमा यस्मिंस्तं वनमालिनं पत्रपुष्पमयी माला वनमाला पदावधिः इति विवक्षितलक्षणमालायुक्तं वनकुञ्जरशावकम् इवेति इवेत्यस्य प्राग्भावो यमकानुरोधेन । इवेन सह नित्यसमासवचनमित्यस्य प्रायिकत्वात् । अहरहः प्रतिदिनमेव भसितं भस्म तद्धारिणा शम्भुना कमलयोनिना ब्रह्मणा गमने अनयोःप्राधान्यं पुरातनपुरुषत्वेन गाम्भीर्य्यात् दर्शनोत्सुकयस्याऽस्योविष्कारात् सुरनगरस्य नागरा इन्द्रादयः ॥ ४५ ॥

१ उरलीकुर्वन् उररीकुर्वन्नित्यर्थः तदेतद्यमकानुरोधाद्रलयोः सावर्ण्यम् ।

एवं स्थिते कस्मिन्नप्यहनि अनुदित एवाहस्करे पुष्करेक्षणो जननीमुवाच। मातरद्य निरवद्य विपिनभोजने भो जनेश्वरि! विहितलालसोस्मि ॥ ४५ ॥

तदद्याऽत्र नाऽशनीयं नाशनीयं च न मे वचनमिदं शुभवत्या भवत्या ॥४६

इति तनयोदितमनयोदितमवगम्य व्रजराजवधूर्जवधूयमानवदनं न न न नेति यदा निजगाद ॥ ४७ ॥

तदा पुनरपि सनिर्बन्धं लीलावालकोऽकलकोल्लसत्भालो भालोकविघटिततमा विघटिततमामात्मनो लालसामालोक्य तद्घटनतद्दशपथेन शपथेन मुहुरनुनाय्य तदनुमोदनं कारयामास ॥ ४८ ॥

तदनु देवेन बलदेवेन बलपूरितशृङ्गध्वनिनाऽध्वनि नाऽऽह्रितविलम्बं निजनिजान्मनागारादागारादागतेषु सहचरेषु ॥ ४९ ॥

देहि नो जननि! जन-निकाममदनीयमदनीयमिति नाथति नाथतिलके त्रिभुवनस्य ५०

---

जनेश्वरीति अन्यलोककृतस्तुतिसंबोधनपदानुवादेन स्वाभीप्सिते तत्र संमतिप्रार्थनाद्योत्यते ४५

अत्र गृहे न अशनीयं न भोक्तव्यं प्रत्याख्यास्यमानां मातरमाशङ्क्याह । इदं वचनं मम भवत्या न नाशनीयं न ह्येयं नह्येत्रम् इति प्रत्युत्तरं न दातव्यमित्यर्थः। शुभवत्येति अत्र शुभकार्ये बाधा तयानुचितेति भावः ॥ ४६ ॥

तनयस्य उदितं वाक्यम् अनयस्य उदितम् उदयो यत्र तथाभूतं जवेन वेगेन धूयमानं वदनं यथा भवत्येवम् ॥ ४७ ॥

भाभिरङ्गकान्तिभिरालोकेन दृष्ट्या च विघटितं दूरीकृतं तमोध्वान्तमज्ञानं च अन्यदीयं येन तथाभूतोपि निजक्षुत्क्षामताशङ्कोदितवैमन्याया मातुरग्रे तथाभूतत्वे ऐश्वर्यप्रकाशस्याप्यऽकिंचित्करत्वाभिति भावः । आलोक्यैवावगम्य शपथेन कीदृशेन तद्घटनस्य स्वाभीष्टप्राप्तेः सदृशः पन्था यतस्तेन । मातर्ममैव शपथो यद्येतत्त्वं नाऽनुमन्यसे तथा तवैव शपथो यद्यहं गृहे प्रातर्भुञ्जे इत्येवं लक्षणेन मुहुरनुनाय्य पुनःपुनः प्रार्थ्य तस्या अनुमोदनं कारयामास। वत्साऽद्हठिल ! यथाऽभिरोचते तुभ्यमिति वाचयामासेत्यर्थः । एतच्च तद्वैमन्यशमनार्थं तदानीं तदत्तपक्वान्नादिकं भुक्त्वैवेति ज्ञेयम् ॥ ४८ ॥

तं श्रीकृष्णम् अनु लक्ष्यीकृत्य दीव्यति क्रीडतीति तेन बलेन उच्चैः कृत्वा पूरितः शृङ्गध्वनिर्येन तेन अध्वनि गोचारणार्थवनप्रयाणवर्त्मनि न आह्रितो विलम्बो यत्र तथाभूतं यथास्यात्तथा। मनाक् सकृदेव आरात्समीपम् आगतेषु निजनिजात् आगारात् गृहात् विद्यादगारमागारमिति द्विरूपकोपः । सकृदर्थे मनागित्यमरटीकायां भरतेन ॥ ४९ ॥

नोऽस्माकं जनानां निकामं मदनीयंहर्षो यत्र तत् मदी हर्षे भावेऽनीयः । अदनीयं भक्षणयोग्यं वस्तु नाथति याचमाने सति ॥ ५० ॥

---

१ मातुरङ्के २ विगतम् अतिशयितं घटितं घटना यस्यास्तामात्मनो लालसाम् आलोक्येति घटितमितिभावार्थकक्तान्तम् ॥

३ आशिषि नाथ इतिनियमादाशीरितरत्राथकनाथधातोः परस्मैपदसंज्ञकशतृप्रत्यय एव ॥

वनस्य योग्यानि भोज्यानि ज्यानिविहीनानि दधिमहोदधिमहोद्भटपङ्कपिण्डानीव दधीनि । पियूषकिरणपललानीव ललितानि नवनीतानि क्षीरनीरधिहिण्डीरा इव मांसलाः पयःसराः । नयनामोदघटकाः पर्पटका वटकाश्च सुरस-सुरभि-बहुमूल्याः शष्कुल्यादयश्च । स्त्यान-तुहिनशकलानीव आमिक्षाखण्डानि । देवानामपि नयनामोदकानि मोदिकानि । पूर्णिमाचन्द्रमण्डला इव सुरूपाः पूपाः । भगलत्करका इव सितोपला शकलनिकराः ॥९१॥

अतिसुरभि-मेध्यमोदनानि दध्योदनानि । जनितसुधामाधुर्यवेपथुका घनसार-सुरभिपयः सिक्तपृथुकाः । आवर्तितकौमुदीसारसंपन्नानि परमान्नानि सुरस-सुरभीणि सन्धानफलानि ॥९२॥

सकलान्येव मातृवात्सल्यानीव अपरिमितानि उपादेयानि पेयानि मनसाऽप्यनूह्यानि लेह्यानि । नयनसुखानुपूर्व्याणि चर्व्याणि । केनापि कथंचिदप्यऽचूष्याणि चूष्याणि एवं चतुर्विधान्यपि विविधानि ॥९३॥

मातृरचितान्यपि न मातृपरिचितानि । अनेकवाह्यान्यपि न वाह्यानि । हितान्यपि न हि तानि । क्वापि सुलभानि । तानि विलोकयतायतानन्देन तेन सहचराः समूचिरे "रे सखायः कानननभोजनार्थमेतानि समादध्वं मादध्वंसेन इति" सप्रणयमुक्ता मुक्ताभिमानतया न तया मनोवृत्त्या सर्व एव ते वर्तमानि सकलान्येव प्रहीतुकामाः ॥९४॥

ज्यानिर्जरा तया विहीनानि नवोद्भवानीत्यर्थः । पीयूषकिरणस्य चन्द्रस्य पललानि मांसानीत्यस्यानुल्वशुभ्रताभिः । मांसलाः पुष्टाःपर्पटकाः पापड इतिख्याताः । शष्कुली गुझा इतिख्याता ॥ स्त्यानानि पूजितानि हिमखण्डानीव । आमिक्षा सा शृतोष्णे या क्षीरेस्याद्दधियोगत इत्यमरः । चन्द्रमण्डला इवेति सिताघटितत्वेन शुभ्रतयाऽपि करका वर्षोपला सितोपला मिश्रीति ख्याता ९१

मेध्यानि पवित्राणि मोदनानि हर्षकाणि । वेपथुः कम्पः । घनसारः कर्पूरः । आवर्तितानां पाकेन घनीकृतानां कौमुदीनामिव सारेण संपन्नानि सन्धानफलानि तैलादिरहिताम्रजम्बीरादीनि ९२

उप आधिक्येन आदेयानि ग्रहीतुं योग्यानि अनूह्यानि तर्कयितुमप्यशक्यानि अपूर्वस्वादानुभवादित्यर्थः । विविधानि तत्तद्भेदेन ॥ ९३ ॥

न मातृभिः परिमाणकर्तृभिः परिचितानि । परिचय एव नास्ति कुतस्तद्गणनेति भावः । न वाह्यानि न हेयानीत्यर्थः । नहि नवेत्यर्थे । विलोकयता पश्यता । आयतः आनन्दो यस्य तेन कृष्णेन समादध्वं यूयं गृह्णीत मादध्वंसेन अहङ्कारत्यागेनेत्यर्थः ॥ ९४ ॥

१ हिण्डीराः फेनराशयः २ विधिविविधानि इत्यपिपाठो दृश्यते विधिना विधानेन विविधानीतितदर्थः ॥ ३ नेन रे सखायः इत्यादि सहचराः समूचिरे ब्रुवो लिटि अप्रधाने दुहादीनामिति गौणकर्मणिप्रयोगः एवमुक्ताइत्यादिस्थलेऽपि ज्ञेयम् । समूचिरे-उक्ता इति एकस्याप्यर्थस्य कथिना द्विरुक्तिस्तु पूर्णरातिकताद्योतिकाअर्थात् यथा कश्चित्प्राकृतो बालः स्वाभिप्रायं प्रकटयन्सहचरानसकृदेकमर्थं प्रयुङ्क्ते बाललीलस्य भगवतोऽप्येनकथाव्यवहारणानुकरणमिति । ४ मदध्वंसेनेतिपाठस्यज्यायस्त्वेऽपिमादध्वंसेनेतिपाठोनुप्रासलाभायमदनं मदइतिमदोऽनुपसर्गंइतिअपन्तास्यार्थकोऽण् । ५ ज्यानिर्जानिरित्यमरः ।

कामार्बुदार्बुदाधानकारि सौरूप्येण तेन पुनरुचिरे । अचिरेण मो अध्यात्मविदां मनांसीव नीरसतया कठिनप्रायाण्येव गृहीत। यानि वत्सानुपदं धावत्सु भवत्सु न गलन्तीति तथैव तेषु स्वस्वसमुचितमेव विभज्य गृह्यमाणानि तानि प्रभूतान्यपि स्तोकप्रमाणान्येव बभूवुरपरिमितत्वात्तेषाम् । तदवलोक्य भगवज्जननीपुनरन्यान्यपि तानि तानि हसन्ती समुपसादयामास ॥५५॥

तदनु तान्यपि समुचितं विभज्य निजनिजचित्रतरविहङ्गिकासङ्गिशिक्येषु समुचितभाजनस्थानि विधाय चलनसुसज्जेषु तेषु स्वयमपि भगवज्जननी विरचितसमुचितवेशभूषं भगवन्तं वेणुवनमालादिभिः पुनरपि विशेष्य भूषयित्वा स्नेहस्नुतपयोधरपयः कणनिकराङ्कितकञ्चुकाग्रपरिसरा कियद्दूरमनुव्रजन्ती सह पुरन्ध्रीभिरग्रे चालितानामपरिमितानां कृष्णवत्सानां तथा तदनुचरगणस्यापि प्रतिजनमनेकेषां वत्सानां परस्तादग्रे चलतः केनापि हेतुना गृहस्थितिकुतूहलिनि हलिनिकेवलस्य स्वतनयस्य पश्चाच्चलतां च तेषामनुचराणां च रामणीयकमतिलोकोत्तरमाकलयाञ्चकार ॥ ५६ ॥

यथा । वेणुं वामे करकिशलये दक्षिणे चारुयष्टिं
कक्षेवेत्रं दलविरचितं शृङ्गमत्यद्भुतं च ।
बर्होत्तंसं चिकुरनिकरे वल्गुकण्ठोपकण्ठे
गुञ्जाहारं कुवलययुगं कर्णयोश्चारु बिभ्रत् ॥ ५७ ॥

किंच — । सद्रत्नालङ्करणनिकरेष्वादधानोऽवहेलां
वन्याकल्पे विरचितरुचिर्वत्सपालानुकृत्या ।
धावन्नग्रे व्रजशिशुगणैस्योल्लसद्भञ्जयन्ती ॥
भालः श्रीरञ्जितलसदुरो ¹भिश्चैराभाति कृष्णः ॥ ५८ ॥

---

कामार्बुदस्यापि अर्बुदो व्रणभेदस्तस्य आधानकारि सौरूप्यं यस्य तेन अर्बुदो मांसकीले स्याद्दशकोटिषु चार्बुदमिति विश्वः । अध्यात्मविदामपि तादृशान्यपि मनांसि एतल्लीला माधुर्यबलादाकृष्य गृह्णीतेति सरस्वत्या भङ्गीच ज्ञेया ॥ ५५ ॥

विहङ्गिका वाहुवक्का इति ख्याता । प्रतिजनम् एकैकस्य जनस्य इत्यर्थः । वत्सानां परस्तात् पश्चादग्रे प्रथमं केनापिहेतुनेति शृङ्गमापूर्य गन्तुमुद्यतेऽपि तस्मिन् तदैव मिलितदैवज्ञजनप्रोक्ततद्दिवसीय नक्षत्रमहादिशान्तिकमङ्गलाभिषेकार्थजनन्यैव ततो निवारिते सतीति ज्ञेयम् । कुतूहलिनीति तस्य च वहुगोस्वर्णादिदानप्रियत्वात् ॥ ५६ ॥

कुवलययुगमिति कुण्डलस्य पीतिम्ना अस्य च नीलिम्ना शोभाधिक्यात् ॥ ५७ ॥
श्रीः कनकरेखाकारा ॥ ५८ ॥

---

१ विशिष्येतिक्वाचित्पाठः

अंसे चारुविहङ्गिकाऽग्रविलसच्छिक्यस्थभाण्डौदना ।
कंसे वेणुविषाणपत्रमुरलीशृङ्गाणियष्टिः करे
गुञ्जोत्तंसमयूरपिच्छरचना मौलौ गलेगौञ्जिको
हारः श्रोणितटे घटीति मधुरोवेशः शिशूनां बभौ ॥ ५९ ॥
केयूरेवलयानि किङ्किणिघटा हारावली कुण्डले
मञ्जीरौ मणिवृन्दवन्धलतिका यद्यप्यमीपैर्विभुः ।
नासीत्तत्र तथापि मातुरचिताकल्पेषु तेषांग्रहः *
कामं वत्सक- रक्षणोचितवनाकल्पे यथा लालसः ॥ ६० ॥

एवमतिकौतुकाकृष्टमनाः साचि सा चिरतरमालोकयन्ती खेलाकुतूहलेन दूरतरं गतेषु तेषु शनकैर्भवनमुपजगाम व्रजराजमहिषी ॥ ६१ ॥

एवं वत्सानग्रे चालति भगवति तदनुपमकुतूहलविलोकनाय परमस्थविरतमस्यसकललोकपितामहस्यापि ता महस्याऽपि कतमा वृत्तयो बभूवुः परमात्मारामस्यापि नीलकण्ठस्य नीलकण्ठस्यद इव मुदिरविलोकनमुदिरविलोकन इव कमलाकरस्य समुत्कण्ठाभरस्तथैव समपद्यत । यथा नभसिनिर्निमेषतया चित्रलिखिताविव तावास्तां किं पुनः कुतुकलम्पटाः शतमखमुखाः ॥ ६२ ॥

एवं सति भगवति पुरोगामिनितत्संस्पर्शनपणपणितमतयोऽहंपूर्विकया कयापि धावन्तोऽनुचराः परस्परं मयैवाग्रतोऽयं स्पृष्ट इति विवदमानाः परस्परजिगी-

अंसे वामस्कन्धे चार्वी विहङ्गिका कीदृशी अग्रे विलसतोर्विराजमानयोः शिक्ययोस्तिष्ठत्सु-भाण्डेषु ओदनानि यस्याः । ओदनेति सर्वभक्षवस्तूनामुपलक्षणम् ॥ ५९ ॥

केयूरे अङ्गदे ॥ ६० ॥

तेषु कृष्णादिषु ॥ ६१ ॥

सकलानां लोकानां पितामहस्य ब्रह्मणोपि ताः प्रसिद्धामहस्य उत्सवस्य अपि निश्चितं कतमा वृत्तयो बभूवुः । नीलकण्ठस्य रुद्रस्य सम्यगुत्कण्ठाभरः समपद्यत। कीदृशः मुदिरस्य मेघस्य विलोकनमुदि दर्शनानन्दे सति नीलकण्ठस्य मयूरस्य स्पद इव नृत्यादिवेग इव। स्थीति तेन विना तस्य स्वरूपस्याप्यनुपलम्भ इति विवक्षया ॥ ६२ ॥

हसितसुधया स्नपिते स्नानं कारिते दशनवसने ओष्ठाधरौ यथा तथा निजगाद। वलक्षय-

---

* तेष्वाग्रहः एवमपि साधु प्रतिभाति ।

१ साचीति तिर्यगर्थकं स्वरादि पीठतमव्ययम् । गवानुपदीनात्वात्तेषु तिर्यग्गतेषु सा चिरतरं साचि तिर्यग्विलोकयन्ती । अथवा स्वयमेव दृष्टिप्रसारार्थं साचि विलोकयन्ती विलोकयन्तीति स्वार्थिकणिजन्ताम् अथवा योजिका यशोदा पुरन्ध्रीभिः स्वतन्त्रकर्त्रीभिर्विलोकयन्तीति हेतुमतिणिच् ॥

पया श्रीकृष्णमेव साचित्वेन यद्यट्टण्वत तदा हसितसुधास्नपित-दशनवसनं द-शनमयूखमञ्जरीभिरभितोवलक्षयन् लक्षयन्नथ सकलसहचरमुखं किं वः पौर्वापर्य्यं पर्य्यङ्गनीयं युगपदेव पदे वर्त्तमाना मां प्राप्नुभवन्त इति निजगाद ॥ ६३ ॥

तदनु दनुजदमने दमनेयमनसां मनसां दुर्लभे वत्सानुपदं चलति चलतिमिर-कदम्ब इव कौमुदीकदम्बानुवर्त्तिनि परस्परं तेषामजनि खेलापरिमलः ॥ ६४ ॥

केचित्कस्य हरन्ति शिक्यमपरे मुष्णन्ति तेषां करा-
दन्ये तत् प्रतिपादयन्ति च ततः संकृष्य तत्स्वामिने ।
अप्यन्ये परिवर्त्तयन्ति चकितं भक्ष्येण भक्ष्यं निजं
दृष्टे तेन पुनर्ददत्यपि लसद्धासं विलासालसाः ॥६५॥

किंच—कश्चित्कस्य च यष्टिकामपहरत्यन्यस्य वेणुं पुरः
शृङ्गं कस्य च कोपि कस्य च परो गुञ्जास्रजं कण्ठतः ।
तस्मात्कोपि तदर्थं कश्चन ततः कोपीति चौर्य्योत्सवे
दृष्टे तत्क्षणतः स एव लभते तद्यस्य यत्स्यान्निजम् ॥ ६६ ॥

एवं खेलन्तः कियद्दूरं गत्वा नवतृणाङ्कुरानकरसमास्वादादातितृप्समासाद्य क्षणं विश्रान्तेषु वत्सनिकरेषु क्वचनरुचिरतरतरुतलेनिजनिजविहङ्गिकादिसकल-सामग्रीर्निधाय श्रीकृष्णं परितोपयन्तो हासयन्तश्च पुनः खेलान्तरं विरचयां चक्रुः।

केचिन्नृत्यन्तमारान्मदकलशिखिनं वीक्ष्य नृत्यन्ति तद्वत्
केचिद्वाप्यादिकच्छे बकमनु स इवाकुञ्चिताङ्गं वसन्ति ।
एके भेकेन सार्द्धं पयसि परिपतन्त्यूर्द्ध्वमुत्प्लुत्य दूरं
छायां धावन्ति केचिन्नभसि तत इतो धावतामण्डजानाम् ॥ ६७ ॥

---

न् धवलीकुर्वन् लक्षयन् पश्यन् पदे स्थाने ॥ ६३ ॥

दनुजदमने चलतिसति खेलापरिमलस्तेषामजनि। कीदृशे दमेन । इन्द्रियनिग्रहेण नेयानि वश्यानि मनांसि येषां तेषां महामुनीनामित्यर्थः । वश्यस्तु नेय इत्यमरः । मनसां दुर्लभे चल-तिमिराङ्कुरे इव ॥ ६४ ॥

कस्य कस्यचिदित्यर्थः । ततः मुष्णद्भ्यः संकृष्य सम्यगाच्छिद्येत्यर्थः । तेन भक्ष्यस्वामिना दृष्टे सति ॥ ६५ ॥

इति एवंप्रकारेण चौर्य्योत्सवे सति दृष्टे इति यष्टिकाद्यन्यतमेपरकीयबुद्ध्या प्रथमं हृते तत्-क्षणत एव दृष्टे सति यस्य यत् यष्टिकादि निजं स्वीयं स्यात् तत्सएव तत्स्वामी एव लभते।६६

वापी दीर्घिका ॥ ६७ ॥

केचिच्छाखामृगाणां वदनमनुमुखस्याऽतिवैकृत्यपूर्वं ।
तानुच्चैर्भीषयन्ते विदधति च तदाकर्षणं धूतपुच्छाः ॥
आरोहन्ति द्रुमाग्रं क्षणमपि सह तैस्तैः समं च प्लवन्ते ।
के चिद्गायन्ति नृत्यन्त्यपि लघु कतमे केऽपि तांस्तान् हसन्ति॥६८॥
राजा कश्चिद्भवेति कतमस्तस्य मन्त्री तथा न्यो-
दण्डस्वामी कतिचिदपरे हन्तसामन्तवर्गाः ॥
कश्चिच्चौरस्तमथ कतमो ऽभ्यां समानीय राज्ञः ।
क्रुद्धो विज्ञापयतिसचिवस्तच्छासनाज्ञां विधत्ते ॥ ६९ ॥
कौचिन्मेषायमाणावतिशयतरसा सोपसर्पापसर्पौ
मूर्ध्ना नम्रेण तेन प्रमदकुतुकिनौ युद्ध्यमानावभाताम् +
केचिद्व्याघ्रायमाणाः कटुपटुरटनेनापरान् भीषयन्ते
पश्चादागत्य केषांचिदपि पिदधते कोपि नेत्रे कराभ्याम् ॥ ७० ॥
* रंहःसङ्घेन सेंहाः शिशव इव महासिंहशावोत्तमेन ।
प्रत्यग्रोद्यजाग्रन्मदकरिकलभेनेव मत्तद्विपार्भाः । ॥
मूर्त्तानन्देनमूर्त्ता इव रभसरसा ग्राम्यबालेन सर्वे
ग्राम्या बाला इवाऽमी वनभुवि कुतुकार्त्तेन सार्द्धं विजह्रुः ॥७१॥
अथ सर्व एव परस्परं मन्त्रयन्तः ।
कृष्णरतरस्वीकिमहो वयं वा जानीत भोभ्रातरः इत्युदीर्य ।
धावन्त एते त्वरयाऽपिधानैतं श्रीकृष्णमारादितिचक्रुस्तम् ॥ ७२ ॥
एवं श्रीकृष्णस्याऽग्रतोऽजाग्रतजागरूकस्य धावमानाः कियति दूरे बकीबकयो-
रासादितमृत्युगर्भयोः सगर्भयोः समवर्त्तिसदनवर्त्तितया जनितयोः क्रोधशोकयोः

---

मुखस्यातिवैकृतम् अतिविकृताकारत्वं तत्पूर्वकं यथा स्यात्तथा । धूताश्चालिताःस्तेषां पुच्छा यैस्ते ॥ ६८ ॥ शासने शास्ति विषये आज्ञाम् ॥ ६९ ॥

पिदधते आच्छादयन्ति ॥ ७० ॥

प्रत्यग्रेण अभिनवेन उदग्रम् उन्नतं यथा स्यात्तथा । जाग्रता मत्तकरिशावकेन रभसरसमाः हर्षरसमयाः ॥ ७१ ॥ तरस्वी वेगवत्तरः ॥ ७२ ॥

कृष्णस्य कीदृशस्य अजायाः प्रकृतेरजस्य ब्रह्मणो वा अग्रतोऽग्रे जागरूकस्य अग्रेधावमाना अघ-नामानमसुरं वीक्ष्य वर्णयामासुः बकीपूतना बकश्चतयोः सगर्भयोः सोदरयोः समवर्तिसदन-वर्तिता यमगृहवासः समवर्ती परेतराडित्यमरः तया जनितयोः क्रोधशोकयोरतिशय आवेगस्तेन

---

+ भादीताभितिलङः प्रथमद्विवचनम् । * सङ्घोद्घौगणप्रशंसयोरितिगणपर्यायःसंघः

कयोश्चिदातिशय्याद्वेगेन वेगेन वैरशुद्धिकामं कामं क्रूरमतिमतिपामरमरमेव तमध्वानमध्वानमाक्रम्य वर्त्तमानमानतमधिधरमधरमधिगगनोर्ध्वमूर्ध्वमूर्द्धतयौष्ठमाधाय ग्रसितुमिव त्रसं त्रसन्तमाविरिञ्चममरचयं रचयन्तं मूर्त्तमघमघनामानमसुरं निरीक्ष्य वर्णयामासुः ॥ ७३ ॥

अहो! विचित्रेयं गिरिदरी दृश्यते । पश्यत पश्यत श्यत श्यत च विभ्रमं विभ्रमं चास्या वीक्ष्य कौतुके कौतुकेन नोपरुध्यन्ते । येयं महाव्यालस्य व्यालस्याविवृततुण्डशोभामालम्बते ॥ ७४ ॥

यथा तस्य दंष्ट्रावली तथास्या उभयतो भयतोपकराणि शृङ्गाणि । यथा च तस्य भयराजि-ह्वाजिह्वाद्वयी तथाऽस्या मरुदान्दोलिता योजनवल्लीवल्लीद्वयी बहिःस्फुरति ७५

यथा च तस्य विषमविषमहाग्निकणास्तथाऽस्य विविधधातुकणा बहिर्निःसरन्ति । तस्य महाकाकुदकाकुदवदस्या उपरितनकुरुविन्दशिलाविलासः । तस्याऽधमधमनिवदस्याः कुहरहरणोन्मुखी नानालतावितिः ॥ ७६ ॥

---

हेतुनाद्वेगेन शीघ्रं वैरशुद्धिः प्रतीकारस्तां कामयत इति तम् । क्रूरमतिं घातुकधियम् अरमेव क्षिप्रमत्र तं प्रसिद्धमध्वानं पन्थानम् अध्वानं निःशब्दं यथा भवत्येवमाक्रम्य केन प्रकारेण । अधिधरं धरा पृथ्वी तस्याम् आनतं सम्यक् नतम् अधरम् आधाय अर्पयित्वा तथा अधिगगनोर्ध्वं गगनादप्यूर्ध्वप्रदेशे ऊर्द्धमूर्धतया ऊर्द्धमस्तकत्वेन ओष्ठम् आधाय त्रसं चराचरम् । त्रसमिङ्गं चराचरमित्यमरः । ग्रसितुमिव वर्तमानम् आविरिञ्चं विरिञ्चिपर्य्यन्तम् अमरचयं त्रसन्तं त्रासयुक्तं रचयन्तं कुर्वन्तम् ॥ ७३ ॥

विशिष्टं भ्रमं श्यत श्यत दूरीकुरुत । शो तनूकरणे दिवादिः । अस्यां गिरिदर्य्यां विभ्रमं शोभा या इयं महाव्यालस्य महासर्पस्य विशिष्टेन आलस्येन हेतुना विवृतं यत्तुण्डं तस्य शोभाम् ७४

भयतोपकराणि वैकटयोद्भयम् अद्भुतत्वात्तोषं च कुर्वन्ति भयानां राजि श्रेणि ह्वयते इति सा । योजनवल्लीवल्ली मञ्जिष्ठालता । योजनवल्ल्यपि मञ्जिष्ठे त्यमरः ॥ ७५ ॥

महाकाकुदं अति भयशोकविकारप्रदं यत्काकुदं तालु तद्वत् । तालु तु काकुदमित्यमरः । अधमधमनिवत् कुत्सितनाडीवत् कुहरं विवरं प्रतिहरणोन्मुखी आकर्षणोन्मुखी ॥ ७६ ॥

---

१ विरिञ्चेः आ इति आविरिञ्चि मिति अव्ययंविभक्तीत्यादिनाऽव्ययीभावः । अव्ययीभावेशरत्प्रभृतिभ्य इति यथा कथञ्चिच्छरदाद्याकृति गणत्वादिकल्पनया समासान्तष्टच् अथवा अच्प्रत्यनुपूर्वात्सामलोम्नइह अजिति योगविभागान्निर्विवादंसाधु ॥ २ दरीदृश्यते इति पाठश्चेत्यकारद्वयेयङन्तात् एकथकारये ङ लुगन्तात्कर्मकर्त्तरिकर्मणितुनातदर्थाभानात् एवं दृश्यते इति पाठोपि ज्ञेयम् । ३ पद्मरागप्रस्तरशोभाकल्पनान्तरमर्थापेक्ष्यमेव । ४ विकटस्य भावः कर्म वा ।

उपरि चोभयतो लोभयतो लोचने लोचने इव तस्यास्याः कमलरागमणीन्द्रौ। देदीप्यन्तेऽप्यन्ते तस्य श्वासा इव विधूतोपवनाः पवनाः। तस्य विषानलधूमधूमलाः कान्तय इवास्यामारकतमणिदीधितयः। तन्नूनमिदं व्यालतुण्डाकृतिर्गिरिकन्दराकन्दराऽऽतुरं करोतु ॥ ७७ ॥

तत्साम्प्रतं साम्प्रतं ह्येवाऽत्र प्रवेश इति निश्चित्य पुनः संदिग्धया दिग्धया च साध्वसेन धिया पुनरन्योन्यमरे भ्रातरः? सत्यमेव यदि बलवदुपसर्पः सर्पः स्यादयं तदा भियसहचरो नः सकलवैरिलावको बकोपममेनं मारयिष्यति। तारयिष्यति तावदस्मानपि न विधापनीयोऽयमर्थः करेण केनापीति कलितकरतालतालललितं भगवति कृतविश्वस्तताश्वस्ततावलेन यावदनेन चारुवदनेन चाऽरुणाक्षेण न निषिध्यते तावदेव देवतनयप्रतीकाशास्ते तदाननविवरं प्रविविशुः ॥ ७८ ॥

तदनु तदनुपदमेव मा विशत मा विशत भो व्यालोयं व्यालोयमिति सार्त्तस्वरं स्वरन्तरचारिमधुरघोषो घोषराजतनयो नयोद्धुरं यावदुवाच। तावदेव ते तदाननप्रवेशमात्रेणैव विषज्वालया लयारूढसकलेन्द्रियाः कृष्ण एवासन् कैः श्रोतव्यं तद्वचनम् ॥ ७९ ॥

इत्यवसरे स रेरीयमाणनयनाम्बुरिव करतश्च्युतान्निधीनिवताननुशोचन्नतिकरुणोऽनतिकरुणो युगपदेषां जीवनमस्य च मरणं कथं स्यादिति चिन्तितकार्यद्वयोऽद्वयो मतोभययोगे योगेश्वरस्तदनुपदमेव तदाननं विवेश ॥ ८० ॥

तस्य सर्पस्य लोचने रोचने रुचियुक्ते लोचने नेत्रे इव। कीदृशस्य लोभयतः लोभं युतः प्राप्नुवतः तस्य श्वासा इव अन्तेपि अस्याः पवना देदीप्यन्ते अतिशयेन प्रकाशन्ते विशेषेण धुतानि खण्डितानि उपवनानि यैरिति खरतरत्वम्। कंदरातुरंभयातुरं करोतु अपि तु न कमपीत्यर्थः दरोऽस्त्रियां भये श्वभ्रे इत्यमरः ॥ ७७ ॥

अत्र साम्प्रतमिदानीम् प्रवेशः साम्प्रतमेव योग्यमेवेत्यर्थः। साम्प्रतं चाधुनार्थे स्याद्युक्तार्थेपि च साम्प्रतमितिविश्वः। न पिधापनीयः न आच्छादयितुं शक्यः। सर्वैरेव शश्वदेव प्रकटमेवोपलभ्यमानत्वादिति भावः। इति हेतोः कलितः करे सर्पापसर्पणार्थमिव तालो यैस्तेषां भावस्तत्ता तया ललितं यथा स्यात्तथा विश्वस्तता विश्वासरतया आश्वस्तता आश्वासस्तद्बलेन। अनेन श्रीकृष्णेन ॥ ७८ ॥

स्वः स्वर्गस्य अन्तरचारिमध्यगामी मधुरोघोषो यस्य सः ॥ ७९ ॥

रेरीयमाण इति रीङ् श्रवणे यङन्तः। अतिकरुणोऽन्यया अतिकृपोद्गमेन हेतुना करुणः शोकवान् अद्वय एकावधी गतयोः संगतयोरुभययोः सखिजीवनदुष्टमरणयोर्योगे विषये योगेश्वरः परमसमर्थः।यद्वा। सखीनां रक्षणेन दुष्टस्य मोक्षदानेनयदुभयं योगे तस्य मतः संगतः॥८०॥

१ ·निर्दोषपद्मरागमणी। २ द्वितीयेतियोगविभागात्समासः मत इति क्तान्तम्। लोभयतीति लोभयन् तस्येत्युपस्थितंपरिनिःउयेति।

तदा—तदाननं विशति भगवति ।

हाहाकारो दिवि दिविषदामुच्चचारा नुतापे हींहींकारोऽसुरपरिषदां समकम्पे महर्षेः । योगे योगेश्वरपरिषदस्तद्वयस्यातिहेलो व्यत्यासेन स्वयमुपदधे मानसं मानसन्धः ॥८१ ॥

स च महाव्यालो महाव्यालोलमनाः भगवत्प्रवेशापेक्षया क्षयाय चात्मनो नो तावत्संववार वदनम् ॥ ८२ ॥

प्रविष्टे तु भगवति कृतार्थमात्मानं मन्यमानो मानोद्धतधीरधीरतयैव शाम्बरीवरीयान् वदनं संवरीतुमना मनागपि न शशाक ॥ ८३ ॥

भगवति कुतो हि भावोऽभावोपयोगी न भवतीति तथैव व्यात्ताननो न नोदयितुमशकदात्मनो व्यात्ताननताम् ॥ ८४ ॥

अन्तर्गलं कीलायमाने कीलायमानेन तेजसा दहति हतिसरसं समेधमाने निखिलकलसौभगवति भगवति सकरुणारुणापाङ्गतरङ्गरिङ्गित सुधासुधारया सहचरान् जीवयति यतिहृदयेऽपि घृणीयमाने तदन्तरमपि समेधमाने स महामहिमापरिपच्यमानकर्कटीफलवदुत्पपाट ॥ ८५ ॥

पाटिते च तस्य तस्मिन् देहे विबुधद्रुहि द्रुहिणतुहिनकिरणशेखरशतमखमुखमुखरितजगत्पावनस्तवनमालिनि वनमालिनि प्रवेष्टुकामं तन्महो महोज्वलं सूर्य्याचन्द्रयोरन्यतरादिव तरदिव गगनसरोवरं निरवलम्बनमेव तावदासीत् ॥८६॥

तद्वयस्य हाहाकारहींहींकारयोर्व्यत्यासेन विपर्य्यासेन योगे विषये मानसं चित्तम् उपदधे अधुना असुराणां हाहाकारो भवतु दिविषदां हींहींकार इत्येवम् । यतो मानसन्धः मानं सम्मानं विजयरूपप्रशंसामिव सम्यक् धत्ते न तु पराजयरूपमवमानमिति सः । यद्वा माने सन्माने सन्धामर्य्यादा यस्यसः । सन्धा प्रतिज्ञा मर्य्यादेत्यमरः ८१ ॥ न संववारन संवृतवान् ८२

मानोद्धतधीर्गर्वोद्धतबुद्धिः शाम्बरी माया ॥ ८३ ॥

अभावोपयोगी नाशवान् न भवतीति दृष्टान्ती भूत उत्प्रेक्षित इति भावः । न नोदयितुं न दूरीकर्त्तुम् ॥ ८४ ॥

अन्तर्गलं गलमध्ये कीलायमाने कीलतुल्ये भगवति हतिसरसं यथास्यात्तथा वर्धमाने सति कीलायमानेन वन्हिज्वालसदृशेन वन्हेर्द्वयोर्ज्वालकीलावित्यमरः सकरुणस्य अरुणापाङ्गस्य अनुरागिनेत्रान्तस्य तरङ्गात् रिङ्गन्त्या प्रसरन्त्याः सुधायाः सुन्दरधारया यतीनां सन्या सनां हृदयेपि घृणीयमाने घृणां कुर्वति जुगुप्सयेव तत्र प्रवेष्टुं संकुचतीत्यर्थः । तस्याघासुरस्यान्तेरपि सम्यक् वर्द्धमाने दुर्वितर्क्यचरितत्वादिति भावः । अतः सः अघासुरः स्तब्ध इति भावः ॥ ८५ ॥

द्रुहिणो ब्रह्मा तुहिनकिरणशेखरो महेशः शतमख इन्द्रः । तस्याघासुरस्य महः जीवरूपतेजः तस्याऽदृश्यत्वेपि तन्मोक्षे संदिहानानां कुतर्कभृतां विज्ञमानिनां मुखमोटनार्थं भगवदिच्छयैव दृश्यत्वम् । गगनमेवसरोवरं तत् तरदिव तत्पारं गच्छदिव ॥ ८६ ॥

---

१ तदन्तरपि

यावत्तदवस्थावस्थानचटुलस्य दीर्घाभोगस्य भोगस्य कुहरतो हरतोगिरिदरीशोभामुद्य गिरिगह्वराद्भस्तिमालीव वनमाली समुज्जीहिते । हीतेऽपि शिशवो लब्धजीविता जीविताधिनाथात् प्रागेव बहिर्भूताः ॥ ८७ ॥

तदनुबहिर्भूते भूतेशादिनुतचरणे भगवति सुरासुरादिभिर्दूरीदृश्यमानमेव तन्महो नवजलदमेदुरे तस्मिन्नेव लयमाससाद । किमहो ? वर्णनीयं तस्य महानुभावस्य चरितम् । यदसौ प्रथममात्मनि भगवन्तं निवेश्य पुनर्भगवत्येव स्वयं निविविशे इति ॥ ८८ ॥

ततश्च । भेरीझाङ्काररावैः पटुपटहघनाघात-संघातघोरै
रैचण्डैर्डिण्डिमानां ध्वनिभिरविरलैर्दुन्दुभीनां प्रणादैः ।
गानैर्गन्धर्वविद्याधरतुरगमुखप्रेयसीनां मुनीनां
स्तोत्रैः शब्दान्तरेषु क्षणमिव वधिराः स्वर्गिणस्ते बभूवुः ॥ ८९ ॥

उर्वश्याद्या ननृतुरभितःसिद्धवध्वो बभूवुर्मादङ्गिक्यो जगुरतिकलं सुभ्रुवः किन्नराणाम्
देव्यो देवद्रुमसुमनसां वर्षमुद्यौवितेनुर्मर्त्यैर्वासीदमरनगरी सा गरीयःप्रमोदैः ।
भ्राम्यच्चूडाग्रचन्द्रस्खलदमृतरसेनाप्लुतैर्मुण्डमाला
मुण्डैर्लब्ध्वाशरीरं नटनपटु नरीनृत्यमानैः परीतः ।
चण्डैरट्टाट्टहासैर्डमरुडिमिडिमित्कारसंस्कारसारैः ॥
कुर्वन् ब्रह्माण्डभाण्डं स्फुटितमुद्दतनोत्ताण्डवं चण्डिकेशः ॥ ९० ॥

अथ मृत्युमुखादागता इव ते बाला बालातपोज्जृम्भमाणकमलनयनं नयनान्दितभुवनं व्रजराजकुमारं सुकुमारं सुखवैवश्येनैकैकश्येन परिरभ्य सखे ! सखेलं विषमविषमहानलज्वालावलीढानस्मान् कथमजीवयद्भवान् इति भगवन्तमूचुः । सच सचमत्कारं तानगददगददक्षोस्मि विषस्य। येनाऽगदेन नागदेन गन्धमात्रादेव गतासवोऽवगतासवोत्सवा इव समुल्लसितजीवना भवन्तीति ॥ ९१

---

तदवस्था मरणादशा तस्या अवस्थानेन हेतुना चटुलस्य चञ्चलस्य दीर्घ आभोगः परिपूर्णता यस्य तस्य । भोगस्य फणस्य। हीति विस्मये ॥ ८७ ॥

नुतचरणे स्तुतपदे ॥ ८८ ॥

तुरगमुखप्रेयस्यः किन्नर्यः । शब्दान्तरेषु अन्यशब्दविषयेक्षणं व्याप्य वधिरा इव ८९

अतिप्रचण्डे नृत्यावेशेन जाते सति भ्राम्यतश्चूडाग्रवर्तिनश्चन्द्रात् स्खलता अमृतरसेन आप्लुतैरत एव मुण्डमालास्थमुण्डैः शरीरं लब्ध्वा नटनपटुयथा स्यात्तथा अतिशयेन नृत्यद्भिः परीतः युक्तः॥ ९० ॥

विषस्य अगदे औषधे दक्षोस्मि येन अगदेन नागदेन नागं सर्पं द्यति खण्डयतीति तेन गतासवो गतप्राणा अपि जनाः अवगतः अनुभूतः आसवोत्सवः मधुपानोत्सवो यैस्तथा भूता इव ॥ ९१ ॥

तदुदितमुदितमुदाकर्ण्य परस्परमपि परमऽपिहितसौहृदा हृदा निर्भरमालिङ्गय-भो भो भ्रातरस्तदेव देवज्ञा इव वयमवोचाम वकपिवाप्युर्व निहनिष्यतीति जगदुः९२

जगदुत्तरचरितेन तेन भगवता दिष्ट्या दिष्ट्यातिशयवन्तस्ते तत इतो विसृमरान् सृमरानिव वत्सान् यूथीकृत्य व्रजपुरपुरन्दरमहिषीदत्तान्नपानादिविहङ्गिका विहङ्गिकानिकरैरेव रक्षमाणाः समानीय च भगवन्तमनुसस्रुः ॥ ९३ ॥

समनन्तरमनन्तरहसा करुणाचारुणा चामीकरवसनेन सवत्सवत्सपेन निर्जनभोजनमोचितं स्थलमनुसन्दधता दधता च श्रेयस्यान् प्रति प्रणयं कियता दूरेण सरसःसरसः पुलिनपरिसरो ददृशे ॥ ९४ ॥

दृष्ट्वा च भो भोः सवयसो वयसोऽपि नात्र संचारो वर्त्तते नयनप्रमोदजननी। जननीक्रोडवदतिविश्वसनीयेयं पुलिनपदवी पदवीथिकापि न दृश्यतेऽत्र लोकस्य-तदिहैव भोक्तव्यं तदिदमभ्यासमभ्यासन्नं चरन्तु वत्सगणाःवयमपि भुञ्जामहे९५ इति निगदति जगदतिजरीजृम्भमाणविचित्रचरित्रे भो वयस्या वयमप्यशनायया नाययामह इव कष्टेनैव कालम् । नहि समया समयान्तरं भोजनमपेक्षणीयम्। तदेवमेव मे वचनमिति सरसमेकैकश्येन वदति सहचरचये ॥ ९६ ॥

रचयेयमत्र भोजनस्थलमिति मितिरहितमहिम्ना तेन घनतरतरुतरुणच्छाया-

तदुदितं तस्मिन् कृष्णे उदितं कृतोदयम् उदितं वाक्यं न पिहितं न आच्छन्नं सौहृदं येषां ते९२

जगदुत्तरं लोकोत्तरं चरितं यस्य तेन भगवता दिष्ट्या आज्ञया दिष्टं भाग्यं तदतिशयवन्तः । सृमरान्मृगभेदानिव विविष्टकूर्दनादिगतिशीलान् तेषामप्यघोदरप्रवेशमहाविपन्मोक्षादेव हर्षोद्रेकादिति भावः विहङ्गिकाः पक्षिस्त्रियः ॥ ९३ ॥

अनन्तरहसा असंख्यरहस्येन । यद्वा । अनन्तस्य संकर्षणस्याप्यतिगुह्येन अत्राग्रे बलदेवेनप्यज्ञास्यमानतत्वकत्वात् । रहोऽतिगुह्ये सुरते वसन्ते इति विश्वः । चामीकरं कनकं भोजनस्य भा शोभा तदुचितम् । सरसस्तडागस्य पुलिनपरिसरः कीदृशः सरसः ॥ ९४ ॥

वयसोऽपि पक्षिणोपि तस्मादिमं प्रदेशम् अभ्यासंन्न सर्वतोभावेननिकटं चरन्तु । कीदृशम् अभ्यासम् अभीर्निर्भय एव आस उपवेशो गतिर्वा यत्र तम् ॥ ९५ ॥

अशनायया बुभुक्षया । अशनाया बुभुक्षा क्षुदित्यमरः । नाययामह इति कालोऽस्मान्नयति तं वयं नाययामह इति णिच् प्रत्ययः । समयान्तरं समया समयान्तरस्य निकटे इत्यर्थः । समयाशब्दयोगे अभितःपरितः इत्यादिना द्वितीया ॥ ९६ ॥

मितिरहितमहिम्ना अपरिमितमहिम्ना तेन श्रीकृष्णेन अत्र भोजनस्थलं रचयेयम् इत्युक्त्वा तत्र पुलिने मध्यमधिरुह्य अवस्थितौ कृतायां सत्यां तेऽपि सहचराः परितोऽवतस्थिरे इत्यन्वयः कीदृशे पुलिने घनतराणां तरुतरुणानां भोजनापेक्षणीयवितानकार्य्यकारिणां च्छायाभिरच्छोनि-

१ पदवीथिकापि इत्यपि पाठः साधुः । २ ऐष प्रयोगोभगवदुक्तत्वात्साधुः

३ अशनायोदन्यधनायाबुभुक्षापिपासागर्द्धेषु । इति अशनायधातोःस्त्र्यधिकारोक्ते ऽप्रत्ययादित्यप्रत्ययः॥

च्छायामेघनसारसारधूलिधवलेऽवलेपरहिते हिते पुलिने विकचकमलकमलशीकरनिकरनिर्भरपवमानमाननीये सौगान्धिकगन्धिकमनीये मध्यमध्यवस्थितौ कृतार्पा तेपि परितोवतस्थिरे स्थिरेणैव मनसा ॥ ९७ ॥

सहस्रपत्रसहस्रपत्रीव सा मण्डली व्यराजत राजतपयसा धौत इव तत्र पुलिनोदरे ९८

किञ्जल्कावृताविलक्षणबीजकोष इव कनकरुचिरुचिराम्बरो भगवान्। सुपरिच्छदच्छदपङ्क्तय इव शिशवः ॥ ९९ ॥

सद्भावलया वलयाकारास्त्रिचतुरास्त्रिचतुराभाः पङ्क्तयः ॥ १०० ॥

तासां च प्रणयमुव्यवहितानां व्यवहितानां परस्परं प्रतिजनमभिमुखमुखकमलतया वर्त्तमानः प्रत्येकं ममैवायमभिमुखमुख इत्यभिमानमानयन् "सर्वतोऽक्षिशिरोमुख"मिति श्रौतीं वाचा वान्वयमभिनयन् भो भो भोभोज्वलनिष्का! निष्कासयत भक्ष्यसामग्रीमग्रीयामिति श्रीकृष्णोयदा निजगाद ॥ १०१ ॥

तदेव शिक्यतो निष्कास्य केचित्सपरिवच्छदेषु च्छदेषु। केचित्कुसुमेषु कुसु-

मेळः आयामो यस्य तस्मिन्नित्यातपराहित्येन सुखदत्वम्। दण्डकावनशिखण्डियुवान् इत्यादिवत् तरुणशब्दस्य परनिपातः। घनसारेति सुखस्पर्शेन सौगन्ध्येन च। अवलेपराहित इति पावित्र्येण। हिते इत्सशङ्कास्पदत्वेन। विकचानि प्रफुल्लानि कमलानि पद्मानि यत्र तथाभूतस्य कमलस्य जलस्य शीकरनिकराणां निर्भरो यत्र तेन पवमानेन पवनेन भोजनापेक्षणीयशिशिर व्यजनकार्य्यकारिणा माननीये। सलिलं कमलं जलमित्यमरः। सौगन्धिकस्येव गन्धोऽस्येति सौगन्धिकगन्धि। तच्च तत्कमनीयं चेति तस्मिन्निति भोजनापेक्ष्यधूपादिसौरभ्यवत्वेन। अत्र यमकानुरोधात् विधेयांशाविमर्षः सोढव्यः ॥ ९७ ॥

सहस्रपत्रस्य कमलस्य सहस्राणां पत्राणां समाहारः सहस्रपत्री सेव। राजतेन रजतविकारेण जलेन धौते प्रक्षालितेइव ॥ ९८ ॥

बीजकोषः कर्णिकाविलक्षण इति श्यामवर्णत्वात् ॥ ९९ ॥

सद्भावेन लयः संश्लिष्टः संनिवेशो यासां ताः। तिस्रो वा चतस्रो वा त्रिचतुराः पंक्तयः कीदृश्यः त्रिचतुरा आभाः कान्तयो यासां ताः प्रथमा पंक्तिः पीता, द्वितीया रक्ता, तृतीया श्यामा इत्येवं तिस्र आभास्तथा चतुर्थी श्येनी हारिती वेति ॥ १०० ॥

व्यवहितानां व्यवधानेन स्थितानामपि तासाम् चकारोऽप्यर्थे प्रणयस्य भुवि सत्तायां प्राप्तौ वा अवहितानां कृतावधानानां प्रतिजनम् एकैकस्या"सर्वतः पाणिपादं तत्सर्वतो ऽक्षिशिरोमुखम्। सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठती"ति वाचामिव अन्वयम्। अभिनयन् अभिनयेन दर्शयन्इवार्थेत्राकारः। भोभो इत्यतिहर्षेण द्वित्वम्। भाशोभाम् उभन्ति पूरयन्तीति भोभा अत एव उज्ज्वलाः निष्काः पदकानि येषां ते। अग्रीयाम् उत्तमाम् ॥ १०१ ॥

छदेषु पत्रेषु कुसुमेषु कौ पृथिव्यांशोभना मा शोभा येषां तेषु। विमलतया नैर्मल्येन अख-

१ अचतुरविचतुरेत्यादिसूत्रोपरिचतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानमितित्रिचतुराः

मेषु । केचिद्विमलताखण्डेषु लताखण्डेषु । केचन सुरश्मिषु रश्मिषु । केचन अचपलेषु पलेषूत्तमेषु । केचिदतिस्तबकेषु स्तबकेषु । केचित्तत्करस्पर्शसफलेषु फलेषु । केचिदचञ्चलेष्वचञ्चलेष्वमलवसनानाम् । केचित्सुरेखानिकरेषु करेषु । केचिदूरुपूरुपूपनिधाय निजनिजभोज्यादग्र्यमग्र्यमतिशयसारं श्रीकृष्णाय पत्रपुटकेषु निधायोपकल्पयामासुः ॥ १०२ ॥

स च भगवान्मधुरमधुरवचनपेशपेशलमधुरिमसुधासुधाराधौतदशनवसनतयाऽतिचारुतायामिह सन् हसन् हासयन् स यन् परमकौतुकम् ॥ १०३ ॥

दरोदरोपनीविनिहितमुरलीकोऽलीकोज्झितलक्षणे कक्षतलेऽक्षतलेलिप्यमानमधुरिमणि विन्यस्तवेत्रविषाणः करतले परमाभिरामे वामेऽवात्तदध्योदनकवलोऽवलोलेपु तदङ्गुलिदलेषु कृतसन्धानफलाविशेषो विशेषोपलभ्यमानसौन्दर्यलक्ष्मीकोदिविषद्वृन्दवृन्दारकैः ॥ १०४ ॥

कमलज–शितिकण्ठपुरन्दरादिभिरमरनगरनागनागरीभिरपि सकौतुकमालोक्यमानोऽलोक्यमानो निजनिजभक्ष्यमाधुर्यधुर्यताप्रख्यापनपननचतुरैर्हसद्भिःसद्भिःशिशुभिर्हास्यमानो भुञ्जानैः सह सहचरैः स्मितलेशपेशलवदनकमलो बुभुजे भुजेन चलता दक्षिणेन कथान्तरमप्यन्तराऽन्तरा कथयन् सहचराणामतीव हृदयावगाही बभूव च ॥ १०५ ॥

---

ण्डेषु पूर्गेषु । सुरश्मिषु सुकान्तिषु रज्जुषु उपलेषु प्रस्तरेषु । अतिस्तबकेषु अतिस्तुतिमत्सु स्तबकेषु कुड्मलेषु सुलक्षणो रेखानिकरो येषु तेषु । उरुषु बृहत्सु उपनिधाय भक्ष्यसामग्रीमिति पूर्वेणानुषङ्गः अग्र्यम् अग्रभवं भागम् ॥ १०२ ॥

स च भगवान् बुभुजे । कीदृशः मधुरमधुरो वचनपेशः । पिश अवयवे वाक्यावयव इत्यर्थः । स एव पेशलमधुरिमा शोभनमाधुर्यो सुधासुधारा अमृतस्य धारा तया धौते प्रक्षालिते दशनवसने ओष्ठाधरौ यस्य तस्य भावस्तत्ता तया हेतुना इह भोजनावसरे अतिचारुतायाम् अतिसौन्दर्ये सन् वर्तमानः हसन् सखीनां नर्मोक्त्या हासयन् स्वकृतनर्मभिः सखीनित्यर्थः । सः श्रीकृष्णः यन् गच्छन् प्राप्नुवन् इत्यर्थः ॥ १०३ ॥

दरोदरं कृशोदरम् उपनीवि नीविनिकटं च तयोर्निहिता मुरली येन सः । तथा कक्षतले विन्यस्ते वेत्रविषाणे येन सः । कीदृशे अलीकोज्झितं सत्यमेव लक्षणं सामुद्रकोक्तं यत्र तस्मिन् । अक्षतं यथाभवत्येवं लेलिप्यमानः अतिशयेन लिप्तीभवन् मधुरिमा यत्र तस्मिन् । तथा करतले अवात्तो गृहीतो दध्योदनकवलो येन सः वामे इति कक्षतलकरतलयोर्विशेषणम् अवलेस्याकारलोपे नञा अवलोलेषु अचलेषु अचञ्चलेष्वित्यर्थः । सन्धानफलं तैलसंहितकरञ्जकरीरादि । वृन्दारकैः श्रेष्ठैः ॥ १०४ ॥

न लोक्यं लौकिकं मानं प्रमाणं यस्य सः । निजनिजभक्ष्यस्य वस्तुनः माधुर्यधुर्यताया माधुर्याधिक्यस्य प्रख्यापने यत् पननं पर्णनं पणः तत्र चतुरैः चलता भुजेनेति कथाभिनयप्रदर्शनार्थमित्यर्थः ॥ १०५ ॥

---

१ पणव्यवहारेस्तुतौचपनच–

इत्येवं यद्यवसरोऽजनि । सरोजनिजनिर्हि तदा हितदाक्षिण्यपरोऽपि तमघा-रवभविभवमालोक्य जातविस्मयः स्मयमानः स्मयमानपरः परससहस्रीभूतान् परमेश्वराणां परमेश्वरस्य पुनरैश्वर्य्यपरीक्षणक्षणनिमित्तमुद्यममाततान ॥ १०६

तच्च तस्य कतिपयः पयःप्रसर इति पयोधिपयोऽधितदवधिमधिजिगमिषोर्यष्टिनिक्षेप इव कियत्प्रमाणं गगनतलमिति मितिमिच्छतो मानरज्जुनिपात इव जातमोहस्य हस्यमानमभूत् ॥ १०७ ॥

यदिदं मायाबलेन भगवतो वत्सकुलापहरणं तच्च कूपाकूपारयोरिव जलाशयत्वे खद्योतखद्योतकरमहसोरिव महस्वित्वे तमिस्रायास्तमसस्तमसश्चैव महोवारकत्वे स च पितामहो महोन्मत्त इवाऽऽत्मभगवतोर्मायावित्त्वे सामान्यविशेषभावं न विदाञ्चकार ॥ १०८ ॥

---

यद्यवसरोऽजनि जातस्तदा सरोजनि कमले तत्र जनिर्यस्य स ब्रह्मा हितमेव यद्दाक्षिण्यं सरलतया साधुत्वं तत्परोऽपि स्मयमानपरः स्मयेन मदेन ब्रह्माहं निजमैश्वर्य्यं विविधसृष्ट्यादिशेषं जानाम्येवेत्यभिमानपरः स्मयमानः अयं तु प्राकृतबालकचेष्टावेशान्निजमहैश्वर्य्यं विस्मृतवानित्येवेत्यभिप्रेत्य ईषद्धसन् तथाप्यघासुरादिवधज्ञापितमैश्वर्य्यमहो हन्त वर्त्तत एवेति जातविस्मयः ततश्च परससहस्रीभूतानां सहस्रात् परसंख्यावताम् । परश्शताद्यास्ते येषां परा संख्या शतादिकादित्यमरः । परमेश्वरस्य श्रीकृष्णस्य ऐश्वर्य्यस्य परीक्षणमेव क्षण उत्सवस्तन्निमित्तम् । एवञ्चाऽलक्षितमेव भगवन्मायया प्रथममेव ब्रह्मणो महामोहो जात इति भावः ॥१०६

तस्य ब्रह्मणस्तच्च उद्यमप्रकटनं हस्यमानमभूदित्यन्वयः॥ कस्येव पयोधेः समुद्रस्य पयोजलम् अधि अधिलक्ष्य तस्य समुद्रस्य अवधिं तलसीमानम् अधिजिगमिषोर्जिज्ञासोः यष्टिः सप्तवितस्तिकं लकुटं तस्या निक्षेप इव इति भगवदैश्वर्य्यस्य महादुरवगाहत्वमुक्तं गणनया अप्यपरिच्छेदमाह कियदिति ॥ १०७ ॥

किं तदुद्यमप्रकटनमित्यपेक्षायामाह यदिदमिति । तच्च तदपि न विदाञ्चकार न परामर्श तदेवाकिमित्यपेक्षायामाह आत्मनो भगवतश्च यन्मायावित्त्वं तत्र सामान्यविशेषभावमिति कयोरिव कूपोऽपि जलाशयः अकूपारः समुद्रोपि जलाशय इति जलस्थानीपमायायाःपरिमाणस्याल्पत्वबृहत्वाभ्यामुपमा। खद्योतो ज्योतिः कीटः । खे आकाशे द्योतकराणि दीप्तिकारीणि महांसि यस्य सः खद्योतकरमहाः सूर्य्यः तावुभावेव महस्विनाविति जातिपरिमाणयोः तमिस्रायाः कुहूरजन्याः तमसो अन्धकारस्य तमसो राहोश्च महस्तेजस्तस्य वारकत्व इति मायाया आवरणरूपधर्मस्य ज्ञापनार्थम्। अयं भावः । कूपखद्योतराहूणां समुद्रसूर्य्यकुहूरात्रिभ्योऽन्यत्रैव स्थितिः स्वप्रभावज्ञापिका। तत्र तत्रैव स्पर्धया प्रवेशस्तु स्वस्वसत्ताया अपि विनाशकरइति। अत्र तमस इति रूपभङ्गो यमकानुरोधादङ्गीकृतः ॥ १०८

---

१ ऐश्वर्यं महोऽन्तर्वर्त्तत इतिसाधीयान् पाठो दृश्यते ऐश्वर्यमह ऐश्वर्यतेज इति

अपहृते च वत्सकुले वत्सपाश्चामी भगवता सह सरसमदन्तो दन्तोज्ज्वलकिरणधौताधरतया हसन्तः सन्तः सन्ततमतिमधुरकथोपकथोपयोगेन विस्मृतवत्सा दैवादिततत्स्मरणेन तत्संचारस्थलमवेक्ष्य वत्सगणानवलोकेन लोकेननाथं पृच्छिरेऽचिरेण ॥ १०९ ॥

कृष्ण ! सखे ! सखेदाः स्म । नैकोऽपि दृश्यते वत्सः । मन्ये नवतृणाङ्कुरलालसालसाभावादतिदूरं गतास्तदधुना तदनुसन्धानाय सन्धानायकैर्भवितव्यमस्माभिरिति तदुदितानुदिताभियोगो भगवानपि स्मितलेशले शशितिरस्कारिणि वदने कवलमादधान एव मादधानो निजगाद ॥ ११० ॥

भो भो भवद्भिरिहैव भूयतामयमहमनुसंदधामीति करकृतकवलोऽधिकवलोऽधिकक्षतलपातितवेत्रविषाणो जठरपटपटद्वेणुरथ वत्सगणानुसन्धानमनुबन्ध ॥ १११ ॥

मारतरचमत्कारकारकमहोभारभरितवनोद्देशो देशोचितवेशो मुहुरितस्ततो विचरन् खरखुरखुरलीलक्ष्मलक्ष्मीमवनाववनालोच्य भत्यग्रजाग्रदुदग्रतांश्च तृणानानवलोकयन् नानेन पथा समचरन् वत्सा इति तत्रैवावर्तमानोऽमानोन्नतधीरधीरमना मनाग्विस्मितोऽनन्तरमनन्तरमणीयमायेन तेनैव वत्सगणे वत्सपगणे चापहृते हृदयमेव परितो विचारयन् वत्सान् सहचरानपि नैक्षतात्मबलस्तदा सन्देहोपरमे परमेष्ठिनैव विहितमिदमिति निश्चित्य सद्य एव ॥ ११२ ॥

लोकानाम् इनाः प्रभवो महेशादयस्तेषामपि नाथम् । इनः सूर्ये प्रभावित्यमरः ॥ १०९ ॥

तृणाङ्कुरलालसया हेतुना अलसाभावात् अनालस्यात् । तत्तस्मात्तेषां वत्सानाम् अनुसन्धानार्थम् । सन्धीयमानं प्रति आनायकैः आनयनकर्तृभिरस्माभिर्भवितव्यम् । सन्धा प्रतिज्ञा मर्यादेत्यमरः । वदने कीदृशे । स्मितलेशं लाति गृह्णातीति तस्मिन् । शशिनश्चन्द्रस्यापि तिरस्कारकारिणि वदने कवलम् आदधान एव अर्पयन्नेव मादधानः मादं हर्षं दधातीति भानो नन्दादिः ॥ ११० ॥

अधिकं बलं यस्य सः । जठरपटे पटन् गच्छन् वेणुर्यस्य सः । अट पट गतौ ॥ १११ ॥

खराणां खुराणां खुरली सञ्चारः पौनःपुन्यम् । अभ्यासः खुरली योग्येति त्रिकाण्डशेषः । तस्या लक्ष्मलक्ष्मीं चिह्नशोभाम् अवनौ भूतले प्रत्यग्राम् अभिनवां जाग्रतीम् । उदग्रताम् उन्नतताम् अगाना अपरिमिता उन्नता धीर्यस्य सोऽप्यधीरमनाः यस्मादतिविस्मयकस्य प्रेम्णः सहसा सर्वाणि दृष्टवत्सत्वेऽपि इति भावः । अनन्तरं तेनैव ब्रह्मणैव वत्सगणे च अपहृते सति ननु भगवन्मायया तेषां ब्रह्मादिभिरपि परमकुण्ठत्वमानां क्षुद्रस्य ब्रह्मण एव मायया कथं मोहितत्वमित्याह । अनन्तस्य श्रीकृष्णस्य एव रमणीया मायायत्र तेन ब्रह्मणा ब्रह्मकार्यत्वा अपि भगवन्मायाकृपया अनुमोदितत्वात् भगवन्मायात्वमित्यर्थः । यथोक्तम् । कृष्णमायाहता राजन् क्षणार्द्धं मेनिरेऽर्भकाः इति । तथा ''स्वयैव मायया जोऽपि स्वयमेव विमोहितः'' इति । ब्रह्मणैव ब्रह्मणो मोहनयोगमायायास्तत्राप्यामोहकत्वं मायायत्वात्तस्या भगवन्मायात्वमेव ॥ ११२ ॥

ये यादृग्गुणवर्णरूपवयसो यादृक्स्वरा यादृश
मज्ञा यादृशभावनामकृतपस्तत्तद्विधास्तेऽखिलाः ।
वत्सा वत्सपबालकाश्च मुरली शिक्यं विषाणो दलं
भूषा-दामविहङ्गिकालकुटिका सर्वं स एवाऽभवत् ॥ ११३ ॥
आनन्दात्मचिदात्मकञ्च तदिदं स्वेनैव सम्पादितं
शुद्धं यद्यपि कार्यजातमखिलं नो कारणाद्भिद्यते ।
लीलोपाधि तथापि भिन्नमभवत्तेषां स्वभावो यथा
तस्सोऽनिर्वाच्यतयाद्भुतः परमभूत्सर्गो निसर्गोत्तमः ॥

अथतत्तद्भावापन्नैर्गोपकुमाराकृतिभिरात्मभिर्वत्साकृतीनात्मन आत्मनैव नैव विकृतेन तेन दिवसावसानमवलोक्य भवनाय वनायनात्समवहारयन् वेणुमवीवदत् ॥ ११४ ॥

तमथ मथनकृतं मनसो वेणुरवं निशम्य सर्व एवात्मभूता भूतारल्यकृतः सहचराः शृङ्गवेणुदलशृङ्गादिरवै रवैधमान-मानसतोषाः परितोष्यात्मभूतानखिलवत्सान् समवहार्य्य दिनान्तरवद्व्रजमाविशन्ति स्म ॥ ११५ ॥

मातृभिरभिव्रजन्तीभिः पूर्वं तनयाननादृत्य तथा कृष्णसन्दर्शनं कृतं तथा स्व-

सर्वं स एव श्रीकृष्ण एव । अत्र तेषामेव यदनानयनं तद्ब्रह्माणमेव स्वीयवैभवावर्त्ते निपात्य व्याकुलीकर्त्तुं तथा स्वं पुत्रीयन्तीस्तत्तन्मातॄः पूर्णाभिलाषाः कर्त्तुं तथा महावैकुण्ठनाथादिषु कैमुत्यापादनाय श्रीबलदेवमपि विस्मापयितुमित्यञ्च बहून्येव प्रयोजनानि ज्ञेयानि ॥ ११३ ॥

आनन्देति मायिकसृष्ट्या तत्तत् प्रतिनिधित्वासम्भवेन स्वक्रीडा न सिद्ध्यतीति भावः । सर्गः सृष्टिर्गोपकुमाराकृतिभिरात्मभि सह वत्साकृतीनात्मनः वनरूपं यदयनमास्पदं तस्मात्सकाशात् भवनाय भवनं प्रापयितुं समवहारयन् सम्यक् आकर्षयन् वेणुम् अवीवदद्वादयामास ११४ शृङ्गादिरवैः भुवः पृथिव्या अपि तारल्यं हर्षहेतुकं कुर्वन्तीति ते दलघटितं शृङ्गाकारं दलशृङ्गम् ॥ ११५ ॥

तत्तन्मातॄणां पूर्वतः स्वभावविशेषं तदानीमलक्षितमुत्पन्नं दर्शयति । मातृभिः सुबलादिजननीभिः पूर्वं तनयान् अनादृत्य यथा कृष्णसन्दर्शनं कृतम् । "प्रहान् परोद्भवे कृष्णे" । "कृष्णमेनमवेहि त्वम्" । इत्यादि शुकपरीक्षितसम्वादगतसिद्धान्तानुसारात् तथा सम्प्रत्यपि कृष्णदर्शनं कुर्वतीभिरेव निर्वृत्तिरलभ्यत । अयं तु विशेषः । पूर्वं तनयाननादृत्य सम्प्रति तु प्रतिचमत्कृतमानसतयैवेति तत्र हेतुः । स्वस्वतनयेष्वित्यादि । कृष्णसाधारणं कृष्णतुल्यं ।

१ यथा हि स्वर्णं कुण्डलादि विविधाकृतीरपि प्राप्नुवन्नैव विकृतिमापद्यते तथा भगवतो वत्सपालादिवैविध्येऽपि नितरां विकृतत्वमितिनैव नैवेत्यनुप्रासगर्भस्य पाठस्यार्थवत्तायामपि नैवेति क्वचिन्नैव पुस्तकान्तरे पठ्यते ।

स्वतनयेष्वेव कृष्णसाधारणं प्रेम लभमानाभिरपि सम्प्रति च प्रतिचमत्कृतमानसतयैव कुर्वन्तीभिरेव निर्वव्रे ॥ ११६ ॥

तेऽपि त इव मातृवत्सलतया तया पूर्वपूर्ववत्स्नपनादिक्रियया मातृः प्रीणयामासुरयं खलु विशेषोऽशेषोपरतापशमना अमी अमीवहारीणस्त इव भगवता दिनकृतं न कथयामासुः ॥ ११७ ॥

वत्साश्च दिनान्तरवत् निजनिजमातृसविधमुपगतास्ताभिरपि पूर्वतोऽपूर्वतोपतरलहृदयाभिर्दयाभिभूततया ततया लिह्यमाना द्यमानानन्देन पीयमाना इव सगद्गदगद्गदनघनघर्घरस्वराभिरङ्के कृता इव सुषुपुः ॥ ११८ ॥

कृष्णमपि निजभवनमासाद्य साद्यमानबाल्यविलासम् ।

दोर्भ्यामुत्थाप्य वक्षोभुवि निबिडतरस्नेहपीडं निपीड्य
श्मश्रुस्पर्शो सशङ्कं मृदुनि कमलतोऽप्यस्य वक्त्रे चुचुम्बे ।
वेणीपोष्णीयमश्रुप्लुतनयनमवघ्राय चास्योत्तमाङ्गं
नाऽतुप्यद्गोकुलेन्द्रः क्षणमथ महिषीहस्तयोस्तं मुमोच ॥ ११९ ॥

ततश्च जनन्याऽनन्यातुलवात्सल्यपताकया कयाचिदिव कृताभ्यङ्गो वर्त्तनादिकोऽनादिकोऽमलतनुस्तनुमानिव जननीवात्सल्यसारः कृताहारो हारोपस्कृतवक्षाः प्रक्षालितपदः क्षपितक्षणकतिपयः पयःफेनवलक्षलक्षमूल्यशयनतले कृतशयनोऽसौ निशामनैषीत् ॥ १२० ॥

उदितेऽथ किरणमालिनि च वनमालिनि वनगमनायोद्यते सहचरा जननीभिः पूर्वतोऽपि सुविहितमसाधनाहितमसाधनाः कृतपानभोजना जनानन्दकारिणो भगवद्भवनमासेदुः ॥१२१॥

---

ननु कृष्णनिष्ठं प्रेम कृष्णाश्रयस्वेति तत्तत्स्थितरूपगुणमात्राविष्कारात् । कृष्णस्य तु सर्वगुणाविष्कारात् सर्वाश्रये स्थितत्वात् मूलभूतत्वाच्चापूर्ववैशिष्ट्यमस्त्येवेति भावः ॥११६॥

तेऽपि कृष्णात्मका बालाः त इव पूर्वभूतस्वत्वादय इव । अमीवं विरहवैरस्यम् ॥ ११७ ॥

पूर्वतो गतामपि स्वभावविशेषः उक्तः ॥ ११८ ॥

साद्यमानः प्राप्यमाणो भाव्यमानो वा बाल्यविलासो येन तम् । सशङ्कमित्यत्र हेतुः । कमलतोऽपि मृदुनि सुकुमारे वक्त्रे वक्त्रं स्वमुखम् , उत्तमाङ्गं शिरः । नातुष्यत् नातृप्यत् महिषी यशोदा तस्य स्वपुत्रस्य कृतोत्कण्ठामालस्यैवेति भावः ॥ ११९ ॥

कयाचिदिव अनिर्वचनीयमेव अनन्यया अद्वितीयया अतुलवात्सल्यस्य पताकया । अनादिको निष्कृतो जननीवात्सल्यसारस्तनुमानिवेत्यन्वयः । अथवा अभ्यङ्गादिनिर्गोपुच्छादिविहितो न तु देवमतः । पयः फेनवत् धवलो धवले ॥ १२०

पूर्वदिनेन प्रसाधनेन प्रहृष्टमनेन अहितं नैवं प्रसाधनं भूषणं येषां ते ॥ १२१ ॥

---

१ जनन्या कृतम् अभ्यङ्गोद्वर्त्तनादिकं यस्य सः । अस्यानन्यैरिति सम्भ्रमः कर्तृणां निरङ्कुशत्वात् ।
२ येनेति साधनानीति क्रियापदः कर्तृपदम् ।

भगवानपि न पितृमातृतोपमन्तरेणान्यत्र सादरोऽदरोपलालितस्ताभ्यां सस्नेहमनुगतश्च कियद्दूरं स आत्मसहचर आत्मपाल्य आत्मपालकः पूर्वपूर्वदिनवद्वनमनुससार ॥ १२२ ॥

एवं गच्छत्सु कतिपयेषु मासेषु कस्मिंश्चन दिवसेजनाभिरामेण रामेण सह सहसा कृष्णे चलिते चलितेषु तेषु चात्मस्वरूपेषु स्वरूपेषु सुललितेषु वत्सवत्सपेषु गिरिवरसविधे तानात्मभूतान् वत्सान् चारयति ॥ १२३ ॥

रयतिग्मगमनेनसद्यस्तन-स्तनप तर्णकानपि विहाय विहायसेवोड्डीयमानाः स्थिरैराभीरैराभीरैर्निविडदण्डदण्डनेनापि निवारयितुमशक्याः सकला एव धेनवो नवोदीर्णावात्सल्यास्तानेव वत्सतरानुपगत्य गत्यवसादेन खिन्ना अपि हुम्वेति गद्गदगदनरुद्धकण्ठं सोत्कण्ठं सोत्साहमभिलिहन्त्योजिघ्रन्त्योन तरां निवर्त्तन्ते तृणमपि न चरन्ति स्म ॥ १२४ ॥

तन्निवृत्तये समुपेसन्नाः सन्नावयवाः खेदेनापि निवर्त्तयितुं यदा ते न शेकुस्तदा परितोऽपरितोषहारिणो हारिणो नितजनयानवलोक्य धेनुवृन्दादप्यऽधिकवात्सल्यभाजोभाजोषेण द्रुतमेव तमेव देशमासाद्य मासाद्यमानसौभगान् मूर्ध्नि नासापुटं मुखे मुखं कृत्वा दोर्भ्यामुरसि रसिकतया समुत्थाप्य नयनाश्रुधौतवक्षसश्चित्रलिखिता इव यदा बभूवुः ॥ १२५ ॥

---

अदरम् अनल्पमुपलालितः ॥१२२ ॥

कस्मिंश्चन दिवस इति लीलाविशेषापेक्षया वस्तुतस्तु नित्यमेव रामेण सह वनगमनं तस्येति तेषां रूपेषु वर्णमाधुर्यविषये सुष्ठुललितेषु । गिरिवरः श्रीगोवर्द्धनः ॥ १२३ ॥

धेनवः सकला एव गावः तस्यैव गिरिवरस्य शृङ्गवर्त्तितृणचारिण्योऽकस्माद्दूरत एवतान् वत्सतरानालोक्येत्यर्थतो गम्यते । सद्यस्तनान् सद्योभवान् अत एव स्तनमात्रपायिनस्तर्णकान् वत्सान् विहाय त्यक्त्वा किं पुनः द्वित्रिदिनैर्भवान् मासिकान् द्वैमासिकान् वा रयेण वेगेन तिग्म तीक्ष्णं यद्गमनं तेन विहायसेव आकाशपथेनेव उड्डीयमाना इवेत्युत्प्रेक्ष्यमाणा इत्यर्थः । ततश्च आभीरैर्गोपैः । आभीरैः रलयोरैक्यात् आभीलैः कष्टैः । स्यात्कष्टं कृच्छ्रमाभीलमित्यमरः । निविडदण्डैरपि कृत्वा दण्डनेन निवारयितुमशक्याः तानेव द्वैवार्षिकत्रैवार्षिकानपीत्यर्थः ॥१२४॥

सन्नावयवाः अतिधावनेन जानूरुगुल्फेषु जातव्यथाः । भा कान्तिस्तस्या जोषेण सेवनेन स्वस्वतनयरूपविलोकनेनेत्यर्थः । धावनजनिततत्तद्व्यथाभागपि विस्मृतवन्त इति भावः । मा शोभा तया साद्यमानं प्राप्यमाणं सौभगं येषां तान् ॥ १२५ ॥

---

१ प्राप्ता इत्यर्थः । २ हारवन्तः ।

३ द्वेच त्रीणिच द्वित्राणि तानिचतानिदिनानीति बहुव्रीहिगर्भिकर्मधारयः ।

तदा बलभद्रो भद्रोद्भूतसंदेहो देहोपचितहर्षविस्मयस्तानालोक्य च क्षणं मनसि परामम्मर्श ॥ १२६ ॥

अहोकिमिदम् । मोहोऽसीत्तेन येष्वेपि व्रजगवां वात्सल्यमेतादृशं ।
याहक्संम्प्रति हन्तावत्सनिचये मुक्तस्तनेऽपीक्ष्यते ॥
नासीदेव पुरेदृशी च तनये स्नेहोऽतिगोदुहां* ।
तन्मन्ये भवितव्यमत्र हि कयापि स्यात्प्रभोर्मायया ॥ १२७ ॥

अथ कथमपरथा रथाङ्गपाणेरजस्याग्रजस्याग्रतो मम दैवी वाऽऽसुरी वा प्रभवितुमायाति मायाऽतिमायाविचक्रचूडामणिं तमेव समुपेत्य पृच्छामिच्छामिकर्त्तुम् १२८

इति निकटमुपसृत्य किमिदमहो महोन्नतबुद्धे बुद्धेरगोचरो । मम । यदमी बल-

भद्रं यथा स्यात्तथा उद्भूतः सन्देहो यस्य सः । तान् वत्सपान् वत्सांश्च आलोक्य चकारात्तेषु तत्तत्पितॄणां च परमवत्सलानाममूषां गवां दृष्टिपथमेत्र कथमेते वत्सानानीतवन्त इति क्रोधेन तान् ताडयितुमागतानामपि तेषां तादृशमपूर्वं वात्सल्यमालोक्य च देहे उपचितो यो हर्षस्तेन समाश्चऽपूर्वो निर्हेतुकः कथमेतेषु इत्येवंलक्षणो विस्मयो यस्य सः ॥ १२६ ॥

नन्वास्तामगोपां तन्मायामोहितत्वात्तेषु तथा तथा भावः । किंतु मम शुद्धज्ञानघनस्वरूपस्यापि कथं तथात्वं तत्र स्वयमेवाह अस्मत्प्रभोः मदंशसंकर्षणकारणार्णवशाय्याद्यवताराणां सर्वेषामप्यस्माकं प्रभोर्मूलभूतस्यांशिनः प्रभुत्वादेवेच्छया अस्मानपि मोहयितुं समर्थस्येति भावः । अत्रास्य सत्येपि तद्रहस्यानुपलम्भात् स्वयोग्यतामननेनैव मद्दयस्योऽप्यमेतत्कर्मणि मयि न विश्वस्तवानिति दैन्योदयेन दास्यरसास्वादः प्रेमव्याकुलतयैव एवमेव मधुररसवात्सल्यरसादावपि दृश्यते । यथा । दास्यास्ते कृपणाया मे सखे दर्शय सन्निधिम् । मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रया इति । नन्वेतावन्तं कालं प्रत्यहमेव तत्तत्पित्रादीनां तेषु तेषु तथा तथा भावं तथैव गवामपि तादृशापत्ये विलक्षणवात्सल्येन वत्सस्तनपायनं गोदोहनादिसमये पश्यतोऽपि मम कथमद्यैव विस्मयेनैतावान् परामर्शः न तु तदानीं प्रथममेवेति तत्राह कयापीति तादृग्लीलया सत्यपि विरोधदर्शने परानंदवतोपि न विरोधस्फूर्त्तिर्यथा अधुनापि महतामप्यमीषां गोपानां तद्ज्ञानेच्छायां सत्यां तु सर्वस्यापि मायैवमिति ज्ञानं स्यात् यथाद्य मम इति तथा ऽनिर्वचनीये त्यर्थः ॥ १२७ ॥

अपरथा अन्यथा यदि तन्माया न स्यात् इत्यर्थः । रथाङ्गपाणेः सर्वमायासंहारकतेजस्कचक्रधरस्य । अजस्य स्वयं भगवतः श्रीकृष्णस्यापि अग्रजस्य ज्येष्ठभ्रातुर्ममाऽग्रतो दैवी आसुरी वा माया प्रभवितुम् आयाति अत्रान्यमायया अनभिभवः माहजिकोपि स्वस्य दैन्येनैव तत्संबन्धेन [illegible] । अत एव अतिमायाविचक्रचूडामणिं तं पृष्ट्वा कर्त्तुमिच्छामि ॥१२८॥

अहो ! आश्चर्ये हे महोन्नतबुद्धे इति संबोधनेन मय्यपि तत्र नो विश्वासः साधु साधु तवेदं बुद्धिचातुर्यमिति केवलसख्योदयेन प्रणयकोपव्यञ्जक उपालम्भः । ननु किमित्युपालभसे

* गोपानां नपुरेदृशः शिशुततौ स्नेहो ममाप्ययम् ।

यदमीवलक्ष्निोऽमरवरा एव सहचराः अमी च मुनयो नयोङ्कुरा एव गोवत्सा इत्येव मे गोचरः। सम्मति संमतिजाने श्रीजाने भवानेव सर्वमिति ॥१२९॥

किमत्र तत्त्वं तत्त्वं कथयेति कथयेतिहासकथामिव । तत् सकलमानुपूर्व्या कथयन् श्रीयशोदाकुमारः कुमारयामास ॥१३०॥

एवं वत्सरवत्सरक्षणक्षणकौतुके संवृत्तप्राये प्रायेण हि भगवन्महिम हिल्लोलगणगणनायां मवृत्तो वृत्तोहः स्वयम्भूः स्वयम्भूर्लोकमागत्य चोरितेषु माया वत्सवत्सपेषु तत्र किंवृत्तमिति वृत्तमितिरहितस्य तस्य वृत्तमवगन्तुकामः कामपि साध्वसाध्वसतामालम्ब्य दूरत एव तथाविधान् विविधान् विलोक्य वत्स-वत्सपान विस्मितविस्मितविमनाः कथममी त एव व एवागताः किंवा परे किंवा मकृता एवामी मयाऽपहृता वस्तुतोऽवस्तुतोदयेनालीका नालीकासनस्य गलितो गर्व इति ॥१३१॥

---

त एवामी वत्सास्त एवामी वालका इति सत्यं यद्यस्मात् अमी वलवत् अमीवं पापं तल्लङ्घनशीलाः देवप्रवरा एव सहचरा वालका अमी च मुनय एव गवां वत्साः तत्र तत्र तत्तदंशप्रवेशात् तत्तच्छब्देनोक्तिः सम्प्रति अधुना भवानेव सर्वेषां तु कतमोऽपि न दृश्यते इति भावः । ननु वल्वता निभाळनेन निष्टङ्क्य कथ्यतां तत्राह सम्यक्‌नकारेण प्रतिजाने प्रतिज्ञायैव इदं ब्रवीमिति । श्रीर्जाया यस्य स श्रीजानिः । हे श्रीजाने ! लक्ष्मीकान्त ! अमी सर्वे भवदंशा लक्ष्मीकान्ताश्चतुर्भुजाद्दश्यन्ते इति भावः ॥१२९॥

इति कथया इति तद्वाक्येन इति हासकथाम् इव कुमारयामासेति । कुमार क्रीडने चुरादिः तत्र तदानीमेव तं प्रति स्वरहस्यज्ञापनेच्छायां भगवतोऽयमभिप्रायो ज्ञेयः । यदि प्रथममेव ब्रवीमि तदा दयालुसरलस्वभावस्य मदग्रजस्य तेषां तादृशवस्थासहनाशक्तया कोपेन ब्रह्मणोऽपि कोपे प्रवृत्तिसंभवादेतल्लीलानिर्वाहो मे न स्यात् । यदि तन्निर्वाहानन्तरमेव ब्रवीमि तदा तदानीमेव हन्त ! किमिति नाब्रवीः कात्र क्षतिरभविष्यत्तथाभूतत्वं तव नाभालितं मयेति तच्छोचनया वैरस्यमेव यदि पुनर्नब्रवीम्येव तदा तत्कथनयोग्ये तादृशे सख्यौ तस्मिन् विस्रम्भायोगेन सख्यरसस्यैव हानिः वर्षे समाप्तप्राये तु कथनेन किंचिदनवद्यमिति । वस्तुतः सिद्धान्तगत्या तु तादृशस्य महापुरुषांशिनः श्रीवलदेवस्यापि मोहकत्वेन महास्वयंभगवत्त्वाज्ञापकेन तस्याचिन्त्यशक्त्या ब्रह्मरुद्रादिमोहने कैमुत्यमेवानीतमिति ॥१३०॥

एवं वत्सरं व्याप्य वत्सरक्षणस्य क्षणकौतुके उत्सवकौतुके वृत्तः समाप्त ऊहस्तर्को यस्य सः । वृत्तं चेष्टा लीलेति यावत्तस्य मितिः परिमाणं तद्रहितस्य । वृत्तं वार्त्ताम् असाध्वसां निर्भयताम् । विस्मितेन विस्मयेन विगतं स्मितं यस्य स चासौ विमनाश्च अवस्तुता अवास्तवम् । अलीका मिथ्याभूताः मायिका इत्यर्थः। नालीकासनस्य कमलासनस्य इति हेतोः गर्वो गलितः १३१

---

१दण्डने। २ समौविस्रम्भविश्वासावित्यमरोक्तेर्दन्त्यादिः।विश्रम्भः केलिकलहेइति विश्रमेदिन्युक्तेन्मांतालव्यादिरपिविस्रम्भशब्दःतालव्यादिस्तुप्रमादेगतइतिमट्टोक्तेरत्रदन्त्यादिरेवविश्वासवाचकः।

स्वमनुगञ्जयन् भगवति परममायाविनि विनिर्हितमायोऽर्हितमायो नलिनजो न जोषयितुमात्मानं प्रबभूव ॥ १३२ ॥

अनभिज्ञ इव स्वचरितैर्व्याकुलीभवन् स्वयैव मायया स्वयमेव बद्ध इति वैफल्येनालीका नालीकासनस्य कृतिरासीत् ॥ १३३ ॥

अथ पुनरपि तान् समालोकयति सति तस्मिन् । सर्वे पङ्कजशङ्खचक्रगदिनः श्रीमच्चतुर्बाहवोऽनन्तानन्दचिदेकमात्रवपुषः सूर्य्येन्दुकोटित्विषः। लीलोल्लासितलोमकूपकुहरोन्मज्जन्निमज्जत्परस्वेदाम्भःकणिकानिकायसदृशब्रह्माण्डभाण्डव्रजाः॥ १३४

किंच । श्यामाःकुण्डलिनो मणीमुकुटिनः केयूरिणो हारिणः ।
कूजत्कङ्कणिनः क्वणत्कटकिनो मञ्जीरिणो निष्किणः ।
आकण्ठप्रपदं लसत्तुलसिकामालालिझङ्कारिणः ।
खेलन्मेखलिनस्तडिद्व्यतिकरश्रीचेलिनस्ते बभुः ।

अथ प्रतिजनमेकेन परमेष्ठिना द्वाभ्यामश्विभ्यां त्रिभिर्गुणैश्चतुर्भिर्वेदैः पञ्चभिस्तन्मात्राभिः षड्भिरृतुभिः सप्तभिर्महर्षिभिरष्टभिः सिद्धिभिर्वसुभिश्च नवभिर्निधिभिर्ग्रहैश्च दशभिर्दिग्भिर्दिक्पालैरेकादशभिः रुद्रैर्द्वादशभिरादित्यैस्त्रयोदशभिर्बहिरन्तरिन्द्रियाधिष्ठातृदेवैश्चतुर्दशभिर्मनुभिः पञ्चदशभिस्तिथिभिः षोडशभिर्विकारैर्मूर्त्तिमद्भिरुपास्यमाना मानान्तरानधिगम्यमाना ददृशिरे दृशि रेचितरूपान्तरङ्गतया गतया च सर्वसौन्दर्य्यसम्पदा कृतास्पदाः ॥ १३५ ॥

एवमवलोकयन्नेव सर्वमेव वासुदेवमयमिति जानन्नविलम्बेनैव दध्योदनकवलकरं वेलकरं[1] रसायनमिव[2] सर्वसुहृदां हृदां रञ्जनं परितोऽपरितोषेण पुरेव वपुरेव बहुलमाखेदयन्तं वत्सान् वत्सपांश्च समनुसंदधानं दधानं च कक्षे वेत्रं विषाणञ्च । जठरपटपरीतमुरलीकपलीक–मलीकविमनस्कताविरसमिव तत इतो विलोकयन्तमेकमेव विचरन्तमेकमेवाद्वितीयं ब्रह्मेत्यर्थमिव मूर्त्तिमन्तमालोक्य निराबाधापराधपराजित इव चतुर्मुखः चतुःसानुः कनकगिरिरिव दण्डवद्भुवि निपपात ॥ १३६ ॥

समनन्तरं संचारतो विरतो विहितस्थितास्थितिरेव केवलमभूदभूतपूर्वगाम्भीर्य्ये विविधशक्तिनर्त्तकीनाट्यसूत्रधारः सकलगुणाधारस्तमालतरुकदम्ब इव निश्चलः १३७

तदनु चतुर्मुखचतुर्मुकुटकोटिमहामणीन्द्रमरीचिवीचयो भगवच्चरणकमलस्पर्शकाम्यएव धावन्त्यो भगवत एव चरणनखरमणीमञ्जरीभिरनधिकारितया निवार्य्यमाणा इव कुण्ठतामापेदिरे यदि । तदा नालीकासनो नालीकासनो भवन् उत्थायोत्थाय भूयो भूयो नत्वा यथापराधमतिनम्रतामुपगम्य तमस्तौषीत् ॥ १३८ ॥

जय जय नृपते चिदवबोधरसैकमयं घनरुचिचन्द्रकस्तवकगौञ्जिकहारभृतः ।
चलवनमालिकं कवलवेणुविषाणभृतो वपुरिदमद्भुतं व्रजपुरन्दरनन्दन ते ॥ १३९ ॥

इत्थंच वत्सवत्सपानां प्रत्येकमेव सपरिकरवैकुण्ठनाथनिष्ठैश्वर्य्यशालितामभिज्ञाप्य ब्रह्माणं निर्मदीकृत्यतं दैन्यव्याकुलनोत्थप्रेम्णा संशोध्य पुनः परमकृपया स्वतेजसा सर्वाच्छादकं मूलभूतं स्वरूपमपि दर्शयामास भगवान् इत्याह दध्योदनेति । एवं च वत्सरं यावत्तेनैव रूपेण स्तयाऽवस्थितिर्गम्यते प्रतिदिनंव्रजे गमनं च स्वस्वरूपप्रकाशद्वैतेनैव । जनकश्रुतदेवगृहगमनवत् तत् प्रकाशे कालगमनं च सखीनामिव तस्यापि संक्षेपेणैव जातम् । कवलादीनां तथैव स्थितेरिति ज्ञेयम् । निराबाधेन दृढेन अपराधेन आ सम्यक् पराजितः पराभूत इव ॥ १३६ ॥

विविधाः शक्तय एव नर्त्तक्यस्तासां नाट्ये सूत्रधार इति पशुपवंशशिशुत्वनाट्यामित्यस्य पदस्य मूलगतस्य व्याख्यानरूपमिदम् । ततश्च तत्र पशुपवंशशिशुत्व च तथाकारत्वेनैव नटस्य भावो नाट्यं च तयोर्द्वन्द्वैक्यं तदुद्वहीदित्यर्थ इति ॥ १३७ ॥

अलीकम् असनं दीप्ति र्यस्य सः । तथा न भवन् भगवच्चरणनखकान्तिभिः स्पृष्टत्वात् १३८

अथ ब्रह्मणश्चतुर्भिर्मुखैश्चतुर्भिर्वेदैरिव सा स्तुतिरिति वेदस्तुतिच्छन्दसा नर्दटकेनैव तामुपनिबध्नाति । जयजयेति हर्षगद्गदाभ्याम् । ते तव वपुर्नयते स्तूयते । तव कीदृशस्य चन्द्रकादिभृतः तथा कवलादिभृतः । वपुः कीदृशं चला चञ्चला वनमालिका यस्य तत् । एवं च नैर्माल्य ! तेऽभ्रवपुषे इत्यस्यार्थो विवृतः ॥ १३९ ॥

---

१ वलकरमितिपाठो बहुषु पुस्तकेषु न दृश्यते ।

२ यज्ञगव्याविशामनं कारितान्तद्रसायनम् ।

अथ मदनुग्रहार्थकमशेषविशेषतया प्रकटितमद्भुतं यदिह वत्सपवत्सवपुः ।
अपि लवनस्य भो न महिमानमवैमि विभो किमुत तवेदृशायुतविकाशविकारकृतः ॥ १४०

अपि च चतुर्भुजाः कमलकम्बुगदादिभृतो ।
घनरसचिन्मया निखिलभूतिभृतः सकलाः ।
त्वमजित केवलं ललितगोपतनुर्द्विभुजो ।
न हि विकृतिं प्रयात्यखिलकारणताऽपि प्रकृतिः ॥ १४१ ॥

अतिरसवर्षिणीं तव पदाम्बुजभक्तिविधा—
महह विहाय यः प्रयतते ह्यवबोधकृते ।
न स लभते श्रमादपरमेष्वपि हन्त फलं ।
तुषतुषघाततो न हि कदापि फलोपगमः ॥ १४२ ॥

विजहति ये प्रयासमवबोधविधौ सुधियो ।
दधति तवाङ्घ्रिपङ्करुहभावमतीवदृढम् ।
अतिकुतुकी स्ववानपि कृपाब्धितरङ्गचलैः ।
त्वमजित तैर्जितो भवसि नाथ तदीयवशः ॥ १४३ ॥

कति च न ते पुरा परमहंसवतंसगणा—
स्तव पदपङ्कजे सदनुरागविलासभृतः ।
तव चरितामृतश्रवणकीर्त्तनचिन्तनतः ।
किमपि सनातनं तव सुखेन पदं प्रययुः * ॥ १४४ ॥

---

वत्सपवत्सानां वपुर्वासुदेवाकारम् एकमपि तथा च अस्यापि देव वपुष इति ॥ १४० ॥

तत्र साक्षात्तवैव किमुतामेति साक्षात् पदस्य तात्पर्य्यं विवृणोति अपिचेति। कम्बुः शङ्खः अरिश्चक्रम् अखिलानां क्षित्यादीनां प्रापञ्चिकानाम् अप्रापञ्चिकानां च सपरिकरवासुदेवादिस्वरूपाणां चेहकारणभूता तथापि ते तव प्रकृतिर्मूलभूतं स्वरूपं विकृतिं प्राकृतमप्राकृतं वा विकारं न प्राप्नोति। प्रकृतिमेव निर्दिशति ललितगोपतनुर्द्विभुज इति ॥ १४१ ॥

विधा प्रकारः अवबोधो ज्ञानम्। तुषो धान्यादिवल्कलं खण्डितं तुषोऽखण्डितमिति । तथा च । श्रेयःसृतिमित्यादि ॥ १४२ ॥

स्ववानपि स्वाधीनोऽपि । तथा च । ज्ञाने प्रयासमुदपास्येत्यादि ॥ १४३ ॥

वतंसोऽवतंसः । तथा चापुरेह भूमन्नित्यादि ॥ १४४ ॥

---

* प्रययुः इतिसमासाभावात्पदद्वयम् सर्वत्राप्येवमेव । किञ्च कति न प्रययुः अपितु सर्वे इति काकुः । अथवा नययुरितिसाधीयान्पाठः । तच्चनन्द्वयंप्राप्तिदार्ढ्यार्थम् ।

तदपि च निर्गुणस्य तव पुण्यगुणैकनिधे-
र्न हि महिमाऽमलात्मभिरवैतुं महो सुशकः ।
अनुभवमात्रतः परमनन्यविबोध्यतया ।
ऽप्यविकृतितो भवेद्यदि भवत्यपि नेतरथा ॥ १४५ ॥
तव गुणसागरस्य गुणमेकमपीश्वर! के ।
गणयितुमीशते हितकृते ह्यवतीर्णवतः ।
अपि धरणीरजांस्यपि च मानि तुषारकणा ।
अपि गणनीयतां दधति कस्य * च कालवशात् ॥ १४६ ॥

तव तदनुग्रहग्रहिलताध्वनि तत्तदृशो निजनियतिक्रमोपगतदुःखसुखोपभुजः ।
वचनवपुर्मनोभिरनुसंदधतश्च भवत् पदकमलं भवन्ति तवधामनि दायभृतः १४७

अथ मदभव्यतां कलय नाथ! जगद्विरलां त्वयिपरमेश्वरे प्रथितमायिकिरीटमणौ । स्वविहितमाययास्वयमिहास्मि विमोहितधी रनलकणः क्व च क्व च महाप्रलयज्वलनः ॥१४८॥

पुरुकृप! मृष्यतां मम महानपि मन्तुरयं सहजरजोभुवः पृथगधीश्वरभावभृतः ।

---

ननु केवलं भजनाग्रह एव किमिति स्थाप्यते बहुशास्त्रविचाराभ्युत्थज्ञानच्छिन्नसंशयादिमालिन्यकेनान्तरात्मनैव तन्महिमज्ञानसिद्धेस्तथा । तमेवविदित्वा अतिमृत्युमेतीत्यादिश्रुतेर्ज्ञानाग्रहोऽप्युपादेय एवेति तत्राह । तदपिच तथाऽपि । तादृशे ज्ञाने जातेपीत्यर्थः । निर्गुणस्य प्राकृतगुणातीतस्य तव महिमा अवैतुं ज्ञातुं न सुशकः कथं तर्हि सुशकस्तत्राह अनुभवमात्रतः भजनमात्रोत्थात् केवलादनुभवादेव यदि महिमा अवैतुं सुशको भवेत्तर्हि भवतु इतरथा शास्त्रोत्थज्ञानादिभ्यस्तु न भवत्येव इत्यर्थः । यदि शब्दः कात्स्र्न्येन महिम्नो ज्ञानाभावज्ञापकः । कीदृशात् अविकृतितः प्राकृतविकाररहितात् । तथा च । तथापि भूमन्नित्यादि ॥ १४५ ॥

तव महिमज्ञानं दूरं वर्त्तताम् । त्वदीयस्यैकस्यापि गुणस्य महिम्ना वार्त्ता दूरे तस्य गणनमपि दुष्करमेकस्यापि भेदप्रभेदानामानन्त्यादित्याह तव गुणेति । कस्य च कस्यापि गणनीयतां दधति केनापि कालवशाद्गणनार्हाणि भवन्त्यपि । तव त्वेकमपि गुणं के गणयितुमीशते न केपीत्यर्थः । तथा च गुणात्मनस्तेपीत्यादि ॥ १४६ ॥

के तर्हि कृतार्थास्तत्राह तवेति । नियतिरदृष्टम् । तथा च । तत्तेऽनुकम्पामित्यादि ।१४७।

अहं तु तेषां मध्ये कतमोऽपि न भवामि किन्तु परममन्दबुद्धिरेवेत्याह अथेति । तथा च । पश्येश मेऽनार्यमित्यादि ॥ १४८ ॥

मन्तुरपराधः । यद्वान् अजोऽहमित्यवलेपोऽहङ्कारः । कथं तर्ह्येतादृशापराधवति त्वयि कृपासम्भावनास्तीति । कृपोद्गमप्रकारं स्मारयति मयि नाथेति । यद्यप्यसावन्यत्र स्वयमेव प्रभुम्मन्यस्तथापि मयि

---

* कृपानीयतांरवेणि षष्ठी । १ सुलभादित्वात्स्वरान्तः ।

वलवदजावलेपपरिलेप महेन्द्रदृशोः कुमते–रयि मयि नाथवानेवमिति त्वं विधेहि कृपाम् ॥१४९॥

क्व महदहमहीखमरुदम्बुकृशानुसमावृतजगदण्डभाण्डगतसप्तवितस्तितनुः ।अ-हमहह क्व चेदृशपरार्द्धपराणुगतागतपथरोमकूपनिकरेश ! तवेश्वरता ॥ १५० ॥

अपि जननीजनोदरगतस्य शिशोश्चरणोन्नमनैर्विविधैर्वत जननीष्वपराधकरैः स्वदुदरवर्तिनी निखिलजीवघटेति विभो ! त्वमसि जगत्प्रसूरिति समस्त-कृतोऽनुभवः ॥१५१॥

अथ जलशायिनो भगवतोऽथ तवैव तनो यदहमभूवमीश्वर ! ततोऽसि ममापि पिता नहि जनकोऽसतस्तनुभुवोऽप्यपराधकृतः परिहरते निसर्गसुतवत्सलता कुशलः१५२

नरनिकरायणं सकलदेहभृदात्मतया सहजत एव तद्द्वयभिधया च भवानपि सः ।

विषये नाथवानेवापग एतस्य नाथ एवाहम् अयं तु मद्भृत्य एवेति प्रकारेण इव परामर्शेन स्वनिष्ठेन कृपां विधेहि। किन्तु सन्निष्ठं तदुद्गमकं किञ्चिदपि लक्षणं नास्त्येवेति भावः। तथा च अतः क्षमस्वाच्युत इत्यादि ॥ १४९ ॥

नन्वहमेव सर्वजगत्प्रभुरिति सत्यमेव त्वमपि चेदन्यत्र स्वप्रभुतां ख्यापयसि तर्हि त्वयि स्पर्द्धैव मे योग्या न तु कृपेति तत्र नहि नहीत्याह क्वमहदिति। स्पर्धाहीयत्साम्येपि भवति तव मम तु महदन्तरमिति भावः। महदादिभिः समावृतं जगदण्डमेव भाण्डं तद्गता तदन्तर्भूतास्वमानेन सप्तवितस्तिमयी तनुर्यस्य सोऽहं क्व हे ईश ! तवेश्वरता वा क्व। अत्यन्ताऽसंभवज्ञापकं क्वद्वयम्। तत्रापि सप्तवितस्तिमितत्वं स्वस्य निकृष्टपुरुषत्वसूचकम्। महापुरुषा हि स्वमानेन नववितस्तयो भवन्तीति। ईदृशानां जगदण्डभाण्डानां परार्द्धसंख्यानां परमाणुतुल्यानां गतागतस्य प्रवेशनिर्गमस्य पन्थानो रोमकूपनिकरा यस्य हे तथाभूत। इति तदंशभूतप्रथमपुरुषकारणार्णवशायिन्येनोक्त्वा साक्षात्तत्पार्श्विनः परमकैमुत्यमानीतम्। तथा च काऽहं तमोमहदिति।१५०

अथ स्वापराधक्षमापणे युक्तिमुत्थापयन् "पिताहमस्य जगतो माता धाता पितामह" इति *भगवद्गीताप्रामाण्यसाक्षात्कारेण पितृत्वप्रधानं विनैव मातृत्वं तथा मातृत्वप्रधानं विनैव च पितृत्वं तस्य गर्भोदशायिपुरुषत्वेनाह श्लोकद्वयेन अपीत्यादिना।* तत्र यथा मातृत्वे गर्भे धारणमेव लिङ्गं तथैव पितृत्वेऽपि मत्तो ब्रह्मा जायतामिति आधानस्थानीया भगवदिच्छैव लिङ्गमवगन्तव्यम्। तथा च। उत्क्षेपणं गर्भगतस्येत्यादि ॥ १५१ ॥

अपराधकारिणो तनुभुवः पुत्रान् नहि परिहरते न त्यजति। तत्र हेतुर्निसर्गेति तथा च। जगद्योन्यादर्धीत्यादि ॥ १५२ ॥

ननु जलशायी नारायण एव तव माता पिता चेति सत्यमेव। तेन गोपेन्द्रसूनोर्मम किमायातं तत्र न केवलं तदंशत्वेन भवानेव स इति न्यायः। किन्तु तन्नामनिरुक्तिरपि मुख्या त्वय्येव दृश्यते इत्याह नरनिकरायणमित्यादि ।.समुद्रार्थकाणन्तरप नारशब्दस्य व्याख्या नरनि-

इति हि तदात्मजोऽप्यहमधीश ! तवात्मभुवः कुरु करुणां क्षमस्व मम मन्तु मनन्तधृते! ॥१५३॥

तदपि जलस्थितं तव सदेव वपुः परमं जलगततैव तस्यानियतानिभवेद्भगवन् ! अथ परिलोकितं न च विलोकितमप्यपरं यदपि मया तं वपं महिमा हि कृपाकृपयोः ॥१५४॥

अथ कथं मन्यथा जठरमध्य मधीह विभो ! समकलयत्तु प्रसूस्तत्र समस्त मधीश जगत् । असदिदमीक्ष्यते वहिरहो ! न तवोदरगं घनचिति केवलं क्व जडजातविमिश्रविधिः ॥१५५॥

---

कर इति । तस्य अयनम् आश्रयः । केन प्रकारेण । सकलदेहभृतां सर्वजीवानाम् आत्मतया परमात्मत्वेन इति स्वभावादेव तद्व्यभिधया तन्नाम्नाऽपि स नारायणो भवान् । साक्षात्प्रकृतिपरो योऽयमात्मा गोपालः कथं त्ववतीर्णो भूम्यां ह्वैडाति तापनीश्रुतेः । कृष्णमेनमवेहि त्वमात्मानमखिलात्मनामिति स्मृतेश्चेति । अनन्तधृते इति परमधैर्य्यशालित्वेन अक्षोभ्यतया तव क्षमा युक्तैवेति भावः । तथा च नारायणस्त्वं न हीत्यादि ॥ १५३ ॥

ननु तर्हि आपो नारा इति प्रोक्ता "आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत" इति प्रसिद्धनिरुक्त्या प्राकृततत्त्वमयजलान्तःपातित्वेन तद्वपुषः प्राकृतत्वमायातम् तत्र नहि नहीत्याह । तदपि जलस्थितमपि तव वपुः सत्यमेव किंतु तस्य जलगततैव जलाश्रिततैव न नियता समस्ततत्त्वानामाश्रयभूतस्यापि जलापरिच्छिन्नस्य तद्वपुषो जलाश्रितत्वेपि न जलपरिच्छिन्नत्वप्रतीतिरेव न वास्तवीत्यर्थः । यद्वा । जलपरिच्छिन्नतैव न नियता अपि तु जलापरिच्छिन्नतापि । अतर्क्यैश्वर्ये तस्मिन् परिच्छेदापरिच्छेदौ न विरुध्येते इत्यर्थः । ननु तद्वपुः सत्यं चेद्ब्रह्मणे तर्ह्येकवारं विलोक्यापि किमिति तृतीयस्कन्धकथानुसारेण भवता पुनर्न विलोकितं तत्राह । अथेति दर्शनादर्शनं हि तव क्रमेण कृपाः कृपयोरेव महिमा नतु सत्यासत्यत्वाज्ञापकं तदेवेति भावः । तथाः च तत्रेञ्जलस्थमित्यादि ॥१५४॥

तद्वपुषः "प्राकृतजलपरिच्छिन्नत्वानियमो,,भवतैव स्वयं दृष्टान्तीभवता प्रदर्शितं इत्याह अथेति । अन्यथा यदि वपुषः प्रपञ्चाश्रितत्वमेव स्यादित्यर्थः। तदा जठरमध्यम् अधि अधिकृत्य प्रसूर्माता समस्तं जगत् कथं समकलयत्सम्यगपश्यत् । सर्वजगतामाश्रयभूतमेव मद्वपुर्नतुजगदाश्रितमिति ज्ञापनार्थमेव मातरं लक्ष्यीकृत्य जठरस्थं जगत्त्वया प्रकटितमिति भावः । किंतु वस्तुतः सिद्धान्तविचारे तु वहिःस्थितम् इदं जगत् असत असर्वकालस्थायि नश्वरस्वरूपमेव तवोदरगतं तु न तथा सत्यमनश्वरस्वरूपमेव कारणत्वादित्यर्थः । तत्र हेतुः । केवलं घनचिति त्वद्विग्रहे जडतातस्यविमिश्रविधिर्विलिसत्वप्रकारः क । नहि घनचैतन्येजडप्रक्षेपः संभवेदित्यर्थः । व्रजेश्वर्य्या त्वज्जठरस्य तत्रस्थजगतश्च वैधर्म्येणाननुभूतत्वादिति भावः । तथा च तत्रैव मायाधमनायतार इति ॥ १५५ ॥

---

१ प्राकृतजलपरिच्छिन्नत्वे प्रतीतिरवास्तवीति इति पाठकोपुरस्तादपि प्रदर्शितमिति पाठः ।

पुरुकृपे । यत्त्वया जठरवर्त्ति तदेदं जगत्त्वसहितमीक्षितं न तदमुष्य भवेत् प्रतिमा । यदि भवतीदं तत्प्रतिमुखत्वममुष्य भवे दथ न च मायिकं तव विनोदकलैव हिंसा ॥१५६॥

अथ यदमी भवांश्चिदववोधरसैकमयाः स्वयमभवद्विभो ! स्वयमेवैकक एव पुनः तदपि च मायिकं यदि तदीयजडत्वमितिर्यदि जडता ततोऽनुभवसिद्धिविरोधविधिः ॥१५७॥

तत इदं मूर्त्ते तव तु कोऽपि देहो ! इयती ।
व्युपमिति रीशिता त्रिभुवनैकविमोहकरी ॥
घनरसचित्तया बहुविधोऽसि न च नृतया
तदितरयोगिनां । तव च भेद इयान् हि महान् ॥ १५८ ॥

ननु किमेवं मन्यसे बहिःस्थितस्यैव जगतो मज्जठरे प्रतिबिम्बोऽस्तु । मज्जठरस्थितस्यैव जगतो वा च्छायारूपं बहिःस्थितं जगदस्तु तत्राह हे पुरुकृपेति । त्वत्कृपयैव तत्र तत्त्वं स्फुरति न ममाऽत्र शक्तिरितिभावः । तदा तस्मिन् समये त्वया जठरवर्त्ति यज्जगत् ईक्षितं दर्शितं तत् अमुष्य बहिर्भूतस्य जगतः प्रतिमा त्वयि दर्पणरूपे प्रतिबिम्बो न भवेत् तत्रहेतुः । स्वसहितं त्वत्सहितं नहि दर्पणे दर्पणेऽपि दृश्यते इतिभावः । यदि अमुष्य बहिर्भूतस्य जगतः तत्प्रतिमुखत्वं भवेत् तस्य जठरवर्त्तिनो जगतः प्रतिच्छायात्वमिति षष्ठी तत्पुरुषः । अथ तदा अदो बहिर्भूतं जगत् मायिकं न च स्यात्सत्यवस्तुनश्छायापि सत्यैव भवति सर्वकालस्थायित्वप्रसक्तेरिति भावः तर्हि को निश्चयस्तत्राह । सा तव विनोदकलैव अनिर्वाच्यमेवदमस्माभिरिति भावः । तथा च । यस्यकुक्षाविति ॥ १५६ ॥

अमी वत्सवत्सपाद्याः ननुआयन्तयोरदृष्टत्वात् तत्सर्वं मायिकमस्तु तत्राह तदपि चेति । तदा तदीयजडत्वस्य मितिः प्रमितिः स्यात् अस्तु को दोष इति चेत्तत्राह । यदि जडता स्यात्तदा अनुभवस्य सत्यज्ञानानन्तानन्दमात्रैकरसमूर्त्तय इत्युक्तप्रकारस्य साक्षात्कारस्य या सिद्धिर्युक्तता निष्पन्नता तस्याविरोधकारणमिति । नह्यनुभवसिद्धे वस्तुन्यप्रामाण्यशङ्का संभवतीति भावः । तथा च *अद्यैव त्वदृते इत्यादि* । तस्यायमर्थः । *त्वदृते त्वां विना अन्यस्य मायात्वं* न दर्शितं । किंतु दर्शितमेव वत्सवत्सपालास्ततश्चतुर्भुजाश्च त्वमेव भवसीति त्वद्रूपा एव ते इति न तेषां मायिकत्वम् । त्वदृते इत्यनेन त्वद्भिन्नानामेव मायिकत्वोक्तेरित्याह । एकोऽसीत्यादि । *अद्वयं ब्रह्म दिश्यत इति बहूनामपि तेषां त्वत्स्वरूपत्वात्त्वमेवैको भवसीत्यर्थ इति* ॥१५७

स्युपमितिर्निरुपमा ईशिता ऐश्वर्यम् । न नृतया नृशब्दस्य मनुष्यार्थत्वात् तेषां च प्रकृतिजन्यत्वात् प्रकृततयेत्यर्थः । तत्तस्मादितरेषां योगिनां तव च इयान् एतावान् भेदो महानिति तेषां मायिकत्वादेनैव बहुरूपता सामर्थ्यं तव तु घनरसचिद्रूपत्वेनेति । तथा च । अंशेन त्वदृते इत्येव तात्पर्यतो युक्तिनिर्झर इति ॥ १५८ ॥

प्रथमते एककः स्वयमभूरथ भूरितरा सहचरवत्सकावेलिरभूरथ सोऽपि पुनः ।
अजानि चतुर्भुजा प्रतिजनं च मयोपनुता पुनरसि चैक इत्यपि कलैव न ते कुहकम् १५९
तव पदवीमिमामविदुषां तु मनःकुहरे भवसि हरे । पृथक् पृथगिवं प्रतिभानपरः ।
अवनविधाननाशकरे एकक एव भवानिह हरिरजो भवे इतीश्वर । ते कुहकम् १६०
सुरमुनिमानुषादिषु तवाऽऽविरहो यदिदं हितकृतये सतामहितसंविधयेऽप्यसताम् ।
तदखिलमंशतो यदपि तत्र विभोः कुहकं ह्यवयविनो विरूप इह नोऽवयवमकरः? १६१
त्वमसि परात् परः सकलशक्तिकदम्बमयः परभगवत्तया त्वमखिलेश्वरमूर्द्धमणिः ।
घटयसि दुर्घटं विघटयस्यपि भोः सुघटं तव महिमा हि मादृशगिरां न भवादृपयः
क इह नु वेत्ति ते चरितमण्वपि भूमतमो-
त्तम भगवन् परात्मतम योगविदां परम ॥
क्व कति कथं कदा यदपि योगकलां प्रथयन् ।
विहरसि लीलया शिवविरिञ्चिदुरासदया ॥ १६२ ॥

मया ब्रह्मरूपेण उपनुता स्तुता कलैव कौतुकमेव । यद्वा । तवांश एव न कुहकं मायेति । तथा च । तस्यैव पद्यस्य । एकोसि प्रथममित्यादि ॥ १५९ ॥

एकक एव भवान् पृथक् पृथगिव । त्वत्तो हरः पृथक् ब्रह्मापि पृथगेव तत्रापि युक्तिदार्ढ्या-भावसूचक इव शब्दः । इति एतद्ज्ञानं ते कुहकं माया । अत्र च हरेः स्वरूपेणैव ब्रह्मरुद्रयो-स्तु गुणावतारत्वेनैक्यमितिमन्तव्यम् । यद्वा । स्वायंभुवमन्वन्तरे यज्ञावतारेणैव इन्द्रत्वमिव क-चित् कल्पे विष्णुस्वरूपेणैव ब्रह्मरुद्रत्वमिति तदपेक्षयैवोक्तम् । तथाह्युक्तं भागवतामृते । "भवे-त्क्वचिन्महाकल्पे ब्रह्म जीवोऽप्युपासनैः । क्वचिदत्र महाविष्णुर्ब्रह्मत्वं प्रतिपद्यते" इत्यादीति तथा च अजानतां त्वत्पदवीमित्यादि ॥ १६० ॥

गुणावतारान् प्रस्तूयलीलावतारानपि तदैक्येन प्रस्तौति । सुरादिषु वामनादिरूपेणाविराविर्भावः । तदखिलमंशत एव यद्यपि तथापि तद्विराड्रूप कुहकम् । तत्र हेतुः । अवयविन इति नहि मानुषस्यावयविनो हस्तपादाद्या विजातीयाः पश्वादिसंबन्धिनो भवन्ति । तथाहि सुरेष्वित्यादि ॥ १६१ ॥

यद्यप्येवमैक्यं तथापि पूर्णत्वेनावतारित्वात् तेषां मूलभूतत्वं पृथगेवेत्याह त्वमसीति ते परमस्वरूपाः त्वं तु परात् परः ते यथोपयोगिज्ञानेच्छाकृत्यादिशक्तिप्रकारवन्तस्त्वं तु सकल-शक्तिकदम्बमयः ते भगवत्तया अखिलानामीश्वरास्त्वं तु परमभगवत्तया तेषामपि मूर्द्धमणिरूपः तथा च को वेत्ति भूमन्नित्यस्याभासतात्पर्य्यम् ॥ १६२ ॥

ते अवतारा भूमानस्त्वं तु भूमतमोत्तम एवं परात्मतमेत्यादि तथा च को वेत्ति भूमन्नि-त्यादि ॥ १६३ ॥

इदमखिलं जगद्यदपि नश्वरमीश्वरंते ।
पुरुतरदुःखदं विरसमन्तत एव हि यत् ।
त्वयि रसबोधनित्यवपुषि प्रकटं विलस -
द्भवति भवत्पदप्रतिममेव हि शाश्वतिकम् ॥ १६४ ॥
त्वमनितरः पुराणपुरुषः स्वयमात्ममहः ।
प्रकरविसारितः समधिरूढसमस्तभगः ॥
घनसुखचिद्रसो रसविलासविशेषमयः ।
पुरुकरुणामयः क इह ते ऽस्तु कटाक्षपदम् ॥ १६५ ॥
गुणनिधिमीदृशं ननु भवन्तमुपास्यतया ।
चरणसरोरुहे निहितमत्तमनोभ्रमरः ।
अनुपधिचिद्रसप्रसरकान्तिलसद्वपुषः
भजति हि सद्गुरोः करुणयैव सुधीः कतमः ॥ १६६ ॥
तव चरणाम्बुजोल्लसदनुग्रहशुद्धमति ।
स्तव निजतत्त्वविद्भवति कोऽपि परः सुकृती ।

असतोपि सत्ताप्रदत्वात्तमेव साक्षादीश्वर इत्याह । इदमखिलं जगत् यद्यपि नश्वरं मायिकत्वात् त्वत्स्वरूपाद्भिन्नं तथापि प्रकटं विलसत् भवति त्वत्सेवनोन्मुखं चेत्स्यात् भवति तदा भवतः पदं स्थानं धाम तत्प्रतिममेव तत्सदृशमेव शाश्वतिकं नित्यभूतं भवति । तथा च सस्मादिदमित्यादि तस्यायमर्थः । म यात उयदपि जगत् मायावृत्तिजातमपि नित्यसुखबोधतनौ त्वयि विषये स्यात् त्वत्सेवानुकूलं चेत्स्यादित्यर्थः । सदा सदैव सत्यं वैकुण्ठमिवाभातीति १६४

अनितरः न विद्यते इतरो यस्मात्सः एक इत्यर्थः । भग ऐश्वर्यादिः तव कटाक्षपदं तिरस्कार्य्यः। कोऽस्तु न कोपीत्यर्थः। तत्र हेतुः पुरुकरुणामय इत्यादि यद्वा ते तव पुरुकरुणामयत्वात्युक्तलक्षणस्य कटाक्षपदं कृपावलोकास्पदं को भवेत् कस्य एतादृशं महाभाग्यमस्तीत्यर्थः। भक्त्या तु को महाकरुणामयस्य तव कटाक्षपदमस्त्वित्याशास्ते च तथा च एकस्त्वमात्मेत्यादि १६५

अनुपधेरुपाधिशून्यस्य निरञ्जनस्य प्रसरः प्रकाशो यस्मात्तच्च । अत एव कान्त्या लसद्वपुर्यस्यतं तथा च एवंविधं त्वामित्यादि । तत्र आत्मात्मतयेत्यस्यार्थोऽनुपधीत्यादिना विवृतः किरणरूपस्य निरञ्जनचिद्रसमयस्यात्मनोप्यात्मा परमाश्रयभूतं त्वद्वपुरिति । अतो विचक्षण इति त एव विचक्षणा ज्ञेया इति भावः । इति तेन साक्षाद्भवदुपासकः कतम एव विरलः सुधीरन्ये पुनस्तद्वपुः किरणरूपब्रह्मोपासकाः साक्षात् स्वचिद्रूपभजनत्यागिनो मन्दधिय एव बहव इति द्योतितम्। अत एव तेरोचनद्वर्णस्य भास्करमये ग्रन्थे किमित्येतदभिप्रेत्य तन्निष्ठाप्रकारप्रदर्शकम् । आत्मानमेवात्मतया विजानतामित्यादि श्लोकचतुष्टयमुल्लङ्घितमेवेति ॥१६६॥

ननु तर्हि केवलब्रह्मतत्त्वमात्र ज्ञानपरा मामभजन्तो विगीताः सन्तु किन्तु सत्त्वात्मा भज-

नै तु निगमागम अखिलशास्त्रविचारणया ।
कृतमतिरप्यसौ सुनिपुणोऽपि महानपि यः ॥ १६७ ॥
अत इदमेव भूरितरभाग्यमिहैव जनुः ।
किमपि यतो भवेत्तव जनाङ्घ्रिरजःस्नपनम् ।
स्वजनगणस्य जातिकुलशीलधनादि भवान् ।
चरणरजोऽधुनापि बत वेदविमृग्यतमम् ॥ १६८ ॥
तदिह ममाप्यहो भवतु जन्म किमत्र भवे
किमथ परत्र गुल्मतरुपक्षिपशुप्रभृतौ ।
अहमपि येन ते चरणपद्मनिषेविजना ।
*ननु चरणाम्बुजं तव भजामि निरस्तमदः ॥ १६९ ॥

सुकृतमयमहो अहो बत महोन्नति घोषजुषा यदपि परं बृहत्त्वमसि चिद्रसपूर्णतनु

तामपि महत्त्वज्ञानार्थं तेषां ज्ञानिनामिव वेदादिशास्त्रविचारणमपेक्षितं स्यादेव तत्र नेत्याह तवेति। तथा च । तथापि ते देवेत्यादि ॥ १६७॥

तथापि भक्त्येकमये श्रीवृन्दावनधाम्नि येयत्किञ्चिज्जन्ममात्रवन्तस्तेषां भाग्यमाशासान ए स्तौति । अत इति किमपि तृणगुल्मादिसंबन्ध्यपि यतो जनुषः। नन्वत्र साक्षान्मय्यपि तिष्ठ ति मदीयजनाङ्घ्रिरजसि कोऽयमत्याग्रहस्तत्र तेषामिव प्रेमाणं निगूढमाशासानस्तानेव सगद्ग स्तौति स्वजनेति । जातीति । अहो त्वयि ममता परिपाटीति भावः । अत एव वेदैरप्यति शयेन विमृग्यमेव नतु प्राप्तम् तथा च । तद्भूरिभाग्यमित्यादि ॥ १६८॥

तदेवात्यात्सुक्येन स्पष्टमेवाह तदिति । अत्र भवे इति स्वजनगणस्येत्यस्य प्रक्रान्तत्वात् अत्र भवे मनुष्यमात्रयोनौ पुनरतिदैन्यादयेन तत्र स्वस्य योग्यताऽभावमाशङ्क्याह परत्र गुल्मे- त्यादि अनुलक्षीकृत्य सत्सङ्गात्तादृशं भजनमनुरोक्ष्येत्यर्थः । तत्र वृन्दावनस्थानां तरुगुल्मा दीनां पुष्पपल्लवादिप्रसाधनप्रदानैः शुकादिपक्षिणामपि प्रियभाषणैर्गवादिपशूनामपि भारादिवह- नैः प्रसद्धं भजनमस्तीति । तथा च तदस्तु मे नाथइत्यादि ॥ १६९ ॥

नन्वत्रत्यानामेषामेव किं तद्भाग्यं तन्निर्वक्तुं न शक्यते किंतु फलेन फलकारणमनुमीयत इति न्या- येन कथंचिदुच्यतइत्याह सुकृतमिति । अहो इति पुनरुक्तिरत्याश्चर्ये । बतेति तत्राप्यतिचमत्कारे । महती उन्नतिर्यस्य तत् । महदहमोर्महत्तत्त्वाहंकारयोर्भङ्ग्या तु तदधिष्ठातृत्वाद्ब्रह्मरुद्रयोः परः । कियदेतत् प्रथमकक्षागतं माहात्म्यमिति तयोरपि परयोः प्रकृतिपुरुषयोरपि परः। ननु बृहत्त्वा द्बृंहणत्वाच्च तद्ब्रह्म परमं विदुरिति महदेव बहुत्र सर्वपरमभूतत्वेन श्रूयते तत्राह । बृहत्ब्रह्म परं परमभूत सत् त्वमसि । ब्रह्मणोऽपि प्रतिष्ठाहमित्यादिश्रुतिवाक्यैस्तस्य तस्याप्याश्रयभूताश्चि द्रसपूर्णतनुस्त्वमेव भवसीत्यर्थः । एवंभूतस्य यद्यस्मात् घोषजुषां व्रजवासिनां परमसुहृत्तमः

* अनुर्लक्षणे इति कर्मप्रवचनीयसंज्ञकानुयोगे चरणपद्मनिषेविजनानिति द्वितीया ।

१ निरूढम् इतिपुस्तकान्तरे ।

महदहमोः परः प्रकृतिपुरुषयोश्च परः परमसुहृत्तमो वत यदीय ईयानतुलः १७०

अहमिह धन्यता किमनु वच्मि गवां सुदृशामपि जगदुत्तरां जगदधीश भवान् भगवान् । अपिबदनुत्तमं वत यदीयपयोधरजं रसमिह वत्सपसलीलशरीरधरः १७१

अथ मनुजाकृतिं गतवतामिह घोषभुवां करणकुलाश्रयास्तव पदाम्बुजशीधु कियत् । यदुपलभामहे तदवशिष्टमनेन वयं बहुसुभगा अमी किमु भवन्तु गिरां विपयाः ॥ १७२ ॥

विपदिपमस्तनापि कृतमातृसुवेशतया समजनि पूतना तव सुधाम्नि सहावरमा । धनजनजीवनाद्यखिलदानकृतां किमहो व्रजपुरवासिनां *विवरितेति भवानृणधीः ॥ १७३ ॥

अथ वत लोभकोपमदमत्सरकामपुखा विदधतितावदेव हि जनस्य मलिम्लुचताम् । गृहमपि तावदस्य परमेश्वर बन्धगृहं तव चरणाब्जयोर्न खलु यावदयं निरतः १७४॥

न च सुहृदेव नापि परमसुहृत् नापि परमसुहृत्तरश्चेति भावः । तत्राप्यतिविस्मये वतेति इयान् एतावान् अतुलः निरुपमोऽपि त्वं यदीयः स्वस्वामिसंबन्धेन येषां स्वामीत्यर्थः । तत्र तादृशः प्रेमैव कारणमात्र भावः । तेन तैरेव सेवितैस्त्वत्प्रसादेन त्वं लभ्यसे नान्यथेत्यतः साधूक्तं मया तव जनाङ्घ्रिरजः स्नपनमिति । तथा च अहो ! भाग्यमहो ! भाग्यमित्यादि ॥१७०॥

तेष्वपि मध्ये मुख्यमुख्यतराणां माहात्म्यं पुनरतीव दुष्पारमिति दिग्दर्शनरीत्याह अहमिहेति इह व्रजे । पुनारहेति अत्र समये । वत्सवत्सपेति बहुविधरूपधारणेन तत् पानं तव महातृष्णोभपारवद्यकपङ्ककमिति । भावः । तथा च अहोऽतिधन्या इत्यादि ॥१७१॥

करणकुलाश्रयाः इन्द्रियकुलान्याश्रित्य तदधिष्ठातृदेवतात्वेन वयमित्यर्थः । अत्र यद्यप्यभिमन्तुरात्मन एव विषयभोगो नतु तत्तत्कर्तॄणामिन्द्रियाधिदेवानामित्यध्यात्मसिद्धान्तस्तथापि बुद्धौ ब्रह्मा तिष्ठति चक्षुषि सूर्यस्तिष्ठति तं तमधिष्ठातारं विना तु तत्तदिन्द्रियं श्रीकृष्णनिष्ठानामपि रूपरसादीनां ग्राहकं न स्यादिति सामान्यदृष्ट्या अध्यात्मविदां प्रवादोऽपि श्रीकृष्णे प्रेमोत्कण्ठ्यवतां ब्रह्मादीनामानन्दहेतुः कर्तृत्वमात्रेणैव भोक्तृत्वाभिमानस्वीकारात् प्रेम्णामेव विलक्षणेयं प्रक्रिया दृश्यते चान्यत्र पद्यावल्यादौ । मिथ्यापवादवचसाप्यभिमानसिद्धिरित्यादीति । अन्यथा चिदानन्दघनवपुषां श्रीभगवत् परिवाराणां तेषामिन्द्रियादेः प्राकृतत्वमेव न शक्यते वक्तुम् । कुतस्तत्र तत्र तत्प्राप्त्युपगतानां ब्रह्मादीनां प्रवेश इति । तथा । च । एषां तु भाग्यमहितान्युतेत्यादि १७२

कृतो मातुर्यशोदाया इव वेशो यया तस्या भावस्तत्ता तया सुधाम्नि शोभनधाम्नि वैकुण्ठे समजनि समभूत् किं विवरिता कं वरं भवान् दास्यतीति तदनुसारेणैषामुचितस्य वरस्याऽसंभवादृणित्वेन तवैतत् पारतन्त्र्यं युक्तमेवेति भावः । तथा च । एषां घोषनिवासिनामित्यादि १७३

एषां तादृशस्य प्रेम्णस्तावदास्तां महिमा दूरत एव सामान्यतो भक्तेरेव महिमा परमाद्भुत इत्याह अथेति । मलिम्लुचतां मालिन्यम् तथा च । तावद्रागादयस्तेना इत्यादि ॥१७४॥

* वृञ्वरणे इत्यस्य लुटो रूपम् वृतोवेतिइटः पाक्षिकोदीर्घत्वाभावश्च ।

१ स्वामित्यर्थः इत्येव साधीयान् पाठः ।

अर्हह विदन्ति ये तु महिमानमहो! भवतः सुभगे! विदन्तु ते सुकृतिनोऽतिविदग्धधियः। नहि विवदामहे न खलु तेषु घृणां तनुमो मम तनुहृद्गिरामपदं मे न भवन्महिमा ॥ ७५ ॥

इदमनुमन्यतां कृपणवत्सल! यामि भवत्कृतपरमेष्ठितास्पदपदानुपदः पदवीं। अखिलजगज्जनान्तरविदेकचिदेकरसो मम हृदयश्च वेत्सि तव देव! नमामि पद १७६

गते स्वयंभुवि भुवि सुविपलायां नवतृणाङ्कुराचामोदारमोदा रभसेन चरन्ती पूर्ववत्सा वत्सावलिरथ रथचरणपाणिना ददृशे ॥ १७७ ॥

---

भगवद्भक्तिरहस्योद्घाटनचापल्येन स्वस्य भगवत्तत्त्वविज्ञम्मन्यतामात्रमाशङ्क्य सप्रश्रयमाह अर्हहेति अतिविदग्धधिय इति विरुद्धलक्षणया श्लेषेण तु आकाशपरिमातृणामिव विशेषतो दग्धैव धीस्तेषामिति तथैव सुकृतिन इत्यत्राप्यकारप्रश्लेष इति न विवदामह इति तैर्विवादोऽपि परममूर्खतेति भावः। घृणा न तनुम इतिभवत्तत्त्वानिश्चयचापल्यमात्रं कृतवतो ममापि तादृशत्वं जातमेवेति भावः। किंतु भवत्कृपया साम्प्रतमेव सा मम मूर्खता अपगतेत्याह मम इत्यादि अपदमनास्पदमगम्य एवेत्यर्थः। तथा च जानन्त एव जानन्त्वित्यादि ॥ १७५ ॥

अथ तादृशस्वयाञ्चायां तेनैव कृपयताऽपि भगवता कृतमौनेन यावदधिकारमाधिकारिकाणामिति न्यायेन स्वस्य सत्यलोकप्रस्थापनमेव साम्प्रतमभिप्रेतमित्यऽनुमाय सलालसागर्व विनयं समयोचितमाह अनुमन्यतां अनुमतिं कुरु। पदवीं सत्यलोकं यामि। कीदृशः भवतैव कृतं स्वाज्ञया प्रयुक्तं यत् परमेष्ठितास्पदं पदं सृष्ट्यादिव्यवसायस्तेनैव अनुपद्यते अनुगच्छतीति तथाभूतः। तेनात्रावस्थानानर्हतया तादृशत्वदाज्ञास्थायित्वमेव मम निकृष्टदासस्य युक्तमिति भावः। अखिलानामेव जगज्जनानाम् अन्तरं वेत्सि अतस्तन्मध्यपातितस्य ममापि हृदयं किं मया स्वाभिलषितं मुहुर्विज्ञाप्यमिति भावः। तेनैव तदधिकारान्ते मदभीष्टं सम्पादयितुं श्रीभगवच्चरणा एव प्रमाणमिति द्योत्यते। न च प्राकृतस्येव तवात्र विस्मृतिः संभाव्येति द्योतयन्नाह एको मुख्यश्चिदेकरसो ज्ञानघनरसमय इत्यर्थः। तथा च अनुजानीहि मां कृष्णेत्यादि अत्र तदस्तु मे नाथेत्यादि श्रीकृष्णवृष्णिकुलपुष्करेत्यन्तानां मूलपद्यानामर्थक्रमानुरोधेन पाठक्रमस्त्यक्तः। तत्र पशुपाङ्गजायेति स्तवोपक्रमरोधेनात्युपयुक्तत्वाभावादेव प्रपञ्च निष्प्रपञ्चोऽपीति श्रीकृष्णवृष्णिकुलपुष्करेति पद्यद्वयार्थो न विवृतः। किंतु एकश्चिदेकरसो नमामीति पदाभ्यामुट्टङ्कित एव। श्रीमद्भागवतश्लोकव्याख्याचातुर्य्यवद्भियाम्। तदैकार्थरसास्वाद दिङ्मात्रमिह दर्शितम् ॥ १७६ ॥

नवतृणाङ्कुराणां आचामेन आस्वादेन उदारो मोदो यस्याः सा रभसेन हर्षेण ॥ १७७ ॥

तदनु कलकोमलगभीरहाङ्कारकलितचलनेङ्गिताङ्गितानुविद्धलघुलघुयष्टिकाघूर्णनेन ससंभ्रमभ्रमणेन मुखविवरविगलद्दूर्वावलीढतृणाङ्कुरनिकरकरम्बितधरणितलं वत्सकुलमनु मनुजाकृति परं ब्रह्म ब्रह्ममोहनानन्तरमनन्तरमणीयरहस्यहस्यमानपरमोपयोगि योगिकुलं पूर्वभोजनस्थलमनुससार ॥ १७८ ॥

सारभूतां मुकुटमणिमिमालोक्य तेऽपि तदनवलोकनवैमनस्यं वैमनस्यऽज्ञसा यदुपजग्मुस्तदपहाय हाय्रनं गतमपि क्षणार्द्धमिव मन्यमाना मानान्तरानधिगम्यमानहिमानमहिमानहारिहारिचरितमुपव्रजन्तो नाऽभोजि भो! जितरिपुसमीकवल! कवल एकोऽपि भवन्तमन्तरेणेति वदन्तो दन्तोज्वलकिरणमञ्जरीजरीजृम्भमाणमधुराधरा धराभरापहारिणं हारिणं तमभित आवव्रुः ॥ १७९ ॥

तदनु दनुजदमनोऽपि मनोऽपिधायिनीं सप्रणयमुवाच वाचमतिमधुरतराम्। एवमेव मे प्रणयलोभवतां भवतां सुचिरमपि मयि हृद्यसौहृद्यसौरभमिति निगदिवा दिताऽदिताखिलताया लतापाशवलयवलयितकराःकराग्रं भगवत आधृत्य एहि चिरारब्धमशनं समापयामो यामोऽशनायाः पारमिति मितिरहितकथामोदेन तेषां जातकौतुकः स दानवनाशनो वनाशनोत्सवपरिसमाप्तिमभिललाप १८०

अथ भोजनरस उपरते परतेजसा तेन दिवसमणेर्ललाटन्तपस्याऽऽतपस्याऽपनोदाय विनोदाय विश्रामेण च क्षणमलसतामवयवानां खेलाखेदं मच्छाय मच्छायललिततरुमूलमालम्बमानो लम्बमानोदारहारः सहचरोरुमूलकृतोपधानो मुहूर्त्तं सुष्वाप सुष्वापतेर्यामिव रमणीयतादेव्याः ॥ १८१ ॥

अथ भगवान्निलयलयनार्थमिव गगनचत्वरत्वरमाणे चरमदिग्वनितानितान्त-

हाङ्कारः परावर्त्तनार्थं तादृशसङ्केतध्वनिस्तेन कलितं कृतं चलनेङ्गितं तस्यापि अङ्गितया अङ्गित्वेन अनुविद्धं लघुलघुयष्टिकाघूर्णनं तेन हेतुना यत् ससंभ्रमं भ्रमणं तेन ॥ १७८ ॥

मानान्तरेण प्रमाणान्तरेण अनधिगम्यमानो न ज्ञायमानो महिमा यस्य तम्। अहिः अघासुरस्तस्य मानहारि ज्ञाननाशकं गर्वहारीति वाऽहारि मुग्धं चरितं यस्य तम्। एकोऽपि कवलेन अभोजि। भो इति संबोधने। समीकं सैन्यम् ॥ १७९ ॥

मनमोऽपिधायिनीं प्रेम्णा आच्छादनकारिणीम्। अयि संबोधने। मयि विषये यत् हृद्यं हृदयप्रियं सौहृदं तस्य सौरभे तद्वदिन्द्रियाह्लादकत्वम्। दितः खण्डितः अखिलतापो येषां ते। अशनायायाः क्षुधायाः। अशनाया बुभुक्षा क्षुदित्यमरः ॥ १८० ॥

दिवसमणेः सूर्यस्य कीदृशस्य परतेजसा ललाटन्तपस्य। असूर्यललाटयोर्दृशितपोरिति खश्। तत्संबन्धिनआतपस्य अपनोदाय निवारणार्थं विश्रामेण हेतुना क्षणं विनोदाय आनन्दार्थम् भोजनदेहक्रिया अलमनया आलस्येन लसतां शोभमानानाम् अङ्गानां खेलाजनितं खेदं प्रच्छाय दूरीकृत्य। छो छेदने। प्रकृष्टा छाया यत्र तथाभूतं तरुमूलम्। सुष्वाप। कीदृशम्। रमणीयतादेव्याः शोभनं स्वापो यस्य धनमिव। पथ्यतिथिवसतिस्वपतेर्ढञिति ढञ्। रमणीयत्वस्य सर्वस्वभूतं तत् शयनमित्यर्थः ॥ १८१ ॥

भगवतो निलये लयनं मश्लेषः प्राप्तिस्तदर्थमिव गभस्तिमालिनि सूर्ये गगनचत्वरात् त्वर-

परभागभागातिशयप्रणयमहिम्नेव तद्वनमालम्बितुमुपक्रान्तेऽपक्रान्ते च सकल-लोकतापतोऽपतोपतया कमलिनीमलिनीभावभावयितरि तरिमिव गगनपारावारपारावारयोः स्वमण्डलीमण्डलीनामिव चिकीर्षति भगवति गभस्तिमालिनि॥१८२॥

वेणुविषाणध्वनिध्वनितदिग्वलया निलयाय निभृतहृदया हृदयाधिनाथेन तेन सह सहचराः सर्व एव सर्वतो वत्सान् समवहारयन्तो रयं तोषस्याऽऽसाद्य व्रजन्तो व्रजं तोयदेन सह नभोदिवसा इव भोगिनस्तस्यैव पूर्णाभोगं भोगं वीक्ष्य सकौतुकमहो ! महोज्वलं नः खेलागह्वरमिदं जातमिति परस्परं गदन्तोऽगदं तोदहरमिव श्रीकृष्णं निधाय पुरः पुरः समीपं समुपसीदन्ति स्म ॥ १८३ ॥

तत्र च मातृस्तनपानोत्सुकतया सत्वराग्रचरणा रणाजिरोदित्वरमहसि महसिद्धिकृति पश्चाद्वर्त्तिनि भगवति विलम्बमानोत्तरचरणा इव सर्वे वत्सा उभयतस्त्वरात्वराभ्यां सहजतोपि मन्थरगतय एव बभूवुः ॥१८४॥

गणेसति श्रीकृष्णसङ्गिनां तेषां सुखमयसमयस्याल्पप्रमाणत्वभानात्सर्वे सहचराः श्रीकृष्णं पुरो निधाय पुरः पुर्य्याः पुरः अग्रदेशस्य समीपमुपसीदन्ति स्मेत्यन्वयः । गभस्तिमालिनि कीदृशे चरमदिगेव वनिता तस्या नितान्तपरभागम् अतिशयशोभां भजते तथाभूतो योऽतिशयप्रणयस्तस्य महिम्ना इव तद्वनं आलम्बितुम् उपक्रान्ते कृतारम्भे ततश्च । सकललोककर्मकात् तापतोऽपक्रान्ते निवृत्ते तद्वनिता विरहसंतप्तेनेव तेन सकललोकतापनात् । ततश्च अपतोपतया स्वकर्तृकत्यागेन गतसन्तोषतया कमलिन्या मलिनीभावस्य भावयितरि उत्पादके । किञ्च स्वमण्डली निजबिम्बम् अण्डलीनां ब्रह्माण्डकटाहलग्नमिव चिकीर्षति स्वमण्डलीं कीदृशीम् गगनमेव पारावारः समुद्रस्तस्य पारावारयोः परावरतटयोर्गमनार्थं तरिमिव नौकामिव । श्लेषेण स्वमण्डलीं स्वगोष्ठीं तथाभूतां चिकीर्षति । तद्वनितास्थानमेकाकित्वेनैवजिगमिषयेति भावः १८२

रयं वेगं तोषस्य संतुष्टेः। आसाद्य प्राप्य व्रजं गोष्ठं नभसः श्रावणस्य दिवसा इवेति तदविनाभावित्वं ध्वनितम् । भोगिनः सर्पस्य तस्यैव अघासुरस्य भोगं शरीरम् भोगं शरीरमिति भागवृत्तिः । पूर्णाभोगं पूर्णविस्तारम् । अगदम् औषधम् । तोदहरं व्यथाहरम् ॥ १८३ ॥

तत्र च समुपसादनक्रियायाम् सर्वे वत्सा उभयतः अग्रतः पृष्ठतश्च क्रमेण त्वरा अत्वरा च ताभ्याम् तत्र त्वरायां हेतुः मातृस्तनेति अत्वरायां हेतुः पश्चाद्वर्त्तिनि भगवतीति । कीदृशे रणाजिरे युद्धाङ्गने उदित्वरम् उदयशीलं महस्तेजो यस्य तस्मिन् स्वजीवनरक्षके प्रेमसमुचितमेवेति भावः । महसिद्धिकृति उत्सवसंपादके इति तत्र प्रेम्णि तादृशबुद्धिपूर्वककृतत्वशङ्कापि निरस्ता । सहजतोपि मन्थरगत इतित्वरातोप्यत्वराया आधिक्यं बोधयति । तेन च स्वात्मदेहादितोपि तेषां श्रीकृष्णे प्रेमाधिक्यं द्योत्यते इति ॥१८४॥

१ पुर इतिपाठो मूले त्रि.।यद्वा । व्याख्याने तृतीयं पुर इति पदं समुपसीदन्तीति समुप सर्गस्यार्थः ।
२ आभोगःपरि पूर्णतेत्यमरः ।

प्रविष्टे च व्रजपुरं व्रजपुरन्दरनन्दने कलमधुरमुरलीरवमधुभिः कुर्वति सकललोकश्रुतिसेचनकमसेचनकमधुरिमणि रचयति समस्तजननीवनागमनमिव स्नेहभरनिर्भरनिर्भुग्नहृदयाभ्यां तन्मुरलीनादगुणे नादगुणेनाकृष्टाभ्यां पितृभ्यां प्रतोलीतलमुपसेदे ॥१८५॥

तदनु दनुजदमनसहचराश्चराचरगुरोस्तस्यैव वत्सरान्तरकृतं कृतं तदद्यतनमिव जानन्तोऽनन्तोत्तमसन्तोषतः स्वस्वजननीजननीरजस्क्रियमाणवपुषः सन्तोनिजगदुः ॥१८६॥

जननि ! जननितान्तविस्मापकं स्मापकंचास्माकमतिसाहसपुष्करं दुष्करं दुरासदं रासदं कर्म कृतवान् । अस्मानपि विषमविष-महानलदग्धानविदग्धानविलम्बे नैव जीवयामास च । स चतुरशिरोमणिरिति वत्सर—क्षणा वत्सरक्षणाहितलक्षणाः शिशवः सर्वमेवाऽऽनुपूर्व्या कथयांबभूवुः ॥१८७॥

अथ घोषराजो राजोचितपरिच्छेदकरैः परिचारकनिकरैः करैकदिश्यमानैरुपचरितं चारुचरितं चाऽरुणाक्षं प्रभूतनयं तनयं स्नानपानाहारादिभिरपसारितखेदं खेदन्दह्यमानस्य खरकिरणस्य किरणस्यन्दः कथमनेनसाऽनेन साधुनाऽधुना शिरीषकोमलवपुषा सह्यत इति जनन्याऽनन्यातिशयवत्सलया करतलेनाऽमृश्यमान सकलाङ्गं विश्रामाय नियोजयामास ॥१८८॥

गतवति भवनमध्यमध्यवसायसहस्रैरप्यनधिगम्यभावलीलेऽवलीलेहितयोगी-

---

श्रुतिसेचनकमिति स्वार्थे कः । असेचनकं परमानन्दकारी मधुरिमा यस्य तस्मिन् । तदसेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात् इत्यमरः । तत्र दर्शनादित्युपलक्षणमनुभवस्यापि तथा दीर्घादित्यं च क्वचिदिति तट्टीकाकृतः । प्रतोली रथ्या । रथ्या प्रतोली विशिखा इत्यमरः॥१८५॥ वत्सरान्तरे कृतं तत्कर्म अघासुरवधलक्षणम् ॥१८६॥

स्मापकं च मन्दहास्यजनकं च । अतिसाहसेन पुष्करं पुष्कलं । रलयोरैक्यात् । रासो विनोदः । वत्सरः क्षणवचेषां ते वत्सरक्षणाः । वत्सानां रक्षणे आहितलक्षणा निपुणाः । गुणैः प्रतीते तु कृतलक्षणाहितलक्षणावित्यमरः । अत्र एषु मातृभिः स्वस्तनादिव्यत्सापस्य प्रश्नः तास्वेभिरपि प्रत्युत्तरेण तदनुमोदनं श्रीभगवत्प्रभावेण पूर्वस्वरूपेष्वपि निजतयैषां स्फूर्त्तिरिति ज्ञेयम् ।८७

करैकेण दक्षिणकरेण एतदेतदेवमेवं क्रियतामिति स्वयमभिनयेन दिश्यमानैः आज्ञाप्यमानैः दन्दह्यमानस्य अतिशयेन दाहकस्य खरकिरणस्य सूर्य्यस्य किरणस्यन्दः रश्मिभागपातः एनः पापम् अनेनसा अपराहितेन । वस्तुतस्तु पञ्चम्यन्यपदार्थबहुव्रीहिणा अघहन्त्र्या जनन्या कर्त्र्या करतलेनाऽऽमृश्यमानानि सकलान्यङ्गानि यस्य तम् । कीदृश्या न विद्यते अन्यस्याम् अतिशयो यस्याः साधाभूना चासौ वत्सला चेति तया ॥१८८॥

कर्तृत्वे भवतीत्येव ईहितं कृतं योगीन्द्रवृन्दैरपि दुष्करं कारणं कर्म ब्रह्ममोहनादिलक्षणं

न्द्रवृन्ददुष्करकरणे भगवति व्रजपुरन्दरोऽदरोत्साहसाहसिक्यवशो महिष्यासमं मन्त्रयामास ॥ १८९ ॥

अयि श्रीकृष्णजननि ! परिचारकादिपरिच्छद इव कृष्णस्य पृथगावासोऽपि कारयितुमर्हः। सहसा हसन्ती साऽऽहसन्तीह कति दिवसा अस्य जातस्य । नाऽधुनाऽनेन धुनानेन सकलाङ्कतापं शून्योत्सङ्गया मया भवितुं शक्यते ॥१९०॥

स चोवाच वाचमतिकोमलाममलामयि ! नजानासिनासिविज्ञाऽविज्ञानामिदमपि किंचिदभिमानसुखम् । यदपत्ये जातमात्र एव तद्वैभवभवनाय प्रमोदन्ते संपन्ना हि पितरः। सुखविशेष एवाऽयं कथमत्र शून्योत्सङ्गया भवितव्यं भवत्येति स्मितपूर्वं तूष्णीकया तया कृतानुमोदनो मोदनोनुद्यमानमानसस्तदपरेद्युरारभ्य कृष्णार्थं पृथगेवात्मपुरसदृशमात्मपुरलग्नमेव पुरं कारयामास ॥ १९२ ॥

इत्यानन्दवृन्दावने कौमारलीलालताविस्तारे वत्सक वकाघासुरवधपुलिनभोजन-ब्रह्ममोहनो नाम सप्तमः स्तवकः ॥ ७ ॥

---

येन तस्मिन् अदरेण अनल्पेन उत्साहेन साहसिक्यं सहसा प्रवर्त्तनं तद्वशः ॥१८९॥

सा यशोदा आह । कीदृशी । सहसा हसन्ती । प्रश्नस्यात्यन्तायोग्यत्वमननेन कृतहासा। अस्य कृष्णस्य जातस्य सतः कति दिवसाः सन्ति ते स्वयं गण्यन्तामित्यपेक्षितस्य शेषस्यानुक्तिरपर्य्यालोचितचिकीर्षिते त्वयि किं प्रत्युत्तरयितव्यमिति व्यज्यमानार्थपोषिका । अनेन श्रीकृष्णेन अधुना इदानीमेव । धुनानेन दूरीकुर्वता । शून्योत्सङ्गया शून्यक्रोडया ॥ १९० ॥

सम्पन्ना धनादिमन्तः। तूष्णीकया मौनवत्या कृतानुमोदन इति "मौनं सम्मतिलक्षण" मित्युक्तेः। मोदेन नोनुद्यमानम् अतिशयेन प्रेर्य्यमाणं मानसं यस्य सः ॥१९१॥

इत्यानन्दवृन्दावने टीकायां सुखवर्त्तिन्यां सप्तमस्तवकसङ्गमनम् ॥७॥

## अष्टमःस्तवकः ।

अथ कौमारलीलां तिरोधाप्य क्रमानुरोधाप्य[1]क्रमानुत्तमवयोऽवस्थावस्थानस्वीकारेणाविर्भावितपौगण्डो गण्डोड्डमरतारतामन्दहसितासवः स वने विस्मृतधूलिखेलोऽलिखेलोड्डमरकुसुमकन्दुकखेलापरोऽपरोक्षघनरसो रसोत्सवकरोऽघकरोज्झितनिखिलगुणैः सह सहचरैर्वत्सरक्षणक्षणमपहाय हायनातीतो धेनुपालनलीलालीलावण्यमुरीचकार ॥ १ ॥

एवमस्य पौगण्डे वयसि कैशोरप्रागभाव इव क्रमविरलायमाणतारल्यतया प्रथमारब्धगाम्भीर्य्यस्वाध्यायमिव गमनं । शैशवदशासहचरीविरहेण मलिनमुखीभावमनुसरन्तीव लोमलतिका । क्व गतमस्य बालचापल्यमिति सुहृद्वृच्छेदेनैव क्रमक्षीयमाणमवलम्बम् । क्व गतमस्य शैशवतारल्यमिति तदनुसन्धानधुरन्धरतयेव चापल्यमभ्यस्यन्ती इव नयनकमले ॥ २ ॥

सुकविकाव्यमिव अस्थानस्थपदादिदूषणरहितमुदितम् ॥ ३ ॥

किंबहुना अधिमधुदिनमनुपर्वकर्बुरितनवाङ्कुरकन्दलदलद्रामणीयकनवतमालकदम्बविडम्बकम् ॥ ४ ॥

---

अथ पौगण्डकैशोरलीलेयुगपदुद्गते । कृष्णस्य गुरुभिः कान्तावर्गैरास्वादिते क्रमात् ॥
पूर्वरागो व्रजस्त्रीणां कृष्णजन्मतिथौ महान् । उत्सवः कन्दुकक्रीडा धेनुकस्य वधोऽष्टमे ॥

क्रमानुरोधेन आप्यः प्राप्यो यः क्रमः परिपाटी । क्रमः शक्तौ परीपाट्यमिति विश्वः । तेनानुत्तमाया अत्युत्तमाया वयोवस्थाया अवस्थिति स्वीकारेण आविर्भावितं पौगण्डं येन सः । गण्डयोः कपोलयोरुड्डमरता उन्नतिस्तस्याम् आरतम् अमन्दहसितमेव आसवो मधु यत्र सः । श्रीकृष्णः अलीनां भ्रमराणां खेलया उड्डमरैरुन्नतैः कुसुमैरेव कन्दुकं तत्खेलापरः । रसायाः पृथिव्या उत्सवकरः । अघकरोमालिन्यम् । हायनातीतः हायनान् सम्वत्सरपरिवत्सरेदावत्सरानुवत्सरवत्सरान् पञ्चअतीतः षड्वत्सरवयाः । ऐश्वर्य्यपक्षेऽपि कालातीतः । लीलानामाली श्रेणी तस्या लावण्यम् ॥ १ ॥

बालचापल्यं बालैः सह चापल्यं धावनकूर्दनाद्युपयोगि ॥ २ ॥

पदादीत्यादिशब्दात् पदैकदेशः । उदितं वाक्यम् ॥ ३ ॥

तदा तस्य तदपि वपुरपूर्वमिवासीदित्यन्वयः । कीदृशम् अधिमधुदिनं वसन्तदिवसेषु अनुपर्वे पर्वणिपर्वणि प्रतिग्रन्थि इत्यर्थः । कर्बुरितैः किर्मिरायितैर्नवाङ्कुरकन्दलैर्दलत् प्रस्फुटत् रामणीयकं रमणीयत्वंयस्य तथाभूतस्य नवतमालकदम्बस्य विडम्बकं स्वरोमावल्यादुद्गमशोभया तिरस्कारकम् ॥४॥

---

१ सवने इतिस्थाने सवत्र: इति पाठः।

भत्यङ्गरङ्गितरङ्गितविशेषमाधुरीधुरीणमन्तरुत्पद्यमानमधुपरागमधुपरागभागभिनवकुड्मलीभावभावाहितं कुसुममिव ॥ ५ ॥

अपाकानिष्कषायमृदुमधुरलुलितं श्यामलतालतायाःकिमपि फलमिव ॥ ६ ॥

स्वयमेवरत्नान्तरेण परिवर्त्तित-विशिष्ट-रत्नान्तरायमाणैरिवलावण्यविशेषैरुपचीयमानम् ॥ ७ ॥

मदमुदितमातङ्गकुलमिव स दानवापीनवक्षोभं वक्षोभङ्गिमसङ्गिमधुरिमां स मांसलताभ्यां तदप्यन्यदिव प्रतिभासमानमसमानमञ्जुलमखिललोकलोचनचमत्कारकारणं वपुरपूर्वमिव तदा तदासीत् ॥ ८ ॥

एवमवसरे । भगवदुपमासपत्ना मासपक्षानन्तरं भगवदवतारस्य या अनुधरणि धरणिधरेन्द्रदुहितृसुन्दरतादरताकारिण्यो भगवतः प्रियतमा वर्त्तमानाः त-

प्रत्यङ्गम् अङ्गस्याङ्गस्यरङ्गी रङ्गसूचको यस्तरङ्गितविशेषस्तेन या माधुरी तस्या धुरीणं वहनसमर्थम् तरङ्गितेति क्यङर्थक्विबन्ताद्भावे निष्ठा । पौगण्डभाकृत्वेऽपि । अन्तर्गतकैशोरधर्मसूचकत्वे दृष्टान्तः । अन्तरुत्पद्यमानाभ्यां मधुपरागाभ्यां मकरन्दधूलिभ्यां मधुपस्य भ्रमरस्य रागं भजते तथाभूतं च अभिनवस्य कुड्मलीभावस्य भा कान्तिस्तत्राऽऽवहितं सावधानम् । दार्ष्टान्तिकपक्षे मधुरमणाभिलासः परागस्तदुचितैर्धीरललितोपयोगिनी चेष्टा । मधुपोऽत्रानङ्गः । उत्पद्यमानेति वर्त्तमानकालत्वं क्षणक्षणवृद्धिसूचकम् ॥५॥

नन्वु तथापि प्रकटपौगण्डमात्रकत्वे तस्य कथं शृङ्गारित्वेन सौरस्यं तत्राह । अपाकम् अप्राप्तपाकम् । किंच । निष्कषायं कषायदशामतिक्रान्तम् मृदु कोमलम् मधुरं सुस्वादु—लुलितं क्षोभ्यं किमप्यनिर्वाच्यं फलमिति । तेन प्रथमपौगण्डेऽप्यस्यातितेजस्वित्वात् पौगण्डशेष प्राप्तमिव प्रथमकैशोरं स्पृष्टवदिव वपुरभूदित्यर्थः । ६ तदेव स्पष्टयति । रत्नान्तरेण बाल्यसंबन्धिलावण्येन परिवर्त्तितं विशिष्टरत्नान्तरं कैशोरवर्त्तिलावण्यं तद्वदाचरद्भिः ॥७॥

दानवाप्या सूचितो योनवः क्षोभस्तेन सह वर्त्तमानम् । वापी तु दीर्घिकेत्यमरः । पक्षे सदा नवा नवीना आपीनस्य वक्षसो भा यत्र तत् । वक्षसि भङ्गिमसङ्गी लम्पटत्वासङ्गकोपो मधुरिमा अंशयोः स्कन्धयोः मांसलता च ताभ्याम् । भङ्गो धूम्याटपिङ्गयोरिति विश्वः । भङ्गस्य भावो भङ्गिमा पिङ्गत्वम् ॥ ८ ॥

भगवदुपमानां नीलमणिमेघनीलोत्पलादीनां सपत्नाः कनकविद्युच्चम्पकादयो रूपकाद्यर्थे वर्तन्ते यासु ताः धरणिधरेन्द्रदुहितुः पार्वत्या अपिसुन्दरतायाः सौन्दर्य्यस्य दरताकारिण्यः अल्प-

---

१ किमप्यनिर्वचनीयमूर्त्तिमन्मोहकपदार्थइवेत्यर्थः ।

२ भाव-प्रेम-प्रणय-मान-रागाऽनुराग महाभावेतिसप्तमकक्षामारूढारतेः परिपाकरूपाएताइत्यर्थः।

३ धीरललितलक्षणन्तु । विदग्धो नवतारुण्यः परिहासविशारदः । निश्चिन्तो धीरललितः स्यात्प्रायः प्रेयसीवश इति। ४।प्रभुश्रीकृष्णचन्द्रे मदनपतो मोहकत्वान्तरांकश्चित्तर्कोपकारइति ॥

स्यैव नित्यसाङ्गित्वेऽङ्गित्वे च प्रथमरसस्य रसस्यन्दरूपा अवतेरुः ॥ ९ ॥

तासामपि कौमारापगमे ऋजूभूय वार्द्धिता मञ्जरीव तिरश्चीना दृष्टिः । हेमन्तदिनमिव क्रमहीयमानं हसितम् । काव्यगुणविशेष इव वाक्यार्थेपि पदमात्रप्रयोगो व्याहारः । वलीकप्रान्तनिःस्यन्दी निर्दिष्टजलधरजलविन्दुसन्दोह इव क्रममन्दमन्द श्चरणविहारः ॥१०॥

दीनलब्धमहारत्नमिव जनलोकनसङ्कोचाच्छन्नं वक्षः । अर्घपात्रमिव अवगुण्ठनमुद्रयाऽवगुण्ठितमुत्तमाङ्गम् अन्तर्वर्त्तिरत्नशलाकं मृणालशकलमिव कौमारापगमेन निष्कृष्टमपि कयापि देवतयेव जुष्टं मानसम् । कौमारपरिचितानपरिचितानिव विषयान् कुर्वाणं ज्ञानम् ॥११॥

आरुण्यं करतलयोः । पीयूषरश्मिता वदनविम्बे । अङ्गारकता अनङ्गे । सौम्यता दृङ्निपाते । गुरुता श्रोणौ । काव्यता वचने । शनैश्चरता चरणयोः । तमस्ता

ताकारिण्यः प्रियतमाः श्रीराधिकायाः तस्यैव भगवतो नित्यसङ्गित्वे यतमानाः क्रियमाणयत्नाः प्रथमरसस्य शृङ्गारस्य अङ्गित्वे मुख्यत्वे निमित्तेच यतमानाः तासां तादृशीश्चेष्टा विना तस्य मुख्यत्वमेव महात्मभिरनादृतं स्यादिति । यथोक्तम् । हरिरेष न चेदवातरिष्यन्मथुरायां मधुराक्षी राधिका च । अभविष्यदियं वृथा विसृष्टिर्मकराङ्कस्तुविशेषतस्तदात्रेति ॥९॥

काव्यगुणेति तथा चोक्तम् । पदार्थे वाक्यवचनवाक्यार्थे च पदाभिधेति पदमात्रेति न तु बाल्यवदिदानीमपि वचनप्राचुर्य्यमित्यर्थः । यथा सुन्दरि ! कमवलोकसे इति सख्या पृष्ट सुस्निग्धनीरदं सस्पृहमीक्षमाणा काचित्तां प्रत्याह आसेचनकमिति । तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनादित्यमरः । एवमेव वाक्यार्थेषु अभिसारिका काकुद इत्यादिपदमात्रप्रयोगो ज्ञेयः । वलीकं छदिः प्रान्तदेशः तस्यापि प्रान्तात् निःस्यन्दी क्षरणशीलः । निर्दिष्टो वृष्टिं कृत्वा विरतो जलधरो मेघो यस्य तथाभूतो जलविन्दुसमूह इव ॥१०॥

जनलोकनसंकोचेनैवाच्छन्नं न तु नवाच्छन्नमपि कर्त्तुं शक्यत इति भावः । तथात्वे आत्मनो युवतित्वख्यापने लज्जापातात् उत्तमाङ्गं शिरः अन्तर्वर्त्तिनी रत्नशलाका यस्य तथाभूतं मृणालखण्डमिव मानसमिति मनसोत्राल्यसूचकं सारल्यं प्रकटं लक्ष्यमाणमपि यौवनस्पर्शेनाऽसारल्यगर्भजातमित्यर्थः । कौमारस्य अपगमे विरामे विपर्येण निष्कृष्टमपि निष्कर्षमप्राप्तमपि सन्दिग्धमपीति यावत् । कयापि कामोन्मादाङ्कुररूपया कौमारे परिचितान् रथ्याधूलिक्रीडितादीन् विषयान् अपरिचितानिव कुर्वाणं ज्ञानम् ॥११॥

अनुभावशोभासंपत्तिं वर्णयित्वा तात्कालिकीं मङ्गशोभासमृद्धिमपि वर्णयति । आरुण्यं रक्तिमापक्षे अरुणः सूर्य्यस्तस्यभाव आरुण्यम् । पीयूषममृतं तदिव सुरसा रश्मयो यत्र तत्ता । पक्षे पीयूषरश्मिश्चन्द्रः । अङ्गानि इयर्त्ति प्राप्नोतीति । चटुगताविस्फुरणाण्वचुडि अङ्गारकः । पक्षे मङ्गलग्रहः । सौम्यो बुधे मनोज्ञे स्यादनुग्रे सोमदैवते इति विश्वः । शनैः शनैश्चलत इति शनैश्चरौ

१ यथा मञ्जरी ऋजूभूय वर्द्धिता सती अग्रभागे वक्राभवति तथातासां दृष्टिरित्यर्थः

२ विदग्धमाधव नाम नाटके

केशपाशे। केतुत्वं गुणगणेष्विति नवैव ग्रहा आश्रयमिव चक्रुः ॥१२॥

किंच। चरणचाञ्चल्यं नयनेन। मध्यगौरवं श्रोणीभारेण। ज्ञानतानवमुदरेण। वचनचातुर्य्यं माधुर्य्येण हृतमिति शैशवाधिकारे नश्यति सत्यङ्गादीनां परगुणविशेषलुण्ठाकतासीत् ॥ १३ ॥

किंच। अणिमा मध्यमे। महिमा श्रोणिभारे। लघिमा वचसि। प्राप्तिरपत्रपायाम्। कामावसायिता मनसि। ईशिता लावण्ये। वशिता नयनकोणयोः। प्राकाम्यं माधुर्य्ये इति सिद्धयोऽपि तदा तासु प्रादुरासन् ॥१४॥

येनखलु सुरभीकृतमिव व्रजनगरम्। रञ्जितमिव सकलमेवभुवनम्। संपादितमिव कुसुमधनुषो जनुषः साफल्यम्। शोधित इव शृङ्गाराख्यो रसः। मार्जिता इव सर्वे भावाः। सरसीकृतमिव लीलाविलसितं श्रीकृष्णस्य। कृतार्थी कृतमिव कविकुलवाङ्निर्माणम् ॥ १५ ॥

येन च तासामपि उत्कलिका उत्कलिका मनोभूर्मनोभूः। मनोरथो मनोरथोरतिरतिद्राघीयसी। त्रपाऽत्र पारशून्या। साध्वसंकोचमुच्चैररतिररतिग्मा अनुत्साहोऽनुत्साहो वैमनस्यं च मनस्यन्दुकप्रायम् ॥१६॥

चरणौ। पक्षे शनैश्चरो मन्दः। तमोऽन्धकारो राहुश्च। केतुः पताका तन्नामा ग्रहश्च। अत्राङ्गपक्षे तमस्ता केतुत्वमित्येतद्द्वयम् आचारार्थकक्किवन्तोत्तरकर्तृवाचकाक्विभावप्रत्ययेन सिद्धम्। अत एव केतुत्वमित्यत्र द्वितकारकसंयोगोस्तुका अनचिचेति द्वित्वेन च यद्वा भवति हि ताद्धर्म्यात्ताच्छब्द्यमिति लक्षणयैव स्येत्स्यति अलमेतावता कष्टेनेति ॥ १२ ॥

तानवं कृशता ॥ १३ ॥

अणोर्भाव अणिमा कार्श्यम्। महतो भावो महिमा स्थौल्यम्। लघिमा अल्पता। कामा वसायिता कन्दर्पव्यवसाय.। ईशिता ऐश्वर्य्यम्। वशिता वशीकरणम्। प्राकाम्यं परिपूर्णता ॥१४॥

येनेत्यादिना तासां स कोपि हृद्विकारः समजनीत्यनेनान्वयः ॥ १५ ॥

उत्कलिका उत्कण्ठा। कीदृशी उद्गताकलिकैव यस्यास्तथाभूता अवहिः प्रकाशितगुणेत्यर्थः। मनोभूः कन्दर्पः। कीदृशः। मनोभूर्मनस्येवभवति न वहिःप्रकाशितव्यापार इत्यर्थः। मनोरथः श्यामसुन्दरेण सह रंस्यामहे इत्येवंलक्षणः। मन एव रथोऽधिकरणं यस्यसः। अत्र त्रपा लज्जा। साध्वसं जनशङ्का साधुयथा स्यात्तथा न विद्यते संकोचोऽल्पता यस्य तत् परिपूर्णमेवेत्यर्थः। अरतिः अनिर्वृतिः। अरं द्रुतं तिग्मा तीक्ष्णा। अनुत्साहः कथंभूतः नुदं खण्डनं न सहत इति दुश्चिकित्स्य इत्यर्थः। असूर्य्यम्पश्या इतिवत्। यद्वा। ननुउत्साहोऽनुत्साह इति नञा पश्चात्संबन्धः। वैमनस्यं दुर्मनस्कता वै निश्चितं मनसि अन्दुकप्रायम्। अन्दुको निगडोऽस्त्रियामित्यमरः ॥ १६ ॥

१ येन विकारस्य विकसितपुष्पत्वमारोपितम्। तथाच विकारजन्याद्भुतलीलादिमत्वादस्य वैकुण्ठादेः प्रकाशादधिकमेव सुरभित्वमित्यर्थः।

यश्च षष्टिकशालिरिव अन्तरे परिपाकं व्रजन्नपि न बहिर्विकाशी । परिजनैरनुयोज्यमानोऽपि निह्नूयमानः ॥ १७ ॥

रस इव अशब्दवाच्यः । मुख्यार्थ इव कदापि न लक्ष्यः । निरूढलक्ष्यार्थ इव अव्यङ्ग्यः ॥ १८ ॥

अन्तर्विघूर्णमानोऽपि सुस्थिरः । उद्वेगजनकोऽप्यनुद्वेगः । सन्निपातज्वर इव अस्थिसन्ध्यादिविमर्दकरः सततं तृष्णाजनकश्च । तासां स कोऽपि हृद्विकारः । समजनि ॥ १९ ॥

यस्तु अविपक्वमरसभावितं तासामन्तरं वंशमिव घुणः संततमेव निकृन्तति २०

तस्मिन् सति । लवलीफलपाण्डुरं कपोलतलम् । आतपशुष्यमाणकिसलयमिवौष्ठाधरम् । सावश्यायनीलनलिनदलमिव नयनयुगलम् । निदाघदिनमिव दीर्घोष्णं श्वसितम् । अज्ञजनहृदयमिव अन्तः शून्यमवलोकनम् । आत्मारामप्रस्थानमिव उद्देश्यशून्यं पदविहरणम् । ग्रहग्रस्तदशापन्नजनचरितमिव अनवस्थितं वचनम् । निर्विण्णजनशीलमिव गृहादिकार्य्यपराङ्मुखं अविपक्व व्यवसितमितिस्थिते ॥ २१ ॥

---

षष्टिकशालिः शाठीति ख्यातं धान्यम् अनुयोज्यमानः पृच्छयमानः । प्रश्नोऽनुयोगः पृच्छा चेत्यमरः ॥ १७ ॥

अशब्दवाच्यः शब्देनाभिधातुमशक्यः रसस्यानुभवैकगोचरत्वात् । तथात्वे च रसतैव स्यात् दूषणं च । यथोक्तम् व्यभिचारिरसस्थायिभावनां शब्दवाच्यतेति । पक्षे तद्वाचकशब्दस्ताभिर्न प्रयुज्यते मुख्यार्थः सङ्केतितः । यथा गङ्गादिशब्दानां प्रवाहादिलक्षणोऽर्थः कदापि न लक्ष्यः लक्षणावृत्तिगम्यो न भवति । पक्षे अन्यैर्दुस्तर्क्य : । अव्यङ्ग्यः न विद्यते व्यङ्गं यत्र सः । कुशलो मण्डप इत्यादौ पक्षे ताभिर्व्यञ्जनयाऽपि न प्राकाश्यः ॥ १८ ॥

न विद्यते नुत् खण्डनं यस्य तथाभूतो वेगो यस्य सः अनुद्वेगः अखण्डवेग इत्यर्थः । तृष्णा पिपासा संभोगेच्छा च ॥ १९ ॥

यस्तु इति । तुकारः पूर्वतो भिन्निक्रमार्थः । तादृशमन्तरं प्रति तस्य घुणसाधर्म्यं तु स्वरूपलक्षणमिति ज्ञापनाय ॥ २० ॥

अवश्यायो नीहारः । दीर्घञ्च तत् उष्णं चेति दीर्घोष्णम् । उद्देश्यशून्यं गन्तव्यदेशनिश्चयाभावात् संस्कारवशेनेत्यर्थः । एवमत्र लालसोद्वेगजागर्य्यास्तानवं जडिमाऽत्र तु । वैयग्र्यं व्याधिरुन्मादो मोहे । मृत्युर्दशा दशेति पूर्वरागोक्ता दशाः । अप्युक्तेषु यथायोगं सूचिता विविच्य ज्ञेयाः । यथान्तर्विघूर्णेत्यत्र लालसा उद्वेगजनक इति उद्वेगः सन्निपातेति व्याधिः लवलीफलेति पुनर्व्याधिः । आतपेति मोहः सावश्यायेति जागर्य्या निदाघेति व्याधिः अज्ञजनेति जडिमा आत्मारामेत्युद्वेगः ग्रहग्रस्तेत्युन्मादः निर्विण्णजनेति तानवम् अविपक्वेति मृतेरुदर्कताज्ञापनम् २१

सहजवर्त्ती जवर्त्तीयो गृहादिषु तासां भगवति भावो भावोध्यतया नव इव लक्ष्यमाणो वक्ष्यमाणो यदा नाऽभूत् ॥ २२ ॥

तदादुः सहचर्य्यो दुःसहचर्य्योपचारसंचारसमये तत्तद्धृदयज्ञतया ज्ञतया च तमवगम्याऽपि विशेषावगतये गतयेव धिया श्रीकृष्णस्य तनुमहसः सादृश्यंदृश्यं वहन्ति नवेन्द्रमणिमयालङ्करणान्यथाभावकारीणि सुरञ्जनान्यञ्जनान्यवतंसीकरणार्थमानीतान्यामोदितकुवलयानि कुवलयानि पूरतः समानीय ॥ २३ ॥

प्रियसख्यः पश्यत श्यत नयनयोरनयोरसारस्यं रस्यं कृष्णरुचिरुचिरं नेपथ्यं पथ्यं गौरेष्वङ्गेषु भवतीनामिति यदूचिरेऽचिरेण तदा तानि कृष्णाङ्गवर्णसदृशानिवृशा निभाल्य कृष्णनामचरितं नाम चरितं श्रुतिपथे समनुभूय भूयस्त्वेन विपुलपुलकान्यङ्गानि धौतकज्जलानि जलानि वहन्तीर्दृशः वहिरिव निःसरन्ति श्वसितानि श्वासितानि च धारयमाणासु रयमाणासु च कामपि दशां कामपि कापि सहचरी चरीकरीति स्म मणयपरिहासमिव ॥ २४ ॥

आःकष्टमालि ! मालिन्यं हृदि मे जातम् । यदिदमञ्जनमीक्षितमेव ते नयनजलं जलजङ्घालतास्तिमितमकरोत् । इदमपि पुरन्दरमणीन्द्राभरणमपि नद्धमेव वि

यदि तासां भगवति भावो भगवन्निष्ठो भावः । वक्ष्यमाणो नाभूत् मनोमध्य एवायमस्माभिर्निह्नवनीयः कथमपि सखीभ्योपि न वक्तव्य इति निश्चितोऽभूदित्यर्थः । कथंभूतो भाव गृहादिषु जवर्त्तीयः जवेन वेगेन ऋतीया घृणा यस्मात् । न चायमागन्तुकः किंतु सहजवर्त्ती स्वाभाविकः तथापि भा कान्तिः तया बोध्यतया ज्ञेयत्वेन नवो नवीन इव लक्ष्यमाणः २२।

तदा सहचर्य्यः नवेन्द्रमणिमयालङ्करणादीनि पुरतः समानीय अदुरित्यन्वयः । कदा दुःसहाया असह्यायाः च-र्यायाः पूर्वरागजन्यायाः स्थितेर्य उपचारस्तस्य संचारसमये ज्ञतया विदग्धतय तं कृष्णनिष्ठं भावं ताभिरप्रकाशितमपि अवगम्यापि सामान्याकारेण ज्ञात्वापि तस्य विशेषस्य अवगतये गतया प्राप्तया इव धिया । तानि सर्वाणि कीदृशानि कृष्णस्याङ्गकान्तेर्दृश्यं वहन्ति अलं अतिशयेन करणानां नेत्रत्वगादीन्द्रियाणाम् अन्यथाभावकारीणि अश्रुरोमाञ्चादिमत्त्वकारीणि आमोदितकुवलयानि सुवासितभूमण्डलानि कुवलयानि नीलोत्पलानि ॥२३॥

असारस्यं ताप श्यात दूरीकुरुत । शो तनूकरणे इत्यस्यरूपम् रस्यं रसार्हं नेपथ्यं भूषणम् नाम प्राकाश्ये श्रुतिपथे कृष्णनामचरितं चलितं प्रविष्टमित्यर्थः अनुभूय आस्वाद्य कामपि दशा रयमाणासु प्राप्नुवतीषु जलानि वहन्तीर्दृशो दर्शीर्वहिर्निःसरन्ति श्वसितानि इव वहिर्गच्छत प्राणानिव श्वासितानि श्वासान् धारयमाणासु तासु मध्ये कामपि मुख्याम् चरीकरीतीति यङ्लुगन्तपदम् ॥२४॥

ईक्षितमेव सत् अञ्जनं कर्तृ जलेन जङ्घालतया अतिवेगेन स्तिमितम् आर्द्रितम् जङ्घालोऽतिजव इत्यमरः । अपिनद्धम् अपरिहितमेव सत् । गन्धवहां नासां गन्धवहा दूरादेव ईषद्गन्ध

१ दुःसहवेदनयाः प्रतीकारसञ्चार समये ।

पुलपुलकमयीं चकार वपुर्यष्टिम् । इदमपीन्दीवरजालमनाघ्रातमेव स्फीतसरसमिव गन्धवहं गन्धवहं संपादयामासानयनादौ कृतानि पुनः किं करिष्यन्तीमा नीतिं ॥ २५ ॥

मानीतिपरोऽयं सखि स खिद्यति खिद्यति ॥ २६ ॥

तदिह तत्त्वं तत्त्वं कथय किमेषामेव शक्तिविशेषः किं भवतीनामेव मनसः कोऽपि विकार इति स्थिते सर्वासामेवाऽनुरागिणीनामूढानूढानां सर्वा एव सहचर्य्यः परमगुणोत्तराः ॥ २७ ॥

यासां निन्दितकमलाचरणानि चरणानि ॥ २८ ॥

विहतशोभारम्भारम्भा ऊरवः । कामसिंहासनहासनकारीणि श्रोणिविम्बानि । धिक्कृतडमरुमध्यानिमध्यानि । यासां च कुचकोरकैरपि कृतानि सौन्दर्य्येषु विफलानि फलानि दाडिमीलतानाम् ॥ २९ ॥

दशनवसनैरपहृतशोणिमसौरभ्यादवन्धुजीवानि वन्धुजीवानि जातानि । द-

वहन्तीं सतीं स्फीता फुल्ला च सौ सरसा चेति तथाभूतां संपादयामास । अत्र नासाफुल्लवनासाभ्रो कृष्णाङ्गगन्धसाक्षात्यनुभवेन जातौ ॥२५॥

अयं सर्वोजनः मा नीतिपरो न नीतिज्ञः । हे सखि ! स प्रसिद्धो महल्लण इत्यर्थः । खिद्यतिखेदं प्राप्नोति । हे खिद्यति ! खित्संपदादिक्पि खिदः तां यातां गच्छन्ती प्राप्नुवती तस्याः संबोधने हे खियति ॥२६॥

तत् तस्मादि ह तत् प्रसिद्धं तत्त्वं त्वं कथय । ऊढानां गोपैर्न्यूढानां श्रीराधाचन्द्रावल्यादीनां अनूढानां धन्यादिकन्यानां सर्वा एव सहचर्य्यस्तासां भावपरीक्षणे क्षणवशाः कौतुकवशा वभूवुरित्यन्वयः ॥२७॥

निन्दितं कमलाया लक्ष्म्या अपि आचरणं स्वाङ्गप्रसाधनादि कर्मयैस्तानि एतात् चरणस्थस्याभाविकसौन्दर्य्यमापि लक्ष्म्या भूषणादिप्रसाधनसमस्ताङ्गेष्वपि नास्तीति भावः । न चात्र व्यतिरेकालङ्कारेण चरणैः पद्मशोभाक्षिप्त इति शक्यते व्याख्यातुम् । अग्रे मुखैरेवपद्मशोभाखण्डनस्य वर्णयिष्यमाणत्वेन पौनरुक्त्यापत्तेः । न च चरणादिमुखान्तानामङ्गानां प्रत्येकमुपमाखण्डनप्रक्रमस्य भङ्गः लक्ष्मीसर्वाङ्गतिरस्कारिशोभत्वेन चरणानामपि सामान्याकारेण तथात्वस्य भङ्ग्योदितत्वात् । तथा । इन्दिरागृग्यसौन्दर्य्यस्फुरदङ्घ्रिनखाञ्चलेति महानुभावसर्वैककविचूडामणिश्रीमद्रूपगोस्वामिवर्णितराधासारूप्यधारिविशाखादीनां तथोत्कर्षस्य सिद्धान्तविरुद्धत्वाऽभावेन प्रस्तुतोपयोगित्वात एतदेव साधु व्याख्यानमिति ॥ २८ ॥

विशेषेण हतशोभो रम्भाणाम् आरम्भो येभ्यस्ते कामस्य यत् सिंहासनं तस्य हासनकारीणि एतत्तुल्यं कामस्य राजपट्टभूतसिंहासनमन्यत्रास्तीत्यत्रैवकामः साम्राज्यार्थमास्ते इति भावः दाडिमीलताना फलानि सौन्दर्य्येषु विफलानि कृतानीत्यन्वयः ॥ २९ ॥

वन्धुजीवानि वन्धुजीवकुसुमानि यासां दशनवसनैरपहृतशोणिमसौरभ्यादि वन्धुजीवानि

शनैः पराजितानि मनोरमाणि माणिक्यशकलानि ॥ ३० ॥
नासाग्रैरवधीरिता मुहुरधोमुखकामेषुधिरधोमुखकामेषु धिषणा च कटाक्षैः ३१
नयनैरपि तिरस्कृतानि विलसत्कालिकालिन्दीवरेन्दीवरेहितानि ॥ ३२ ॥
विधूयमानवदनविधूयमानवदनलङ्कृतकमलानि कमलानि ॥ ३३ ॥
तास्ताः स्वस्वयूथपायूथपारवश्यं गतागताशङ्कं तासां भावपरीक्षणक्षणवशा बभूवुः ॥३४॥
नित्यसिद्धानामासां नित्यसिद्धानामासां मुख्यं नार्हति कदाचिदपि सा रसरीतिः। न च सा वयःकृतेति वयः कृतेति कर्त्तव्यता च तस्या इति कैशोरागमे रागमेदुरता च तासां न विस्मयजनिका । जनिकालसमकालमेवाजानं । कदाचिदभिव्यक्तिरेव कैशोरे इतिरहस्ये ॥ ३५ ॥
रहस्येका काचिदमृतवल्लिशाखाविदग्धभावमुग्धमधुरामधुरा स्वरमात्मनः प्रियसखां राधां निगदति स्म ॥ ३६ ॥

जातानीत्यन्वयः । अपहृतशोणिम्नः शोणत्वस्य सौरभ्यस्य आदिशब्दात् प्रकाशस्य च बन्धुरूपो जीव आत्मापि येषां तानि ॥३०॥

*अवधीरिता तिरस्कृता अधोमुखी कामस्य इषुधिस्तूणः। लज्जया अधोमुखस्य कामस्य इषुषु शरेषु या धिषणा सन्धानवर्ता बुद्धिःसा च कटाक्षैरवधीरिता ॥३१॥*

विशेषेण लसत् कं सुखं येषां तथाअलयो भ्रमरा येषु तेषां कालिन्दीसंबन्धिश्रेष्ठेन्दीवराणाम् *ईहितानि विकाशान्दोलनादीनि नयनैस्तिरस्कृतानि ॥३२॥*

उपमानादाचारे क्यङ विधूयमानैर्विधुतुल्यैर्वदनैर्विधूयमानवत् विशेषेण कम्प्यमानानीव खण्ड्यमानानीव वा कमलानि पद्मानि जातानीत्यर्थः । इवार्थकेन वत्शब्देन सह समासः । अत एव अनलङ्कृतम् अभूषितं कमलं जलं येभ्यस्तानि । सलिलं कमलं जलमित्यमरः यासां सख्य एव ईदृशसौन्दर्य्यास्ता यूथपाः केन कविना वर्णयितुं शक्या इति न ता वर्णिता इति द्योतितम् ॥३३॥

*स्वस्वयूथपानां यूथे पारवश्यं वशतां गताः प्राप्ताः ॥३४॥*

आसां नित्यसिद्धानां सा रतिरीतिरपि नित्यसिद्धा कदाचिदपि आसां मुख्यं श्रीकृष्णानुन्मुखतां नार्हति नाम प्राकाश्ये । इतीत्युक्तहेतोरेव सा रसरीतिः प्राकृतानामिव न च वयःकृतान् *कैशोरवयोजनिता । तथा तस्या रसरीतेः इति कर्त्तव्यता तत्तद्व्यापारश्च न च वयःकृता* कैशोरस्यागमे प्राप्ते तासां रागस्य मेदुरता अनुरागस्य निविडता न विस्मयजनिका । नित्यसिद्धरतिक्रीडावतीनामप्यासां कैशोर एव लौकिकरीत्या किमिति पूर्वराग इति विद्वज्जनविस्मयं नोत्पादयतीत्यर्थः । तत्र समाधत्ते जनिकालेति । रहस्ये इत्यतिगोप्ये सिद्धान्ततत्त्वे स्थिते सतीत्यर्थः ॥३५॥

रहसि विविक्तदेशे । एका सखीषु मुख्या ॥३६॥

सुमुखि! कथमकस्मादेष ते हृद्विकारः प्रणयिपरिजनानां प्राणसंबाधकारी। समजनि जनिमात्रेणैव यौतश्च पाकं तदपि न चतुराणामैष्यं तर्कगम्यः ॥३७॥

यतः। क्व तेऽध्ययनकौतुकं क्व शुकशारिकाऽध्यापना क्व वार्हि नटनेक्षणं क्व परिवादिनीवादनम्। क्व हासपरिहासिनी प्रियसखीजनैः संकथा क्विमालि! वनमालिना तव मनोमणिश्चोरितः ॥ ३८ ॥

नैतदसंभावनीयम्। न हि कुमुदबान्धवमन्तरेण कुमुद्वतीमुद्वती भवितुमर्हति। तपनमण्डलमन्तरेण कमलिनीमलिनीभावमर्हत्येव ॥ ३९ ॥

नापि स्वमुदित मुदिरमन्तरेण सारङ्गी सारंगीतमन्यस्य मन्यते ॥ ४० ॥

नापि कुसुमधन्वानमन्तरेण रतिरतिरतिमती क्वापि भवति ॥४१॥

नहि जलधरोत्सङ्गसङ्गमन्तरेण सौदामिनी दामिनी भवितुमीष्टे ॥४२॥

न च मधुमासमन्तरेण क्वचन कलकण्ठीसमुत्कण्ठी भवति ॥४३॥

नापि कमलाकरमपहाय सलिलमात्र एव शोभते राजहंसी। न च वलक्षपक्ष-

---

पाकं परिणामं यातः प्राप्तः ॥३७॥

कथमसाववसित इति चेत्तत्राह क्व ते इति। परिवादिनी वीणा ॥ ३८ ॥

मुत् आनन्दः तद्वती। ननु शीतलस्वभावे कुमुद्बान्धवे कुमुद्वती मोदतां नाम कृष्णस्य तु तथात्वमनिश्चित्य कथं प्रीतिस्तत्रकर्त्तुमुचिता वहुवहुवल्लभत्वेन तत्र कठिनचरितत्वस्यापि संभवात्तत्राह। तपनेति। कान्तस्य तैक्ष्ण्यं प्रणयिन्याः सुखायैव भवतीति भावः ॥ ३९ ॥

ननु कथं तत्रैव प्रीतेरैकान्तिकत्वव्रतानिश्चयस्तत्राह नापीति। स्वस्य मुदि हर्षे सारङ्गीचातकी मुदिरं मेघं विना अन्यस्य गीतं सारं न मन्यते। मेघे चातकीनामिव कृष्णे गोकुलबालाना मौत्पत्तिक एव तथाभाव इति भावः ॥ ४० ॥

ननु तथापि मेघचातक्योः परस्परसापेक्षत्वशोभासाद्गुण्याभावः स्पष्ट एव विनापि चातकी मेघशोभाया अप्रस्तुतत्वदर्शनादित्यत आह **नापि कुसुमेति** ॥४१॥

ननु माभवत्वन्यत्रापि रतिमती किन्तु विनापि कन्दर्पशम्बरगृहे तस्या बहुकालमवैकल्यं दृष्टमित्यत आह **नहि जलधरेति**। सौदामिनी विद्युत्। सादामिनी च सौदाम्नी सौदामिन्यपि दृश्यत इति द्विरूपकोषः। दामिनी दामयुक्ता शोभावतीत्यर्थः। ततश्च शोभाया अभावादेवान्यत्र न तिष्ठत्येवेति भावः ॥४२

ननु तस्या अपि तत्रास्थैर्यमेव स्पष्टो दोष इत्यत आह। न चेति। मधुमासश्चैत्रः। कलकण्ठी कोकिलाङ्गना। समुत्कण्ठीति च्विप्रत्ययान्तम्। अत्रोभयोः परस्परसापेक्षत्वेनैव शोभासाद्गुण्यम् कलकण्ठ्यास्तत्रास्थैर्याभावस्तद्विनाभावस्तु उपमाप्रयोजकभूततद्धर्माभावादेव न पूर्वोक्ता दोषाः ॥ ४३ ॥

ननु कलकण्ठ्याः कण्ठस्वरः प्रशस्यतां नाम न तु गात्रसौन्दर्यमित्यत आह **नापि कमलेति**। किंच प्रीते योग्यप्रतियोगिसङ्गस्य भावाभावाभ्यामेव समृद्धिनाशाववित्यत्र दृष्टान्तः न च

मन्तरेण परिपुष्टिमीयते चान्द्रमसी रेखा ॥४४॥

न च निकपपाषाणशकलं विना निजगुणमाविष्करोति काञ्चनी रेखा ॥४५॥

न च वसन्तमन्तरेण परिमलमालम्बते वासन्ती ॥ ४६ ॥

किं बहुना । चन्द्र एव चन्द्रिका । रत्न एव रत्नप्रभा । कुसुम एव माध्वीकधारेति ॥ ४७ ॥

किमपि । मयि तेऽपलापः । न खलु मणिवणिजामगोचरो मणेरवान्तरः कोऽपि भावः । तन्नापलपनीयामिदं पनीयमिदञ्जसा ॥ ४८ ॥

इति तदुदितोपरमेपरमेण प्रणयेन सकलगुणललिता ललिता चोवाच । युक्तमुक्तमुदारमणद्रुमशाखया विशाखया । विचित्रं नैतत् । पीयूषमयूखेनैव विभावरीविभा वरीयसी भवति । तमन्तरेणचकोरी च कोरीकरोति कमपरम् ॥ ४९ ॥

वलक्षेति । वलक्षपक्षं शुक्लपक्षम् ईयत इति ईङ् गतौ दैवादिकः ॥४४॥

अन्यच्च स्वनिष्ठप्रेमादिमहागुणपरीक्षणं च तादृशप्रतियोगिन्येव नान्यत्रेतिदृष्टान्तः । न च निकपेति ॥४५॥

किंच गुणनामप्रसिद्ध्यादिकं सर्वमेव तादृशप्रतियोगिसाहित्येनैव प्रकाशतेनान्यथेत्यत्र दृष्टान्तः । न च वसन्तेति । परिमलमिति गुणः वसन्तोपि सुरभिः वासन्तीति नाम स चापि वसन्तनामा लतासु मध्ये श्रेष्ठामाधवीति प्रसिद्धिः स चापि ऋतुषु श्रेष्ठ इत्यादि तथा परस्परशोभासापेक्षत्वाविनाभावस्थैर्य्यसौन्दर्य्याद्याः पूर्वपूर्वदृष्टान्तनिष्ठागुणा अपि अत्र वर्त्तन्त एवेत्ययमेव मुख्योदृष्टान्त इत्यत्रैव पर्य्यवसानमिति । दार्ष्टान्तिकपक्षेपि वैदग्ध्यादिना गुणेन तुल्यावेव राधामाधवौ माधवेति राधेति तुल्यपर्य्यायत्वान्नाम्नापि प्रसिद्ध्या च लोकोत्तरया प्रेम्णा च परस्परसापेक्षत्वादिभिश्चेति ॥ ४६ ॥

अथ तत्राप्यत्यन्तैक्यविवक्षया धर्मधर्मिरूपेण पौराणिकसिद्धान्तोपयोगित्वाच्छक्तिशक्तिमत्तारूपेण वा संबन्धेन दृष्टान्तत्रयम् । तत्र चन्द्रचन्द्रिकयोः सुखस्पर्शता त्वगिन्द्रियगम्या । रत्नरत्नप्रभयोर्दर्शनीयता नेत्रेन्द्रियगम्या जात्यादिराहित्येन पूर्वतोप्यधिका । कुसुममाध्वीकधारयोस्तु सौरस्यं सौरभ्यं सुखस्पर्शत्वं सुदर्शत्वमिति सर्वेन्द्रियगम्यत्वामित्यत्रैव श्रैष्ठ्ये विश्रान्तिरिति ॥ ४७ ॥

अपलापः संगोपनम् । अपलापस्तु निह्नव इत्यमरः । मणिवणिजामिति त्वत्सखित्वात् त्वत्साधर्म्यवत्यो वयं स्वानुभवेनैव सर्वं जानीम इत्यर्थः । भावः स्वरूपम् । इदं द्विकारचिन्हम् अञ्जसा साक्षान्नापलपनीयम् । पनीयास्ताव्या मित् स्नेहो यस्याः । हे पनीयमित्सखि ! स्नेहेन मयि सर्वमेव कथयेति भावः । पन स्तुतौ ञिमिदा स्नेहने इति धातू ॥ ४८ ॥

विभावर्य्या रात्र्या विभा कान्तिः । तं विना का चकोरीकं अपरम् उरीकरोति स्वीकरोतीति तत्र कान्तिदायित्वं जीवनदायित्वं च केवलमेकस्य कृष्णस्यैव नान्यस्येत्येकत्रैव दृष्टान्तद्वयतात्पर्य्यम् ॥ ४९ ॥

इत्युक्ता साह । साहसमिदं भवतीनां यदिदमसंभाव्यमपि संभाव्यते । विशाखा विशाखाभावं न त्यजति । यदियं माधवमासहायनीति ॥ ९० ॥

तदुदितान्तेऽतान्तेन मनसा पुनर्ललिताऽऽह । भाविन ! भावि नियतमेव भवति । राधाभिख्येतत्र राधैव साहाय्यमवलम्बते राधाविशाखयोरैक्यात् ॥९१॥

अथाह सा हसामृतमधुरम् । ललिते नह्याकाशलता काशलताकुसुमसमानकुसुमेति । शक्यते वक्तुम् ॥९२॥

तदपि मुखविजितनालीके ! नाऽलीकेन वितर्केण संभावनीयोऽयं जनः ९३

इत्येवमवसरे स्वभावश्यामा श्यामा नाम राधाराधाय प्रतिदिनमेवागमनशीला तदापि तदार्पितहृदया हृदयालुतया तत्रैवाजगाम ॥९४॥

आगतायां च तस्यामेतस्या मेदुरहृदः कमलमुख्या मुख्याया हृदयमतिस्निग्धमुग्धमुदितमासीत् ॥ ९५ ॥

---

इति ललितयोक्ता सा राधा आह । विशाखाभावं विशाखानक्षत्रस्वभावम् । माधवमासो वैशाखः । वैशाखे माधवो राध इत्यमरः । तं जिहीते गच्छति प्राप्नोतीति ग्रहादिभ्यो णिनिः । वैशाखपूर्णिमायां विशाखानक्षत्रयोगात् । भङ्ग्या तु विशाखा त्वं तस्मिन्माधवे संगतैव तिष्ठसीति मा स्वसदृशीं मां जानीहीति नर्म सूच्यते । पक्षे माधवस्य कृष्णस्य मा शोभा तस्याः सहायिनी सहायवती तदनुकूलव्यापारयुक्ता अत्रादृष्टाश्रुतचरेपि श्रीकृष्णे प्रथममस्या रागः श्रीमदुज्ज्वलनीलमणिदर्शितालुलनानिष्ठस्वरूपादेव । ततो वक्ष्यमाणप्रकाराद्दूलभीतले दर्शनादयं स इति निश्चय आसीत् । ततस्तदनुसंधानधृतचित्ततया अन्यजनपरिशीलिततत्प्रसंङ्गपरामर्षान्नामाज्ञादिनमिति विवेचनीयम् ॥ ९० ॥

अतान्तेन प्रफुल्लेन इत्यर्थः । तस्याः स्वस्वभावप्रकाशनकर्मठनर्मश्रवणात् । हे भाविनि ! सुन्दरि ! भावि भवितव्यम् । राधाभिख्ये राधनाम्नि तत्र वैशाखमासे तत्सनाम्नी राधैव । ननु का तत्र राधा तत्राह राधाविशाखयोरैक्यात् एकपर्य्यायत्वात् । तत्र विशाखानक्षत्रमेव राधा उच्यते श्लेषेण राधया अभिख्या शोभा यस्य तस्मिन् श्रीकृष्णे । आभिख्या नाम शोभयोरित्यमरः ९१

हसाऽमृतमधुरं यथा स्यात्तथा सा राधा आह आकाशेति । आकाशलतायाः कीदृशं कुसुममिति प्रश्ने काशलतायाः कुसुमतुल्यं तदित्युत्तरमिव मत्कीनाममलीकपूर्वके प्रश्ने ममापि किं तादृशमुत्तरमुचितमित्यर्थः ॥९२॥

मुखेन विजितं नालीकं कमलं यया हे तथाभूते ! अलीकेन मिथ्याभूतेन वितर्केण न संभावनीयः अयं मल्लक्षणो जनः ॥९३॥

स्वभावेन श्यामा शीतकाले भवेदुष्णेत्याद्युक्तलक्षणा । राधाया आराधाय आराधनाय सुन्दरान्तत्वादुपमर्पणायेत्यर्थः । तदापि तत्रैवाजगाम । कीदृशी तस्यां राधायाम् आर्पितं प्रार्पितं समर्पितं हृदयं स्वमनो यया सा । तत्र हेतुः हृदयालुतया सौहार्देनेत्यर्थः ॥ ९४ ॥

एतस्या मुख्यायाः श्रीराधायाः ॥ ९५ ॥

परस्परं मिलितवतीषु सकलासु सकलासु सस्मितगाम्भीर्यविहित्थंमुख्याऽऽह कमलमुख्याऽऽहरस्व मे वचसि मनो मनोज्ञे प्रियसखि श्यामे दृश्या मे दृशोः कर्पूरवर्त्तिरिव भवती भवतीह । तदाकर्णय कर्णयशस्करं किमपि मे सखीजनवचनामिति सख्योरुदितं कथयाति ॥ ९६ ॥

श्यामाऽऽह सा हरिणाक्षि ! सखीजनमभ्यसूयतु भवती सकलास्वेव गोकुलफुल्ललनापरिषत्सु गोकुलललनाललामभूतायास्तव स्तवनकथाप्रसंगे संगेयमिदं वृत्तम् । तत्स्वभावो हि भावो हिमकरकुमुदिन्योरिव तस्य तव च जायमानएव सकलगोकुलनगरीगरीयः सौरभ्यमभ्यागमयति ॥ ९७ ॥

मुख्या हसितमुख्याऽऽह सितमयूखमुखि!सत्यमेव भवति लोभवती भवती च तस्मिन् जने यदात्मकथामन्यत्रासञ्जयसि जयसि त्वं सर्वकलया ॥ ९८ ॥

कथमिदमपि संभाव्यते । पश्य का पुनरहिमकरं हिमकरं वा करेणाऽऽहर्त्तुमभिलपतु ॥९९॥

का च काचमणिना महामणिं परिवर्त्तयितुमुद्यता भवतु ॥१०॥

का वा रत्नाकरवर्त्तीनिकरवर्त्तीनि कर्त्तुमाकाङ्क्षतु महारत्नानि ॥११॥

का वा डगमगायमानमणिवरलोभेन फणधरफणधरणार्थमर्थिनी भवतु ॥१२॥

सकलासु कलाभिर्वैदग्धीभिः सहितासु मुख्या राधा आह मे वचसि मनः आहरस्व प्रवेशय । भवती मम दृश्या सती दृशोर्नेत्रयोः कर्पूरवर्त्तिरिव भवति ॥९६ ॥

परिषत्सभा ललामभूतायाः भूषणरूपायाः । ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुष्वित्यमरः । संगेयं प्रशंसनीयम् । स्वभावो हि भाव इत्यतिनिरुपधिलविवक्षया लक्षणास्वाभाविको भाव इत्यर्थः ॥ ९७ ॥

मुख्या राधा आह । हसितमुखी सतीति नर्मार्थम् । सितमयूखमुखि!चन्द्रमुखि । सर्वकलया सर्वांशेन ॥ ९८ ॥

पूर्वरागपाकावस्थायां दैन्यस्यैव संचारिणः प्राबल्यात्तदनुरूपमाह । तत्र प्रथमं कृष्णस्याऽतिदुर्लभतास्फूर्त्याऽऽह का पुनरिति । अहिमकरं सूर्यं हिमकरं चन्द्रम् ॥ ९९ ॥

शुद्धप्रेम्णा दुर्लभोपि वशीकर्त्तुं शक्य इति चेत्तत्र स्वप्रेम्णोपि तथात्वाभावं दैन्येनैवाह । काचेति काच नारी काचमणिना स्वनिष्ठप्रेम्णा महामणिम् इन्द्रनीलमणिं श्रीकृष्णनिष्ठप्रेमाणं परिवर्त्तयितुं स्वकर्तृकप्रेमाणं कृष्णेऽर्पयित्वा कृष्णकर्तृकप्रेमाणमात्मन्यर्पयितुम् ॥ १० ॥

अथ कृष्णस्याऽक्षयाणां महागुणानामानन्त्यमयकल्प्यात्मनश्च तदुदाहरणोचितपात्राभावमाशङ्क्य सविचारमाह का वा रत्नाकरेति । नहि रत्नाकरस्थसमस्तरत्नानि करतलमात्रमाप्नोति भवः ॥ ११ ॥

अत्रमोदयन्तेत्यात्मनः कदाचिदपि प्राप्तुमशक्येपि वस्तुनि साहसाविष्कारेण फलमेवोदर्के स्यादनुपपत्तिमिति शुभपदर्शनमाह का वा डगमगेति डगमगेति लिप्सौ शब्दप्रतीचि भाषानुकरणम् १ २

१ डगमगायमानो यो मणिवरः तल्लोभेन

का च वा कण्ठीरव-किशोरकेशर केशरचनार्थमुद्यततताम् ॥६३॥

तदलं प्रतारितालीकेनाऽलीकेनामुना वृत्तान्तेन ॥ ६४ ॥ श्यामाह श्यामाहतं ते सत्यमेव हृदयं हृदयंगमेनामुनैव वचसा च सातिशयमेव व्यक्तीकृतं कृतं ते प्रतारणेन ॥ ६५ ॥

इत्युक्तवत्यामेतस्याः प्रतारणचातुरी चाऽऽतुरीभूता यदि तदास्वभावभावभावुकसुभगंभावुकमनोवृत्तितया रोमाञ्चमाञ्चनचटुलकपोलपालिपालितकज्जलजलमिषेण नयनकमलाभ्यामन्तर्गतं कृष्णकान्तिद्रवमिव वमन्तीमं तीव्रतरकृष्णानुरागपरभागपरभाजनभावं व्यञ्जयन्ती जयन्तीव वैजयन्ती सर्वसौभाग्यसंपदां सखीजनहृदयद्रवाय समजनि ॥ ६६

क्षणमाश्वास्य च श्यामे ! किं मे कणतु तादृशं भागधेयभूषणम् अवधेहि ।
अतिपरममहार्घ्यमस्य चेतोमणिमतिलोकमणीन्द्रवन्दनीयम् ।
तृणमणिवदयं ममानुरागः परिपणितुं पणतां कथं प्रयातु ॥ इति रोदिति ।६७।

श्यामाऽऽह ! मा हन्त ! खेदनीयं वामनयने नय नेतव्यतामस्मद्वच ति प्रामाण्यम् ॥ ६८

---

प्रायो धीररता स्त्रिय इति न्यायेन कान्तस्य शौर्यसुखमेवावहतीत्यन्तरभिलाषेसत्यपिआत्मनो मौग्ध्यमात्रमाविष्कृत्य कृष्णस्य चाऽघवकाद्यसुरमारणे दण्डप्रभावत्तां व्यञ्जयन्ती सत्रासं सान्तरौत्सुक्यं चाह काचवेति । कण्ठीरवकिशोरस्य केशरैर्या केशरचना तदर्थम् उद्यतताम् उद्यमं करोति । अत्र समासाद्विधेयांशाविमर्शो यमकानुरोधात् सोढव्य इति ॥ ६३ ॥
प्रतारिता आली सखी येन तेन वृत्तान्तेन ॥ ६४ ॥

श्यामेन श्रीकृष्णेन आहतम्उत्कण्ठोत्पादनया भावनागतेन ताडितमित्यर्थः । वचसा दैन्यबोधकेन तदुत्कर्षकथनमेव तव स्पृहाव्यञ्जकमिति भावः। तस्मात् प्रतारणेन कृतम् अलमित्यर्थः ६५

आतुरीति चि । स्वभां निजकान्तिम् अवति रक्षति इति तथाभूतो यो भावः वक्रगूढ इत्यर्थः। तस्य भावुकेन कुशलेन सुभगंभावुका मनोवृत्तिर्यस्यास्तत्तया हेतुना यो रोमाञ्चस्तस्य मा शोभा तस्या अञ्चनेन प्राप्त्या चटुलौ शोभनौ कपोलौ तयोः पालीभ्यां क्रोडाभ्यां पालितं रक्षितं य कज्जलसंबन्धिजलं तन्मिषेण तच्छलेन । चटुलः सुन्दरे चले इति धरणिः । पालिस्त्र्यश्र्यङ्क्तिषित्यमरः । नयनकमलाभ्यां तद्द्वाराभ्यां वमन्ती उद्गिरन्ती ततः किं तत्राह। तीव्रतरः परिपक्वो य. कृष्णानुरागस्तेन परभागः सौन्दर्य्यं तस्य परभाजनभावं श्रेष्ठपात्रत्वं व्यञ्जयन्ती आत्मन इत्यर्थः । ततःकिं तत्राह वैजयन्ती पताका जयन्तीव सर्वोत्कर्षेण वर्त्तमानेव।६६।

अतिलोका लोकमति क्रान्ता लोकोत्तरा मणीन्द्रास्तैरपि वन्दनीयं वन्दनार्हं तत्स्थानीयमित्यर्थः । तृणमणिः तृणकर्षको मणिविशेषः । परिपणितुं क्रेतुं पणतां मूल्यताम् ॥ ६७ ॥

अस्मद्वचसि प्रामाण्यं प्रधानकर्मभूतं नेतव्यतां प्राप्यतां नय प्रापय तत्र प्रामाण्ये तव उपादेयता निष्ठतु नतु हेयतेत्यर्थ ॥ ६८ ॥

समाश्वसिहि विश्वसिहि विगतालीकये मदालिवाक्ये ॥ ६९ ॥

त्वदनुरागरत्नेनैव तन्मनोमाणिक्यं परिचीयते । तथाहि ।

प्रसरति सहजावरोहहानेरधिनिधि कश्चन वीरुधोऽवरोहः ।
निधिरपि न स तेन दुर्विदः स्यात् कलयति यस्तमहो ! स एव वेत्ति ॥ ७० ॥

आहतुरुभे विशाखाललिते ललितेक्षणे ! श्यामे ! पुरापि तत्र तस्यचेति मुदितमुदितमधुनापि मधुनापि हितमिव किंचिदुच्यते । तदपि ! मधुरहसिते रहसि ते किमपि श्रवणपथातिथित्वमागतमिव । साऽऽह साहसिक्यमिदं यदहं कथयामि ७१ । उभे आहतुः । श्यामे ! शपावहे स्वशिरसा रसान्तरेण चेदिदं भवति तदसंकोचेनाऽऽलप लपनेन्दोस्ते निर्मञ्छनं यावः ॥ ७२ ॥

अथ सा हसन्त्याऽऽह सन्त्यायतधियो मदीयाः सहचर्य्यस्ता एकदा कदाचन वनगमनारम्भसंभावितवेणुविषाणगुञ्जाशिखण्डादिभूषणादिसंभारैः सह सहचरैरग्रेसरस्तथाविधविविधभूषणो व्रजपुरपुरन्दरनन्दनः ॥ ७३ ॥

विगतम् आलीकम् अलीकत्वं मिथ्यात्वं यस्य तस्मिन् ममालीनां सखीनां वाक्ये ॥ ६९ ॥

त्वदनुरागरत्नं तत्रैव व्यग्रं सत् तन्मनोरूपं माणिक्यं परिचिनोत्येवेत्यर्थः । अत्र दृष्टान्तः सहजैव अवरोहस्य शाखाजटाया हानिस्त्यागो यस्याः तथाभूताया अपि वीरुधः । अधि निधि निधिप्रदेशे अवरोहः प्रसरति । शाखा शिफावरोहः स्यादित्यमरः । ततश्च स निधिरपि तेन अवरोहेण दुर्विदो दुर्ज्ञेयो न स्यात् । कुतः अहो आश्चर्ये योऽवरोहो लम्बितः सन् तं कलयति गृह्णाति अतः स एव तं निधिं वेत्ति । अत्र निधिस्थानीयं श्रीकृष्णमनः कर्मभूतम् । अवरोहस्थानीयस्त्वदनुराग एव गृह्णाति जानाति च नाऽन्य इत्यनेन त्वय्याकृष्टमेव तस्यापि मनः साम्प्रतं वर्त्तत एवेति व्यञ्जितम् तवाप्ययमनुरागो नाधुनिक एव किंत्वऽदृष्टाश्रुतचरेपि तस्मिन् प्रागेवारभ्यासीदित्यपि व्यञ्जितम ॥ ७० ॥

मुदितम् आनन्दः उदितम् उदयप्राप्तम् । मधुना पिहितं मधुमिश्रितमिव विगतालीकत्वे इति तथा निधिरपि न स तेन दुर्विदः स्यादित्यनेन च सुरसामित्यर्थः ॥ ७१ ॥

आलप कथय लपनेन्दोर्मुखचन्द्रस्य । आननं लपनं मुखमित्यमरः ॥ ७२ ॥

हसन्तीति वर्णयिष्यमाणराधिकौत्सुक्यचापल्यस्मरणात् । व्रजपुरन्दरनन्दनः कामप्याकस्मिकी रुजमासाद्य कामपि प्रियनर्मसहचरं यदुवाच तत् मदीयाः सहचर्य्यस्ताः अन्विष्यमाणाभ्यः शुकीभ्यः श्रुतवन्त इत्यन्वयः । कथंभूतः सन्नित्यपेक्षायांप्रथमत एव क्रमेण समस्तोदन्तं विवृण्वती निदिनष्टि वनगमनारम्भेत्यादिना ॥ ७३ ॥

१ मुदितमिति भावसापनक्तान्तम् ॥
२ न दुःखेन विद्यते खळन्तम् ॥
३ कर्मणि शानजन्तम् ॥

पुरतोरणतः पुरतो रणतः कनकमणिमयालङ्कारान् दधानोऽयमधिवलभीतलमधिवलभीतलङ्घितनयनमिनस्ततोऽवलोकयन्तीं भवत्योः सखीमाकस्मिकेनाऽकुटिलेनाऽऽलोकनेनेषत्तरां तमालोक्य तत्समकालजनितमन्दाक्षमन्दाक्षमपवर्त्तमानां वर्त्तमानान्दोलितानन्दोल्लासपराभवेन पुनरपि विवलितग्रीवमालोकमानामाकस्मिकेनैवाकुटिलेन तदालोकनेनार्द्धवर्त्मनि निकृन्तस्य कटाक्षस्य चरमार्द्धमुपसंहरन्तीमनपेक्षमाणेन पूर्वार्द्धेन च्छिन्नविशिखार्द्धेनेव हृदि विद्धो नियतिनियोगेन निकृत्तभुजगीपूर्वार्द्धेन दष्ट इव कामपि दैवोपसन्नामाकस्मिकीं रुजमासाद्य सोत्कण्ठं सचमत्कारं सविस्मयं पश्यन् कमपि प्रियनर्मसहचरं यदुवाच तदन्विष्यमाणाभ्यः पञ्जरतो विच्युताभ्यः शुकीभ्य शृण्वन्ति स्म ॥७४॥

पुरस्य तोरणतः वहिर्द्वारात् पुरोऽग्रे वर्त्तमानः । पुनः कथंभूतः । रणतः क्वणतो मणिमयालङ्कारान् दधानः रण ध्वन शब्दे शत्रन्तः । अयमिति बुद्ध्या प्रकटीकृतं तमङ्गुल्यादर्शयामीवेति भावः । पुनः कीदृशः भवत्योः सखीं वर्ण्यमानलक्षणाम्‌अनपेक्षमाणेन कटाक्षस्य पूर्वार्द्धेन छिन्नशरार्द्धेनेव हृदि विद्धः । कीदृशीम्‌अधिवलभीतलम् वलभीतले । अधिवलेन अधिकवलेन भीतेन भयेन लङ्घिते व्याक्षिप्ते नयने यत्र तथाभूतं यथा स्यात्तथा सचकितमित्यर्थः इतस्ततोऽवलोकयन्तीम् । चन्द्रशाला च वलभी स्यातां प्रासादमूर्द्धनीति श्रीधरः । आकस्मिकेन अकस्माज्जातेन आलोकनेन ईषत्तराम् * अल्पतरं यथास्यात्तथा तं श्रीकृष्णमालोक्य तत्समकालं जनितं यन्मन्दाक्षं लज्जा तेन मन्दे वेगहीने अक्षिणी नेत्रे यत्र तत् यथास्यात्तथा अपवर्त्तमानां तिरोभवन्तीम् मन्दाक्षं ह्रीस्त्रपा व्रीडेत्यमरः । ततश्च वर्त्तमानः जायमानः प्रान्दोलितः आन्दोलं प्रापितः आनन्दो येन तथाभूतात् उल्लासात् औत्सुक्यात् यः पराभवः स्वधीरतायाः ध्वंसस्तेन पुनरपि किमयं मां पश्यन्नस्ति हन्तगतो वा म्रियतां नाम मे लज्जा यद्वाभि तद्भवतु किंत्वेकवारमीक्षितव्य एवासाविति चापल्येन विवलितग्रीवं ग्रीवामुत्थाप्य आलोकमानां ततश्च आकस्मिकेनैव तदालोकेन कृष्णालोकेन अर्द्धवर्त्मनि निकृत्तस्य छिन्नस्येति द्वयोः परस्परंप्रति तुल्यकालमेव कटाक्षशरसन्धानात् कटाक्षस्य स्वकृतस्य चरमार्द्धमुपसंहरन्तीमिति संपूर्णस्यैवोपसंजिहीर्षायां सत्यामपि पृष्ठदेशार्द्धमेव पूर्वार्द्धस्य तीक्ष्णफलिकायुक्तस्य कृष्णकटाक्षेण च्छिन्नत्वात् । अतस्तादृशीं ताम्‌अनपेक्षमाणेन छिन्नशरार्द्धेनेति तस्याशक्यनिर्गमत्वात् । नियतिनियोगेन दैवप्रेरणया । निकृत्तभुजगीति तद्विषस्य दुःशकप्रतिकारत्वात् । अत्रायमर्थः । मामयं मा पश्यतु । अहं त्वेनमेकवारं पश्यामीति वाञ्छया अवलोकनारम्भे तदैव श्रीकृष्णावलोकनं दैवाज्जातमालक्ष्य हन्त ! हन्त मामयं दृष्टवानेव तदौत्सुक्यसूचिका मे दृष्टिरियमेतस्य दृष्टिगता मा भवत्विति तिरोदधत्या एतस्याः संपूर्णदृष्टेरेवोपसंहारेच्छा किंतु दृष्टेः प्रथमभागस्य प्रथममेवकृष्णदृष्टौ योगोभूदिति न तस्योपसंहारः शक्य इति पश्चाद्भाग एव उपसंहृतः । तथा एकस्याः संपूर्णाया दृष्टेः पूर्वार्द्धपरार्द्धयोः प्रकाशाप्रकाशौ तात्कालिक्या कृष्णदृष्ट्यैव संपादिताविति तया मध्ये च्छेद उत्प्रेक्षितः । तेन च अभिलषणीयत्वेपि तत्पश्चाद्भागस्य कृष्णेनाप्राप्तिरेव सौरस्यात्तदुत्कण्ठावर्द्धिनी जातेति ॥७४॥

* किमेत्तिङव्ययेत्यादिना ईषत्तरामित्याम्वन्तम् । अनव्ययत्वाच्चअल्पतरमिह न ।

यथा प्रियसख ! केयं वलभीतलविद्योतिनी निर्मुदिरा विद्युदिव नन्दनवनतो निपत्य वडभीतलमालम्बमाना बालकल्पलतिकेव त्रिलोकीलोकसंमोहकारिणी मदनैन्द्रजालिकस्य कुहककनकप* श्चालिकेव गोकुलपुराधिष्ठातृदेवतेव ॥७५॥

केनापि परमकलावता चित्रकारेण चित्रिता निर्भित्तिचित्रलेखेव । गगनसरसो लम्बमाना हेमहंसीव । आकाशकनककेतकीव । कुसुमधनुषो निष्कृपा कृपाणीव७६

अद्वितीया द्वितीयाचन्द्रलेखेव संमोहस्य महिमवल्लीव ॥ ७७ ॥

लावण्यस्य दर्पणिकेव माधुर्य्यस्य पताकिकेव गुणमणीन्द्रवृन्दतेजोमञ्जुमञ्जरीव सौरूप्यविहङ्गपुटपञ्जरिकेव क्षणमेवाविर्भूय तिरोभवति ॥ ७८ ॥

किमयं मे स्वप्नः किमुत भ्रम एव वा । किमुत मदीयमनसो विभ्रामिका कापि दैवी माया ॥ ७९ ॥

---

निर्मुदिरा मेघविनाभूता । विद्युदिवेति नेत्रचमत्कारिरूपचाकचिक्यवतीत्वेन । बालकल्पलतेति मनोलोभनीयवस्तुदित्सुतया । कुहकेति अदृष्टाश्रुतचरत्वेनाऽसंभाव्यसौन्दर्य्यस्याऽकस्मादुद्गमेन । तत्रापि स्वस्य कामसुखमनुस्मृत्य मदनैन्द्रेति । तत्राप्यतिशयमालक्ष्य सम्मोहेति । ऐन्द्रजालिकविद्यया स्वस्याऽशक्यवशीकारत्वं संभाव्याऽऽह गोकुलपुरेति ॥७५॥

तादृशमुखनेत्राद्यङ्गसौष्ठवस्य विधातृसृष्टावसम्भावितत्वं निश्चित्याऽऽह । चित्रलेखेति । तत्राप्यतिलोकोत्तरतामनुभूय परमकलावतेति । केनाऽपीति विश्वकर्मतोऽपि वैलक्षण्यं द्योतितम् । निर्भित्तीति तस्याऽतर्क्यशक्तिता सूचिता अलङ्कारकणितस्य कर्णाह्लादकतामनुभूयाह हेमहंसीति । अङ्गसौरभ्यस्य मनोभ्रमरव्याकुलीकारित्वदिग्दर्शनेनाह कनककेतकीति । तदनुम्मृत्य कामपीडामनुभूयाह कुसुमधनुष इति ॥ ७६ ॥

तत्रापि चित्ताह्लादकतया दोषास्पृष्टतया द्वितीयानिमित्तचन्द्रलेखेवेति । अद्वितीया न विद्यते साम्येन द्वितीया यस्याः सा । तत्र हेतुमानन्दमूर्च्छाजनकत्वं तस्याः प्राह सम्मोहेति॥७७

अथ लावण्यमाधुर्य्यसद्गुणसौन्दर्य्याणामवधिभूतत्वेन उत्प्रेक्षते क्रमेण चतसृभिः मणिदर्पणायमानत्वमङ्गानां लावण्येनैव भवति । इयं तु साक्षाल्लावण्यस्यैव दर्पणिकेति । तथा हि तल्लक्षणम् । मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यं विदुर्बुधा इति । पताकिका उत्कर्षपराऽवधिसूचिका । सौरूप्य सौन्दर्य्यं तद्रूपो विहङ्गः पक्षी अस्याः पञ्जरिकाभूतायामेव निबद्धास्तिष्ठतीति तेनान्यत्र नद्दश्यत इति भावः । यद्वा सौरूप्यं शोभनरूपत्वं वर्णितधर्माणां समस्तानामेव तत् तेनैतन्निष्ठाः सर्व एव वर्णितगुणा क्वापि न निःसृता इति भावः ॥ ७८ ॥

स्वप्न इति तस्यैवाऽसंभाव्यसंभावकत्वं कदाचिद्युज्यते इति भावः । तिष्ठतश्चलतश्च मे गोचारणाय स कथं संभवेदिति भ्रमस्तात्कालिकः स चाप्यनिर्हेतुकः कथं स्यादिति दैवी माया७९

---

* पञ्चभिर्वर्णैरल्यते भूष्यते इति पञ्चालिका । भूषणार्थादल्धातोः सञ्ज्ञायामिति ण्वुल् । पञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृतेत्यमरः । पाञ्चालिकेतिपाठे पञ्चालदेशे भवा पाञ्चालिका । जनपदतदवध्योश्चेति वुञ् । पाञ्चालिका स्त्रियां वस्त्रपुत्रिकागीतिभेदयोरिति मेदिनी।

१ तिरोऽन्तर्द्धाविति।

स आह सखे! सखेदेन मा भवितव्यम्। इयं हि वार्षभानवी नवीनैव सृष्टिर्वेधसः। यांखलु सर्वसौभाग्यसाराधिकां राधिकां माहुरित्युक्ते सति। आं जानामि नामितसक लसुन्दरीसौन्दर्य्यगर्वामेनां गुणवतीगणगणनाप्रसङ्गे संगेयचरित्रामम्बयोः संवाद एव ॥ ८० ॥

किं त्वद्यैव मे नयनपथिपथिकेयमित्यवहित्थया प्रसङ्गान्तरमापाद्य हृदि संजातविकारो बहिः प्रकृत इव। अनुगवीनो नवीनो नटन्मेघ इव मेदुरदुरवगाहनीलधामा धामातिश्यामायितं विपिनमलंचकार तदपि दयिते! ललिते! निर्व्यूढमुभयोरेव मनसि मनोरथमहाङ्कुरेण। काले द्विपत्रापि तत्क्रमेण फलदशाप्यस्य संभावनीया ॥ ८१ ॥

मुख्याह श्यामे! अलीकवादिनि! विरम विरम नाऽहं कदाप्येकाकिनी वडभीतलमारूढा। तस्मातः परमिमं जनं लघुतरीकर्त्तुमर्हसि पादयोस्ते निपतामि मा परमऽपत्रपा पारावारे पातय मामिति तदुदितोपरम आह। यदीयपल्लीकैव वार्त्ता वर्त्तते तत् कथमत्रापत्रपापारावारः। अतो निह्नूयमानोपि निह्नोतुं न शक्यते स्वाभाविको हि भावः। तदिदं क्षम्यतां मे चापलम्। अतः परं विश्वस्ता भव निजभागधेयसंपदीत्येवं तदासमस्ता एव व्रजनगरे स्वस्वयूथपाभिः समं स्वस्वसख्यः समन्तत एवमेव यथास्वं सरसकथाप्रसङ्गेन श्रीकृष्णजातमनुरागं व्यञ्जयन्ति स्म। निरन्तरं च वर्द्धत एव पूर्वरागनाटकपूर्वरङ्गः ॥ ८२ ॥

तथा हि। ध्वजकमलादिविलक्षणलक्षणलक्षितचरणचिह्नमयी पृथ्वी। तत्कान्तिसकान्ततरणितनयासलिलसलीलानिसकलान्येव सलिलानि। तदीयश्यामलमहोमयानिसकलान्येव महांसि। तद्गन्धवाहिनः सर्व एव गन्धवाहाः। तन्मुखचन्द्रचन्द्रिकाधौतमाकाशम् इति तासां सर्वाण्येव भूतानि तन्निष्ठानि जातानि ८३।

अम्बयोरिति श्रीयशोदारोहिण्योः कदाचित्तथा संवादः पूर्वमासीदिति ज्ञापितम्। संगेयचरित्रां प्रशंसार्हचरिताम् ॥ ८० ॥

अवहित्थया आकारगोपनेन प्रसङ्गान्तरमिति विरमतु तावदनुचितेयं वार्त्ता प्रस्तुतानुसरणमेव चारु हंहो। सखायोऽद्य कुत्र वने विक्रीडिया भवतां का वा तत्र खेलेत्येवंलक्षणम्। अनुगवीनो गवां पश्चादलंगामी अनुगवलंगामीति खः। मेदुरं सान्द्रं स्निग्धं दुरवगाहं नीलं धाम कान्तिर्यस्य सः। एकस्यैव मनोरथशाखिनः एकेनैव महाङ्कुरेण उभयोर्मनसि निर्व्यूढमित्यनेन द्वयोर्मनसोरप्येकत्वमेवेति द्योतितम्। अत एव मनसीत्येकवचनम्। तथा ह्युक्तं श्रीमदुज्ज्वलनीलमणौ राधाया भवतश्च चित्तजतुनी इत्यादि॥ ८१ ॥ पारावारः समुद्रः ॥ ८२ ॥

अथासां गाढासक्तिव्यञ्जकं तन्मयत्वानुसन्धानं दर्शयति। ध्वजेत्यादिना। चरणचिह्नमयीति सर्वेषामेव पृथिवीस्थानाम् अङ्करेखादीनां स्वबुद्ध्यैव ध्वजादिसाधारण्यकल्पनया तच्चिह्नत्वेन प्रतीतिरित्यर्थः। तत्कान्त्या सकान्तं तुल्यं यत् तरणितनयाया यमुनायाः सलिलं तेन समाना लीला रूपविलासो येषां तानि ॥ ८३ ॥

एवं ध्यानैकताननतायां च तासां तद्रूपमेव नयनेषु । तदधररस एव रसनासु । तद्गन्ध एव गन्धवाहासु । तत्स्पर्श एव त्वक्षु ॥ ८४ ॥

तद्दर्शनक्षणगणनासु संख्या । तदधिकरणप्रेमपरीक्षणेषु परिमाणम् ॥ ८५ ॥

गुरुजनादिवर्गात् पृथक्त्वम् । तदाकार एव मनसः संयोगः । पत्यादिगृहाद्विभागः । गुरुपरिजनेषु परत्वम् । कृष्णसंबन्धिष्वऽपरत्वम् ॥ ८६ ॥

जीवनेषु गुरुत्वम् । चेतसि द्रवत्वम् । प्रेम्णि स्नेहत्वम् । श्रवणे तद्गुणशब्दः । तत्संयोगचिन्तासु बुद्धिः। तत्सङ्गमत्याशायामेव सुखम् । तदसङ्ग एव दुःखम् तदासत्तिषु इच्छा । गुर्वादिषु द्वेषः । कृष्णोपसर्पण एव प्रयत्नः । तदुपसत्तिरेव धर्मः । तदन्यथाभाव एव अधर्मः । तत्प्रेमकरण एव संस्कारः । इत्येवं सर्वासां चतुर्विंशतिरेव गुणास्तदानीमेवंविधा आसन् ॥८७॥

एवं च तासामन्योन्यं सरसानुलापश्चासीत् । यथा । ईदृशा पुरुषभूषणेन या भूषयन्ति हृदयं न सुभ्रुवः धिक् तदीयकुलशीलयौवनं धिक् तदीयगुणरूपसम्पदः जीवितं सखि ! पणीकृतं मया किं गुरोश्च सुहृदश्च मे भयम्। लभ्यते सपदि कस्य वा भयं लभ्यते न यदि कस्य वाभयम् ॥ ८८ ॥

किंच । मां धवो यदि निहन्ति हन्यतां बान्धवो यदि जहाति हीयताम् । साधवो यदि हसन्ति हस्यतां माधवः स्वयमुरीकृतो मया ॥ ८९ ॥

---

एवं वैशेषिकदर्शनोक्तानां पृथिव्यादिद्रव्याणां तन्मयत्वेनैव ग्रहणमुक्त्वा तद्दर्शनोक्तानामन्येषां रूपरसादिचतुर्विंशतिगुणानामपि केषांचित्तदीयानामपि केषांचित्तदनुकूलतयैवोपादेयतां तासामाह । ध्यानैकताननतायां ध्यानैकाग्रमनस्तायां सत्यामित्यर्थः । एकतानोऽनन्यवृत्तिरित्यमरः । रसनासु जिह्वासु । तदधररस इति भावनयैव साक्षादुपनत इत्यर्थः । तत्स्पर्श इति संप्रयोगलीलादिकमपि तथैव निर्व्यूढमेवेति ध्वनितम् ॥ ८४ ॥

तद्दर्शने तद्दर्शनानन्तरं वा ये क्षणास्तेषां गणने संख्या । एकक्षणमात्रं श्रीकृष्णे । मया दृष्टः कृष्णदर्शनानन्तरं मे पञ्च क्षणाः पञ्चकल्पायमाना व्यतीता इत्येवं तदधिकरणे कृष्णरूपाश्रयालम्बने प्रेमा स्वविषयकस्तस्य परीक्षणे कियानयं जात इति जिज्ञासायां परिमाणं तोलनं लक्षितम् ॥ ८५ ॥

पृथक्त्वं तस्माद्भिन्नतया आत्मनो स्थितिभावना । आदिशब्दात् तत्संबन्धिजनवर्गादपि । विभागो विश्लेषः । आदिशब्दात् श्वश्वादिगृहादपि । कन्यानां तु पितृगृहात् । परत्वं बहिरङ्गबुद्धिः शत्रुत्वं वा । अपरत्वं स्वीयत्वम् ॥ ८६ ॥

गुरुत्वं भारबुद्धिः । द्रवत्वमिति धर्मधर्मिणोरभेदोपचारात् । तदाधिक्यविवक्षया चेत एव द्रव इत्यर्थः । स्नेहत्वं स्नेहवाचकत्वम् । किंवा । श्रीमदुज्ज्वलनीलमण्युक्तानुसारेण प्रेम्ण एव कंचिदुत्कर्षं प्राप्तस्यैव स्नेहत्वमिति । आसत्तिःसामीप्यम् ॥ ८७ ॥

यदि न लभ्यत एव तर्हि तदप्राप्तिवेदनातुराया मरिष्यन्त्या मम गुरुभयं किं नामेत्यर्थः ८८

हन्यतां हीयतां हस्यतामिति त्रयं भावसाधनम् ॥ ८९ ॥

किंतु। व्रीडां विलोडयति लुञ्चति धैर्यमार्य्यभीतिं भिनत्ति परिलुम्पति चित्तवृत्तिम्। नामैव यस्य कलितं श्रवणोपकण्ठे दृष्टः स किं न कुरुतां सखि! मद्विधानाम् ॥ ९० ॥

एवं सकलाः स कलानिधिर्दिनमुखे मुखेन विधुरीकृतपीयूषमयूखेन मुरलीवादयमानो दयमानो नोदितनयनकमलाञ्चलचञ्चलचटुलतया तत इतो निरीक्षणेन वर्त्मनि उभयतोऽभयतोपकरीषुवीथिषु निजनिजपुरगोपुरगोचरान् गोकुलकुलवृद्धानानन्दवृन्दवृतमनसः कुर्वन्ननुगवीनो नवीनो नट इव भवनतो वनं वनतो भवनं यदा याति यदाऽऽयाति च ॥९१॥

तदैव काश्चित्केशप्रसाधनतोऽकृतकेशबन्धाः। काश्चिदाप्लवतो वतोदकमपि नापसारयन्त्यः ॥९२॥

काश्चिदालिजनेनाऽञ्जनेनाऽञ्जयतेक्षणे मदिरेक्षणे! क्षणं विरमेति निषिध्यमाना अप्यऽञ्जितार्द्धैकनयनाः। काश्चित्सखीजनेनाऽनुरक्तेनालक्तेनाऽलमारज्यमानैकचरणाश्चरणाञ्जनचिह्नैनैकपार्श्व एव सोपानपदवीमरुणयन्त्यः ॥ ९३ ॥

काश्चिदेकचरणकृतनूपुरतयाऽऽरतया विशृङ्खलशिञ्जिते भीस्थगितत्वसत्वरचलनच्छिन्नार्द्धशृङ्खलातिविशृङ्खलारावाः ॥ ९४ ॥

लुञ्चति अपनयति ॥ ९० ॥

एवं स कलानिधिः श्रीकृष्णो दिनमुखे दिनादौ भवनतो यदा वनं याति यदा च वनतो भवनमायाति च तदैव समयद्वये गोकुलकुलबाला वलभीतलमारोहन्तीत्यन्वयः। विधुरीकृतः तिरस्कृतः पीयूषमयूखश्चन्द्रो येन तेन मुखेन मुरलीं वादयमानः। पुनः कथं भूतः। सकला उत्कलत्वणाः स्वानुरागणीर्दयमानः कृपयन्। केन प्रकारेण नोदिते प्रेरिते ताः प्रति प्रस्थापिते ये नयनकमलयोरञ्चले तयोश्चञ्चलचटुलतया कर्मधारयोत्तरभावप्रत्ययान्तत्वादेकत्वम्। चाञ्चल्यसौन्दर्य्याभ्यामित्यर्थः। चटुलः सुन्दरे चले इति धरणिः। क्षणेन उत्सवेन वीथिषु महावर्त्मप्रान्तगतासु प्रतिपुरप्रवेशार्थपदवीषु निजनिजपुरस्य स्वस्वावासस्य गोपुरगोचरान्। सिंहद्वारे दृष्टिविषयीभूतान् ॥९१॥

केशानां साधनस्य भूषणस्य यत्साधनं वालपाश्यापट्टचमरीमाल्यादि तस्मात् तत्परित्यज्य ल्यब्लोपे पञ्चमी। आप्लवतः स्नानात् आप्लवमपरिसमाप्येत्यर्थः ॥९२॥

अलिजनेन सखीजनेन कर्त्रा अञ्जनेन कज्जलेन ईक्षणे नेत्रे अञ्जयता हे मदिरेक्षणे! कृष्णनूपुरध्वनिमात्रेणैवाधैर्य्यादतिचपलनेत्रे! इति भावः। अत्रैकवचनमेकैकां प्रति एकैकस्याः सख्या उक्तेः। अलक्तेन यावकेनअलमत्यर्थम् आरज्यमान एक एव चरणो यासाम् ॥९३॥

एकचरण एव कृतो नूपुरो यासां तत्तया। कीदृश्या। विशृङ्खलशिञ्जिते द्वितीयनूपुराभावादप्रथितशब्दे आरतया पुनरपि भिया गुरुजनभयेनस्थगितत्वं सत्वरचलनं च ताभ्यां छिन्ना या अर्द्धशृङ्खलापि तया हेतुना पूर्वतोप्यतिविशृङ्खला आरावा यासु ता अर्द्धनूपुरशब्दस्याभावात् तद्ध्वनिः पूर्वतोप्यत्यप्रथितत्वमित्यर्थः ॥ ९४ ॥

१ वर्त्मनि.

काश्चिदर्द्धग्रथितमेखलाञ्चल-चलनकृतचरणाग्रमार्जना मृणालनालसन्दानिता नितान्तविशृङ्खलगामिन्यो राजहंस्य इव महागुरुगुरुभयमधो निधाय धावमाना गोकुलकुलबाला बालातपविकाशिन्यः कमलिन्य इव वडभीतलमारोहन्ति ९५

एवं च सति । अहो मध्ये हृदि निवसतो माधवस्याऽवलोके*
निद्राणाया: कुवलयततेः +श्रीहराणीक्षणानि
प्रातः सायं कलितवलभीजालरन्ध्राणि तासां
मुष्णन्त्याभोमहहहे ! वसतां पञ्जरे खञ्जनानाम् ॥ ९६ ॥

एवमनूढानामपि नाम पिहितमनोरथानां धूलिखेलावधिभगवद्भवनकृतगतागतानां गोपजातिस्वभावत ऋजुमार्गस्थितत्वेन सर्वजनगोचराणां विशेषतो मातापितृभ्यामद्यतनीयमिति प्रत्येक मधिगततयाऽनवलोकितदूषणानां स्वस्ववासनासनाथेन भाविपातिभावेन दृढतरेण । निभृतनिखातमहानिधिनेवान्तस्तृप्ततया बहिस्तदऽविलासेन दुःस्थितवद्दृश्यमानानां जनानामिव हृदयनिहितभावसरसतया बहिर्व्यञ्जिततटस्थ्यानां कुमारीणामयमेव नः पतिर्भावीति मनोरथवहनेन समयं गमयन्तीनां दिनानि कतिचिद्यातानि ॥९७॥

अथैकदा मणिपञ्जरतः केलिशुकं निष्कास्यं करकमलतले विनिधाय परिपक्वदाडिमीबीजमेकैकं चञ्चूपुटनिकटे समर्पयन्ती कृष्णानुरागभरनिर्भरभज्यमानहृदयतया कृष्णं वदेति मुहुरभिलापयन्ती कमपि परितोषमाससाद वृषभानुपुत्री ॥ ९८ ॥

---

अर्द्धग्रथिता या मेखला काञ्ची तस्या अञ्चलेन चलने गमनकर्मणि कृतं चरणाग्रमार्जनं यासां ताः । सन्दानिता बद्धाः । बालातपः प्राभातिकसूर्य्यकिरणः॥ ९५ ॥

अहो मध्य इति तदा विरहवैवश्येन तद्ध्याननिष्ठतया ईक्षणाना मुद्रितत्वम् जालरन्ध्राणि पञ्जरस्थानीयानि ॥९६॥

अनूढानां कन्यानां नाम प्राकाश्ये । स्वस्ववासनया औत्पत्तिक्यैव सनाथः सफलो भाविपतिभावः अस्माकं कृष्ण एव भावी पतिरिति तस्य भावेन भाविपतित्वेन तस्मिन् श्रीकृष्ण एव हृदये निहितो यो भावस्तदुचितः प्रेमा तेन सरसतया अपि बहिर्व्यञ्जितं ताटस्थ्यं गोपनार्थं तत्रौदासीन्यं याभिस्तासाम् तत्र दृष्टान्तः । निभृतम् अन्यजनालक्षितं यथास्यात्तथा निखातेन खनित्वा पृथिवीमध्ये स्थापितेन उक्तपोपन्यायेनाह **अयमेव न इति** ॥९७॥

कमपि तोषमिति कृष्णनाम्नः स्ववाच्यसाधर्म्यधत्वस्वरूपत्वात् ॥ ९८ ॥

---

* अवलोक इति निमित्तसप्तमी यतः अवलोकननिमित्तामितियावत् ।

+ श्रियं शोभां हरन्तीति श्रीहराणीति हरतेरनुद्यमनेऽच् अर्थादुद्यममन्तरेणापि तदीक्षणेषु कुवलशोभाहारित्वम् ।

तदन्तरान्तरारूढमहानुरागनिर्विण्णतया किंचन पद्यं हृद्यं श्रावयित्वैव पठति स्म। यथा दुरापजनवर्तिनी रतिरपत्रपा भूयसी गुरूक्तिविषवर्षणैर्मतिरतीव दौस्थ्यं गता। वपुः परवशं जनुः परमिदं कुलीनान्वये न जीवति तथापि किं परमदु-* र्मरोऽयं जनः ॥ ९९ ॥

स च शुकः परगविदग्धः प्रागेवाऽधीतसकलविद्यस्तदपि पद्यं श्रावं श्रावमेव कण्ठे चकार। तस्मिन्नेव समये स्वभावपक्षिभावेन स्वातन्त्र्यमासाद्य परिपुष्टोऽपि कृष्ण ! कृष्णेति तदुक्तं पठन्नपि तत्करकमलतः समुड्डीय गगनमुत्पपात। अनन्तरमुड्डयनाऽप्रवीणतया पुरभवनपटलात् पुरभवनपटलान्तरं निपतन् क्रमेण गोकुलराजकुमारस्य भवनालिन्दे निपत्य कलकोमलस्वरेण किमपि रञ्जयन् "दुरापजनवर्तिनी रतिरित्यादि" तदेव पद्यमगासीत्। तदाकर्ण्य कर्णरम्यमहो! किमिदमिति सविस्मयकौतुकमये! कोऽसि कस्याऽसीति। व्रजराजकुमारतस्मा-दातुकामः स्वयमेव तदभ्यासमभ्यागच्छन्तं पुनः पठ्यतामिति समणयमुवाच। स च तत् पुनः पपाठ ॥ १०० ॥

कृष्ण आह महामहामेध ! मे धन्यीकृतं त्वया श्रवणयुगलं परमविद्वत्तर! वचसा च साम्प्रतं ततस्त्वमतीवधन्योसि। स आह। व्रजराजनन्दन! अतीवकृतघ्नोऽयं जनः कथं धन्योसीति वृथा स्तूयते।

यदयम्। गाढानुरागभरनिर्भरभङ्गुरायाः कृष्णेति नाम मधुरं मृदु पाठयन्त्याः।
धिङ्मामधन्यमतिचञ्चलजातिदोषाद्देव्याः कराम्बुरुहकोरकतश्च्युतोस्मि ॥

श्रीकृष्ण। अहो! महानुरागवत्याः कस्याश्चित्करतलल्लालितोयं भविष्यतीति मनसि विभाव्य। अये! क्षणमिहैव स्थीयतां यावदहं तवाऽभीष्टमास्पदं प्रापयामीति करकमलं प्रसारयामास। स च निःसाध्वसमेव तदिच्छामतिपालनलालसतया तत्करकमलमारुरोह। तदेवमवसरे कश्चिदुर्वीगीर्वाणपुत्रः कुसुमासवो नाम वटुः श्रीकृष्णस्य हासप्रियसखः समागत्य वयस्य! महाविदग्धोऽयं शुकः केलिकौतुकाय संपत्स्यते यत्नादयं रक्षणीयः इति दाडिमीबीजनिकरेण तमनुतर्पयति ॥ १०१ ॥

---

तदन्तरा तन्मध्यएव अयं मल्लक्षणो जनः ॥ ९९ ॥

तं शुकं कीदृशं स्वयमेव तदभ्यासंकृष्णसमीपम् आभिमुख्येनागच्छन्तं वस्तुदात्त्यैवाकर्पणादिति भावः। मेधा धारणावती बुद्धिः। वचसाचेति चकारात्तव स्वाभाविककूजितेनापि। व्रजराजनन्दनेति पूर्वं कदाचिद्भूतले वनाय गच्छन्तं कृष्णमालोक्य तेन शुकेन कोयमिति पृष्टया विशाखया व्रजराजनन्दनोयमिति परिचायितत्वात् तस्येति ज्ञेयम्। १००।

उर्वीगीर्वाणो विप्रः। हासप्रियसखो विदूषकाख्यः ॥ १०१ ॥

---

* दुःखेन म्रियत इति कर्मणि खलन्तस्य विधात्रेति कर्तृपदमध्याहार्यम्।

तत्रैव समये कृष्णानुरागभरपराभवभज्यमानमृदुलाङ्गी सा किल वृषभानुदुहिता करलादुड्डीय गतं तं शुकं गवेषयितुकामा कामप्यनुचरीमाह । मधुरिके! धात्रेयीमिमामादाय गवेषय कुतो गतवानयं शुकशावक इति प्रहिताऽनुचरी धात्रेय्या सह तत इतोऽन्वेषयन्ती दैवान्निजपुरगोपुरपरिसरे वसन्त वसन्तं मधुनेव कुसुमासवेन सह तमेव लालयन्तं लयं तं गतं तस्मिन्नेवानन्दे तत्परिपठितपद्यद्वयार्थानुभवभवदतिहृदयगाढवेदनावेदनाय जनमन्यमपश्यन्तं स्वहृदयेनैव सह विचारयन्तं चारयतं च ध्यानलब्धायां तस्यामेव मनो मनोरमं कृष्णमालोकयामास ॥ १०२ ॥

आलोक्योपसृत्यच जयति जयति श्रीव्रजराजकुमारः पीतांशुक ! शुक एष मद्देव्याः । तदयं सदयं सरसभावेन दीयतामात्मनो यशःपरिमलो विमलो विविध एव ते गुणगुणः किमपरं ब्रवीमि ॥ १०३ ॥

कुसुमासव आह । तव देव्या अयमिति किमत्र निगमनं नागमनं नापि वचस्ते । यदि भवति तदाहूयतामाहूतश्चेत्तव करमारोहति । तदा संभाव्यते तावक इति ॥ १०४ ॥

साह वटो ! व्रजराजकुमारकरकमलस्पर्शाय को न स्पृहयति । यदस्याऽऽस्वादमनुभवन्ती अचेतनापि वंशी कदापि न परिहरति । किमुतायं चेतनः पक्षी ? १०५

तत्कुमार ! सा नो देवी शुकादिगीतगुणचरितं प्रति परमलालसा । तद्विना क्षणमपि न निर्वृणोति । तदयं दीयतामिति ॥ १०६ ॥

---

धात्रेयीं धात्र्याः पुत्रीम् । वसन्तम् ऋतुराजमिव तं कृष्णमालोकयामास । मधुनेव चैत्रेणेव । तमेव शुकं लालयन्तम् । तस्मिन्नेव लालनाम्के आनन्दे लयमत्यासक्तिं गतम् । तमिति कृष्णविशेषणं लयविशेषणं वा तेनशुकेन पठितं यत् पद्यद्वयम् प्रथमं वृषभानुसुतोक्तं दुरापेति द्वितीयं शुकोक्तं गाढानुरागेति प्रथमे स्वानुरागो व्यङ्ग्यः द्वितीये वाच्यः तस्य पद्यद्वयस्यार्थानुभवेन हेतुना भवन्ती अतिशया या हृदयगाढवेदना तस्या वेदनाय ज्ञापनाय। १०२

हे पीतांशुक! हे पीताम्बर! आदीयतां गृह्यताम् ॥ १०३ ॥

निगमनं ज्ञापकम् ॥ १०४ ॥

आस्वादमनुभवन्ती अचेतनापि वंशीत्यनेन स्वदेव्यास्तत्रानुरागोऽपि भङ्ग्या अभिव्यञ्जितः? १०५

तत्तस्मात् कुमार ! हे युवराजकृष्ण !। युवराजस्तु कुमार इत्यमरः। शुकादीनां गीतं च गुणश्च चरितं च प्रति परमा लालसा यस्याः सा । आदिशब्दात् शारिकाहंसाश्च पक्षे शुकादिभिः श्लेषेण व्यासपुत्रादिभिर्गीतानि गुणाश्चरितानि च यस्य तं श्रीकृष्णम् । तद्विना तदीयगुणचरितं विना । यद्वा शुकादिभिर्गीतं यद्गुणचरितं तद्विना तस्य कृष्णसंबन्धित्व प्रत्यासत्तिभङ्गीलब्धम् । अत्रादिशब्दात्सखीभिः सुहृद्भिश्च ॥ १०६ ॥

---

१ धात्र्या अपत्यं स्त्रियं धात्रेयीमिति ढ्यच इति ढगन्तम्।

कुसुमासव आह। भवति हि एवंविधगुणं नवकीरन्धनं न काः कामयन्ते १०७
साह तस्या एवायं कथमत्र कामना ॥ १०८ ॥
स आह का ते देवी। साह यथा यं ते वयस्यो व्रजराजस्य कस्यापि नन्दनः। सा च तथा नन्दिनी कतमस्य तमस्य भवतः साक्षात् किं भख्यापयामि ॥ १०९ ॥
स आह भवतु। कथमयमस्याभिर्दातव्यः। न चोरीकृत्य चोरीकृत्यमनेनानायि। नानायितकलालोभवत्यो भवत्यो मृषा दोषमासञ्जयितुं भ्रमन्ति ११०
दैवादयं शरणागतः। शरणागतवत्सलेनाऽमुनाऽरक्षि रक्षित्वा पुनः
कथं दास्यत इत्येवमवसरे व्रजेश्वरी तत्रागत्य वत्स! कथं विलम्बसे।

अन्नं शीतलतामुपैति नियतश्चाहारकालो ययौ।
मात्रा भोजितपायितास्तत इतः प्राप्ताः सखायस्तव॥
उत्कर्णं विकृतेक्षणं विवलितग्रीवं सहम्बारवं।
धेनूनां निचयैश्च तात भवतः पन्थानमुद्वीक्षते ॥ १११ ॥

तदे हि भोजनानान्तरं भोजनानन्तरङ्गानादाय गोष्ठमासीदेतियदोवाच। तदैवोपसृत्य कुसुमासव आह मातर्मातः परं कुतुकमस्ति ॥ ११२ ॥

हि निश्चितं भवति भवतु युज्यत एवैतदित्यर्थः नवकीरं नवीनं शुकं धनं धनत्वं का न कामयन्ते अपि तु सर्वा एवेति प्राप्तिस्तु दुर्घटेति भावः। पक्षे वकीरन्धनं पूतनाघातिनं कृष्णं का न कामयन्ते किंतु सर्वाः कामयन्तएव इत्यर्थः। तत्र एवंविधगुणामिति स्ववयस्यपक्षपातितामालम्ब्य तां प्रति अनिर्वचनीयाद्भुतगुणे मद्वयस्ये भवद्देव्या अनुराग उचित एवेति तस्या अभिनन्दनम्। पुनश्च वकीरन्धनमिति तस्याः पक्षपातितामालम्ब्य तूष्णींस्थितं सवयस्यं प्रति एतादृशानुरागवत्यामपि तस्यां स्वरागमनभिव्यञ्जयतस्तव स्त्रीवधेपि भयंनास्ति यतस्त्वया प्रथममेव सा पूतना घातितैवेत्युपालम्भनं द्योतितम् ॥ १०७ ॥ अयं शुकःपक्षे कृष्णः॥१०८॥
तं तस्याः पितरं व्रजराजतुल्यमित्यर्थः। अस्य धृष्टरूपस्य भवत इत्यर्थः। तेन सदृशान्वयजातत्वेनाऽपि तस्याः श्रीकृष्णेन सह प्रतियोगिता समुचितैवेति च सूचितम् ॥ १०९ ॥
अचोरश्चोरः संपद्यते तस्य कृत्यमिति च्विः। तत उरीकृत्य अङ्गीकृत्य अनेन मद्वयस्येन अयं शुको न आनायि न आनीतः। नानायितासु नानावदाचरन्तीषु कलासु नर्मशिल्पेषु लोभवत्यः। दोषमासञ्जयितुमिति शुकानयनव्याजेन मद्वयस्येन सह संवदितुं कंचित् क्षणं विलम्ब्य मङ्क्षया दूरमिराङ्गीकृत्य कयाचिदपि सह प्रवादान्तरमप्युत्थापयितुं भवत्यः शक्नुवन्तीति भावः। इयमाश्चर्यभङ्गयेव ननु वस्तुत आक्रोशः ॥ ११० ॥
भोजित पायिता इति प्रथमं भोजिताः ततः पायिताः पूर्वकालैकेत्यादिना समासः १११
भोः कृष्ण! जनान् सर्वान् अन्तरङ्गान् आदाय गोष्ठं गवां स्थानम् आसीदप्राप्नुहि ११२

१ दूतस्यकर्म दूत्यमिति दूतस्य भागकर्मणी इति यत्।
२ कदाचिदपीतिपाठेसम्भावनायामेव।

यदयं शुकः शुक इव परमबुधः । बुध इव कलानिधिभूः । निधिभूरिव सर्वजनागोचरः । चर इव सर्वहृदयाग्रहः । दयाग्रहइव चेतोद्रवास्पदम् । पदमिव विभक्तियुक् । भक्तियुगिव प्रियम्वदः । वद इव मेधावी ॥ ११३ ॥

धावीव समुत्कण्ठः । कण्ठ इव सर्वस्वराश्रयः । स्वराश्रय इव सुमनाः । सुमना इव शान्तिकमनः ॥ ११४॥

मन इव दुर्द्धरः । धर इव स्थिरस्थिरचरचमत्कारकारः ॥ ११५ ॥

सहसा सह साधूत्कण्ठया समुड्डीय वयस्यकरे पतितः । तदस्य विविधकलापेनाऽऽलापेनाऽतिचमत्कृतमना मनागत्र वयस्यो वयस्योतेन प्रणयेन विलम्बेऽलं वेदनयाऽनया किंच शुकोऽयं वयस्येन मादृशादप्यधिकं प्रणयपात्रीक्रियते ११६

तदन्तराऽन्तरारूढमदा मदासञ्जितदोषा गोपकुमारीयं मद्देव्याः शुकोऽयमिति वदन्ती नेतुमभिलषति । तेनाऽनयाऽनयाद्दत्तमुत्तरं वयस्यं व्यथयति । व्रजेश्वरी तदुक्तमाकर्ण्य पार्श्वतो विलोक्य कथमिहैव मधुरिकेति सानुग्रहं करेणामृशति । ११७।

---

शृङ्खलाप्रयरसनारूपकेण शुकं वर्णयति । शुक इव वैयासकिरिव । बुध इव चतुर्थग्रह इव कलानिधिभूश्चन्द्रपुत्रः पक्षे कला वैदग्धी सैव निधिस्तं प्राप्तः भू प्राप्तौ क्विबन्तः । निधिभूर्निधिक्षेत्रम् । सर्वेषां हृदयं मनः आसम्यक् गृह्णातीति सः पक्षे सर्वेषामेव मनस आग्रहो यत्र सः । ॥ ११३ ॥

दयारूपो ग्रहो दयाग्रहः । विभक्तयः स्वादयो गुणवैलक्षण्यरूपाविभागाश्च । भक्तियुग्भगवद्भक्तः । वदः सिद्धान्तवक्ता । धावी धावनपरः समुत्कण्ठः सम्यगुद्गतः उच्चीकृतः कण्ठो यस्य सः पक्षे समीचीना उत्कण्ठा अध्ययनादिविषया असमत्सान्निधिस्थितिविषया वा यस्य सः। स्वराश्रय इव स्वर्गवासीव सुमना देवः । सुपर्वाणः सुमनस्त्रिदिवेशा इत्यमरः । पक्षे सुमनाः कोविदः । सुमनाः पुष्पमालत्योस्त्रिदशे कोविदेऽपि चेतिविश्वः । सुमना इव साधुरिव शान्त्या शान्तिगुणेन कमनः कमनीयः ॥ ११४ ॥

दुर्धरः धर्त्तुमशक्यः उपमेयस्यैव प्राधान्यात् पुंस्त्वम् धरः पर्वतः ॥ ११५ ॥

*साधु यथा स्यात्तथा उत्कण्ठया सह वर्त्तमानः । यद्वा साध्वी या उत्कण्ठा तया विविधाः* कलाः पातीति तथाभूतेनाऽऽलापेन वयसि पक्षिणि ओतेन ग्रथितेन प्रणयेन हेतुना विलम्बे प्रेम्णा तल्लालनार्थं विलम्बितवानित्यर्थः । अत एव अनया अन्नं शीतलतामित्यादिना व्यञ्जितया वेदनया अलम् ॥११६॥

तदन्तरा तन्मध्य एव । अनयात् अनीतिमालम्ब्य अनया गोपकुमार्य्या उत्तरमिति कर्तृपदम् ॥११७॥

---

१ प्रियंवदतीति प्रियम्वदः प्रियेवशेवदः खच् । पदे वदतीति वदः पचाद्यच् ।
२ मेधास्तस्य समेधावी अस्माया मेधास्रजो विनिः । ३ धावनं धावः सोऽस्यास्तीति ।
४ सर्वेषां स्वराणामाश्रयः । ५ स्वः स्वर्ग आश्रयो यस्य स इव । ६ । शोभनं मनो यस्य ।

सा च ससाध्वसभक्तिश्रद्धं प्रणम्य व्रजाधीश्वरि न मया किमप्युक्तं महेन्द्या राधाया अयं शुकः क्रीडोपकरणमनेन विना सा खिद्यतीति केवलमहमवोचम् ११८

सा चाह निभृतं मधुरिके ! त्वमधुना भवनमनुसर वत्से वनं गतवति मयैवाऽयं शुको भवद्देव्यै प्रेषयितव्यः । मधुरिका च यथाऽऽज्ञापयति तत्रभवतीति प्रणम्य निश्चक्राम । ततः सा व्रजेश्वरी तनयस्य करकमलमाधृत्य एहि वत्स ! एहीत्युत्थाप्य कुसुमासव ! शुकमेनमात्मनैव सावधानं रक्ष भक्षय चैनं कनकपुटिकया घृतौदनमिति यदा निगदति स्म तदा श्रीकृष्णं समुवाच । । मयैव भोजयितव्योऽयमिति करकमलकृतशुकः पीतांशुकः पीतां श्रवणपुटकेन तां गाथामन्तरमनुपठन् । तदुत्तररूपं किञ्चन पद्यंशुकं श्रावयित्वा जनान्तिकं कुसुमासवमामन्त्र्य पठति च ॥१२१॥

सखेकुसुमासव ! नै ननगेमने नाँर्प्यासैङ्के वयस्यगणैः सैमं नैं चे मुरलिकानादे मो दो नै धेनुगणावेने । ईममशृणैवं यावेत्कीरोत्तमाननिःसृतं कमैपि दयितालापं गाढानुरागभरालसैम् ।

इति मातुरनुपदं पदकमलमाधाय क्षालितपदो भोजनासनमध्यास्य भुञ्जानः स्व संमुखे कनकपुटिकायामात्मनैव श्रीकरकमलेन सुरभितरघृताक्तमोदनं शुकमाशयामास ॥ १२२ ॥

अनन्तरमाचान्तः पूर्वपूर्वदिनवदनुगवीनो जिगमिषुर्जननि ! जननिरपेक्षतया रक्षितव्योऽयं शुक इति सप्रणयं स प्रणिजगाद । ततश्च गतवति सति धेनुपालनाय विपिनमध्यं लीलाकिशोरे श्रीकृष्णे धात्रीदुहित्रा राधाशुकं राधागृहे प्रेषयामास श्रीकृष्णजननी।तामथ करकमलकलितशुकां श्रीकृष्णजननीधात्रेयीमालोक्य श्यामलया सखीभ्यां च सहसोत्थाय एह्येहि इति सबहुमानमाहूय निजासनार्द्धमध्यारोप्य भवति कुशलं तत्र भवत्याः श्रीव्रजेश्वर्याः इति सप्रणयभक्तिश्रद्धं निगदति स्म वृषभानुकिशोरी । साह कल्याणिनः खलु ते चरणाः ॥ १२३ ॥

सा च मधुरिका ससाध्वसेति कदाचिद्व्रजेश्वरीमपि खिद्येदिति भावनयासाध्वसम् भक्तिश्रद्धे तु साहजिक्यावेव । राधाया इति अत्र नामगोपनस्याऽयुक्तत्वात् ॥११८॥

जनान्तिकमिति तृतीयजनाज्ञाप्यम् । श्रावयित्वेति तत्कण्ठस्थीकृतेन पुनश्च स्वभावादेव राधाग्रे पठिष्यमाणेन तेन पद्येनैव स्वानुरागव्यञ्जनया तामाश्वासयितुमिति भावः ॥ १२१ ॥

गाढेन अनुरागभरेण अलसम् आलसति प्रकाशते इति तथा तम् अस्यातिगुरुत्वात् वोढुमसमर्थमिवेति भावः ॥१२२॥

शुकेन कीदृशनआदु शर्म कं सुखं यस्मात्तेन । कुमारः कृष्णः कुमारयति स्म क्रीडितवान् । चिरं रुचिरं रुतं च आमम्रक् श्रुत्वा श्रुत्योः कर्णयोरपरिमेयतोषं प्रासः दितवान् गर्ग्हितवांश्च तदा गाभूतात्कुङ्कुमुवोभूयस तदानीं स्वपरयतां त्रिविधतापं खण्डितवानित्यर्थः ॥ १२४ ॥

किन्तु तत्राऽमुना शुकेनाऽऽशुकेनानन्दितःकुमारः कुमारयति स्म चिरं रुचिरं रुतं चाश्रुत्य श्रुत्यपरिमेयपरितोषमासादितवान् दितवान् चक्षुष्मतां तापत्रयं च १२४

अथ तस्मिन् धेनुचारणाय वनं गतवति तव तिलमात्रदुःखासहनयाऽनया समर्य्यादया दयावत्या त्वयि त्वऽयि ! कुशले ! कुशलेशमात्रमपि विलम्बमकुर्वाणया मेषितोऽयं खगोत्तमो व्रजेश्वर्या ॥ १२५ ॥

श्यामाह । सुवदने ! वद नेदम् । इह गोकुले गोपकुले गोपनीयमगोपनीयं वा यत् किंचन रत्नभूतं भूतं भूतंसरूपं तत्सकलमेव व्रजराजनन्दनस्य नन्दनस्य विहगोत्तमेभ्योऽप्ययमयंसौभगवान् भगवान् यममुं करे चकार ॥ १२६ ॥

तदयं तस्यैव खेलोपकरणं करणीयः । किन्तु सम्प्रति प्रतिप्रेषणमसाम्प्रतम् । साम्प्रतं गच्छतु भवती पश्चाद्गतागतललितया ललितयाऽयं धेन्ववनतो वनतो भवनमागत एव तस्मिन् व्रजेश्वरीसमक्षं समर्पणीयः ॥ १२७ ॥

सुमुख्याऽऽह । सुमुख्याऽऽह सुललितमेव श्यामा तद्गम्यतां गम्यतां प्रापय मे-नतिविततीनामीश्वरीचरणान् ॥ १२८ ॥

गतायामथ तस्यां सा वार्षभानवी नवीनकृष्णानुरागपरभागभागभिमुखमागतं तं विहगोत्तममयि धन्य ? धन्यऽसि सौभाग्यधनेन त्वं यदऽमुष्य दुर्लभजनस्य

अनया श्रीव्रजेश्वर्या त्वयि तु दयावत्या अपि संबोधने हे कुशले कुशलेशो दर्भसंबन्धी अतिसूक्ष्मांशविशेषस्तदतिक्रमे सूर्य्यस्य यावान् कालो भवति तन्मात्रमपि ॥ १२५ ॥

श्यामाहेति तया स्वहृदयस्य राधिकाहृदयेन सहैक्यनिश्चयात् । रत्नभूतं रत्नरूपं भुवत्तंसरूपं भूषणरूपं भूतम् अभूत् । नन्दनस्य स्वर्गोद्यानस्य । भगवानिति सखीं प्रति प्रणयपरिहासव्यञ्जना । यद्वा श्रीमान् । भगं श्रीकाममाहात्म्यवीर्य्यरत्नार्ककीर्त्तिषु इत्यमरः ॥१२६॥

असाम्प्रतमनुचितम् ॥ १२७ ॥

सुमुखी श्यामा सुललितमेवाह । तत्तस्मात्त्वया गम्यताम् ईश्वरीचरणान्मे मम नतिविततीनां प्रणतिसमूहानां गम्यतां प्रापय । नतिविततीनामिति कृत्यानां कर्त्तरि चेति षष्ठी । ईश्वरीचरणा, मम नतिभिर्गम्या इति ज्ञापयेत्यर्थः । अत्र यदि श्रीमत्या व्रजेश्वर्य्या स्वपुत्रसौख्यमनपेक्ष्याऽप्यस्मासुस्निग्धतयाऽस्मत्सुखमनुरुन्धत्या प्रेषितोऽयमास्माकीनः शुकः तर्ह्यस्माभिरपि तत्पुत्रसौख्यानुमोदनेनैव प्रसादनीया सा परमवत्सला गरीयसीति स्वाभिप्रायं ज्ञापिता तया धात्रेयी । वस्तुतो मूलाभिप्रायस्त्वस्याः कृष्णसंगतेन स्वीयशुकेनैव स्वसंगमसुखमभिमन्यमानायाः ममः परमविदग्धेन शुकेनैव तत्प्रीतिपात्रीभवता सर्वाभीष्टं साधयिष्यते इत्येषोपि न मुख्यः । किंतु प्रेम्णो रीतिरेवेयं यत् प्रियतमस्य प्रीत्यर्थमेवात्मदेहप्रियवस्त्वादि भवतीति ॥१२८॥

नवीनकृष्णानुरागस्य पर भागं शोभाम् उत्कृष्टभागं वा भजत इति सा । सौभाग्यधनेन हेतुना त्वं धनी धनवानसि । सुखाकर इति सुखाप्रियादानुलोम्ये इति डाच् । यद्वा सुखस्याकरो यः करस्तस्य स्पर्शः । भिया अलमिति हन्तासमीक्ष्यकारिणा मया लालयन्त्या अपि,

सुखाकरकरस्पर्शस्त्वया भो अलम्भि । अलं भियाऽभियाहि मत्पाणौ ॥१२९॥

भवन्तं स्पृशन्ती शं तीव्रमनुभवानीति नीतिमती तं पाणीकृत्य कथय किमाकलितमिति यदा बभाषे बभाषे च तदा सोऽपि ॥ १३० ॥

मया निगदितं वचः श्रवणवर्त्म यावद्ययौ ।
स तावदति दुःस्थितो मनसि कैश्चनाऽऽलक्षितैः ।
चरैरपि निजैः समं हृदि निगूढगाढप्रेमणः ।
किशोरवरवारेणोत्तम ईवाऽनिशं शीर्ष्यति ॥ १३१ ॥

उक्तं च सखायं लक्षीकृत्य जनान्तिकं सखे! कुसुमासव! । न वनगमने नाप्यासङ्गेवयस्यगणैःसमं न च मुरलिकागाने मोदो न धेनुगणावने । इममशृणवं यावत् कीरोत्तमाननिःसृतं कमपि दयितालापं गाढानुरागभरालसम् श्यामाह। मा हसनीयास्मि । सम्प्रति प्रतिपन्नं मे वचनं च नन्दयितुं दयितुं चार्हसि यदयं दयितालाप मिति दयितात्वेन भवतीमुरीचकार॥१३२॥

मुख्याह । श्यामे! श्यामेरितं नाध्यबोधि बोधिद्रुमदलोदरि! मा परिहासकर्मधारय कर्मधारय एवाऽयं न षष्ठीतत्पुरुषः ॥ १३३ ॥

भवत्याः पाणितो जातिस्वाभावादुड्डीय गत्वा अपराद्धमेव कथं पुनस्तत्रैव पाणावुपविशामीति भयं नकर्त्तव्यमित्यर्थः । अभियाहि आभिमुख्येनैव मत्पाणावागच्छ ॥ १२९ ॥

भवता नापराद्धं प्रत्युत मदभीष्टमेव साधितमित्याह भवन्तमिति । भवन्तं स्पृशंती सती तीव्रं निर्भरं शं सुखम् अनुभवानीति त्वत्स्पर्शेन परम्परया ममापि तत् पाणिस्पर्शाभिमानो भवत्विति भावः ॥ १३० ॥

श्रवणवर्त्मेत्यत्र तस्येत्यनुक्तिः प्रेमवैवश्येनैवेति न्यूनपदतादोषो नाशङ्कनीयः । कैश्च कैरपि मनसि दुःस्थितः न था सम्यक् लक्षितः ईषत्तु चतुरजनैर्लक्षित एवेत्यर्थः । तस्यातिगाम्भीर्येपि तादृशत्वद्विषयकभावस्य दुर्गोपत्वादिति भावः । ॥ १३१ ॥

मा हसनीयास्मि अतः परमहं त्वया हसितुं न शक्याऽस्मि मे वचनं नन्दयितुं दयितुं च रूपयितुंच अर्हसि न तु पूर्ववन्निन्दितुं नात्युपक्रममात्र एव च्छेत्तुमिति भावः ॥ १३२ ॥

श्यामस्य ईरितं वाक्यं न अध्यबोधि भवत्या न ज्ञानम् । बोधिद्रुमस्य अश्वत्थस्य दलवदुदरं यस्या हे तथाभूते! इति सौन्दर्येणैव मत्तस्त्वमधिका बाह्मी न तु विमर्शनैपुण्येनेति भावः । परिहासरूपं कर्मधारयं मा कुर्वित्यर्थः । यतो दयितालापमित्ययं समासः कर्मधारय एव ननषष्ठीतत्पुरुषः । ततश्च दयितश्चासावालापश्चेति तम् । मेधाविनोऽर्धीतशास्त्रस्य शुकस्याऽऽलापो निसर्गादेव सकलस्यैवास्य प्रियो भवत्येव किं पुनः सदाक्रीडापरस्य तस्य । अनुरागभरालसमित्यशृणवमिति क्रियाविशेषणं स्वरूपमेवेति तत्र व्याख्यातम् । मया निगदितं वच इत्यादि तु शुकस्य पद्यप्रमाणमेव ॥ १३३ ॥

तत्पुरुषः स खलु दुर्लभ एव किमसंभावनया तया मामतिलघूकरोषि ॥१३४॥

भवतु परमाद्भुतस्य तस्य दशा तादृशीदृशीमन्दभागधेये जने कथमीयतेऽनुमीयते नु वा कथं भवत्या ॥ १३५ ॥

भवत्यात्मसमापि समार्पितोपरोधा परिहासे हा ! सेधयति कौतुकम् ॥१३६॥

माह ! अयि ! असमीक्ष्यभाषिणि ! मधुरिका तेऽनुचरीति गोकुले को न वेत्ति सेयं यदा मदीयदेव्याः शुकोयमित्याऽऽललाप तदैवासौ भवतीमबोधिष्ट । तदलमत्राऽसंभावनयेति विश्रान्तो विवादः ॥ १३७ ॥

अथैकदा भगवज्जन्मतिथिरतिथिरभूद्यादि । तदा महामहारम्भेऽरं भेरीभाङ्कारलम्पटपटहपटुमर्दलदलन्मुरजदुन्दुभिदम्मदम्मकार–चमत्कारकारि–नानाध्वनिध्वनिते ॥ १३८ ॥

---

तत्तस्माद्धेतोः स खलु पुरुषो दुर्लभ एव इति प्राक्तनमद्वाक्यमेव प्रमाणं त्वद्वचनं तु युक्तिछिन्नमिति भावः ॥ १३४ ॥

ननु षष्ठीतत्पुरुषस्त्वया कथं खण्डित इत्यत आह भवत्विति । तुष्यतु न्यायेन स्वीकारे भवतु षष्ठीतत्पुरुषस्तथापि परमाद्भुतस्य तादृशी भवत्या व्याख्याता दशा ईदृशि अल्पभाग्य मल्लक्षणे जने विषये कथम् ईयते ज्ञायते निर्द्धार्य्यते भवत्या इत्यर्थः । अनुमानादिति चेत् नु प्रश्ने कथं वा अनुमीयते तत्र तादृशो हेतुरुच्यतां स तु नास्त्येव तस्मादपरस्यामेव कस्यांचित् तथाऽसंभवेदिति भावः ॥ १३५ ॥

आत्मसमा मत्समापि भवती । समार्पितः समारोपितः उपरोधो यया सा । हा खेदे । परिहासे विषये कौतुकं सेधयति सिद्धं करोति । सिधु संराद्धौ ण्यन्तः । न तु मद्वचधोपरोधेन व्यथिता भवती प्रत्युत कौतुकवती परिहसत्येव मां तस्मान्मय्यनुरोधस्तव नास्तीत्यर्थः ॥ १३६

हे असमीक्ष्यभाषिणि ! अपर्य्यालोच्यैव सर्वं ब्रूषे इत्यर्थः । आत्मन्ययोग्यतामध्यारोप्य दैन्यादेवेति भावः ॥ १३७ ॥

अथ "स्वप्नाद्वा श्रवणाद्वापि चित्रादेर्वाऽवलोकनात् । साक्षादाकस्मिकाद्वापिदर्शनाद्दुर्लभे जने । प्राक्तनीरतिरुद्भूते" त्याद्यलङ्कारकौस्तुभोक्तहेतुवैविध्येन जातपूर्व्वरागाणां विविधानामिव तासाम् । लालसोद्वेगजागर्य्यास्तानवं जडिमाऽत्र तु । वैयग्र्यं व्याधिरुन्मादो मोहो मृत्युर्दशा दशेतिपूर्वदर्शितदशदशाप्रापिततादृशविपदां संधुक्षणार्थमिव शुभदैवयोगादेकस्मिन् दिने सर्वासामिव युगपदेव साक्षाद्दर्शनसमीपगमनोपायनप्रदानादिकमपि घटितमित्याह । अथैकदेति तदा महामहारम्भे अर्जिते श्रीकृष्णे दिव्यासनमारूढे । गोपगोपाङ्गनाश्च प्रत्येकतं पूजयामासुरित्यन्वयः । महामहो महोत्सवस्तस्यारम्भे कीदृशे अरं द्रुतमेव भेरीणां भाङ्कारैः लम्पटैः प्रौढनिनदौद्धत्यवाद्भिः पटहैः पटुमिर्दद्भिः स्वशब्दनचातुर्य्यवद्भिर्मर्द्दलैर्दलद्भिः प्रस्फुटत्स्वनितैर्मुरजैर्दुन्दुभीनां च दम्मदम्मकारैश्चमत्कारकारिणो ये नानाध्वनयस्तैरेवं ध्वनिते नानादिग्देशागतजनान् प्रतिध्वनिते ॥१३८॥

अध्वनि तेषां घोषजुषां घोषजुषां समेधमाने मेधमाने परमानन्दे ॥१३९॥

द्विजवृषभसभोदीरित-मन्त्रपूतसलिल-परिपूरित-स्फटिक-घट-सहस्रधा-रा-घट-सहस्र-धारा घटमानाभिषेक-मङ्गलामङ्गलावण्यलक्ष्मीं दधाने ॥ १४० ॥

धृतनव्य दिव्यधीतकौशेयप्रत्युद्गमनीयेप्रत्युद्गमनीयेन मणिमण्डनमहसा महस्सारूप्यमहौज्वल्ये ॥ १४१ ॥

मङ्गलमणिबन्धमणि बन्धवलयो परिपरिचित हरिद्राक्तसूत्रेणनद्धदूर्वाङ्कुरे गोरोचनारोचनायतविशेषक-विशेष-कमनीये ॥१४२॥

जनन्या जनन्यायविदां प्रवरयोत्सवरयोत्सवदामोदयादयाशीलया शिरसि निहिताशीः कुसुमधान्ये सबहुमानमाहूताभिर्व्रजपुरपुरन्ध्रीभिर्मङ्गलगानपुरस्सरं सरन्तीभिः कृतनीराजने ॥ १४३ ॥

जनेन सकलेन कृतकौतुकयौतुकयौगपद्ये समनन्तरमनन्तरसोपकरणमोदकपायसापूपादिभिराहितसौहित्ये ॥ १४४ ॥

---

ततश्चाऽध्वनि पथि घोषजुषां व्रजवासिस्त्रीपुरुषसामान्यानां घोषजुषां स्त्रीयनूपुरादिमृदङ्गादिशब्दयुक्तानां समेधमाने सम्यक् वर्द्धमाने मेधमाने परस्परं संगमवति परमानन्दे सति। मेधृ संगमे ज्ञानजन्तः ॥ १३९ ॥

ततश्च अजिते श्रीकृष्णे प्रथमं कीदृशे द्विजवृषभानां द्विजश्रेष्ठानां सभाभिरुदीरितेन मन्त्रेण पूतैः सलिलैः पूरिता ये स्फटिकघटसहस्रधारावटाः स्फटिकानां घटं घटने शिल्पविशेषविन्यासं सहस्रधा सहस्रप्रकारं रान्ति गृह्णन्ति धारयन्तीति "सोमपाशब्दवदाकारान्तः" तथाभूतैर्घटैर्याः सहस्रधारास्ताभिर्घटमानेनाऽभिषेकेण मङ्गलां मङ्गलभूताम् अङ्गानां लावण्यशोभां दधाने धारयति सति ॥ १४०॥

ततश्चार्द्रशुष्कसूक्ष्मशुभ्रवस्त्रैर्गात्रजलापसारणं ज्ञेयं ततो वस्त्रादिपरिधानम्। प्रत्युद्गमनीये धौतोत्तरीये। तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगमित्यमरः। प्रत्युद्गमनीयेन प्रत्युत्कर्षितेयेन मणिमण्डनानां महसा कान्त्या महस्य उत्सवस्य सारूप्येण तुल्यत्वेन महत् औज्वल्यं यस्य तस्मिन् ॥ १४१ ॥

ततश्च मङ्गल्यान्येव मणयस्तेषां बन्धो यत्र तथाभूतस्य मणिबन्धस्य वलयोपरिपरिचितेन हरिद्राक्तसूत्रेण नद्धो बद्धो दूर्वाङ्कुरो यत्र तस्मिन्। ततो गोरोचनया रोचनायतं कान्त्या विस्तृतं यद्विशेषकं तिलकं तेन विशेषतः कमनीये ॥ १४२ ॥

उत्सवरयस्य उत्सववेगस्य उत्सवः उत्कृष्टः सवः प्रसवः उत्तपत्तिस्तं ददातीति तथाभूत आमोदः आनन्दो यस्यास्तयाकृतनीराजने कृतनिर्मञ्छने ॥ १४३ ॥

ततश्च सर्वजनेन कृता निष्कौतुकेन यौतुकानि उत्सवे देयानि वस्तूनि तेषां यौगपद्यं तुल्यकालत्वं यत्र तस्मिन्। तदानीं पूर्वपश्चाद्भावमसहमानाः सर्व एव युगपदेव यौतुकान्युपानदुरित्यर्थः। अनन्तरसान्युपकरणानि येषां तैर्मोदकादिभिराहितम् अर्पितं सौहित्यं तृप्तिर्यत्र तस्मिन् १४४

हित्ये सकलजन्यानां जन्यानां प्रेमधामनि। पुनरपि नीराजितेऽजिते दिव्यासनमास्वदेरूढेद्धमहसि ॥ १४९ ॥

महसिद्धिनिमित्तमित्तरलतासिद्धवन्धुवर्गनिमन्त्रणव्यवहारेण व्रजराजमहिष्या निमन्त्रितेषु व्रजपुरपुरन्ध्रीजनेषु वधूजनकुमारिकाजनेषु च। व्रजराजेन निमन्त्रितेषु द्विजवृषभेषु सन्नन्दोपनन्दप्रभृतिसकलाभीरनिकरेषु च ॥ १४६ ॥

सन्नन्दादिवधूभिः सह सकलगुणरोहिण्या पाचितैर्नानाविधैरुपकरणैराशयितुं समुचितसमयसमागमे सति पुनरपि प्रतिभवनं तांस्तानानाययितुं प्रेषितेषु स्त्रीपुंसपरिकरेषु। समागतानां तेषां सर्वेषां मध्ये यथाक्रमं गोपा गोपाङ्गनाश्च परमसुकुमारं कुमारं तमाशीर्भिरभ्यर्चयितुमुत्कण्ठमाना कण्ठमानाय्य मणिहारान् प्रत्येकं पूजयामासुः ॥ १४७ ॥

तदनु श्वश्रुम्मन्यानामनुपदीनाअदीनामपदीनाः मपन्नमालिन्यप्रतनुतरप्रावारविवरविवेव्रीयमाणतनुकिरणकन्दलीकाः ॥ १४८ ॥

हित्ये हितहिते। तस्मै हितमिति यत्। यद्वा हितार्हे दण्डादित्वाद्यः। सकलानां जन्यानां सामान्यतः स्निग्धवन्धूनां तथा जन्यानां विशेषतो व्रजेश्वर्याः सखीनां प्रेमास्पदे। जन्याः स्निग्धावरस्य ये इत्यमरः। जन्या मातृवयस्यास्यादिति धरणिः। पुनरपि ताम्बूलप्राशनानन्तरं नीराजिते ताभिरेव कृतारात्रिके अजिते श्रीकृष्णे इति विशेष्यपदम्, रूढं प्रादुर्भूतमिद्धं दीप्तं महो यस्य तस्मिन् ॥ १४५ ॥

महस्य उत्सवस्य सिद्धिनिमित्ते मित्तरलतया स्नेहतारल्येन सिद्धिः वन्धुवर्गाणां निमन्त्रणव्यवहारस्तेन। मिदिति ञिमिदा स्नेहने इत्यस्य भावे क्विपा रूपम् ॥ १४६ ॥

तांस्तान् पुरन्ध्रीजनादीन् द्विजवृषभादींश्च प्रेषितेषु स्त्रीपुंसपरिकरेष्विति व्रजेश्वर्या स्त्रीपरिकरेषु व्रजराजेन तु पुंपरिकरेषु इति यथाक्रमं पूर्ववज्ज्ञेयम्। कण्ठमानाय्य कुमारस्यैव कण्ठं प्रापय्य कण्ठे समर्प्येत्यर्थः ॥ १४७ ॥

श्वश्रुम्मन्यानां गणोद्देशदीपिकोक्तजटिलाभारुण्डादीनाम् अनुपदीना अनुपदं प्रतिशन्त्यः। अनुपदसर्वान्नायानयं वद्धाभक्षयतिनेयेष्वित्यत्र वद्धेत्यस्य पारतन्त्र्यमयप्रेवशवद्वाचित्वात्। खःप्रत्ययः। अदीनम् अतिबहुमूल्यम् आप्रपदीनं पादाग्रपर्य्यन्तव्यापि अन्तरीयवस्त्रं यासां ताः। आप्रपदं व्याप्नोतीति खः। प्रपन्नं मालिन्यं पूर्वरागलक्षणविरहजनितं यस्यास्तथाभूता प्रतनुतरस्य प्रकृष्टसूक्ष्मतरस्य उत्तरीयवस्त्रस्य विवरेभ्यः सूक्ष्मसूक्ष्मरन्ध्रेभ्योऽपि विवेव्रीयमाणा अतिशयेन विवृतिमती स्वप्रकाशकारिणी तनोर्देहस्य किरणकन्दली कान्तिश्रेणी यासां ताः। द्वौ प्रावारोत्तरासङ्गावित्यमरः ॥ १४८ ॥

१ आत्मानं श्वश्रूं मन्यन्ते यास्तासाम्, आत्ममाने खश्चेति खशः शित्त्वाच्छ्यन्, खित्वात् पूर्वपदस्य च मुम् ह्रस्वत्वे।

मृदुता-नव-तानवचलचीनावगुण्ठन-पटाञ्चल-चञ्चलैरन्तरुदि-त्वर-त्वरमाण-स्व-भाव-भाव-पिशुनैरपि तत्कालीनाऽवहित्थया निर्विकारकुटिलावलोचनैर्लोचनकुवलयैर्वलयैरप्यमुखरैः खरैरनुरागैस्ताः काश्चन नवानुरागिण्यो दैवोपपन्न-संपन्न-संस्तव-स्तवकित-सौभाग्यभाजनतया जननयाऽतर्क्यमाणया परममहानिधिवल्लभ-मानवल्लभमाननया दायदायमददत ॥ १४९ ॥

एवं मातॄणामनुपदीनाः स्वभावपतिभाव-भावना-सुरभिमनसो मनसो महोत्सवमिव तं दिनं दिनं प्रेक्षमाणा अपि तत्र महोत्सवे सविशेपसौन्दर्य्यदर्य्यऽवगाहनेन तदेकप्रथममिव दृश्यमानं दृश्यमानन्दितनिखिलजनपतिभावकर्पूरपूरभावितैर्मनः सुमनः सुसंभारैः स्वयं वव्रिर इव कन्या धन्यादिकाः ॥१५०॥

---

ताः काश्चन नवानुरागिण्यो दायदायं दायस्य दानम् अददत दत्तवत्यः । यौतुकादिपु यद्देयं स दाय इत्यमरः । दायमददतेति दानं दद्याद्रवां वचनमुवाच सत्यवादी सत्यं वदतीत्यादिवत् पौनरुक्त्यमविरुद्धम् । केन प्रकारेण मृदुतानवेत्यादिविशेपणविशिष्टैर्लोचनकुवलयैः परम-महानिधिवल्लभमानवल्लभा या मानना संमानना तया । परममहानिधिरूपो यो वल्लभः कृष्णस्तस्य मानवती आदरयुक्ता लभा लाभो यस्या यया वा तथाभूता चासौ मानना चेति तया। लभेति डुलभप् प्राप्तावित्यस्य पित्वादङ् कीदृश्या जनतया तत्रत्यजनसमूहेन अतर्क्यमाणया। लोचनकुवलयैः कीदृशैः मृदुतया कोमलतया नवेन तानवेन निर्माणवैरल्यकल्पितया श्लक्ष्णतया च चलं स्वभावादेव चञ्चलं यच्चीनस्य सूक्ष्मसूत्रस्य अवगुण्ठनपटस्य अञ्चलं तस्माच्च चलैस्ततो निःसृत्य चलद्भिरित्यर्थः । अन्तःअन्तः करणे उदित्वरः उदयशीलः त्वरमाणस्त्वरायुक्तः स्वभावो यस्य तथाभूतो यो भावश्चापलाख्यसंचारी तस्य सूचकैरपि तत्कालीनया तत्कालजनितया अवहित्थया लज्जाहेतुकतादृशभावगोपनेन हेतुना निर्विकारमेव कुटिलं तिरश्चीनमवलोचनमवलोको येपु तैः । अमुखरैः निःशब्दैः वलयानाममौखर्य्यं संकोचप्रश्रयाभ्यां सौशील्यव्यञ्जकम् । हस्ताभ्यां गृहीत्वा दायप्रदानसमये तेपां तत्प्रसक्तिः स्यादिति निषेधः । खरैस्तीक्ष्णैरतिगाढैरित्यर्थः । कया योग्यतया तादृशसंमाननेत्यपेक्षायामाह दैवेन शुभादृष्टेनैव उपपन्नो यः संपन्नसंस्तवः संपूर्णपरिचयस्तेन स्तवकितं तादृशपुष्पफलार्थं कोरकितं यत्सौभाग्यं तस्य भाजनतया पात्रतया ॥१४९॥

तं श्रीकृष्णं दिनंदिनं प्रेक्षमाणा इत्यर्थः । हेमन्ते प्रथमे मासि नन्दव्रजकुमारिका इत्यत्र कात्यायनीव्रतस्य तन्मूलनगरोत्पन्नत्वात् मूलत एव कृष्णेन सह परिचयोऽस्तीति वैष्णवतोषण्या व्याख्यानात् । सौन्दर्यदरी सौन्दर्य्यकन्दरा तस्या अवगाहनेन लोचनद्वारामनसैवेति भावः दृशं दृग्भ्यां हितं दृश्यमानं प्रथमश्रियमाणम् पतिभावेन कर्पूरपूरेण भावितैर्वासितैर्मनोभिरेव सुमनांसि पुष्पाणि तान्येव शोभनाः संभाराः तैः ॥१५०॥

एवं च सति समसमवधानसंगोपितसकलाकारविकारविशेषतया विशेषेणालक्ष्यमाणासूक्ष्यमाणासूत्तमेन मन्दाक्षेण सकलास्वेव नवगोकुलकुलललनासु ॥१९१॥

चिरोपसत्तिसत्तिमितहृदयतयाऽऽयतया व्रजराजकुमारसमीपतो पतोदमुतपत्य चरणकमलोपरि परिपतति पतति तस्मिन्नेव ससंभ्रमं तदीयत्वेनाऽऽधीयमानबहुमानबहुलमप*सर्पन्त्यां वार्षभानव्यां नव्यां पङ्कजस्रजमिव सैवेयमिति विभाव्य दृष्टिमदृष्टिमधुरां मधुमथनोऽथ नोदयांचक्रे दयांचक्रे च मनोवृत्त्या॥१९२॥

अथ निखिलसौभाग्यशोभार्य्या भार्य्या व्रजपुरपुरन्दरस्य दरस्यन्दमानहसितमाध्वीका साध्वी कासारजमुखीस्ता सकलाः सुतसमीपतः स्वयमानीय यथायथमुपपादितेषु भोजनस्थलेषु निवेशयामास ॥ १९३ ॥

अथात्र सामयिकीं श्रीकृष्णाकाङ्क्षितसुखसाधकतावैदग्धीं शुकस्याह एवं सतीति सकलास्वेव गोकुलकुलवधूषु मध्ये वार्षभानव्यां राधायां मधुमथनो नव्यां पङ्कजस्रजमिव दृष्टिं नोदयां चक्रे इत्यन्वयः। सकलासु तासु कीदृशीषु । समं तुल्यमेव यत्सम्यगवधानं यथा द्रष्टुः श्रीकृष्णस्य तद्दर्शनार्थमवधानं तथैव द्रष्टॄणां तासां दृष्टिवारणार्थं यदवधानमित्यर्थः । तेच सम्यग्गोपितः सकल आकारो विकारविशेषश्च रोमाञ्चादिर्याभिस्तासां भावस्तत्ता तया हेतुना विशेषेण अलक्ष्यमाणासु परिचेतुमशक्यास्वित्यर्थः । तत्र हेतुः। उत्तमेन मन्दाक्षेण लज्जया उक्ष्यमाणासु आर्द्रीक्रियमाणासु उक्ष सेचने धातुः । मन्दाक्षं ह्रीस्त्रपेत्यमरः ॥१९१॥

वार्षभानव्यां कीदृश्यां तस्मिन्नेव प्रसिद्धएव पतति शुके पक्षिणि । पतत्पत्ररथाण्डजा इत्यमरः। अपतोदं गतव्यथं यथा स्यात्तथा उत्पत्य उड्डीय चरणकमलोपरि पतति सति तदीयत्वेन कृष्णसंबन्धिताप्राप्तत्वेन हेतुना आधीयमानात् तत्रार्प्यमाणात् बहुमानात् प्रचुरसंमानात् हेतोर्बहुलं यथा स्यात्तथा ससंभ्रममपसर्पन्त्याम् । तस्य शुकस्य तस्या एव चरणकमलपतने को हेतुरित्यपेक्षायामाह । चिरोपसत्तिश्चिरकाले तन्निकटवासस्तत एव हेतोः सत् शोभनं तिमितं प्रेमार्द्रं च हृदयं यस्य तत्तया । आयतया विस्तृतया न तु सा तस्याऽल्पा इत्यर्थः । तेन महाधीरस्यापि तस्य धृतिलोपो ना समञ्जस इति भावः । ततश्च सैव वलभीतले दृष्टचरी शुकग्रामिनी प्रसिद्धा राधेयमिति विभाव्य दृष्टिं नेत्रप्रेरयामास । कीदृशीम् । अदृष्टया दर्शनेन मधुरां । साम्मुख्याभावादर्शनमेव तत् श्वश्रूजनादीन् प्रति व्यज्यानीभूतं नीचैर्नेत्रेण स्वकर्तृकदर्शनमाधुर्य्यं तु तां ज्ञापयामासैवेत्यर्थः । दयांचक्र इति सदज्ञानां पूर्वरागजनितकार्याधनुसंधानेन ॥ १९२ ॥

सौभाग्यशोभया आर्य्या मुख्या । दर ईषत् स्यन्दमानं हसितमेव माध्वीकं यस्यां सा । ताभिर्वेष्टितस्य पुत्रस्य निकुम्भमण्डलमध्यवर्त्तिनो मेघस्येव शोभामालक्ष्य मत्पुत्रवध्व एव एता भवितुमनुरूपा इति निरताभिनेवाकारमुद्गसेन तासु वधूभावेन मन्दं जहासेति भावः । कासारजं कमलम् ॥ १९३ ॥

* उपसर्पन्त्या मितिपुस्तकान्तरस्थः पाठश्छेद्यः ।

तस्मिन्नेव समये निरुपमगन्धमाल्यादिभिर्नीचिकीनिचयमभ्यर्च्य मणिप्रघणे प्रघणे सर्वतोभद्रा सर्वतोभद्रासने निवेश्य धावितचरणान् कनकमयपात्रपात्रसात्करणयोग्या-नत एव तथाविधशानभोजनाचमनादिभाजनैर्विरचितोपचारान् द्विजवृषभानर्घ्या-दिनाऽभ्यर्च्य सनन्दोपनन्दभार्य्याभ्यांभार्य्याभ्यां रोहिण्या च परिवेशितान्यन्नपा-नादीन्याशयित्वा स्रग्गन्धताम्बूलवासोलङ्कारादिना चोपचर्य्य ॥ १५४ ॥

जननयनतापसंकर्षणेनसंकर्षणेन सहसर्वानेव दशमिनः शमिनस्तरुणानपि शिशू-नपिवल्लवानग्रेकृत्य रोहिण्या परिवेशितमन्नमशितुं व्रजराजो यदा प्रवृत्ते॥१५५॥

तदैव प्रसृमरमरकतभवनमध्यमध्यस्थापितेपु सवसनेष्वासनेष्वारोप्यमाणा-नामसामान्यानां मान्यानां पार्श्वद्वयतो मुख्याक्रमेण समुपवेशितानां वधूनां कुमारि-काणां च प्रत्येकं स्वयमेवपरिवेषणमाचरन्तीचरन्तीव सुखसमुद्रे समुद्रेरीयमाण-स्मितसुधाकणमयीन अपाऽत्र पालनीयेति प्रतिजनमाभापमाणा यथा जोपमाशयि-त्वा प्रत्येकममलतरवसनमणिमयालङ्कारमालानुलेपनसिन्दूरताम्बूलादिभिर्यथायथं संपूज्य पूज्यचरणाऽसौ भगवती सौभगवतीनां मूर्द्धन्या धन्या श्रीकृष्णजननी जननीत्या ताः समस्ताः प्रत्येकमालिङ्ग्य भवनं प्रेपयामास १५६ ॥

अनन्तरमवशिष्टमतिमोदनमोदनमापामरमखिलनगरवासिभ्यो निरलसन्मुख-मेव विभज्य दत्वा नटनर्त्तकीवाद्यपूरकचारणमागधादिभ्यो व्रजराजेन पृथक् परि-तोपितेभ्योपि स्वयमपि पृथगमीपां मतिसंकल्पकल्पनं दत्तवतीति यदि विश्रान्तो महोत्सवस्तदा नित्यमेवमेव नेद्भवति तदैवनिर्द्दिष्टेरिति मनसि विभाव्य क्षणं तदु-परमपरमदुःखानुभवमाससाद सा दयालुः ॥ १५७ ॥

अथ परेद्यवि कुर्वन् धेनूनामवनं वनं गतो व्रजराजकुमारः कुमारयन् सह स-हचरैः कुसुमकन्दुकखेलामाततान ॥ १५८ ॥

---

मणिभिः प्रघणे प्रकृष्टनिविडे प्रघणेऽलिन्दे । सर्वतोभद्रायाः गम्भार्य्याः सर्वतो भद्रं यदासनं तत्र । गम्भारी सर्वतोभद्रेसगरः ॥ भा कान्तिस्तया आर्य्याभ्याम् । आशयित्वा भोजयित्वा १५५

दशमिनः वृद्धान् अत एव शमिनः शान्तिमतः । वर्षीयान् दशमी ज्यायानित्यमरः ।।१५८।

समुत्सानन्दं रेरीयमाणः अतिशयेन स्तवन् स्मितसुधायाः कणो यत्र तथाभूतं यथा स्यात्तथा अयि पुत्र्यः अत्र त्रपा लज्जा न पालनीया स्वच्छन्दं भुज्यतामित्यर्थः । यथाजोपं प्रीत्युनुसा-रेण आशयित्वा भोजयित्वा भगवती श्रीमती ॥ १५६ ॥

अतिमोदनम् अति सुखदायिनम् ओदनम् अन्नम् चारणा नाटकाद्यभिनयकारिणः । माग-धा वंशशंसकाः । दयालुरिति सकलजनसंपूर्णतृप्त्याकाङ्क्षया । धन्योसिभद्रपदमाससमस्तकाल-भद्रं पदे तव यदय मयाऽनुभूतम् । त्वां यो न योजयति हा प्रतिमासमेव धिक्तं निधातरमिति प्रजगाद राधा ॥ १५७ ॥

परेद्यवि परदिवसे । परेद्यव्यद्यपूर्वेद्युरित्यादिनिपातनात् सिद्धम् । कुमारयन् क्रीडयन् १५८

तत्र सहचरकरावचितकुसुमनिकरनिर्मितैरमितैरतिरुचिरचिरविलासरसोपयोगिभिरिन्दुपललपिण्डैरिव कुन्दकन्दुकैरितरेतरतरलतापन्नसंपन्नसंहननसंहननकौतुकेन केन चिदतिसंमोदमोदमानः। कदाचिदूर्ध्वोद्धूननेन सुरमणीरमणीयभावभावनामिव जनयन् कदाचन तिर्य्यगसनेन दिग्वधूवृन्दस्य कर्णपूररचनामिव विदधानोऽनुचरैः सह धावमानो मानोन्नतमना मनागपि न विशश्राम ॥१५९॥

कदाचिच्च। धावन् कूणितकोणशोणनयनं घर्मद्युतेः शङ्कया हेलाखेलनकौतुकी विजयते लोलालकैर्बालकैः। ऊर्ध्वोद्धूनितकन्दुकग्रहवशादुद्ग्रमर्द्दस्खलच्चारूष्णीषनिवेशितोत्तरकरं प्रोन्नीतपाण्यन्तरम् ॥ १६०॥

एवं गृहीत्वा कन्दुकं दुरवगाहचरिते तस्मिंश्चिरं विलस्य श्रमजलकणभरभरिततया मुक्ताभिः खचितं शरदमलपूर्णसुधाकरबिम्बमिव वदनमण्डलं दधाने विश्रमणाय कस्यचन तरुतरुणस्य मूलमालम्बमाने लम्बमानेन लतापल्लवेन केनाऽपि वीज्यमाने। केनापि निजसिचयाञ्चलेन कल्पितं तल्पमधिशयाने केनापि संवाहितचरणे सति क्षणमनुचराः सर्वे एव तं परिचेरुः ॥१६१॥

इत्यऽखिलात्मना श्रीकृष्णेन सह परमदयिता मदयितारः सकलरसवन्तोऽवन्तो नैचिकीनिचयं दिनानि कियन्ति गमयांबभूवुरमी सुकृतिनः कृतिनः सर्वे १६२

---

इन्दुपललपिण्डैश्चन्द्रस्य मांसपिण्डैरिव कुन्दकुसुमकन्दुकैः। इतरेतरं परस्परं तरलतापन्ने तारल्यप्राप्ते संपन्ने शोभासंपत्तियुक्ते संहनने शरीरे यत् सम्यक् हननं क्षेपणाघातस्तेन कौतुकेन संहननं शरीरं वर्ष्म विग्रह इत्यमरः। सुरमणीनां स्वर्गाङ्गनानां रमणीयभावस्य भावनाम्। अस्माभिः सह विजिहीर्षुरेव अस्मान् प्रति कन्दुकं क्षिपतीत्येवंलक्षणाम्। तिर्य्यगसनेन तिर्य्यक्क्षेपणेन। असु क्षेपणे ल्युडन्तः। मानः क्रीडाचातुर्य्यम्। मनु ज्ञान इत्यस्य घञन्तत्वात्। क्रीडा गर्वो वा तेन उन्नतं मनो यस्य सः ॥ १५९ ॥

ऊर्द्धम् उत्कर्षेण धूनितं चालितं कन्दुकं तस्य ग्रहणवशात् उद्ग्रं यथा स्यात्तथा अर्द्धस्खलति चारुणि उष्णीषे निवेशित उत्तरकरो वामपाणिर्यत्र तद्यथास्यात्तथा। प्रकर्षेण उन्नीतम् उत्क्षेपणवशात् पाण्यन्तरं दक्षिणपाणिर्यत्र तद्यथास्यात्तथा। घर्मद्युतेः सूर्य्यस्य किरणनिपातशङ्कया कूणितौ संकुचतीकृतौ कोणौ ययोस्तथाभूते शोणे नयने यत्र तद्यथा स्यात्तथा। खेलनकौतुकी धावन् सन् विजयते ॥१६०॥

तस्मिन् श्रीकृष्णे ॥ १६१ ॥

अखिलानामात्मना प्रेमास्पदत्वादात्मभूतेन। मदयितारः। मदी हर्षे इत्यस्माण्णयन्तात्। हर्षयन्त इत्यर्थः। सकलरसवन्त इति बलभद्रमण्डलीभद्रादीनां सख्यवात्सल्यदास्यानि। सुबलोज्ज्वलादीनां सख्यशृङ्गारोचितदास्ये रसौ। श्रीदामादीनां केवलं सख्यं रसः। रक्तकादीनां तु केवलं दास्यमिति ॥ १६२ ॥

परेद्यवि द्यवि चरत्सुवृन्दारकनिकरेषु पश्यत्सु श्यत्सु च नयनतापं जातकुतूहलश्च हलायुधानुजेन साग्रजेन साग्रप्रमोदेन सह सहचराः पूर्वपूर्वदिनवत् चारयन्तो रयं तोषस्य गतवद्गवां निकुरम्बकं श्रीकृष्णेन तेनैव वृन्दावनतरुलताखगमृगमधुव्रतव्रातसौभाग्यं स्वनिष्ठमपि पूर्वजं व्यपदिश्यमानं शृण्वन्तो विहरन्तश्च हरन्तश्च नयनवतां नयनसंतापं गगनमध्यमध्यवस्थिते मयूखमालिनि रुचिरुचिरवनविहारजातश्रमौ श्रमजलकणकमनीयकपोलमण्डलौ सहोदरावदरावरुद्धालस्यलस्यमानौ पूर्ववदतिघनप्रच्छायतरुमूलमालम्बमानौ श्रमापनोदविनोदविविधोपचारैरुपचरितवन्तो हसन्तो हासयन्तश्च मधुरतरकथाभिरथाऽभिनिन्युः प्रणयडाम्बर्य्यम् ॥ १६३ ॥

श्रीकृष्णोपि क्षणं विश्रम्य सहसा सहसाध्वसप्रणयमग्रजस्य चरणकमलसंवाहनादिना दिततदीयखेदः। सहेलखेलोल्लसित-हसितहत-सकल-सहचर-चरमश्रमो मध्याह्न-तपन तापमवधूय धेनुगणानुसरणकुतूहलिना हलिना सह सहजप्रणयमधुरो वनभुवि विहरमाणः क्षणं क्षणं वितनुते स्म ॥१६४॥

तस्मिन्नेवावसरे रेरीयमाणमधुमधुरं सकल-कलाकलाप-कौशल-शलन्मधुरिमा धुरि मानभृतां मूर्द्धन्यो धन्योदारचरितः सबलो बलोर्जितः श्रीकृष्णः सखिभिरभ्यूचे ॥१६५॥

भो ! भो ! राम ! भो भोः कृष्ण ! महाप्रभाव ! प्रभावधूतनिविडतमस्का-

द्यवि आकाशे वृन्दारकनिकरेषु देवसमूहेषु श्यत्सु दूरीकुर्वत्सु शो तनूकरणे शत्रन्तः । अग्रेण सह वर्त्तमानः साग्रः समग्रः संपूर्णः प्रमोदो यस्य तेन । वृन्दावनतरुतलेति अहो!अमी देववरामरार्चितमित्याद्युक्तम् । पूर्वजं बलदेवम् । सहोदरौ भ्रातरौ श्रीरामकृष्णौ । अदरम् अनल्पम् अवरुद्धं यदालस्यं तेन लस्यमानौ श्लिष्यमाणौ । लस क्रीडायामित्यस्य श्लेषार्थकत्वमपि बोपदेवे दृष्टम् । प्रणयडाम्बर्य्यं प्रेमोद्रेकम् ॥१६३॥

सहसाध्वसप्रणयं ससंभ्रमप्रेमगौरवस्य साध्वसनन्धित्वानपगमात् । संवाहनाक्रियाया विशेषणमिदम् । दितः खण्डितः तदीयः खेदो येन सः । क्षणं व्याप्य क्षणमुत्सवम् ॥१६४॥

स श्रीकृष्णः रेरीयमाणमतिशयस्राविं मध्विव मधुरं यथा भवत्येवं सखिभिरभ्यूचे उच्यते स्म । तत्र हेतुः सकले कलाकलापे क्रीडाशिल्पसमूहे यत्कौशलं नैपुण्यं तेनैव शलन् प्राप्नुवन् मधुरिमा यम् । शल हुल गतौ । इद दुर्लभतालफलभक्षणमप्येकं क्रीडाकौतुकमिति भावः । मानभृतां सन्मानधारिणां धुरि गणनायां मूर्द्धन्य इति तादृशे प्रार्थनापि न लाघवायेति भावः । उदारचरित इति बकाघासुरानिव धेनुकमपि हन्तुं समर्थ इति भावः ।१६५।

अत्र राम इति रमयसीति राम इत्युच्यते तदस्मान् सखीन् रञ्जयित्वा स्वनामैव सार्थकं कुर्विति भावः । प्रभया कान्त्या अवधूतं निविडं समस्काण्डं तमःसमूहो येन सचासौ । प्रकाण्डं चेतीति प्रशंसावचनैश्चेति समासः। नकेवलमेतावदेवेत्याहुः किन्तु महाप्रभावेति । तेनाज्ञानां

ण्डमकाण्ड ! बुभुक्षयाऽक्षयाऽजनि नो जठरयातना या तनावपि नो माति १६६

जातिदूरे दूरे दूरे सरीसृप्यमाणैः सौरभ्यैरभ्येधितघ्राणामोदमतिपाकमेदुरदुरवापफलानां मोदं जनयति नस्तालवनं लवनं विनापि केवलान्दोलेनैव फलानि निपतिष्यति ॥१६७॥

तैरस्मानाप्यायायितुमर्हतं भवन्ताविति मदितौ दितौत्कण्ठ्यान् विधातुमेतान् समेतान् लालसया तद्धेनुककृतावनं वनं समुपव्रज्य तच्छोभालोभालोलनयनौत्कण्ठ्यमवतारयामासतुः ॥१६८॥

परिपाकपिङ्गलताऽगलता फलतादवस्थ्येन स्थविष्ठस्कन्धदेशा देशावच्छेदच्छेदरहिता हितालोकालोका अभिरामा रामानुजेन ते घनमेदुरा दुरासदाः सदाफलाः फलामोदमोदमानभुवनजना जनागोचराश्चराचरगुरुणाऽगुरुणा पवमानेन सटसटायमानदलदलद्रावद्रावकारिणा चौरितफलगन्धास्तालविटपिनो ददृशिरे दृशि रेचितविभ्रमेण तेन पातयध्वं पातयध्वमिति निगदितैस्तैः पुष्टलोष्टलोलकरतलैः पात्यमानानां फलानामाकर्ण्य ध्वनिमध्वनि मन्द्रं खुरखुरमक्षुण्ण धरणिधूलिधोरणिभिरन्धकारीक-

कान्त्या तमांसि बलेन तु तामसान् निर्धुनोष्येवेति प्रोत्साहयन्ति । बुभुक्षयेति प्रस्तुतकार्य्यसिद्ध्यर्थं स्नेहं जनयन्ति । नोऽस्माकं तनौ देहेपि न माति ॥१६६॥

तर्हिकिमर्थयध्वे तत्राहुः ।नातिदूरे निकट एव तालवनं नोऽस्माकं मोदं जनयति । अतिपाकेन मेदुराणां स्निग्धानां दुर्लभानां फलानां सौरभ्यैः सरीसृप्यमाणैः कुटिलवायुगत्या कुटिलं निःसरद्भिः। अभि सर्वतोभावेन एधितो वर्द्धितो घ्राणामोदो येन तथाभूतम्। लवनं छेदनं विनैवत्यायासाभावोऽपि व्यञ्जितः ॥ १६७ ॥

दितौत्कण्ठान् खण्डितौत्कण्ठ्यान् कर्त्तुं तत्तालप्रदानेनैव नान्यथेत्याह । लालसया समेतान् युक्तान् । धेनुकेन कृतमवनं रक्षणं यस्य तत् वनम् । नयने फलग्रहणे औत्कण्ठ्यमुत्कण्ठामवतारयामासतुः प्रादुर्भावयामासतुः फलपातनार्थमुत्कण्ठांचक्रतुरित्यर्थः ॥ १६८ ॥

रामानुजेन कृष्णेन ते ताल विटपिनस्तालवृक्षा ददृशिरे दृष्टाः । कीदृशेन दृशि दृष्टौ रेचितः संपृक्तो विलासो यस्य सोल्लासनेत्रेणेत्यर्थः। तालविटपिनः । कीदृशाः । परिपाकेन पिङ्गलतायां पिङ्गलवर्णतायां सत्यामपि अगलता अनपगच्छता फलानां तादवस्थ्येन तदवस्थत्वेन हेतुना स्थविष्ठाः अतिस्थूलाः स्कन्धदेशा येषां ते । अत एव तत्र देशावच्छेदे यच्छेदः विरलत्वेन छिद्रत्वलक्षणोऽवकाशस्तद्रहिताः स्कन्धदेशातिस्थौल्यात् परस्परमिलनेनातिनिर्निविडा एकीभूता इवेत्यर्थः । हितः सुखदत्वादालोकोपि येषां ते घनेभ्यो मेघेभ्योपि मेदुराः स्निग्धाः दुरासदा दुःखेनासाद्यन्त इति तथाभूताः । तथावर्णितगुणत्वं तेषामुत्प्रेक्षयापि व्यञ्जयति । चराचराणां जङ्गमस्थावराणां प्राणतयाइन्द्रियशक्त्युपदेशकत्वेन गुरुणापि पवमानेन वायुना । श्लेषेण गुरुत्वात् अन्यमपि पवित्रीकुर्वतापि अगुरुणा भवता चौर्य्यसङ्कोचान्मन्दीभूतेन सता चौरितः फलगन्धो येषां तथाभूताः । कीदृशेन शटशटायमानानां दलानां पत्राणां दलद्भिः प्रस्फुरद्भिः रावैः फूत्कारशब्दैरिव द्रावं पलायनं कर्त्तुं शीलंयस्य तथाभूतेन। येषां गन्ध-

स्य दश दिशः मखरखरकायः पश्चात्तनचरणयुगलक्षेपेण नाटयन्निव भुवस्तटमूर्जस्स्फूर्जद्गर्जनेन तर्जयन्निव निर्जरानपि, जर्जरीकृतपर्जन्यघोषो घोषोद्भवान् बालकानुपेक्ष्य रामकृष्णाविव हन्तुकामः काममभिससार सारवान् धेनुको नाम दैतेयः ॥१६९ ॥

तमापतन्तं पतन्तं पतङ्गमसाविव भूरिबलो बलोऽत्रहेलया हननाय क्षिप्यमाणौ पश्चात्तनावङ्घ्री वामकराग्रेणाऽऽधृत्य नभसि घूर्णयित्वा । समुत्तालतालतरौ निक्षिप्य तेनैव तद्वपुपाऽनायासेनैव फलानि पातयन् घातयामास ॥ १७० ॥

अथ समेतानिह निहतेऽस्यैवानुगामिनः कियतोयतोयमान् सहोदरावेव सहोदरावेवमाजघ्नतुः ॥ १७१ ॥

अथ निविडनिपातविशीर्य्यमाणपरिपक्वफलरसकर्दमदमदमायमाने भुवस्तलेऽशीर्य्यमाणान्यापक्कानि फलानि यथाकाममवचित्याऽवचित्य कौतुकतः कन्दुकखेलामेव चक्रुर्न तु बुभुजिरेऽजिरे तद्वनस्य रुरुधिरे रुधिरेण तेषां तानि फलानीति नीतिविदः ॥ १७२ ॥

एवं तालफलानास्वादाजातसौहित्यैस्तद्गन्धबान्धव्य बन्धुरनासापुटैस्तैः सह सहरामो धीनूरवहार्य्यानाहार्यानागाम्रमधुरिमां धुरि मानभूतामाद्यो माद्योतितभुवनतलो नतलोकशोकहाऽनोकहानोजस्विनो वृन्दावनस्य प्रत्येकमवलोकया-

मपि चराचरगुरुरपि लोभात्तथा भवंश्चोरयति । तेषां फलानां लोभ्यत्वं किं वर्णनीयमिति भावः । तेन रामानुजेन निगदितैस्तैः सखिभिः खुरा एव खुरप्राः खुरपा इति ख्याता अस्त्रविशेषास्तैः क्षुण्णायाः धरणोर्धूलिधोरणिभिर्धूलिश्रेणिभिर्निर्जरान् देवान् । सारवान् बलवान् १६९

सम्यगुद्गतस्तार उच्चध्वनिर्यत्र स चासौ तालतरुश्चेति तस्मिन् रलयोरैक्यात् । यद्वा । समुत्ताले सम्यगुत्कटे । उत्तालो हेमकुण्डे स्याद्भर्भे चोत्कटे इति विश्वः ॥ १७० ॥

इह अस्मिन् धेनुके निहते सति समेतान् सहोदरावेव भ्रातरौ द्वावेव । कीदृशौ । सहसा बलेन अदरौ अनल्पौ निर्भयाविति वा । एवमनेन प्रकारेण ॥ १७१ ॥

आपक्कानि ईषत् पक्कानि अत एव अशीर्य्यमाणानि स्कन्धवृन्तादगलन्ति । न तु बुभुजिरइत्यत्र हेतुः । तस्य वनस्य अजिरे प्राङ्गणे अवकाश इति यावत् । तानि फलानि सर्वाणि रुधिरेण गर्दभरक्तेन रुरुधिरे रुद्धानीति अपावित्र्यादितिनीतिविदो धर्मशास्त्रनीतिज्ञा रामकृष्णादयः-अत एवाधुनिका अपि तदीयभक्तास्तां नीतिं तालमात्राभक्षणादनुसरन्तीति ज्ञेयम् । अत एव मूलेऽपि । अथ तालफलान्यादन् मनुष्या गतसाध्वसा इत्यत्र मनुष्यास्तत्रत्याः पर्वतवासिनः पुलिन्दाद्या हीनजातय एव न तु ते रामकृष्णाद्या इति व्याख्येयम् ॥ १७२ ॥

-तालफलानामनास्वादेन हेतुना न जातं सौहित्यं तृप्तिर्येषां तैः । तेषां गन्धस्यैव बान्धव्येन ग्राहकत्वात् बान्धवतया बन्धुरं सुन्दरं नासापुटं येषां तैः । बन्धुरं सुन्दरेऽपि चेति विश्वः ।

## नवमः स्तवकः

अथैकस्मिन्नहनि विना रामेण वनमागते वनमालिनि चारयति च नैचिकीनिचयं किमपि जातमाश्चर्य्यम् ॥ १ ॥

तथाहि । अहो । अहोनाथदुहितुरचिकित्स्यो । हृद्रोग इव ॥ २ ॥

त्रिलोकलोकसंहारशक्तिनिक्षेपस्थलमिव कालाग्निरुद्रस्य ॥ ३ ॥

उत्पत्तिभूमिरिव भयानकरसस्य ॥ ४ ॥

अनियोजितसाहाय्यकारी सुहृदिव मृत्योः कोपि कालीयो नाम काद्रवेयः पन्नगवैरिणो भियाऽभियातस्तस्या अन्तर्हृदमध्यास्ते ॥ ५ ॥

यस्य सलिलान्तरितस्यापि विषस्योष्मणा तप्यमानं विहायो विहायोड्डीयन्ते विहगाः यदुपरि परितश्च निजतनुभस्मीभावभयेन गन्धवाहोऽपि न वहति ।६

प्रजव्याकुलता नागफणे नाट्यं तदा नुतिः । बन्धुभिर्मिलनं दावमोचनं नवमे क्रमात् ।

विना रामेणेति तस्मिन्नहनि मासिकतदीयजन्मनक्षत्रप्राप्तौ तन्मात्रा तस्य मङ्गलस्नानार्थं गृह एव रक्षितत्वात् ॥१॥

तदेव कालीयफणाङ्गनसाङ्गनटनलक्षणमाश्चर्य्यं वर्णयिष्यन् प्रथमं दुर्दमताभिव्यञ्जनाय सपरिकरं तमेव कालीयमुत्प्रेक्षते अहो इत्यादिना अहो इत्याश्चर्ये । अहोनाथस्य सूर्य्यस्यापि दुहितुरिति। आरोग्यं भास्करादिच्छेदितिस्मृतेः सर्वरोगनिहन्तुरपि कन्याया यमुनाया हृद्रोगः ॥२॥

किञ्च । रोगः स्वाश्रयमेव हिनस्ति । अयं तु सर्वमेवेत्यत पुनरुत्प्रेक्षते । त्रिलोकस्य त्रिभुवनस्य लोकानां जनानां संहारे या शक्तिस्तस्याः निक्षेपस्थानमिव सा शक्तिरस्मिन् कालीये एव कालाग्निरुद्रेण निक्षिप्ता वर्त्तत इत्यर्थः । लोकस्तु भुवने जने इत्यमरः ॥३॥

किञ्च । सा संहारिका शक्तिरपि सर्वेषां न सर्वदा भयप्रदा किन्तु स्वसमये संहरतिमात्रं यतस्ततोऽप्यधिकतीक्ष्णत्वेनोत्प्रेक्षते उत्पत्तीति ॥४॥

नकेवलमतिभयप्रद एव किन्तु अनियोजितः सन्नपि साहाय्यकारी मृत्योरेव प्रतिदिनमेव प्राणिनो हिनस्त्यऽयं सर्वतोपि विलक्षण इत्यर्थः । पन्नगवैरिणो गरुडस्य भिया भयेनाभिगतस्तस्या अहोनाथदुहितुर्ह्रदमध्यमध्यास्त इत्यादिवर्त्तमानप्रयोगोऽत्र कवेरन्तरनुभवसाक्षात्कारावेशेनैवाभिप्रेतम् ॥५

तप्यमानं दह्यमानं विहायः आकाशं विहाय वामतो दक्षिणतो वा त्यक्त्वा यदुर्द्धमुत्थितो यो विषोष्मवेगस्तेन प्राप्तयातत्वाद्दहनाशक्तिरेव तथोत्प्रेक्षिता । वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी इत्यमरः ।गन्धवाहः पवनः ॥ ६ ॥

नवहतिकरं यमस्वसा यमस्वसाधारणं जठरपिठरपिधायकं पित्तगुल्ममिव महादाहावहं वहन्ती यदीयानिःश्वसनश्वसनमहावेगवेगवत्तरतरङ्गाग्रजाग्रत् संपाकसंपाककुसुमसंकाशत्विषविषमज्वालाजालेन लवणमहोर्मिमालिमो महोर्मिमालाशालिनिशाकालीनलवणकान्तिविशेषचाकचक्यशक्योपमं पित्तमिव सन्ततं वमति ॥ ७ ॥

स च महाह्रदो जलपटलमपिधाय समुद्भूताभिर्यदीयनिश्वासधूमधोरणिभिरन्तरनुमीयमानविषवह्निमत्तया "जलह्रदो वह्निमान् धूमाद" त्यऽसदनुमानमपि सदनुमानतया प्रमाणयति ॥ ८ ॥

यस्य विषज्वालयाऽऽलयाय नेशते शतेनाऽनृज्वराणां ज्वराणां यादांसि त्रिना तदीयोद्दारदारतनयादि ॥ ९ ॥

तन्निवासभूतभूतद्रोहसत्रमहानलकुण्डकल्पकल्पकालपुरुषनाभिह्रददेशीयह्रददेशीयसीम्नि । यदैव दैववशतो गता उदन्यायोगादऽन्यायोगान्यम्भांसि गावो गोपाश्च पिबन्ति स्म ॥ १० ॥

---

यमस्यापि स्वसा भगिनी स्वयं यमुना । यं नवहतिकरं नित्यनवीनपीडाकरम् अस्वसाधारणं न विद्यते स्वस्य साधारणः समानो यस्य तथाभूतं कालीयं जठरमेव पिठरः पात्रभेदस्तस्य पिधायकं तदवकाशाच्छादकं पित्तगुल्ममिव वहन्ती सती यदीयानि निश्वसनानि निश्वासा एव श्वसनाः पवनास्तेषां महता वेगेन वेगवत्तरेषु तरङ्गाग्रेषु जाग्रत् प्रकटद्युतियुक्तम् सम्यक् पाकः परिपाको यस्य तथाभूतस्य सम्पाककुसुमस्य शोणालु इति ख्यातपुष्पस्य संकाशं सदृशं यत्त्विषं तस्य विषमेण ज्वालाजालेन अर्चिषां समूहेन लवणमहोर्मिमालिनो लवणसमुद्रस्य ऊर्मिमाला तरङ्गश्रेणी शलितु प्राप्तुं शीलं यस्य तथाभूतस्य निशाकालीनस्य लवणकान्ति विशेषस्य यच्चाकचिक्यं तेन शक्या उपमा यस्य तथाभूतं पित्तमिव सन्ततं सदा वमति । आरग्वधे राजवृक्षसम्पाकचतुरङ्गुला इत्यमरः । शलहुलपल्ल गतौ ॥७॥

अपिधाय आच्छाद्य । सम्यगुद्भूताभिरूर्द्ध्वं चलिताभिर्धूमधोरणिभिर्धूमश्रेणिभिः हेतुभिः । असदनुमानमिति वह्न्यनुमाने सर्वत्र जलह्रदस्य विपक्षत्वेनैव प्रसिद्धेः । सदनुमानतयेति जलह्रदस्य पक्षत्वमेव तावदबाधितं पर्वतस्य वा पक्षत्वे जलह्रदस्य विपक्षता वा कथं घटतामुभयोरेव साध्यवत्वात् । ततश्च सर्वत्र वह्न्यनुमानवाक्ये गङ्गाप्रवाहस्यैव विपक्षत्वं कल्प्यमिति भावः ॥ ८ ॥

यस्य कालियस्य विषज्वालया ज्वराणां शतेन हेतुना आलयाय निवासाय नेशते न शक्नुवन्ति । ज्वराणां कीदृशानाम् । अनृजुः कुटिलो जरो वेगो येषां तेषाम् । यादांसि जलजन्तव इत्यमर ९।

तन्निवासभूतं भूतद्रोहसत्ररूपं यन्महानलकुण्डं तत्कल्पस्तत्तुल्यो यः कल्पकालपुरुषस्य प्रलयकालसंबन्धिपुरुषस्य नाभिह्रदस्तद्देशीयस्तत्सदृशो यो ह्रदस्तद्देशीयसीम्नि तद्देशसंबन्धिसीमायाम् । ईषदसमाप्तौ कल्पब्देश्यदेशीयर इति कल्पब्देशीयरौ तद्धितप्रत्ययौ । द्वितीयः कल्पः प्रलयवाचि । संवर्त्तः प्रलयकल्प इत्यभिधानात् । द्वितीयो देशीय इति देशसंबन्धिवाची । शैषिकप्रत्ययान्तत्वात् । उदन्या पिपासा तद्योगात् उदन्या तु पिपासा स्यादित्यमरः । अम्भांसि कीदृशानि । अन्यायोगानि अन्यस्य कालियनागभिन्नस्य नास्ति योगो यत्र तानि ॥ १० ॥

तदैव श्रीकृष्णेच्छातोऽच्छातोदया अप्यऽप्राकृतदेहतयाऽहतयाऽपि गततया-याथातथ्येन सर्वे विपद्यन्ते स्मेव ॥ ११ ॥

तदनु दनुजदमनो मनोऽन्यथामासाद्य सहसाऽमृतरसानिस्स्यन्दिना नयनकमलकोणेन जीवयामासेव । जीविताः सन्तस्ततो विस्मिताः स्मितामृतमुचः परस्परप्रणयतयाऽऽयतया परस्परमालिङ्गन्तोऽगन्तोषमयमिव विदन्तो मिथः समूचिरे १२

अचिरेण जीविता वयममुनाऽतो यमुनातोयपानतो मृताः पूर्वं यथाऽनघानऽघासुरजठरवर्तिनोऽस्मान् जीवयामास तदयं मृतसंजीवनः कोऽपि पदार्थः । इति सस्पृहं श्रीकृष्णमालोकयामासुः सखायः ॥ १३ ॥

श्रीकृष्णोऽपि स्वनाम्ना मित्रभूतायाः कृष्णाया हृच्छोधनार्थमिव तस्य काद्रवेयस्य द्रवे यस्यन् आकाशमुखचुम्बनार्थलम्बमानलालसयेव तुङ्गिमानमानयन्तमविकलदलकदम्बं कदम्बं समारुह्य ॥ १४ ॥

कुटिलमलकनिकरं समूह्याऽसमूह्यातुल्यमहिमाऽलमऽहिमानभङ्गाय दृढतरनिबद्धपरिकरः करकमलतलेनोल्लास्य पुनरपुनरवस्रंसमुष्णीषपट्टमाबध्य ॥१५॥

अच्छातो न छिन्न उदयो येषां तथाभूता। अपिच्छो च्छेदन इत्यस्य निष्ठायां रूपम्। तत्र हेतुभूतया अप्राकृतदेहतया चिदानन्दमयमूर्त्तितया अत एव अहतयाऽपि अनपास्तयापि । श्रीकृष्णेच्छातः श्रीकृष्णस्येच्छाशक्त्या तेन लीलावेशादनियुक्तयाऽपि तेषां श्रीकृष्णविषयप्रेमवर्द्धनार्थं विस्मयरसार्थं च स्वयमेवोद्यतया हेतुना गतमन्तर्हितं तस्या अप्राकृतदेहताया याथातथ्यं यथोचितस्वभावत्वं तेन विपद्यन्तेस्म इवेत्ययास्तवत्वव्यञ्जकम् ॥११॥

सहसा अकस्मादेव अमृतरसक्षरणशीलेन इवेति पूर्ववत् । आयतया विस्तृतया अगं पर्वतं तोषमयं सुखमयं विदन्तोऽलभमाना मिथः परस्परमूचिरे उक्ताः कर्मभूताः प्रथमान्ताः ॥१२॥

अनघान् अघरहितान् तथाप्यऽघासुरजठरवर्तिनः ॥१३॥

श्रीकृष्णोऽपि कृष्णाया यमुनाया अम्भसि निपपातेत्यन्वयः । किं कर्तुम् काद्रवेयस्य कालियस्य द्रवे विद्रवनिमित्तं दूरीकरणे इत्यर्थः । यस्यन् यत्नं कुर्वन् । यसु प्रयत्ने दिवादिः । कथम् । कदम्बं समारुह्य कीदृशम् । आकाशस्य मुखचुम्बनार्थमिव अग्रदेशस्पर्शमिव लम्बमाना अतिदीर्घाया लालसा तया इव तुङ्गिमानं तुङ्गत्वम् आनयन्तम् आसम्यक् प्राप्नुवन्तम्। अविकलं तादृशविषज्वालयाप्यऽम्लानं दलकदम्बं यस्य तम् भाविभगवच्चरणस्पर्शसौभाग्यप्रभावात् । अमृतमाहरता गरुत्मता आक्रान्तत्वात् वा स एव एकस्तत्तीरेऽपि न शुष्क इति श्रीधरस्वामि चरणाः ॥ १४ ॥

समूह्य संनह्य एकीकृत्य बध्वेत्यर्थः । न सम्यगूह्यस्तर्कगम्योऽतुल्यो महिमा यस्य सः । अलमतिशयेन अहेः कालियस्य मानभङ्गाय गर्वनाशाय न पुनरवस्रंसः स्खलनं यस्मात्तथा स्यादेवं निबध्य ॥१५॥

मावध्यमानमाधुर्य्यो धुर्य्योऽखिलसौभगधुरन्धराणाम् ॥१६॥

धुरं धराणां स्थेम्न आवहम् । प्रथमकैशोरसुभगवयस्तयाऽऽयस्तया मृदुभावपुषि वपुषि परिच्छिन्ने ॥१७॥

परिच्छिन्नेतरगरिमाऽनगारि-मान-मर्दनमाधातुकामो हर्षोत्कर्षोत्कमना मनागनुचरनिकरमालोक्य ॥१८॥

मा भेतव्यमभितव्ययमिहैव धेनुसंभालनया स्थातव्यमिति हसितसितदशनरुचिरुचिराधरमाभाष्य ॥१९॥

माभाष्यमाणप्रभावो भावोन्नतधीरधीरतिविषमविषमहामलपच्यमानकीलालं कीलालङ्घितखचरभूचरभूतनिकरं तं महाह्रदमतिगभीरमभीरमलपराक्रमपराऽऽक्रमणकुशलतया कुशलतया सुरुचिरचिरपल्वलशकलमिव मन्यमानोऽन्यमानात्कर्षहारी ॥२०॥

---

तत्र सनेत्रचमत्कारमाह । मा शोभा तया वध्यमानं सर्वतः समाहृत्य निरुध्यमानं माधुर्य्यं यत्र सः । तथाभूतस्य तस्य तादृशव्यवसायेन व्याकुलीकृतं स्वमनः स्वयमेवाश्वासयन्नाह । अखिलसौभगधुरन्धराणां धुर्य्यः । सौभगमत्र महापराक्रमः । सुकीर्तिर्वा । भगं श्रीकाममाहात्म्यवीर्य्ययत्नार्ककीर्तिष्विस्यभिधानात् । ततश्च पराक्रमभाववतां महाकीर्ति मतां वा मध्ये धुर्य्योऽतिमुख्यः इत्यर्थः । तादृशकालियमर्दनमप्यस्य ईषत्करमेव काचिन्तेति भावः ॥१६॥

सविस्मयसीत्कारमाह । प्रथमकैशोरमेव सुभगं वयो भारम् यस्य तस्य भावस्तत्ता तया परिच्छिन्ने वपुषि धराणां पर्वतानां स्थेम्नः स्थैर्य्यस्य धुरम् भारम् आवहन् सम्यग् धारयन् । तादृशवयस्तया कीदृश्या । आयस्तया आयासवत्या प्रथमकैशोरे हि विविधकौतुकमप्रचेष्टितोद्गमः स्वभावादेव भवतीत्यर्थः यसु प्रयत्ने कर्तृनिष्ठान्तः । वपुषि कीदृशे । मृदुभावं सौकुमार्यं पुष्णातीति तस्मिन् । कोमलं मृदुलं मृदु इत्यमरः । ॥१७॥

अत एव परि सर्वतोभावेन छिन्न इतरेषां गरिमा गौरवं येन सः । न अञ्चति गच्छतीत्यनक् अरिः शत्रुः कालियस्तस्य मानमर्दनं गर्वचूर्णनम् ॥१८॥

मा भेतव्यम् । किंच आभायाः प्रभाया इतः गतो व्ययो यत्र तथाभूतं यथः स्यादेवं स्थातव्यं यत्र स्थितिक्रियायां प्रभाक्षयो नास्तीत्यर्थः । मत्कृते शोको न कार्य्य इति भावः। हसितेति क्लेशलेशमात्राऽभावज्ञापनार्थम् ॥१९॥

माभाष्यमाणो न वाग्गोचरः प्रभावो यस्य सः अकथ्यप्रभाव इत्यर्थः भावेन शौर्येण उन्नत धीरा निष्कम्पाधीर्य्यस्य सः । अत एव तं महाह्रदम् अतिगम्भीरमपि अभीर्भयरहितः अमलेन पराक्रमेण परस्य शत्रोर्यत् आक्रमणं तत्र कुशलतया दक्षतया । कुशं जलं तत्संबन्धिन्या लतया शैवालेन सुरुचिरं चिरपल्वलशकलं चिरकालीनक्षुद्रसरः खण्डं मन्यमानः । कुशमप्सु चेत्यमरः। अत्र कुशलतात्वेन कालिय उत्प्रेक्षितः । अन्यस्य मानोत्कर्षं हरतीति सः । महाह्रदं कीदृशमपि । अतिविषमं विषमेव महानलस्तेन पच्यमानं कीलालं जलं यत्र तम् । कीलाभिर्ज्वालाभिर्लङ्घितो मारणार्थं स्वजले वेगेन पातितः खचराणां पक्षिणां भूचराणां तटे मृगादीनां च निकरो येन तम् । पयःकीलालममृतं जीवनं भुवनं वनमित्यमरः ॥२०॥

दूरतरमुड्डीय झषं जिघृक्षन्नतितरस्वी मत्स्यरङ्क इव तरसा रसादम्भसि निपपात ॥ २१ ॥

ततश्च। निष्पातावेगविघ्न द्विगुणितलहरी जालमूर्द्धोर्ध्ववृद्धि-प्रस्फारस्फेमफेण स्फुरदुरुगरल स्फीतविस्फायिताम्भः। आमूलस्थूलकूलङ्कपतरलसमुत्तुङ्गभङ्गप्रसङ्गत्रासाद्दूरेऽपसर्पत्-पशु-पशुपशिशुक्षुब्धताऽऽसीद्धृदस्य ॥ २२ ॥

किंच।पातालोदरदरणेच्छयेव मज्जन मज्जानं स्फुटमिव कम्पयन्नहीनोम्। आन्दोलन्पतेनुत बाहुमण्डलाभ्यां प्रेङ्खोलद्गरलशिखाभृतो ह्रदस्य ॥ २३ ॥

ततश्च। कुतोऽकस्मादस्मादगपरिचितोऽयं ह्रदपयः
समान्दोलोदोलल्लहरिभरभीमः समजनि।
इति स्फायत्तर्कस्मयरसभृता तेन फणिना
फणीन्द्राणां तेजोहर इव मणीन्द्रः स ददृशे ॥ २४ ॥

तमालोच्य तमालोच्यमानसादृश्यंदृश्यं निरातङ्कं तं कंचन परममनोहरं हरन्त-

अतितरस्वी वेगवत्तरः। मत्स्यरङ्को माछरांगा इति ख्यातः पक्षिविशेषः। दृष्टान्तोयं निर्भयतया ग्रहणमात्रांश एव ज्ञेयः रसात् अत्युत्साहवशादित्यर्थः ॥२१॥

ततो ह्रदस्य क्षुब्धता क्षोभ आसीत् बभूव। कीदृशं यथा स्यात्। निष्पातस्य आवेगेन सम्यग्वेगेन विघ्नं विकलीकृतं द्विगुणितं च लहरीजालं तरङ्गसमूहो यस्मात् तत्। तथा उर्द्धोर्द्धम् उपर्युपरि वृद्धेः प्रस्फारो विस्तारस्तस्य स्फेमा बहुत्वं यत्र-तत्। उपर्य्युपरि क्रमेण क्षोभस्य वृद्धिरपि बहुविस्तृतासादित्यर्थः। फेणैस्तथा तदानीन्तनैः स्फुरद्भिरुरुगरलैश्च क्रमेण स्फीतानि वृद्धानि विस्फायितानि विवर्द्धितानि च अम्भांसि यस्मात् तत् तथा आमूलं मूलमभिव्याप्य स्थूलानां कूलङ्कपाणां कूलकर्त्तनकारिणां तरलानां चपलानां समुत्तुङ्गानामत्युच्चानां भङ्गानां तरङ्गाणां प्रसङ्गात् प्रसक्तेस्त्रासात्। दूरे तटादपि दूरेऽपसर्पन्तः पशवो गवाद्याः पशुपशिशवः कृष्णसखायश्च यतस्तत्। सर्वमेतत्। क्षोभक्रियाविशेषणम्। तेषां तत्तच्छन्देच्छेनोक्तिः स्वभावभीरुत्वव्यञ्जिका ॥२२॥

दरणं विदलनम् रलयोरैक्यात्। प्रेङ्खोलन्तीं चलन्तीं गरलशिखां बिभर्तीति तस्य ॥२३॥

स्फायन् वृद्धिं गच्छन् तर्को यत्र तथाभूतं स्मयरसं विस्मयरसं बिभर्तीति तेन कालियेन फणिना स श्रीकृष्णो मणीन्द्र इन्द्रनीलाख्यः तत्राप्यद्भुतत्वं फणीन्द्राणां स्वेषा तेजोहर इव इति। यद्वा जात्यैव फणीन्द्रतेजोहरणशील. कश्चिन्मणीन्द्र इति ॥ २४ ॥

तं श्रीकृष्णमालोच्य स कालियो भोगेन स्वशरीरेण समवेष्टयदित्यन्वयः। तं कीदृशं तमालेन सह उच्यमान वर्ण्यमानं सादृश्यं यस्यतम्। दृश्यं दृग्भ्यां हितं वस्तुशक्तिस्वाभाव्येनापि समस्तदुरितनाशात् निरान्तकं निःशङ्कं तं बहुकालतोपि प्रसिद्धं कंचन अनिर्वचनीय दर्पं हरन्तं संहरन्तमिव। कन्दर्पं कामदेवमपि माधुर्य्येण कंसयन्त विकुर्वन्तम्। कसि हिंसायां चुरादिः। माधुर्य्येण कीदृशेन मा शोभा तस्या धुर्य्येण। अत्र तमालेति दृश्यमिति परमेति कन्दर्पेति च

मिव दर्पं कन्दर्पं कंसयन्तमिव माधुर्य्येण माधुर्य्येण ॥ २५ ॥

समकोपरुषा परुषायितमनाः प्रौढाभोगेन भोगेन स कालीयः कालीयकसुर-भिशरीरं समवेष्टयत् ॥ २६ ॥

भगवानपि नपिहितैश्वर्य्यः प्रजगल्भे ॥ २७ ॥

तमथ मथनमघस्य प्रांशुप्रांशुभरेण तेनैव कैशोरोत्सववपुषा वपुषा स्तोकमपि कमपि महायाममिव मन्यमानो मानोद्धतः स भोगी भोगकाण्डेन प्रकाण्डेन प्रवेष्टयन्नप-र्य्याप्तमन्वभूत् ॥ २८ ॥

एवमिच्छयाऽच्छयाऽऽपन्नपन्नगबन्धलीलो भद्रश्रीतरुरिवाऽसावक्षोभोवक्षोभो-न्मिश्रयितव्यनव्यकौस्तुभस्तु भगवान् तावदेव व्यलम्बिष्ट ॥ २९ ॥

यावत्कर्त्तव्यफणिवरफणामण्डलताण्डवालोको लोकोत्तरचमत्कारी भवति। अ-न्यकामाखिलानामऽखिलानामेव व्रजवासिनामिति ॥ ३० ॥

अनन्यदेवतेषामन्यदेव तेषामथ प्रेम वर्द्धयितुं च धैर्य्यं त्वरागमनाय

विशेषणचतुष्टयेन तादृशमाधुर्य्यशालिनमपि नृशंसः कालियो हिंसार्थं तथाकरोदिति। तथा नि-रातङ्कमिति दर्पहरन्तमिति विशेषणाभ्यां तादृशप्रभावशालित्वेनानुभूयमानमपि तं तथाऽकरोत् स महामूर्ख इति विरोधो द्योतितः ॥ २५ ॥

तत्र समाधत्ते समकोपेति प्रकोपो वृद्धिः। यथा पित्तप्रकोपो ज्वरप्रकोप इति समप्रकोपया वर्द्धमानया रुषा परुषायितमनाः कटूकृतचित्तः। प्रौढआभोगो यस्य तेन। आभोगः परिपूर्ण-तेत्यमरः। कालीयो दीर्घमत्र्योपि। कालीयकं कलम्बक इति ख्यातं सुगन्धिकाष्ठम् ॥२६॥

प्रजगल्भे प्रागल्भ्यमकरोत् ॥ २७ ॥

तं भगवन्तम्। प्रांशुरुन्नतः प्रकर्षोऽशुभरो यत्र तेन। उच्चप्रांशून्नतादग्रा इत्यमरः। महायामं महाविस्तारम्। मानोद्धतः गर्वोद्धतः। यतो भोगी फणी विषयभोगवांश्च ॥२८॥

अच्छया निर्मलया नात्र कुयुक्तिः कल्पनीयेति भावः। प्राप्तसर्पबन्धलीलः। भद्रश्रीतरुश्चन्द-नवृक्षः। अक्षोभःअत्र कालीयदमनलीलायां प्रयोजनान्तरमपि निगूढमस्तीत्याह वक्षसो मा कान्तिस्तया उत्कर्षेण मिश्रयितव्योमिश्रयिष्यमाणो नव्यः कौस्तुभो येन स्तुत्यनन्तरं कालीयपत्नी भिःकौस्तुभरत्नस्य उपहारीकरिष्यमाणत्वात् ॥२९॥

यावति यत्परिमाणके वर्त्तव्ये करिष्यमाणे फणिवरस्य फणामण्डले ताण्डवस्याऽऽलोको लोकोत्तरचमत्कारीभवति। तावत् तत्परिमाणकं व्यलम्बिष्ट लम्बमानो बभूव इत्यन्वयः। कृ-ष्णस्य तुङ्गतानुसारेण तेन स्वतुङ्गताविष्कारात्। केषां चमत्कारी। अन्यकामेषु कृष्णभि-न्नवस्तुकामनायां खिलानां न्यूनानां रहितानामिति यावत्। अखिलानां समस्तानामिति हेतोः ३०

अखिलानामित्युक्तं तत्र तेषां नगरस्थानां नन्दादीनां सर्वेषां कथमागमनं संभवेदिति। त-न्निमित्तनादशैच्छाशक्त्या एव दुर्लक्षणं प्रदर्श्य मनाविन्यास्य सर्वे एवैते स्वयमानाययामासेर

रागमनायत्तं च विलोकयितुमातङ्कपिशुनामाऽऽशुनामाऽरिष्टकल्पनां अनेका रयामास ॥ ३१ ॥

तावदेवमनुकूलमनुकूलविपर्य्यस्तप्राणेशश्रीकृष्णोत्थानविलम्ब-लम्बमानमाभीलमाभीलमालम्बमानाः पशवः शिशवश्च ॥ ३२ ॥

शिथिलजीवना विहायसि च विहाय सिचयकचप्रचयादिसंवरणं गीर्वाणा बाणाहता इवमर्मण्यथापन्न हाहेति स्रवदऽस्रवदनधावना धावनाऽसमर्थाः ॥३३॥

निधाय करयुगलं मूर्द्धनि ध्वनिमुक्तकण्ठमुभये भयेन शोकेन केनचिदार्त्ताः कष्टं भोः ! कष्टं हा हताः हा हताः स्म इति निरालोकं लोकं सकलमेव वीक्षमाणा यावदासादितमूर्च्छां मूर्च्छामाप्नुवन्ति स्म ॥३४॥

तावदेव व्रजनगरजनगरलेदधिनेवाऽतिकष्टेनाऽरिष्टेनाऽविकृतिविकृतविभावकेनेवाऽभावि ॥३५॥

यथा दिनकरमुखाभिमुख-मुखरता-खर तार-ध्वनि-ध्वनिताशिवाभिः शिवाभिः ३६

---

शीघ्रमेवेत्याह । अनन्येति न अन्यां देवतामपि इच्छन्तीति क्विप् । तेषां देवतापि यदि पुत्रादिरूपेण स्वयमागत्यातिष्ठेत्तामपि कृष्णं विना नेच्छन्तीत्यर्थः। ननु तर्ह्येवंभूतानपि तान् विषह्रदस्थं स्वं दर्शयित्वा दुःखयिष्यत्येव केवलमित्यत्र नहि नहीत्याह । अन्यदेव सर्वविलक्षणं प्रेम वर्द्धयितुम् । आपत्त्यां स्वप्राप्त्यां तेषां परमानन्दसिन्धौ मज्जयिष्यमाणत्वात् । अत एव धैर्य्यं वर्द्धयितुं छेत्तुम् वर्द्ध च्छेदने चौरादिकः रागमनुरागम् अनायत्तमपराधीनम् । अतङ्कपिशुनां भयसूचिकाम् । आशु शीघ्रं नाम प्राकाश्ये । अरिष्टस्य कल्पनामित्यनेन तस्यावास्तवत्वं व्यञ्जितम् अघबकादिवधलीलायामिवात्रापि कृष्णस्य सर्वथा स्वास्तिमत्त्वेन स्थितेः॥ ३१॥

. तावत् एवम् अनेन प्रकारेण कूलम् अनु तटं लक्षीकृत्य अनकूलस्य विपर्य्यस्तं प्रतिकूलं प्राणेशस्य श्रीकृष्णस्य उत्थानविलम्बेन लम्बमानं दीर्घीभवत् आभीलं कष्टम् आलम्बमाना आश्रयन्तः । कीदृशम् आ सम्यक् प्रकारेण भियं ळाति ददातीति तत् ॥३२॥

विहायसि आकाशे इत्यनुसन्धानाभावव्यञ्जकम् । गीर्वाणाः देवाः स्रवता अस्रेण वदनानां धावनं प्रक्षालनं येषां ते ॥३३॥

उभये पशवः शिशवश्च ।*आसादिता प्राप्ता मूर्च्छा समुच्छ्रायो यया ताम् अतिमहतीं मूर्च्छामित्यर्थः । मूर्च्छा मोहसमुच्छ्रययोरिति धातुपाठात् ॥ ३४ ॥

व्रजे नगरस्थजनेषु गरलसमुद्रेण इव अरिष्टेन अभावि अभूयत् । कीदृशे न अविकृतिर्विशेषेणैव क्रियारहित्यं निश्चेष्टत्वं प्रळय इतियावत् । सैव विकृतिः सात्विकविकारोऽष्टमस्तद्विभावकेन तज्जनकेनेव ॥३५॥

दिनकरस्य सूर्य्यस्य मुखाभि मुखाभे कृतानि मुखानि तेषां मुखरतया मौखर्य्येण हेतुना यः खरस्तार उच्चारो ध्वनिस्तेन ध्वनितं व्यञ्जितमशिवमशुभं याभिस्तथाभूताभिः सतीभिः शिवाभिः शृगालैर्भूवे अभूयत ॥३६॥

निर्धूलीधू-लीढाभिरपि धूमधूमलतया मलीमसतया सम्वादिगवलाभिर्दिगब-
लाभिः ॥ ३७ ॥

विडम्बितनिर्महोमणिना ह्योमणिना ॥३८॥

खरतरस्पर्शनेन स्पर्शनेन ॥३९॥

बभूवे भू वेपथुना पृथुना पृथगेव ॥ ४० ॥

पस्पन्दे वामनयनाऽवामनयनादि पुंसान्तु वामनयनादि ॥ ४१ ॥

उभयेषामेव व्यथमानमानसत्वं न सत्वं तावत्कमप्यऽनुद्वेगमाशिश्राय ॥४२॥

इत्येवंविध-विविध-विरुद्धाऽभावुकभाऽऽवुक-महातङ्क-पङ्क-पाङ्किलहृदः सर्व एव घोषाघोषाधिराजेन समं समन्तत उद्भूत-भूत-विप्लवमिव मन्यमाना मानातीतं कृष्णानुभावं ह्यऽनुभावंभावं च नाऽनुभवत इति तं प्रति शशङ्किरे ॥ ४३ ॥

अहो ! अद्य महाबुद्धिबलेन बलेन विना वनं गतवानेकोऽनेकोपद्रवकरावकरारिघोरंनिरघोऽरंनिरवधानैः शिशुभिः पशुभिः पथि नाऽभिज्ञैः सह सहताः स्मो न विग्नः शिव ! शिव ! किं कष्टं समजनीति नीतिमन्तः ॥ ४४ ॥

---

धूलीनां धूः कम्पनं वायुगत्या चलनं तया या रीढा तिरस्कृतेनाऽवज्ञातताभ्यो निर्गताभिरपि । रीढाऽवमाननाऽवज्ञा इत्यमरः । रलयोरैक्यम् । सम्वादि सादृश्यधारि गवलं माहिष शृङ्गं यासां ताभिः दिग्भिरेव अबलाभिः स्त्रीभिः ॥३७॥

अहोमणिना सूर्येण कीदृशेन विडम्बितोऽनुकृतो निर्गहा निस्तेजस्को मणिर्येन तथाभूतेन बभूवे ॥३८॥

स्पर्शनेन पवनेन ॥३९॥

भूवेपथुना भूकम्पेन पृथगेवेति सर्वतोऽप्याधिक्यद्योतनाय ॥ ४० ॥

वामनयनानां नारीणाम् अवामनयनादि दक्षिणनयनभुजोरु । पुरुषाणां तु तद्विपर्य्ययेण वामनयनभुजोरु ॥ ४१ ॥

उभयेषां पुंसां स्त्रीणां च सत्वं प्राणः कमप्यऽनुद्वेगं न आशिश्राय न प्राप किन्तु सर्वमेवोद्वेगमित्यर्थः । सत्वं भावे स्वभावे च व्यवसायप्रभावयोः । पिशाचादौ गुणे प्राणे बले जातौ च चेतसीत्यमरमाला ॥ ४२ ॥

एवंविधं विविधं विरुद्धं यदऽभावुकमकुशलं तस्य भा कांतिस्तया आवुकेन जनकेन महातङ्करूपपङ्केन पङ्किलं हृत येषां ते । अथाऽवुको जनक इत्यमरः । घोषाः गोपाः मानातीतं सङ्ख्यातीतं कृष्णस्यानुभावं भावम् अनुभावं भावं च अनुभूया अनुभूयाऽविनाऽनुभवन्तः । अत्रादौ धातुः साधनेन युज्यते पश्चादुपसर्गेणेतिमते णमुलन्तस्य द्वित्वानन्तरमुपसर्गयोग इति । तं प्रति श्रीकृष्णं प्रति ॥ ४३ ॥

बलेन बलदेवेन । वनं कीदृशम् अनेकोपद्रवकरोऽवकरो दोषो येषां तैररिभिः शत्रुभिर्घोरम् । स कृष्णस्तु निरघः कस्याऽप्यपराधं न करोति तथापीत्यर्थः ॥ ४४ ॥

त्वरितमेव यथावस्थितमवस्थितमपहाय हायनोर्द्धमपि बालकमारभ्य सकला एव विकला विकला एव विरूढशोककृष्णवर्त्मना कृष्णवर्त्मनामुद्देशेन कुलवधूसमेतपुरपुरन्ध्रीभिः समं व्रजेश्वरी बालवृद्धतरुणाभीरैः सह सहसंकर्षणो व्रजेश्वरश्च त्रिभुवनविलक्षणलक्षणभगवच्चरणकमललक्ष्मानुसारेणकातरमनसो मनसोऽग्रत एव तं देशमासेदुः ॥ ४५ ॥

केवलं स्थावरतयाऽवरतया शोचन्तीवात्मानमनिशान्तानि निशान्तानि स्थितानि ॥४६

एवमागताश्च ते तं देशं तदेशं तमन्तरेण रुदतः शिशूनपि परमशोकातुरानवलोक्य प्रश्नमन्तरेणैवमन्तरेणैव निवेदितमवगत्य श्रीकृष्णविषह्रदाप्लवनं विषह्रदाप्लवनं कृतवन्तमिवात्मानं तटस्था एव जानन्ति स्म ॥ ४७ ॥

आपादाग्रशिरोविषानलमहोमाहात्म्यदग्धा इव
ज्वालाजालकरालभस्मितहृदः सर्वे निपेतुर्भुवि ।
वात्यावर्त्तविपाटिता इव लता नार्य्यो नराश्चर्क्षणा
न्मूलच्छेदधुता द्रुमा इव हृदप्रान्तस्थलीं तस्तरुः ॥ ४८ ॥
हा तात ! तातवत्सल ! किं कृतमतिसाहसं सहसा
इति वाष्परुद्धकण्ठं रुदन्नमूर्च्छद् व्रजाधीशः ॥
व्रजजनप्रिय ! वत्स ! विपद्यते व्रजजनस्तव दर्शय सन्निधिम् ।
अहह ! हा ! वत ! हेत्यऽनुलापिनस्तमभितः पतिता भुवि गोदुहः ॥ ४९ ॥
समदुःखसुखा व्रजेशभार्य्या परितस्तां पतिताः सह वै गोप्यः ।

अवस्थितं भोजनपानाद्यवस्थां तच्चेष्टामित्यर्थः । तत्रापि यथावस्थं तत्तच्चेष्टामपि तथातथाऽवगमनातिक्रम्य समाप्तिमनपेक्ष्य मध्य एव विहायेत्यर्थः । शोककृष्णवर्त्मना शोकाग्निना । कृष्णवर्त्मा शोचिष्केश उपर्बुध इत्यमरः । तं देशं कालीयहृदतटम् ॥४५॥

स्थावरतया आत्मानम् अवरतया अवरत्वेन निकृष्टत्वेन गमनाऽसामर्थ्येन शोचंति इव । अतएव अनिशान्तानि न नितरां शान्तानि दुःखशान्तिमप्राप्तानीत्यर्थः । निशान्तानि गृहाणि निशान्तवस्त्यसदनमित्यमरः ॥४६॥

तदा तस्मिन् काले ईशं श्रीकृष्णं तम् अन्तरेण विना रुदतः अत एव क स भवतां प्राणबन्धुरिति प्रश्नमन्तरेण एवं हा ! हन्त विषहृदे स प्रविष्ट इति तैर्निवेदितमप्यन्तरेण विनैव अवगत्य ज्ञात्वा तटस्थाःकूलस्था अपि ॥४७॥

करालं यथा स्यात्तथा भस्मितं हृत् येषां ते । तस्तरुराच्छादितवन्तः ॥ ४८ ॥

हे व्रजजनस्य प्रिय ! वहुव्रीहिर्वा तव व्रजजनो विपद्यते म्रियते । तं नन्दमभितः । गोदुहो व्रजराजस्य सखायः ॥ ४९ ॥

गोप्यो व्रजेश्वर्य्याः सख्यः समदुःखसुखाः । तस्याः सुखेन सुखिन्यः तस्या दुःखेन दुःखिन्य

कुररीमिव शोककर्शिताङ्गीं विलपन्तीं करुणस्वरं विलेपुः ॥ ५० ॥
नवमुग्धदृशः कुमारिकाश्च प्रथमानप्रथमानुरागभाजः ।
स्खलिता भुवि मूर्च्छयैव सख्या कृतसान्त्वा । इव भो तदा विलेपुः ॥५१॥

एवं तदा तदाकाराकारितमनस्तया नस्तया प्राकृतयाऽऽततया च तथाविधेऽपि शोके जीवितानि वितानित-स्थेमानि न परं यदि वांहरभूवन् । तदा करुण-विलापशब्दगुणं गगनम् । अश्रुनिर्झरमयो ह्रदतटः। निः सहनिपिततैः । कलेवरैश्छिन्नलताद्रुममयीव धरणी । शोकमयः समय इति स्थिते ॥ ५२ ॥

कृष्णानुभाव-भावनाकुतूहलिना हलिना किंचिदूचे ॥ ५३ ॥

हंहो तात! तातप्यमान मानस तया समेधमानेन माऽनेन शोकेन स्वदेहः खेदयितव्यो दयितव्यो यं कृष्णस्य ॥ ५४ ॥

भो मातर्माऽतः परं विलपलपनं मे निर्द्धारय धारय धृतिं भो भोः पौरजानपदा! विपदाविष्करणेन माऽपरं परं संतापमाप्तुमर्हत ॥ ५५ ॥

अस्य हि मद्वरजस्य मद्वरजस्य शौर्य्यस्य महिमानं हि माऽऽनन्दवर्द्धनं भवन्तो जानन्ति जानाम्यऽहमेव केवलं केऽवलम्बन्तामऽमरपरिवृढा अपि यद्ब-वावबोधम् ॥ ५६ ॥

इत्यर्थः । अभितः परितः समया निकषा हा योगेष्वपि दृश्यत इति द्वितीया ॥ ५० ॥

नवमुग्धदृशो वध्वः । यद्वा तथाभूता भवन्त्यः कुमारिकाश्चेतिचकाराल्लब्धानां वधूनामेवात्र प्राधान्यमायातम् ॥ ५१ ॥

तदा तस्मिन् काले तस्य श्रीकृष्णस्य आकारेण आकृत्या आकारितानि आहृतानि मनांसि येषां तेषां भावस्तत्ता तया । अतएव अनस्तया न अस्तंगतया तत्र हेतुः अप्राकृततया। साऽपि नैकांशेन किन्तुसर्वांशेनैवेत्याह । आततया संपूर्णया हेतुना । तथाविधेऽपि शोके । जीवितानि प्राणाः । कीदृशानि वितानितो विस्तारितः स्थेमा स्थैर्य्यं यैस्तानि निःसहं यथा स्यात्तथा निपतितैः ॥५२॥

कृष्णस्याऽनुभावस्य प्रभावस्य भावना अनुसन्धानं तेनैव कुतूहलवतेति तस्य प्रगाढप्रेमाबेशातिरोहितैश्वर्य्यज्ञानत्वेपि तदानींमैश्वर्य्यशक्त्या मनसि स्वयमेव स्फुरितं नन्दादीनां सर्वेषां किंचित्सन्धुक्षणप्रापणार्थमिति ज्ञेयम् ॥५३॥

तातप्यमानम् अतिशयेन तप्तं भवति मानसं यस्मात् तस्य भावस्तत्ता तया सम्यगेधमानेन वर्द्धमानेन शोकेन स्वदेहो न खेदयितव्यः । यतोऽयं कृष्णस्य दयितव्यः कृष्णेनानुकम्पनीयः ॥ ५४ ॥ लपनं वचनम् ॥५५॥

मद्वरजस्य मत्कनिष्ठस्य । शौर्यस्य महिमानं भवन्तो हि निश्चयं मा जानन्ति न जानन्ति । कीदृशम् । आनन्दवर्द्धनम् । शौर्य्यस्य कीदृशस्य । मद्वरात् महाहङ्कारजातस्य अस्माभे को वराकः कालिय इति भावः।अमरपरिवृढा देवश्रेष्ठा अपि के तावत् यस्य महिम्नो लवस्याऽप्यऽवबोधं ज्ञानम् अवलम्बन्तां प्राप्नुवन्तु ॥ ५६ ॥

बोधं प्राप्नुवत । इपत्कार: खल्वऽयमनेन पुन्नागेन नागेनस्य पराभवः ५७

नाऽगेनपराभवः पयनेन कर्त्तुंशक्यते ॥ ५८ ॥

न मयूखमालिमालिन्यं तमसा कर्त्तुं प्रभूयते ॥ ५९ ॥

न च समूहो महानलस्यनलस्यवनेन निर्वाप्यते ॥ ६० ॥

किमस्य मकरकुण्डलिनः क्षुद्रवमाद्भयसंभावनम्। तदधुना संतापमुपश्यत पश्यत भुजङ्गापसदमुममुक्तशौर्य्यो मुक्तप्राणमिव कृत्वा समुत्थितप्रायोऽयमभिप्रायोयमभिमतो मम निश्चीयताम् ॥ ६१ ॥

इत्युक्तवति भगवति भगणपतिधवले बले सपरिजन-जनक-जननीजननीरन्ध्र-शोककातरतामनुमाय मायया संमोहितसकलसुरासुरादिलोको लोकोत्तरगुरुतरप्रभावो भावोधोज्वलः प्रकटितपुरुपराक्रमः क्रमवरीवृद्ध्यमानवेगो मत्तकुण्डलिकुण्ड-

पुन्नागेन पुरुषकुञ्जरेण श्रीकृष्णेन नागेनस्य नागानाम् इनस्य मुख्यस्य कालियस्य पराभवः ५७

ननु कालियोपि महाशौर्य्यवानतिक्रूरश्च । सत्यं तथापि श्रीकृष्णं पराभवितुमसौ न शक्नोतीति सदृष्टान्तमाह । नागेनस्य न अगेनस्य पर्वतमुख्यस्य पराभवः । शैलवृक्षौ नगावगावित्यमरः ॥ ५८ ॥

न केवलं पराभवाशक्तिरेव । किन्तु महातेजस्विनः सान्निध्यमात्रेणैव तत् प्रतिकूलस्य नाश एवस्यादित्याह **न मयूखेति** मयूखमाली सूर्य्यः ॥ ५९ ॥

न च नाशमात्र एव विश्रान्तिः प्रत्युत तत एव तेजसामप्युपचय एव महान् स्यादित्याह **न च समूहइति** न च निर्वाप्यते प्रत्युत स्वं भस्मीकारयितुम् अतिवर्द्धिष्णुक्रियत इति भावः ६०।

मकरकुण्डलिनः कृष्णस्य । कुण्डलिनः सर्पात् । उपश्यत दूरीकुरुत । शो तनूकरणे इत्यस्य रूपम् ॥ ६१ ॥

भं नक्षत्रं तद्गणपतिश्चन्द्रः । तथाविधेपि तस्मिन् कालियस्य तदानीन्तनस्वदौरात्म्यप्रकटने हेतुः **मायया संमोहितेति** । तदानीं श्रीबलदेवस्यबन्धुजनाश्वासनयोग्यतायां हेतुः **लोकोत्तरेति** । बकाघाद्यसुरवधसूचितं महाप्रभावं तस्य तदा तान् स्मारयामासेति भावः । भा देहकान्तिः बोधः स्वविक्रमानुभवः ताभ्यामुज्ज्वलः बहिरन्तः प्रफुल्ल इत्यर्थः । अत्र प्रकटितपुरुपराक्रमः भावोधोज्ज्वलः क्रमवरीवृद्ध्यमानवेग इति विशेषणत्रयेण पर्वतमयूखमालिमहानलेति दृष्टान्तत्रयधर्माः क्रमेण विवृताः । मत्तस्य कुण्डलिनः कालियनागस्य कुण्डलितं कुण्डलाकृतिवेष्टन यत्र सः । अदरेण अनल्पेन तोषेण हर्षेण पेशलं सुन्दरं स्मितं यत्र तद्यथास्या-

---

१ ईषद्दुःसुपु कृच्छाकृच्छ्रार्थेषु खलिति खलन्तम् । तेन अनेन कालियपराभवःसुखकर इत्यर्थः ।
२ पुंसा च तेन नागेन पुन्नागेनेति वृन्दारकनागकुञ्जरैः पूज्यमानमिति समासः ।
३ नागेनस्य पराभवः नागेनकर्मकपराभवः-पुन्नागकर्त्तृक इत्यर्थः । नागेनस्येति उभयप्राप्तौ कर्मणीति षष्ठ्यन्तं पराभवइतिसुबन्तेनसहकर्मणिचेतिनसमस्तम् । नागेनपराभव इतिपाठेतु नागेने पराभवइतिसप्तमीतियोगविभागात्सप्तमीसमासेन निर्वाह्यम् । ४ उपोपसृष्टस्य ।

लितस्तिमिर-तरु-काण्डगतश्चन्द्रमा इव ह्रदोदरतोऽदरतोपपेशलस्मितमुन्ममज्ज न-मज्जनसुखाकरः श्रीकृष्णः ॥ ६२ ॥

अथ तदैव दैवतसदसि ।

भंभंभंभमिति वभूव शङ्खघोषो दुंदुंदुंदुमिति च दुन्दुभिर्भणादः ।
गीर्वाणा गरिमगभीरभूरिभेरीभाङ्कारैः श्रुतिपथपोथिनो बभूवुः ॥ ६३ ॥

ततस्ततेन तेन प्रमोदनादेन नादेन सह सहसा समकालमेव लब्धजीविता इव विपन्नाः प्रमोदेनेव करग्राहमुत्थापिताः पितामहादिभिरभिनन्द्य सौभाग्याभाग्यातिरेकभाजो व्रजराजादयः ॥ ६४ ॥

तमति तीक्ष्णतीक्ष्णक कालं करालतर फणफणद्विपफेणफेनिलमुखविवरज्वलज्ज्वालाजालजाऽलघुविस्फुलिङ्गलिङ्गकमहाभयम् ॥ ६५ ॥

शतमूर्द्धानमूर्द्ध्वाऽऽनद्धमणिशतमयूखनिचय-ख निचयन-चतुरमधोमुखतप्ततराम्बरीषनिर्विरीषानजात जातवेद-कण-सदृशदृशमवदोधूयमानायत यतन-द्विशतरसनासनाथ मुखोदरम् ॥ ६६ ॥

तथा उन्ममज्ज उत्थितवान् नमतां भक्तानां जनानां सुखाकरः ॥ ६२ ॥

गरिम्णा गभीरैः भूरिभेरीणां भाङ्कारैः श्रुतिपथस्य पोथिनः कुन्थनकर्त्तारः । पुथि कुन्थन-इति वोपदेवः॥ ६३ ॥

ततेन विस्तृतेन । प्रमोदनां ददातीति तेन नादेन सह समकालमेव लब्धजीविता इति तादृशनादोऽपि पूर्वं नष्ट इवासीदिति भावः । व्रजराजादयस्तमतिमदं कालियनागमालोक्य पुनरपि समुपसन्नां प्रमोहावस्थामालम्बितुं यदैव प्रवृत्तिरे तदैव संकर्षणेन किमपि निगदता अवरजः कृष्णो दर्शयांबभूवेत्यन्वयः ६४। तं कीदृशम्। अतितीक्ष्णं तीक्ष्णकं लोहविशेषमिवकालं कालवर्णं विषाग्निमल्लोहेषुतीक्ष्णमित्यमरः। करालतरेभ्योऽतिभीषणेभ्यः फणेभ्यः फणतां निर्गच्छतां विषाणां फेणैः फेनिलानि यानि मुखानि तेषां विवरेषु ज्वलतो ज्वालाजालात् जाता अलघवः विस्फुलिङ्गा एव लिङ्गानि ज्ञापका यस्य तथाभूतं महाभयं यत्र यस्मात् वा तं तादृशमहाभयरूपमितिवा । फणादिति फण गतौ शत्रन्तः ॥६५॥

शतमूर्द्धानं शतसङ्ख्यमस्तकम् । एतच्च प्राधान्यापेक्षया यथोक्तम् । यद्यच्छिरो न नमेत्तच्छतैकशीर्ष्णी इति वस्तुतस्तु सहस्रफण एवासौ यथोक्तम् । तन्निरतावडवनिरगफणासहस्र इति ऊर्द्ध्वदेशे असम्यक्प्रकारेण नद्धस्य बद्धस्य मणिशतस्य मयूखानिचयैः किरणसमूहैरेव खस्य आकाशस्य नितरां चयने आकृष्य ग्रहणे चतुरम् । अधस्थितानि मुखान्येव तप्ततराण्यम्बरीषाणि भर्जनपात्राणि तेभ्यो निर्विरीषं निबिडं यथास्यात्तथा निर्जातस्य निःसंशयं जातस्य जातवेदसो वह्नेः कणैरिव सदृशो दृशो नेत्राणि यस्य तम् । दोधूयमाना अधिशयेन चलन्त्य आयता दीर्घायसना दंशनार्थं कृतयत्ना द्विशतरसना एकैकमुखे द्वे द्वे जिह्वे इतिनियमेन या द्विशतसङ्ख्याजिह्वास्ताभिः सनाथानि मुखानामुदराणि विवराणि यस्य तम् ॥६६॥

खोदरं लेलिहानमिवाऽतिमदं कालियनागमालोक्य जातमात्रमानन्दकन्दलं दलन्तमपि भूयो भूयोभिर्भयैः शोपयन्तो मुहुरतोपयन्तो हृदयं च ॥ ६७ ॥

जीवितावासबलदे बलदेवस्य वचस्यऽपि न विश्वसन्तो निश्वसन्तो नितान्तं दीर्घमुष्णं मुष्णन्त इव स्वयं स्वमेव धैर्यं पुनरपि समुपसन्नां प्रमोहावस्थामनवधीरयन्तीमालम्बितुं यदैव प्रवर्तितरे ॥ ६८ ॥

तदैव शोकसङ्कर्षणेनसङ्कर्षणेन किमपि निगदता सरसतरं स रसतरङ्गतो रङ्गवो भुजङ्गमोत्सङ्गसङ्गतमात्मानं शिथिलीकृत्य फणफणायमानफणायमानमनाः फणशत-मणिशत-किरणमञ्जरी-जरीजृम्भ्यमाण-महामहोवल्लिकाननविजिगाहयिषया-समुत्पतन् समुत्पतन्निव फणमण्डलमारोहन्नवरजो वरजोषो दर्शयां बभूवे ॥६९॥

भो ! भो ! दृश्यतां दृश्यतां गतोऽयमञ्जनस्निग्धो भुजङ्ग-दशन-दंशन लग्न-विषम-विष-महानल स्फुलिङ्गकण चाकचक्याशक्योपममणिमयसकलालङ्करणोऽलङ्करणोचितविक्रमः ॥ ७० ॥

---

खस्य आकाशस्य उदरं मध्यं लेलिहानं पुनः पुनर्लिहन्तं जातमात्रं श्रीकृष्णमुखशोभादर्शनात् आनन्दकन्दलम् आनन्दाङ्कुरम् । कन्दलं तु कपाले स्यादुपरागे नवाङ्कुरे इति विश्वः। दलन्तं प्रस्फुटन्तमपि भूयः पुनः कालियनागालोकनात् भूयोभिर्बहुतरैर्भयैः शोपयन्तः शुष्की कुर्वन्तः ॥६७॥

जीवितस्य जीवनस्य आश्वासरूपं बलं ददातीति तस्मिन् । प्रमोहावस्था मूर्च्छा कीदृशीम् अनवस्थाम् अनवस्थानम् अनवधीरयन्तीं न अवजानन्तीं पुष्यन्तीमित्यर्थः । यद्वा अनवधि अवधिशून्यं यथास्यात्तथा अनवस्थाम् ईरयन्तीम् ॥६८॥ शोकसंकर्षणेन शोकनाशकेन अवरजः स्वानुजः श्रीकृष्णोदर्शयामासे तान् प्रति इत्यर्थः । सरसतरं यथास्यात्तथा स कृष्णो रसतरङ्गतो जलतरङ्गात् रङ्गतो रङ्गेण भुजङ्गमोत्सङ्गे संगतम् आत्मानं शिथिलीकृत्य समुत्पतन् क इव समुत्पतन् समुत् हर्षयुक्तः पतन् पक्षीव । पतत्पत्त्ररथाण्डजा इत्यमरः । ततश्च फणफणायमानेषु सहसा वृद्धशीलेषु फणेषु अपमानं नृत्यार्थं गच्छत् मनो यस्य सः फण[2]फणेति सहसा वृद्धिप्रफुल्लतानुकरणम् किमर्थं फणानां शते मणिशतस्य किरणमञ्जरीभिर्जरीजृम्भ्यमाणा अतिशयेन प्रकाश्यमानाः महामहोवल्यः महातेजोमयलतास्तासां काननस्य विगाहनेच्छया । वरो मुख्यो जोषः प्रीतिर्यत्र सः ॥ ६९ ॥

दृश्यता दर्शनार्हतां गतः प्राप्तः । भुजङ्गस्य दशनैर्दन्तैर्दंशने लग्नं विषमं विषमेव महानलस्य स्फुलिङ्गकणस्तस्य चाकचक्येन अशक्योपमं निरुपमं मणिमयं सकलमलङ्करणमलङ्कारो यस्य सः । अलमतिशयेन करणानां भुजादीनामुचितो विक्रमो यत्रसः । यद्वा । करणे कार्ये विषये युक्तविक्रमः ॥ ७० ॥

---

१ अव्यक्तानुकरणाद्द्व्यजवरार्धादिति डाजन्तात्क्यप् ततश्शानच् नित्यमाम्रेडिते डाचीति पररूपं च।

२ फणत्फणिति नाम्रेडितस्यान्त्यस्य तुवा ।

क्रमवरीवृद्ध्यमानाऽवमानावहृत-भुजग महाभोग-भोग-वेष्टन-शिथिलकच-कलापाऽलक-निकरोष्णीष-पीतवसनवनमालामालालितविग्रहो विग्रहोपयुक्ततया पुनरपि दृढवद्धपरिकरः ॥-७१ ॥

परिकरसुखदिदृक्षया क्षयाय फणमणिमहसो महसोसूयमानमहसो निजकलेवरस्य वरस्य मभया भयाक्रान्त्येव निर्वापितेषु फणमणिमहस्सु सुखमिदानीं दृश्यतां मद्वचसश्च तत्वमनुभूयताम् ॥ ७२ ॥

भूयतां च परमानन्दवत्तया विस्मृतवैकल्यैः कल्यैकवल्याणैः ॥ ७३ ॥

इति विस्मय-स्मय शवलेन वलेन निगदिता दिताखिलशोकाः सर्व एव घोपजुपो जुपोत्फुल्लनयना नयना नन्दकन्दं श्रीकृष्णमालोकयन्तो लोकयन्तोपि भयानकमहीन्द्रं युगपदेव पदे वर्द्धमानमानन्दभययोः शावल्यं भजन्ते स्म ॥७४॥

अथ श्रीकृष्णोपि तटस्थानतटस्थानतिममतया मतया तान्करुणापाङ्गेन कृपाङ्गेन कृतार्थी कुर्वन्नखिलसुरकिन्नरनरसिद्धसिद्धसन्मानो मानोन्नतानतोद्धारकःफणमण्डलरङ्गभुवि निनर्त्तिपुर्यदि मनः सहचरीचरीकरीति स्मत दैव विबुधा विबुधा गन्धर्व

क्रमेण वरीवृद्ध्यमानोऽतिशयेन वर्द्धमानो ऽवमानस्तिरस्कारस्तेनैव अवहृतं दूरीभूतं यद्भुजगस्यमहाभोगेन वृहदाभोगेन शरीरेण वेष्टनं तेन हेतुना शिथिलाः याचकलापश्च अलकनिकरश्च उष्णीषं च पीतवसनं च वनमाला च ताभिरेव मा शोभा तया लालितो ललितीकृतो विग्रहो देहो यस्यसः विग्रहोपयुक्ततया नृत्यमिषेण कालियशिरसि पादप्रहारप्रदानेच्छया दृढं वद्धः परिकरः परिच्छदोयेन सः । भवेत् परिकरो वृन्दे पर्यवारविवेकयोः । आरम्भगात्रिकावन्धपर्य्यङ्केषु परिच्छद इत्यमरः ॥७१॥

फणानां मणिमहसो मणितेजसः क्षयाय च वद्धपरिकरः । अत एव महेन निनर्त्तिपोत्सवेन सोसूयमानम् अतिशयेन प्रादुर्भवत् महः किरणो यस्य तथाभूतस्य कलेवरस्य प्रभया कान्त्या निर्वापितेषु । तत्र हेतुमुत्प्रेक्षते भयाक्रान्त्येवेति कृष्णगात्रतेजसा मणितेजांसि भीतानि जातानि । अत एव तेन निर्वापितानीत्यर्थः । वस्तुतस्तु महातेजसोग्रे क्षुद्रस्तेजस्तिरोवत्त एव॥७२॥

अत एव युष्माभिर्विस्मृतवैकल्यैर्भूयताम् वैकल्यमपि स्मृतिपथे मा तिष्ठत्वित्यर्थः । कीदृशैः कल्यं समर्थं निरामयं वा एकं मुख्यं कल्याणं भाग्यातिरेकोयेषां तैः । कल्यौ सज्जनिरामयावित्यमरः ॥ ७३ ॥

इति विस्मयस्मयाभ्याम् अद्भुतहास्यरसाभ्यां शवलेन कर्वुरितेन वलदेवेन उक्ताः सन्तः खण्डितसमस्तशोकाः। अत एव जुपा प्रीत्या उत्फुल्लनेत्राः । जुपी प्रीतिसेवनयोर्भावाक्विप्यन्तः युगपदेव पदे स्थाने विषये श्रीकृष्णदर्शनेनानन्दो वर्द्धते कालियदर्शनेन भयमिति ॥७४॥

तटस्थान् कूलस्थान् मतया युक्तया अतिममतया अतिशयममत्वेन हेतुनाऽतटस्थान् अनुदासीनान् । तान् व्रजवासिनः करुणापाङ्गेन करुणेनापाङ्गेन करुणरसमयेन कटाक्षेण इत्यर्थः। कृपा दयैव अङ्गं यत्र तथाभूतेन कृतार्थीकुर्वन् सन् निनर्त्तिपुर्यदि मन एव सहचरीकरीति

१ फणिफणमहस्सु इति पाठान्तरम्

विद्याधराप्सरसां सरसां गोष्ठीमारचय्य मृदुमृदङ्गमुरज-पणप पण-बहुलनृत्यसाहाय्यसंपादनाय समवतिष्ठन्ते स्म ॥७५॥

समनन्तरमनन्तरहसि निखिलकलासौभगवति भगवति कर्कशमार्गरीत्या-दाक्षिणात्यप्रबन्धबन्धमनुसरति गन्धर्वादयोपि चञ्चत्पुटचाचपुटतालीगुरुलघुप्लुतद्रुतद्रुतार्द्धविरामरामणीयकविदां वरिष्ठैः सशब्दैनिःशब्दादिभेदविचारचातुरीगरीष्ठैस्तालधारिभिरुद्घाटयामासुः ॥ ७६ ॥

यथा । थैयातथतथथैयाथैथैथैयातथेति गन्धर्वाः । तालंपाठं वादनमारेभिरुच्चकैर्मुदिताः । उद्घाटयन्ति शब्दं तालंपाठं च ते यथा विरुदम् । अयमपि तथैव-नृत्यतिफणिनः फणतः फणान्तरं गच्छन् ॥ ७७ ॥

निजकलितया गत्या नृत्यति कृष्णो यथा स्वैरी । न तदनुरूपं गातुं पठितुमप्यमी शेकुः ॥ ७८ ॥

एको नृत्यन्नथ फणिपतेः शीर्षतः शीर्ष्णि गच्छन् ।
स्वेनाक्रान्तां वदनविधुनोद्ग्राहयन् शब्दमालाम् ॥
घाते घाते चरणकमलाघातभङ्ग्योन्नमन्तं
शीर्षे कृत्वा नमयति फणं पण्डितस्ताण्डवेशः ॥ ७९ ॥

द्रांद्रांद्रांदमिदमिथोङ्गथोङ्गथोङ्गित्युत्तालप्रसृमरतालपाठगत्या ।
विन्यस्यन्नदयमुदारपाद पद्मं बभ्राजे फणिफणरङ्गभङ्गरङ्गी ॥ ८० ॥

---

स्म । नृत्याङ्गानां वाद्यगीतादीनामपेक्षितत्वेपि तत्रान्यस्य प्रवेशाशक्तेः । स्वमानसमेव मार्दङ्गिकादित्वेन स्थापितं तथाभूतमपि सहचरं स्वसङ्गसङ्गतम् अतिशयेनाकरोदित्यर्थः । सहचरोति अभूततद्भावे च्विः । नन्वेवमपि कथं नृत्यसिद्धिस्तत्राह अखिलानां सुरादीनां सिद्ध एव सम्मानो नृत्यसाधुवादो यत्र सः । तत्रहेतुः । मानिन नाट्यशिल्पज्ञानेन उन्नतः । न केवलमेतावत्वमेव किन्तु नतोद्धारकः नतानां भक्तानां स्वप्रभुं तथाभूतमालोक्य भयविह्वलानां तस्मादुद्धारकर्त्ता । अतएव विबुधा देवाः । विबुधा विशिष्टपण्डिताः । तदानीन्तनव्यवसायौचित्यज्ञानात् । मृदङ्गादिभिः पणबहुलस्य स्तुतिबहुलस्य नृत्यस्य साहाय्यं संपादयितुम् ॥७५॥

अनन्तरहसि अपरिमितरहस्ये । रहोऽतिगुह्ये सुरते इति विश्वः । यद्वा । अनन्तस्य शेषनागस्यापि रहस्यरूपे । अतः कालिमफणोपरिनृत्ये को विस्मय इति भावः ॥ ७६ ॥

तथा विरुद चण्डवृत्तमञ्जर्यादिलक्षणं विरुदमनतिक्रम्य ॥ ७७

अमी गन्धर्वादयः ॥ ७८ ॥

घाते घाते प्रतिघातमेव स्वेन वदनविधुना स्वमुखचन्द्रेण ॥ ७९ ॥

अदयं निर्दयं यथा भवत्येवं पादपद्मं विन्यस्यन् सन् बभ्राजे भ्राजते स्म । शङ्कुशरावघटोपरि परिपाटीभिर्नटन्ति शैलूषाः । इति तान्नातिचिक्रमिषु फणिफणमनु नरीनरीत्यसौ कृष्णः ॥८०॥

अथैवं श्रीकृष्णस्य निजगतिविशेषमनुकर्त्तुमशक्नुवन्तोऽवन्तो व्रीडामायतमाना यतमाना अपि गन्धर्वा अप्सरसश्च यदि न प्रभवन्तिस्म । तदाऽमी हर्षोत्कर्षोत्कमनसः स्वातन्त्र्येणैव ननृतुर्जगुश्च ॥ ८१ ॥

अथ तुमुलेषु दिवि दुन्दुभिदुङ्कारेषु घनगभीरेषु भेरीभाङ्कारेषु स्वभावसुस्वरेषु मुनिगणस्तवनेषु निपतन्तीषु च नन्दनवनकुसुम–दृष्टिषु वहुविधमेधमानेषु च दिविषदां घोषवासिनां च प्रमोदेषु विबुधदुहां च वैमनस्येषु ॥ ८२ ॥

ताण्डवचण्डिमानमारब्धवतः श्रीवनमालिनो निर्दयनिर्भरविन्यस्यमानचरणकमलाघातखेदखिन्नतया प्रतिफणं वमदसृग्धारमाभुग्ननयनमतिशीर्य्यज्जोगमाकुलतया म्रियमाणमिव तमाशीविषपतिं पतिं विलोक्य । विषण्णहृदो हृदोपनीयाऽल्पानि पल्या निधनं गच्छतेव सकातर्य्यं ममतया निरीक्ष्यमाणास्तेन चातिशयदोदूयमानमानसाः ॥ ८३ ॥

न साम्प्रतं भगवदनुग्रहमृते मृतेरस्य निरासकं वर्त्तत इति मनसि विभाव्य भाव्यनुकम्पां भगवतोऽभिकाङ्क्षन्त्यस्तद्धनिना नितान्तशोककर्षितत्वेन त्यक्तसाध्वसं साध्वसंहितलज्जं भगवत्सविधमभ्यागत्य सशोककातर्य्यं कलमधुरं स्तुवन्ति स्म ॥८४॥

जय जय देव ! देवघटामुकुटमहामारकत ! ॥८५॥

कतमदस्ति भवतः परं परंब्रह्म ॥८६॥

---

व्रीडाम् अवन्तः पालयतः प्राप्नुवन्त इत्यर्थः । अत्र हेतुः । आयतमानाः विस्तृतगर्वा. यतमाना यत्नवन्तोऽपि ॥ ८१ ॥

विबुधद्रुहाम् असुराणां वैमनस्येषु एधमानेषु ॥ ८२ ॥

निर्दयं निर्भरं च यथास्यात्तथा विनस्य मानयोश्चरणकमलयोराघातेखेदन खिन्नतया । वमन्तिमुखानि असृग्धारां यस्य तम् । मुखानीत्यस्यवृत्तावन्तर्भावः । जहत् शब्दः स्वार्थं यत्र सा जहत्स्वार्थलक्षणेतिवत् । आशीविषपतिं सर्पराजम । पतिं स्वभर्त्तारम् । कीदृश्यः । पल्या कालियेन छियेन निधनं मृत्युं प्राप्नुवता निरीक्ष्यमाणास्तेन हेतुना अतिशयेन दोदूयमानं पुनः पुनरुपतप्यमानं मानसंयासां ताः ॥ ८३ ॥

भाव्यनुकम्पां भाविनीमनुकंपाम् साधु यथा स्यात्तथा । न संहिता न धृता लज्जा यत्र तद्यथा स्यात्तथा ॥८४॥

हे देव ! जय जय । ननु किमहमिन्द्रचन्द्रादिदेवानामेकततमोऽस्मि तत्र नहिनहीत्याहुः । देवघटेति सर्वदेवाराध्यो नारायणस्त्वमिति भावः ॥८५॥

ननु केषाञ्चिन्मते परब्रह्मण एव सर्वतः श्रैष्ठ्यं श्रूयते । तत्राहुः । भवतः परं त्वत्तोऽन्यभूतं परं ब्रह्म कतमत् त्वमेव परब्रह्मेत्यर्थः ॥८६॥

ब्रह्म शितिकण्ठ-कण्ठरत्नायमानगुणरत्नाकर ! ॥८७॥

रत्नाकरतनया-कर-लालितं तवपदाम्भोजं भोजंभोजमेव मानसमुखेन सुखेन सुयोगिनः परमहंसा हंसा इव क्षीरनीरयोर्नीरमिव पुरुषार्थसार्थे मुख्यमपवर्गमपवर्गयोग्यं कुर्वन्ति*स्म ॥८८॥ कुर्वन्तिके श्रवसोरस्मन्निवेदनं वेदनन्तृक ॥८९॥ सच्चिदानन्दघनविग्रह!॥९०॥विग्रहमात्रक्षपित-सर्व-दानव ! सर्वदा नव ॥९१॥ नवव्यूहपर ॥ ९२ ॥ परमपुरुष ! रुषमपहर ॥ ९३ ॥ त्वमभिनवासुदेवोवासुदेवोऽसि। त्वमखिलतापसङ्कर्षणःसङ्कर्षणश्च । त्वमखिलघोषवासिनां प्रेमप्रद्युम्नः प्रद्युम्नश्च। त्वमात्ममायया निरुद्धोऽनिरुद्धोऽसि त्वमखिलदेवतात्मा वताऽत्मा व्रजवासिनाम् ॥ ९४॥ प्रसीद सीदत्यऽयंफणिपतिः ॥९५॥

नन तत्तु निर्गुणत्वेन प्रसिद्धम् अहंतु सगुण एव तद्विपरीतस्तत्राहुः । ब्रह्मशितिकण्ठयोर्विधिभवयोः कण्ठे रत्नायमानानां गुणरत्नानां गुणमुख्यानाम् आकर ! हे ! खनिरूप रत्नं स्वजातिश्रेष्ठेऽपीत्यमरः । *भवद्गुणानामप्राकृतत्वात्त्वमेव निर्गुणं ब्रह्मेत्यर्थः । प्राकृतत्वेताभ्यामादेरेण* कीर्त्तनीयत्वं न स्यादिति भावः ॥८७॥

तत्र सतां प्रवृत्तिमपि प्रमाणयन्ति **रत्नाकरेति** । भोजं भोजम् आस्वाद्य आस्वाद्य ! मानसं मन एव मुखं तेन अपवर्गं मोक्षमपि अपवर्गयोग्यं त्यागार्हं कुर्वन्ति त्वदङ्घ्रिचिन्तनास्वादेन ब्रह्मज्ञानसाध्यस्य मोक्षस्याऽरोचकत्वे कृते ब्रह्मतोऽपि त्वन्माहात्म्यं प्रत्युताधिकमेवानसीयत इति भावः ॥८८॥

अतः श्रवसोः कर्णयोरन्तिके अस्मन्निवेदनं कुरु । वेदोऽपिनन्ता नतिकर्त्ता यस्य । यथा वेदः प्रणम्यैव त्वां स्वतात्पर्य्यमवधापयति । तथा वयमपिनिवेदयाम इति भावः ॥ ८९ ॥

ननु केषांचिन्मते वेदा निराकारपरा एव तत्राहुः **सच्चिदेति** । तन्मतेऽपितथाऽप्राकृतत्वात् *निर्गुण इव निराकारोऽपि त्वमेवेति भावः ॥ ९०* ॥

कथंतर्हि देवक्यामर्वाचीन इव जातोऽस्मि तत्राहुः । विग्रहमात्रेणैव क्षपिताः संहृताः सर्वेदानवा येन । भूभारसंहारणार्थं कृपयैव त्वमाविर्भूतोऽसीत्यतो न त्वमर्वाचीनः किन्तु पुराणपुरुषोत्तम एवेति भावः । किञ्च विगीतं पुरातनत्वं त्वयि नास्तीत्याहुः सर्वदा एव नव नवीन नित्यनवीनत्वेनैव तव पुराणत्वमितिभावः ॥ ९१ ॥

तदेव विवृण्वन्ति हे नवव्यूहपर ! । यथोक्तं सात्वततन्त्रे । चत्वारो वासुदेवाद्या नारायणनृसिंहको । हयग्रीवो महाक्रोडो ब्रह्मा चेति नवोदिता इति ॥ ९२ ॥

अतो हे परमपुरुष ! रुषं दुष्टनिग्रहार्थामप्यऽपहर ९३ ॥

व्यूहानेव मुख्याम् स्पष्टीकुर्वन्ति । अभिनवो सूनां प्राणानां देवः प्राणनाथोसीत्यर्थः । प्रेमैव प्रकृष्टं द्युम्नं धनं यत्र सः । द्युम्नमर्थरैविभवा अपीत्यमरः । आत्ममायया योगमायया निरुद्धः अन्यैरज्ञेयतत्वत्वात् ॥ ९४ ॥

नन्वेवंभूतोऽस्मि चेन्मच्चरणस्पर्शो भाग्यमेव किमिति विषीदथ तत्राहुः । फणिपतिः सर्पमुख्यः । अतितामसजातित्वात् तत्स्वभाग्यानभिज्ञ इति भावः ॥ ९५ ॥

अस्य रस्यतमं सुकृतं कृतं कियद्वास्ति । येन तेऽसुरसुरकिन्नरनरार्षदेवर्षिगण वन्द्यमानमात्मारामरमणीयकहृतसमाधिसमाधिदुलर्भं चरणकमलं कमलंकरोति यदिदं तदनायासेनासंकौ सकौतुकनटनाटनाहितं प्रतिफणमेवमेव विभर्षि ॥९६॥

भो अतीतगुणत्रय ! गुणत्रयकृतोऽयं प्रपञ्चः । स्वयमेव भवता भवतापहारकेण निखिलमनःशोधनसत्त्वेन सत्त्वेन पाल्यते अनुकृतकपिकच्छूरजसा रजसा सृज्यते । अवधीरितनिविडतमसा तमसा संह्रियते नाममात्रमत्र महाभुजगगरुडासनकमलासनवृषासनानाम् ॥९७॥

किंच । निष्किञ्चनप्रिय ! गुणतारतम्येन जीवतारतम्ये न जीवः स्वगुणगुणदोषौ हातुमर्हति । तेनाऽस्य तमोजनितया तमोजनितया खलतया खलतया तुल्यं सौजन्यं जन्यं तेन कदर्थयति ॥ ९८ ॥

तवैवेयं मायामायापयितुं शक्यते । विलोक्यते विलोदवसितानामीदृश्येव रीतिः९९

तेनाऽयं नापराध्यतिराध्यऽतिकरुणरसे प्रभवति भवति भवति क उपेक्ष्यः॥१००॥

समदृशस्तव शस्तबहुलः सम एव सर्वः पन्थाः ॥ १०१ ॥

कुरु कृपामरं पामरं जीवममुं जीवनेन न मोचयितुमर्हसि ॥ १०२ ॥

---

तत् पुनरसमाभिस्त्वऽनुभूयत एवेत्याहुः । अस्येति । आत्मारामाणां रामणीयकं रमणीयत्वं यतः हृतः सम्यगाधिर्मनोव्यथा यतः स च स च यः समाधिस्तत्रापि दुर्लभम् । यदिदं कं सुखमलमत्यर्थं करोति यद्वा । कं जनमलंकरोति किंतु न कमपीति पुनर्दुर्लभत्वम् । सकौतुकं यन्नटनमटनं च ताभ्याम् आहितम् अर्पितम् । यद्वा सम्यक् हितम् ॥९६॥

ननु किमित्येवमाद्रियते दुष्टोऽयं मया निग्रहीतव्य एव तत्र दुष्टताशिष्टतयोस्त्यागोपादाने स्वतृपरतन्त्राणां स्वतो न संभवत इति वक्तुं तस्य निरतिशयैश्वर्यं विवृण्वन्त आहुः । भो अतीतेति भवतापहारकेणाऽपि भवः पाल्यतइति विरोधः । निखिलानां मनःशोधने मनः शोधयितुं सत्वं सत्ता यस्य तेन सत्वेन । अनुकृतं सदृशीकृतं कपिकच्छूरजः कण्डूराचूर्णं येन तेन कपिकच्छूः आल्कुषीति पाश्चात्यदेशे कौंच इति ख्याता । कपिकच्छुश्च मर्कटीत्यमरः ॥९७॥

स्वस्य गुणैः सत्वादिभिर्गुणदोषौ शिष्टतादुष्टते । तेन अस्य कालियस्य तमोजनितया तामसजन्मत्वेन । खलतया खलत्वेन हेतुना । कीदृश्या तमोजनितया तमसा क्रोधेनोत्पादितया । खलतया आकाशलतया तुल्यं सौजन्यम् असंभवमेवेत्यर्थः । जन्यं जनहितम् ॥ ९८ ॥

यदि दण्डेनापि न स्वभावपरित्यागस्ततः किं दण्डेन इत्याहुः तवैवेति । विलोदवसितानां विवरगृहाणाम् । गृहगेहोदवसितमित्यमरः ॥ ९९ ॥

किंच त्वयि पुनरसावनुकम्प्य एव भवितुमर्हति नतु दण्ड्य इत्याहुः । राध्यः सिद्ध एव अतिकरुणरसो यत्र तस्मिन् । न चान्येषामिव कृपायामसामर्थ्यमित्याहुः । प्रभवति प्रभविष्णौ । भवति त्वयि १००

दण्डानुग्रहयोः प्रतिकूलत्वानुकूलत्वाभ्यां प्रतीतयोरपि स्वत्वातृपत्वात् यद्यपि तुल्यत्वमेव एतादृशादण्डस्यापि शुभोदर्कत्वात् । तथाप्यऽस्मिन्नतिमूढे कृपापक्ष एवोचित इत्याशयेनाहुः समेति शस्तबहुलःमङ्गलप्रचुरः।सर्वः पन्थाः दण्डश्च निग्रहश्च॥१०१॥कृपां कुरु अरं शीघ्रम्१०२

---

१ अधाभेशामकारिति पाठः । २ इत्यन्तोऽपि ।

यं भगवन्तं भवन्तं भव कमला कमलासन प्रभृतयोऽपि यतयोपियतमाना हृदाऽपि दापितावधाना न वेदितुमर्हन्ति। तमसावऽति तमसाऽवतिष्ठमानगरिष्ठमानगरिमपुष्टमतिः कथं विदाङ्करोतु ॥१०३॥

तव हेलाकृतनटनटनटनत्कारिवेदनावेदनाभिभूतोऽयं महासारोऽपि रोपितहृन्मर्मव्रण इव श्वासमात्रावशिष्टो शिष्टोपि महाप्राणो हा! प्राणोज्झितो न भवतु १०४

क्षम्यतामयमपराधो मा वैधव्यमस्तु पतिदानं नो विधीयतामिति कातरतरगद्गदगदनपराणामहि महिलानां तदनुग्रहग्रहणग्रहिलानां कलकोमलमलराहितहितकाकुलपितमाकर्ण्य जातानुग्रहो भगवान् शिथिलीकृतकृतकनिग्रहो विगलितरोषोदयोद्योद्धुरमना मनाग्विहस्य मधुमधुरतरमुवाच ॥१०५॥

मा भैष्ट भो ! मा भैष्ट । मम विरतोऽयं तोयं लब्ध्वेव महानलो भवतीनां वचनेनाऽनेनाऽनेकोऽपि कोऽपि कोपः ॥ १०६ ॥

तदयं पन्नगो न गोचरो भविष्यति मृत्योः । तस्मादयं ममेममाक्रीडमपहाय यत एवाऽऽगतस्तत्रैव प्रतियातु। या तु मदीयचरणचिह्नचारुलक्ष्मीरस्य रस्यतमोत्तमाङ्गसङ्गिनी तामालोकयतो गरुडादपि न भयमिति भगवदुक्त्युपरमे ॥ १०७ ॥

मामेव ज्ञापयितुमहमेव प्रभावमाविष्कृत्य दण्ड्यामीति चेत् अत आहुः यमिति। हृदा चित्तेन प्रयोजककर्त्रा दापितमवधानं येभ्यस्ते। तं भवन्तम् असौ कालियः अतितमसा हेतुना अवतिष्ठमानस्य सदा तिष्ठतः गरिष्ठस्य मानस्य दुष्टगर्वस्य गरिम्णा गौरवेण पुष्टा मतिर्यस्य स. विदाङ्करोतु जानातु ॥१०३॥

कारुण्यमुत्पादयन्त्यः सदैन्यं तर्जन्या दर्शयन्त्यः आहुः । हेलया कृतेनाऽपि नटनेन हेतुना या टनटनत्कारिणी वेदनापीडा तस्या वेदनेन अनुभवेन अभिभूतोयं महासारोऽपि महाबलोऽपि महाप्राणः प्राणित्वांशेन न तु महानित्यर्थः ॥१०४॥

अस्मत्संबन्धेनाऽप्येष रक्षतामिति आहुः । मा वैधव्यमस्त्वित्युक्तापि पतिदानं नो विधीयतामिति वदन्ती नामयमभिप्रायः । यद्यपि त्वां सदाभजन्तीनामस्माकं तद्वहिर्मुखेनानेन पत्या अलमेव । तथापि वैधव्येऽपि स्त्रीत्वादस्वातन्त्र्येणाऽस्माकं पुनः केनापि बलिना अन्येन सर्पेणावश्यमाक्रंस्यमानत्वात् तस्यापि त्वद्वहिर्मुखत्वाविशेषात्प्रत्युतापिपत्यजुगुप्सातश्चायमेव त्वच्चरणस्पर्शजनितभाग्यः पतिर्वरं तिष्ठत्विति । अतएव हि दुष्टस्य पत्युर्भगवत् करिष्यमाणशास्तिमेवेच्छन्तीनां प्रथममनुपसर्पणम्। सम्प्रति तु तस्य शरणागतिलक्षणभक्तिं जातामनुमाय हृष्यन्तीनां तत्र प्रीतिरिति । यदुक्तम् । नमरणं शरणं जगामेति । भक्तिरसामृतसिन्धावपि दासभक्तप्रस्तावे शरण्याः कालियजरासन्धवद्धनृपादय इति। अहिमहिलानां सर्पसुन्दरीणाम् कृतकनिग्रहः कृत्रिमदण्डः। मनाग्विहस्येति तासामपि तथाभक्तिनिष्ठानुभवात् ॥१०५॥

अनेकोऽपि प्रचुरोपि कोऽपि अनिर्वचनीयः कोपः । श्लेषेण न एकः न मुख्यः कृतकानिग्रह इति पूर्वोक्तिः । एके मुख्यान्यकेवला इत्यमरः ॥ १०६ ॥

आक्रीड्यतेऽत्रेत्याक्रीडं हृदं यद्वा वृन्दावनम् उत्तमाङ्गसङ्गिनी शिरोवर्त्तिनी ॥ १०७ ॥

परमेणाऽऽश्वासेन निर्वृतहृदयो हृदयोभारभुग्नमिव यदासीत् तदतिलघु लघु मन्यमानोऽमानोऽयं फणिपतिः सभयभक्तिश्रद्धमाह ॥ १०८॥

भो भगवन्! प्रभवतो भवतो भुवीयमाविर्भूतिर्भूतिकृते साधूनामसाधूनामभिभवाय। भवाय भव्यानां भव्यानां भक्तानां चाऽऽचन्द्रभास्करं भास्करम्वितमनोविनोदाय विनोदाय च परमाशुभानामाशुभानामुदयाय ॥ १०९ ॥

दयायतन! तदुचितोयं तोयं ते क्रीडोचितं दूषयतो मम निग्रहोऽनुग्रहश्चाऽनुत्तमश्चातःकोऽपरः। कोपरसतोनृत्यतस्तव सकलमङ्गलास्पदपदकमललक्ष्मलक्ष्मीभरभरिता मे यदऽमी फणमण्डलाः ॥ ११० ॥

तदद्य वलानुजानुजानीहि भवदाज्ञया रमारमणरमणकमेव द्वीपमनुयामि। यामिह दुर्दैवतो दैवतोत्तम!तव चरणकमलयोरनीतिमकरवं मकरबन्धुरकुण्डलातांक्षमस्वेति ११११

दिव्याम्बरवरमणिगणगणनपिहितस्वरूपहितस्वरूपकौस्तुभमुक्ताहारोपहारोपनयनपुरस्सरं कृतप्रणामः सपरिकरो निश्चक्राम ॥ ११२ ॥

निष्क्रान्ते च तस्मिन् सद्य एव पियूषपूपवदतिमधुरसाधुरसा बभूव सा हृदपयपटली पटलीलयाऽवधीरिततडिद्वलयो वलयोज्ज्वलकरः। स च व्रजराजकुमारः कुलमुत्तीर्य्यतीर्यमाण-भयकौतुकचमत्कारानन्दशावल्यसमुद्रं समुद्रंहसा पितरं मातरं मान्यानन्यानपि घोषवृद्धानृद्धानृतेन तेन परमादरेण प्रणम्य ॥ ११३ ॥

अयसां लोहपिण्डानां भारेणेव भुग्नं स्वमृत्युशङ्कया रुग्णं हृत् मनः तत् अतिलघु। भगवदाश्वासेन तद्भारापगमात्। लघु शीघ्रमेव अमानो गतगर्वः ॥ १०८ ॥

भूतिकृते सम्पत्त्यै। भव्यानां मङ्गलानां भवाय उत्पत्त्यै। भव्यानां भाविनाम्। भव्यगेयेत्यादिना कर्त्तरि प्रत्ययः। भासा कान्त्या करम्वितानां मनसां विनोदाय आनन्दाय परमाशुभानामऽत्यऽमङ्गलानां विशेषेण नोदाय दूरीकरणाय अत एव आशु शीघ्रं भानां प्रकाशानाम् उदायाय उद्गमाय ॥ १०९ ॥

दयायतन! हे दयामन्दिर! ॥११० मकराकृतिनी बन्धुरे सुन्दरे कुण्डले यस्य। १११।

दिव्याम्बराणि च मणिगणेषु मध्ये गणनेन यथा शब्दे मणियस्तथा अयमप्येको भणिरित्येवं लक्षणेन कालियकर्तृकनिमर्दोन पिहितम् आच्छादितं स्वरूपं यस्य तथाभूतश्चासौ हितस्वरूपश्च हितधनरूपश्च यः कौस्तुभः स च मुक्ताहाराश्च तेषामुपहाराणाम् उपनयनं समीपे प्रापणमेव पुरस्सरं यत्रतद्यथास्यात्तथाकृतप्रणामः। एतदुपहारीकरणं च कालियस्यस्य प्रेयसीद्वारैव यदुक्तं गणोद्देशदीपिकायाम्। कौस्तुभाख्यो मणिर्येन प्रविश्य ह्रदमौरगम् कालियप्रेयसीवृन्दहस्तैरात्मोपहारित इति ॥१२॥

पटलीलया तदानी लब्धचलद्युतिविलासेन अवधीरितं तिरस्कृतं विद्युद्वलयं तडिन्मण्डलं येन सः। तीर्य्यमाणो न पुन स्तीर्णः बाधितानुवृत्तिन्यायात्। भयादीनां शावल्यरूपः समुद्रो येन तम् तत्र भयं कालियदर्शनेन। कौतुकं दैवबाधाद्यनुभवेन। चमत्कारः सर्पफणोपरि नृत्यारफलनेन। आनन्दः श्रीमुखकुशलतानुमितदुःखाभावेन। समुत्सानन्दं यथास्यात्तथा। रंहसा वेगेन। ऋद्धान् समृद्धान् तेन तत्कालोदितेन ऋतेन सत्यने निष्कैतवेन ॥११३॥

मातापितृभ्यां तैरपि व्रजपुरन्ध्रीभिः परमकुतूहलिना हलिना चाऽऽलिङ्गितः। परमानुरागिणीभिर्वधूभिः कन्याभिश्च सानुरागपरभागपरभागधेयमधुरमीक्ष्यमाण ईक्षमाणश्च वा: ॥ ११४ ॥

तथैव चिरमभितोऽभितोपवशम्वदाभिर्धेनुभिरपि सास्रैरेव नयनपुटैः पीयमान इव प्रफुल्लाभिर्घोणाभिर्घ्रायमाण इव रसज्ञाभी रसज्ञाभीरभसेन लिह्यमान इव कलगद्गदेन हम्बारवेण समणयमनामयं पृच्छयमान इव प्रत्येकमेव सखीनालिलिङ्ग ११५

इत्येवमामोदमानैर्बन्धुभिरामोद्यमाने विश्राम्यति भगवति व्रजवासरमणे वासरमणेरुपराममालोक्य व्रजराजो जराजोपमिव तं वासरस्य मन्यमानो मा नोऽद्यवासगमनं भवितुमर्हति। इति विचार्य्य सर्वानेव निदिदेश देशकालोचितं किमपि ११६

यथा भो भोःसमुपपन्नेयं शर्वरी शर्वरीतिरिव विषमदर्शना तमोवहुला।उवाच ११७

तदिहैवाऽद्य वस्तव्यं स्तव्यं चेदं ह्रदतटमुपपादितं दितं गरलानलज्वलितमनेन कल्याणिना वत्सेन ॥ ११८ ॥

तदिदं ह्रदकूलमनुकूलमनुसृत्य यामिनीं यापयाम इति तदुदितमाकलय्य सर्व एव मुमुदिरे ॥ ११९ ॥

मुदिरेन्द्ररुचः कमनीयकिशोरस्य रस्यतमाभिलषणीयतमदर्शनसौलभ्यलभ्यमानमानसविकारकारणोत्कलिकाकण्डूकण्डूलताक्षणनिर्वापणकृते विशेषतोऽनुरागिण्यो मुग्धरमण्यः कन्यकाश्च ॥ १२० ॥

---

अनुरागस्य परभागेन उत्कर्षेण हेतुना यत् परं श्रेष्ठं भागधेयं भाग्यं तेन सहितं च तत् अतएव मधुरं चेति तद्यथास्यादेवम् ॥ ११४ ॥

रसज्ञाभिर्जिह्वाभिः। रसज्ञाभिः रसविज्ञाभिः रभसेन हर्षेण ॥ ११५ ॥

आमोदमानैर्हृष्यद्भिः आमोद्यमाने क्रियमाणानन्दे सति भगवति कीदृशे व्रजवासरमणे व्रजं वासेन रमयतीति तस्मिन्। वासरमणेः सूर्य्यस्य उपरामम् अस्तीभावम् वासरस्य दिवसस्य जराजोपमिव जराप्राप्तिमिव तम् उपरामं मन्यमानः। नोऽस्माकमद्य वासगमनं मा भवितुमर्हति ॥ ११६ ॥ शर्वरी रात्रिः। शर्वस्य रुद्रस्य रीतिरिव ॥ ११७ ॥

स्तव्यं स्तवनार्हम्। यतो गरलानलस्य ज्वलितं ज्वलनं दितं खण्डितम् ॥ ११८ ॥

मुमुदिरे आनन्दिता बभूवुः ॥ ११९ ॥

अनुरागिण्यो विशेषतो मुमुदिरे इत्यनुषङ्ग। कुतः मुदिरेन्द्ररुचः मेघोत्तमतुल्यवर्णस्य कृष्णस्य रस्यतममतिशयास्वाद्यम् अभिलषणीयतमं यद्दर्शनं तस्य सौलभ्यं तदानींवारणाभावात्सुलभत्वं तेन लभ्यमानस्तदैव प्राप्यमाणो मानसो विकार एव कारणं यस्याः सा उत्कलिका उत्कण्ठेव कण्डूर्व्याधिविशेषस्तस्याः या कण्डूलता तत्कार्य्यभूतकण्डूया तस्याः क्षणमपि निर्वापणकृते कण्डूलतेति सिध्मादिलजन्तात्तल ॥ १२० ॥

---

१ अस्तशब्दात्च्विः

तदेवं श्रीकृष्णं मध्यमध्यवस्थाप्य तमभितोऽभितो व्रजराजादयः क्वचन सखायः क्वचन व्रजेश्वरीप्रभृतयः । क्वचन मातृनिकटस्थाः कुमार्य्यः क्वचन श्वश्रूनिकटस्था वध्वश्च ॥ १२१ ॥

परितस्तद्बहिरपि चापरास्तद्बहिरपि चापराः ॥ १२२ ॥

तद्बहिरपि धेनवः सविधे नवःस विविधास्त्रधारिगणो यासाम् ॥ १२३ ॥

इति मण्डलीं व्यूह्य विविधविचित्रचरित्रचारिमगरिमकालियमर्दनलीलाकथानुकथनेन निशार्द्धं गमयतामयतामथ निद्रामपि स्त्रीपुंसानां मध्ये दैवोपसादितेनतेन रसमयेन समयेन श्रीकृष्णमुखचन्द्रमवाधमेव सानुरागमनिमेषमीक्षमाणानां वधूनां कुमारिकाणां च चाक्षुषे मानसे च भोगे निर्भरं निर्वहति सति ॥१२४॥

मुख्यानां चन्द्रावलीप्रभृतीनां चातिशयिनि नयनोत्सवे पूर्वमेवाङ्कुरितप्रेममनोरथयोरथ योगमाकस्मिकं तमासाद्य परस्परदिदृक्षासदृक्षासमुत्कण्ठा समुत्कण्ठासमुत्पन्नीपद्यते स्म यदि ॥ १२५ ॥

तदैवाऽऽकस्मिकमभिमुखीनमुभयोरेव चातुरक्षिकमक्षि-कमल-खेलनमासीत्[१] १२६

कुमारीणां वधूनां च प्रथममण्डले स्थितिर्व्रजेश्वरीसाहित्यमनुरुन्धतीनां मातॄणां श्वश्रूणां सङ्गानुरोधेन दैवादेव फलिता ॥ १२१ ॥

तद्बहिर्द्वितीयमण्डले च अपराः । त्वर्थे चकारः । अपरास्तु गोपा अनुरागिगोपीपतिम्मन्यादय इत्यर्थः । अपरा इति पूर्वपरावरेत्यादिना सर्वनामसंज्ञाविकल्पात् तद्बहिरपि तृतीयमण्डले चापं रान्ति गृह्णन्तीति धनुष्पाणयः सर्वरक्षका इत्यर्थः ॥ १२२ ॥

तद्बहिश्चतुर्थे मण्डले । धेनवः गावः । यासां सविधे निकटे पञ्चमे मण्डले स महाशौर्य्येण प्रसिद्धो विविधास्त्रधारिणां गणः समूहः ॥ १२३ ॥

विविधस्य चित्रचरित्रस्य चारिमा चारुत्वं गरिमा गुरुत्वं ताभ्यां कालियमर्द्दनस्य लीलाकथाया अनुकथनेन निशार्द्धं गमयताम् अथानन्तरं निद्राम् अयतां गच्छताम् ई गतौ शत्रन्तः। निर्वहति निर्वाहं प्राप्नुवति सति ॥ १२४ ॥

दर्शनसाम्येपि तासां मध्ये चन्द्रावल्यादीनामतिशयिनीति प्रेमतारतम्येनोत्सवतारतम्यात् त्वर्थे चकारः । तत्रापि राधाया असमोर्ध्वप्रेममहिम्ना सर्वातिशयिमनोनेत्रोत्सवं तद्बलादेव स्वमाधुर्य्येण कृष्णस्यापि तादृशमनोनेत्रोत्सवदायित्वं चाह पूर्वमेव अङ्कुरितः प्रेम्णि परस्य प्रेमविषये मनोरथो ययोस्तयोरधुना त्वऽसौ पल्लवितत्वपुष्पितत्वमवाप्य सहसा फलितोऽपि इति भावः । परस्परदिदृक्षया सदृक्षा सदृशी अनुरूपा सम्यगुत्कण्ठा यत्यतिशयेन समुत्पन्ना नीपवञ्चुलंलिलादिना नीपागमः । कीदृशी समुत्सहर्षः सम्यगुत्थितो वा कण्ठो यस्यां सा ॥ १२५॥

चातुरक्षिकं चतुर्षु अक्षिष्वेव भवमित्यर्थात्समादित्वाट्ठञ् । अक्षिकमलानामेव खेलनमित्युपमयत्रापि निर्द्धारणम् । अभिमुखीनं सम्मुखीनम् ॥ १२६ ॥

---

[१] अयं स्मादिप ऊद्यः ।

तद्यथा । राधालोके प्रसरति हरेर्दोलितो दृष्टिपातः पुच्छाघातादिव मदिरयोर्वेपिताम्भोजराजी । कृष्णालोके सति मुकुलिता राधिकायाः कटाक्षाः पक्षाघातादिव रतिपतेः प्राप्तभङ्गाः पृषत्काः ॥ १२७ ॥

एवं मुहूर्तं मूर्तं मूर्च्छन्तामिव तमनुरागसुमनःपरागपटलान्धकारमनुभवतोस्तयोश्चन्द्रावलीप्रभृतिष्वपि कृष्णं वार्षभानव्यां नव्यां रतिमुद्वहन्तमनुमान्तीषु सकलास्वपरासु निद्रामुपगच्छन्तीषु केषुचिदपि मिथः कृष्णकथाकथनेनैव जाग्रत्सु भो भो अत्याहितमत्याहितमित्यहितसूचकः कष्टतरः कोपि कलकलः समुल्ललास ।१२८।

तमाकर्ण्य सवाकुलीभूय भूयशः परित्यक्तशयनासूरकर्णमभितो निरीक्षमाणासु धेनुषु किं भोः किं किमिति सातङ्कमापृच्छमानेष्वचच्छमानेष्वन्योन्यं प्रधानेषु हुंहुमिति निद्रातः समुत्तिष्ठत्सु निद्राणेषु ॥१२९॥

सचकितं श्रीकृष्णमालोकमानासु कुलवधूषु कूलकन्यासु च तासां भयविह्वलतामालोक्य मा भेतव्यं मा भेतव्यमिति सप्रणयगाम्भीर्यमाश्वासयति च श्रीव्रजपुरन्दरनन्दने केचिदेवं वितर्कयामासुः ॥१३०॥

किं कालियः पुनरसौ तदर्यमनैति लब्धापमानजनितातिशयप्रकोपः ।
किं नूचकैर्मदपयोझरधौतगण्डशैलं कुतोऽपि वनवारणयूथमेति ॥ १३१ ॥

मदिरयोः खञ्जनयोः पुच्छाघातादित्यनेन प्रथमं राधाकर्तृक आलोकोऽपाङ्गाभ्यामेवेति ज्ञापितम् । वेपिताम्भोजराजीति ततश्च कृष्णलोचनद्वयस्य निरङ्कुशत्वेन समुदितस्यैव युगपदेव बहूनां व्यापाराणामत्यौत्सुक्येन जनितानां कमलौपम्यात् ततश्च तथाभूते कृष्णालोके सति मुकुलिता इति सहसा लज्जोपगमात् पृषत्का बाणास्तेपि नीलोत्पलरूपा एव प्राप्तभङ्गा इति तेषां नेत्रप्रान्तमात्रव्यापाररूपत्वेन क्षीणत्वादिवेति पुनरुत्प्रेक्षापि ध्वनिता इति ॥ १२७ ॥

मुहूर्तं व्याप्य मूर्च्छन्तं विस्तारं प्राप्नुवन्तमिव । मूर्च्छा मोहसमुच्छ्राययोरिति धातुः । अनुराग एव सुमनः पुष्पं तस्य परागपटलैरन्धकारम् । तदानीमानन्दमूर्च्छाया मनोनयनाच्छादनात् । अनुभवतोः सतोस्तयो राधाकृष्णयोः । अनुमान्तीषु अनुमानं कुर्वतीषु सतीषु अत्याहितं महाभीतिरित्यमरः ॥१२८॥

आपृच्छमानेष्विति आङि नुपृच्छ्योरित्यात्मनेपदम् । अच्छो निर्मलो भावो ज्ञानं यस्तुपरामर्शो येषां तेषु ॥१२९॥

भयविह्वलता चासां न स्यानिष्टशङ्कया किन्त्वस्मत्प्राणकोटिनिर्मञ्छनीयचरणनखाग्रमेतमस्मत्कान्तं बाधिष्यते । दयाब्धिरिति भावनयैव एवमग्रेपि नन्दादिष्वपि ज्ञेयम् ॥१३०॥

भूमस्य श्यामलिमानमालोक्य प्रथमं संशेरते किं कालिय इति मदपयसा झरैर्धौतो गण्डाविव शैलो यस्य तत् ॥१३१॥

इति वितर्कयत्सु जनचयेषु भो भो निरुपायोऽपायोज्झितोऽयं दवानलो दवानल इति पुनरुद्घुष्टमतिकष्टतरमाकर्ण्य व्रजेश्वरः सत्रासं कालियमर्दनमुपगम्य सहसा गर्गोदितमनुस्मृत्य भो वत्स! परित्रायतां परित्रायतामेष निरुपायापायारण्यमहावह्निस्त्वदेकनाथं समस्तमेव व्रजं दहन्नुपैति ॥ १३२ ॥

नहि भवन्तमन्तरेणास्योपशमः शमन्यथा च न वर्त्तते विनाऽस्य शमनम् १३३

इति सपरिजनजनकजननीप्रभृतिसमस्तवन्धुजनव्याकुलतामालोक्य मा भेतव्यमित्यग्रत उपसृत्य ॥ १३४ ॥

यद्यपि वनान्तरवभ्रान्तरवर्त्तिदवदवधु वृन्दावनं तथापि सर्वचमत्कारकारलीलाहेतोः स्वेच्छयैव समापादितमिव ॥ १३५ ॥

शुष्के सर्वाङ्गलग्नं श्वसिति तरुगणे चच्चटाध्वानघोरं ।
प्रोपन्तं पत्रमात्रं तृणततिमभितस्तत्त्वर्णाद्भस्मयन्तम् ॥
त्रस्यद्भिर्न्यङ्कुरङ्कुमभृतिमृगकुलैर्वीक्षितं धावमानै ।
दूरादभ्रंलिहाग्रं दवदहनमथो माधवः संददर्श ॥१३६॥

संभव्योऽथ व्यथया वन्धुजनकदनमनेन विनमनेन विहायोलिहा महाधूमधूमध्वजेन ॥१३७॥

निष्पन्ना निष्पत्राकरोति तरुश्रेणी ॥१३८॥

भयसमुत्कर्णा कर्णाभीलं करोति काकुरवैरियं च धेनुविततिः ॥१३९॥

---

निरुपायोयं निवारणोपायशून्यः। अपायोज्झितः स्वयं च नाशरहितः। गर्गोदितम् "अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ" इति निरुपायोऽपायोनाशो यस्य तथाभूतोऽरण्यमहावह्निः। तस्यां रात्रौ विषसंसर्गशङ्कयाह्रदतटनिकटं परित्यज्य कुडुमारे इति लोकप्रसिद्धप्रदेशे विहितस्थितित्वेन यमुनाजलानयनाशक्तेः तस्य महावह्नेरपि सर्वत आवृत्त्वेवोत्पतिष्णुत्वेन दृश्यमानत्वान्निर्गमाशक्तेश्च ॥१३२॥

शं कल्याणम् ॥१३३॥ अग्रत उपसृत्य माधवो दवदहनं ददर्शेत्यन्वयः ॥१३४॥

अन्तर्वर्त्ती दवदवधुर्यस्य तथाभूतं वृन्दावनं यद्यपि न भवति । फणिमूर्द्धनि नर्त्तिता जगद्विलक्षणमजिह्मपत्तरुणीः। स्वस्य प्रभावमतुलं कलासु पाण्डित्यमत्यधिकम्। पत्याद्यावरणाभिजसर्गं दुर्घटममूः परामृशतीः। दवशमनेनाकलयद्दुर्घटघटनापटीयसीं शक्तिम् ॥१३५॥

शुष्के तरुगणे अथ च श्वसिति अन्तर्जीवति पत्रमात्रं प्रोपन्तं दहन्तं ननु स्कन्धशाखादिकम् अतिवर्षीयस्त्वेन सारमयत्वादन्तःसरसत्वाच्च। अशुष्के तरुणतरुगणेतु न किंचिदपीति भावः। अभ्रमाकाशं लेढि अग्रं जिह्वापनशिखा यस्य तम् ॥ १३६ ॥

संभवीत्यादि श्रीकृष्णस्य स्वगतं वाक्यम्। महाधूमेन धूमध्वजेन वह्निना अनेन वीन् पक्षिणो नमयति पातयतीति तेन। वन्धुजनकदनं व्यथया संभवि संभवत्येवेत्यर्थः ॥ १३७ ॥

निष्पन्ना भस्मीभूतदग्धा तरुश्रेणी निष्पत्राकरोति काण्ड्योत्पादनादतिव्यथयतीत्यर्थः। सपत्रनिष्पत्राभ्यामतिव्यथन इति डाच् ॥ १३८ ॥ कर्णाभीलं कर्णयोः कष्टम् ॥ १३९ ॥

त्तितिरियं च समुड्डीना धूमलेखाभिरन्धीभवति ॥१४०॥
साध्वसाकुलं कुलं च हरिणानां कान्दिशीकं समजनि तत् किं करोमि १४१
संभाव्यो न पयोदवृष्टिरधुना नद्याः पयःसेचनं ।
नैवास्योपशमो न चोपसरणे देशश्च कालश्च नः ॥
इत्याचिन्तयतः स्वयं भगवतः प्रादुर्भवन्त्यैश्वरी ।
शक्तिः काचन तं शिखासु कचवद्धृत्वा निमेषात् पपौ ॥१४२ ॥
ततश्च दरिद्राणां मनोरथ इव उत्पद्यमान एव प्रणष्टः । हतभाग्यानां वैभवोदय
इवाऽभुज्यमान एव तत्काल एव विगलितः । वैद्युतो वह्निरिव न चिरस्थायी ॥१४३॥
स्वप्नदृष्ट इव भ्रमोपगत इव ऐन्द्रजालिकोदीरित इव न दृश्यमानो वनवह्नि-
र्व्रजजनलज्जनकारीबभूव ॥ १४४ ॥
किमस्माभिः । प्रमत्तैरिवाऽपलपितं कुतो वनाग्निरिति ॥१४५॥
अथ विभातायां विभावर्य्यां वर्य्यां श्रियं दधानेन बहुविधबहुललीलाधानेन स्व
कुलभूषणेन सुधासारेण सारेणेव सर्वसौभाग्यानां स्वजनेष्वाहितनयेन तनयेन
सह स ह व्रजपुरपुरन्दरोऽदरोदीर्णप्रमोदः प्रमोदयं प्रमोदयंश्च व्रजपुरं व्रजपुरवासि-
भिः समं समुपससाद ॥ १४६ ॥
तेनाथ व्रजनगरीनाथ व्रजनगरीयसीं रुजमादधाना प्रोषितभर्तृकेव तां रजनीं
गमितवती रागमितवती राजन्तं पुनरपि पूर्वमिव ॥ १४७ ॥
इत्यानन्दवृन्दावने कैशोरलीलालताविस्तारे कालियदमनो नामनवमस्तवकः॥९।

वीनां पक्षिणां ततिः श्रेणी ॥ १४० ॥ कान्दिशीको भयद्रुत इत्यमरः ॥ १४१ ॥
तं दवदहनं शिखासु हेतिषु कचवत् कचेष्विव तत्र तस्येवेति वतिः ॥ १४२ ॥
मनोरथस्य पुनरुत्पत्तिशङ्कया अन्यथोपमिमीते । वैभवोदय इति । तत्राप्यतिशैघ्र्येण वि-
गलने दृष्टान्तः । वैद्युतो वन्हिरिति ॥१४३॥
त्रयाणामप्युक्तदृष्टान्तानां सत्यत्वाद्दार्ष्टान्तिकस्य तु मिथ्यात्वेनैव तैरायत्यामनुभूतत्वादन्यदृष्टा
न्तत्रयमाह । तत्र स्वप्नस्यापि सिद्धादिषु कचित्सत्यत्वमाशङ्क्याह भ्रम इति । भ्रमस्यापि सु-
षुप्तसर्वजनगतत्वाऽभावमाशङ्क्याह ऐन्द्रजालिक इति । लज्जनं लज्जा ॥१४४॥
अथ भगवद्दृष्टिकारुण्यामृतवृष्ट्यैव तृणगुल्मवृक्षादयः । पूर्ववदेव सहसैवाभूवन्निति वन्हिचि-
ह्नस्य कस्याप्यऽदर्शनाद्विस्मिता आहुः किमस्माभिरित्यादि ॥१४५॥
बहुधा बहुप्रकारेण । बहुललीला दधाति धारयतीति । नन्दादिल्युः तेन सुधाया आसारे-
ण धारासम्पातरूपेण सह स व्रजराजः ह स्फुटम् अदरः अनल्पः उदीर्णः प्रमोदो यस्य सः
प्रमायाः प्रामाण्यस्य उदयो यथाभवत्येवं प्रमोदयन् । गर्गप्रोक्तमाहात्म्यादुद्घोषणेत्यर्थः । यद्वा
प्रमायाः प्रकृष्टशोभायाः उदयो यत्र तत् व्रजपुरम् ॥१४६॥
नाथस्य श्रीनन्दस्य अजनेन गरीयसीं गुरुतरां रुजं पीडाम् आसम्यग्दधाना धारयन्ती । अथ
तेन नाथस्यागमनेन पुनरपि पूर्वमिव राजन्तं रागम् इतवती प्राप्तवती ॥ १४७ ॥
इत्यानन्दवृन्दावनटीकायां सुखवर्तिन्यां नवमस्तवकसङ्गमनम् ॥ ९ ॥

इति वितर्कयत्सु जनचयेषु भो भो निरुपायोऽपायोज्झितोऽयं दवानलो दवानल इति पुनरुद्घुष्टमतिकष्टतरमाकर्ण्य व्रजेश्वरः सत्रासं कालियमर्दनमुपगम्य सहसा गर्गोदितमनुस्मृत्य भो वत्स! परित्रायतां परित्रायतामेष निरुपायापायारण्यमहावह्निस्त्वदेकनाथं समस्तमेव व्रजं दहन्नुपैति ॥ १३२ ॥

नहि भवन्तमन्तरेणास्योपशमः शमन्यथा च न वर्त्तते विनाऽस्य शमनम् १३३

इति स्वपरिजनजनकजननीप्रभृतिसमस्तबन्धुजनव्याकुलतामालोक्य मा भेतव्यमित्यग्रत उपसृत्य ॥ १३४ ॥

यद्यपि वनान्तरवदन्तरवर्त्तिदवदवथु वृन्दावनं तथापि सर्वचमत्कारकारलीलाहेतोः स्वेच्छयैव समापादितमिव ॥ १३५ ॥

शुष्के सर्वाङ्गलग्नं श्वसिति तरुगणे चच्चटाध्वानघोरं ।
प्रोपन्तं पत्रमात्रं तृणततिमभितस्तत्क्षणाद्भस्मयन्तम् ॥
त्रस्यद्भिर्न्यङ्कुरङ्कुमप्रभृतिमृगकुलैर्वीक्षितं धावमानं ।
दूरादभ्रंलिहाग्रं दवदहनमथो माधवः संददर्श ॥ १३६॥

संभव्यऽथ व्यथया बन्धुजनकदनमनेन विनमनेन विहायोलिहा महाधूमधूमध्वजेन ॥१३७॥

निष्पत्रा निष्पत्राकरोति तरुश्रेणी॥१३८॥

भयसमुत्कर्णा कर्णाभीलं करोति काकुरवैरियं च धेनुविततिः ॥१३९॥

---

निरुपायोयं निवारणोपायशून्यः। अपायोज्झितः स्वयं च नाशरहितः। गर्गोदितम् "अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ" इति निरुपायोऽपायोनाशो यस्य तथाभूतोऽरण्यमहावह्निः। तस्यां रात्रौ विषसंसर्गशङ्कयाह्रदतटनिकटं परित्यज्य कुडुमारे इति लोकप्रसिद्धप्रदेशे विहितस्थितित्वेन यमुनाजलानयनाशक्तेः तस्य महावह्नेरपि सर्वत आवृत्यैवोत्पतिष्णुत्वेन दृश्यमानत्वान्निर्गमाशक्तेश्च ॥१३२॥

शं कल्याणम् ॥१३३॥ अग्रत उपसृत्य माधवो दवदहनं ददर्शेत्यन्वयः ॥१३४॥

अन्तर्वर्त्ती दवदवथुर्यस्य तथाभूतं वृन्दावनं यद्यपि न भवति । फणिमूर्द्धनि नर्त्तिया जगद्विलक्षणमजिह्मपत्तरुणीः। स्वस्य प्रभावमतुलं कलासु पाण्डित्यमत्यधिकम्। पत्न्याश्चावरणानि जसङ्गं दुर्घटममूः परामृशतीः। दवशमनेनाकलयद्दुर्घटघटनापटीयसीं शक्तिम् ॥१३५॥

शुष्के तरुगणे अथ च श्वसति अन्तर्जीवति पत्रमात्रं प्रोषन्तं दहन्तं नतु स्कन्धशाखादिकम् अतिवर्षीयस्त्वेन सारमयत्वादन्तःसरसत्वाच्च । अशुष्के तरुणतरुगणेतु न किंचिदपीति भावः। अभ्रमाकाशं लेढ्यभ्रं जिह्वोपमशिखा यस्य तम् ॥ १३६ ॥

संभवीत्यादि श्रीकृष्णस्य स्वगतं वाक्यम्। महाधूमेन धूमध्वजेन वह्निना अनेन वीन् पक्षिणो नमयति पातयतीति तेन । बन्धुजनकदनं व्यथया संभवि संभवत्येवेत्यर्थः ॥ १३७ ॥

निष्पत्रा भस्मीभूतदला तरुश्रेणी निष्पत्राकरोति कारुण्योत्पादनादतिव्यथयतीत्यर्थः । सपत्रनिष्पत्रादातिव्यथन इति डाच् ॥ १३८ ॥ कर्णाभीलं कर्णयोः कष्टम् ॥ १३९ ॥

दितातिरियं च सपुद्दीना धूमलेखाभिरन्धीभवति ॥१४०॥

साध्वसाकुलं कुलं च हरिणानां कान्दिशीकं समजनि तत् किं करोमि १४१

संभाव्यौ नै पयोदवृष्टिप्रधुनौ नद्योः पयःसिंचनै ।
नैवोरस्योपशमो न चौपसरणे देशेथ कालेथ न ॥
इत्याचिन्तयतः स्वयं भगवतः प्रादुर्भवन्त्यैश्वरी ।
शक्तिः काचन तं शिखाशुं कचवंकृत्वा निमेषात् पपौ॥१४२॥

ततश्च दरिद्राणां मनोरथ इव उत्पद्यमान एव प्रणष्टः । इतभाग्यानां वैभवोदय इवाऽभुज्यमान एव तत्काल एव विगलितः। वैद्युतो वह्निरिव न चिरस्थायी॥१४३॥

स्वप्नदृष्ट इव भ्रमोपगत इव ऐन्द्रजालिकोदीरित इव न दृश्यमानो वनवह्निरखिलजनलज्जनकारीबभूव ॥ १४४ ॥

किमस्माभिः । प्रमत्तैरिवाऽपलपितं कुतो वनाग्निरिति ॥१४५॥

अथ विभातायां विभावर्य्यां वर्य्यां श्रियं दधानेन बहुविधबहुललीलाधानेन स्वकुलभूषणेन सुधासारेण सारेणेव सर्वसौभाग्यानां स्वजनेष्वाहितनयेन तनयेन सह स ह व्रजपुरपुरन्दरोऽदरोदीर्णप्रमोदः प्रमोदयं प्रमोदयंश्च व्रजपुरं व्रजपुरवासिभिः समं समुपससाद ॥ १४६ ॥

तेनाथ व्रजनगरीनाथ व्रजनगरीयसीं रुजमादधाना प्रोषितभर्तृकेव तां रजनीं गमितवती रागमितवती राजन्तं पुनरपि पूर्वमिव ॥ १४७ ॥

इत्यानन्दवृन्दावने कैशोरलीलालताविस्तारे कालियदमनो नामनवमस्तवकः॥९॥

वीनां पक्षिणां ततिः श्रेणी ॥ १४० ॥ कान्दिशीको भयद्रुत इत्यमरः ॥ १४१ ॥

तं दवदहनं शिखासु हेतिषु कचवत् कचेष्विव तत्र तस्यैवेति वतिः ॥ १४२ ॥

मनोरथस्य पुनरुत्पत्तिशङ्कया अन्यथोपमिमीते । वैभवोदय इति । तत्राप्यतिशैघ्र्येण विगलने दृष्टान्तः । वैद्युतो वन्हिरिति ॥१४३॥

त्रयाणामप्युक्तदृष्टान्तानां सत्यत्वाद्दार्ष्टान्तिकस्य तु मिथ्यात्वेनैव तैरायत्यामनुभूतत्वादन्यदृष्टान्तत्रयमाह । तत्र स्वप्नस्यापि सिद्धादिषु कचित्सत्यत्वमाशङ्क्याह भ्रम इति । भ्रमस्यापि युगपत्सर्वजनगतत्वाऽभावमाशङ्क्याह ऐन्द्रजालिक इति । लज्जनं लज्जा ॥१४४॥

अथ भगवद्दृष्टिकारुण्यामृतवृष्टयैव तृणगुल्मवृक्षादयः । पूर्ववदेव सहसैवाभूवन्निति वन्हिचिन्हस्य कस्याप्यऽदर्शनाद्विस्मिता आहुः किमस्माभिरित्यादि ॥१४५॥

बहुधा बहुप्रकारेण । बहुललीला दधाति धारयतीति । नन्द्यादिल्युः तेन सुधाया आसारेण धारासम्पातरूपेण सह स व्रजराजः ह स्फुटम् अदरः अनल्पः उदीर्णः प्रमोदो यस्य सः प्रमायाः प्रामाण्यस्य उदयो यथाभवत्येवं प्रमोदयन् । गर्गप्रोक्तमाहात्म्यादघोषेणेत्यर्थः । यद्वा । प्रमायाः प्रकृष्टशोभायाः उदयो यत्र तत् व्रजपुरम् ॥१४६॥

नाथस्य श्रीनन्दस्य व्रजनेन गरीयसीं गुरुतरां रुजं पीडाम् आसम्यग्दधाना धारयन्ती । अथ तेन नाथस्यागमनेन पुनरपि पूर्वमिव राजन्तं रागम् इतवती प्राप्तवती ॥ १४७ ॥

इत्यानन्दवृन्दावनटीकायां सुखवर्तिन्यां नवमस्तवकसङ्गमनम् ॥ ९ ॥

## दशमः स्तवकः

अथ पुनरहरहरुपचीयमानमानसविकारकारणरणरणकशून्यहृदया हृदयाधिनाथस्य तस्याङ्गसङ्गसंभावनोपायमपायमन्दमनुचिन्तयन्त्यो मनोरथारूढमनोरथा रूढभावस्यापि तस्य दुरवगाहमनोऽवगाहमनोजसा मनोजसाहाय्येन जानन्त्योऽपि न प्रतीतिमुपयान्त्योऽपि हितं पिहितं कुर्वन्त्यो निजमभिप्रायं सह सहचरीभिः सकला एव निजनिजौत्कण्ठ्यं वाग्विषयीचक्रुः ॥ १ ॥

तत्र चन्द्रावली वलीयसा मनोरागेण सोद्वेगं मुखविजितपद्मां पद्मां नाम सखीमुवाच । किं गौरि ! गाढगुरुणा गुरुगौरवेण किं निन्दया वत ! ननान्दुरमन्दया नः । किं ज्वालया खलगिरो गरलोपमायाः श्यामेन मे हृदतिरक्तमकारि पीतम् ॥ २ ॥

तामाह पद्मा पद्माक्षि ! यावद्वार्षभानवी नवीनानुरागवति प्रागऽवति प्रायिकीं रतिं तत्र न प्रसज्यति । तावत्कृताभियोगेन योगेन तेन सह ते यथा भूयते तथा मया समयासत्त्या विधेयं सविधेऽयं स यथा तव स्वयं समुपैति ॥ ३ ॥

किन्तु व्रजराजसुतस्य तस्य स्वभावो हि भावो हित ऊहितस्तस्यां तस्यां तस्यामेव हृदतटनिकटे ॥ ४ ॥

इति तामाश्वास्य तथैव स्म चेष्टते चेष्टतेयं तस्मिन्नेव कर्मणि तस्याः प्रवीणासीत् ॥ ५ ॥

दशमे राधिका प्राप कृष्णपाणिकृतां स्रजम् । कृष्णोऽपि राधिकापाणिकृतपाकान्नभोजनम् ॥

रणरणकं कामचिन्ता । मन एव रथस्तत्रैव आरूढ न तु बहिः प्रकटो मनोरथो यासां ताः । रूढभावस्य जातपूर्वानुरागस्यापि तस्य श्रीकृष्णस्य दुरवगाहस्य मनसोऽवगाहम् अनोजसा न त्वोजसा न बुद्धिबलेन किं तु मनोजस्य कन्दर्पस्यैव साहाय्येन हितं निजमभिप्रायं कृष्णेन सह हन्त ! रंस्ये इत्येवलक्षणं पिहितम् आच्छादितं कुर्वन्त्योऽपि ॥ १ ॥

ननान्दुः पत्युर्भगिन्याः । मे पीतं हृत् हृदयम् अतिरक्तम् आकारि इति विरोधः । तत्रापि श्यामेनेत्यतिविरोधः । नहि श्यामलिम्नैव रक्तिमा कर्तुं शक्यते । श्रीकृष्णेन मम मनः स्वानुरक्तं कृतमिति तत्त्वार्थः ॥ २ ॥

नवीनानुरागवति श्रीकृष्णे प्राक् प्रथमं प्रायिकीं रतिम् अवति रक्षति यावत् । किन्तु न प्रसज्यति संगं न प्राप्नोति । तावत्तेन कृष्णेन सह कृतोऽभियोगः फलसिद्धिर्यत्र तेन ते तव योगेन सङ्गेन यथा भूयते तथा समयस्य आसत्त्या शीघ्रमेवेत्यर्थः । स अयं श्रीकृष्णस्तव सविधे निकटे यथा स्वयं समुपैति ततश्च तया सह जनिष्यमाणात् सङ्गात् पूर्वमेव त्वत्सङ्गे जाते तामसौ विस्मरिष्यतीति भावः ॥ ३ ॥

ननु तस्यामयमत्यनुरक्तो लक्षितः कथं कृतमत्सङ्ग एव तां विस्मरिष्यतीति तत्राह । किंत्विति । भावः प्रेम स्वभावः स्वस्य भां कान्तिम् अवतीति सः हितमयः ऊहितः तर्कितस्तस्यां राधायां किन्तु तस्यां तस्यामेव । कालियदमनदिनारभ्यैव । न तु त्वय्यपि सर्वदैवेति भावः ॥४॥

इति चेष्टतेस्य अचेष्टत । इयता च इयं तस्याः ॥ ५ ॥

अथैवमुत्कण्ठाभराधिकां राधिकां विजने निजनेनिज्यमानसौहृदसहचरीभिः सह सहमानाममानामनुरागव्यथां किमपि चिन्तयन्तीमकस्मादुपगतापगताऽखिलावकरा कराकलितवकुलमाला वकुलमालाख्यसख्यान्विता श्यामा निजगाद ॥ ६ ॥

अयि वार्षभानवि! न विना भवतीमिह गोकुले कुले च कुलललनाललामभूतानां भूतानां सौभाग्यसंपदं कापि वहति ॥ ७ ॥

यदवधारितं तस्मिन्नहनि हानिष्यमाणप्रमदोहेन रसदोहेन रसवतीहृदयाकर्षणाङ्कुशेन निरीक्षणेन क्षणेन मूर्त्तिमतेव यदसौ व्रजराजकुमारो मारोद्धतहृदय इव चकोरको रजनीनाथमिव भवदास्यं धयति स्म ॥ ८ ॥

तदधुना तस्यानुरागपात्रं त्वामित्यवगतम्। गतं च मेऽमानस्यम्। मानस्यं सारस्यं च मे समजनि ॥ ९ ॥

साह साहसकारिणि! किमेवं प्रलपसि।

सा काऽऽलिः कालियरिपोरनुरागपात्रं या गोकुले कुलजनैरनुमातुमर्हा।
इन्दुर्विना कुमुदिनीं स्वयमुज्जिहीते नेन्दुं विना कुमुदिनी विकचत्वमेति १०

तन्नूनमखिलाङ्गनानां स एवानुरागपात्रं न तस्य कापि। श्यामाह। माहरमद्वचसि संदेहं देहं च मा खेदय दयस्व निजसौभाग्यं प्रतिजानीहि सहिममैवेति ११

ललितोवाच। वाचनिकोऽयमाश्वासः किंवा यथार्थ इति तया पुनरूचे। ललिते पृच्छ वकुलमालिकां मत्सहचरीम् ॥ १२ ॥

---

निजाश्च ता नेनिज्यमानसौहृदा अतिशुद्धसौहृद्याश्चेति ताभिः सहचरीभिर्ललितादिभिः अमानाम् अपरिमाणाम् ॥ ६ ॥

ललामभूतानां तिलकरूपाणां श्रेष्ठयुवतीनां कुल इत्यर्थः। भूतानां सौभाग्यसंपदं प्राणिमात्रकर्तृकप्रीतिम् ॥ ७ ॥

भूतानामिति कियदाधिक्यं यतः सर्वसौभाग्यसंपन्निधेः श्रीकृष्णस्यापि चेतः समाकर्षसीत्याह। तस्मिन्नहनि इति अहोदिनवासरादि शब्दानामहोरात्रमात्रवाचित्वात् कालियदमन दिवसीयरजन्यां यन्मया अवधारितम्। केन चिन्हेन। हनिष्यमाणोगंस्यमानः प्रमदस्य ऊहो यस्मात्तथाभूतेन निक्षणेन यदुत्तरकालम्। आनन्दस्य तर्को व्यक्तो भवतीत्यर्थः। हन्तेर्गमनार्थत्वात् गमनस्याप्यत्र व्यञ्जनार्थत्वात् यमकानुरोधादसमर्थतादोषः सोढव्यः। यद्वा हनिष्यमाणः नाशं प्राप्स्यन् प्रमदानां गोपीनाम् ऊहस्तर्को यत्र तेन। तदानीमनुरागस्य चाक्षुषत्वात् न पुनस्तर्को भविष्यतीत्यर्थः। पुनः कीदृशेन। रसं दोग्धि पूरयतीति तेन। क्षणेन उत्सवेन धयतिस्म अपिबत् ८ ॥

अमानस्यं दुःखम् पीडा बाधा व्यथा दुःखममानस्यमित्यमरः। मानस्यं मनसि जातम्। सारस्यं सरसता ॥ ९ ॥ आलि! सखि! सा का कुलजनैः कुलवर्त्तीभिः ॥ १० ॥

मद्वचसि संदेहं मा आहर मा आनय ॥ ११ ॥ वाचनिकः वचनमात्रभवः ॥ १२ ॥

ललिताह । वकुलमालिके । हेमाऽऽलि । केवलमस्माकमनुरोधेनैव कथनीयम् ॥१३॥

वकुलमालाह । वकुलमाला हरिष्यति खल्वियं ते सन्देहम् । तथापि किंचिदाकर्ण्यतां कर्ण्यतां यद्वदामि ॥ १४ ॥

एकस्मिन् समये स मयेक्षितः परमसुखवर्द्धनस्यगोवर्द्धनस्य गोचरः । चरति नैचिकीनिचये तदनुपदीने दीने सहचरचये नर्मदानुचरतया सरससमुद्रः । समुद्र इव गम्भीरो भीरोधकः ॥ १५ ॥

कुसुमित-वकुल-पालि-पालितं विपिनमध्यमध्यवस्थाय ललितेन गलितेन गम्भीरगन्धभृता भृतातिशोचिषा कुसुमेन माल्यमाल्यतिमनोहरं निर्मिमानः ॥१६॥

आलोक्य च तं सहसा सह साध्वसेन लताविटपेनात्मानमपवार्य्य वार्य्यमाणधैर्य्यया करकलितदेवीशुकेन कुसुमासवेन नवेन नर्मदेन सख्या स ख्यापितवार्षभानवीनवीनानुरागदर्शनकालत्रयकथः कथमपि समाकलितगाम्भीर्य्यः शीर्य्यमाण इव मया चिरमेव निभृतं न्यभालि भालिताहं न केनापि ॥१७॥

ततः कुसुमासवेन कुसुमासवेन सदृशया गिरा किंचिदप्रस्तुत प्रस्तुतं यथाऽयि! इयमियं स्वकरगुम्फिता वकुलमाला मालाधवमासादयितुमर्हति । तदिमां तस्यै उपहारीकृत्य हारीकृत्यवस्थां प्रापयेति वदति सति ॥१८॥

मा निषेधे । आलि हे सखिकेवलम् ॥ १३ ॥

वकुलस्य माला माल्यम् । कर्ण्यतां कर्णहितत्वम् ॥ १४ ॥

समया निकट एव ईक्षितः । समयाऽन्तिकमध्ययोरित्यमरः । नर्मदः परिहासदायी अनुचरो यस्य भावस्तत्ता तया । पक्षे । नर्मदा नदी । स प्रसिद्धः रसस्य जलस्य समुद्रः । समुद्रस्य सरित्पतित्वेन सन्नायकतया तदनुचरत्वारोपः । भीरोधको निर्भयः ॥ १५ ॥

कुसुमितानां वकुलवृक्षाणां पालिभिः श्रेणिभिः । पालितमिति तत्प्राधान्यतात्पर्य्यकम् । माल्यं स्रजम् आलि । हे सखि । अतिमनोहरम् ॥१६॥

अपवार्य्य तिरोधाप्य वार्य्यमाणं निवर्त्यमानं धैर्य्यं यस्याश्चपलभावेनेत्यर्थः । तथाभूतया मया स श्रीकृष्णः न्यभालि सविशेषं दृष्टः । अहं तु केनापि न भालिता न प्रत्यभिज्ञाता । करे कलितो गृहीतो देव्या राधायाः शुको येन तेन ख्यापिता प्रस्तुता वार्षभानव्या नवीनानुरागस्य दर्शनं यत्र तथाभूतस्य कालत्रयस्य कथा येन सः । वनगमनसमये जन्मदिनोत्सवे कालियदमनदिवसीयरात्रौ च दर्शनात् ॥ १७ ॥

हारीकृत्यवस्थां हारीकरणदशाम् अभूततद्भावे च्विः । इयं माला तस्याः कण्ठे हारत्वेन कल्पिता भवत्विति वाक्यार्थः । परमानुरागिण्या तया गुम्फितेयं माला प्रतिदिनमेव स्वकण्ठे हारमिव धारयिष्यतीति हारशब्दतात्पर्य्यम् । भङ्ग्या तु हारीकृतिरूपामवस्थां प्रापयेति स्वकण्ठे अहमपि त्वयाहारीकृतः स्यामिति ज्ञापयेत्यर्थः ॥१८॥

सतिलमात्रं स्मित्वा वयस्य ! कथमेतत्संपद्यतां गद्यतां गगनकुसुममालया गगनमण्डनमिव इति यदैवं निजगाद ॥१९॥

निजगाद्वैयर्थ्यनिराकरणाय करणायत्तपाटवोऽपि क्षणं चित्रलिखित इव तस्थौ कुसुमासवः ॥२०॥

तत्समकालमकालवात्येव पद्मा समुपसन्नवती नवतीव्रतरोत्कण्ठया मया समया समुत्पन्नमनोरथयैव श्रूयते कुसुमासवस्तदा यदवादीत् ॥२१॥

अयि ! काऽसि कासितचतुरिमणि मणिरिव वीक्ष्यसे । किं प्रयोजनं विजनं विपिनं चरसि रसिकसेखरस्य रस्यतमचरितस्य मद्वयस्यस्य पुरतो निःसाध्वसं साध्वसंकलितत्रपाऽत्र पालयसि किं चरणविहारमिति तद्वचनोपरमेपरसेण च्छद्मना पद्मनाभस्य पुरतएव सा किमपि प्रास्तौपीत् ॥ २२ ॥

अयि ! चन्द्रावल्यावल्यामोदकरीणां सहचरीणां सहगा पद्मा नामाऽहं तया खलु गुणगौर्यागौर्या एव पूजनार्थं कुसुमान्यवचेतुमिह प्रहिता हि तादृशानि कुसुमान्यपरत्र न लभ्यन्ते लभ्यं ते विपिन एव तत्सौलभ्यमिति बकुलकुलमेवादौ विचेयमित्यत्रागता ॥२३॥

कुसुमासव आह । प्रसिद्धैव सा गौरी गौरीपूजनपरेति किन्तु श्रद्धागौरवादेव देवतातुष्टिरिति सा कथं नागता । साह । साहसिक ! साधूक्तं किन्तु यस्मिन् क्षणे हृदतटीमधिवर्त्तमाना हा हन्त ! कृष्णभुजगं सहसा ददर्श । आरभ्य तं क्षणमहो ! अधुनापि चित्तं तस्या दुनोति बत ! तद्विषबाधयैव ॥ २४ ॥

संपद्यतां घटताम् गद्यतां कथय । गगनपुष्पमालया गगनस्य मण्डनमिवेति तद्यथा मनःकल्पनामन्तरेण कार्य्यतो न घटते । तथैवैतदिति तस्यागोष्ठमध्ये स्थितत्वादस्माकं मध्ये केनापि गन्तुमशक्यत्वात्तत्रात मम तु ततो दूरे वने स्थितत्वात् पुष्पमालायाश्च चिरकालस्थायित्वासंभवाच्चेतिभावः ॥१९॥

निजगादस्य निजवचनस्य व्यर्थतानिरसनाय । गादर्थज्ञतः । करणायत्तं बुद्ध्यधीनं पाटव वाक्चातुर्यं यस्य सोऽपि प्रतिवक्तुं समर्थोपीत्यर्थः ॥२०॥ समया निकटे ॥२१॥

कासि का भवसि । कासिते संदीपिते चतुरिमणि चातुर्य्ये विषये मणिरिव । साधु यथास्यात्तथा न संकलिता न संगृहीता त्रपा यया तथाभूता सती अत्र पालयसि रक्षसि करोषीति यावत् ॥२२॥

"गणगार्य्या विशुद्धया । गौरोऽरुणे सिते पीते विशुद्धे चाभिधेयवदिति मेदनी । अपरत्र वनादौ न लभ्यन्ते ते तत्र विपिन एव तेषां कुसुमानां सौलभ्यं सुलभत्वं लभ्यं लब्धुं शक्यम् २३

कृष्णभुजग कालियसर्पम् । पक्षे कृष्ण एव भुजगः तं कामविषसंचारणात् दुनोति उपतप्तं भवति ॥ २४ ॥

स आह । तद्राधाशमनोपायो मनोऽपायो यदि भवति तदैव भावी ॥ २५ ॥

साह । मनोऽपायकारणमेव मृगयामहे । स आह । तदातिदुर्लभम् ॥ २६ ॥

साह । उच्चैरौत्कण्ठ्यस्य किं दुर्लभम् ॥ २७ ॥

स आह।बाधितमेतत्सति मनसि ह्यौत्कण्ठ्यं कथमौत्कण्ठ्येन मनोऽपायोपलम्भः२८

साह । मनोऽपायस्तस्या वृत्त एव । मनोहरेण केनापि मनसो हरणात् । तथाप्यौत्कण्ठ्यमिति विचित्रम् । स आह मनोहरमनुसन्धेहि। साह। सम्प्रति वकलमाल्यमेव यदिदं गौरीकण्ठं रञ्जयिष्यति ॥२९॥

कृष्ण आह । वयस्य ! चतुरेयं यदनयैव वकुलमालया गौरीपूजां कारयितुं कामयते । ग्रथनपरिश्रामविश्रामविधिं च ॥३०॥

कुसुमासव आह अयि साहसिनि ! प्रियवयस्यस्य निजकण्ठाभरणोचितामेनां वकुलमालिकां कथमन्या लब्धुमर्हति । तदिमान्यग्रथितान्येवाऽवचित्य नीयन्ताम् साह साहसं मे कथमेवं मे वञ्चयसि वा कथमेवम् । यदि कुमारस्य रस्यप्रसादो भवेत्तदा स्वयमेव ददातु ॥३१॥

कृष्ण आह । वयस्य ! समुचितमुक्तमनया तद्दीयन्तां कुसुमानि स्वयमेव । यथैभिरेषा स्वसखीं तोषयति निर्वहति च गौरीपूजनमिति · तदुदितान्तेऽतोन्तेन मनसा दत्तानि कुसुमानि गृहीत्वा सा गतवती ॥३२॥

---

मनोपायः मनसोऽपायः अपगमः कृष्णभुजगस्मृत्यासक्तं मनश्चेदपगच्छति तदैवेत्यर्थः ।२५।

तदतिदुर्लभमिति भुजगपक्षे तस्या भीरुस्वभावत्वात् भयासक्तमनो नापयास्यत्येव । कृष्णपक्षे परमानुरागिण्यास्तस्याः कृष्णसक्तं मनस्तुनितराम् ॥ २६ ॥

उच्चैरौत्कण्ठ्यस्येति न लोकेत्यादिना कर्त्तरि षष्ठीनिषेधादत्र कर्त्र्यैव संबन्धविवक्षया षष्ठी । तस्या जातमौत्कण्ठ्यमेव मनसो ऽपायं लप्स्यते इत्यर्थः । विरहतप्तस्य मनसो मूर्च्छया लयदर्शनात् २७

बाधितमिति औत्कण्ठ्यमेव मनसोऽपायं प्राप्स्यतीति भवत्या उक्तं तत्र मनसोऽपायसमकालमेव औत्कण्ठ्यस्याप्यपायात् तत्प्राप्तिकर्तृत्वम् औत्कण्ठ्यस्य तदानी खपुष्पायितस्य कथमस्त्वित्यर्थः ॥ २८ ॥

वकुलमाल्यमेवेति साक्षात्कृष्णोल्लिखस्याऽसत्त्वात् तेन माल्येन च चन्द्रावलीमाश्वासयितुम् अत्रहिर्थेयम् । अतः सम्प्रतीत्युक्त्या कृष्णदत्तमाल्यलक्ष्मणा तस्याश्चित्ते विलम्भमानाप्यपश्चात्संगमयितुं तन्मनोहरं श्रीकृष्णमेतमनुसन्धास्याम्येवेति द्योतितम् । गौरी दुर्गा । पक्षे चन्द्रावली ॥२९॥

गौरीति दुर्गां पक्षे चन्द्रावलीमिति । चन्द्रावलीपक्षे मामिति प्रयोज्यकर्म उन्नेयम् ।* ग्रथनपरिश्रमस्य विश्रामविधिं कामयत इत्यस्यानुषङ्गः ॥३०॥

साहसं मे कथमेवमित्येकं वाक्यम् । मे मम वञ्चयसि वञ्चनां करोषि वा कथमेवमनेन प्रकारेणेत्यर्थः । कुमारस्य युवराजस्य । युवराजस्तु कुमार इत्यमरः ॥३१॥

गौरीपूजनमिति पूर्ववत् तेऽतस्तेन स्वानुरागोऽपि यथाकथंचित् स्थापित इति ॥३२॥

---

* अतान्तेन ग्लानिरहितेन । तमु ग्लानाविति धातोर्निष्ठान्तम् ।

तव तीव्रतरतपःप्रभावेण ततः कुसुमासवेनोक्तम् वयस्य! इयमिव यदि वर्षभानव्या नव्यालीनां * मध्ये काप्यधुना धुनानेव ते हृत्तापमिहोपसीदति तदैषा माला या लाघवमुपैतीत्याकर्ण्य निःसाध्वसमेव तदऽनाकर्णितमभिनयन्ती पतितकुसुमावचयनच्छलेनाकारिमकीवाहमुपसन्ना। तदनु तथैव मामवलोक्य कुसुमासव एव कासि स्वामिति मामवादीत् तदाशुकेन शुकेन समुक्तम् ॥३३॥

हंहो! राधासुहृदः श्यामायाः सखीयं वकुलमाला नाम वकुलमालानिर्माणहेतोरिमानि कुसुमान्याचिनोति। स आह। मालयाऽस्याः किं प्रयोजनं जनमेव वकुलकुसुमानि तरलयन्ति गोकुलबालाः संकोचोऽपि चोपितस्ताभिः ॥३४॥

शुकेनोक्तम् एषा वकुलमाला वकुलमालामारचय्य गुणश्यामायै श्यामायै निज सख्यै दास्यति। सा च मद्देव्यै इति तस्या मर्य्यादा ॥३५॥

कुसुमासवेनोक्तम् वयस्य! मदुक्तिकल्पलतिका फलोन्मुखीव जाता। शुकेनोक्तम् अमोघा हि ब्राह्मणिवाणी। तदिमामाहूय दीयतां वकुलमाला यथेनामियमेव तां प्रापयति। तदनु दनुजदमनो मनोज्ञतरदशनकिरणकन्दलीव्याजहारो व्याजहारोचितं किमपि ॥३६॥

कथमियमागमिष्यति हासपटोर्वदोर्वचसा सहजगर्ववत्यो हि गोकुलबालास्तदापि दयित! विहगोत्तम! स्वदेवीपक्षपातेन पक्षपातेन स्वयमेवास्याः सविधमुपसर्पतु भवान्। स्वभावकलकोमलेनाऽमलेनाऽनेन भवतो वचसा नेष्यत्यसौ वकुलमाला वकुलमालामित्युक्त एव विहगराजो मदभ्यासमभ्यससाद ॥ ३७ ॥

आसाद्य च वकुलमाले! मां परिचिनोषि चिनोषि किं वकुलकुसुमानि। एहि व्रजराजकुमारसविधम् अहं ते तत्करगुम्फितां स्रजं दापयिष्यामि किमेतावताऽधिकेनाऽवचयनपरिश्रमेण। मयोक्तम्। अयि शुककुलावतंस! संसर्गजाः किल दोषगुणा इति सत्य एव व्याहारः। यदियं ते स्वभावलम्पटस्य पीतपटस्य पीतमधुरसस्येव समदस्याऽऽसङ्गेन भिन्नैव मतिरनुभूयते। ननु दृष्टं भवता कुलकुमार्य्यः परपुरुषदत्तां मालामुरीकुर्वन्ति ॥ ३८॥

आशु शीघ्रं कं सुखं यस्मात्तेन शुकेन ॥३३॥

चोपितः दुरीकृतः। चुप मन्दायां गतावित्यस्य रूपम् ॥३४॥ मद्देव्यै राधायै ॥३५॥

मनोज्ञतरः दशनानां दन्तानां किरणकन्दल्या कान्तिश्रेण्या व्याजेन च्छलेन हारो यस्य सः इत्यपह्नुत्यलङ्कारेण मन्दहासो द्योतितः। व्याजहार उवाच ॥३६॥

स्वदेव्याः पक्षपातेन साहाय्येन हेतुना। पक्षयोर्गरुतोः पातेन चालनेन। विहगराजः शुकः ३७ पीतं मधु रसो येन तस्येव ॥ ३८ ॥

* नव्यानाञ्च तासामालीनां वार्षभानवीसम्बन्धिनीनाम्।

शुकेनोक्तम् । अयि ! परमपुरुष एवायं न हि परपुरुषः । मयोक्तम् पुरुष एवायं कथं परम् अपुरुष इत्युच्यते । तेनोक्तम् नाऽत्र सन्धिरनुसन्धेयः किमपिवाचालतालतविस्तारेण तत्कर्मधारयपरं पदमेतद्दुर्लभमिति तत्कथाचातुर्येणैव जिताऽहं माऽतः परं मातः ! परम्परागतं वाम्यमकरवम् ॥ ३९ ॥

मकरवन्धुरकुण्डलस्य तस्याऽभ्यासमभ्यासमहम् ॥४०॥

ततश्च । द्विजत्वेन परस्परमतिस्निग्धयो [illegible]

मासवशुकयोरुपरोधेन विरोधेन विरहितं [illegible]

मलामोदमेदुरा दुरासदा थियोऽपि वकुलमाला वकुलमालाद्वारा प्रापणीया । सफलीकर्त्तव्यं च निजशिल्पकौशलम् ॥४१॥

इति कुसुमासवेन गदितो दामोदरो दरोदितवेपथुना कियदुदीर्णघर्मजलकणमेदुरेण करकमलेनोल्लास्य मूर्त्तां निजप्रणयमाधुरीमिव वकुलमालामेनां दरहसितसुधालेशपेशलं वदनसुधाकरमवहित्थया मन्मुखानभिमुखीकृत्य कृत्यकोविदो मम करे सस्पर्शं समर्पयामास । मया च मूर्त्तं सुरभितमं तदीयं हृदयमिवकरे निधाय माल्यमिदं कृतार्थयेव समागत्य मद्देव्यै सर्वमामूलतः कथयित्वा समर्पितम् । सा चेयं मद्देवी त्वरितमेवादाय समागतेति कथितवत्यां वकुलमालायां तां वकुलमालां श्यामा राधायाः कण्ठवर्त्तिनीं करोति स्म ॥४२॥

तदनु वार्षभानवी नवीनघनमेदुरस्य रस्यतमं स्पर्शमिव तस्य तस्याः स्रजः स्पर्शमुपलभ्य लभ्यमानामोदेन पुलककुलकदम्बितकपोलफलकमलककुलास्कन्दि

सन्धिर्मकाराकारयोः स्वप्रतिभाकल्पितयोः संश्लेष इत्यर्थः । पक्षे अपि प्रश्ने अत्र श्रीकृष्णे सन्धिः किं न अनुसन्धेयः अपि तु अनुसन्धातुं योग्य एव इत्यर्थः । अत एव तत्कर्म मद्गुम्फ मालाग्रहणलक्षणं धारय स्वीकुरु । एतत् पदम् एव व्यवसायो दुर्लभ इत्यर्थः । मानिषेधे अतः परं तदनन्तरं परम्पराप्राप्तं वाम्यं मा अकरवम् न कृतवत्यऽस्मि । तत्राडिता माशब्देन योग इत्यडागमनिषेधामावः । मातरिति औत्सुक्यवैक्लव्यादिभिः सखीं प्रत्यपि स्त्रीणां तत् शब्दसंबोधनं ज्यात्युक्तिरेव ॥ ३९॥

अभ्यासं निकटम । अभ्यासमित्यभिपूर्वस्यास्तेर्लोङि रूपम् ॥ ४० ॥

आश्रयोरुपरोधेनेति नायकस्य प्रकटमभ्यर्थनादौ [illegible] । अत एव विरोधेन विरहितं यथा स्यादित्यन्यथा आवां त्वया विरुध्यमानौ स्याव इति । अतो नास्ति तव दोषलेश इति भावः ॥ ४१ ॥

उल्लास्य उत्थाप्य । सस्पर्शमिति मालासंप्रदानभूतायाः राधायाः करस्पर्शसुखं स्वस्य सूचयति तदीयं हृदयमिवेति तस्मात्तद्धृदयरूपमिदं राधाहृदये शीघ्रं संगमयेति स्वदेव्यै प्रतिनिवेदनभङ्गी । वकुलमालां फुल्लस्रजम् ॥ ४२ ॥

विपक्षीयसखीं याचमानामनाप्य लाघवम् । सुहृत्पक्षसखी या च मानं मानप्रदायतम् । [illegible] । [illegible] मा [illegible] । पुन-

मन्दाश्रुमन्दाक्षलक्ष्मीभरभरितमीषदानतवदनकमलममलतरदरहसितसुधाधौतमधुराधरकिशलयमानन्दसन्दोहमनुभवन्ती तमतिरयं तिरयन्ती च सुहृज्जनस्य चापरिचितां कामपि दशामासाद्य वकुलमालामालिलिङ्ग । ललिताह । श्यामे ! वकुलमालयोर्न केवलं नामतः साम्यं न केवलं गुणतश्च । अपि तु सौभाग्येनापि । तथा हि । कृष्णकरस्पर्शजुषौ राधाकण्ठोपकण्ठसंसक्ते । गुणवत्यौ सुकुमारे सुपरिमले द्वे वकुलमाले । श्यामाह । ललिते ! ललितेयं ते भणितिरिति ॥ ४३ ॥

अथैवमेव समये वृषभानुना भानुना सदृशमहसा महसारस्येन नयविनयविदग्धतापूर्वकमपूर्वं कमनीयताककृतसपरिवारवारव्रजराजनिमन्त्रणमन्त्रणतया सुरसतापरिपाकपाककौशलशलच्चातुर्य्यतुर्यदशामिव स्वदुहितरं हितरञ्जनकरीं तामेव सखीजनमुखाराधां राधां समानेतुं प्रहिता हितासु चरितासु चरिता नाम तस्या एव धात्रेयी समजागाम ॥४४॥

*आगत्य च सकलमेवानुपूर्व्या संश्राव्य गुरवोऽपि ते कृतानुज्ञा नु ! ज्ञापनापेक्षालि-क्षालितास्ते तदऽलं विलम्बेन* ॥४५॥

---

कञ्चुकैः करम्बितं युक्तं कपोलफलकं यत्र तद्यथास्यात्तथा । अलककुलास्कन्दि अलककुलाप्लावि मन्दम् अश्रु यत्र तत् । ततश्च प्रेमप्राकट्ये मन्दाक्षं लज्जा तस्य शोभातिशयेन भरितम् अनुभवन्ती आस्वादयन्ती प्रथमं ततस्तम् आनन्दसंदोहम् अतिरयम् अतिवेगं तिरयन्ती तिरस्कुर्वती च आयत्यां मूर्च्छोदयात् ॥ ४३ ॥

अथ तादृशं कृष्णस्याऽनुरागमात्मनि संभावितवत्या धृताश्यामायाः पुनरतिविवृद्धतद्दर्शनोत्कण्ठायास्तस्याः किमपि स्वाभिमतार्थसंपादि सोत्सवमेव तद्दर्शनं दैवेनैव तदवसरे फलितमित्याह । अथैवमेत्यादिना वृषभानुना तां राधां समानेतुं प्रहिता प्रेरिता तस्या धात्रेयी समाजगामेत्यन्वयः । महसारस्येन उत्सवसरसतया अपूर्वा कमनीयता यत्र तद्यथा भवत्येवं कृतं सपरिवारवारस्य परिवारसमूहसहितस्य व्रजराजस्य निमन्त्रणे मन्त्रणं युक्तिर्येन तस्य भावस्तत्ता तया सुरसतायाः सौरस्यस्य परिपाको यत्र तथाभूते पाके यत् कौशलं नैपुण्यं तत्र शलतः प्रतिक्षणमुद्गच्छतश्चातुर्य्यस्य तुर्य्यदशां चतुर्थीं कक्षां मूर्तिमतीमिवेत्यर्थः । अत्र पाककर्मणि- दुर्वाससो मुनीन्द्राल्लब्धवरायाः क्वापि दिवसे पितृसदनान्तरे एव बाल्यखेलावेशेनैव कृतपाकायास्ततः स्वसखीभ्यः परिवेशयन्त्याः कौतुकेन तत्रागताये सलालनप्रपञ्चं तदन्नं याचमानाये स्वमात्रे च सस्मितं विभजन्त्यास्तस्यास्तत्पाककौशलं परम्परातः श्रावितस्य वृषभानोरप्यौत्सुक्येन तदपरत्र क्वापि दिवसे तत्पक्वान्नमलक्षितं भुञ्जानस्य सचमत्कारं लोकोत्तरतया तदास्वादमनुभवतस्तदानीमेवाहो ! एतदन्नं मत्सख श्रीव्रजराजश्चेत्कदाचिदुपयुङ्क्ते मत्प्राणकोटिलाल्यतमः श्रीकृष्णश्च तदैव मे मनसो निर्वृत्तिरित्युत्पन्नमनोरथस्य तस्याऽयं समये महोत्सवारम्भ इतिज्ञेयम् ४४

ते तव गुरवः श्वश्रूश्वशुरादयः । कृता अनुज्ञा पितृगेहं गच्छत्विति सम्मति यैस्ते । ननु तथापि स्वकर्तृकविज्ञापनं तेषु मनोचितं तत्राह नु भो ज्ञापनहेतोरपेक्षाली अपेक्षासमूहे विषये- क्षालिता शोधितास्ते त्वां प्रति तेषां मनः कालुष्याभावात् त्वत् ज्ञापनापेक्षया अलमित्यर्थः ॥४५॥

लम्भे न भवद्गमनमनवेक्ष्य श्यामे ! त्वमपि तेनादिष्टा साली॑काऽलीकालस्यमपहाय सहैवानया मयासादितसौजन्याजन्याय भविष्यसीति । विशाखे ! गुणललितया ललितया सह त्वमपि भविष्यसीति तद्वचनोपरमे परमेण हर्षेण ललिता समभाषत ॥४६॥

सुचरिते ! कथमयमाकस्मिको निमन्त्रणमहोत्सवः । सुचरिताह । नायमाकस्मिकः श्रीकृष्णजन्मतिथिरातिथिरभूद्यदा तदा व्रजराजेन सर्वे निमन्त्रिता यत्रासन् तस्मिन्नेवाहनि पितुरस्या रस्या मनोवृत्तिरभूत् मयापि सदारः सकुमारः सपरिवारश्च घोषाधीशो धीशोभनो यथाकालं निमन्त्रयितव्य इति चिरमनोरथरथसमारूढो रूढोऽयं महोत्सवः संपत्स्यत इति । श्यामाह । गुणसाराधिके ! राधिके ! महदेवेदं कौतुकं कौ तु कं न रञ्जयिष्यति तदवलोकनीयमेतत् । विशेषतश्च पितृप्रादानामाज्ञा । तदुत्थीयतामिति सर्वा एव वृषभानुभवनं भानुभवनं यदि समाजग्मुः समाजग्मुषी तदा तत्र मूर्त्तिमतीव महोत्सवश्रीः ॥ ४७ ॥

अथ आगतासु तासु पिता सुतामभाषत स्वागतं वत्से ! सुखं वर्द्धते । अथ कृतवन्दनां मूर्द्धानमाघ्राय पुनरुवाच ॥ ४८ ॥

पाकेन कौशलनता कमनीयतायाः कल्याणि ! पाणिकमलं सफलीकुरुष्व । घोषेश्वरः सदयितः ससुतः सरामः श्वोऽस्मदगृहे यदशिता स निमन्त्रितोऽस्ति ॥ ४९ ॥

ललिताह । तात ! किमु चितमुचितमेव तदुपकरणम् ॥ ५० ॥

स आह । चिरचितानि रचितानि च विविधकौशलेन सकलान्येवोपकरणानि करणानियम्यानि कौतुकेन न केन नकेवलमद्यैव ॥ ५१ ॥

तदालोकयन्तु शुभवत्योभवत्यो भवनं प्रविश्य संपन्नमसंपन्नमपि च विलोक्यपदार्थं विलोक्य पदार्थं यमन्यमिष्टतमं तमञ्जसा च कथयन्त्विति ॥ ५२ ॥

---

हे श्यामे ! तेन श्रीभानुना त्वमपि आदिष्टा अतस्त्वद्गमनमनालोक्य अहं न लम्भे न गच्छामि । साली॑का सखीसहिता एव अलीकालस्यं मिथ्यालस्यम् । जन्याय हिताय । जन्यो वरज्ञातिप्रियभूत्यहितेषु चेति विश्वः ॥४६॥

भा शोभा तस्या अनुभवनम् अनुभवो यत्र तत् ॥४७॥ सुखमिति कर्तृपदम् ॥ ४८ ॥

कमनीयताया यत्कौशलं तद्वता पाकेन पचनक्रियया पाणिकमलं सफलीकुरु अशिता भोक्ता ४९

तस्य पाकस्य उपकरणं किं चितं प्रस्तुतम् उ प्रश्ने ॥ ५० ॥

चिरचितानि बहुदिनत एव प्रस्तुतीकृतानि न केवलमद्यैव । किंच न केन कौतुकेन अपि तु सर्वेणैव । रचितानि कल्पितानि करणैरिन्द्रियैरनियम्यानि अनन्तत्वात् वक्तुं द्रष्टुं गृहीतुमपि सम्यक्तया अशक्यानीति तासां पाकोत्साहो वर्द्धितः ॥ ५१ ॥

पदार्थमुत्तमद्रव्यं संपन्नमसंपन्नमपि वा विलोक्य । यम् अन्यम् इष्टतमं विलोक्य पदार्थं विशिष्टलोकाईदिव्यवस्तु आलोकयन्तु तत्रोपयुक्तत्वेन पर्यालोचयन्तु तमपि अञ्जसा शीघ्रमेव कथयन्तु ततस्तदुनैवाहं समाचिनोमीति भावः ॥ ५२ ॥

सकलाः सकलास्तद्वचनविरामेऽविरामेण हर्षेण भुवनकमनीयतासदनं सदनं प्रविश्य प्रमोदजनयित्रीं जनयित्रीं च प्रणम्य सकलामेव सामग्रीमग्रीयां सम्पासम्पातनिभा निभालयामासुः ॥ ९३ ॥

अथ धेनुगणावनतोऽवनतो निवर्तमानं नवर्तमानं नरकारिं करिपुङ्गवगामिनं तनयमासाद्य व्रजेशाऽजेशादिनुतकीर्तिः समधुमधुरमुवाच ॥ ९४ ॥

वत्स ! वत्सरावधिसमुपचितमनोरथेन समुपसन्नवृषभानुना वृषभानुनाऽसि श्वो निमन्त्रितोऽनुचरनिकराद्गृहीतमन्त्रेण ॥ ९५ ॥

तत्प्रणयाय श्वः श्रेयसे श्वःश्रेयसेन भवितव्यम् ॥ ९६ ॥

सहचरा एव पालयिष्यन्ति सविधेऽनुगणं धेनुगणम् । तदवनाय वनाय न भवता गन्तव्यमिति निगदितो मात्रा मात्राहीनकरुणः । कथमहो ! भो जननि ! भोजननिमित्तं सहचरानन्तरेणैकाकिना भवितव्यं मया तदलं मे निमन्त्रणेनेति यदियदिदमूचे ॥९७॥

कृतनयस्तनयस्तदा तज्जननीति परा जननीतिपराऽऽचचक्षे ॥ ९८ ॥

तात ! तातप्यमानमानसेन न भाव्यम् । सहजसहचरप्रणय ! प्रणयासि यद्येवं तदा सह सहचरैरेवाऽवस्थातव्यमिति निगदितो दितोपद्रवो निखिलभुवनस्य वनस्य विहारे भाविनि मनो निवर्त्तयामास ॥ ९९ ॥

श्रीकृष्णः सारस्यं सतृष्णतां च वर्त्तयामासच वर्त्तयामास च वृषभानुना स्वा-

सकलाः पाकादिशिल्पवत्यः । कमनीयतायाः सदनं प्राप्तिर्यत्र तत्सदनं गृहम् । अग्रीयां मुख्याम् । सम्पासम्पातनिभा विद्युत्संघट्टतुल्याः ॥ ९३ ॥

नवः नित्यनवीनः ऋतो निष्कपटः मानः पूजा स्वस्वप्रेमानुरूपकटाक्षकुवलयार्पणादिरूपलक्षणा यस्य तम् ॥ ९४ ॥

वृषभानुना श्वो निमन्त्रितोऽसि । कीदृशेन । समुपसन्ना वृषाणां पुंगवानां भानवः किरणा यस्य तेन । अतिगोसमृद्धिमत्वादरमत्तुल्येनेत्यर्थः । मन्त्रितो मन्त्रिरूपात् अनुचरसमूहात् गृहीतो मन्त्रो मन्त्रणं येन तेन ॥ ९५ ॥

अतस्तत्प्रणयाय तस्य प्रणयं सफलयितुम् । प्रणयाय कीदृशाय । श्रेयसे श्रेष्ठाय । श्व. परेद्यवि । श्वः श्रेयसेन कल्याणकवता वत्सेन श्वःश्रेयसं शिवं भद्रमित्यमरः ॥ ९६ ॥

सविधे व्रजस्य निकट एव अनुगणं प्रतियूथमेव । मात्रया इयत्तया हीना करुणा यस्य सः । भो जननि ! हे मातः ! यदिदं यदेतत् ऊचे ब्रूञ् व्यक्तायां वाचीत्यस्यरूपम् ॥९७॥

तदा तस्य जननी यशोदा इतिवक्ष्यमाणवाक्यम् । कीदृशी । परा श्रेष्ठा । जननीतिपरालोकरीतिज्ञा । आचचक्षे उक्तवती ॥ ९८ ॥

निखिलभुवनस्य दितःखण्डित उपद्रवो येन तस्याप्ययं मनस्तापः कथं तिष्ठत्विति भावः९९

वृषभानुना प्रयोजककर्त्रा स्वात्मजया स्वदुहित्रा पाचिते कारितपाकेऽन्नादि वस्तुनि प्रणये-

१ श्वसोवसीयः श्रेयस इत्यजन्तम् ॥

स्मजापाचिते स्वात्मजापाचितेन प्रणयेन सारस्यम् ॥ ६० ॥

अथ निशान्ते निशान्ते प्रमोदेन समागता वृषभानोर्भानोरिव घृणयो घृणयोपचितापचितावातिनम्राः पुरन्ध्रयो रन्ध्रयोगहीनां वाचमभाषन्त ॥ ६१ ॥

अवधीयतां व्रजेश्वरि ! भवत्या स्वार्थसाराधिका राधिकाजनकस्य वागीशया ६२

वागीशयाऽपि स्तोतुमशक्यानि ते वत्सलतालतामसूनानि सुचरितानि तेनाऽद्य तुद्यतुभवती भवतीव्रयातनां हरिभक्तिरिव मद्देहापदं पदं धारयन्ती रयं तीव्रमासाद्य सपत्यपत्यपरिजना सापत्यरोहिणीसहिता हिताय तायतामपि मयि करुणा च त्वयेति ॥ ६३ ॥

किंच । समस्ताः समस्तान्येवाभ्यङ्गोद्वर्त्तनस्नानादीनि कर्माणि ममैव वस्त्येऽवस्त्येयानीति त्वरितमेवागन्तुमर्हन्ति ॥ ६४ ॥

आह व्रजेश्वर्य्या ऽनर्घ्या ! यदिदं विनयमाहात्म्यं तेने तेनेह वयं सर्वे एव जिताः ६५

तदयि ! गम्यतां गम्यतां परिहरता हरता च मनोऽस्माकं तस्य विनयेन नयेन च यथानिर्देशं करवामेति ॥ ६६ ॥

---

न प्रेम्णा सारस्यं सरागतां वर्द्धयामास । प्रणयेन कीदृशेन स्वस्य आत्मनि मनसि जापैर्जपारूपगुणनामाद्यावृत्तिमयैराचितेन वर्द्धितेन ॥ ६० ॥

निशान्ते प्रातः प्रकरणात् व्रजेश्वर्य्या गृहे । निशान्तवस्त्यसदनमित्यमरः । वृषभानोः पुरन्ध्रय आगताः । कीदृश्यः । भानोः सूर्य्यस्य घृणयः किरणा इव ततश्च घृणया कृपया हेतुना व्रजेश्वरीकर्त्तृकायाम् उपचितापचितौ प्रवृद्धपूजायां विषये लज्जया अतिनम्राः । सूर्य्यघृणयोऽपि प्रातर्गृहमागता अतिनम्रागृहिण्या प्रणत्यादिना पूज्यन्ते । रन्ध्रयोगहीनां छिद्रसम्पर्करहितां निष्कैतवामित्यर्थः ॥ ६१ ॥

भवत्या ईशया ईश्वर्य्या राधिकाजनकस्य वाक् अवधीयताम् । कीदृशी । स्वस्य अर्थसारे प्रयोजनमुख्येन अधिका ॥ ६२ ॥

वागीशया सरस्वत्या तेन अद्य तु अद्यैव । द्यतु खण्डयतु रयं तीव्रम् अतिशयं वेगमसाद्य । पत्यपत्यपरिजनैः सहिता । तायतां तन्यताम् ॥ ६३ ॥

समस्ता सर्वा एव त्वदाद्याः । त्वरितं स्नानाद्यकृत्वैव आगन्तुमर्हन्ति । यतः समस्तान्येव इत्यादि ममैव वस्त्ये गृहे अवस्त्येयानि समुदायेनैवानुष्ठेयानि । स्त्यै शब्दसङ्घातयोरिति धात्वर्थस्यैकांशेन संबन्धात् ॥ ६४ ॥

आह व्रजेश्वरी आशु शीघ्रं हे अर्य्याः ! आदरभाषया हे स्वामिन्य ! इत्यर्थः । यद्वा वार्त्ता चतुर्विधा तत्र वयं गोरक्षयोऽनिशमिति भगवद्वाक्यानुसारेण तत्रत्यगोपानां सर्वेषामेव वैश्यत्वात् हे वैश्या ! इत्यर्थः । स्यादर्य्यः स्वामिवैश्ययो रित्यमरः । तेने विस्तृतवान् ॥ ६५

उक्तमेवार्थं पुष्णन्नाह नयेन च नीत्या च । कीदृशेन । गम्यतां गम्यत्वं परिहरता त्यजता अगम्येनाग्राह्येनेति यावत् ॥ ६६ ॥

---

१ वय यशोदादयः सर्वाश्च व्रजपुरन्दरप्रभृतयो गोपाः सर्वे चेति सर्वे इत्येकशेषे पुंस्त्वम्

अथ वृषभानुना भानुनाथितघोषाधीशानुरूपचारूपचारमांभित उपचितीकृत्य कृत्यकोविदतया तदागमनापेक्षणक्षणवशेन ॥ ६७ ॥

पुरतोऽरणपुरतोरणतो रणत्किङ्किणीजालमालिन्यां मालिन्यांशेनापि रहितायां हितायां श्रेणीबद्धपूर्णकलशलसन्नवकिशलयसवृन्तमङ्गलनारिनारिकेलफलफलदमन्ददीपशिखायां त्रिशिखायाम् ॥ ६८ ॥

त्रिशिख्योभयतोऽभयतो रोपितसफलपूगतरुपूगतरुणरम्भास्तम्भास्तङ्गमितभास्करकरनिकरेऽध्वनि ॥ ६९ ॥

ध्वनितमृदुमृदङ्गपणवादिपणवादिवादित्रचित्रे मित्रे हिते पथि निहिते पथिनिहितेक्षणेन ॥ ७० ॥

क्षणेन सह सहचरगणेन इव भुवनमङ्गलस्य भुवनमङ्गलस्यमानोरुचारुचामीकरवाससा तडिन्मयीकुर्वन्निव ॥ ७१ ॥

---

वृषभानुना पथिनिहितेक्षणेन व्रजराजकिशोरः क्षणेन ददृशे इत्यन्वयः । भानोरिष्टदेवात्सकाशात् नाथितं संपादयेति प्रार्थितं घोषाधीशस्य अनुरूपं योग्यं चारुम् उपचारं । यद्वा । भा कान्तिस्तया अनुनयेन नाथितः मां स्वीकुर्विति प्रार्थितो यो घोषाधीशस्तस्यानुरूपम् ॥ ६७ ॥

पुरतोऽग्रतः । अरणमाश्रयभूतं यत् पुरं तस्य तोरणतो बहिर्द्वारमारभ्य त्रिशिखायां ग्राममध्यमार्गे बृहन्मार्गे अध्वनि तस्या उपवर्त्मन्येकस्मिन् स्थित्वा मित्रेहिते मित्रस्य व्रजराजस्य ईहितं गमनव्यापारो यत्र तस्मिन् पथि कदा आगमिष्यति इत्युत्कण्ठया निहितेक्षणेन वृषभानुना प्रथमं कृष्णो ददृशे इति योजना । त्रिशिखायां कीदृश्याम् । रणतो ध्वनतः किङ्किणीजालस्य माला वर्तते यस्यास्तस्यां । श्रेणिबद्धेषु पूर्णकलसेषु लसन्ति शोभमानानि नवकिशलयानि च । सवृन्तानि वृन्तसहितानि । मङ्गल नृणन्ति उपयुञ्जन्तीति । नृ नये ग्र्यादिः । मङ्गलनारीणि यानि नारिकेलफलानि तानि च तैः फलन्ती उपकारणशोभया निष्पद्यमाना अमन्दा दीपशिखा च यस्यां तस्याम् ॥ ६८ ॥

अध्वनि तद्वान्तरवर्त्मनि । कीदृशे । उभयतः पार्श्वद्वये । अभयतः व्रजपतेस्तत्र तथासम्मतिप्रार्थनमन्तरेणापि सौहार्दबलाद्भयाभावतः इत्यर्थः । रोपितैः सफलपूगतरुपूगैः फलवद्गुवाकवृक्षसमूहैः । तरुणरम्भाणां स्तम्भैश्च अस्तं गमितः अस्तं प्रापितो भास्करस्य किरणसमूहो यत्र तस्मिन् । शाखानिबिडतया सूर्यातपप्रवेशाभावादित्यर्थः । पूगस्तु क्रमुके वृन्दे इति मेदनी । अस्तमिति मान्ताव्ययम् ॥ ६९ ॥

ध्वनितानां मृदुमृदङ्गपणवादीनां पणवादि स्तुतिवादयुक्तं यद्वादित्रं तेन चित्रे । श्रीकृष्णस्यागमनशोभार्थं वृषभानुनैव प्रथममेव तद्वर्त्मनि प्रस्थापितं वाद्यं सत्संगीति ज्ञेयम् ॥ ७० ॥

क्षणेन क्षणमात्रेण भुवनानां मङ्गलस्य ये गणास्तेषाम् इनः श्रेष्ठः । अङ्गे गात्रे लस्यमानेन दीप्तिमता उरुणा चारुचामीकरवाससा भुवनं विद्युन्मयीकुर्वन्निव ॥ ७१ ॥

निवहीभूतनागरिमगरिमगाभीर्य्यगाभीर्य्यभिमतास्पदं पदं भुवि धारयन् । श्रीव्रजराजकिशोरस्तदनु सकलपरिवारवारपरिवारिता वारिताखिलखलीकारा व्रजराजमहिषी च । तदनु व्रजपुरपुरन्दरो दरोद्भूतभूतलसौभाग्यसार इव सपरिजनो जनोल्लासकारी च ददृशे ॥ ७२ ॥

दृष्ट्वा च सत्वरमभिव्रजता व्रजतारकेशं सुकेशं सुष्ठुकेशवमालिङ्ग्य तौ दम्पती पती घोषनिवासिनां सबहुमानमानमता स्वपुरं प्रवेशयांबभूवाते ॥ ७३ ॥

प्रवेश्य च तान् यथास्थानस्थानपि संपाद्य पाद्य प्रभृतिभिरभ्यर्च्य यथायोगं सकलक्रियोपरिचारकैः परिचारकैः स्त्रीपुंसजनैरादरेणादरेणाभिसंपादितैरभ्यङ्गोद्वर्त्तनस्नपनाद्युपकरणैः करणैकनिपुणः पुनः स यथाक्रमं स्नानादिकं निर्वाह्य रूपानुरूपानुसंपादितवराम्बराभरणगन्धानुलेपनप्रसाधनसाधनाविरामेऽविरामेण प्रमोदेन पाकभवनमध्यमध्यभिप्रवेशयामास व्रजपुरपरमेश्वरीम् ॥ ७४ ॥

यत्र परमेश्वरीव स्वयं स्वयन्त्रितरूपगुणमाधुरीधुरीणा पचतितरामतितरामवधानेन ॥ ७५ ॥

तया वन्दिताऽथ सा निजकुलश्रीयशोदा श्रीयशोदा स्नेहश्रद्धाबद्धा बहुतरतरलमना मनाग्विहस्य ॥ ७६ ॥

वत्से ! यद्यपि रमणीमणीचारिमणि चारिमणिकल्पेयं पाककला । तथापि कुसुमकोमलाङ्ग्यास्तवायमतिभारो भारोपायैव नितरामभूत् ॥ ७७ ॥

निवहीभूतस्य नागरिम्णो नागरत्वस्य गरिम्णा गुरुतया गाभीर्य्यं गभीरत्वं तत् गच्छन्ति आस्वाद्यत्वेन प्राप्नुवन्ति या आभीर्य्यः गोप्यस्तासामभिमतास्पदं वाञ्छनीयम् । परिवाराणां वारैः समूहैः परिवारिता परिवृतीकृता । खलीकारः पैशून्यं तन्मूलकत्वात् दोषा अखिला एव खलीकारास्ते वारिता यया स ॥ ७२ ॥

व्रजस्य तारकेशं चन्द्रम् आनमता सत्वरीत्या ईषन्नमता ॥ ७३ ॥

यथास्थानस्थान् स्त्रीपुरुषोचितस्थानेषु स्थितान् संपाद्य कृत्वा । स्त्रीपुंसजनैर्यथायोगं यथोचितम् । स्त्रीणाम् अभ्यङ्गादिभिः स्नानादिकं स्त्रीजनैः पुंसां तु पुरुषजनैर्निर्वाह्येत्यर्थः । अदरेण निःसंकोचेन । आदरेण प्रेममयेनेत्यर्थः । करणैकनिपुणः कार्यैकप्रवीणः स वृषभानुः । प्रसाधनसाधनम् अलङ्कारपरिधानम् ॥ ७४ ॥

स्वयं परमेश्वरीव साक्षान्महालक्ष्मीरिव इति लौकिकरीतिमनुसृत्योक्तम् । सिद्धान्तरीत्या तु तस्या अपि परमांशिन्या राधायास्तया सहोपमा अकिंचित्करैव ॥ ७५ ॥

तया राधया निजकुलस्य श्रियं यशश्च ददातीति सा । स्नेहः स्वनिष्ठः श्रद्धा तन्निष्ठा साभ्यां बद्धा अत एव बहुतरम् उल्लासाधिक्येन तरलं मनो यस्याः सा प्राह । ७६ ॥

रमणीनां चारिमणि चारुत्वे प्राशस्त्ये निमित्ते चारिणी संचरणशीला चासौ मणिकल्पा मण्डलरत्नतुल्या चेति सा इयं पाककला पचपचनशिल्पम् उत्तमाङ्गनानां पाककौशलमेव रत्नालङ्कार इत्यर्थः । तथापि कुसुमादपि कोमलम् अमलम् अङ्गं यस्यास्तस्यास्तवाऽयम् अतिभारः एतदीयः श्रमः सोढुमशक्य इत्यर्थः । तथापि भा शोभा तस्या आरोपाय उत्पादनाय ॥ ७७ ॥

तदवलोकयामि किं किं पाचितमस्तीति तया निगदिता दिताखिलपरिश्रमा त्रपाचितं पाचितं सकलमेव सा दर्शयामास ॥ ७८ ॥

दृष्ट्वा च व्रजेश्वरी सौरूप्यसौरभ्यसौलभ्यलभ्यमानपाकपरिपाकसाद्गुण्या गुण्यामोदकारिणी सा तरसा तरलितहृदयादयावती पचन्तीमेव तामालिङ्ग्य वत्से ! साधु ते धुतेक्षणाऽक्षणा सुपरिपाकपाककलेति नितरामभिननन्द ॥७९॥

श्यामाललितादिभिर्वन्दिताऽऽनन्दितानेन्दुरथ ता अपि परिरभ्य सौरभ्यसौकुमार्य्यवतीस्ता एवाह ॥ ८० ॥

*अयि श्यामे ! अयि ललिते ! अयि विशाखे ! साधु वः परस्परपरमसौहृदा*नुबन्धो बन्धोर्मानसहारी मानसहा रीतिरियमुत्तमानामिति ताः सर्वा अभिनन्द्य समीपस्थां राधादिभिः सकलाभिः सकलाभिरभिवन्दितां रोहिणीमभाषत॥८१॥

*अयि बलभद्रजननि ! भद्रजननिवहपूज्येयमासां परस्परप्रीतिः । अपि च इयं* हि राधा मेदुरा मेऽदुरासदा मनसः ॥ ८२ ॥

तदियं संभाव्यते । नन्दनलतेव भूमौ चन्दनलतिकेव रूपमलयस्य ।
वृषभानोरिव सुकृतं खनिरूप्येवं गुणमणीन्द्राणाम् ॥ ८३ ॥

सा प्रत्युवाच । श्रीकृष्णमातः ! माऽतः परमस्याः संभावनीयमस्ति । किंच ।
नन्दनो व्रजपतेर्गुणसिन्धुर्नन्दिनी च सुमुखी वृषभानोः ।
तोषहेतुरयि घोषपुरश्रीकण्ठभूषणमिदं मणियुग्मम् ॥ ८४ ॥

तत्रपे तत्र पेशलाङ्गी राधा ॥ ८५ ॥

किंपाचितमिति त्वन्मात्रा प्रयोजककर्त्र्या त्वया तु प्रयोज्यकर्त्र्या इत्यर्थः । त्रपया लज्जया आचितं संगृहीतम् । यद्वा । त्रपाणाम् अचितं समूहो यत्र तद्यथाभवत्येवम् इति क्रियाविशेषणम् । आचितः संगृहीतेऽपि वृन्देऽपि स्यात्रिलिङ्गक इति मेदनी ॥ ७८ ॥

सौरूप्यसौरभ्ययोः सौलभ्येन सुलभत्वेन लभ्यमानम् अनुभूयमानं पाकस्य परिपाके साद्गुण्यं सद्गुणता यया सा।गुणिनं गुणवन्तम् आमोदमानन्दं कर्तुं शीलं यस्याः सा साधु यथास्यात्तथा धुतः खण्डितः ईक्षणयोरक्षणोऽनुत्सवो यया सा । शोभनः परिपाको यस्यां सा पाककला७९ आनन्दितः आननेन्दुर्यस्याः सा सौरभ्येतिसौरभ्य सौकुमार्य्ये आलिङ्गनेनैवानुभवन्ती सतीत्यर्थः८०

मानसहा मानं संमानं सहते इति मानसहा । सकलाभिः कलासहिताभिः ॥८१ ॥

मेदुरा स्निग्धा मे मम मनसो न दुरासदा मनसि स्वयं स्फुरतीत्यर्थः । शेषे षष्ठी ॥ ८२ ॥

नन्दनलतेति मनसोऽभिलासपूर्त्या रूपमलयसंबन्धिनी चन्दनलतिकेवेति नयनघ्राणत्वचामपि । वृषभानोः सुकृतमिति स्वकुलयशःकैरवचन्द्रिकात्वेन । गुणमणीन्द्राणां खनिरिति त्रिजगद्विरलप्रतियोगिकात्वेन ॥ ८३ ॥

मा अस्ति नास्ति । व्रजपतेः नन्दनः कृष्णः । सुमुखी राधा । तोषहेतुर्बन्धूनां दृष्टृश्रोतृमात्राणां वा । श्री शोभा संपत्तिर्वा ॥ ८४ ॥ तत्रपे निजश्लाघायां लज्जतेस्म ॥ ८५ ॥

१ इत्यामोदविशेषणम् ।

श्यामादयश्च राधामुखमवलोक्य मनाग् मनसा मनसाहुः । अयि देवि ! तवेदं वचनमस्माकमभीष्टबोधन्यासि धन्यासि भो धन्यासि दृष्टिर्हि निःसंदेहमाप्या देहमाप्याययति निदाघोष्णम् ॥८६ ॥

यदिदं घोषपुरश्रीकण्ठभूषणमिदं मणियुग्ममित्येकाधिकरणकरणप्रतिपादकं वचोऽतिप्रकृष्टं प्रकृष्टमर्थं बोधयति घोषपुरश्रीकृष्णमौलिमणिमण्डनयुग्ममित्यनुक्तेरतिसुललितमेतत् ॥ ८७ ॥

अथकृष्णजननी जननीराजितचरणा वृषभानुगृहिणीं भानुगृहिणीं संज्ञामिव संज्ञामिव मूर्त्तिमतीं स्वकुलश्रीकीर्तिदां श्रीकीर्तिदां समाहूयालिङ्ग्य चाह ॥ ८८ ॥

अयि ! कथमियं त्वमियन्तमतिखेदं प्रापिता । यः खलु प्रौढगृहिणीजनोचितो नोचितो हि नवमालतिकायाः कायापकर्षः कृशानुतापेन कृशाऽनुतापेन नासि ८९

साह साहसिका मैवैतन्मे व्रजेश्वरि ! सत्यमेव व्याहरसि रसिकेयं पाककर्मणि । स्वभावत एव विशेषतोऽशेषपोषमदोयमद्य तनो महो महोदारः सदारः ससुतो यत्र भोक्ता घोषाधीशो धीशोभावतीयं स्वयमेव सादराऽदरानन्देन प्रवर्त्तिताऽऽस्ते पाककर्मणि ॥ ९० ॥

किंच—यथा तथेयं पचतु स्वभावः कश्चिद्गुणोऽस्याः करपल्लवेऽस्ति ।
[illegible] ति पाके ॥ ९१ ॥

रा[illegible] किमप्यभीष्टार्थसूचकं वस्तु किमिव मनसा आस्वादयति नवेत्येतत्परीक्षार्थम् । ततश्च मनागिवहस्येति तन्मुखस्य तदा सलज्जत्वेऽप्यन्त सकौतुकत्वं दुर्लक्ष्यमपि सहसैवालक्ष्य धिया तदास्वादमेवानुभवन्तीं तामनुमाय तत एव स्वेषामपि जातस्योल्लासस्य ज्ञापनाय मनसामनसेति वीप्सा प्रतिस्वमित्यर्थः । देवि ! हे श्रीरोहिणि ! तव वचनं श्लोकरूपं कीदृशम् अस्माकम् अभीष्टं बोधमनुभवं न्यस्यति समर्पयतीति तत् । आप्या जलमयी । प्राप्तुं योग्या । निःसन्देहमित्याप्याययतीति क्रियाविशेषणम् । यमकानुरोधात् व्यवहितान्वयः सोढव्यः । देहं कीदृशम् निदाघे उष्णं तप्तम् ॥८६॥

एकस्मिन्नेवाधिकरणे करणं व्यापारसामान्यं प्रतिपादयति ज्ञापयतीति तत् । एकस्मिन्नेव कण्ठे मणियुग्मस्य गुणबद्धतया स्थितिदीप्तिमिलनादिव्यापारदर्शनात् । तदुपमेययो राधाकृष्णयोरप्येकत्रैव प्रेमगुणबद्धयोर्मिलनविलासादिमङ्गलरूपम् अतिप्रकृष्टम् अर्थं बोधयति । भवन्मुखनिःसृते वचसि भक्त्या अपरामृष्टोऽप्ययमर्थोऽस्मानाश्वासयितुं देवोदीरित इवाविर्भूत इति भावः । न च श्लोकपूर्त्तेरन्यथा शक्यत्वादुक्तमिदमिति वाच्यमित्याह घोषेति ८७

मूर्त्तिमती संज्ञां चेतनामिव । संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचनेत्यमरः ॥ ८८ ॥

इयं राधा त्वं प्रसिद्धम् इयन्तमेतावन्तं खेदं प्रापिता । यः खेदः । कृशानुतापेन वह्निज्वालया । अतस्त्वम् अनुतापेन कृशा नासि न भवसीति सप्रणयोक्तेः प्रश्नः ॥ ८९ ॥

साह भानुगृहिणी आह महो महोत्सवः : अदरानन्देन अनल्पहर्षेण ॥ ९० ॥

स्वेदं कं देनुनाधिकरणतिरस्कं हेतुहेतुमतोरभेदोपचारः । स्वभावादेवोत्पन्नो गुण इत्यर्थः यद्वा । स्वशोभारक्षकः । यतः येन करपल्लवेन पाके पाककर्मणि सौरस्यादिगत्या पाकं परितम् उत्कर्षम् उपैति । सुपारिमत्यामित्युत्तरपदस्य चेत्युत्तरपदवृद्धिः ॥९१॥

तेनास्या जनकेन केनचित्कौतुकेन निर्बन्धः कृतः । किंतु प्रणयरसवत्यन्तरे रसवत्यन्तरेण भूयते तत्र भूयानेव पाको जातः । को जातः पुरुषोऽत्र नारी वा नात्मानमद्य कृतार्थं न मन्यते ॥ ९२ ॥

किंतु तत्रभवत्या भवत्या स्वयमभिभाविकया भूयतां यथायथोल्लासमञ्जसा समञ्जसानि सकलानि सौष्ठवानि भवन्तीति तद्वचनोपरमे परमेश्वरी व्रजस्य सस्मितं समूचे ॥ ९३ ॥

अयि ! यथावत् सादरं वत्साऽदरं यत् पपाच तत्सकलं सकलं रोहिणी परिवेषयतु इत्यर्द्धोक्ते सा पुनराह ॥ ९४ ॥

घोषेश्वरि ! पुण्डरीककुवलयसुकुमाराभ्यां कुमाराभ्यां रामकृष्णाभ्यां सह घोषराजाय जायया च तस्य सह शुभवत्या भवत्या सकलगुणरोहिण्यै रोहिण्यै च वत्सैवेयं परिवेषयतु ॥ ९५ ॥

श्रीकृष्णसहचरनिकरेभ्यः करेऽभ्यस्तलाघवाऽस्तलाघवा श्यामा ललिता वा ललितावाल्यसख्या परिवेषयित्री ॥ ९६ ॥

एतदाकर्ण्य तदा कर्ण्यमप्यवहित्थयाऽथ यापयन्ती मन्दमधुरस्मितं स्नपिताधरकिशलयसलयसमुदीर्णं किमपि वचस्तदात्मजाऽऽत्मजाड्यमभिनयन्ती नयं तीव्रमिव सौहृद्यस्य हृद्यऽस्यन्ती नीचैर्मातरं निजगाद ॥ ९७ ॥

---

प्रणयरसवति ! हे प्रेमरससयुक्ते ! व्रजेश्वरि ! अन्तरे बहिः प्रकोष्ठे । रसवत्यन्तरेण अपरया रसवत्या भूयते । अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च इत्यमरः ॥९२॥ अभिभाविकया सर्वाधिष्ठात्र्या परमेश्वरी यशोदा ॥९३॥

यथावत् यथायुक्तं सादरं यथा स्यात्तथा वत्सा राधिका यत् पपाच तत्सकलं समस्तं सकलं सशिल्पं यथा स्यात्तथा अदरं निःशङ्कं च यथा स्यात्तथा रोहिणी परिवेषयतु । राधायास्तु अनभ्यस्ततत् शिल्पत्वात् अत एव तत्र जनिष्यमाणसंकोचत्वाच्च । सम्प्रति तन्नातीव उपयुज्यत इति भावः । अर्द्धोक्ते इति अन्यत्सर्वं श्यामाद्या इति शेषः स्थितः ॥९४॥

तस्य जायया भवत्या सह रोहिण्यै इत्यन्वयः । रोहिण्या गौरवमत्र वयोवृद्ध्या भोजने योजितम् । यदुक्तं गणोद्देशदीपिकायाम् रोहिणी वृहदम्बाऽस्येति ॥९५॥

करे पाणौ परिवेषणं प्रति अभ्यस्तं लाघवं यया सा ननु कृष्णसहचरा अपि कृष्णवदेवादरणीया भवन्तीति तत्राह । अस्तं लुप्तमेव लाघवं न्यूनत्वं यस्या सा श्यामा ललिता वापि राधासमैवेत्यर्थः । अतस्तया कृतेपि परिवेषणे न तेषामनादरः स्यादिति भावः । साम्ये हेतुः । ललितम् आबाल्यं बाल्यमभिव्याप्यैव सख्यत्वं यस्याः सा ॥ ९६ ॥

कर्ण्यं कर्णाभ्यां हितमप्येतदाकर्ण्य । अवहित्थया आकारगोपनेन । अथ अनन्तरं यापयन्ती एतदात्मनि न प्रवेशयन्ती न मानयन्तीति यावत् । अधरकिशलये सलयं यथा स्यात्तथा समुदीर्णम् अधरपल्लवसंश्लेषसहितमेव निःसृतं ननु वहिरतिप्रव्यक्तमित्यर्थः । लयो विनाशे संश्लेष इति मेदनी । तदात्मजा तस्याः पुत्री राधा आत्मनो जाड्यम् अभिनयन्ती सौहृदस्य सख्यस्य तीव्रं नयं नीतिं हृदि सख्या हृदये अस्यन्ती निक्षिपन्ती ॥ ९७ ॥

अहमिह निखिलसौभगवतीभ्यां भगवतीभ्यां व्रजेश्वरीभ्यामाभ्यामाभ्यामात्मना परिवेषयिष्ये ॥ ९८ ॥

श्यामैव नवरबहिरवहिता हितायात्मनः परिवेषयित्रीति ॥ ९९ ॥

परस्परसमानमानसभावभावबोधविबुधा श्यामाह मा हरिणनयने! नयनेयमेतत् ॥ १०० ॥

सैव परिवेषणे भवतु यत्ता यत्तातेन निमन्त्रिता अमी अमीवहरा हरादय इव १०१

अथ तमाश्रुत्य श्रुत्यतिरसदं कुतुककलहं कलहंसिकयोरिव तयोर्जातकौतुका तु कामपि प्रीतिमागता वात्सल्यसंपद्व्रजेश्वरी व्रजेश्वरी जगाद ॥ १०२ ॥

अयि शुभवत्यौ! भवत्यौ मा भैष्टामिष्टामिमां नीतिं वां ब्रवीमि । उभे एव युगपदिष्टयोपदिष्टयोत्तमया दिशा मयाऽऽदिशा शिक्षिते परिवेषयितुमर्हतम्१०३

इति बहिर्भूय भूयसिमणिप्रघणे प्रघणे अक्रमेण पातिताः सर्वतोभद्राः सर्वतोभद्राः पीठपङ्क्तयो विशदसमञ्जयाऽऽज्ञया क्रमेण तया पुनः पातयांबभूविरे ॥ १०४ ॥

आभ्यामात्मना आ ईषत् अभ्याम आतुरत्वं संकोचो यस्य तेनात्मना आभ्याम् अन्तर्गृहगव्ये एव परिवेषयिष्ये। आतुरोऽभ्यमितोऽभ्यान्त इत्यमरः। अन्येभ्यः बहिरुपविष्टेभ्यः परिवेषणे तु महानेव संकोचो मे भविष्यतीति भावः ॥ ९८ ॥

एवमात्मनो मृदुत्वमेवाभिव्यज्य श्यामायाः प्राखर्य्यं व्यञ्जयन्ती पुनः स्वं मध्यात्व एव पर्य्यवसाययति श्यामैवेति । नवर इति केवलार्थकमव्ययम् । बहिः अलिन्दमध्यासीनेभ्य इत्यर्थः । अवहिता सावधाना । हितायात्मन इति अन्यथा प्राखर्य्यख्यातेर्वैयर्थ्यापत्त्या सखीभिरेषा हसिष्यत एवेति नर्म व्यञ्जितम् ॥ ९९ ॥

परस्परमात्मनोः समानस्तुल्य एव मानसो भावस्तस्य भा शोभा तस्या अवबोधे तत् सिद्धर्थकवाक्चातुर्य्यज्ञाने विबुधा पण्डिता । नये नीतौ नेयम् उपादेयम्॥ १०० ॥

यत्ता यत्नवती यस्यास्तातेन अमी निमन्त्रिताः । अमीवहराः पापनाशिन इत्युपमानस्य विशेषणम् । हरादयो महेशादय इवेत्यनेन यत्तातेनेति प्राप्तवृषभानुपदस्य परम्परितरूपकाटङ्कारेण [illegible] [illegible] श्रेष्ठभानुनेव । वृषभानुना महेशादय इव नन्दादयोऽमी निमन्त्रिता इत्यर्थो [illegible] ॥ १०१ ॥ तयो राधाश्यामयोः ॥ १०२ ॥

मया उपदिष्टया इष्टया दिशा शिक्षिते सख्यौ युवाम् । मया कीदृश्या । आदिशतीति आदिक् तया ॥ १०३ ॥

मणिप्रघणे रत्ननिबिडे । प्रघणे अलिन्दे । सर्वतोभद्राः सर्वतो भद्रमुपवेशसुखं यासु ताः । सर्वतोभद्राः गम्भारीदारुमय्यः । तया व्रजेश्वर्य्या । कीदृश्या । विशदा निर्मला समञ्जा कीर्तिर्यस्यास्तया । आज्ञया निर्देशेन ॥ १०४ ॥

---

१ अम्बुरमृष्टादर्शेषु।

एवमास्तीर्णसितसूक्ष्मवसनेष्वासनेष्वाहितक्रममुपाविष्टस्य घोषेन्द्रस्य सान्द्रस्य साधुना स्नेहेन दक्षिणे स्फटिकेन्द्राभिरामो रामो वामतो वामतोन्मीलन्नीलमणीन्द्ररुचिरुचिरः कृष्णस्तस्य च सव्ये पीनावटुर्वटुःकुसुमासवः सबहुमानमुपवेशितो द्विजत्वेन ॥ १०५ ॥

तद्वामतो मतोत्तमक्रमबन्धोः सुबलादयः प्रियसहचरा इति क्रमेण ॥ १०६ ॥

कृतासनपरिग्रहेऽग्रहेताविव घोषसंपदां पदाम्बुजधावनपूर्वकमपूर्वकमनीयादरे व्रजपुरपुरन्दरेदरेहितहितस्मिते कुतूहलिनि हलिनि च । तदनुजे दनुजेन्द्रदमने च शुकसहचरे द्विजबालके बालकेलिनर्मसखे च । प्रणयवसुबलादौ सुबलादौ सखिगणे च ॥ १०७ ॥

व्रजराजभार्य्यया भार्य्यया समाहूयमाना माहूयमानपदाग्रकमलेव वार्षभानवी नवीनभक्तिश्रद्धाबद्धा बहुमानपुरस्सरं पुरस्सरञ्जनीयवात्सल्याय व्रजराजाय जायमानमुदे परिवेषयांचकार श्यामा तु रामाय ॥ १०८ ॥

तदनु तदनुजपरिवेषणसमये वार्षभानवी न विना भवतीं श्यामा परिवेषयितुमर्हति तत्र नेदीयांसं श्रीकृष्णं त्वमेव परिवेषयेति व्रजेश्वर्य्यैव गदिता दिताग्रहग्रहपरिभवा चिरानुरागपरभागपराभूतेन मनसा दरकरकम्पकं परमसभेन मसभेन मसंहृष्णवती परिवेशयांचकार ॥ १०९

---

साधुना स्वमर्य्यादेन स्नेहेन । सान्द्रस्य निविडस्य । वाममतो वामपार्श्वे । वामतया शोभनतया उन्मीलतः उद्भासमानात् नीलमणीन्द्रादपि रुच्या कान्त्या रुचिरः सुन्दरः । पीना पुष्टा अवटुर्घाटा यस्य सः ॥ १०५ ॥

सुबलादयश्च इति इति क्रमेण उपवेशिता इति विभक्तिविपरिणामेनानुषङ्गः ॥ १०६ ॥

ततश्च पदाम्बुजधावनपूर्वकं व्रजपुरपुरन्दरे कृतासनपरिग्रहे सति । कीदृशे । घोषसंपदाम् अग्रहेतौ मुख्यकारणभूते । स्वपरिकरशोभामालोक्य दरईषत् ईहितं चेष्टितं व्यापारो यत्र तच्च तत् हितं सर्वजनोल्लासकं च स्मितं यस्य तस्मिन् । प्रणय एव वसु धनं तदेव बलादि बलमायुर्यशश्च यस्य तस्मिन् ॥ १०७ ॥

भा शोभा तया आर्य्यया श्रेष्ठया । यद्वा । कान्तिस्वामिन्या । स्यादर्य्यः स्वामिवैश्ययोरित्यमरः । मा शोभा तया हूयमानं पूजार्थमिव दीयमानं पदाग्रे कमलं यस्याः सा । जुहोते दानमात्रार्थकत्वस्यापि धातुपाठेदृष्टत्वात् । पुरः प्रथमं सरञ्जनीयवात्सल्याय स्वविषयकरञ्जनीयवात्सल्यसहिताय । अत एव जायमाना मुत् प्रीतिर्यस्य तस्मै ॥ १०८ ॥

तदनुजः कृष्णः । नेदीयांसम् अतिनिकटवर्त्तिनम् व्रजेश्वर्य्यैव निगदितेति लज्जारीत्यनुमत्या स्वातन्त्र्यरूपो दोषो निरस्तः । आग्रह एव ग्रहो दुष्परिहरत्वात् तेन यः परिभवः लज्जादिध्वंसकचापल्याभिव्यक्तिः स दितः खण्डितो यस्याः । परभागः उत्कृष्टो भागः परिणतांश इत्यर्थः । दरेण साध्वसेन करकम्पकम् ईषत्करकम्पम् अल्पार्थे कः । प्रसभेन हठेन कीदृशेन । परमश्चासौ सभः सदीप्तिश्च तेन । बलदेवदक्षिणतः समुपविष्टेभ्यः श्रीदामसुभद्रमण्डली भद्रादिभ्यस्तुश्यामा क्रमेण परिवेषयांचकार इति ज्ञेयम् ॥ १०९ ॥

पुनर्व्रजेश्वर्य्यैवोक्ते उभे एव कुसुमासवादिसकलसहचरेभ्यो यदि परिवेषयां-चक्रतुः । तदा कुसुमासवः सबहुमात्मानं श्लाघयामास ।अहो ! वयमपि भूसुरवृ-षभा वृषभानुतनयाकरकुम्भेनाऽन्नेनानेन परिपूताऽस्मः ॥ ११० ॥

यदियं परमा रमादेवीव साक्षात् एतस्याऽऽदृश्यं काऽऽप क्व ॥ १११ ॥

पक्वमनयाऽश्नते भोजनान्तरं न रोचिष्यते रोचिष्य ! ते वयस्येति क्रमगत्या-सादितव्रार्षभानवीनवीनपरिवेषणे महसनमाधुरीधुरीणे वटावटाख्यमानतरङ्गे जल्प-ति सावहित्थं कृतकृतककोपः श्रीकृष्ण उवाच ॥ ११२ ॥

वाचल ! वाचाऽलमनया प्रहसनमात्रमात्रया मा विस्वन ॥ ११३ ॥

स आह । किं भोक्तव्यं मूकवदनेन वदनेन सहस्रेणैव वदनानां वदनानाश्र-नीयमिदं भोक्तुं व्याख्यातुं च किं शक्यते ॥ ११४ ॥

शुकोऽप्याऽऽशुकोप्याऽऽचञ्चदवटुर्वटुकृष्णयोर्मध्यवर्त्ती कृष्णदत्तं कृतामोदन-मोदनमश्नन् किं चिद्विवक्षुरिव यदुद्ग्रीव आसीत् । तदा व्रजेश्वर्य्याह । द्विजोत्तम ! कथय किं कथनीयमिति वटुराह । अद्य द्विजोत्तमोऽस्मि । साह । शुकं पृच्छामि ११५

---

भूसुरवृषभा विप्रश्रेष्ठा अपि ॥११०॥

ननु विप्राणामपि भवतां गोपकन्यापक्वेनानेन कुतः पावित्र्यं तत्राह । यदियमिति एतस्याः सादृश्यं का नारी क्व देशे काले वा आप प्राप ॥१११॥

अभिनयेन साक्षादेवानुभावयन्नाह । अनया पक्वम् अश्नते भुञ्जानाय ते तुभ्यं भोजना-न्तरम् । कृत्यल्युटो बहुलमिति कर्मणि ल्युटा भोज्यान्तरमित्यर्थः । भो इति संबोधने जना-न्तरं गोपीजनान्तरं न रोचिष्यते । किंतु राधैवेति तु कृष्णैकवेद्यो रहस्योऽर्थः । सतश्च तथा पक्वस्य तदन्नस्य कार्मणत्वमपि व्यञ्जितम् हे रोचिष्य ! रोचिषि स्वस्य प्रकाशे वर्त्तमान ! तत्र भवार्थे दिगादित्वात् यत् । त्वयाप्येतन्मयेव प्रकाश्य उच्यतामिति भावः । अत्र रोचिष्ये-त्यामन्त्रितपदस्य आमन्त्रितं पूर्वमविद्यमानवदित्यसद्वत्त्वेपि रोचिष्यते इति क्रियापदाद्युत्तरत्वं युष्म-दः परिकल्पते आदेशाः सर्वदा रक्ष देव न इतिवत् ॥११२॥

प्रहसनमात्रमेव मात्रं वित्तं यस्यास्तया वाचा मात्रा कर्णविभूषायां वित्ते मानेऽवधारण इति मेदिनी । मा विस्वन मा जल्पेति दन्त्यसकारोयम् वेश्च स्वनो भोजनार्थकस्यैव षत्वविधेः ११३

वदनानां मुखानां सहस्रेणैव यद्वदनं कथनं तेनापि न अश्ननीयं न ईषत् पूजयितुं शक्य मित्यर्थः ॥११४॥

शुकोपि किंचिद्विवक्षुरिव उद्ग्रीव आसीत् । कीदृशः । आशुकोपिनी शीघ्रकोपन्यञ्चिका आचञ्चन्ती ईषत्चञ्चला अवटुर्घाटा यस्यसः । अवटुर्घाटा कृकाटिकेत्यमरः ॥११५॥

शुक आह । अये द्विजकुमार ! मा रचय वचश्चातुरीं त्वमसि 'मत्तोपि 'मत्तोऽपिहितवदनो वदनो अपरम् । व्रजराजकुमारस्य माऽरस्य चेष्टितेन भूयताम् ११६

किञ्च । रमातोपि परमा किमुत योपमीयते तन्निराबाधोऽपराधोऽपराहतस्तव चाभूदित्याकलय्य व्रजराज ऊचे ॥ ११७ ॥

कुत्योऽयं महाविज्ञः पक्षी । व्रजेश्वरीपूर्ववृत्तं कथयति ॥ ११८ ॥

स पुनराह तत् कथमनेनास्मद्देव्याः समुत्कर्षेण मुत्कर्षेण भूयते ॥ ११९ ॥

साह । देवतया तया सहोपमानेन माऽनेन समुत्कर्षेण इत्यपराधाशङ्कया राधाशङ्कयापि ममतया मतया चिन्तयन्निदमुक्तवान् ॥ १२० ॥

अथ भवनान्तरेणान्तरेणालापं परिवेपयित्र्योस्तयोर्व्यावहासीहाऽऽसीद्यदि १२१

तदा मुख्या हसन्मुख्याऽऽह सन्मुखि ! श्यामे ! द्विजडिम्भयोर्वाचालतालतापाशेनेव बद्धाऽस्मि त्वमेव परिवेपयेत्याहृत्तिपरिवेपणाय यदि मुख्याऽभिहताशाऽऽसीत्तदा व्रजेश्वरी भवनान्तरं प्रविश्य स्वयमेव मुखीमभिमुखीचकार ॥ १२२ ॥

ततस्तथा पूर्वक्रमाक्रमानुसारेण परिवेपयन्त्यौ ते अवलोक्य व्रजेश्वर्याह मनसा १२३

द्विजशिशोरतिस्तवेन जातात्रपेयं व्युत्क्रमेण परिवेपयति समुचितेयमामुष्यपुत्रिका माऽमुष्य पुत्रिका त्वमसि । पुत्रि ! सत्यमाह वटू रत्नाकरपुत्रिकैवासि इ-

अपिहितवदनः अनर्गलमुखः । नो वद मा वद । त्वया अरस्यचेष्टितेन मा भूयताम् ११६

रमा लक्ष्मीः । अतोपि राधातोपि परमा श्रेष्ठा । देवतात्वादिति भावः । अत इयं राधा तया सह किमु कस्मादुपमीयते । तत्तस्मात्तव अपराधोऽभूत् निराबाधो दुर्वारः । यतोऽपराहतः न पराभूतः । अयमर्थो व्रजेश्वरी प्रभृतिभिरवगतस्तन्महिमसिद्धान्तानावेशात् । किं तु रमातो लक्ष्मीतोपि इयं राधा परमेति सिद्धान्तोपयोगित्वमत्यर्थः । तवचेति चकारात् पूर्वस्यां व्याख्यायाम् उपमेयत्वेनोपयोजिताया राधाया अपि उत्तरस्यां श्रोतुर्ममापीति ॥ ११७ ॥

कुत्यः किंदेशभवः ॥ ११८ ॥ सम्यगुत्कर्षेण हेतुना । मुत्कर्षेण आनन्दापगमवता ११९

अनेन उपमानेन मा समुत्कर्षः न आधिक्यं भवति अयोग्यत्वात् । राधाशङ्कयेति अरे ! मामकेनापि त्वया तदानीं किमिति प्रत्युत्तरं न दत्तमित्यायत्यां राधाकर्तृकोपालम्भशङ्कया १२०

भवनान्तरेण भवनमध्येन । अन्तरेणालापम् आलापं विनैव । तयोः राधाश्यामयोर्व्यावहासी परस्परं हास्यं ह स्पष्टम् अत्र भवनान्तरेण इत्यस्य अधिकरणत्वेपि यमकानुरोधात् करणत्वविवक्षया तृतीया । व्यावहासीक्रियां प्रति गुरुजनव्यवधानदायिनो भवनान्तरस्य साधकतमत्वात् १२१

सन्मुखि ! हे सुन्दरमुखि ! । द्विजडिम्भयोः कुसुमासवशुकयोः । मुख्या राधा । अभिमुख्ये अभिहता नष्टा आशा यस्याः सा ॥ १२२ ॥

पूर्वक्रमस्य अक्रमानुसारेण पूर्वपरिपाट्या भिन्नक्रममनुसृत्येत्यर्थः ॥ १२३ ॥

राधाया इयं समुचिता आमुष्यपुत्रिका अमुष्यपुत्रीत्वम् वृषभानुपुत्रीत्वमिति यावत्सदभिजाताया एव स्वश्लाघायां लज्जा भवति नतु सर्वस्या एवेति भावः । अमुष्यपुत्र्या भाव आमुष्यपुत्रिका । मनोज्ञादिः । आमुष्यायणामुष्य पुत्रिकेत्यादिना षष्ठ्या अलुक् । तद्गुणानां लोको-

ति सस्नेहमभिनन्दन्ती प्रकाशमाह । वत्से ! यथाक्रममेव परिवेषयतु शुभवती-भवतीति तदाज्ञया सा तथैव विदधे ॥ १२४ ॥

एवं सरसहासपरिहासपरितोषेण तत्पाकपरिपाकपरिनिष्ठितसौष्ठवानुमोदेन मोदेन भुञ्जानस्य व्रजराजस्य ते तेमनादिषु षडेव रसा वरसारतामासेदुः तथा रामादेः सकलसहचरगणस्यापि ॥ १२५ ॥

श्रीकृष्णस्य तु । समश्नतस्तस्य तयैव पाचितं तयैव देव्या परिवेपितं च तत् ।
परस्परान्तर्गतभावगन्धिना रसान्तरेणातिरसत्वमीयिवत् ॥ १२६ ॥

एवमेषामशनोपरमे परिमेण प्रमोदेन वराम्बराङ्गदकङ्कणादिभूषणमणिमालामालालेपनपननताम्बूलादिभिरर्चितानां स्वयमेव वृषभानुनाऽनुनीतानां भवति विश्रामे १२७

भवनमध्यमध्यवर्तिष्ठमाने गरिष्ठमाने गरिमगाम्भीर्यवत्यौ श्रीकृष्णरामजनन्यौ वार्षभानव्या नव्यामोदया दयावत्यौ परिवेष्यमाणमिष्यमाणमिष्टमिष्टं भुञ्जाने तरसा रसास्वादमुग्धे अन्योन्यमभाषेताम् ॥ १२८ ॥

साध्वसौ साध्वसौदास्येन वाचोयुक्तिपटुर्वदुराह । भोजनान्तरं न रोचिष्यते वयस्येति ॥१२९॥ ततो व्रजेश्वर्याह । तदपि दयितेहिते ! वार्षभानवि ! न विना भवत्पक्वमन्यपक्वमतः परं परं नामोदिष्यते मोदिष्यते च ममात्मजः ॥ १३० ॥

तदितः प्रागुरवो गुरवोहि ते हितेन वचसा मयाऽनुरोधयितव्या रोधयितव्या च तेषामननुमतिः यथा लाभवती भवती कृष्णार्थमेव मे वस्त्येऽवस्त्येयसौहृदा हृदा सरसेन पक्त्री भवित्री ॥ ॥ १३१ ॥

---

त्वरताम् अनुभूयाह । हे पुत्रि ! राधे ! अमुष्य वृषभानोः पुत्रिका त्वं माऽसि न भवसि । किन्तु रत्नाकरस्य पुत्रिका लक्ष्मीः सैवासि ॥१२४॥

तस्याः राधायाः पाकस्य पचनक्रियायाः परिपाके परिनिष्ठितं यत्सौष्ठवं तस्यानुमोदनेन । ते अनिर्वचनीयाः । तेमनादिषु व्यञ्जनादिषु । वरसारतां प्रशंसनीय सारभागत्वम् ॥२५॥ भावःशृङ्गारः । रसान्तरेण गाढानुरागेण १२६ माला स्रक् माला श्रेणी।लेपनं चन्दनादिप्रलेपः। पननं स्तुतिः १२७ इष्टमीप्सितम् । मिष्टम् इष्यमाणं तदानीमभिलष्यमाणं याचा प्रार्थ्यमानमिति वा १२८

साध्वसे भये यत् औदास्यं तेन निःशङ्कत्वमित्यर्थः ॥ १२९ ॥

दयितं प्रियम् ईहितं चेष्टितं यस्याः हे तथाभूते ! । दयिते वल्लभे श्रीकृष्ण एव ईहितम् ईहा अभिलाषो वा यस्या इति तु सरस्वतीप्रयुक्तोऽर्थः । परं रोचकत्वेनोत्कृष्टं न आमोदिष्यते न अनुमोदिष्यते । अरोचकमेव मंस्यते इत्यर्थः । ततश्च न मोदिष्यते न मुदं प्राप्स्यति ॥ १३०॥

तत् तस्मात् इतः अतः परं प्राक् प्रथममेव ते तव उरवः मुख्या गुरवः श्वशुरादयः हि निश्चितं हितेन वचसा सामोपायेन अनुरोधयितव्या वशीकर्तव्याः । ततश्च अननुमतिरनाज्ञा । यथा लाभवतीति प्रतिदिनं तुभ्यं वस्त्रालङ्कारादिप्रदानेन दानोपायश्च तेषु कार्य्य इति । कृष्णार्थमेव न त्वन्यदायत्यर्थमिति परिश्रमाभावश्च तन्मातरं प्रति सूचितः । मे मम वस्त्ये गृहे । अवस्त्येयं पुर्णाभिन्निगर्हं सौहृदं यस्याः सा ॥१३१ ॥

तदाकर्ण्य तज्जनन्याह । व्रजाधीश्वरि ! धीश्वरि ! मद्विधानां तवेयं भारती भारती एवास्याश्वरी करीति रीतिविदोऽत्र तुष्यन्त्येव । तेनाहरहरतिरंहसा तत्संपादयिष्यति । भवन्निशान्ते निशान्ते सत्येव यास्यति ॥ १३२ ॥

भवत्प्रसादतोव्रजलोको लोकोत्तरतया जरीजृम्भ्यते । न कालचक्रतोऽपि स्वङ्गति स्वं गतिरस्माकमिति ॥ १३३ ॥

तदवधि तदवधिपणागतागताभ्यां निरस्तसाध्वसा साध्वऽसावासत्तिमती बभूव ॥ १३४ ॥

एवं प्रकारान्तरेण हृत्कारान्तरेण हृच्चौरवन्निवध्यमानगोकुलचन्द्रा चन्द्रावल्यादिगोकुलकुललनावलिर्वलितदृढासत्तिसातिमितहृदया ॥ १३५ ॥

हृदयाधिनाथस्य तस्याङ्गसङ्गरसभाजनतासभाजनतारतम्येन तरतमायमानां कुसुमाहरणच्छलतोऽच्छलतोद्यानमासाद्य मासाद्यमानमानवपुषोऽवपुषो विशिखशिरा विद्धमानसा कोरकदशामपहाय हायनमध्य एव कुड्मलदशामापन्नमतिसंपन्नम-

हे मद्विधानामपि धियां बुद्धीनामीश्वरि ! तव इयं भारती वाणी कर्त्री अस्याः राधाया भा शोभा च रतिः प्रीतिश्च ते द्वे एव चरीकरीति अतिशयेन कुरुते अहरहः प्रत्यहम् अतिरंहसा अतिवेगेन तत् पचनकर्म । भवन्निशान्ते भवत्या गृहे । निशाया अन्ते सत्येव प्रातरेव १३२

न स्वङ्गति न कम्पते । स्वगि कम्पने इत्यस्य रूपम् ॥ १३३ ॥

तदवधि तदानीमारभ्य । तदवधिपणा तस्या मातुस्तेषां श्वश्र्वादिगुरुजनानां वा अवधिपणा संमतिस्तया गतागताभ्यां व्रजेश्वरीगृहगमनागमनाभ्यां साधु यथा स्यात्तथा असौ राधा आसत्तिमती कान्तसमीप प्राप्त्या तद्दर्शनादिलाभवतीत्यर्थः ॥ १३४ ॥

स्वपाणिकृतपाकान्नास्वादिने प्रेयसेऽन्वहम् स्वाधरामृतमाधुर्यादिरसास्यऽस्या न्यवर्द्धतअधो परिष्टाद्वर्णयिष्यमाणात् श्रीराधानवसंगमात् पूर्वमेव तन्माधुर्य्यस्य सर्वातिशयितानुभावनार्थं श्रीकृष्णस्य चन्द्रावल्यादिसङ्गोऽभूदित्याह एवमित्यादिना चन्द्रवल्यादिगोकुलकुललनावलिः कुसुमाहरणच्छलतोऽच्छलतोद्यानमासाद्य समन्ततस्तेन कान्तेन समं रज्यन्ती मनोरथं सफलयति स्मेत्यन्वयः । कीदृशी । हृदेव कारा बन्धनागारं तस्या अन्तरेण मध्येन । हृच्चौरवत् चित्तरत्नतस्कर इव नितरां वध्यमानो गोकुलचन्द्रो यया सा वलितया प्रबलया दृढया निश्चलया आसत्त्या कान्तसान्निध्येन सत् शोभनं यथा स्यात्तथा तिमितम् आर्द्रीभूतं हृदयं यस्याः सा १३५

पुनः कीदृशी । अभि सर्वतः सौरभस्य आमोदस्य रभसो वेगो यत्र तत् अनुरागकुसुमं कोरकदशाम् अपहाय त्यक्त्वा हायनमध्ये वर्षमध्य एव कुड्मलदशामापन्नं बिभ्राणा । कोरक कुड्मलयोर्विकाशविकाशोन्मुखत्वाभ्यां भेदः । कोरकदशामपि कीदृशीम् । तस्य कृष्णस्य अङ्गसङ्ग एव रसस्तस्य भाजनतायां पात्रत्वे सभाजनमुत्कर्षः तस्य तारतम्येन तरतमायमानाम् । कृष्णाङ्गसङ्गयोग्यत्वे कस्याश्चित् उत्कृष्टतरं कस्याश्चिदुत्कृष्टतमं प्रेमतारतम्यादित्यर्थः । अच्छा निर्मला लता यत्र तच्च उद्यानं च तत् मा यौवनसंपत्तिस्तया साद्यमानं प्राप्यमाणं मानवं मनुष्यमात्रं पुष्णातीति तस्य अवपुषः अनङ्गस्य । अभ्राणां मेघानां कान्तितोपि कान्तेन कम-

तिसंस्तवमनुरागकुसुममभिसौरभरभसं बिभ्राणाऽभ्राणामभिनवानां कान्तिकान्तेन कान्तेन तेन समं सपन्ततो रज्यन्त्यपि ॥ १३६ ॥

तस्मिन्नेव निखिलजनसुहृदि हृदि जागरूके निखिलव्रजजनप्रेमास्पदेऽपदेशराहित्येनैव प्रेम दधानैर्गुरुभिरप्यात्मसाधारण्येन निरुपहितहितरागभरागतनिष्कपायभावैरकृतदोषसंभावना वनाभिसरणेनापि नापिधीयमानचापला मनोरथं सफलयति स्म ॥ १३७ ॥

एवं तासां नित्यसिद्धानां लक्ष्मीतोऽपि श्रेयसीनां प्रेयसीनां प्रेमसांकोच्यसमूढामूढामतिं यैव योगमाया स्वमायास्वच्छन्दतया समपादि ह ॥ १३८ ॥

सैव माननागुरूणां गुरूणां पतिम्मन्यानामन्यानामन्या नारीस्तत्तत्प्रतिच्छायारूपाश्छायारूपाकृतितुल्यादच विभ्रतामविषयं चकार तासां कृष्णेन सह संगमम् ॥ १३

नीपेन तेन कान्तेन प्रसिद्धप्रेयसा । समं सह रज्यन्त्यपि अनुरागं कुर्वत्यपि ॥ १३६ ॥

गुरुभिः श्वश्र्वादिभिरपि न कृता दोषस्य संभावना यस्यां सा । अन्यजनैस्तु नैव कृतेत्यत्र किंचित्रमिति भावः । तत्र हेतुः । तस्मिन्नेव श्रीकृष्ण एव आत्मसाधारण्येन हेतुना निरुपहितः उपाधिशून्यः । स्वभावेनैवोदितः इति यावत् । हितः स्वानुकूलो यो रागभरः प्रेमातिशयस्तेनागतः निष्कपायो दोषानुसंधानशून्यो भावो येषां तैः । न ह्यात्मनि दोषदृष्टिः कस्यापि भवतीति भावः । तथात्वमपि तादृशानामेव संभवति न सर्वेषामित्याह । अपदेशराहित्येन निश्चलत्वेन निष्कैतवतयेति यावत् । नच व्रजवासिनां प्रेम्णि किंचिद्दौर्लभ्यमित्याह । निखिल इति नच तत्र यत्नलेशापेक्षापीत्याह । हृद्येव जागरूक इति । ततश्च वनाभिसारेणैनापि न अपिधीयमानं गुरुजनवारणातिशयाभावेन आच्छाद्यमानं चापलं यस्याः सा ॥ १३७ ॥

ननु तर्हि लौकिकरीति मेवानुसृतानां श्वश्र्वादिगुरुजनानां वनगतास्वपि स्वस्ववधूषु दोषानासङ्गे कीदृशभावनया समाधानं तत्राह एवमित्यादि । यैव योगमाया ऊढामतिं परैरूढाः परकीया एव वयमिति भावनां रसपुष्ट्यर्थं तासां समपात् इह गोकुले रक्षितवती सैव तासां कृष्णेन सह संगमं गुरूणामविषयं च चकार इत्यन्वयः । ऊढामतिं कीदृशीम् । प्रेमसांकोच्यसमूढाम् प्रेम्णि संकोचः प्राकट्येन करणे साध्वसं संकोचस्य कर्माणि संकोच्यानि दुर्लभत्वादिभावनया उत्कण्ठावृध्यादीनि तैः समूढां पूजिताम् ।एतदर्थमेव योगमायया तासां परकीयात्वकल्पनं नित्यप्रेयसीनामपि सर्वदातनमेव । तथाचोक्तम् यत्रनिषेधविशेषः सुदुर्लभत्वं च यन्मृगाक्षीणाम् । तत्रैव नागराणां निर्भरमासज्जते हृदयमिति ॥ १३८ ॥

माननया वयमासां श्वश्र्वादय इत्यभिमानेन गुरूणां वृहतां गुरूणां श्वश्र्वादिगुरुसामान्यानाम् । पतिम्मन्यानां मानानामात्रेणैव पतित्ववताम् । कीदृशानाम् तत्तत् प्रतिच्छायारूपाः तासां तासां प्रतिबिम्बरूपा मायिक्योऽन्या नारीर्बिभ्रतां स्वस्वगृह एव धारयतां पुष्णतां वा छाया कान्तिः चकारात् कदाचित् कृष्णे किंचिदसूयया रसपुष्ट्यर्थं नच बिभ्रतामपि ।( अर्थात्तासामभिसृत्य विलासादिषु विलम्बादौ जाते सति योगमायया सर्वं समाधीयते कदाचिन्न समाधीयते च रसपोषायैव विदग्धमाधवादिषु तथादृष्टेः ) ॥ १३९ ॥

इति सामञ्जस्ये जाते सति ब्रजेशयोरप्यजेशयोरप्यभिवन्दनीयचरितस्य तस्य विततनयस्य तनयस्य कुसुमशरशरण्यतायशोरेऽपि कैशोरेऽपिहितवत्सलतालतावन्धेन तदिव कमनीयतायाः पौगं डमरत्वं पौगण्डमरत्वं च मुञ्चदिव जानतोर्न तोयजाक्षीभिस्ताभिः सह सहसा सङ्गोऽसङ्गोपनीयोपि संभावनाविषय एव बभूव ॥ १४०॥

अपितु । वस्तुमहिम्ना हि स्नायत एव तासु स्नुपासंवन्ध एव निःसंवन्ध एव निःसहः । किमहो ! महावेभैवं स्वभावशक्तेरिति स्थितिः ॥ १४१ ॥

इत्यानन्दवृन्दावने कैशोरलीलालताविस्तारे निमन्त्रणस्वीकारकौतुको नाम दशमः स्तवकः ॥ १० ॥

---

एवं तत्र तत्र योगमायैव सर्वसमाधानमित्युक्त्वा श्रीनन्दयशोदयोः श्रीकृष्णपित्रोरत्वन्यथैव समाधानं सुसिद्धमेवास्तीत्याह । अजेशयोर्ब्रह्मशिवयोः । कुसुमशरस्य कन्दर्पस्य । शरण्यतारूपं यशो राति गृह्णातीति तथाभूतेपि कैशोरे । अपिहितेन अनाच्छन्नेन प्रकटेनैव वत्सलतालतावन्धेन हेतुना । तदिव प्रागारम्य अनुभूयमानमिव । कमनीयतायाः पौगं पूगः समूहस्ततोपि समूहार्थेऽण्। पूगवृन्दमित्यर्थः । पूगः स्यात् क्रमुके वृन्दे इति मेदनी । तथा तत्कृतं डमरत्वं डाम्बर्य्यम् । तथा तयोर्द्वयोः कारणभूतं पौगण्डं वयश्च । एतत्त्रयम् । अरत्वं शीघ्रत्वं मुञ्चत् त्यजत् इव जानतोः । अस्मत्पुत्रस्य कृष्णस्य पौगण्डं वयस्तत्कृतकमनीयत्वादिकं च शीघ्रं नाऽपगच्छति किन्तु वहुदिनपर्य्यन्तं स्थास्यत्येवेति मनस्यनुभूय विचारयतोरित्यर्थः । एतदर्थमेव कृष्णस्य पौगण्डे वयस्येव कैशोराविर्भावः पित्रोः पौगण्डमात्रग्रहणाय प्रेयसीनां तु कैशोरमात्रग्रहणायेति । ततश्च ताभिः सह तनयस्य तस्य सङ्गः सहसाऽकस्मात्संगोपायितुमशक्योपि न संभावनाया विषय एव बभूवेत्यन्वयः ॥ १४० ॥

हि निश्चितं ब्रजेशयोस्तासु स्नुपासंवन्धो वधूबुद्धिर्वस्तुमहिम्नैव स्नायते स्वयमेव अभ्यस्यमानो भवतीत्यर्थः । स्ना अभ्यासे कर्मकर्त्तरि रूपम् निःसंवन्धः संवन्धशून्य एव । निः सहो दुर्वारः । स्थितिर्मर्य्यादा । स्थितिः स्त्रियामवस्थाने मर्य्यादायां च सीमनीति मेदनी । श्वद्रादीनां वधूनां च तत्पतीनां ब्रजेशयोः । माननारसपुष्ट्यर्थं सदैवास्त्युक्तलक्षणा ॥ १४१ ॥

इत्यानन्दवृन्दावनटीकायां सुखवर्त्तिन्यां दशमस्तवकसंगमनम् ॥ १० ॥

---

## एकादशः स्तवकः

एवं पुनरन्येद्युरन्ये द्युमणिप्रतीकाशयोस्तयोः सहोदरयोः सहोदरयोर्वनविनोदे सहसहचरयोर्निदाघसमयसमयमानभाण्डीरं भाण्डीरवटमासेदुषोर्निदाघसमयोचिता यर्हि विलासाः प्रादुरासन् ॥१॥

तर्हि तरणिकिरणनिकरकरालतया पथि पथि नखम्पचा धरणिधूलयो विहारमणिगिरिगुहाकुहरानिःसरन्निर्झरझराभिरेव निर्वाप्यन्ते ॥ २ ॥

वाप्यन्तेवासिभिस्तत्तरलतरलहरिकाकणभरभरमन्थरैरनेकपीतकपीतनकुसुममकरन्दतुन्दिलैर्निदाघदाहप्रभञ्जनैः प्रभञ्जनैरेव पीयन्ते घर्मसलिलानि ॥३॥

निविडतरविटपवितानपटलैर्विटपिभिरेव निर्वाप्यन्ते तरणिकिरणाः ॥४॥

तत इतश्च कुसुमितकुञ्जकुटीरद्वारि मलयजरसवारिपूरपूरितजलयन्त्राः सुरभिशीतलसलिलकलसलसत्परिसरा वसुधासुधायमानसुरसरसालप्रपाणकरसादि

ग्रीष्मप्रलम्बवधदावाग्निमोचनानि सायान्हयानसुखदोहघनोदितानि । श्रीराधिकारतशरन्नववेणुगीतान्येकादशे स्तवक एव हि वर्णितानि । अथ घनरसमयसमय एव योग्ये श्रीराधानवसंगमसुधारसाप्लवनं श्रीकृष्णस्य वक्तुं प्रथमं तदसङ्गसङ्गतस्यौत्कण्ठ्यस्येव तदातनसमयस्यापि संतापकत्वं युक्तमेवेति व्यञ्जयन् तमेव निदाघर्त्तुं तदुचिताश्च सरामस्य तस्य लीला वर्णयितुमारभते **एवमिति** । अन्येद्युरन्यस्मिन् दिवसे तयोः रामकृष्णयोः अन्ये विलासा यर्हि प्रादुरासन् तर्हि तरणिकिरणेत्यादिस्थैर्निर्वाप्यन्ते इत्यादिक्रियापदैः संबन्धः। द्युमणिप्रतीकाशयोः सूर्यतुल्ययोः! सहोदरयोर्भ्रात्रोः। सहोदरयोः। उत्पूर्वस्य ऋ गतावित्यस्य पचाद्यचि सहोद्गमवतोरित्यर्थः । यद्वा। सहसा बलेन अदरयोः अनल्पयोरिति भाविप्रलम्बवधार्थरामपराक्रमः सूचितः निदाघसमये सम्यक् अयमाना संगता भा कान्तिस्तस्या अण्डीरं प्रकृष्टपुंस्त्वयुक्तम् उपार्जक पुरुषायितामित्यर्थः। काण्डाण्डादीरन्नीरचावितीरच् अण्डीरः पुरुषे शक्त इति **विश्वः** ॥१॥

नखान् पचन्ति तापयन्ति नखम्पचा । मितनखे चेति खच् । निर्झरझरयोर्बहुत्वारपाभ्यां भेदः । कल्प्यः । वारिप्रवाहे निर्झरो झर **इत्यमरः**। स्त्रियां च झरेत्यपि झरीत्यपीति तट्टीकाकारः

वापीनाम् अन्तेवासिभिः शिष्यैः ताभ्योऽधीत्येव लब्धतदीयशैत्यविद्यैरित्यर्थः। छात्रान्तेवासिनौ शिष्यौ **इत्यमरः** । तदेव स्पष्टयति । तासां वापीनां तरलतरलहरिकाणाम् अतिचञ्चलोर्मीणां कणभरस्य कणातिशयस्य भरेण भारेण मन्थरैरिति शैत्यमान्द्ये व्यज्जिते। भरोऽतिशयभारयोरिति **मेदिनी**। अनेकेषां बहूनां पीतवर्णानां कपीतनकुसुमानां शिरीषपुष्पाणां मकरन्देन तुन्दिलैः पुष्टैरिति मान्द्यसौरभ्ये । शिरीषस्तु कपीतन **इत्यमरः**। निदाघदाहस्य प्रभञ्जनैः प्रशमकर्तृभिः । प्रभञ्जनैः पवनैः ॥३॥

वितानश्चांदोया इति ख्यातः ॥४॥ वसुधायां पृथिव्यां सुधायमानस्यामृततुल्यस्य सुरसर

१ घा भावकरणयो (८।४।१०) इति वैभाषिकं णत्वम् । वस्तुतस्तु प्रकर्षेण पीयते नत्त्वानमिति कर्मवाच्यतायाःसाधुत्वाण्णत्वाभाव एव ज्यायान् पानं देशइतिविषयराहित्याच्च ॥

प्रपाःप्रपालयन्तीभिर्वनदेवताभिरेव निरस्यन्ते पिपासावसादाः कृष्णसहचराणाम्॥५॥

नवविकचविचकिलमालिकाकलितकण्ठाभरणाः शिरीषकुसुममञ्जुलकर्णावतंसाः स्फुटकुटजस्रजासृष्टकचरचनाः सकला एव बल्लवकिशोरा एव वनतरुविटपिकुलतलच्छायामभ्यमभ्यास्य गिरिवरद्रोणिषु निर्झरजलप्रपातमेदुरतरयवसमास्वादतृप्ततया सुखसुप्तासु धेनुषु सहोदराभ्यां रामदामोदराभ्यां खेलामारेभिरे ।६।

केचन मधुरकलं गायन्ति केचन वादयन्ते केचन नृत्यन्ति कदाचन रामो नृत्यति कृष्णो मुरलीं वादयते गायति च कदाचन कृष्णो नृत्यति रामो गायति सहचराश्च एवं खेलत्सु बालकेषु कलमधुरं मधुरञ्जिवचाः कृष्णस्तानथ निजगाद ८

हंहो भ्रातरः विरमत भो ! नृत्यगीतवादित्रतः खेलान्तरमधुना कलयामः । तेप्यूचुरमी वयमुपसीदामो दामोदर ! किं तदिति स ऊचे भो भो ! द्विधाभवन्तो भवन्तो बलमानबलं बलंकेचनानुगच्छन्तु केचन मामिति निर्णीय बलबलमथ निजबलं निजबलं च जयपराजयपरणां स्कन्धारोहपूर्वकं निर्वाह्य वाह्यवाहकतापणपणनं हाटकपटेन कपटेन पराजित्य श्रीदामोदरेण श्रीदामोदरेण जगदुद्वहतापि स्कन्धेनोहे ॥ ८ ॥

नोहेन तस्य चरितमवगम्यते ॥ ९ ॥

अस्मिन्नेव काले कालेन ग्रस्तोऽग्रस्तोत्रः सकलदैत्यानामात्मसंगोपालो गोपालोचितवेषं विधाय स्वयमेव पराजित्य राजित्यमनःसंकर्षणं संकर्षणं कपटी पटीरधवलं

---

सालस्य स्वादुपक्वाम्रफलस्य प्रकृष्टपानकरस एव आदिर्येषां तेषां प्रपाः आदिशब्दात् सितोपलापानकरसश्च । प्रपा पानीयशालिकेत्यमरः ॥५॥

विकचविचिकिलानि प्रफुल्लपुष्पाणि यवसं तृणम् ॥ ६ ॥

कलमधुरमिति पौनरुक्त्यं नाशङ्क्यं॥धनुर्ज्यादिवदत्राधिक्यप्रतिपत्त्यर्थमिति मधुनोऽपि रञ्जिरञ्जकं वचो यस्य सः ॥ ७ ॥

बलस्य बलदेवस्य बलं तदनुगामिसैन्यत्वेन कल्पितं सखिवृन्दं निजस्य बलं च कीदृशं नितरां जवं वेगवत्त्वं लातीति तत् । जयपराजयपराणां क्रमेण वाह्यवाहकतारूपस्य पणस्य पणनं व्यवहारं निर्वाह्य निष्पाद्य स्कन्धारोहेति जयपक्षे केवलादारोहतेः पराजयपक्षे तु ण्यन्तात् घञ् रूपं ज्ञेयम् । ततश्चायं वाक्यार्थः । जयपराः स्कन्धमारोहन्तो वाह्याः स्युः पराजयपरैः । पराजयपरास्तुस्कन्धमारोहयमाणाः वाहकाः स्युरिति । हाटकपटेन पीताम्बरेण श्रीदामा ऊहे उह्यते स्म उदरेण जगद्ब्रह्माण्डम् उद्वहतापि स्कन्धेन ऊहे इति श्रीदाम्नो महिमातिशयो व्यञ्जितः ८

ननु जगदीश्वरस्य कथं विपर्ययचर्या तत्राह नोहेनेति नतर्केण किंतु प्रेमपरिपाटीविज्ञतयेत्यर्थः ९

काले समये कालेन मृत्युना ग्रस्तः अतिशैघ्र्यद्योतनाय भूतनिर्देश उपचारात् कोसौ । सकलदैत्यानामग्रिमे स्तोत्रं बलिष्ठत्वेन यस्य सः प्रलम्ब इत्यमे तन्नामनिरुक्तेः तथापि कृष्णभीत्या

---

* सुखेन सुप्त प्राणिन पूरयन्ति पयसा दोहनीपुञ्जम् ॥

स्कन्धे निधाय धावन् निधिमिव चोरश्चोरयन्नमर्य्यादी मर्य्यादीकृततरुतलमुल्लङ्घ्य मुल्लङ्घ्यमानमनास्तमपोवाह ॥ १० ॥

वाहकमर्य्यादातिक्रमविक्रमविस्मितः स्मितपूर्वं स च सचमत्कारं कपटमनुजमनुजमाजुहाव ॥ ११ ॥

भो दामोदर ! मोदरयेण मामयमामय उन्मादक इव मनो मनोरम ! रममाण ! हरति ॥ १२ ॥

तदितः परं किं करवामहे महेच्छ ! हे छविल ! विलम्बं मा कुरु कुरु समुचितमुपदेशम् इति तद्वचनोपरमे परमेण कौतुकेन भगवानवादीत् ॥ १३ ॥

किममतिभयामतिभयाक्रान्तोऽसि निजविक्रममाहर हर चाऽस्य जीवितमिति समुक्तोऽ समुक्तोपतोयदस्वरम् ॥ १४ ॥

स्वरंहसा गिरिवरपक्षभिदुरभिदुरसोदरादराघातघुष्टिमुद्गरेण मुण्डपिण्डखण्डखण्डीकरणचण्डेन यमसदनं प्रहीयमाणं हीयमानं जीवितेन तमथ मधुमथनाग्रजःसंपादयामास दयामास माऽण्वपि यदि ॥ १५ ॥

आत्मनः संगोपं संगोपनम् आछाति गृह्णातीति सः । तथापि कृष्णस्य महासत्त्वतामनुमाय तं त्यक्त्वा पराजयेन राममाक्रष्टुकामः कृष्णपक्षीयोऽभूदिति ज्ञेयम् पराजित्यस्वयमेव पराजितो भूत्वेत्यर्थः । राजितो दीप्तस्तस्य भावो राजित्यं दीप्तिः शोभा तया मनः संकर्षतीति तम् तदानीमत्यधिका रामस्य शोभाभूदितिभावः । पटीरपवलं चन्दनगौरं मुदामत्कार्य्यं सिद्धमिति हर्षेण लङ्घ्यमानं मनो यस्य सः । अपोवाह वहन्नपससार ॥१०॥

स च संकर्षणः कपटेनैव मनुजं जीवरूपम् इति नृगति विविच्य कवय इति वेदस्तुतौ नृपर्य्यायस्य जीववाचित्वेन व्याख्यानात् अनुजं श्रीकृष्णम् ॥११॥

मोदरयेण निजहर्षवेगेन मां हरति उन्मादक आमयो व्याधिर्मन इव इति व्यापादनार्थहरणे दृष्टान्तः हे रममाणेति । अधुनापि किं क्रीडयसीति भावः ॥१२॥

महेच्छ ! हे अमोघेच्छाशक्तिक ! कौतुकेनेति अंशकलयैव सर्वजगत्संहारकर्तुरप्यस्य भयं लीलावेशादिति ॥१३॥

इति समुक्तः सम्यगुक्तः मोचनं मुक् तया सह वर्त्तमानं समुक् न समुक् तोयं यस्य तस्य तोयदस्य मेघस्य स्वर इव स्वरो यत्र तद्यथा भवति तथा सजलजलदस्वरमित्यर्थः । १४ ।

अथ मधुमथनाग्रजः श्रीबलदेवस्तं जीवितेन हीयमानं त्यज्यमानम् अत एव यमसदनं प्रति प्रहीयमानं प्रस्थाप्यमानं संपादयामास चकार केन गिरिवरपक्षाणां भिदुरस्य भेदकस्य भिदुरस्य वज्रस्य सोदरश्चासौ अदरा अनल्पाघातघुष्टिराघातशब्दो यस्य तथाभूतो मुष्टिमुद्गरश्चेति तेन । अत्र गुरुमत्सरच्छिदुरयेति माघदर्शनात् । करीन्द्रदर्पच्छिदुरं मृगेन्द्रमिति पाणिनिकृतजाम्बवतीविजयदर्शनात् । संसारबन्धच्छिदुरान् द्विजातीन् इति व्योपदर्शनाच । भिदिच्छिदोः कर्मकर्त्तर्य्यभिधानमित्यस्य प्रायिकत्वव्याख्यानात् कर्त्तर्य्येव कुरच् प्रत्ययः । कुलिशं भिदुरं पविरित्यमरः । किंच अण्वपि अल्पमपि मा दयामास न दयते स्म ॥१५॥

तदा प्राणप्रयाणतः प्रागेव स तथात्मशरीरं मथयामास यथा तदंसावस्थानकुतूहली हली कर्पूरयवलोऽवलोक्यते स्म जनैर्धरणिमध्यमध्यवस्थितं चन्द्रमण्डलमण्डलग्नमिव जायमानम् ॥ १६ ॥

अथ तस्य निरुपमोपदेहो देहो निरर्गलगलगलायमान-गलच्छोणितशोणितस्सहजधूमधूमलो रक्तसन्ध्याघनसन्ध्याघनश्चरमाचल इवामूलमौलिमिलितकुसुमाशोकाशोकाकुलो विन्ध्य इव भूमौ निपपात ॥ १७ ॥

पपात च गगनतो नतोत्तमाङ्गानामुत्तमाङ्गानामुत्सवामोदेन स्तुतिवृन्दारकाणां वृन्दारकाणां करकुड्मलगलिता प्रसूनवृष्टिः ॥ १८ ॥

एकमुत्तालतालाङ्के तालाङ्केन निहते परममायावलावलम्बे प्रलम्बे प्रसिद्धासुरेशादिनुत्यभिरामो रामोऽसौनामान्तरं नामाऽन्तरंहःसङ्घसंहननकरं प्रलम्बघ्न इति तदङ्गीचकार ॥ १९ ॥

---

धरणिमध्यमधि धरणिमध्य एव अवस्थितं चन्द्रमण्डलं तदानीम् अण्डे ब्रह्माण्डकटाहस्योपरितनभित्तौ लग्नं तद्भागस्यैवाण्डत्वाभिव्यञ्जकलक्षणत्वदर्शनात्तत्रैवाण्डशब्दप्रयोगः ॥ १६ ॥

निरुपम उपदेहो वृद्धिर्यस्य सः । दिह उपचय इतिधातोः । निरर्गलं निरोधरहितं यथा भवत्येवं गलगलायमानं च यथा स्यादेवं गलता शोणितेन रुधिरेण शोणितः शोणीकृतः । स्वरूपतस्तु धूमवत् धूमलवर्णः । ततश्च रक्तवर्णस्य सन्ध्याकालघनस्य सन्धिना मिलनेन आघनः सम्यक् निबिडश्च रमाचलोऽस्तशैलः अस्य शिलामयत्वेन स्वरूपतो धूमलतया उच्चतया आगन्तुकेनारुणिम्ना च सत्यपि सारूप्ये क्वापि पतनाश्रवणात् अन्यथा उपमिमीते । आमूलेति आमूलमौलि मूलमारभ्य अग्रपर्य्यन्तं मिलितानि कुसुमानि येषां तथाभूता अशोका यत्र स चासौ आ सम्यक् शोकाकुलश्चेति सः । स्वगुरोरगस्त्यस्याज्ञानुरोधेन मेरुजयोद्यमभङ्गात् शोकस्ततः पातश्च पुराणप्रसिद्धः ॥ १७ ॥

नतोत्तमाङ्गानां भक्त्या नतशिरसाम् उत्सवामोदेन उत्सवानन्देन हेतुना उत्तमाङ्गानां कुङ्कुमादिलिप्तत्वेन सुन्दरगात्राणाम् स्तुतौ स्तुतिनिमित्ते वृन्दं समूहं इयूति प्राप्नुवन्तीति तेषां मिलितीभूय स्तोत्रपराणामित्यर्थः । यद्वा स्तुतिवृन्दस्य आरकानाम् अर्त्तेर्ज्ञानार्थत्वेन कर्त्तृ चिज्ञानामित्यर्थः । यद्वा स्तुतिविषये वृन्दारकाणां श्रेष्ठानाम् । वृन्दारकः सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिष्विति मेदनी ॥ १८ ॥

उत्ताल्ताम् औत्कण्ठ्यम् आलाति गृह्णातीति उत्तालस्तालोऽङ्कश्चिन्हं यस्य तस्मिन् प्रलम्बे तालाङ्केन रामेण निहते सति । उत्तालो हेमकुण्डे स्याद्भर्मे चोत्ताल उत्कटे इतिविश्वः । प्रलम्बघ्न इति नामान्तरं नाम प्राकाश्ये अङ्गीचकार । कीदृशम् । अन्तरंहः सङ्घस्य अन्तःकरणपापसमूहस्य संहननकरम् । अत्रांहसो वर्णदेशनादौ दृष्टेन ऊष्मत्वेन सङ्घस्य तु कवर्गचतुर्थत्वेन पुनः संहननेत्यस्योष्मत्वेनाप्यनुप्रासो नानुपपन्नः हकारघकारयोस्तुल्यस्थानत्वादेकत्वबुद्धेः । शीघ्रमंहो विघातं खलिवचनघोराङ्घ्रिरंहः सङ्घं निहन्तु व इत्यादिसूर्य्यशतकादिदर्शनात् १९

अथैवमखिलबालबान्धवैः सदामोदरेण दामोदरेण चाभिनन्दितोऽदितोल्लासो हासोहासोसूयमानमानसस्मयः खेलतोविरम्यरम्यचरितेन श्रीकृष्णेन सह सहचरैश्च निविडशोभाभाण्डीभाण्डीरमूलमासाद्य विशश्राम ॥ २० ॥

विश्राम्यत्सु श्रीराममदामोदरादिषु श्रीदामसुदामसुबलादिसकलगोपालबालकेषु च धेनवो नवोन्मिषितयवसमानयवसमानराहित्यसौहित्यसौरस्येन तदनुकूलयमुनाकूलनिकटकटनलालसतयाऽपिभीषिकाटविभीषिकाटवीं दैववशत आसेदुः ॥ २१ ॥

ततश्च धेनूनामनूनामदृष्टिमवगत्य साशङ्कमनसः कमनसहचराश्चराचरगुरुणाऽरुणाञ्जनयनेन तेन नतेन करुणामृतस्रोतसाऽस्रोतसातङ्काक्षाः समूचिरेऽचिरेणान्योन्यम् ॥ २२ ॥

भो भोः सवयसः! सव्यसः समृगस्य वनस्याऽस्य मध्ये केवलं के वलम् २३
न खलु भीतिर्नैचिकी नैचिकीनाम् ॥२४॥

अथासौ रामो विशश्राम सदा सततं मोदरेण आनन्ददायिना अभिनन्दितः साधुकृतं साधुकृतमिति सत्कृतः अदितोल्लासः अखण्डितोल्लासः हासो हर्षजन्यः स्वनिग्रः[१] ऊहा विस्मयजन्या अन्यदीया। ताभ्यां सोसूयमानः पुनः पुनः उद्भवन्मानसः स्मयो गर्वो यस्य सः। शोभाभाण्डमस्यास्तीति शोभाभाण्डी ॥ २० ॥

नवोन्मिषितैर्यवैः समानानां सदृशानां यवसानां तृणानां मानराहित्यसौहित्यसौरस्येन हेतुना मानस्य परिमाणस्य उपमाया वा राहित्यं रहितता यत्र तत्। अपरिमितं निरूपमं वा इत्यर्थः। तथाभूतं सौहित्यं तृप्तिर्यस्मात्तथाभूतेन सौरस्येन सुरसतया सौहित्यं तर्पणं तृप्तिरित्यमरः। तदनुकूलस्य तादृशतृणास्वादानुकूलस्य यमुनाकूलस्य निकटे कटनलालसतया गमनाभिलाषेण दैववशात् इषीकाटवीम् आसेदुः प्रापुः। कीदृशीं यथा भवति तथा अविभीषिका अभयप्रदानम् अर्थात् कृष्णेन तस्या आटः अटनं संचारस्तेन विभि विगतभयं यथा स्यात्तथा। यद्वा विभीषिकायां भयप्रदाने अटाः सहसोत्पतन्तो ये वयः पक्षिणस्तेभ्य एव भीर्यत्र न त्वन्यतस्तथा स्यात्तथा किंवा अटव्या एव विशेषणम् ॥२१॥

न ऊनाम् अनूनां संपूर्णामित्यर्थः। अदृष्टिमदर्शनम् कमना अभिरूपाश्च ते सहचराश्चेति ते कमनः कार्मुके कामेऽभिरूपेऽशोकपादपे इति मेदनी। तेन कृष्णेन सह करुणामृतस्रोतसा नतेन नम्रीकृतेन अस्रेण अश्रुणा उते[२] ग्रथिते सातङ्के सभये अक्षिणी येषां ते २२

सवयसः! हे वयस्याः! सव्यसः पक्षिगणिसहितस्य समृगस्य हरिणादिसहितस्य वनस्यास्य मध्ये केवलं के सुखे एव वलम् ॥२३॥

अत एव नैचिकीनां मुख्यगवीनां तासां नैचिकी अल्पापि भीतिर्न। विनयादित्वात् स्वार्थे ठक्[३]। अल्पे नीचैर्महत्युच्चैरित्यमरः ॥२४॥

---

१ इयं काशब्दो दीर्घोपि ह्रस्वमन्योपि। २ उते इति क्तान्तवेञो द्विवचनान्तम्।
३ तनोपिलोपः।

तत्कथमासां मा सांप्रतं काचिदपि दृश्यते । तदवकलयध्वं कलयध्वं सोपायन्न भवतीति च कृष्णभारत्या भारत्याऽलुलितया सर्व एव बालकान्तघासघासलक्ष्मानुसारेण खुरखुरप्रक्षुण्णाक्ष्मातल तलनेन तदनुसन्धानधुरन्धरा धरामातस्तरुस्तरुगुल्मवीरुन्निकरकरम्बितगहनगहनस्थलीषु विचिन्वन्तोऽन्वन्तोदित्वरशङ्काः। शं कातरा इव यदा न भेजुः ॥ २९ ॥

तदा त्वैषिकाटव्यं काटव्यं दवदवथुकृतं वीक्ष्य कृष्णनाथा अप्यनाथा अप्ययमासेदुष्य इवापसृतिसृतिमपश्यन्त्यः इयन्त्यश्चजीविताशां साश्रुमुख्योऽभिमुख्योऽभित एव कृष्णावलोकनमर्थमर्थयमाना मानापहारहता इव धेनवो यत्रावतिष्ठन्ते स्म ॥ २६ ॥

तदनुसन्धानमजानन्तोऽनन्तोद्भूतचिन्ताश्चिन्तामणिमिवाश्रितमनोरथसिद्धेरनुगतसङ्कल्पकल्पद्रुममिव स्वजनकामकामधेनुमिव तं पुनरासाद्य नरासाद्यदर्शनं न-

आसां मध्ये काचिदपि मा दृश्यते । तत् तस्मादवकलयध्वम् सर्वत्र विचारयत। कस्य सुखस्य लयः सल्लेषः तस्य ध्वंसो विश्लेषः सुखविगमो यावन्नभवतीत्यर्थः । लयो विनाशे संश्लेषे साम्ये तौर्य्यत्रिकस्यचेतिमेदिनी । कृष्णभारत्या चेति भो भो इत्यारभ्य सर्वेषां तत्कथमारभ्य कृष्णस्यैव भारतीति । कीदृश्या। भा शोभा तया सहिता रतिः प्रीतिस्तया अलुलितया अखण्डितया । बालानां नवानां कान्तानां कमनीयानां घासानां तृणानां घासलक्ष्म अदनचिन्हं तदनुसारेण खुरा एव खुरप्रा बाणास्तैः क्षुण्णस्य क्ष्मातलस्य तलनेन प्रतिष्ठया धरां पृथ्वीम् आतस्तरुर्व्याप्नुवन्ति स्म । स्तृञ् आच्छादने । गहनस्य वनस्य गहनस्थलीषु दुर्गस्थानेषु गहनं दुर्गकाननयोःपीतिमेदिनी । अनु अनन्तरम् अन्ते अन्वेषणसमाप्तौ उदित्वरशङ्काः जातभयाः सन्तः यदा शं सुखं न भेजुः॥२९॥

तदा यत्र धेनवोऽवतिष्ठन्ते तदनुसन्धानमवजानन्तः ते श्रीकृष्णं पुनरासाद्य दुःखिताः सन्तः सर्वे न काचिदपि दृष्टा धेनुरिति यदूचिरे तदैव स श्रीकृष्णस्ता धेनूः प्रत्येकं नामग्राह माजुहाव इत्यन्वयः । धेनवः कीदृश्यः । ईषिकाटव्यम् ईषिकाटवीभवं दवदवथुकृतं दावानलतापजनितं काटव्यं कटुत्वं वीक्ष्य कृष्णनाथा अपि अनाथा अप्ययं नाशम् आसेदुष्यः प्राप्तवत्य इव अपसृतिसृतिं पलायनमार्गम् अपश्यन्त्यः अत्र काटव्यमिति पदस्याश्लीलतादोष ईषिकाटव्यमिति यमकोपयोगिपदद्वयासोढव्यः।एवं पूर्वत्रापि। किंचात्र वर्णनीयत्वेन ईषिकाटवीचरितस्यैव प्रस्तुतत्वात् अश्लीलमयस्यापि तत्पदस्य तु सर्वथैवोपलङ्घयितुमशक्यत्वात् प्रत्युत यमकभङ्ग्या समाधानमेव ततश्च जीविते आशामपि इयन्त्यः अल्पयन्त्य अभिमुख्यः यूथशएव शोकानुमोदनार्थं समानमुख्य इत्यर्थः । ततश्च मानापहारो बुद्धिनाशः तेन हता इव मान इति मन ज्ञाने धञन्तः ॥२६॥

न विद्यते अन्तो नाशो यस्य तथाभूतं यथास्यात्तथा उद्भूता चिन्ता येषां ते । चिन्तामण्यादीनां सकामिष्वभीष्टप्रदत्वेऽपि निष्कामेषु सौन्दर्य्यच्छायापयःप्रदायित्वमिव कृष्णस्य तेषु

* मायायां सद वस श्रुव इतिं कस्यन्तान्डीपि जम् ।

राकृतिपरं परंब्रह्म दुःखिताः सन्तो न काचिदपि दृष्टा धेनुरिति यद्गूचिरेऽचिरेण ॥ २७ ॥

तदैव दैवतकुलमुकुटमहामारकतो महामारकतो भयात्ता निविवर्त्तयिषुः स स्वयमुपसृत्य सृत्यनुसारेण घनघटगम्भीरस्वरं स्वरंहसा द्राघीयःप्लुतं कृत्वा सुधयेव नामग्राहं प्रत्येकमाजुहाव ॥ २८ ॥

यथा । मुक्ते ! नन्दिनि ! चन्दिनीन्दुतिलके ! कस्तूरि ! कर्पूरिके ! पिङ्गे! राङ्गिणि धूमले ! धवलिके ! किञ्जलिकिके ! रङ्गिणि ! । श्यामे ! केतकि ! चन्द्रिके ! शवलिके ! काश्मीरिके ! चम्पिके ! हीत्येहीति ततान तानमधुरं गानं मुरल्या हरिः ॥ २९ ॥

तमथ बिम्बाधरमधुमधुरं मुरलीकलमाकर्ण्य कर्ण्यममृतामिव चिरचिन्त्यमानकृष्णवर्त्मा कृष्णवर्त्मानुपाततो जीवनावनाशयाशयारूढविश्वासाऽऽश्वासादितमोदापि दवदवथुना पृथुनाऽऽपृता समुपसर्पितुमसमर्था समर्थामिव प्रत्युत्तरतरलतया गद्गदगदनगभीरभीरस्वरां हम्वाहम्वावाचं वाचं वाचं वाचंयमानां दशमिनां च मनोवचोऽगोचरं गोचरं गोकुलवासिनान्तं प्रीणयामास गोवृन्दारिकाविततिः ॥ ३० ॥

स्वभाविकसौन्दर्य्यादिवर्पित्वम् नैररपि आसाद्यं प्राप्यं दर्शनं यस्येति चिन्तामण्यादितोऽपि कृपालुत्वगुणेनोत्कर्षः । ऊचिरे सख्यरीत्या वार्त्तां ज्ञापयामासुरित्यर्थः । न तु चिन्तामण्यादिषु इव प्रस्तुतधेनुप्राप्तिं प्रार्थयामासुरिति भावः ॥२८॥

ता धेनूः भयान्निर्वर्त्तयितुमिच्छुः । कीदृशात् । महामारकतः महामृत्युकरात्सृत्यनुसारेण वर्त्मानुसृत्या । द्राघीयःप्लुतम् अत्युच्चं कृत्वा सुधया अमृतेन आप्लुतं व्याप्तमिव कृत्वा—नामग्राहं नाम गृहीत्वा । नाम्न्यादिशिग्रहोरितिणमुल् ॥२८॥

मुक्त इत्यादिवर्णाकृतिगन्धादिसाम्येन संज्ञा। रङ्गिणीति अर्थभेदात्संज्ञाभेदः एकत्र मुरल्यादिनादश्रवणाद्रङ्ग आनन्दस्तद्युक्ता परत्र सुन्दरवर्णयुक्तेति ॥२९॥

गोवृन्दारिकाविततिः श्रेष्ठगोसमूहः तं मुरलीकलमाकर्ण्य प्रत्युत्तरतरलतया समर्थामिव हम्वाहम्वा वाचं जात्यनुरूपतादृशस्वस्ववाक्य वाचं वाचम् उक्त्वा उक्त्वा तं श्रीकृष्णं प्रीणयामास । कीदृशी चिरं चिन्त्यमानं कृष्णस्य वर्त्म यया सा कृष्णवर्त्मा वह्निस्तस्यानुपाततस्तत्कर्तृकानुगमात् जीवनस्य अवनं रक्षणं तस्याशया आशये अन्तःकरणे आरूढो विश्वासो यस्याः सा।आशु शीघ्रम् आसादितः प्राप्तो मोदो यया तथाभूतापि समुपसर्पितुमसमर्था । कुतः । पृथुना दवदवथुना दवतापेन आपृता व्याप्ता हम्वा हम्वा वाचं कीदृशम् । गद्गदगदनेन गभीरां भियम् ईरयति स्वरो यस्यां ताम् । तं कीदृशम । वाचंयमिनां मौनव्रताम् किम् अज्ञतया नहि नहि दशमिनां ज्यायसां पुरातनत्वेन परमविज्ञानामित्यर्थः। वर्षीयान् दशमी ज्यायानित्यमरः।कुतः शमिनां शान्तिमतां मनसो वचसश्च अगोचरं न विषयम् ॥३०॥

---

१ वाचं यच्छन्तीति वाचंयमाः वाचि यमो व्रते इतिखच्वाचयमपुरन्दरौ चेतिनिपातान्मुम्

२ वृन्दारकः पुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिष्विति मेदिनीमानाद्दावन्तवृन्दारिकाशब्दने गोपदं समस्तन्तच्च वितत्या । श्रेष्ठगवीसङ्घ इत्यर्थः ।

समाकलितेऽथ तस्मिन् धेनुघोपे घोषेश्वरनन्दनो ननन्द नोनसंमदा मदाविलविलसदन्तरा दन्तरामणीयकझकझकायमानसितहसितहतान्धकारा इव हर्षोत्कर्षोत्कमनसो न सोसूच्यन्ते स्म कं वानन्दं कुतूहलिना हलिना सह सहराश्च ३१

अथ तेनैव ध्वानिनाऽध्वनिर्णायकेन कृष्णे चरणसंचरणसंजातत्वरे तत्वरे सर्व एव यदि ॥ ३२ ॥

तदैव दैववशादवशादशीर्णोत्साहा इव दावदावतापेनेपिकावनगता गतावना इव धेनूः सवलोऽवलोक्य ॥ ३३ ॥

हा! कष्टं कष्टङ्कितवानीदृशीं विपत्तिमासामासाद्यमानमृत्युपथानामिति संचिन्तयन् ॥ ३४ ॥

कातरतर-चकित-चकितरहित-हितविलोचनविलोचनप्रान्तेन स्रवदस्रवदनाभिस्ताभिरभितो नुद्यमानमानसाभिरवलोक्यमानो मानोज्झितकरुणोत्साहगाहमानमानसो द्विगुणिते दुःखेऽदुःखेपि चरन्त्यो दाहं यदि दवदवकीलाः कीलाल-

धेनूनां घोषे शब्देन ननन्द इत्यस्य वचनविपरिणामेन सहचराश्च ननन्दुरिति । कीदृशाः न ऊनः संपूर्ण एव संमदो हर्षो येषां ते । निषेधार्थकनकारेण समासः । अत एव मदाविलं मदव्याप्तं विलसत् अन्तरं मनो येषां ते । अत एव दन्तानां रामणीयकेन झकझकायमानं यत् सितहसितं तेन हतोऽन्धकारो वनगह्वरगतोपि यैस्ते कं वा आनन्दं न सोसूच्यन्ते स्म अतिशयेन नासूचयन् । अत्रानन्दमित्यनेन नोनसम्मदा इति ननन्दुरित्याभ्यां च अर्थपौनरुक्त्यम् आनन्दातिशयविवक्षया न दोषायेति ॥ ३१ ॥

तेनैव हम्बाहम्बामयेन ध्वनिना शब्देन अध्वनिर्णायकेन वर्त्मनिश्चायकेन चरणयोः संचरणस्य संजाता त्वरा यस्य तथाभूते कृष्णे सति सर्व एव प्रकरणात्सहचरगणस्तत्वरे त्वरां चकार यदि ॥ ३२ ॥

तदैव श्रीकृष्णः दावदावतापेन वनवह्निज्वालया गतावना गतरक्षका धेनूरवलोक्य तम् अनलं पिपासयिषुरनुचरानवादीदित्यन्वयः दवदावौ वनारण्यवह्नी इत्यमरः । धेनूः कीदृशीः । दैववशादवशादेन दुःखेन शीर्ण उत्साहो यासां ताः । शद्लृ शातने इत्यस्य घञ अवशादस्तालव्यमध्योपि दृष्टः । सबलः बलदेवसहितः ॥ ३३ ॥

टङ्कितवान् चिन्हितवान् टकि लक्षण इति धातोः ॥ ३४ ॥

कातरतरमतिकातरं चकितं त्रस्तं चकितरहितम् अत्रस्तम् । चक तृप्ताविति धातोर्हितमनुकूलं विलोचनं दर्शनं यस्य तथाभूतस्य विलोचनस्य नेत्रस्य प्रान्तेन ताभिरवलोक्यमानः । प्रान्तेनेति अन्यभागानाम् अश्रुदावधूमादिभिर्व्याकुलत्वादितिभावः । नुद्यमानं कृष्णसन्निधौ प्रेर्यमाणं मानसमेव याभिस्ताभिः । ततश्च मानोज्झितं परिमाणातीतं करुणोत्साहं कृपाविस्तारं गाहमानम् अवगाहमानं मानसं मनो यस्य सः । ततश्च दुःखे द्विगुणिते सति खेऽपि आकाशेपि चरन्त्यः उत्पतन्त्यः दवदवकीलाः वनाग्निज्वालाः यदि दाहम् अदुः ददौ तयः । कीदृश्यः

दकीलालैरपि शमयितुमशक्यास्तदा पूर्ववदपूर्ववदनविम्बस्तत्कालोपनतया स्वभावैश्वर्य्यशक्त्या तमनलं न लङ्घनीयमपि पिपासयिपुरनुचरानवादीत् ॥ ३५ ॥

भो ! भो ! नयनानि पिदध्वं मोदध्वं मोचयध्वं च मोहं चेति तथा नयनानि पिदधानेषु दधानेषु च विस्मयं लम्बालकेषु बालकेषु कोमलकमलकलिकाकारेण करतलेन गण्डूषीकृत्य विशारदे शारदेन्दुवदने सुधासुधारावन्तमिवानलं पिपासति सति व्रजराजतनये नयेन तस्यैवैश्वर्य्यशक्त्या प्रकटीभूय स्वयमेवासौ पपेऽपपेशलता न कुत्रापि तस्याः ॥ ३६ ॥

अन्यो हि घनरसदो रसदोहेनैव सदा वत ! दावतनूनपान्तमन्तं नयति ॥ ३७ ॥

एष हि घनरसदो नरसदोत्थभवदवदवथुं करुणोत्कटाक्षः कटाक्षमात्रेणैव यो हरति । तस्य किमिदं चित्रं यदिमं क्षुद्रदवं दवं सकलसौभगवत्या भगवत्या निजशक्तिदेव्या शमयांचक्रे ॥ ३८ ॥

शमयांचक्रे च तस्य निजगोकुलगोकुलमिति ॥ ३९ ॥

नापीदं चित्रं यदखण्डे महसि महासिद्धिकारिणि वकारिणिवहुलप्रभावे प्रभावे-

कीलालदास्तेषामपि कीलालैर्जलैर्निर्वापयितुमशक्या । न लङ्घनीयं दुर्वार्य्यमपि ऐश्वर्य्य शक्त्या प्रयोज्यकर्त्र्या पिपासयिषुः पानं कारयितुमिच्छुः । अत्र कुवलययुवतीनां लेहयन्नक्षिभृङ्गैः कुवलयदललक्ष्मीलक्ष्मिमाः स्वाङ्गभास इत्यादिदानकेलिकौमुद्यादिदर्शनात् । पानलेहनभक्षणानां तुल्यपर्य्यायत्वभावाच्च गतिबुद्धिप्रत्यवसनार्थेत्यादिना पिबत्यादीनां प्रयोज्यकर्त्तुः न नित्यकर्मत्वमिच्छन्तीति ॥ ३५ ॥

सुधासुधारावन्तमिति तत्पाणिपतनसमये अनलस्यापि सुधासंबन्धिशोभनधारायुक्तत्वम् अश्लीलतादोषनिवृत्त्यर्थं युक्तमेव । प्रकटीभूय पृथक् प्रचण्डमूर्त्तिं धृत्वा असौ अनलः पपे पीतः । अपपेशलता अदक्षता । दक्षे तु चतुरपेशलेत्यमरः । अत्रानलस्यामृतत्वे सति तत्पानेऽनौचित्याभावेऽपि अनुरागार्द्रचित्तभक्तानां तद्दुःसहदुःखदमेवेति न साक्षात् श्रीमुखाब्जेन पानमिति । अत एव । पीत्वा मुखेन ते कृच्छ्राद्योगाधीशो व्यमोचयादिति मूलपद्येपि मुखेनेत्यस्य उपायेनेत्ययमर्थो ज्ञेयः । मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपीति मेदिनी ॥ ३६ ॥

अन्यो हि घनरसदः मेघः रसदोहेन जलपूरेण दावस्य वनस्यत तनूनपात् वन्हिस्तम् अन्तं नाशं नयति । तनूनपात् इति शान्तम् । ज्वलनो जातवेदास्तनूनपादित्यमरः ॥ ३७ ॥

नराणां सदोत्थस्य सर्वदोद्भवतः भवदवस्य संसाराग्नेः दवथुं तापं हरति नाशयति । क्षुद्रो दव उपतापो यस्मात्तं दवं वनवन्हि शमयांचक्रे नाशयमास ॥ ३८ ॥

ततश्च तस्य श्रीकृष्णस्य निजगोकुलस्य स्वव्रजस्य गोकुलं गोसमूहः शं कल्याणम् अयांचक्रे प्राप । अय गतौ । दयायासश्चेत्याम् ॥ ३९ ॥

ऐश्वर्य्यशक्तिप्राकट्यमपि लोकदृष्ट्यैव लीलासौन्दर्य्यार्थमेव । तत्वदृष्ट्या तु तदपि शिष्टपोषविरोधि इत्याह नापीति इदमपि न चित्रं किं तत् यद्यस्मात् अखण्डे परिपूर्णमहसि तेजसीति परिपूर्णब्रह्मत्वं महासिद्धिकारिणि वकारिणीति तत्रापि सविशेषत्वेन मधुरलीलामयत्वम् बहुलप्रभाव

श्मनि खण्डमहो महो ! दवदहनापदेशमपदेशभावमिह विहतमित्यत्र न को विदः को विदः सारस्यमभिनयति ॥ ४० ॥

अतो यैः कृतं नमोऽघारये न मोघा रयेण कालस्य तेषां जनिर्भवतीति। ४१।

तदा खः सदा सदान्दोलदानन्दनन्ददात्मनामभितोऽभितः प्रणामाञ्जलयो-ञ्जलयोनियोनिप्रभृतीनां नन्दनकुसुमाञ्जलिभिरलिभिरवलम्ब्यमानैर्दिवः कज्जला-स्रुजलाप्लुतिपटलैरिव निपतन्ति स्म ॥ ४२ ॥

तदैव दैवतद्वन्द्वनन्दनमनुमोदयता मोदयता च तेनैव सगोपगोपरः शतवर्गं सु स्वच्छायाच्छायातशैत्यगुणे भाण्डीरतरुतलेऽलक्षितमात्मयोगेन संगमय्यमय्यतो वयस्या विकिरत संप्रति प्रतिपन्नार्था दृष्टीरिति निगदिता दिताक्षिमुद्रामुद्रामणीयकेनाहो! किमयमस्माकमुन्मादः स्वप्नो वा । क गतो दवानलो न लोक्यते लवणमप्यस्य किमपि क वा साऽटवी गावो वयमपि भाण्डीरमूल एव स्मेत्यतिविस्मितास्ते विदधिरे ॥ ४३ ॥

---

इति तथाप्यनाच्छादितमेव भगवत्त्वं व्यञ्जितम् तदेवं प्रमाणांवैष्णवमते उक्तानां नक्षत्रादीनां तेजसामपिवेश्मनि अधिकरणरूपे तस्मिन् अहो ! आश्चर्य्यं दवदहनच्छलं खण्डं महः ! प्राकृत मेव तेजः विहतं नष्टम् तत्कीदृशम् अपदे स्वाश्रयभिन्ने एव विषये ईशभाव ऐश्वर्य्यं यस्य न तु साक्षात्तस्मिन्नेव इति सामान्यतेजः कणस्याऽन्यदाहकस्यापि महाग्निपुञ्जे लयदर्शनात् ।-यच्च-न्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मानकमिति प्राकृततत्तेजसामप्याश्रयत्वमुक्तमेव । इति हेतोः अत्र श्रीकृष्णे कः कोविदः कपण्डित विदो वृद्धैः सारस्यं सरसतां न अभिनयति अपितु सर्व एव ॥ ४० ॥

अतो अघारये श्रीकृष्णाय यैर्नमस्कारमात्रं कृतं तेषां कालस्य रयेण वेगेन मोघा व्यर्था ज-निर्जन्म न भवति किन्तु भगवदिच्छयैव भक्त्युपयोगिसार्थकं जन्मैव भवतीत्यर्थः ॥ ४१ ॥

प्रासङ्गिकं समाप्य प्रस्तुतमाह । स्वः सदा देवानां सदैव आन्दोलता समुल्लसता आनन्देन नन्दन्तः समृद्धिमन्तः आत्मानो येषां तेषां नन्दनकुसुमाञ्जलिभिः सह प्रणामाञ्जलयो निपतन्ति स्म श्रीकृष्णं प्रतीत्यर्थः । कीदृशैः । सौरभवशादलिभिःस्वलम्ब्यमानैरासज्यमानैरलिभिरपिकैरि-व दिवः स्वर्गात् कज्जलसहितानामानन्दाश्रुजलानाम् आप्लुतिः सम्यक् क्षरणं तस्य पटलैः समूहैरिव ॥ ४२ ॥

सगोपानां गोपहितानां गवां परश्शतं शतादधिकसंख्यं वर्गं समूहं मोदयता आनन्दयता । परश्शताद्यास्ते येषां परा संख्या शताधिकादिस्यमरः । क सुच्छायम् अच्छं निर्मलं च आग-तशैत्यगुणं च तस्मिन् । अलक्षितं तासां करचरणादिव्यापारं विनैव संगमय्य प्रापय्य मुद्राम-णीयकेन आनन्दस्य विस्मयमयतया रमणीयत्वेन ॥४३॥

अथ सा नैचिकीविततिः प्रमदविलसत्कानना काननानले प्रशान्ते शान्तेन मनसा सम्मदमदसंपद्यमानास्तस्तिमितविलोचनैर्लोचनैः पिबन्तीव सुप्रणितप्रणयरसनाभिरपि रसनाभिरपि लिहन्तीव प्रमोदभरविकसनासिकाभिर्नासिकाभिजिघ्रन्तीव परमप्रेमास्पदं पदं गोपेन्द्रतनयं कृतनयं कृपामयमभितोऽभिसर्पति स्म ४४

तदनु करुणाकोमलेनामलेनारुणेन करतलेनाङ्गमभिपरामृशन्नैकैकमेव वलति प्रणयसौरभे सौरभेयीरभिप्रीणयामास ॥४५॥

अथ निदाघधामनि धामनिवहो निखिलजनतापदो जनतापदोघ इव य आसीत् । तमवहार्य्ये हार्य्यनुष्णभावं गते भावंगतेरितदर्शनीयत्वे खचरमचरमगिरिकन्दरादरावरोहरोहदाकाङ्क्षे सति ॥४६॥

शीतलीभूतभूतले प्रवलदाहज्वरसंज्वरसंत्यागसुस्पर्शे जनशरीर इव विगतमहोष्मणि ॥ ४७ ॥

विमलकमलेषु कमलेषु कमलाकराणाम् ॥ ४८ ॥

---

प्रमदेन विलसत् कं शिरं आननं च यस्याः सा । सम्मदमदेन आनन्दमत्ततया संपद्यमानैरस्रैस्तिमितमार्द्रीभूतं विलोचनं दृष्टिर्येषां तैः । सुष्ठु प्रणीतः प्रणयरसस्य नाभिर्मखो यया साऽपि । नाभिर्मखे नृपे चक्रमध्यक्षत्रिययोः पुमानिति मेदिनी । प्रमोदभराणां विकसनस्य प्रकाशस्य आसिका स्थितिर्यासु ताभिः ॥४४॥

एकैकमङ्गमभिमृशन् मृजन् वलति प्रबले प्रणयसौरभे प्रेमविकाशे ॥४५॥

निदाघधामनि सूर्ये खे चरतीति खचरी मा शोभा यस्य स चासौ चरमगिरिश्चेति तस्य कन्दरायां दरावरोहे ईषदुत्तरणे रोहन्ती उद्भवन्ती आकाङ्क्षा यस्य तथाभूते सति । उल्लसितेन मनसा श्रीकमलनयनो यदि विपिनतो बहिराजगाम तदा भ्रमरावलिः कियद्दूरमनुवव्राजेत्यन्वयः । निदाघधामनि कीदृशे । धामनिवहो घर्मसमूहो निखिलजनानां तापप्रदो जनताया जनसमूहस्य आपदोघः विपद्वेग इव य आसीत् मध्यान्हादावभवत् । तम् अवहार्य्य त्यक्त्वा । हारि शोभनम् अनुष्णत्वं गते अत एव भा दीप्ति स्तीव्रतेज इति यावत् । तस्या अङ्गता गमनम् । गत्यर्थाद्वगेः कर्त्तरिः पचाद्यजन्ताद्भावप्रत्यये रूपम् । तया ईरितं दर्शनीयत्वं दर्शनार्हत्वं यस्य तस्मिन् ॥४६॥

अशीतलं शीतलं संपन्नमिति शीतलीभूतं तस्मिन् भूतले विगतमहोष्मणि सति । कारिमित्र । प्रबलदाहज्वरस्य संज्वरः संतापस्तस्य सम्यक् त्यागे सति सुस्पर्शे सुखस्पर्शे जनशरीरे इव ॥ ४७ ॥

कमलाकराणां सरसां कमलेषु जलेषु विमलकमलेषु निर्मलपद्मेषु सत्सु । अतितीव्रसूर्य्यतेजोभिः पद्मानामपि दलम्लानतारूपस्य जातस्य मलस्याऽपगमात् । सलिलं कमलं जलम् । सहस्रपत्रं कमलमिति चामरः ॥ ४८ ॥

कमलाकराणां सततावगाहसरसैर्हंस-रसैकनिपुणशिरीष-निबिरीष विच्योतन्मकरन्दधुर्वहैर्गन्धवहैर्गन्धसमधितपुष्पन्धयैरभितः सेव्यमाने दिवसावसाने ।४९।

कलितकलमुरलीध्वनिरध्वनिरतधीर्गृष्टीर्गृहाभिमुखीः कारयिष्यन् सहवलोऽवलोकयनिदाघदिवसपरिणामरामणीकतां सह सहचरैः सलीलसलिलावगाहदुरवगाहसुश्रीकः श्रीकमलनयनो नयनोत्सवीभविष्यन् व्रजभुवाम् ॥ ५० ॥

अनुकूलेनानुकूलेनामलजलाशयानां पवमानेन पवमानेन तदङ्गसङ्गतः पुरःपुरः सारितैर्गोखुररेणुभिरणुभिरभिमृश्यमानां शुकान्त कान्तकुन्तल-चूर्णकुन्तल चूर्णधवलोर्णापो वनतरुवीरुधामनिशनववयसां वयसां तदवलोकमृगाणां मृगाणां च भवद्विरहदुःखन दुःख-नामितहृदां काकुकलकलकुलाकुलायमानमानसस्तदाश्वासनादेन नादेन मुरल्याः सरसयन्नपूनऽमूढमनसो मनसोल्लसितेन यदि विपिनतो बहिराजगाम ॥ ५१ ॥

ततश्च दिवसावसाने गन्धवहैः पवनैः सेव्यमाने सति । कथंभूतैः सद्भिः । कमलाकराणां सरसां सततावगाहेन सरसैरिति शैत्यमुक्तम् अत्र कमलाकराणां कमलाकराणामित्यन्वयभेदान्न पौनरुक्त्यम् अतः कथंचिल्लाटानुप्रास एव न तु यमकमेकार्थादेव । हंसरसो हास्यरसः प्रफुल्लता तदेकनिपुणानां शिरीषाणां निबिरीषं निबिडं यथा स्यात्तथा च्योततां मकरन्दानां धुर्वहैर्भारवाहिभिरिति सौगन्ध्यं भारवहनश्रमादेव । गतिशैथिल्यासंभवान्मान्द्यमपि गम्यमेव । पुष्पन्धया भ्रमराः ॥ ४९ ॥

गृष्टीर्धेनूः । सलीलं यथा स्यात्तथा सलिलावगाहनेन हेतुना दुरवगाह । सम्यग्ग्रहणाशक्या शोभना श्रीः शोभा यस्य सः व्रजभुवां व्रजवासिनाम् ॥ ५० ॥

गवां खुररेणुभिरणुभिरल्पमात्रैरेव अभिमृश्यमानानि स्पृश्यमानानि अंशुकान्तादीनि यस्य सः । [illegible] गोपच्युताः कमनीयकेशाः । चूर्णकु [illegible] पवमानेन वायुना पुरःपुरः अग्रे अग्रे सारितैः निःसारितैः दूरीकृतैः पृष्ठं प्रत्येव सम्पूर्णं नीतैरिति यावत् । पवमानेनापि कथंभूतेन । अनुकूलेनाभिमुखेन । निर्मलानां जलाशयानाम् अनुगतं कूलं येन तेन शीतलेनेत्यर्थः । तस्य श्रीकृष्णस्य अङ्गसङ्गतो हेतोः पवमानेन देशान्तरमपि स्वस्पर्शेन पवित्रीकुर्वतेत्यर्थः । यद्वा । पवः पवित्रीकरणं तत्र मानो यस्य तेन अनिशनववयसां नित्यनवयौवनानां वयसां पक्षिणाम् तस्य अवलोकं मृगयन्ति अन्वेषयन्तीति तेषाम् इगुपधत्वात् कः प्रत्ययः । सर्वेषामपि कीदृशानाम् भवतस्तदेव जायमानात् विरहात् हेतोर्यत् दुःखनं दुर्भिदं दुःखं तेन मितहृदां शीर्णमनसां तेषां काका शोकविकारेण कलकलः कोलाहलस्तस्य कुलेन समूहेन आकुलायमानं कृपाविह्वलं मानसं यस्य सः । ततस्तेषाम् आश्वासनम् ददातीति तेन मुरल्या नादेन अमून् सरसयन् आनन्दयन् ननु तिरश्चां मूढयोनीनां तेषां तद्विरहसंयोगजन्यदुःखसुखविवेकः कथं संभवेत् तत्राह अमूढमनसः वृन्दावनीयत्वादिति भावः ॥ ५१ ॥

१ गन्धसम्बधितेति वा पाठः ।

तदा विपिनपिनद्धनीलमणिमालामालाभ्रमरा भ्रमरावलिरानुकूल्यसमीरणेन समीरणेन धूयमानेव पुष्करे पुष्करेक्षणसौरभे रभसेनान्धेव कियद्दूरमनुवव्राज॥९२॥

अथ पुरः पुरः पदवी दवीयसीति द्रुततरं ततरंहसा चलति भवनविषयकुतूहलिनि हलिनि सहजममदमदमन्थरगामितया पदविहारलीलयाऽभिसरणमारभमाणो रभमाणो विविधसौभगाश्रयमुदारमाधुर्य्यो रमाधुर्य्यो मदकलकलभ इव व्रजराजकुमारः कुमारयन्नेव कियदन्तरितोऽन्तरितोऽनुरागं मिथसहचरैर्दृश्यमानः पुरवलभीवलभीहासानिःसंकोचं विलोकयामास ॥ ९३ ॥

तासु समारूढानां रूढानां प्रणय धुरया मधुरया मदिराक्षीणां वदनमण्डलैःपूर्णचन्द्रपरम्परापराचितेव समजनि गगनवीथी ॥ ९४ ॥

नयनैरपि नीलराजीवराजीवहुलेव दिक्सरसी ॥ ९५ ॥

वपुष्कलाभिः पुष्कलाभिर्विततडित्वत्तडित्वदिव नभोगण्डलम् ॥ ९६ ॥

मणिभूषण मरीचि-वीचि-वीथिभिरपि निरभ्राखण्डलाखण्डलालित्यधनूराजिराजितमिव व्योम ॥ ९७ ॥

---

विपिनेन पिनद्धा मण्डनत्वेन धृता नीलमणीनां मालाभिः समूहैर्या माला तस्या भ्रमं सैवेयमिति बुद्धिं राति ददातीति सा । आनुकूल्यस्य अनुकूलतायाः समीरणेन सम्यक्प्रेरकेण समीरणेन वायुना धूयमानेव खण्ड्यमानेव । नन्वेवं चेत् कथमत्याग्रहेण तमनु वव्राज तत्राह पुष्करेक्षणस्य श्रीकृष्णस्य सौरभे अङ्गगन्धे पुष्कले महति विषये रभसेन हर्षेण अन्धा इव ॥ ९२ ॥

पुरोऽग्रे । पुरः पदवी पुर्य्याः मार्गः । दवीयसी दूरतरा इति हेतोः द्रुततरं यथा स्यात्तथा ततरंहसा । विस्तृतवेगेन चलति कुतः भवनविषय एव कुतूहलयुक्ते हलिनि सति । विविधसौभगसंपत्तिं रभमाणो लभमानः । रलयोरैक्यात् । मदकलो मत्तः कलभः करिशावक इव रमाधुर्य्यः संपत्तिभारवान् । कुमारयन्नेव खेलन्नेव कियदन्तरितः कियन्मात्रं व्यवहितः सन् अनुरागं प्रेमाणम् अन्तरितः अन्तःकरणे प्राप्तः । इण् गतावित्यस्य निष्ठान्तस्य रूपम् । पुराणां वलभीश्चन्द्रशालिकाः चन्द्रशाला च वलभी स्यातां प्रासादमूर्द्धनीति श्रीधरः । वलाभिजाप्रजात् भियो ह्रासेन हेतुना निःसंकोचं यथा स्यात्तथा । एतदभिप्रेत्यैव तेन प्रथमत एव तत्सङ्गतो विच्युतमिति ॥ ९३ ॥

तासु वलभीषु । प्रणयधुरया प्रेमभारेणैव रूढानाम् प्रसिद्धानाम् । रूढं जातेऽप्रसिद्धे चेति मेदिनी । पूर्णचन्द्राणां परम्पराभिः पराचिता सर्वतो व्याप्ता ॥ ९४ ॥

राजीवराजी कमलश्रेणी ॥ ९५ ॥

वपुषां कलाभिरंशैरवयवैरित्यर्थः पुष्कलाभिः श्रेष्ठाभिर्विगतास्तडित्वान् मेघो यत्र तन्निर्मेघमित्यर्थः । तथापि तडित्वद्विद्युद्युक्तम् ॥ ९६ ॥

निरभ्राणि निर्मेघानि आखण्डलस्य इन्द्रस्य अखण्डलालित्यानि पूर्णमाधुर्य्याणि धनूंषितेषां राजिभिः श्रेणिभिः राजितं दीप्तम् ॥ ९७ ॥

भृतरङ्गेऽपि नभः स्मितकुसुमवीरुधाधामलिनामाभया मलिना माऽभयानामपि दिगबलानाम् ॥ ५८ ॥

किं बहुना लावण्यामृतरसवाहिन्यो वाहिन्योऽभवन् प्रणाल्यश्च ॥ ५९ ॥

एवं समुत्कण्ठासमुत्कण्ठास्ता अपि सुकण्ठ्यः कण्ठ्यमपि न कुर्वन्तियं तमनुरागरसंगरसंनिभमिव हृदि वहन्त्यो दिवसमतिवाह्य वाह्यवृत्तिरहिताः स्थिताः ॥६०॥

दिवसावसानमालोक्य कृष्णदिदृक्षयाऽक्षयाशाषाशापादितजीवनबन्धा नवंधाम मेघमेचकं मेचकं च कंचनोष्णीषपार्श्वे दधानस्य तस्यैव दूरादपि ददृशुः ॥६१॥

तदा नेत्राञ्जलिभिः पपुरिव पुरिवद्धदृशस्तस्य शस्तस्यन्दि तद्धाम दोर्भ्यां परिरेभिरेऽभित इव रसनाभिरिव लेलिह्यन्तेस्म ह्यन्तेस्म निष्पन्दा गगनभित्तिचित्रलेखालेखा इव बभूवुः ॥६२॥

ततश्च कज्जलमिव नयनयोरिन्दीवरमिव श्रवसोरिन्द्रनीलमणिहार इव वक्षसः कस्तूरिकानुलेपनमिव सर्वाङ्गस्य स तासामभवत् । अस्मिन्नेवसमये मिथनर्मसहचरः सह चरमपाकप्रणयः सपरिहाससहासकलया किञ्चिदवादीत् ॥६३॥

नभसि निःसूनं तासां स्मितम् एव कुसुमवीरुधा । हलन्ताद्वागुरिमते टाप् । तां रुन्धन्तीति तथा तेषाम् अलिनाम् आभयाकान्त्या दिगबलानां दिक्सुन्दरीणामपि मा शोभा मलिना समजनीति पूर्णेणव संबन्धः । अलिनां कीदृशानाम् अभयानां भ्रमणे निःसंकोचानाम् ५८ वाहिन्यो नद्यः ॥ ५९ ॥

तदानींतनस्य तासां तादृशभावस्य औचित्यमेव वक्तुं तत्पूर्वकालवर्तिनीं दुःखदशां तासामाह सम्यगुत्कण्ठतयैव समुत् आशामात्रहेतुकानन्दजवाष्परोधात्सहर्षः कण्ठो यासां ताः । तं प्रसिद्धमनुरागरसं गरसन्निभं विषतुल्यं हृदयेपि वहन्त्यः यं गरं कण्ठ्यं कण्ठार्हमपि न कुर्वन्ति सामान्यतो जना इत्यर्थः । केवलं रुद्र एवयोगेश्वरः कण्ठ्यं करोतीति भावः ॥ ६० ॥

तस्यैव कृष्णस्यैव नवं धाम स्वरूपं दूरादपि ददृशुः । कीदृशम् मेघादपि मेचकं श्यामलम् । तस्य कीदृशस्य कंचन अपूर्वं मेचकं चन्द्रकम् उष्णीषपार्श्वे दधानस्य उष्णीषस्य वामतो वक्रिम्णा मस्तकोर्द्ध एव पार्श्वे तिष्ठति तत्रैव चन्द्रकार्पणम् यद्वा उपरिभागेपि पार्श्वशब्देन कश्चिदुच्यत एव ॥६१॥

तद्धाम पपुरिव । तस्य कीदृशस्य । पुरि तत्तचन्द्रशालिकावति निवासे बद्धदृशः प्रविष्टदृष्टेः । धाम कीदृशम् । शस्तं यथा स्यात्तथा स्यन्दते स्रवतीति धाम्नोऽमृतत्वं व्यञ्जितम् । लेलिह्यन्ते स्म अतिशयेन लीढवत्यः । हि निश्चये अन्ते अवसाने तु निष्पन्दा जाड्यमात्रोदयात् । स्मेति स्वर्थे यमकपूरणार्थम् ॥६२॥

चरमपाकः परिणामो यस्यस चासौ प्रणयश्चेति । तथा तेन सह वर्त्तमाना या हासकला तया ॥ ६३ ॥

प्रियवयस्य! वयस्यऽधिकायमाने माऽनेन नयनेनाद्भुतं किमवलोकयते ॥६४॥
यदयं भवानंशुमाली वनपरिसरे पुरतोऽमूः प्रणयप्रसराजीविन्यो राजीविन्योव-
ऽभीस्थलगततया गगनमध्यस्था इव ॥ ६५ ॥

भवानखिलगुणनिधिः कलानिधिःकलामावहत्यवस्तात् पुरत इयं च कुमुद्वती मुद्व-
ती भवत्यूर्द्ध्वमिति महत्कौतुकं को तु कं नरञ्जयति जयति चेदं चमत्कारकार-
कं किमपि विविक्तेऽधिकृते किमाश्चर्य्यमिति च्छलेन गोकुलकुलललनामुख्यां
वार्षभानवीं परिचाययामास ॥ ६६ ॥

तदनु तासु तस्यां चाहितनयनो नयनोत्सवकरोऽवकरोज्झित-प्रणय कुसुम सु
महासौरभरभसरागपरभागभागन्तराणां तासामपि हृदयं सुहृदयं सुष्ठुनिजहृ
दयेन सदयेन सद्यो विनिमयन्निव निवहदनुरागसुधाप्रवाहया वाहयामास दिनकृ
तविच्छेदच्छेदकृदपाङ्गलक्ष्मीतरङ्गपरम्परया ॥ ६७ ॥

अथ । अग्रे धूलिभरो गवां खरखुरक्षुण्णैः क्षमायास्ततो।
हम्बेरैंगुचगभीरचारुनिनदैस्तासामथो मण्डलम् ॥
तस्यान्ते मुरलीरवैस्तदनु च मेह्लोलि नीलं महः ।
पश्चात्कृष्ण इति क्रमाद्व्रजपुरीपत्योरभूद्रोचरः ॥ ६८ ॥

अधिकायमाने वयसि सति । अनेन नयनेन किम् अद्भुतं मा अवलोकयते । अपि तु स
र्वमेवालोकयत इति ॥ ६४॥

अंशुमाली सूर्य्यः कान्ति समूहवांश्च वनस्य जलस्य काननस्य च परिसरे । प्रणयस्य प्र
समूहम् आसम्यग् जीवयितुं शीलं यासां ताः।पद्मा । तम् आजीवन्ति जीविकात्वेन तमेव अ
श्नन्तीति ताः । राजीविन्यः कमलिन्यः । सूर्य्यो जले पद्मानि गगने इत्याश्चर्य्यम् ॥६५॥

मुद्वती आनन्दविकाशवती । विविक्ते विधातृरचिते । अधिकृते अधिकारे किम् आश्चर्य्य
तत्कृतनियमवैपरीत्यदर्शनात् ॥६६॥

तासु सर्वासु गोपीषु तस्यां श्रीराधिकायां च आहितनयनोऽर्पितनेत्रः अयं श्रीकृष्णः ता
हृदयं निजहृदयेन सह सदयेन शोभनशुभावहविधिना विनिमयन्निव परिवर्त्तयितुमिव अः
शुभावहो विधिरित्यमरः । दिनकृतस्य विच्छेदस्य छेदकृतोऽपाङ्गलक्ष्म्यास्तरङ्गपरम्परया प्र
ताभिः कृतया सम्प्रति तासां हृदयं पश्चात्स्वेनापि कृतया ताः प्रति स्वस्यापि हृदयं युगपद
उभयतो धारया वाहयामास । तासामपीत्यपिशब्दाद्विनिमयन्निन्यतश्चापगाद्वैपरीत्य एवार्थ
कीदृश्या नितरां वहन्ननुरागसुधायाः प्रवाहो यस्यां तया तासां कीदृशीनाम् अवकरोज्झ
प्रणय इत्युपाधिरहितं सद्यं तदेव कुसुमं तस्य सुमहासौरभस्य रभसो वेगश्च रागपरभागोऽनुरा
परमोत्कर्षश्च तौ भजते अन्तरं यासां तासाम् यतोऽयं सुहृद्बन्धुः बन्धुत्वोचितमेव हृदयपरि
र्त्तनमिति भावः ॥६७॥

अथशब्दो रसान्तरवर्णनारम्भार्थः । क्षमायाः पृथिव्याः धूलिभरः । व्रजपुरीपत्योः नन्द
शोदयो. ॥ ६८ ॥

अपि च । धेनूर्लोमर्थं वत्सवत्सलतया जातत्वरामुद्धसा-
माहारस्य च गौरवाल्लघुतरामाविभ्रतीनां गतिम् ।
श्रीकृष्णस्य विलासवेणुनिनदैरामोदपूर्णदृशां ॥
हम्बेतिश्रुतिरम्यगद्गदगिरां श्रेणी व्रजं प्राविशत् ॥ ६९ ॥

एवं श्रीवनमालिनो गोपु गोपु च किरणमालिनोऽपि चरणसंचरणसंपादित-धरणिपवनासु निज निलयं गतासु ॥ ७० ॥

श्रीकृष्णेक्षणक्षणजनितकौतुकेन केनचिदथो कृष्णसहचर-जननी-जन नीराज्य-मानसङ्गा व्रजराजवनिता जवनितान्तसत्वरचरणविहारा गोऽवनवनविहारा गो-चरं गोचरीकृत्य कृत्यऽनभिज्ञेव तमात्मजमात्म जनवत्सलमालिङ्ग्य ललितगोपुरं पुरं प्रवेशयामास ॥ ७१ ॥

ततश्च सहैवागता वागऽतारल्येन मन्दमधुरं मधुरञ्जि गदन्तो दन्तोज्वल-किरणधौताधराः स्वस्वजननीजननीयमाना अपिबालका बालकान्तसाहचर्य्य-चर्य्ययाऽर्य्यया नितान्तसौहृदा हृदाऽतिसरसेन व्रजेश्वरीं श्रावयामासुः ७२ ॥

अम्ब! किं कथनीयमद्यतनमाश्चर्य्यमाश्चर्य्यतां केन तत् ॥ ७३ ॥

---

जातत्वरां लघुतरामिति गतेस्त्वराळाघवाभ्यां सममेव गतिं विभ्रतीनामित्यर्थः । हम्बेति श्रुतिरम्यां गद्गदागिरो यासां तासाम् ॥ ६९ ॥

किरणमालिनः सूर्य्यस्यापि गोपु रश्मिपु चरणानां खुररूपपदानां संचारेण संपादितं कृतं धरण्याः पवनं पावित्र्यं याभिस्तासु । पक्षे चरणं श्रौतस्मार्त्तधर्माचरणं तस्य संचारेण संपादितं धरणेर्धरणिस्थसर्वजनस्य पवनं पावित्र्यं याभिस्तासु । सूर्य्यकिरणोद्गमे सत्येव सर्वधर्मप्रवृत्तेः । निजनिलयं स्वस्वगृहम् । पक्षे । नितरां जनैरुद्भवस्य लयं नाशम् ॥ ७० ॥

श्रीकृष्णस्य ईक्षणं दर्शनमेव क्षण उत्सवस्तस्माज्जनितेन । कृष्णसहचराणां जननीजनैर्नीराज्यमानः सङ्गो यस्याः सा। जवेन वेगेन नितान्तसत्वरः अतिशयत्वरायुक्तश्चरणविहारः पादन्यासो यस्याः ताम् आत्मजं गवाम् अवने पालने यो वनविहारः वने क्रीडनं तेन हेतुना अगोचरं परोक्षीभूतं गोचरीकृत्य साक्षात्कृत्य आनन्दविह्वलतया कृत्यऽनभिज्ञेव ललितं गोपुरं सिंहद्वारं यस्य तत् ॥७१॥

वाचाम् अतारल्येन गाम्भीर्य्येणेत्यर्थः । मधुरञ्जि मधुतोपि रञ्जकं यथा भवत्येवम् वाञ्छा कोमला कान्ता कमनीया सहचरस्य भावः साहचर्य्यं सख्यं तस्य या चर्य्या आचरणं तया आर्य्यया श्रेष्ठया तादृशसख्यमात्राचरणेन हेतुनेत्यर्थः । नितान्तं सौहृदं सौहार्दं येषां ते हृदा मनसा ॥७२॥

आ केन तत् कर्म चर्य्यताम् आचर्य्यतां क्रियतामिति यावत् । आ इति दावानलपानादिकष्टमनुस्मृत्य पीडार्थे प्रयुक्तम् यद्वा ननु रामकृष्णयोर्यत्किञ्चिदपि कर्म नित्यमेव एवं बाल्यादेव आश्चर्य्यमाश्चर्य्यमिति यदपि तत्र आ इतिपदेन कोपमभिव्यञ्जयामासुरिति । आस्तु स्यात्कोपपीडयोरित्यमरः ॥७३॥

यदेष बलभद्रो भद्रोज्ज्वलविक्रमोऽक्रमोदखेलारमात्मसंगोपगोपतनयाकारम-सुरमसु-रहितं चकार ॥७४॥

एष च तव सुतो वसुतोऽसुतोऽपि सुतोषकरोऽस्माकं सकलारिष्टहन्ता हन्ताऽतिकरालं दावदावमखिलगोधननिधननियतं किमापपौ किमाप पौष्कल्यंवाक्सिद्धिरेवास्य यया नाशं-गतोऽसौ शं गतोऽसौच सौरभेयीगणः ॥७५॥

इति गतेषु तेषु निशान्तं निशान्तं मूर्तिमदिव सकलसुखानां समनन्तरमनन्तरभसं स्वतनयं मणिमङ्गलदीपेन नीराज्य राज्यमानवपुषं स्वमहसामहसाधुकिरिणि स्वसदने सदनेकलक्ष्मिणि वात्सल्यस्नुतपयोधरा पयोधराङ्कुरमिव करकमलेन करकमलमाधृत्यऽनवास्थिता प्रवेशयामास ॥ ७६ ॥

ततश्च सायंतनो यदि तनोरुन्मार्जनादिक्रियाकलापः कलापण्डितैर्बालपरिचारकैरकैतवप्रणयश्रद्धावद्धावदातहृदयैर्निर्वाहितः ॥ ७७ ॥

तदा कृताहारो हारोल्लसद्वक्षाः पटकपटकमनीयस्थिरतडिल्लेखः श्रीखण्डखण्डालेपव्यपदेशदेशकलातीतहिमानीमानीयमानपरभागः कौस्तुभमणिराजव्याजव्यासजमानद्युमणिमण्डलः ॥ ७८ ॥

---

न क्रमेण ऊढः खेलारसो येन तम् बाहकमर्य्यादातिक्रमात् । न चात्र शैशवचापल्यमेव हेतुर्मन्तव्यः यतः आत्मनः संगोपः सम्यक् गोपनं यस्मात्तथाभूतो गोपतनयस्याकार इव आकारो यस्य तम् असुरं दैत्यम् असुभिः प्राणैरहितं त्यक्तम् ॥७४॥

वसुतो धनैः असुतः प्राणैश्च सुष्ठुतोषं करोतीति सः । हन्त विस्मये अतिकरालं दावदावं वनाग्निं किम् आपपौ सम्यक् पीतवान् किंवा वाक्सिद्धिरेवास्य पौष्कल्यं पुष्टिम् आप प्राप्ता शं कल्याणम् ॥७५॥

तेषु निशान्तं गृहं गतेषु सत्सु स्वतनयं नीराज्य कीदृशम् सकलसुखानां मूर्तिमदिव निशान्तं सदनरूपम् । स्वमहसा स्वकान्त्या राज्यमानवपुषं दीप्यमानशरीरम् धृती धैर्ये अनवस्थिता निद्रारहिता स्नेहतरलेत्यर्थः ॥७६॥

ततश्च सायंतन उन्मार्जनादिक्रियाकलापो यदि बालपरिचारकैर्निर्वाहितः । तदाकृताहारादिः सन् बहिरेत्य सुखशयनेन गवांनिकुरम्बकेण रमणीयासु विशिखासु पदकमलगादधानः सायंदोहदोहदपरे सकलागोरे सति रेवतीरमणानुजः केनचनकौतुकेन यदि दोग्धुमारेभे तदा तत् आकर्ण्य गोकुलललनाततिर्नयनविभ्रमैर्दिग्म्बरविपिनमर्चाचकार नभ इत्यन्वयः । अकैतवः प्रणयश्च तद्रुदिता श्रद्धा च दासभावोचिता ताभ्यां बद्धम् अवदातं शुद्धं हृदयं येषां तैः॥७७॥

हारोल्लसद्वक्षा इति हाराणां नक्षत्रपङ्क्तित्वं बकपङ्क्तित्वं वा व्यञ्जनागम्यम् तस्य धाराधरत्वेनोपमीयमानत्वात् । श्रीगण्डखण्डालेपस्य व्यपदेशेन छलेन देशकालातीता सदेशसमयदुर्लभा हिमानी हिमसंहतिरेव तस्या या शोभा तया नीयमानः प्राप्यमाणः परभागः शोभा यस्य सः । वर्त्तमाननिर्देशेन प्रतिरविच्छेदात् शोभायाः प्रतिक्षणनवनवत्वं द्योतितम् व्यासजमानेति ताच्छील्ये चानशन्तम् वर्त्तमानत्वं पूर्ववत् ॥ ७८ ॥

कुण्डलयुगलयुगलच्छद्मच्छविगुरुगुरुभार्गवो वदनमण्डलमिषशरन्निशानिशात-निशाकरः सितोष्णीषकैतवमदमदकलहंसो धाराधर इव निखिलजननिदाघसमयसमयमानोष्णतापहारी ॥ ७९ ॥

हारीहितो हितोदितेन प्रियनर्मसुहृदा हृदा मूर्त्तिमतेव समर्प्यमाणं घनसाररसास्ताम्बूलमभ्यवहरन् हरन् सकलजनमनो मनोतीतमधुरिमा धुरि मानभृतामग्रणीर्मणिपादुपादूरीकृतधरणितलास्पर्शी मन्दतरस्पन्दमानपवमानस्पन्दानुमेयपरिमियपरिचीतपीतवसनो वहिरेत्य ॥ ८० ॥

पुरतोरणे तोरणेन सुलम्बिते निदाघनिशाऽनिशाभिलपणीयनिशाकरकरानिकरनिरवकरकर्पूरधूलिधूलिधवलितं वलितं नयनसुखप्रदेशं प्रदेशं परितः॥ ८१ ॥

शशधरकान्तकान्तशिलास्पन्दसलिलशीकरानिकरनिर्भरपुरोपवनवीजनोत्सवेपुषा वपुषा विजितगौरीगुरुपौगण्डगण्डशैलसमूहेन चन्द्रिकारुचिरुचिरतया केवलवलदनुपमालिमालिन्यविषाणनिकरेणैव लक्ष्यमालक्ष्यमाणे नोक्ष्यमाणेनोत्तम सुखरसैः सुखशयितेन तेन गवां निकुरम्बेण रमणीयासूल्लसत्पुरगोपुरगोचरम

कुण्डलयुगलस्य छद्मना छविगुरुकान्त्यधिकौ गुरुभार्गवौ बृहस्पतिशुक्रौ यत्र सः । वदनमण्डलमिषेण शरन्निशायां नितरां शान्तं सुखं यस्मात्तादृशो निशाकरो यत्र सः । निदाघसमये अयमानाम् आगच्छन्तीं उष्णताम् अपहर्त्तुं शीलं यस्य सः ॥ ७९ ॥

हारीहीतः मधुरचरितः । हितोदितेन स्वाभीष्टरूपहितवादिना । तच्च सुन्दरीजनमोहनादिकमेव ज्ञेयम् । हृदा मनसा । मूर्त्तिमतेति देहेनैव भेदो मनसा त्वैक्यमेवेति विवक्षितम् मानभृतां सम्मानधारिणां धुरि गणने अग्रणीः । मणिपादूः मणिमयपादुका पादे यस्य सः ॥८०॥

पुरतोरणे सिंहद्वारे तोरणेन वन्दनमालया सुलम्बिते । निदाघनिशायाम् अनिशं निरन्तरमभिलषणीयो यो निशाकरस्य करनिकरः किरणसमूहः स च कर्पूरस्य धूलिरिव या धूलिः साच ताभ्यां धवलितम् । नयनसुखं प्रदिशतीति तथा तम् प्रदेशं स्थलविशेषं परितस्तस्य समन्ततः परितः शब्दयोगे द्वितीया ॥८१॥

सुखशयितेन गवां निकुरम्बकेण रमणीयासु विशिखासु पुरवर्त्मसु पदकमलम् आदधानोऽर्पयन् । गवां निकुरम्बेण कथंभूतेन शशधरकान्तश्चन्द्रकान्तस्तन्नाम्नी या कान्तशिला कान्तियुक्तप्रस्तरः ततः स्पन्दन्ते स्रवन्ति यानि सलिलानि तेषां शीकरनिकरस्य कणसमूहस्य निर्भरोऽतिशयो यत्र सचासौ पुरोपवनसंबन्धिपवनश्चेति तेन तद्वीजनं तत्कर्तृकं वीजनमित्यर्थः। तत एव उत्सववपुषा उत्सवपोषकेण वपुषा विशेषेण जिताः गौरीगुरोर्हिमालयस्यापि पौगण्डयुक्ता गण्डशैलसमूहा येन तेन पौगण्डं कैशोरात् प्रागवस्था तद्युक्तगण्डशैला इति मध्यमपदलोपी समासः। केवलं वलता अनुपमानाम् अलीनां भ्रमराणामपि मालिन्यं स्वसौन्दर्येण तिरस्कारं वेवेष्टीति तथा तेन विप्लुट् व्याप्तो क्रियन्तः । एवंभूतेन विषाणनिकरेण शृङ्गसमूहेन एव लक्ष्यमानेन गाव एवैता नतु चन्द्रिका इति ज्ञाप्यमानेन । उक्ष्यमाणेन सिच्यमानेन । उल्लसन्त्यः पुरगोपुरे पुरद्वारे

१ हारि मनोहारि ईहितं चेष्टितं यस्य ।

णिच्छविशिखासु विशिखासु ॥८२॥

पदकमलमादधानो दधानोऽभितश्च नयनकमलं कमलं न कुर्वन् क्वचन ॥८३॥

सायंदोहदोहदपरे सकलाभीरे सकलाभीरेव्यमाणो रसकलाभिरेव रेवतीरमणानुजोऽनुजोषमात्तकौतुकेन यदि दोग्धुमारेभे ॥८४॥

मारेभेन मृद्यमाना राजीवराजीव तदा तदाकर्ण्य गोकुलकुललनाततिरवधीरितगुरुवर्लभिका वलभिकारोहरोहदुत्साहा साहाय्याय मनोमदनेन मदनेन दत्तकरावलम्बाऽलं बालहरिणनयनविभ्रमैर्नयनविभ्रमैरिन्दीवरवरविपिनमयीचकार नभः॥ ८५ ॥

एवममूस्तद्वदनसुधाकरसुधाकरतोयां नयनशफरवधूरवधूय स्वयमभितोऽभितोषेण निपतन्तीर्निवारयितुं यदि न शेकुस्तदा नयनसुखदुहं तं दुहन्तं गामवलोकयाचक्रुः ॥ ८६ ॥

तद्गोदोहनस्य निराविलसितं विलसितं किमपरेऽमरेशा अपि वक्तुं शक्नुवन्ति लघीयांसो हि नभसंगमा । न भसंगमाय प्रभवन्ति तथापि कविर्वराको वराकोपेन रसनालोभेन वर्णयति ॥ ८७ ॥

---

गोचरा विषयीभूता या मणयः तासां छविशिखाः कान्त्यग्राणि यासु तासु ॥८२॥

क्वचन विषये कं सुखम् अलम् अतिशयेन न कुर्वन् अपितु सर्वत्रेति वलभ्यारूढायां युवतिश्रेण्यां दृष्टिक्षेपः सूचितः ॥८३॥

दोहदमिच्छा । सकलाभिः सर्वाभिः । रसकलाभिः रसवैदग्धीभिः रेव्यमाणः व्याप्यमानः। रेवतीरमणो बलदेवः तस्यानुजः रेवृङ् प्लुतिगत्योः । रेवतीरमणानुजः श्रीकृष्णः अनुजोषम् अनुप्रीति ॥८४॥

मारः काम एव इभस्तेन मृद्यमाना पीड्यमाना राजीवराजी कमलश्रेणी । वलं च भीश्च तद्वलाभे अवधीरितं तिरस्कृतं गुरुसंबन्धि बलभि ययासा । अत एव वलभिकायाश्चन्द्रशालिकाया आरोहे रोहन् प्रादुर्भवन्नुत्साहो यस्याः सा मनोमदयति,मत्तं करोतीति तथा तेन दत्तः करावलम्ब इव यस्याः सा । बालहरिणो हरिणशावकः । तस्य नयनयोर्विभ्रम इव विभ्रमो येषु तैः । विभ्रमो विलासः । नयनविभ्रमैर्लोचनविशिष्टभ्रमणैः ॥८५॥

अमूर्ललनास्तस्य श्रीकृष्णस्य वदनसुधाकरस्य सुधैव करतोया नदीविशेषस्तां प्रति निपतन्तीः अवधूय अवधूता भूत्वा स्वयमेव ननु ताभिः प्रेरिताः । तं श्रीकृष्णं कीदृशम् नयनसुखं दोग्धि पूरयतीति तथा तम् ॥ ८६ ॥

निराविलं निर्मलं सितं व्यवसितं यत्र तत् विलसितं विलासम् अमरेशा ब्रह्मादयोऽपि । नभसंगमाः पक्षिणः भं नक्षत्रं तस्य संगमाय न प्रभवन्ति । वरःश्रेष्ठ आकोपो दुर्दमत्वं यस्य तादृशेन रसनालोभेन इति स्वदैन्यं व्यञ्जयन्नपि तमेव स्तावयति तस्य सरस्वती । यथा परं श्रेष्ठमेव आसम्यक् कायति शब्दायते इति तथा रसना आस्वादस्तल्लोभेन ॥ ८७ ॥

---

१ इति वराकशब्दस्य निर्वचनं नतुवराकोपस्येति

तथा हि ।
पादाग्रे कृतपादुकं त्रिकसमुल्लासोल्लसत्पार्ष्णिकं
मध्ये न्यस्य घटीं पटोन्नमनतः प्रोद्यत्त्विषोर्जानुनोः ।
गोतुन्दव्यतिषङ्गसुन्दरदर*क्षोभश्लथोष्णीषकं
पाणिभ्यां क्रमकुड्मलाङ्गुलिपुटं गाम् दोग्धि दुग्धं हरिः ॥८८॥

अपि च ।
अग्रेमङ्गुष्ठतर्जन्योरुन्दयित्वा पयःकणैः
क्रमेण गोस्तनं क्षीरमपि क्षरदचक्षरत् ॥८९॥

तथा हि ।
वत्सादप्यधिकप्रियो भगवतः पाण्यम्बुजस्पर्शन-
स्नेहस्राविपयःपयोधरपुटा गौर्दुह्यमाना स्वयम् ।
धाराभिः सुगभीरघोषगहनामापूर्य सा दोहनीं ॥
दोहन्यन्तरमेति यावदवनीं तावत्समापुप्लुवत् ॥ ९० ॥

एवं तदवेक्षणक्षणपरवशानां तासां वलभीगतानां भीगतानान्दोलेनापि समुत्कलिकया समुत्कलिकया चञ्चलेनाञ्चलेनाक्ष्णामीक्षमाणानां मनोरथमनोरथसहस्रेणापि दुर्वहं जनयामास ॥ ९१ ॥

तत्र काश्चन काञ्चनकान्तलताकाराणां निजसहचरीजनैः सह सहजसौहार्ददसंभ्रमेण भ्रमणेचास्खलतः खलतश्च न भेयादात्महृदयं सदयं सरसं च प्रकाशयन्तीनां संलाप आसीत् ॥ ९२ ॥

---

त्रिकस्य पृष्ठदण्डाधोभागस्य समुल्लासेन सम्यगुच्चीकरणेन उल्लसन्तौ उत्तिष्ठन्तौ पार्ष्णी यत्र तत् यथा स्यात्तथा जानुनोर्मध्ये घटीं न्यस्य कीदृशयोः पटस्य पीताम्बरस्य उन्नमनतः उत्कर्षणात् उद्गतेः प्रोद्यन्ती त्विट् कान्तिर्ययोः । गोतुन्दस्य गोकुक्षेर्व्यतिषङ्गेन परस्परमिलनेन सुन्दरं दरक्षोभणात् दुच्छलितं दरश्लथम् ईषत्शिथिलबन्धं च उष्णीषं यत्र तद्यथा स्यात्तथा ॥ ८८ ॥

उन्दयित्वा आर्द्रयित्वा । क्षरदपि दुग्धं गोस्तनं क्षारयामास ॥ ८९ ॥

अधिकं प्रीणातीत्यधिकप्रीस्तस्मात् पाण्यम्बुजस्पर्शनेन यः स्नेहः तेनैव स्रावि पयो यस्मिन् तथाभूतं पयोधरपुटं यस्याः सा । दोहन्यन्तरं कर्मभूतं यावत् एति स्वपयसा पूरयितव्यत्वेन प्राप्नोति ॥ ९० ॥

तदवेक्षणे यः क्षण उत्सवस्तत्परवशानां तदधीनानाम् आन्दोलः कम्पः । अनान्दोलो निष्कम्पत्वम् । भिया गुरुभयेन गतो नष्टो यः अनान्दोलस्तेनापि गुरुभयजनितसकम्पत्वेनापीत्यर्थः । समुत्कलिकया समुत्कण्ठया मुदा कलया सह वर्त्तमानया । अक्ष्णां चञ्चलेन ईक्षमाणानां मनोरथम् अनसां शकटानां रथानां च सहस्रेणापि दुर्वहं जनयामास चकारेति तदानीं तत्पातिवृद्ध्या परिमाणाधिक्यं द्योतितम् ॥ ९१ ॥

सहजसौहार्दात् कथंभूतात् । भ्रमणेन च भ्रान्त्यापि अस्खलतः स्वजनसमूहात् । खलतश्च खलैरपि नभेयात् नभेतु शक्यात् । अप्यर्थे चकारद्वयं समुच्चयार्थम् । संलापो भाषणं मिथ इत्यमरः ॥ ९२ ॥

---

* दरक्षुभितान्यपि । १ उन्दक्लेदनात्मनेपदम् ।

अयि सहचरि ! चरितमिव मे नयननिर्माणेन यदम्बुधररुचिरस्य रुचिरस्य चिरस्य रस्यतमा पीयते ॥ ९३ ॥

किन्तु करिष्यामो वपुरिदं पुरि दन्दह्यमानमवश्यमेतेन वश्यमेतेन नानाकलाकलापवत्तया ॥ ९४ ॥

तत्रेयं मे युक्तियुक् तिग्मा मतिरुन्मीलति केलिलतिकेऽलिमन्तरेण कमलिनी मलिनीभावमायाति ॥ ९५ ॥

तदयि परमाङ्गने ! परमाङ्गनेऽस्मदीये समाने समानेतव्योऽयं मय्य मम मन्त्रकौशलमिति । साह । कथमिव । पुनरेषाह । सहचरि ! श्रूयताम् ॥ ९६ ॥

पुरे प्रायोऽस्माकं प्रथमवयसो दुर्दमतया ।
न दुह्यन्ते गावः प्रसभमभयैः कैरपि जनैः ॥
अतो दोहाभावोद्भवति विहितेगव्यविभवे ।
गुरूणां हृद्द्योम्नि ज्वलति नितरां तापतपनः ॥९७॥

साह ततः किम् । एषाह । त्वयैते वक्तव्याः कमलमुखि ! गुर्व्यो हि गुरवः
कथं गा व्यर्थत्वं गमयथ दृथा दोहनमृते ॥
यदालोके सद्यो दधति सुखदोहत्वमपि ताः ।
सुदुर्दान्ता यत्नादुपनयत तं दोग्धुं स इमाः ॥ ९८ ॥

तदा तैराख्येयं क स कथय कोसौविति ततो ।
भवत्याख्येयं सुमुखि ! य इदं दृश्यत इह ॥
ततस्तत्रोद्योगं सखि ! रचयितासौ गुरुजनैः ।
स्वकार्येषु प्राज्ञो भवति न कदाप्येव विमुखः ॥ ९९ ॥

---

चरितमिव चरितार्थीभूतमिव । यद्यस्मात् अम्बुधरादपि रुचिरस्य सुन्दरस्यास्य रुचिः कान्तिः चिरस्य चिरं व्याप्य रस्यतमा अतिशयास्वाद्या पीयते ॥ ९३ ॥

वपुरिदमिति वामतर्जन्या स्वं दर्शयन्त्येवाह । पुरि पुरमध्ये दन्दह्यमानं गुरुजनसंघर्षवशाद्विहितदाहयुक्तम् भावगर्ह्यां यङ् । अवश्यम् एतेन श्रीकृष्णेन वश्यं वशीकर्तुं योग्यं करिष्यामः । एतेन कथंभूतेन । नानाकलाकलापवत्तया एतेन आ सम्यक्प्रकारेण इतेन प्राप्तेन ९४

इयं तिग्मा तीक्ष्णा मतिर्बुद्धिः । युक्तिं युनक्ति इति युक्तियुक् । नन्वत्र कथमसावहस्तत्राह। हे केलिलतिके ! इति सखीनाम्ना संबोधनम् । अलिं भ्रमरम् अन्तरेण विना ॥ ९५ ॥

हे परमाङ्गने ! श्रेष्ठसुन्दरि ! परमाङ्गने श्रेष्ठप्राङ्गने ॥ ९६ ॥

गव्यविभवे दोहाभावाद्विहते भवति सति ॥ ९७ ॥

गा धेनूर्व्यर्थत्वं निष्फलत्वम् । यदालोके यस्य दर्शने । तं जनमुपनयत निकटमानयत ९८

इदं यद्दृश्यते कृष्णकर्तृकं सुखगोदोहनकर्मेत्यर्थः ॥९९॥

अथ चतुरा साह तुरासाहमधिव्रजपुटभेदनमाधिव्रजपुटभेदनमानन्दकारणं का-ऽरणं न करोति तदुचितमेवैतत् ॥ १०० ॥

किन्त्वयं पित्रोरत्रोररीकृताधीनतया धीनतयापि वर्त्तमानो न स्वातन्त्र्यमाविष्करोति । इयमाह । अलमनया ऽनयानुकूलवार्त्तया वार्त्तया तु युक्तया भूयते १०१

श्रूयताम् । व्रजस्य दुःखे च सुखे च तत्फलप्रभोगभाजाविव वत्सलत्वेन तौ । धुरेरोदितं मद्गुरुभिरभ्रमेभेरी तत्कालमेनं विनियोजयिष्यतः ॥ १०२ ॥

अथैवमन्योन्यकौतुककथाप्रसङ्गरङ्गेणरत्नमयं समयं गमयन्तीषु तासु कृतलीला-दोहोऽलीलादोहोचितयाऽऽचितो वनमालयालयाय चलितः ॥ १०३ ॥

चलता चलतारानुकारहारेण हारेण विलसदुरा दुराक्रमश्रीः परितो नयनकमलव्यापारेणापारेणानन्दाकूपारेण प्लावयन्निव व्रजनगरनागरीगरीयोगुरुगौरव-ग्राहग्राहतुहितहृत्तडागानवहेलयाल्यान्तिकमाससाद ॥ १०४ ॥

तासां च नयनकमलानि यावदालोकं लोकं विलङ्घ्य तन्मुखाभिमुखाभिसार-सारस्येन निर्निमेषाणि जातानि ॥ १०५ ॥

---

अधिव्रजपुटभेदनं व्रजपत्तने तुरासाहम् इन्द्रं कृष्णं का अरणं शरणं न करोति किंतु सर्वा एव इत्यासां राज्ञीत्वव्यञ्जनया अप्सरस्त्वं द्योतितम् । पत्तनं पुटभेदनमित्यमरः । कथंभूतम् । आधिव्रजस्य मनोव्यथासमूहस्य पुटभेदनकरम् ॥१००॥

उररीकृता अङ्गीकृता या पित्रोरधीनता तया । धीनतयापि धिया बुद्ध्या इनतया प्रभुत्वेनापि वर्त्तमानः । अनयोऽनीतिस्तदनुकूलया वार्त्तया अनया अलम् युक्त्या तु भूयते युक्तिस्तु वर्त्तत एवेत्यर्थः । कीदृश्या । वार्त्तया अरोगया प्रवर्त्तयन्त्यर्थः वार्त्त फल्गुन्यरोगे च त्रिष्वित्यमरः ॥१०१॥

तत्फलस्य दुःखसुखफलस्य प्रभोगं प्रकृष्टं भोगं भजेते आत्मन्यभिमन्येते इति तथा तौ । कुतः वत्सलत्वतः व्रजजनं प्रति वात्सल्यात् कारुण्योत्पादकादित्यर्थः । अतो मद्गुरुभिरुक्तं वचः श्रुत्वा पराकीयमुपकारमपि स्वीयमिव मंस्येते इत्यर्थः ॥१०२॥

वनमालया आचितो व्याप्तः । कीदृश्या । अलीनां भ्रमराणाम् इला गिरस्तासां दोहः प्रपूरणं तदुचितया तत्समर्थया । दुह प्रपूरणे इति धातोः । भृङ्गो वाचि गिरो वा इला इत्यमरः १०३

हारेण विलसत् शोभमानम् उरो वक्षो यस्य सः । हारेण कीदृशेन । चलता चञ्चलेन । चञ्चलानां ताराणां नक्षत्राणाम् अनुकारं सादृश्यं हरतीति कर्मण्यण् तेन । आनन्दाकूपारेण हर्षसमुद्रेण प्लावयन्निव अभितः पूरयन्निव । कान् । व्रजनगरनागरीणां गरीयो गुरुतरं यत् गुरुगौरवं तदेव ग्राहः हिंस्रजन्तुविशेषस्तस्य ग्रहेण ग्रहणेन तुहिताः व्यथितास्ताः ये हृत्तडागास्तान् । तुह अर्दने इति धातुः । आल्यन्तिकं तत्समीपम् ॥ १०४ ॥

तन्मुखे प्रत्यभिमुखेन अभिसारो गमनं तत्रास्वादेन सारस्येन निर्निमेषाणि दृष्टिद्वैतेन विमुखीभवन्ति ॥ १०५ ॥

अनालोकं प्राप्य प्राप्यकारित्वनियमेन पुनर्निवृत्तानीव मनांसि तु ललितविलसितेन तेन सहैव सुखशयने तस्यैव सुषुपुः ॥१०६॥

एवमहनि हनिष्यद्भावकरालभावकरालवियोगवेदनावेदनास्थानाभावादात्मनो मर्मणि मर्मणि संचारिणी विषविसर्पज्वालेव यातना या तनावुन्मीलति १०७

तां खलु दिवसावसानतत्समागमागन्तुकदर्शनेन निदाघप्रदोषराहित्यैधितशोभशोभमानतद्विहिविहारदर्शनेन च निर्वापयन्ति तदनुरागिण्यः ॥१०८॥

एवं पुनरहरहरहतपराक्रमः क्रमविवर्द्धमानकौतुको धेनुगणावने वने विहरन् निदाघसमयं व्यतीयाय ॥ १०९ ॥

ततश्च ततश्चरितमाधुर्य्यमहिम्ना मधुरितभुवनजलोऽवनतलोकरसदालोकः सह सहचरैः कुतूहलिना हलिना च धेनुगणावनाय वनाय गच्छन्निच्छन्निजकौतुकखेलां खे लाञ्छितजलदाङ्कुराम् ॥ ११० ॥

कुराजन्यकारिणीं चरणपरिचरणपरिभावनया भावनयाभ्यामुपचितां दासी-

अनालोकं प्राप्येति तस्यातिदूरगत्वादिति भावः । प्राप्यकारित्वेति सर्वेषामेवेन्द्रियाणां नियमः प्राप्यकारित्वमेव तत्प्राप्त एव स्वस्वविषये स्वस्वकृतिसामर्थ्यं नत्वप्राप्तेपीत्यर्थकम्। तेन निवृत्तानीवेति स्वाभीष्टविषयालाभेन ततोन्यत्रत्वरोचकत्वेनैवाप्रवृत्त्या निमीलितानीव जातानीत्यर्थः । मनांसि त्विति मनसां तु दर्शनश्रवणप्रतियोगिमात्र एव विषये स्वस्वकृतिसामर्थ्यनियमो नत्वप्राप्तप्राप्तताविचार इति तुकारव्यञ्जितोऽर्थः ॥ १०६ ॥

नैदाघिकलीलामुपसंहरति । अहनि दिवसे हनिष्यद्भावो हनिष्यत्ता तया याः करालभास्तीक्ष्णकिरणास्ताभिरवकरं दोषम् आलाति गृह्णातीत्यवकरालो यो वियोगस्ततो या वेदना पीडा तस्या वेदना ज्ञापनं तत्र स्थानाभावात् परमप्रेष्ठसखीनां तत्स्थानत्वयोग्यतायां सत्यामपि धीरा भव एव मिलितप्राय एव ते प्रेयानिति वृथाश्वासस्य तत्करिष्यमाणतामाशङ्क्य मद्दुःखमेता अपि याथातथ्येन न प्रत्यभिजानन्तीति मननेन तास्वपि तत्रासंभावनातइति या यातना पीडा तनौ देहे उन्मीलति ॥१०७॥

दिवसावसाने तस्य श्रीकृष्णस्य समागमाद्धेतोरागन्तुकं दर्शनं तेन निदाघप्रदोषस्य दोषराहित्येन एधिता वर्द्धिता शोभा यस्या तथाभूतं शोभमानस्य तद्विहिविहारस्य द्दर्शनं तेन च इति द्विविधदर्शनस्य सुधासेकत्वं व्यञ्जितम् १०८॥ व्यतीयाय व्यतिक्रान्तवान् ॥१०९॥

अथ क्रमप्राप्तां प्रावृषिकां लीलां वर्णयितुं प्रथमं तामेव वर्णयति ततश्च निदाघसमयानन्तरं चरितस्य माधुर्य्यमहिम्ना ततो विस्तृतः । खे आकाशदर्पणे लाञ्छिता चिह्निता देहवर्ण एव जलदाङ्कुरो यस्यास्तामिति समासे उपमेयलोपः । तां प्रवृषण्यां वक्ष्यमाणालोकयामासेत्यन्वयः ॥ ११० ॥

कीदृशीम् कोः पृथिव्या राजन्यं कर्त्तु शीलं यस्यास्ताम् रश्चेः कर्तृसाधनल्युप्रत्ययान्ताद्रात्रेणि रूपम् । चरणयोः परिचरणं सेवा तस्य परि सर्वतोभावेन भावनया भावः प्रेम तयोः

१ प्रावृषण्यामिति ॥

सदासीवनपरां परिचर्य्ययाश्चकितचकितदरोन्मीलच्चपलाचपलाक्षीम् ॥१११॥

दरदलितललितमालतिकालतिकाकुसुमसुमधुरमालभारिणीं मेदुरदुरवापशोभ-कदम्ब-कदम्बक-विपुलपुलकधारिणीं लघुलघुविगलज्जलदजलदरबिन्दुनिकराश्रुस्निग्धमुग्धदिङ्मुखां कुसुमभरभरितककुभावलिवलितगन्धवहललितनिःश्वासाम् ११२

सरसतर-तरङ्गित-मदमयूर-विकच-कलाप कचकलाप शोभितां तरलतर-ललित-बिसकण्ठिकामुक्ताकण्ठिकामुक्तामभितः संचरदिन्द्रगोपगो-पदयावक विह्नां मरकत—मणिमञ्जरी—जरीजृम्भ्यमाणता—हारि—हारित—नव-यवस—यवसरसरसातल-तल्पाम् ॥११३॥

रसद-रसदब्द-शब्दमधुरतरकण्ठनादामतिघनायमानवनराजिराजिनं नीलिमानमेव नीलमंशुकमंशुकमनीयं वसानामवसानामलसरसां तरोलम्ब रोलम्बघटाकटाक्ष-

---

नीतिस्ताभ्याम् उपचिताम् दासीवत् दासीमिव परिचर्य्यया आसीवनं सम्यक् मन्थनं तत्पराम् चकितचकितं यथा स्यात्तथा संभ्रमादिव दर ईषदुन्मीलन्त्यौ चपले दिग्द्वयाविर्भवद्विद्युताविव चपले चले अक्षिणी यस्यास्ताम् विद्युच्चञ्चला चपलापिचेत्यमरः ॥ १११ ॥

मालभारिणीमिति इष्टकेषीकेत्यादिना ह्रस्वः। मेदुर स्निग्धं दुरवापशोभं दुर्लभशोभायुक्तं यत् कदम्बकदम्बकं कदम्बकुसुमवृन्दम् तदेव विपुलानि पुलकानि तानि हर्षादिव धर्त्तु शीलं यस्यास्ताम् लघुलघुविगलन्तो जलदसंबन्धिजलानां दरबिन्दुनिकरा एवानन्दभरादश्रूणि तैः स्निग्धं मुग्धं मनोहरं च दिग्रूपमुखं यस्यास्ताम् कुसुमभरभरितायाः ककुभावलेः अर्जुनवृक्षसमूहात् वलितः गन्धवहः सुगन्धपवन एव ललितो निश्वासो यस्यास्ताम्। ककुभोऽर्जुन इत्यमरः ॥११२॥

सरसतरं तरङ्गितं नाट्यजन्यं येषां तेषां मत्तमयूराणां विकचाः प्रफुल्लाः कलापाः शिखण्डा एव कचकलापः केशसमूहस्तेन शोभिताम्। तरलतरा अतिचपलाः ललिता बिसकण्ठिका बकपङ्क्तय एव मुक्ताकण्ठिका प्रोतमुक्तामयकण्ठिकारताभिरामुक्तां पिनद्धाम्। आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवदित्यमरः।कण्ठिका काटीति ख्याता।अभितः संचरताम् इन्द्रगोपानां बुडन इति ख्यातारुणवर्णसूक्ष्मकीटानां गावो रश्मय एव पदयोर्यावकचिह्नं यस्यास्ताम् मरकतमणिमञ्जर्य्याः जरांजृम्भ्यमाणताम् अतिप्रकाशं हर्त्तुं शीलं येषां तथाभूता हारिता हरिद्वर्णा नवा नवीना यवसा घासा एव रूपमाहरयाचचार्त्तः सरसं रसातलं भूतलमेव तल्पं यस्यास्ताम् ॥ ११३ ॥

रसदस्य रसवर्षिणो रसदब्दस्य जलमेघस्य शब्द एव मधुरतरः कण्ठनादो यस्यास्ताम् रसदिति रलयोरैक्यात्। रसशब्द इन्यस्य दान्तत्वेन व्याख्यायामर्थानल्पत्वं स्यात्। अतिघनायमानासु अतिमेघतुल्यासु वनराजिषु राजिनं दीप्तिशीलं नीलिमानं गुणमेव नीलमंशुकं वस्त्रं वसानं परिदधानम् अवसाने परिणामेऽपि अमन्दां सरसां चेति वनितान्तरधैर्यसक्षयपदमपि ध्वनितम्। तरसा

पातामवनीपनीपपरागपरागताधिवासां प्रावृषेण्यां लक्ष्मीमालोकयामास॥११४॥

ततश्च समुचितमौषधमिव निदाघतपनतपनतप्तजीवजीवनिकरस्य रस्यतमेन कालभिषजा चिकित्सितं विचिकित्सितं विहाय हायनमध्ये स एव समयो रसमयो रम्यश्चेति सकलैरेव निरनायि ॥ ११५ ॥

ततश्च । उच्छ्वसितमिव धरण्या उल्लसितमिव धरणिरुहैः । मेदुरितमिव गगनतलेन । आकृष्ट इव दिग्व्रततिव्रातः । निद्रित इव वासरमणिः । मोषित इव संतापः । गर्जितमिव मयूरैः । आनन्दितमिवदात्यूहैः । सरसितमिव चातकैः । हसितमिव कदम्बैः । आलिप्तमिव मृगमदैर्जगदण्डभाण्डविवरम् । स्नाता इव गिरयः । धौता इव वनवीथयः । मांसलतया लुप्तानीव पुलिनास्थीनि तरङ्गिणीनाम् । निस्तरङ्गरङ्गाणि कुरङ्गयूथानि नातिदूरचारीणि गोधनानि ॥ ११६ ॥

किं बहुना । व्रजपुरपुरन्दरकिशोरस्य च रस्यचरितासीदसौ वर्षासमयलक्ष्मीः ॥ ११७

यत्र तेषु तेषु दिवसेषु अतिसौलभ्यलभ्यमानशुभगन्धगन्धतृणलवलवनमसमसायमानरवरवणदशनैः शनैः शनैश्चरणसंचरणसंचीयमानमान्थर्य्यैः सहजमशकदंशदंशविरहेण केवलं वलमान-रुचिरता चिरतायै विलसदच्छपुच्छपुटान्दोलदोलद्वालधिलीलतैः ॥ ११८ ॥

---

उम्यन्त इति तरोलम्बा ये रोलम्बा भ्रमरास्तेषां घटैव कटाक्षपातो यस्यास्ताम् । अवनीं पिवति प्रसति व्याप्नोति इति यावत् । पाति आच्छाद्य रक्षतीति वा । अवनीयो यो नीपपरागस्तेनैव परागतः प्राप्तः अधिवासः सुगन्धीकरणं यस्यास्तां प्रावृषेण्यां वर्षोद्भवां लक्ष्मीं शोभाम् ॥११४॥ निदाघतपनो ग्रीष्मकालीनसूर्य्यः तस्य तपनं तापस्तेन तप्तो जीवो जीवनं यस्य तथाभूतस्य जीवनिकरस्य जन्तुसमूहस्य समुचितमौषधमिव रम्यतमेन रसेऽतिनिपुणेन तत्र साधुरिति यत् । काल एव भिषक् वैद्यस्तेन चिकित्सितं संदेहं त्यक्त्वा । विचिकित्सा तु संशय इत्यमरः ॥ ११५ ॥

वासरमणिः सूर्य्यः । तरङ्गिणीनां नदीनां पुलिनान्येव अस्थीनि तानि जलावृतानि निस्योत्प्रेक्षते मांसलतयेति । निस्तरङ्गरङ्गाणीति ईषिकावीरणाद्यावृतप्रदेशेषुनिष्प्रत्यूहकूर्दनावकाशस्यालभ्यमानत्वात् । यद्वा । वनदावज्वालादिशान्तेर्निःशंकतरङ्गत्वं रङ्गाणाम् नातिदूरेति यत्र कुत्रापि घासबाहुल्यात् ॥ ११६ ॥ चकारोऽप्यर्थे ॥ ११७ ॥

नैचिकीपृष्ठादिसुखं शायितुमारेभे तदा तद्गततमुत्तमंस्तुवन् स कृष्णो मल्लारं रागमालपन् श्रुति निदधे इत्यन्वयः । नैचिकीपृष्ठैः कीदृशैः । प्रथमं तावदतिसौलभ्येन हेतुना लभ्यमानानां शुभगन्धानां गन्धतृणानां गन्धेल इति पाश्चात्यदेशजातघासविशेषाणां लवेन लीलया लवनं तत्र योऽसमसायमानो रवरवेणैव रवणाः ध्वनिमन्तो दशनाः दन्ताः येषां तैः । उभौ शेषे विलासे चेति विश्वः । तृणच्छेदध्वनिरेव दशनध्वन्युपचार्य्यते । ततश्च एकत्रैव बहुतृणप्राप्त्याशनैः शनैश्चरणानां संचरणं संचारस्तेन संचीयमानं मान्थर्य्यं येषां तैः । तत्र च श्रीवृन्दावननाद्गुण्यात् सहजेनैव मशकानां दंशानां च दंशनस्य विरहेण केवलं वलमाना रुचिरता प्रचुरं सौन्दर्य्यं तस्य चिरतायै चिरममपायित्वे विलसतोऽच्छस्य निर्मलस्य पुच्छपुटस्य आन्दोलादेव दोलता चञ्चलेन बालधिना लसितैः ॥११८॥

क्षणमात्रसंचारजनितोदरम्भरितया भरितया तृणादनालान्धियाऽधियापितविश्रामाभिलाषैर्निचिकीनिचयैर्मेदुरदुरवशाददुरवशादशादहरितप्रदेशमध्यमध्यवस्थाय भगवदभिमुखं मुखं विधाय रोमन्थमन्थरमलसलसदादरदरघूर्णमानटुलेक्षणक्षणदैः क्षणदैर्घ्येण यदि सुखं शयितुमारेभे ॥ ११९ ॥

तदा सह सहचरवालकैर्वालकैरवासितहासितहततमाः कन्दुकीकृतनवकदम्बकोरको रचितकन्दुकखेलालसः खे लालसलसदमरनगरनागरीगरीयोदिदृक्षावैकल्यकल्पयामनुग्रहाग्रहात्तसरसततयाऽऽततया तत इतो मेघैरेवान्तरान्तरायतामपहाय स्ववशकलितशकलितभावेन यदि तस्थे ॥ १२० ॥

तदाऽन्तराविसृमर-भानु-भानुजाल-जाऽऽलस्य-लस्यमानः श्रमजलशीकरकरम्बितवदनबिम्बो बिम्बोज्ज्वलमधुराधरो धरोरसि कन्दुकखेलातोविरम्य रम्य-तरुतरुण मूलमलंकुर्वन् ॥ १२१ ॥

---

ततश्च क्षणमात्रसंचारेणैव जनिता या उदरम्भरिता उरपूर्त्तिस्तया हेतुना तृणादने तृणभक्षणे अलन्धीः स्पृहाशून्यता तया भरितया परिपूरितया हेतुना अधियापितः प्रापितो विश्रामाभिलाषो यैस्तैः। ततश्च मेदुरः स्निग्धश्च अथ च दुर्गतोऽवसमन्तात् शादः पङ्को यत्र स च अत एव दुर्गतो निरस्तः अवशादः खेदो यस्मात्स च । शादा नवतृणानि तैर्हरितश्च यः प्रकृष्टो देशस्तस्यमध्यम् अध्यवस्थाय । शादो जम्बालशष्पयोरित्यमरः । अलस च सत्लसन् आदरो व्यज्यमानो यत्र तत्र दर ईषत् घूर्णमानं च यत् चटुलं सुन्दरम् ईक्षणमवलोकनं ते न क्षणदैः श्रीकृष्णोत्सवदायिभिः ॥११९ ॥

रचितायां कन्दुकखेलायां लसो रसो यस्य सः रलयोरैक्यात्। खेस्वर्गे लालसा अतिशयस्पृहावत्यो लसन्त्यो या अमरनगरनागर्यस्तासां गरीयसी या दिदृक्षा तद्वैतुकस्य वैकल्यस्य कल्पतायां प्रबलतायां सत्याम् कल्यौ सज्जनिरामयावित्यमरः। लालस इति स्पृहार्थकलसेर्यङन्तात् पचाद्यचि रूपम् । छायां निजखीचटुलालसानां मदेन किंचिच्चटुलालसानामिति माघयमकदृष्टेस्तस्य दन्त्यान्तत्वमपीष्टम् । अनुग्रहस्य आग्रहेण आत्ता गृहीता या सरता तया आततया विस्तृतया हेतुना मेघैरेव कर्तृभिः अन्तरा मध्ये अन्तरायतां तद्दर्शनव्यवधानताम् अपहाय त्यक्त्वा यदि तस्थे केन प्रकारेण स्ववशं स्वाधीनमेव कलितं व्यापारो यत्र तेन शकलितभावेन खण्डस्वरूपेण ॥ १२० ॥

तदा अन्तरा मध्य एव विसृमरं प्रसरणशीलं भानोः सूर्य्यस्य भानुजालं किरणसमूहस्तज्जेन तस्यासह्यत्वात तत्माज्जातेन आलस्येन लस्यमानः श्लिष्यमाणः धरोरसि भूतलमध्ये कन्दुकखेलातो विरतो भूत्वा रम्यं स्निग्धच्छायं तरुतरुणस्य वृक्षवर्य्यस्य मूलम् अलंकुर्वन्। प्रावृट्कठिनसूर्य्यकिरणा मेघै रमरनागरीपक्षपातिभिर्यदि न व्यवधीयन्ते स्म तदा श्रमजलेत्यादिलक्षणं तात्कालिक स्ववदनसौन्दर्यतासः क्षणमात्रमेव दर्शयित्वा तरुतलमागम्य तदीयैः स्वयमेव व्यवहितोऽभूदिवेति भावः । अत एव तासां तत्साहाय्यं न सम्यक् फलितमिति पुनरपि मेघानामागमनं स्वापराधखण्डनार्थमिवेति भावः ॥१२१॥

---

१ केरवस्य हंसस्यदं प्रियं केरवं शुभ्रमुत्पलम् । २ स्वप्यदः क्ष्मरच् ।

पुनरपि घनीभूत-घनघटा-घटितघनसार-त्रसरेणुकल्प-घनरसबिन्दुना ततमाल-मालतिकालतिका-कुसुमगन्धवाहेन गन्धवाहेन सेव्यमानोऽव्यमानोत्तम मधुर-लीलावलिः ॥ १२२ ॥

वलित-ललिताङ्गतयाऽऽगतयाऽतिपरभागभागधेयं गोचारणं लकुटिकाग्रुटिका-पुरोभागापवर्जितवामकक्षतलोऽक्षतलोभनीयशोभः सुरुचिर वामजङ्घोपरि-परिगुम्फित दक्षिणमहोजङ्घाल जङ्घालतः ॥ १२३ ॥

निजविलासमिव बहुधैवतं सपरहितं मनोमल्लारं मल्लारं रागमालपन्मुरलीरं-लीलया लयाभिरामेण गानेन वनपरिसरतः परिसरतः कुरङ्गनिकरानुत्कण्ठयन् कण्ठयन्नववनमालो धेनुगणमप्युत्कर्णयन्नाकर्णयन्नात्मसहचरदत्तश्रुतिं श्रुतिनिद्धे ॥ १२४ ॥

तदा तदाकर्णन कर्ण नमदमृतधारापातपातमहिमन्यऽसुभृतां सुभृतां करण-

गन्धवाहेन पवनेन कीदृशेन घनीभूताभिर्निबिडीभूताभिर्घनघटाभिर्घटिता निष्पादिता घनसारत्रसरेणुकल्पाः कर्पूरकणतुल्या घनरसबि-न्दवो यत्र तेनेति शैत्यम् जलबि-न्दुभागोद्वहनपरिश्रमेणैव शैल्याभावान्मान्द्यं व्यञ्जितसंभावनागम्यम् । तता विस्तृता माला श्रेणी यासां तासां मालतिकालतिकानां कुसुमगन्धं वहतीति तेन इति सौगन्ध्यमुक्तम् । अव्यमाना रक्ष्यमाणा उत्तमा मधुरा लीलावलिर्येन सः ॥१२२॥

वलिता सुविन्यस्ता ललिताङ्गता मनोहराङ्गभङ्गी तया कीदृश्या अतिपरभागस्य अतिसौन्दर्य्यस्य भागधेयं भागम् आगतया प्राप्तया। भागधेयं मतं भाग्ये भागप्रत्यूपयोः पुमानिति मेदिनी। गोचारणसंज्ञन्विन्या लकुटिकाया पुरोभागेऽपवर्जित दत्त वामकक्षतलं यस्य सः। दानपर्य्याये अपवर्जनमंहतिरित्यमरः। अत एव तादृश्या भङ्ग्या अक्षता परिपूर्णा लोभनीया शोभा यस्य सः। दक्षिणा महोजङ्घाला तेजोवेगधारिणी जङ्घालता यस्य सः ॥ १२३ ॥

विलासपक्षे बहुधैव बहुप्रकारेणैव तं प्रसिद्धं मल्लारम् पक्षे बहवो धैवतस्वरा यत्र तम् धैवतांशग्रहन्यासो मल्लारः स. परिवर्जित इति तल्लक्षणात्। परेषा हितेन सह वर्त्तमानं षड्जपञ्चमरहितं च। षड्जस्य मूर्द्धन्यादित्वेपि तस्य दन्त्यसकारेण शङ्कितो गानशास्त्रे प्रसिद्धः। षड्जो दन्त्यादिरपीत्यमरटीकाचानुसार्य्या या। मन एव मल्लो दुर्ग्राह्यत्वात् तमपि आराति गृह्णाति पक्षी; करोतीति उभयथापि तुल्यार्थः। मुरलीम् ईरयति तथाभावे प्रवर्त्तयति या लीला तया। वनस्य परिसरतः परिसरे परि सर्व्वतः सरतः भ्रमत कण्ठं यती प्राप्नुवती नवा वनमाला यस्य स. ॥ १२४ ॥

तदाकर्णनं तच्छ्रवणमेव कर्णयोर्नमन्त्या अमृतधाराया· पातः पतनं तेन पातो रक्षणो यो

---

१ ततमालशब्दस्य भाषितपुंस्कत्वाच्चतः परस्य टाप् स्त्रिया. पुमतिदेशाद्द्रस्वम्।

२ जङ्घालोऽतिजवस्तुल्यावित्यमरः।

३ आकर्णयन्निति वा पाठ.।

व्यापार-पारःप्राप्तिं कारयति रयतिग्मतया प्रमदघनानां घनानां हर्षाश्रुद्रवद्रव इव दुर्निवारा जलस्रुतिर्यदि समजनि ॥१२५॥

तदा तमासारं कमठपृष्ठकाठिन्यधरधरणितलकल्पिततल्पतयाऽल्पतयापि नम्रा-तपङ्किलतया किल तया नोद्वेगकरं गुरुतराहारोष्णताशमनतया शमऽनतया तन्वाः ऽतन्वानन्दपरया सेहे सेहेहितभगवदालोका लोकातीता गवां श्रेणी ॥ १२६ ॥

ततश्च । तमालोक्य सहचरनिकरेण करेण सरसमूर्द्धनितानितानि मूर्द्धनि तानि तानि निजनिजचेलाञ्चलानि ॥ १२७ ॥

तैः श्रीकृष्णस्यैव निष्कपटपटमण्डपतामापद्य सपद्यसमञ्जसमिव विगलदम्बुध-राम्बुधरायामेव पातयामासे मासेव्यमानस्य व्यमानस्य वपुरुपरि ॥ १२८ ॥

पुरुपरितोषेण च जगदे जगदेकवल्लभ ! स्वभावोऽयं मह्रारागस्यापरागस्या परोक्ष एव यदस्य जलधरागमकानि गमकानि ॥१२९॥

किन्तु नीरवनीरवर्ष व्यपदेशरोदनकारिता कारिता भवद्गानकौशलेनैव१३०

महिमा तस्मिन् असुमतां प्राणिनां करणव्यापारस्य इन्द्रियचेष्टायाः पारप्राप्तिं कारयति सति । प्रमदेन हर्षेण घनानां निविडानां घनानां मेघानामपि रयतिग्मतया वेगानां तीक्ष्णत्वेन हर्षा-श्रुद्रव इव जलस्रुतिर्जलक्षरणम् ॥१२५ ॥

सा गवां श्रेणी तमासारं सेहे असहत । अल्पतया आसारस्याधिक्याभावेन च न उद्वेगकरं प्रत्युत गुरुतराहारहेतुकाया उष्णतायाः शमनतया प्रशमकत्वेन शं सुखरूपमेव । अत एव अन-तया अकुञ्चितया तन्वा । अराळं वृजिनं जिह्मं मूर्तिमत् कुञ्चितं नतमित्यमरः । अतन्वानन्द-परया अनल्पहर्षपरया । सा प्रसिद्धा इह वृष्टिसमयेपि ईहितो भगवदालोको यया सा ॥१२६॥

तम् आसारम् आलोक्य श्रीकृष्णस्य मूर्द्धनि मस्तके तानि तानि प्रसिद्धानि निजनिजचेला-ञ्चलानि सरसं यथा स्यात्तथा ऊर्द्धे मस्तकोर्द्धप्रदेशे नितानितानि नितरां विस्तारितानि॥१२७॥

ततस्तैश्चेलाञ्चलैः कर्तृभिर्निष्कपटं निर्व्याजमेव पटमण्डपत्वम् आपद्य प्राप्य सपदि तत्क्षणमेव अम्बुधराम्बु मेघसम्बन्धि जलं धरायां पृथिव्यामेव पातयामासे । ननु मूर्द्धनीत्यर्थः । श्रीकृष्णस्य कथंभूतस्य वपुरुपरि मासनसंबन्धिनी शोभा तया सेव्यमानस्य । यद्वा । वपुरुपरि निष्कपटप-टमण्डपताम् आपद्येत्येव सम्बन्धनीयम् । व्यमानस्य विगतमानस्य । यद्वा । धरायामेव पातयामासे मा तस्य वपुरुपरि कुतः । सेव्यमानस्य तदपि कुतः । व्यमानस्य अवमानरहितो हि सेवार्ह एवेति भावः ॥ १२८ ॥

ततः पुरुपरितोषेण प्रचुरानन्देन सहचरनिकरेण जगदे उक्तः श्रीकृष्ण इत्यर्थः । किन्तत् हे जगदेकवल्लभ । विश्वैकप्रिय । अस्य मह्लाररागस्य अयं स्वभावोऽपरोक्ष साक्षादेव । कथंभूत. । अपराक् न परा अप्रतीपराक् प्रष्ट इत्यर्थ ॥१२९॥

जलधराणामागमनमात्रस्यैव प्रयोजकानि तद्गमकानां प्रसिद्धं किन्तु नीरवं निःशब्दं यथा भवेत्तथा । नीरवर्षणस्य व्यपदेशेन छलेन रोदनं कर्तुं शीलं येषां तेषां भावस्तत्ता सा-तु भ-वद्गानकौशलेनैव कारिता उत्पादिता ॥१३०॥

तदऽलं गानकलया कलयामो न घनाघनाच्छन्ने दिनकरकरनिकरे दिनमर्य्यादा मर्य्यादारक ! चपलमेव चलामोऽचलामोदमेदुरं दुरन्तं ते मुरलीकलकुलं विरमतु विरमतु च धाराधरधाराधरणितल्पादुत्थापयामो गाः ॥१३१॥

इति सहचरकृतसरसरभसपरिहाससहासपेशलवदनविधुरविधुरमहा महामधुरो विरचितवंशीध्वानमध्वानमध्वानमभिसारयन् धेनुगणं दिशि विदिशि विदिव-विलोकनो लोकनोनूयमानचरितो घनमहसा महसादरेणेव निरुध्यमानप्रसार-सारस्यैःकुवलयवलयमहामारकतकतमप्रमुखमुखमोटनकरैरङ्गतरङ्गतरलतासमधिको-च्छलद्भिरतिविस्मयधामभिर्धामभिरन्यादृश इव दृश्यमानोऽमानोदारश्रीः॥१३२॥

सजलधरजलधरणितलचलनचलनवालधीनां खरखुरखुरप्रक्षोदेनापि नोद्धूनि-तधूलीनां धेनूनां गणमनु मनुजाकृतिब्रह्मतयामतयाऽऽख्यातःख्यातःपरागतपरागो परागो नीलसरोजस्तोम इव द्वितीय इव महीमहीयःसौभाग्यरूपी रूपी घनरसदः पीनापीनाभोगभार विवशतया मन्दमन्दमलसमलसव्रजन्तीर्व्रजन्तीव्रतया चालयितुं त्वराव्यञ्जकेन रञ्जकेन रंहसा वेणुनिनदस्य धेनूर्नोदयन्नदूरे पुरश्रियं ददर्श ॥१३३॥

गानकलया गानशिल्पेनालम्। कुतः। दिनकरस्य करनिकरे घनाघनैराच्छन्ने सति दि-नमर्य्यादाः न कलयामः न जानीमः। वर्षुकाब्दा घनाघना इत्यमरः। हे मर्य्यादारक! म-र्या मारी तस्या दारक! खण्डक!। यद्वा। मर्य्यादाम् ईयर्त्तीति तथाविध! चपलं तूर्णमेव चलामो गच्छामः, अचलामोदेन स्थिरानन्देन मेदुरं स्निग्धम् ॥१३१

अविधुरमुत्कृष्टं महस्तेजो यस्य सः। विरचितवंशीध्यानं यथा भवत्येवम् अध्वानम् अध्वा-नं प्रतिपथमेव धेनुगणमभिसारयन् लोकैर्नोनूयमानम् अतिशयेन स्तूयमानं चरितं यस्य सः। धामभिस्तेजोभिरन्यादृश इव। कीदृशैः। अतिविस्मयानां धामभिरास्पदैर्घनमहसा वहिस्थमेघ-तेजसा महे उत्सवे सादरेणेव निरुध्यमानः प्रसारः प्रसरणं तेनैव सारस्यं सरसता येषां तैः। ततश्च धाम्नां प्रसरणाभावेन निविडतापत्त्या शोभाधिक्यमिति। कुवलयवलयानि नीलोत्पल-मण्डलानि च महामारकतानि च तेषु कतमानि मुख्यानीत्यर्थः। तत्प्रमुखानां तदादीनां मु-खमोटनकरैरतिन्यूकुर्वद्भिः। अङ्गानां पाणिपादादीनां या तरङ्गवत्तरलता तया समधिकमुच्छ-लद्भिः। अमाना अनुपमा उदारा महती श्रीः शोभा यस्य सः ॥ १२३ ॥

जलधरसंबन्धिजलेन सह वर्त्तमाने धरणितले चलन चलनं कम्पनं येषां तथाभूता वाल-धयो यासां तासां खरास्तीक्ष्णाः खुरा एव खुरप्राः शरास्तेषां क्षोदेन क्षोदनेनापि नोद्धूता नोच्चाटिता धूलयो याभिस्तासां धेनूनां गणमनु लक्षितः। मतया सम्मतया मनुजाकृतिब्रह्मतया आख्या-तःनामतः ख्यातः प्रसिद्धः आख्याह्वे अभिधानं चेत्यमरः। परागतः परास्तः परागो परागः भूत्युपरञ्जनं यस्य तथाभूतो नीलसरोजसमूह इव द्वितीयोरूपी घनरसदः मेघ इव। मह्याः पृथिव्या महीयः महत्तरं सौभाग्यं तद्रूपी। पीनस्य पुष्टस्य आपीनस्य ऊधसः आभोगः परिपूर्णता तया यो भारस्तेन विवशतया ॥ १२३ ॥

१ पू. स्तबने इत्यस्माच्छन्दा [illegible]

सा हि आसार-सारसलिलैः स्नातेव मेघमहो-महोज्वल-नीलशाटिकयाऽऽशाटिकया कथाचन समावृतावयवेव ॥१३४॥

प्रतिभवन-पटल-पटल-परिगत मदमेदुरकलापिकलापिकलापैरायतायतैः स्नानतिमितममितमतिघनं केशपाशं मसार्ये शोषयन्तीव ॥१३५॥

घनमुक्तप्रतीचीमुखसंध्यारागसंध्यारागमतिबिम्बबिम्बप्रभादूरसिन्दूरशोभालभालस्थलेव ॥१३६॥

समनुकृत-गवाक्ष-गवाक्षनिकुरम्बेण श्रीकृष्णरूपसौन्दर्यानयनचतुर-नयन-चतुरशीतिसहस्रेणेव सुकृतसुकृतपाकलब्धेनेव पश्यन्तीव ॥१३७॥

घनमहोन्नतया निरातपता—कान्त—पताकान्त—कराकिशलयैरिव कृष्णागमनसुखमुल्लासयन्ती लासयन्तीव मनो मनोरथाक्रान्तम् ॥१३८॥

परितः परितस्थुषां निर्विष्टेपि गने संभूय भूयश उपचितानामवनीराणां नी-

सा हि पुरश्रीः प्रथममासारसारसलिलैः स्नाता इव आसीत् । ततो मेघमहत्यादिलक्षणा इवासीत् इति प्रतिविशेषणानन्तरमर्थसौन्दर्यार्थमासीदिति क्रियापदस्यावृत्त्यासंबन्धः । मेघमहः मेघकान्तिः तदेव महती उज्ज्वलनीलशाटिका तया कीदृश्या आशा दिशोऽटति व्याप्नोतीति तथा ॥१३४॥

भवनपटलानां गृहच्छदिषां पटले पटले प्रतिसमूहे एव परिगताश्च ते मदेन मेदुरां स्निग्धां कलां नित्यशिल्पम् आसं प्राप्तुं शीलं येषां ते च ये कलापिनो मयूरास्तेषां कलापैः शिखण्डैरायतायतैःअतिदीर्घैः । स्नानेन तिमितम् आर्द्रितम् ॥१३५॥

घनैर्मेघैर्मुक्ता त्यक्ता प्रतीची पश्चिमदिक् तस्या मुखसंधौ आरगाति सम्यक् लगतीति तथाभूतो यः संध्यारागः संध्याकालीनरक्तिमा तस्य प्रतिबिम्बः स्फाटिकाट्टादिगतः स एव बिम्बप्रभां दूरयति तिरस्करोति तादृशे सिन्दूरम् । यद्वा । बिम्बफलकान्त्या अदूरम् उपमया सन्निकृष्टं च तत् सिन्दूरं चेति तत्शोभालं तत्शोभामाप्नोति भालस्थलं ललाटप्रदेशो यस्याः सा १३६

एवं क्रमेण सायंस्नान-वस्त्रपरिधानकेशशोषणसिन्दूरप्रसाधनैः सज्जायिकाभावमभिव्यज्य तस्याः श्रीकृष्णविषयगाढानुरागमप्यनुभावमुखेन द्योतयन् विशिनष्टि समनुकृतगवाक्षेण गोनयनाकारेण गवाक्षनिकुरम्बेण जालसमूहेन श्रीकृष्णसंबन्धिरूपसौन्दर्यस्यानयने चतुरं दर्शयत् नयनानां चतुरशीतिसहस्रं तेन पश्यन्तीव । चतुरशीतिसहस्रमित्यसंख्यतातात्पर्येण पगकानुरोधादेवोक्तम् । ननु तस्याः कथमेव नयनबाहुल्यं तत्राह सुकृतेति । विधस्त्र कर्णापुतमेव मेवर इतिदर्शनाप्त्या नयनबाहुल्यार्थं सुष्ठु कृतानि यानि सुकृतानि पुण्यानि तेषां पाकेन परिणत्या लब्धेनेव ॥१३७॥

घनस्य मेघस्य महोन्नत्या या निरातपता आतपराहित्यं तया कान्ता रम्याः पताकान्ताः पताकाप्रान्ता एव कराकिशलयानि तैः मनो रथाक्रान्तं मनोल्लासयन्तीव ॥१३८॥

अथ गोपालस्य तस्य प्रीतिकाम्येवास्या गवां सेवापरिपाटीमाह परित इति । परितःस्थिता-

राणां रुचिजितकर्पूर-रेणु-रेणुका-दलदेलवालुका-परिमल-वालुका-परिमिलन निष्पङ्कतयाऽपङ्कया प्रणालिकालिकासु प्रवहन्त्या धारया रयातिरिकेणाऽऽगच्छन्तीनां धेनूनामकैतवां श्रद्धामाधाय यतमानेवासीच्चरणधावनाय भवनाय भवन्तीनाम् ॥१३९॥

अथ मन्मथमथनकृद्बहुशोभो बहुशो भोदारविशालगोशालगोचरीकृतगोनिकरो गोनिकरोद्धूततिमिरपटल-पट-लः स्वभवन चत्वर-त्वरमाणगतिर्निजनिजभवनं प्रति प्रतिजनं विसर्ज्य सर्ज्यमान-विरहरंहसा विरसमनसो वयस्यवालकान् समानेऽवयस्यऽवालकान् समानेन प्रणयनिरीक्षणेन क्षणेन परितोष्य च ॥ १४० ॥

भवनोदरं विनोदरं विविध-भोग संपदा नभोग-संपदानर्थ्यकारिण्या संप्रविष्टः पूर्वपूर्वदिनेभ्योप्यतिशयितेनाशनपानादिकौशलेन यथायथमुपचरितश्चरितचटुलया प्रस्वा प्रस्वापितश्च कर्पूरपूरधवलक्षे वलक्षेमकारिणा सकलपरिमलवतामलवतामुपधानेन कोमलिम्नाऽलिम्नात-परिसरेण सुरभितमेनोपधानेन शोभमाने शयनतले निशामनैषीत् ॥ १४१ ॥

---

श्रेणीषु प्रवहन्त्या नीराणां धारया आगच्छन्तीनां धेनूनां चरणधावनाय पादप्रक्षालनाय यतमाना यत्नवतीवासीत् । नीराणां कथंभूतानाम् निवृत्तेऽपि वृष्टितो विरतेपि सति घने मेघे परितः समन्तादट्टालिकापृष्ठादिषु पतितस्थुषां प्रथममितस्ततः स्थितवतां ततश्च संभूय मिलित्वा भूयसः पुनःपुनरपि उपचितानाम् उपचयं प्राप्ताम् सताम् अवनीराणानाम्, अवनीं भूतलं रान्ति ऊर्द्धतो निपत्य गृह्णन्ति प्राप्नुवन्तीति यावत् तेषां धारया कथंभूतया रुचिः कान्तिः रोचकत्वं च ताभ्यां जिताः कर्पूररेणवो यया सा चासौ रेणुकादलदेलवालुकापरिमला चेति । रेणुका च दलन्ती स्फुटन्ती एलवालुका च तयोः परिमलो यस्यां तथाभूता च या वालुका तस्याः परिमिलनेन संमिलनेन निष्पङ्कया पङ्क रहितया ।हरेणूरेणुका कौन्ती।एलवासुकमैलेयमिति चामरः । एते सुगन्धलते सौरभ्यार्थमट्टपृष्ठसन्धिप्राङ्गणकोणादिष्वारोपिते ज्ञेये। अपङ्कया पङ्क पापं तद्रहितया इति सामान्यरूपया प्रणालिकाप्रसक्तमपावित्र्यं वारितम्, भवनाय भवनं प्रवेष्टुं भवन्तीनां वर्त्तमानानाम् ॥ १३९ ॥

बह्वी शोभा यस्य सः । भा कान्तिस्तया उदारं च तत् विशालगोशालं चेति । तत् गोः कान्तिस्तस्याः निकरेणोद्धूतं तिमिरपटलं येन तथाभूतं पटं लाति परिधत्ते इति तथा सः । सर्ज्यमानस्य उपार्ज्यमानस्य विरहस्य रंहसा वेगेन । सर्ज अर्जने इति धातुः। समाने तुल्ये वयसि निमित्ते अवालं नबाल किन्तु प्रौढमेव कं सुखं येभ्यस्तान् ॥ १४० ॥

भवनोदरं गृहमध्यं कीदृशम् । विविधभोगसंपदा विनोदं हर्षं राति ददातीति तत् । कीदृश्या । नभोगायाः स्वर्गगताया अपि संपद आनर्थ्यं वैयर्थ्यं तत् कर्त्तुं शीलं यस्यास्तया । प्रस्वा मात्रा प्रस्वापितः शायितः । कीदृश्या । चरिते चरित्रे चटुलया शोभनया । शयनतले कीदृशे । कर्पूरपूरवद्वलक्षे धवले । उपधानेन शोभमाने । कीदृशेन । वलक्षेमकारिणा इति तस्य मणिमन्त्रौषधगर्भितत्वं सूचितम् । कोमलिम्ना तदाधिक्यप्रतिपत्त्यर्थं धर्मधर्मिणोरभेदोपचारः। सकलपरिमलवतां समस्तसुरभिद्रव्याणाम् अलवतां प्रचुरतामखण्डतां वा उपदधानेन आधिक्येन धारयता अत एव अलिभिर्भ्रमरैः अभ्यस्तः परिसरो यस्य तेन ॥ १४१ ॥

---

१ क्रियार्थोपपदस्य च कर्मणि स्थानिन इति चतुर्थी ॥

एवमितः परिमितः परमुत्कर्षं मुत्कर्षं कुर्वाणां सखीनां प्रमोहपरम्परां परां प्रादुर्भावयन् भावयन्नखिलकुटुम्बनिकुरम्बमप्युपशमोपायमपायकातरमपरिचीयमानः स कृष्णानुरागमहानलो न लोकेन केनचिदप्यनुभूतचरज्वालो जाज्वल्यमानतामवाप यदि ॥ १४२ ॥

तदा तं निर्वापयितुमिव प्रियसहचरीनिकरेणाजस्रं स्रवद्भिः रस्रनिर्झरैस्तिरस्कृततदानींतनजलधरधारैरभिषिच्यमानसिचयावृताङ्गी वार्षभानवी नवीनविपद्वृन्दमासेदुषी न परमुपायमाशाबन्धमपि शिथिलयन्ती लयं तीव्रमुपयास्यन्ती वहिर्वृत्तिं विसस्मार स्मारशराघातघनघूर्णाघूर्णायमानादिग्वनिताानीतानि तरसमये समये ॥ १४३ ॥

कृष्णोऽपि तदवधिलब्धतदनुरागबाधया राधया स्वहृदयमन्दिरमध्यासीनयाऽनया सह सहर्षसन्ततं सन्ततमन्तरेव रममाणोऽपि वात्सल्यादिरसजुषां सजुषां पित्रादीनां सन्निधौ तथाविधतत्तत्सुखप्रकाशशक्त्यैव वहिर्वृत्तिमप्यनुभाव्यमानो-

---

अथोपरिष्टाद्राधानवसंगमं वर्णयिष्यन्निदानीमस्याः पूर्वरागपाकावस्थामन्यवैलक्षण्येन परमकाष्ठामापन्नामभिव्यञ्जयति । इतः परं कृष्णानुरागमहानलो यदि जाज्वल्यमानतामवाप तदा वार्षभानवी वहिर्वृत्तिं विसस्मार इत्यन्वयः । कृष्णानुरागमहानलः । कथंभूतः । परम् अधिकम् उत्कर्षम् इतः प्राप्तः । ततश्चास्याः प्रमोहपरम्परां मूर्च्छापरम्परां प्रादुर्भावयन् जनयन् । कीदृशीम् । प्राणसखीनां मुत्कर्षम् आनन्दस्य कर्षणं नाशं कुर्वाणाम् भावयन् कथं जीविष्यतीत्युपशमोपायम् औषधादिकं चिन्तयन् यतस्तैरपरिचीयमानः व्याधिमहावेशादिवद्धेव कथंचिल्लक्ष्यमाण इत्यर्थः । केनचिदपि अन्यगोपीजनेनापि अनुभूतचरा उपलब्धपूर्वा ज्वाला यस्य सः ॥ १४२ ॥

अस्रनिर्झरैः कीदृशैः । तिरस्कृता तदानीन्तनी जलधरस्याभिधारा यैः तैरभिषिच्यमानेन सिचयेन वस्त्रेणावृतमङ्गं यस्याः सा । आसेदुषी प्राप्तवती । कथंचिन्मूर्च्छाभङ्गे सति परम् उपायं कृष्णाङ्गसङ्गादन्यं प्रतीकारं न विदुर्या न मानयन्तीत्यर्थः । तस्य दुष्प्रापतां परामृश्य प्राणरक्षकमाशाबन्धमपि शिथिलयन्ती मोचयन्ती । कुतः दशमीं दशामारुरुक्षुर्लयं नाशम् उप निकट एव यास्यन्ती वहिर्वृत्तिमिन्द्रियाणां वहिर्व्यापारं विसस्मार विस्मृतवती । स्मारशरस्य आघातेन घना निविडा घूर्णा च यस्याः सा । घनैर्मेघैर्हेतुभिः घूर्णायमानाभिः संभुक्तकान्तावत् मुदिताभिर्दिग्वनिताभिर्नितरां तानिता विस्तारिता रसा वृष्टिजलानि सन्तये समये । अतस्तस्यास्तादृक्कष्टदोक्षणोद्भ्रामितबुद्धीनां सखीनां क्षणमपि तां त्यक्तुमशक्नुवतीनां कृष्णे दूत्यादिप्रक्रियापि नाभूदतो योगमायवैव राधेनाधाननिति वक्ष्यति ॥ १४३ ॥

लब्धातस्य कृष्णस्यानुरागबाधा यया तया अनया राधया सहर्षसन्ततं सहर्षविस्तारं यथा भवत्येवं सन्ततं निरन्तरमन्तरेव मनोमध्य एव वात्सल्यसख्यदास्यरससेविनां तत्तद्रसाश्रयाणां पित्रादीनां नन्दादिश्रीदामादिरक्तकादीनां सजुषां जुट् प्रीतिस्तत्सहितानां स्वस्वरसोचितप्रेमवतामित्यर्थः । तथाविधं स्वस्वरसोपयोगि तत्तत्सुखं कृष्णदर्शनादौ प्रेमतारतम्येन तरतमायमानं सुखं यस्य प्रकाशो यत्नस्तया शक्त्या वहिर्वृत्तिं तेषां प्रेमानुरोधेन वहिर्वृत्तिं लालनादिकालप्रदानचन्दु-

स्मानोदारलीलो विललास ॥ १४४ ॥

अथापरेष्वपि दिवसेषु घनसमय-समयमान-माननीय सौभगेषु मणिगणगोवर्द्धनस्य गिरिवरस्य रम्यतमासूपत्यकासु त्यकासु पौरपौरवसुरभिषु सुरभिषु चरन्तीषु ॥ १४५ ॥

तस्यैव क्षितिधरचूडामणीन्द्रस्य चूडामणीन्द्र-स्यन्दमान-रुचिधारा धर-धाराधर-जल-धाराधरगन्धशिलागर्त्त-परिसर सरद्विसर-सरस शिलासिंहासनकृतासनः ॥ १४६ ॥

स्फटिकगण्डशैलशैलजनिषण्णजलदनिकरकर्षणजातकौतुकैस्तदुदरदरसमुन्मीलदचिररोचिषां रोचिषां पटलेन रुषा परुषाऽपचिकीर्षया कृतनयनवैकृत्येनेव भियाऽभियापितशङ्कैःपरावृत्यवृत्य परावृतैःपुनरपि धर्तुमुद्यतैर्मुद्यतैरुपसर्पद्भिःपुनरपि तदूर्जितगर्जितगरिम्णा पलायमानैः पुनरपि चपलतया लतया ताडयितुमुपसर्पद्भिस्तदुर्द्धर्णनीरनीरन्ध्रशीकरनिकरनिर्भरफूत्कारपराङ्तैःसहचरैर्हास्यमानः॥१४७॥

कदापि दापितसुखस्तैरेव बहुधा बहुधातु शकल-कलनेन कृतविविधपरभाग-

कादिक्रीडाविशेषपरिचर्य्यानुमोदनादिम् न विद्यते मानस्तावतो ज्ञानं यस्यास्तथाभूता उदारा महती लीला यस्य सः अतर्क्योदारचर्य्य इत्यर्थः॥ १४४ ॥

अथ तत्तत्संगमसम्भ्रमकत्वेन वर्षासमयस्यैवातियोग्यतां द्योतयन् पुनरपि ताद्विलासं वर्णयति अथेति सहचरैरुपचर्य्यमाणो विजहारेत्यन्वयः। घनसमये मेघागमकाले सम्यगयमानं समागच्छत् माननीयं सौभगं येषां तेषु दिवसेषु मणिगणैर्गवां कान्तीनां वर्द्धनं यस्य तस्य गोवर्द्धनस्य उपत्यकासु निकटभूमिषु त्यकासु तासु कैकजन्तलदशब्दरूपम्। पौराणां सुगन्धतृणानां गौरवेण पुरुतया प्राचुर्य्येण हेतुना सुरभिषु सुगन्धासु सुरभिषु धेनुषु चरन्तीषु ॥१४५॥

चूडासु ये मणीन्द्राः पद्मरागादयस्तेभ्यः स्यन्दमानां क्षरन्तीमिव रुचिधारां कान्तिधारां धरन्तीति तथाभूता या जलधरजलानां मेघवृष्टजलानां धारास्ता धरन्ति ये गन्धशिलागर्त्ताः सुगन्ध शिलामयविवराणि तेषां परिसरमुपान्ततटं सरन् प्राप्नुवन् विसरः समूहो यासां तथाभूताः सरसाः शिला एव सिंहासनानि तत्र कृतासनः ॥ १४६ ॥

ततः सहचरैर्हास्यमानः कथं भूतैः स्फटिकगण्डशैलेषु यानि शैलजानि शिलाजतूनि तत्र निषण्णानामुपविष्टानां जलदनिकराणां करेण धरभृतदीर्घलकुटेन वा यत्कर्षणमाकर्षणं तत्र जातकौतुकैस्ततस्तदुदरतो दर ईषदुन्मीलन्तीनां अचिररोचिषां विद्युतां रोचिषां दीप्तीनां पटलेन अभियापितशङ्कैः प्रापितसाध्वसैः। पटलेन कीदृशेन। रुषा क्रोधेन परुषं यथा भवत्येवमपचिकीर्षया अपकर्तुमिच्छया कृतं नयनवैकृत्यं नेत्रविकृतिभावो येन तेन इव। ततश्च भियां परावृत्य पलाय्य दृष्ट्वा इत इत आगच्छतेति पार्ष्णिग्राहतया चरणेन अपरैरपि वयस्यैरावृतैः। ततश्च [illegible] साहसैर्धर्तुमुद्यमवद्भिर्मुदा तदा गतानन्देन यतैर्धर्षीकृतैः ॥१४७॥

दापितं सुखम् धर्मनिमित्तेव सहचरेभ्यो येन सः। बहुविधानां धातुशकलानां कलनेन

१ साकच्छायच्छदरूपम्।

परभाग्येनाकल्पेन ॥ १४८ ॥

कदाचन । नटद्भिरितस्ततस्तैरेव जनितसारस्यः सारस्यदो रस्योत-लक्ष्मी-लक्ष्मा लक्ष्मील क्ष्माधरविहारी ॥ १४९ ॥

घनसमयसुखापसुखापत्तिकारि फलमूलकन्दकन्दलितानन्दः सखिभिरेव ततदाभितोऽभितोपेणाहृत्य श्रद्धावद्धावत्प्रणयमाहिम्ना हिम्नापिततत्तदशनो दशनोज्वलरुचा सितेन हसितेन हरमाणो गिरिचराणामखिलसत्वानां मनो मनोज्ञैः तैरेव करतल-लभ्य-पूगतरु-पूग-तरुणफलमामूलदलितदलितजाम्बूनदाभताम्बूल-वल्लीदलदलदतिजीर्णसुरभिशिलाचूर्णचूर्णसमेतकर्पूरकदलीकाण्डनिर्य्यासवासितं ताम्बूलमुपकल्प्य परिचर्य्यमाणो विजहार ॥ १५० ॥

यदि कदाचित्तत्रैव वर्षति मुदिरो मुदिरोचमानस्तदा सदानन्ददानन्दकन्द-कन्दरामन्दिरमासाद्य रमासाद्यमाने तस्योदरे दरेहितनयनाञ्चलार्पणो दर्पणोदर-सन्निभे सन्निभेन्द्रकलभ इवोपविश्य समयं गमयति ॥१५१॥

तदा त एव सहचराश्च मनोहरस्य तस्य पुरतःपरस्पर परम-खेला-कोलाहल-हलहलारावे प्रतिरव स्वणतयाऽदरीकृतया दरीकृतया कौतुकपरम्परयाऽपरया पुनरपि सविस्तार तार-हुङ्कारकारिणः पुनरपि तथाप्रतिध्वान ध्वनितायां तस्यां

आनयनेन ततश्च कृतस्य विविधै रागैः परभागस्य शोभायां अपि परं भाग्यं कृष्णेन स्वीकरा-यत्र तथाभूतेन आकल्पेन वेषेण ॥ १४८ ॥

सारस्यदः सारजवः स्थिरहर्षजन्यवेग इत्यर्थः । रस्यं यदुरो वक्षस्तत्र आ उतं सम्यक् प्रथितम् इव लक्ष्मीलक्ष्म यस्य सः । लक्ष्मीले श्रीले श्रीमति क्ष्माधरे गोवर्द्धनपर्वते विहारी विहरणशीलः॥ १४९ ॥

घनसमये प्रावृषि सुखापां सुलभां सुखापत्तिं सुखप्राप्तिं कर्त्तुं शीलं येषां तैः फलमूलकन्दैः कन्दलितानन्दःअङ्कुरितहर्षः । कन्दमूलयोः वर्त्तुलदीर्घत्वाभ्यां भेदः । श्रद्धया वद्धं वन्धम् अवतः पालयतः प्रणयस्य महिम्ना हि निश्चितं स्नापिततत्तदशनो निर्वाहिततत्तद्भोजनः । अखिलसत्वानां सर्वप्राणिनां मनोज्ञैः श्रीकृष्णाभिरुचिविज्ञैस्तैः सहचरैरेव ताम्बूलम् उपकल्प्य परिचर्य्यमाणः । ताम्बूलमेव वीटकम् करतलेनैव लभ्यं पूगतरुपूगानां गुवाकवृक्षसमूहानां तरुणं पुष्टं फलं यत्र तत् तथा आमूलं मूलमभिव्याप्य दलिता जातदला चासौ दलितं चूर्णितं यज्जाम्बूनदं कनक तदाभाचेति तथाभूता या ताम्बूलवल्ली तस्याः दलं पर्णम् तदाथो दलन्त्यास्त्रुटन्त्या अतिजीर्णायाः सुरभिशिलायाश्चूर्णं क्षोद एव चूर्णं ताभ्यां समेतम् । दल विदारण इत्यस्य त्रोटनमप्यर्थः । पर्चोविक्लित्तियिक्तेदनावज्ञेयः ॥१५०॥

सदैवानन्दतां समृद्ध्यताम् आनन्दानां कन्दं मूलं यत्र तथाभूतं कन्दरामन्दिरम् रमया श्रिया आसाद्यमाने सेव्यमाने सन् सुन्दर इभेन्द्रशावक इव ॥१५१॥

प्रतिरवस्वणतया प्रति स्वं प्रति ध्वानि रौतीति तत्तया कीदृश्या अदरीकृतया अनल्पीकृतया दरी कन्दरस्तया कृतया निष्पादितया तया हेतुना या अपरा अन्या कौतुकपरम्परा तः

पुनरपि ततोऽधिकचीत्कारकारणतयाऽनवस्थानवस्थानत्वेन दूषणेऽपि शिशुतया भूः प्रगायमानतामेवासाद्य श्रीकृष्णं रमयामासुः ॥१९२॥

कदाचिदपि निपतति वहिः माद्यद्धिपो दास इव करकाकन्दवे द्रुतविद्रुतविहारा अवनतकन्धरा धरातलनिहितनयनास्तदानयनास्तद्दाक्षिण्यमविचित्यकरे कृत्वा श्रीकृष्णचरणान्तिनिःक्षिपन्ति ॥१९३॥

निर्दिष्टे तु घने कन्दरतोऽदरतोपेण वहिर्भूय भूय उपरि गिरिशिखरस्य खरस्पद-जलद-जलदरेतर-क्षालिते चमरवधूजनाच्छपुच्छपुटमार्जिते कस्तूरीहरिणतरुणीमदगन्धिनि मरकतशिलाशलेऽशकलेन्दुसुन्दरमुखः सुखावस्थितः॥१९४॥ स्थित एव परितोऽपरिनोपहरः स्वां तनुमिव घनमहसा महसारेण दूरादविभज्यमानवयवां मदकल-झङ्कार मुखर-मधुप-राग मधु-पराग प्रियकप्रियकमालां विलसच्छ्रीवत्स- गोचार चारव-भूयिष्ठां पीतभास्वदंशुकां सरसरभसहरिणीनयनांचमत्कारकारिणीं हरिणीं लुलित-लुलित-लम्बमान सुपल्लव-पञ्चशाखां वनराजिमालोकमानः ॥ १९५ ॥

---

या पुनरपि सविस्तारमत्यायतं तारमत्युच्चं दूत्कारं कोऽसि रे ! इत्याद्याक्रोशशब्दं कर्तुं शीलं येषां ते । अस्यां दर्यां पुनरपि तथा प्रतिध्वनिना ध्वनितायां सत्याम् अनवस्थानिष्ठायाः पर्यवसानाभावः तस्याः नवीनस्थानत्वेन उत्तमाश्रयत्वेन ॥१९२॥

करकाकदम्बे वर्षोपलसमूहे वहिर्निपतति सति द्रुतं शीघ्रमेव विद्रुतविहाराः विगतखेलास्ते पाग् आनयने अस्तं निक्षिप्तं दाक्षिण्यं स्वाच्छन्द्यं यत्र तद्यथा भवत्येव निःक्षिपन्ति । दक्षिणो दक्षिणो द्रुत-शरलच्छंदवर्तिष्विति मेदिनी । ॥१९३॥

अदरतोपेण अनल्पहर्षेण खरस्पंदस्तीक्ष्णवेगैर्जलदजलैर्दरेतरम् अदरम् अल्पं यथा स्यात्तथा क्षालिते अशकलेन्दुः पूर्णचन्द्रः ॥ १९४ ॥

स हरिः स्वां तनुमिव वनराजिमालोकमानस्तथा गां धां च समभासमालोकयन् ॥ शवलि ! काली ! धवली ॥इत्यादि नामग्राहं यदि समाजुहाव तदा गिरिवरस्य उपत्यका ताः समीपुरित्यन्वयः । घनमहसा निविडकान्त्या पक्षे मेघतेजसा हेतुना दूरात् दूरतः अविभज्यमाना विभक्ततया न लक्ष्यमाणा अवयवा यस्यास्ताम् । मदकलानां मदोत्कटानाम् अत एव झंकारमुखराणां मधुपानां रागोऽनुरागो यत्र च सासौ मधुना परागेण च प्रियं कं सुखं यतः साचेति तथाभूता प्रियकमाला कदम्बस्रक् पक्षे कदम्बश्रेणी यस्यां ताम् । विलसतः श्रीवत्सस्य चिन्हविशेषस्य गोचारः रश्मिसंचरणं तेन यथार्थं चारुत्वं तेन भूयिष्ठां बहुलतमाम् । पक्षे विलसद्भिःयुक्तानां वत्सानां गवां च चारस्य यथारुत्वं तेन भूयिष्ठाम् पीतं पीतवर्णं भास्वत् तेजस्वि अंशुकम् अम्बरं यस्यास्ताम् पक्षे पीता निगीर्णा भास्वतः सूर्यस्यांशवो यया यस्याताम् घनमहसेत्यनुवृत्तेः । सरसरभसा रसवेगसहिता हरिणीनयना गोप्यो यस्यां ताम् । पक्षे सारसरसानि हरिणीनां नयनानि यस्यां ताम् हारिणी हारवती मनोहारिणी चालुलितो मृदुललुलितं लम्बमानः सुपल्लव इव पञ्चशाखः पाणिर्यस्यां ताम् पक्षे शादसुपल्लवानां पञ्च विस्तारो यत्र तथाभूताः शाखा यस्यां ताम् ॥ १९५

पुनस्तस्यैव कृपालोःकृपालोलमनसो मा धावत माधावतेति कलकोमलध्वनिमध्वनि मधुरमाकर्ण्य निरायासं धावन्त्योऽवन्त्यो भगवदाज्ञामिव समकालमेव गिरिवरस्य द्रुतमुप त्यकामुप त्यकाः समीयुः ॥१६०॥

तदा कूजितमुरलीकोऽलीकोज्झितसौहृदैः सह सहचरैर्गिरिवरतोऽवरतो लीलातोऽलीलातो लसमवतरन् गिरिवरवनचारि खग-मृगादि-निखिल-जीवनिकाय-कायतो मन इवावतारयामास ॥१६१॥

एवमहरहरहतकौतुके वर्षाविलासे गोचा गोचारण-रणन्मञ्जु मञ्जीर-मणिमञ्जरीनिकरेण मञ्जुलयोः पदपङ्कजयोः पङ्क-जयोद्धुर-रजसोरज-सोम सोमशेखर-शेखरमणिमञ्जरीरञ्जितयोर्न्यासेनाऽध्वज-ध्वज कमलादिलक्ष्मलक्ष्मणेन भूरसि रसिकता-सिकता-रुचिरेऽचिरेण तद्दराविपत्राः पत्रावलीर्निर्मिमाणो गिरिवरसानुचरः सानुचरः सगोधनो भवनमाजगाम ॥१६२॥

एवमस्मिन्नेव जलदागमे जलदागमे शोभाऽऽयामिनीषु यामिनीषु प्रसह्य सह्यमानामनुरागबाधामनिराकरणीयावेगामन्तरे वहन्तीनां गोकुलकुलजानां राधा

---

कृपालोलमनसः अनुकम्पासतृष्णचित्ताः । लोलश्चल सतृष्णयोरित्यमरः । त्यकाः त्यच्छन्दरूपाम् । ता नैचिक्यः ॥१६०॥

गिरिवरतो गोवर्द्धनतो लीलातो लीलायाः अवरतः विरत इत्यर्थः । अलीलातः अलीनाम् इला गिरोऽभिनन्द्य । ल्यब्लोपे पञ्चमी । अलसं यथा स्यादेवमवतरन् अवरत इति जीवनिकायकायत इत्यस्य विशेषणम् रलयोरैक्यात् अवलात् कृष्णेन सह अवतरितुमसमर्थादित्यर्थः । यद्वा । अवरतः सहावतरणभाग्यलाभेन निकृष्टादित्यर्थः । मन इवेति मनसस्तन्मयत्वादुत्प्रेक्षा १६१

वर्षाविलासवर्णनमुपसंहरति एवमिति पदपङ्कजयोर्न्यासेन भूरसि भूवक्षसि पत्रावलीर्निर्मिमाणः सानुचरो भवनमाजगाम । पदपङ्कजयोः कीदृशयोः । पङ्कं पापं तस्य जये उद्धुरं समर्थं रजो ययो स्तयोः । अजश्च उमासहित सोमशेखरो महेशश्च तयोः । प्रणतिकाले शेखरस्थमणिमञ्जर्या रञ्जितयोः । यदुक्तम् वन्द्यमानचरण पथिश्वृद्धैरिति । न्यासेन कथंभूतेन । गाम् अवतीति गोऽङ् तेन गोचा गवानुगेनेत्यर्थः । अध्वनि वर्त्मनि जायमानैर्ध्वजकमलादिभिर्लक्ष्मभिश्चिह्नैर्लक्ष्मणेन सश्रीकेन । रामभ्रातरि पुंसि स्यात् सश्रीके त्वभिधेयवदिति मेदिनी । भूरसि कीदृशे रसिकता सरसत्वम् सिकता वालुका ताभ्यां रुचिरे । पत्रावलीः कीदृशीः । तरंपा गुणो भरूपा अधमकादयस्तत्कृता विपदं विपत्तिं आपन्त इति तथा ताः । गिरिवरस्य सानौ चरतीति तथा सः ॥ १६२ ॥

अथ श्रीराधामाधवसंगमं वर्णयिष्यन् तत्सर्वसमाधायिकाया योगमायायाः प्रक्रियापरिपाटीमाह एवमिति जलस्य दा दानं तया आगमे लोकसंचाराभावादुचितसमय इत्यर्थः।शोभायामिनीषु-शोभायाः आयामवतीषु यामिनीषु अनुरागबाधामन्तरे वहन्तीनां राधादीनां कामत्रि कामधुरां कामभारं योगमाया सफलयति । कथंभूता सती श्रीकृष्णेन समं ताः योजयन्ती । कामधुरां कीदृ-

दीनामदीनामलपरिमलां पूर्वरागतामपहाय सुकृतपरिपाकात् पाकात् पाकान्तर मासाद्यमधुरां कामधुरां काामपि स ततमवताऽवतारिताखिलसौभगलीलेन श्रीकृष्णेन समं समन्ततस्तु भूयो भूयोऽगमायायोगमाया भगवती योजन्यती सफलयति१६३ न तच्चित्रमस्याः काऽवरा वराकी चित्रलेखा लेखाधिनाथादिदुष्प्रवेशपुरनिरुद्धमनिरुद्धमभ्यासादयामास कतिपयगम्यमध्वानमध्वानमेवाभिलक्ष्य जनानीक्षणेन क्षणेन निजसख्यै ॥१६४॥

इयं तु भगवतो महायोगवतो महायोगशक्तिस्तासां पतिमन्यानामन्या नारीस्तत्प्रतिच्छायाश्छायारूपा रूपाकृतिभिस्तत्तत्समनाः समानाय्य नित्यसिद्धश्रीकृष्णप्रेयसीस्वरूपेण रूपेण सहावतीर्णानामासामनियोजितदूतीभावं भावं भाव्यं कृष्णाङ्गसङ्गमङ्गलाय ताः सकलाः सकला यथासमयं यदुपनेष्यति तत्र कः संदेह१६५ इति सिद्धान्तसिद्धां तदुभयोः केलिं के लिम्पन्ति न वैदग्ध्यादिविलासविशेषाः १६६ सविशेषा हि लोकोत्तरता कोत्तर-तारतम्यकारिणी भवति यदियं केलिकालाकलावतो राधामाधवयोर्वयोऽकृता नित्यसिद्धत्वात् ॥१६७॥

वात्सल्यरससजुषां सजुषां सद्यस्तनस्तनन्धयवत् कृष्णे रतिमुद्वहतां द्दतांद्दसां केषांचिदगोचरस्तद्धि तेषां तथाविध रस स्वभावो न तत्र योगमायामायादैवैभवमिति ॥ १६८ ॥

---

दीनाम् पूर्वरागतां पूर्वरागतत्वं स्वरूपम् अपहाय त्यक्त्वा सुकृतपरिपाकात् भाग्यातिरेकात् पाकात् पाकान्तरं परिणामादपि परिणामान्तरं प्राप्य मधुरां जातामित्यर्थः। प्राप्तां क्रियामपेक्ष्य पूर्वकाले क्त्वा। सततमवता स्वस्वगुणमाधुर्य्यनिःपेक्षेणं पालयतेति कृष्णेनेत्यस्य विशेषणम्। भूयो भूयः पुनः पुनरपि अगमो दुर्गमो यःशुभावहो विधिर्यस्याः सा ॥१६३॥

का निकृष्टा अवरा न्यूना। लेखाधिनाथ इन्द्रः। अध्वानं निःशब्दमेव अभिलक्ष्य क्षणेन क्षणमात्रेणैव निजसख्यै ऊषायै जनानां तत्रानिरुद्धस्य इत ऊषाया अपि परिवाररक्षकादीनाम् अनीक्षणेन अवलोकनमप्यतिक्रम्येत्यर्थः ॥१६४॥

अनियोजितदूतीभावं ताभिरनियोजिताया अपि दूत्या दूत्यं कुर्वत्या यो भावस्तम्। भावं भावं प्राप्य प्राप्य भू त्तातौ जमुलन्तः। सकलाः कलासहिताः ॥१६५॥

तत्तस्मादुभयो राधामाधवयोः इति सिद्धान्तेन सिद्धां केलिं रतक्रीडां के वैदग्ध्याद्यो विलासविशेषाः नलिम्पन्ति नोपचिन्वन्ति अपि तु सर्व एव लिप उपदेहे मुचादिः उपदेहः उपचयः ॥ १६६ ॥

लोकोत्तरता केलिरित्यर्थः कं सुखं तदुत्तरं तत्प्रधानं यत्तारतम्यं तत्कारिणी भवति लोकोत्तरतापा येरित्यतारतम्येनैव सुखतारतम्यं स्यादित्यर्थः। यदस्मादियं केलिर्वयोऽकृता वयसा न कृता प्राकृतलोकानामिव यौवनोत्पादिता न भवतीति पूर्वरागारम्भे प्रपञ्चितमेव ॥१६७॥

सजुषां सप्रेम्णाम् प्रीत्यर्थकजुषेर्भावक्विपा रूपम्। तथाविधस्य रसस्य स्तोऽसारणो रसो यदुं तस्य स्वभावः। शृङ्गारादौ द्रवे वीर्य्ये देहधातुषु पारदे रस इति विश्वः ॥ १६८ ॥

तथासति कस्यामपीक्षणक्षणदायां शुभलक्षणक्षणदायां सौभाग्यरसोक्षणदायां क्षणदायां निविडतमालपालयेव मुदिरमालया श्यामलीकृतायां प्रथमाभिसार-सारस्यभाग परभाग-भागनुचरीभि रभिरस्यमाना योगमाययैव दर्शितेनाध्वना ध्वनावुपरते चिरानुरक्तिदूतिकया कयाचन पुरोगामिन्या पुरोगामिन्याय्य-साहस-हरिष्यमाणकृष्णया कृष्यमाणा ॥ १६९ ॥

नील निचोल-चोलधारिणीमृगनाभिलिप्ता नाभिलिप्ता स्तम्भजम्बालजम्बाल-मान्थर्य्यमासादयता साध्वसेन कुतः क यामीति स्वयमप्यजानती न तीव्रतरतरलतां चात्मनो निन्दन्ती ॥ १७० ॥

तदुपगमगमकविलक्षण-लक्षण शुभक्षण-कृतक्षणस्य कृष्णस्य च तस्यार्थं मनसा मनसैव कृतं सङ्केत केतनं मकरकेतनचेतनया परिचायितं परिचायितं च सा वार्षभानवी नवीन-सङ्गरसरस-सरलहृदया हृदयाधिनाथाकृष्टहृदयाऽभिससार १७१

कस्यामपि क्षणदायां रजन्यां सा वार्षभानवी अभिससार। कीदृश्याम् ईक्षणयोः क्षणदायामुत्सवदायाम् शुभलक्षणो यः क्षणः कालविशेषस्तच्छोधिकायां तेनैव दा शोधनं वा यस्यास्तस्याम् दैप् शोधने। सौभाग्यरसस्य उक्षणमभिषेकस्तद्दायिन्याम्। प्रथमाभिसारे यः सारस्यभागः सरसत्वरूपोऽशस्तेन परभागं सौन्दर्य्यं भजतीति तथा सा। अध्वना पथाध्वनौ शब्दे उपरते शान्ते सति चिरानुरक्तिरेव दूतिका तयैवाकृष्यमाणा। कीदृश्या। पुरोगामिन्या राधागतिरनुरागानुसारिण्येव इति द्योतितम्। पुरोगामिना अग्रभाविना न्याय्यसाहसेन कृष्णसुखैकतात्पर्य्यकरतिप्रागल्भ्यगमकेन हरिष्यमाणो वशीकरिष्यमाणः कृष्णो यस्यां यया वा तया ॥ १६९ ॥

निचोलः प्रच्छदपटः। चोलः कञ्चुलिका। स्तम्भस्तब्धता स एव जम्बालः पङ्कं तज्जं तदुद्भवं वालमान्थर्य्यं प्रथममन्थरताम आसादयता साध्वसेन न अभिलिप्ता। अभिसारे स्तब्धकारिण्या शङ्कया रहितेत्यर्थः। स्वयमप्यजानतीति प्रेमवैवश्येनैव तदाचरन्तीत्यर्थः। वहिर्दूत्यशङ्केतपरस्परसम्मतिवार्त्ताज्ञानविनाभूतोप्ययं प्रथमाभिसारो भगवदिच्छाशक्तिवशात्तत्प्रौढानुरागस्यान्यनिरपेक्षत्वदर्शनार्थेवेति भावः। तीव्रतरां तरलतां तारल्यमपि न निन्दन्ती प्रेष्ठसङ्गसुखप्राप्तिभावनयेति भावः ॥ १७० ॥

तस्या राधाया उपगम उपसर्पणम् तस्य गमकं सूचकम् विलक्षणं लक्षणं यत्र तथाभूते शुभक्षणे मङ्गलसमये कृतः क्षणः स्वाभिसारोत्सवो येन तस्य श्रीकृष्णस्य तस्याः श्रीराधायाश्च मनसा मनसैवेति हे प्रिये तत्र कुञ्जमन्दिरेऽद्याभिसृत्य भवत्या भवितव्यमितिध्यानाद्धामेः राधां प्रति कृष्णसङ्केतः। तथैव तं प्रत्यस्या अपि स ज्ञेयः। ध्यानेनैव कृत सः न तु प्रकटमिति तु विवेको द्वयोरपि नास्तीति ज्ञेयम्। संख्यादीनामपि राधासङ्गमार्थं दूत्यक्रिया तदनुरागकथनं वशीकारस्तत्सम्मत्याननयनं तदशाकथनमित्यादिकमपि ध्यानेनैव तथैवाभूदिति ज्ञेयम् अन्यथा तयाभिसारस्तस्यास्तदानीं साभिर्निष्पिद्येतैवेति भावः। एतच्च सर्वमनुरागिजनमात्राणस्वेच्छाकृतध्यानस्यापि सत्यत्वप्रदर्शनार्थमिति। मकरकेतनस्य प्रेमात्मककन्दर्पस्य चेतनया संविदा परिचायितं कृतपरिचयं यतः परिचायितं प्रदर्शितं च। चाय पूजानिशामनयोः १७१

ततश्च। उरूस्तम्भे प्रियसहचरीदत्तहस्तावलम्बा स्यन्देऽस्राणां पदविहरणे वर्त्मनो वित्तिशून्या। कम्पेनालीकरकिसलयं कम्पयन्तीति कृच्छ्रा-दायातापि प्रियगृहमहो हन्त निर्गन्तुमैच्छत् ॥ १७२ ॥

किंच। त्वरयति सखीवृन्दे मान्द्यं हठादवलम्बते चलति यदि वा किंचिद्भूयस्तरां विनिवर्त्तते। अपि हृदि समुत्कण्ठे वाम्यं मुहुर्वहिरीहते प्रकृतिकुटिलाः कामं वामा नवाः किल किंपुनः ॥ १७३ ॥

ततश्च। प्रणयसहचरीभिः प्रार्थनाचाटुवादैः प्रसभरभसया च प्रापिता कान्तगेहम्। अपरिचितरतश्रीसङ्गमानादराय व्यतनुत तनुमध्या ह्रीसखीसन्नियोगम्॥१७४॥

ततश्च। गच्छन्तीषु सखीषु गन्तुमनसः कृष्णेन पाणौ धृते तस्य स्पर्शरसादसारि मनसा तस्याः स्थितौ चेत्स्पृहा। मा यातेति मनोऽनुलापपिशुनैर्भ्रूभङ्गकैर्वारिताः प्राप्ताश्वासतयैव केलिभवनद्वार्य्येव सख्योऽभवन् ॥ १७५ ॥

ततश्च। कृष्णे पश्यति लोचने मुकुलयत्याऽऽपृच्छति स्वागतं तूष्णीमेव शृणोति संस्पृशति च स्वैरं परावर्त्तते। न त्रासादवहित्थया न च न तद्व्याजेन वा-

अस्राणां स्यन्दे क्षरणे सति पदविहरणे गमने वर्त्मनो वित्तिशून्या वर्त्मज्ञानरहिता १७२

त्वरयति समीपगमनार्थं त्वरां कुर्वति सति। समुत्कण्ठे सम्यक्उत्कण्ठावत्यपि हृदये ॥१७३॥

अद्यैव केवलमेकवारमेव-निजस्पर्शसुखमात्रममुष्मै वितरेति प्रार्थना मापरमन्येद्युरस्यान्तिकं कदापि त्वां प्रहिण्मः इति सशपथमुक्त्वा दयावति ! राधे ! अस्य व्याकुलतां वीक्ष्य क्षणं प्रसीदेत्यादिचाटुप्रसभरभसया हठवेगेन। रभसाशब्दष्टावन्तोऽपि कोषे दृष्टः। अपरिचिता या रतश्रीः सुरतसंपत्तिस्तत्कर्तृके सङ्गमे अनादराय तामवमन्तुं ह्रीर्लज्जैव सखी तस्याः सन्नियोगम् उत्तमाङ्गां व्यतनुत साङ्गीकारं विस्तृतवती। अयं भावः। रतश्रियमेतामहं न परिचिनोमि तथापि एता मत्सख्यस्तत्सङ्गमार्थमेव मां प्रहिण्वन्ति तस्मादहं साम्प्रतं मदनुकूलां लज्जामेव सखीत्वेन वृणोमि तन्निदेशेनैव रतश्रियमनादृत्य स्वत्वाम्यमाविष्करोमि इति ॥ १७४ ॥

गन्तुमनसः निर्गन्तुकामायास्तस्याः पाणौ कृष्णेन धृते सति तस्य स्पर्शवशात् प्रेष्ठस्य स्पर्शसुखमनुभूय तस्या मनसास्थितौ चेद्यदि स्पृहा असारि प्राप्ता तदा निर्गमाशक्तौ स्वहस्तरोधमेव हेतुं ज्ञापयन्त्याः तस्या मायातेति हे ! सख्यो ! मामस्य हस्ते निक्षिप्य मा वहिर्गच्छतेति यो मनोऽनुलापः मनसैव पुनः पुनर्भाषणं तस्य पिशुनैः सूचकैः। अनुलापो मुहर्भाषेत्यमरः। प्राप्ताश्वासतयैवेति कृष्णकर्तृकहस्तरोधे तस्याः स्वदोषपिधायिनीं स्पृहामनुमायेति भावः। तथापि किंचिद्दास्यसाहाय्याय भवनस्य द्वार्य्येव नव्यन्तः ॥ १७५ ॥

लोचने स्वनेत्रे मुकुलयति मुद्रयति। आङि नुप्रच्छोरित्यत्राक्रोशानुज्ञयोरेवाभिधानात्तात्मनेपदम्। शृणोति न तु प्रतिवक्ति। संस्पृशति निर्गमशङ्कया वामपाणिना धृतदक्षिणहस्ताया एव तस्याः कञ्चुलिकादिकं दक्षिणेन पाणिना स्पृशति सति परावर्त्तने तदसहिष्णुतयेव किंचित्स्वाङ्गमाविष्कृत्य निवृत्ते इत्यर्थः। न त्रासादिति तद्विरोधिनो हर्षस्य प्रावल्यदर्शनात्।

न्येन वा बालानामभिलासवत्यपि हृदि प्रायः स्वभावो हि सः॥ १७६ ॥

ततश्च । उपनमयति यद्यत् प्रातिकूल्यं नताङ्गी प्रभवति किल यत्तत्कृष्णकौतूहलाय । रसयति हि पदार्थो दुर्लभस्तावदेव व्यभिचरति तदीयं दुर्लभत्वं न यावत् ॥ १७७ ॥

किंच। आलिङ्गितुं कृतमतौ दयिते नतभ्रूरुत्थाय गन्तुमभिलष्यति केलितल्पात् बाला तथाप्यजनि तस्य मनःप्रसादे सान्निध्यमेव हि मणेस्तमसोऽपहृत्यै॥१७८॥

एवं च सति । आलीनां शपथैर्हरेरनुनयव्याहारमन्त्रैश्च नो कन्दर्पस्य च नैव वैभववतो बाणेन यन्निर्ममे । विद्युद्दामघटाकटाक्षकटुभिः क्रोधोर्जितैर्गर्जितैरेकामौढसखीव कण्ठमनयत्तां तस्य कादम्बिनी ॥ १७९ ॥

ततश्च । परमदुरासदत्वेन रासदत्वेन चापि मनसा न साधयितुमर्हामर्हामकस्मात्कस्मादपि केनापि करे निहितां हितां सुधाकरकलामिव ॥ १८० ॥

अकृतकामनागनाघ्रातां मधुकरेण करेण समाक्रष्टुमशक्यामशक्यापवारणां परि-

अवहित्थयेति बुद्धिपूर्वकत्वाभावेनैव सहसैव तत्तच्चेष्टोद्गतेः । न व्याजेनेति प्रयोजनान्तरसापेक्षत्वानुपलम्भात् । न वाम्येनेत्यसम्मति बहिरभिव्यक्त्यापि तत्र रसबाधनत्वोल्लासनाविष्कारात् प्राय इति तादृशसन्नायिकानामेव न तु सर्वासामिति ॥ १७६ ॥

रसयतीति यदि प्राकृतस्यापि पदार्थस्य रसदत्वंदुर्लभतायां सत्यां तदा किंपुनरप्राकृतस्य सुखैकमयस्यास्य पदार्थस्य सुलभत्वेपि सदा रसयतो दुर्लभतायामित्यभिप्रायः ॥ १७७ ॥

नतभ्रूः कुटिलभ्रूः ॥ १७८ ॥

आलीनां शपथैरिति हठनि! राधे! यद्यतः परं वामा भवसि । तदस्माकं शिरसां शपथोऽस्तु ते इति । अनुनय इति प्रियतमे! स्मरगरलेन जाज्वल्यमानहृदयोऽस्मि क्षणं परिरम्भसुधया जीवय मामिति । मन्त्रैरिति ततश्च विचित्रचन्दनकञ्चुलिकादिकं निर्मायकौशलेन त्वामपि विस्मापयामि अलमत्र नेपथ्यभङ्गवैमनस्य व्यञ्जनयेत्यामन्त्रणैः । कादम्बिनी मेघमाला ॥१७९॥

ततश्च तां परिरभ्य परितस्तुष्टया व्रजराजयुवराजेन रराजे इत्यन्वयः । परमदुरासदत्वेन अतिदुष्प्रापत्वेन । रासदत्वेन रासं रससमूहः स्वार्थे अणि । रस एव वा रसनं रासः आस्वादनं वा । तद्दायित्वेन मनसापि साधयितुम् उपार्जयितुं नार्हां न योग्याम् अत्यसंभवे वस्तुनि मनोरथस्याप्यगतेः । अर्हां माननीयाम् अकस्मात् अतर्कितमेव । कस्मादप्यनिर्वाच्याद्धेतोः । सुधाकरकलामिति वैकल्यातिमिरध्वंसित्वेन चेतश्चन्द्रकान्त द्रावकत्वेन कामसंज्वरोपशमकत्वेन साहजिक-सौन्दर्येण उत्प्रेक्षा ॥१८०॥

न कृता केनापि कामना यस्यामिति । कस्ततत्क्षे । अदत्तकामनेन परिपूर्णसारान् रागाद्यै स्वहमेव । मधुकरेण अनाघ्रातामिति परागमकरन्दाभ्यामविप्लुतामित्यर्थः । पक्षे नरस्य पतिभाग्येनाननुभूतमाधुर्य्यकलाम् । समाक्रष्टुमशक्यामिति पतिभाग्यवत्त्वामित्यर्थः । पक्षे

मलमलयीपांसमादधानां मादधानां कामपि सुरतरु-कुसुममाला-मालापमन्तरेणापि केनापि कण्ठे निहितामिव ॥ १८१ ॥

परमाह्लादरभसाधारांसुधारां सुधारसस्येव केनापि नापि लपित्वा वक्षसि निक्षिप्तामिव ॥ १८२ ॥

अकपटपटद्दति-साध्वस-साध्वऽसदभिक्षोभलुलितामधिकण्ठमनुत्कण्ठमनायत्ति वशात्कृतावलम्बामलं वामलक्ष्मीकेन भुजवलयेन जवलयेन तं समयमारभ्य परितस्थुषा व्रजराजयुवराजेन रराजे न रसादपरं परं विविदे च ॥ १८३ ॥

तामथ कृष्णेन सह सहचर्यो हसितोत्कटाः कटाक्षविक्षेपेण पश्यन्त्य. श्यन्त्यश्च स्वममानस्यं मानस्यं चाभिलासं सफलमिव मन्यमाना मानातीतसम्माननयाजलधरोर्जितगर्जितगरिमाणं स्वसखीं श्रावयित्वा श्रावयित्वा स्वसंकोचं पूजयामासुः १८४

धन्योसि घनरसद रसद एवासि त्वमुचित एव चित एवमस्य तव वर्णमित्रस्य नवकमलिनीवृन्दारिकावृन्दानां मैत्रीकरणेन यदियं मे दुराराधाऽपेदुराराधा हुङ्कारमात्रेणैव कृष्णकण्ठं मापितास्ति भवताऽवता परमसौभाग्यम् ॥ १८५ ॥

इति सखीजन-सोत्प्रास मास विद्धहृदयेव भयोपरमे परमेणाऽऽग्रहेण तदुरसो रसोदधेरिवापि वहिर्विभूषया भूषयामास यदि स्वमात्मानम् ॥ १८६ ॥

पतिम्मन्यस्य करस्पर्शमात्रेणाप्यशक्याम । अपवारणमाच्छादनम् । परिमलमामोदम् । मादो हर्षस्तस्य धानामर्पयित्रीम् । सुरतरुकुसुममालामित्यखिलवाञ्छितसंपादकत्वेन सुखस्पर्शदत्वेन क्षपयमानालिङ्गनसौष्ठवसभाजनत्वेन विशिष्टसौन्दर्य्याधायकत्वेन च । आलापम् अर्पणवाक्यम् १८१

परमाह्लादस्य रभसं वेगम् आ सम्यग् धारयतीति स्वार्थण्यन्तात् पचाद्यच् ताम् । सुधारामिति निरतिशयास्वादाधायकत्वेन वैपरीत्येन पञ्चामघटकाक्षरद्वयशाप्यत्वेन च ॥ १८२ ॥

अकपटं निर्व्याजमेव पटता भीरुतया भीरुतया प्राप्नुवता अतिसाध्वसेन हेतुना साधु यथा स्यात्तथा असद्विश्वासजन्यत्वात् अभद्रैर्मिथ्याभूतैर्वा अभिक्षोभैर्लुलितां मर्दिताम् । अत एव अनायत्तिरधीनता तद्वशादपि अनुत्कण्ठं विनाप्युत्कण्ठं कण्ठे कृतोऽवलम्बो यया ताम् । अलमत्यर्थम् । वामा मनोज्ञा लक्ष्मीः शोभा यस्य तेन भुजमण्डलेन । कीदृशेन । जवस्य वेगस्य लयः मिलनं यत्र तेन । रसादानन्द जाड्यादपरमन्यत् न विविदे न ज्ञायते स्म ॥ १८३ ॥

स्वम् अमानस्यं दुःखं श्यन्त्यः खण्डयन्त्यः। मनसि भवं मनसे हितं वा मानस्यम् । मानं परिमाणं सदतीत । अपरिमितया सम्माननया स्वसंकोचं श्रावयित्वा गमयित्वा । श्रु गतौ साम्प्रादिगपि ॥ १८४ ॥

तव वर्णमित्रस्यास्य मैत्रीकरणेन कर्त्रा त्वं चितः व्याप्तः । चितं ग्रथिते व्याप्तमिति मेदिनी। कमलिनीवृन्दारिकाः श्रेष्ठकमलानि श्रेष्ठसुन्दर्य्यश्च । वृन्दारकनागकुञ्जरैः पूज्यमानमिति समासः मित्रस्य सूर्य्यस्य सत्पुरुषश्च । मम इयं सखी राधा । मे इति जात्या एकवचनम् । दुराराधा दुःसाध्या पुनः । अपेदुरा अवचरकत्वात् कठोरेत्यर्थः ॥ १८५ ॥

ततः सा तदुरसो वहिर्विभूषया याम्याशिक्षारेण यदि स्वमात्मानं भूषयामास तदा कृष्णेन प्रसभेन हठेन तस्याः कपोलचुम्बनादीनि कृतानीत्यन्वयः । प्रासः कुन्तनामा अस्त्रभेदः १८६

तदा मसभेन सभेन ग्रहविशेषेणाशेषेणामोदेन कृष्णेन च तस्याश्चित्रित-लतोपवनानीव न जातपत्राङ्कुरभङ्गानि कपोलचुम्बनानि ॥ १८७ ॥

यमुनाजलानीव कज्जलशोभाग्लानिकराणि नयनचुम्बनानि ॥ १८८ ॥

भक्तिरस रसिक हृदयमिव समक्षतयाऽवकरागमधरपानम् ॥ १८९ ॥

द्वितीया हिमकरलेखेव अलक्ष्यमाणलाञ्छना दशन नख पद--पदवी ॥१९०॥

सुप्रतिष्ठितशिवलिङ्गसम्माननमिव सदामोदकर-कमलपूजन-जनित-परभागं स्तनयुगपरामर्शनम् ॥१९१॥

शुक्तिसंपटा इवाक्षुण्णमुक्तावलीकाः परिरम्भाः ॥१९२॥

विषम विषधरीधारणमिव साहसमात्रप्रतिपादकं रोमलतापरिशीलनम् ॥१९३॥

तीर्थसलिलमिव स्पर्शमात्रेणैव कृतार्थम्मन्यताकारिनाभिहृदपरिसरकरमदानं मोक्ष इव परमदुःशको नीविमोक्षश्च कृतानि ॥१९४॥

ततस्तस्या अपि प्रक्षेव नेति नेति निषेधसिद्धवचनं तडिदामेव उत्पद्यैव लीयमानं कटाक्षविक्षेपणं गिरिनिर्झरजलमिव उत्सवाहितादरास्रवत् विलोकितम्१९

गोवर्द्धनसानव इव स्वन वाचाल-मणिकटकाः करकम्पाः ॥१९६॥

. वर्षाशिखरीव अभङ्गुर-पयोधरः प्रतिपरिरम्भः ॥१९७॥

---

सभेन सदीप्तिना । ग्रहविशेषेण सुरततन्त्रोक्तवेणीचिबुकादिधृतिविशेषेण । अशेषेण संपूर्णेन । न जातः पत्राणाम् अङ्कुराणां भङ्गो यत्र तानि । पक्षे । पत्राङ्कुर आकल्पभेदः । मुग्धालक्षणनायिकायामतिभीरुत्वस्वभावायां प्रथमसंभोगस्य तथौचित्यात् । तस्या मध्याप्रगल्भयोरिव संभोगगाढत्वासहिष्णुत्वात् ॥ १८७ ॥

· कज्जलशोभाया ग्लानिकराणि । पक्षे । अग्लानिकराणि ॥ १८८ ॥

समक्षतया प्रत्यक्षतयैव । अवकरैर्दोषैरगम् अगम्यम् गमेर्डःकर्मण्यपि बाहुल्यात् । यद्वा अवकरान्नगच्छति न प्राप्नोतीति तथा । पक्षे सम्यगक्षतो यावकरागोऽपि यत्र तत् ॥ १८९ ।

लाञ्छनं कलङ्कं चिह्नं च । अधरे दशनस्य स्तनयोर्नखराणां यत् पदं चिह्नं तस्य पदवी पद्धतिः ॥१९०॥

सदामोदकरैः कमलैर्यत् पूजनम् पक्षे सदामोदं यत्करकमलं तेन पूजनं स्पर्शस्तेनैव जनितः परभागः शोभा यस्य तत् ॥१९१॥

अक्षुण्णा अनपनीता पक्षे अच्छिन्ना मुक्तावली येषु ते ॥१९२॥

रोमलतापरिशीलनं स्तनाधःआरभ्य रोमावलीवर्त्मना करचालनम् ॥१९३॥

कृतानीति कृतश्च कृताश्च कृतं च कृतानि। नपुंसकमनपुंसकेनेत्यादिना नपुंसकत्वम्१०।

· नेतिनेतीति स्तारम्भो कदाचेति किंचिदसहिष्णुताभ्यञ्जनाय । उत्सवेत्यादि स्तनद्वन्द्वे प्रस्रवणे वाहितं च तत् अदरअनल्पं यथा स्यात्तथा स्रवतीति तत् । उत्सः प्रस्रवणनिर्झरः । पक्षे । उत्सवेन आहितमर्पितम् आदरास्रम् अनल्पास्रं तद्वत् सद्युक्तम् ।१९५।

कटकं गिरिनितम्बो वलयं च ॥१९६॥ प्रतिपरिरम्भः श्रीराधाकर्तृकः ॥१९७॥

मलयानिल इव मृदुस्पन्दः। वसन्तदिनकरातप इव दरघर्मकीलालः। किसलयकलाप इव मृदुलीलाकरकम्पः। तडा[1] इव विपुलकभङ्गश्च देहः समजनि १९८

ततश्च दूरादालोकयन्तीनामालीनामालीनानां द्वारोपकण्ठे कण्ठेगृहीतां कृष्णेन तां नतां ह्रीभरेण निर्भरेण निर्भातां प्रियवयस्यां वयस्याञ्जस्येन नूतनतया प्रगाढरसासहे स्थितामनवस्थितामनवधानपरां प्रियतमाग्रहे ग्रहेण केनापि अभिभूतामिव कश्चिदालाप आसीदितरेतरम् ॥१९९॥

यथा। अयमयं सखि! भाति किशोरयोर्नवकिशोरवरः सुरतोत्सवः। अयमिह प्रतिपत्तिविमूढतां गत इव प्रतिभाति मनोभवः ॥२००॥

अस्यास्तु चिरमनोरथ एष चिरात् फलन् फलभरेण मनो व्यथयन्निव। अहह! दुःसह एव भवत्यहो! सुखतयापि च दुःखतयापि च ॥२०१॥

ततश्च स्वकृतापसरण-रण-श्रमादेव प्रबल-बलमानश्वासां शिथिलकचहस्तां हस्ताम्बुजेन दधतीं श्लथमानां नीवीं नीवीं यथा त्रुटितैकावलिकावलिकामऽस्तव्यस्तामिव सतृष्णेनापि कृष्णेनापि कृतरतोपरमेण परमेण प्रणयेन निबद्धे केशपाशे पाशेन निबद्धायां नीवौ ग्रथिते च तारे हारे हापिते च करकमलेनामलेनाम्बुनि घर्मजे नर्मजेन वचसा सरसीक्रियमाणामवलोक्य सहचर्य्यः सह चर्य्यया प्रणयस्मितनिरीक्षणरूपया क्षणरूपया कृष्णकथया पुरत उपतस्थिरे ॥२०२॥

---

मृदुस्पन्द इत्यादि रतोपान्ते। मृदुस्पन्दो मन्दगतिः जातस्तम्भभावश्च। दरघर्मकीलालः ईषत्घर्म्मजलकणकः जातस्वेदभावश्च। मृदुलीलानां विलासानामाकरः येन तथाभूतः कम्पो यत्र सः पक्षे मृदुलीलया करकम्पः हस्तगतकम्पभावो यत्र सः विपुलः कस्य जलस्य भङ्गस्तरङ्गो यत्र सः। पक्षेविशिष्टौ पुलकस्वरभङ्गौ यत्र सः ॥ १९८ ॥

द्वारस्य उपकण्ठे समीपे आ ईषत् लीनानां निह्नुतवतीनां तां राधां ह्रीभरेण लज्जातिशयेन नताङ्कुञ्चनपराम् वयसि नवयौवने अञ्जसा इत्यस्य भाव आञ्जस्यं तेन अनवधानपरां आनन्दमत्ताम् प्रियतमस्य आग्रहे रमणाग्रहे सति अतिवाम्यसाधकेन केनापि ग्रहेण पराक्रान्तामिव॥१९९॥

सुरतोत्सवोपि नवकिशोरवरः प्राप्तप्रथमयौवनारम्भमात्रः। अतस्तादृशमनोभवोऽपि प्रतिपत्तिविमूढतामिव गतः आनन्दजाड्यं प्राप्त इव ॥२००॥

सुखतयापीति फलन् सन्। दुःखतयापीति पूर्व्वदशायाम् अफलन् सन् अतःसदैव दुःसह एवैष भवतीत्यर्थः ॥२०१॥

स्वेनैव कृतम् अपसरणं पराजित्य पलायनमिव यत्र तथाभूते रणे सुरतसंग्रामे यः श्रमस्तस्मात्। कचहस्तः केशसमूहः। पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् पर इत्यमरः। नीवीं यथामूलधनमिव। स्त्री कटिवस्त्रबन्धेऽपि नीवी परिपणेऽपि च इत्यमरः। त्रुटिता एकाळीनामावली श्रेणी यस्यास्ताम् उभयत्रैव प्रियत्वादनुकम्पायां कः प्रत्ययः। कृष्णेनापि कृषशब्दश्च सत्तार्थोणश्चानन्द इत्यर्थवशादानन्दप्रदेनापि तारे मुक्तामये घर्मजे अम्बुनि करकमलेन हापिते दूरीकृते सति प्रणयादिरूपया चर्य्यया आचरणेन क्षणरूपया उत्सवभूतया२०२

---

1 फेऽण इति हस्तलेख।

स्थिरेव किंचिदथ सा विधुमुखी नतमुखी न तदाननानि पश्यन्ती पश्यन्ती च भ्रुकुटिकुटिलेन कटाक्षेणान्तरान्तरा ताभिरथोचे ॥ २०३ ॥

एहि सखि। गृहं यामो यामो ह्यऽवशिष्यते शिष्यतेह विरमतु रतिकलागुरोरस्य गुरोरस्यरहस्यशिक्षायाम् ॥ २०४ ॥

किमपरं विलम्बसे लम्बसे वा न कथं केलितल्पादिति सपरिहाससहासभाषिणीः स्वसखीः कपट-पटद्भ्रकुटि कुटिलाक्षमलसलसता भुजामृणालेन केशकलापसौरभ्यगर्भकेण गर्भकेण ताडयन्तीडयन्तीव स्वलावण्यविशेषमशेषमनारतं कृष्णस्य मनसा न सारस्यमुचा कृतकृतकरुषा परुषापि परमसरसमनाः ॥ २०५ ॥

मनाक् स्मित्वाऽस्मि त्वादर्शीनामादर्शीनामीहितकापथ्यनाथ्यनायिकाक्रीडाशालभञ्जिका भञ्जिका स्वाधीनतायाः किलाहं यदा यदालपथ विपथ विशिष्टपथयो रथ योग्यं तदेव देवतावाक्यमिव करवाणि किमिति मां संप्रति संप्रतिपत्तिमूढां कुरुथ । कया वात्रागतं कया वा न गम्यते । इति कोमलालापेन यदि किंचिदुक्तवती ॥२०६॥

तदा तदाकर्णनेनापूर्वेणसंतापच्छिदुरदुरवापमोदमेदुरदुरवस्थितमनाः कृष्णः शुभवतीनां भवतीनां प्रसादतःसादतः किलाहं विमुक्तोऽस्या वचनसुधासुधारापरिशीलनेनेति वदन् पारितोषिकमिव ताभ्यो जनं जनं प्रति प्रतिपक्षप्रणयः प्रणयति स्म परिष्वङ्गं यदि ॥ २०७ ॥

तदा तदालोच्य चेतसा चेतसारस्या वचसा च सा परिहासवता सवता पीयूषशीकरानिव किमपि मन्दमधुरं मधुराङ्गि निजगाद ॥ २०८ ॥

तासामाननानि न पश्यन्ती कुतः नम्रमुखी प्राप्तसंभोगत्वेन सलज्जेत्यर्थः । अन्तरा अन्तरा पश्यन्ती च भ्रुकुटिकुटिलेनेति भवतीभिरेवास्य हस्ते बलान्निक्षिप्ताया मम सतीव्रतध्वंसनकृतमिति भावः ॥ २०३ ॥

यामः प्रहरः । शिष्यता शिष्यत्वम् । गुरा उद्यमेन । गुरी उद्यमे भावे क्विप् । उरस्यम् उरसि भवं यद्रहस्यम् आलिङ्गनप्रत्यालिङ्गनादि तस्य शिक्षायाम् ॥ २०४ ॥

कपटेन पटन्त्या प्राप्नुवत्या भ्रकुट्या कुटिले अक्षिणी यत्र तद्यथा स्यादेवम् केशकलापस्य सौरभ्य गर्भे यस्य तेन गर्भकेण माल्येन । केशमध्ये तु गर्भकः इत्यमरः । कृष्णस्य मनसा प्रयोजककर्त्र्या ईडयन्ती च स्तावयन्ती च स्वलावण्यविशेषम् तदानीं सखीताडनचेष्टोत्थम् अशेषं सम्पूर्णम् । न सारस्यमुचा सरसतामुञ्चन्त्या कृतया कृत्रिमरुषा परुषा कठोरापि ॥ २०५ ॥

क्रीडाशालभञ्जिका खेलनपुत्तलिका अस्मि । स्वाधीनतायाः स्वातन्त्र्यस्य भञ्जिका स्वयमेव नाशकर्त्री । कुत एतदियता आह यदेति ॥ २०६ ॥

संतापानां छिदुरो दुरवापो दुर्लभश्च मोद आनन्दस्तेन मेदुरं सान्द्रस्निग्धम् अतृप्तिवशाद्दुरवस्थितं च मनो यस्य सः । सादतः संतापात् ॥ २०७ ॥

चेतसा च मनसापि । इतसारस्या प्राप्तरसा । वचसा च वाक्येनापि सा राधा । परिहासेन । पीयूषशीकरान् सवता उत्पादयता । षु प्रसवैश्वर्ययोरिति भौवादिकोऽयम् ।२०८।

अधुना गलितहृदूपणा दूपणाभाववत्यो भवत्यो भवन्ति नापरं परिहसिष्यन्तीति २०९
ताश्च कृष्णाङ्गसङ्गमनिर्वृत्तिनिर्वृतिभाजो निजसखीसुखमीक्षणसमनुभूतमपिभूतमपि वर्त्तमान मिव पुनरात्मानुभवेन विदांचक्रुः ॥ २१० ॥

अथ सा विभावरी विभा-वरीयसी भूत्वापि यामावशेषतयैव सदोषा दोषा-रूपामपि समाससाद ॥ २११ ॥

ससादतया यतस्ताः मियसखीमादाय कृष्णभवनान्निजभवनं समासेदुः २१२

अथ विभातायां विभावर्य्यां विभावर्य्यां श्यामामागतां वीक्ष्य वीक्ष्यमाणेना-त्मनोऽन्यभावेन विस्मितां स्मितांशुधौताधरामधोमुखीं विधुमुखीं विधुरिता हि-या यदि बभूव ॥ २१३ ॥

तदा श्यामापि मापित-नवर-नवरमणीय-कृष्णाङ्गसङ्गसङ्गतपारभाग्याऽपारभा-ग्याम्भोधिमात्मन एव जानती न तीव्रं किमपि पप्रच्छ ॥ २१४ ॥

अयि ! कस्मादकस्मादस्मदालोकेन लोकेन नानुभूतांभूताण्डवकारिणीमिव दशां दधत्या विलक्षण-लक्षणयाऽपत्रपया कलाकलापविचक्षणे ! चक्षणे तव हृदयम् २१५

किंच । अलसवलितमङ्गं स्वावसादं व्यनक्ति ग्लपितमिव मृणालीकन्दलं दो-र्द्वयं ते। दशनवसनमेतन्नीरसं गण्डपाली लुलितललितपत्रा मकपः कस्तवैषः २१६

किंच । अभिनवलतिकेव वातरुग्णा नवनलिनीव मतङ्गजेन भुग्ना । मृदुतर-नवमालिकेव धूता मदमधुपेन विलक्ष्यसे त्वमद्य ॥ २१७ ॥

ऊपणं पीडा । ऊप रुजायाम् । गलितमनःपीडा इत्यर्थः ॥ २०९ ॥

कृष्णाङ्गसङ्गमेन निर्वृत्तिरानन्दः तस्या निर्वृतिरनावरणम् तद्भाजः भूतमपि अतीतमपि व-र्त्तमानमिवेति ईदृशं सुखमेतत् मत्सखी एव अधुनापि प्राप्नोतीत्याशास्तिर्द्योतिता ॥२१०॥

विभावरी रात्रिः विभया कान्त्या वरीयसी श्रेष्ठा भूत्वापि यामस्य एकप्रहरमात्रस्यैवायामोऽवशेषो यस्यास्तत्तया सदोषा दोषयुक्ता दोषारूपां दोषेति नाम ॥ २११ ॥

यतो हेतोस्ताः सदयः ससादतया मावसादत्वेन २१२ श्यामां कीदृशीम् विभया वर्य्याम् २१३

मापितं मानं मा प्रमा ताम् आपितम् । नवर केवलम् नव रमणीयस्य कृष्णस्याङ्गसङ्गा-त्संगतं मिलितं पारभाग्यं परभागो यया स । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । न तीव्रं किं तु कोमलमित्यर्थः ॥ २१४ ॥

अस्मदालोकेन सतैव अपत्रपयाऽलज्जया तव हृदयं चक्षणे । क्षणु हिंसायाम् हतं बभूवे-त्यर्थः । कीदृश्या । भुवः पृथ्व्याश्चलोकनामस्यैव ताण्डवकारिणीं हर्षनाट्यकारयित्रीमिव दशां दधत्या धारयन्त्या । तत्र हेतुगर्भसंबोधनम् । हे कलाकलापविचक्षणे ! इति ॥ २१५ ॥

नीरसं नीरागम् ॥ २१६ ॥

वातरुग्णेत्यङ्गरिन्यासानामलस्यमन्तता म्लानता च । मतङ्गजेन भुग्नेति दशनक्षता-नादि । मदमधुपेन धूतेति स्वनायकसाधारणंभोगकौतुकं सूचितम् ॥ २१७ ॥

अयि ! चिरमभिलष्यमाण एव प्रणयिनि ! कोपि सुदुर्लभो हि लब्धः । अथ कथमियमन्यथाऽस्मदादेः फलितवती सखि ! भाग्यकल्पवल्ली ॥ २१८ ॥

इति प्रणयपरंहसाऽदरसादरसाहसाधुवादेन पृच्छ्यमानाऽऽच्छद्यमानाय्य मनसि न सिद्धकपटा पटान्तेन मुखमावृत्य सादरविस्मितं सादराविस्मितं निजगाद २१९

श्यामे किं ब्रवीषि । काहं स्थिता क चलिता क च वा स पन्था नीतास्मि केन नलिनाक्षि ! तदीयपार्श्वम् । किं वा बभूव मयि तत्र समेतवत्यां जानाम्यहं यदि तदा भवती न वेत्ति ॥ २२० ॥

किंच, व्यापारो मनसश्च यत्र न गतः संभावनाभावतो यत्स्वप्नः किमथेन्द्रजालमथवा भ्रान्तिः सुदीर्घैव मे । तत्किं ह्लादि किमार्त्तिदं किमु भयं किंवा न तन्नापि तच्चेतो विद्रुतिकारकं च मनसो मूर्च्छाकरं चाभवत् ॥ २२१ ॥

अथ सपरिहासं हासं हासमेवाह श्यामा श्यामाञ्जनयने ! नय नेयमेतत् । तथाहि । केली कलाध्ययनकौशलमेकदेव न स्यादतः किमपि नो भवती विवेद भूयस्ततः सखि ! विलासगुरोःसकाशाद्यत्नादधीष्व यदि विज्ञतमाऽसि भूष्णुः २२२

फलितवतीति कृष्णेन तत्र संभोग एव तस्याः फलं तच्चानुभवसाक्षात्कारित्वात् प्रत्यक्षं जातमित्यर्थः । कल्पवल्लीत्यखिलवाञ्छितपूरणात् ॥ २१८ ॥

अदर अनल्पम् आदरसाहसाभ्यां च सहितं यथा स्यात्तथा साधुवादेन पृच्छ्यमाना सती मनसि आच्छद्यम् अच्छलतां वञ्चनराहित्यलक्षणाम् आनाय्य संगमय्य यतो न सिद्धकपटा सर्वमेव ज्ञातवत्यां तस्यां कपटासिद्धेः । सादरविस्मितम् आदरविशिष्टस्मितसहितम् सा राधा अदरविस्मितम् अनल्पविस्मययुक्तं च यथा स्यात्तथा हन्त ! कथमनया सर्वमेवाभिज्ञातमित्येवम् । यद्वा आदरविस्मयाभ्यां सहितं यथा भवति । अदर अनल्पा वीः कान्तिर्यत्र तादृशं स्मितं यत्र तच्च यथा स्यात्तथा ॥ २१९ ॥

तदा भवती न वेत्तीति भवत्या अनुमन्त्रणं विना मम कोपि व्यापार कदापि नाभूदेवेत्यत्र भवत्येव प्रमाणमिति भावः ॥ २२० ॥

असंभावितवस्तुदर्शनलिङ्गेनाह स्वप्न इति । तस्यापि जागरणदशानुत्पत्तिमाशङ्क्याह इन्द्रजालमिति । तस्यापि चिरास्थायित्वमाशङ्क्याह सुदीर्घा भ्रान्तिरिति । तदातिसुरतचेष्टितं ह्रिया स्पष्टं वक्तुमशक्तेः । किं ह्लादि आह्लादकम् पौर्वकालिकनिखिलदुःखप्रशमनपूर्वकानिस्तुलसुखदत्वेनानुभवात् । किम् आर्त्तिदं पीडादायि औत्तरकालिक्या महोत्कण्ठायाः कारणभूतत्वेनाऽधुना विचारतो दुःखदत्वेनैवानुभूतत्वात् । किं वा उभयम् आह्लादार्त्योर्दायकम् । तदानीमप्यपरिमितसुखानुभवतदुत्कण्ठानुभवयोर्दुर्वारत्वात् । न तन्नापि तत् न ह्लादि नाप्यार्त्तिदं चेत्यर्थः तदेवापि उत्कण्ठाबाहुल्येन ह्लादांशावरणान्त ह्लादबाहुल्ये । न च उत्कण्ठावरणादिलेशं च निःशङ्कुमशक्नुवती केवलमनुभवमात्रम् आह चेत इति ॥ २२१ ॥

हासं हासं हसित्वा हसित्वा । नये नीतौ नेयं नेतुमर्हम् एतत्वद्वचनं नाप्यमेवेत्यर्थः । न विवेद नाज्ञासीत् । भूष्णुर्भवित्री ॥ २२२ ॥

अथ सौभाग्यसाराधिका सा राधिका सरसतरं सतरङ्ग-रङ्गवतीव किंचिदुवाच मातः परं सुमुखि!यामि तदीय-पार्श्वे दूरादसौ नयनवर्त्मनिवर्त्तनीयः। अध्येतु नाम भवती तत एव तत्ते पाण्डित्यमेव मनसो रसदं मम स्यात् ॥२२३॥

तदा तदाचक्षाणायाः सपरिहसित-हसित-सित किरण ज्योत्स्नास्नपिते दशनवाससि ललिता ललितात्तरं निजगाद। उचितं चितं हि तत्रभवत्या भवत्या रसपाठोपदेशेन ॥२२४॥

किंतु शिष्यायितम् प्रथममत्र यया तदीय भङ्गे मयातु पठितुं कथमन्यशिष्या तेनाऽनयासह कृशोदरि! दीर्घमेवमध्येतुमर्हसि विलासगुरुं तमेत्य ॥२२५॥

इत्येतस्मिन्नेव कालेऽकालेरितां वात्यामिवागतां कदूकृताननां ननान्दरमभिवीक्ष्य सर्वासु चकितासु तासु प्रतिभा-प्रतिभासमानेव ललितैव शिष्यायितं प्रथम मित्यादि पादत्रयानन्तरमनन्तरभसादेवमध्येतुमर्हसि विधायगुरूपसत्तिमिति यदा पपाठ२२६

पाठस्वरमुपश्रुत्य सा मुखरा मुखरागमासामालोक्य वितर्कयन्ती निजगाद ललिते! किं शिक्षयसि ॥ २२७ ॥

साऽऽह गुरुपसत्तिम्। साप्याह ,शिष्यायितं प्रथममेवेत्यादेःकोऽर्थः। साह प्रथममनया गुरुजनेन यदुक्तं तद्गृहीत्वैव भङ्गो दत्तः। एकाकिसाध्यं न तदित्यनया सार्द्धं तदध्येतुमर्हसीत्युक्तम् ॥ २२८ ॥

साप्यथाह। ललिते! कथमधुना परलोकालोकाय समुत्सुकाऽसि। श्यामाह। मायालयमेषा परलोकाय समुत्सुका च। तत् कथमधुनेत्युच्यते॥ २२९ ॥

सतरङ्गरङ्गवतीवेति श्यामापरिहारासुधांशूदयमुपलभ्य तस्या रङ्गसिन्धुरुच्छलित इवेत्यर्थः. असौ नयनवर्त्मतः सकाशात् निवर्त्तनीयः। ततो विलासगुरोः सकाशात् तत् तरगात् भव-त्येव अध्येतु स्मरतु पुनः पुनरावृत्त्याभ्यस्यत्वित्यर्थः। इक् स्मरण इत्यस्य रूपम्। ततश्च विस्मरणशीलाया मम तेनापि पुनरपि तादवध्यमेव भविष्यति। अतो भवत्या मेधाविन्या एव तत्राधिकार इति भावः। ततश्च ते तवैव पाण्डित्यम् मम मनसो रसदं स्यात्। सौहार्दादेव्याद्देवेति भावः ॥२२३॥

तत् प्रतिवचनम् आचक्षाणायाः कथयन्त्यास्तस्याः सपरिहसितं यद्धसितं परिहासहसितं यद्धसितं हास्यं तदेव सितकिरणश्चन्द्रस्तस्य ज्योत्स्नया स्नपिते सति दशनवाससि अधरे ललिता निजगाद राधां प्रतीत्यर्थः। उचितं चितं योग्यमेव प्रस्तुतमित्यर्थः ॥२२४॥

तदीयभङ्गे तत्कर्तृके भङ्गे सति स्वाध्ययनस्येत्यर्थः। अन्या चासौ शिष्या चेत्यन्यशिष्या अनया श्यामया ॥२२५॥

न विद्यते अन्तो नाशो यस्य तथाभूतात् रभसात् भयेनाप्यऽनष्टपाठस्वरवेगादित्यर्थः २२६

मुखरा अतितीक्ष्णस्वभावा। मुखरागं मुखासक्तिम् ॥ २२७ ॥

गुरुजनेन हितोपदेष्टृश्वश्र्वादिगुरुभ्भीजनेन। भङ्ग इति भञ्जनक्रियापेक्षयैवकर्तृकाले क्तप्रत्ययः२२८

परलोकालोकाय परपुरुषदर्शनाय। परलोकाय स्वधर्मप्राप्यस्वर्गादिलोकाय समुत् सानन्दा। युक्ता विवेकवती ॥ २२९ ॥

साह । श्यामे ! न जानासि श्यामानुरागिण्यः खल्वेताः । श्यामाह । अयि ! सुमतिसिद्धमेवैतदाबाल्यमेवैतासां मय्यनुरागित्वम् ॥ २३० ॥

साह - श्यामे ! कृष्णपक्षपातिकलाः सकलाःसर्वदैताः ॥२३१ ॥

श्यामाह । नाप्येतत् न हि कृष्णपक्षपातिन्यः कलाः सर्वदा चित्रभास्वराःस्वरागता इव शोभन्ते ॥ २३२ ॥

साह । कृष्णवर्त्मगाः किलैताः। श्यामाह । क्व तावदत्र कृष्णावर्त्मा स तु कालिंयदमनेरजन्यामेव प्रबुद्ध आसीत् ॥ २३३ ॥

साह । श्यामे ! मां परीक्षसे । पीताम्बरानुरागिण्यो ह्येताः । श्यामाह ! मा हठकारिण्येवं वादीः । प्रत्यक्षविरुद्धमेतद् । नीलारुणाम्बरप्रियाः खल्विमाः । साह । श्यामे ! व्रजराजतनये श्रद्धावद्धा बहुधैवैताः प्रतीयन्ताम् । श्यामाह । अत्यलीकमेतत् । व्रजस्य राजतस्य नये कथममूः श्रद्धालवः । ॥ २३४ ॥

साह हरिणापहृतमानसा ह्येताः । श्यामाह । क्व तावदत्र हरिणः । तद्वाचाले ! वाचा लेलिह्यसे चेद्वैदग्ध्यं न तु ते तदस्ति तद्विरम विरम ॥ २३५ ॥

साह । श्यामे ! तवैव वैदग्धी दग्धीकरोति मे मनः । तत् कथय कथमपरापराहर्विलक्षण लक्षणमस्या वपुरिदं राधायाः ॥ २३६ ॥

श्यामाह । सौभाग्यदं मृगदशां शशिखण्डमौलिं यद्व्रतं प्रथमवर्णविहीनमेकम् । आराधनाय किल तस्य धृतव्रतेयं म्लानं ततः कुसुमकोमलमङ्गमस्याः २३७

मय्यनुरागित्वमिति श्यामायां मयि अनुरागिण्यइत्येव तच्छन्दव्युत्पत्तिर्बोधिता ॥२३०॥

कृष्णस्य पक्षपातिनी कला शिकल्पं यासां ताः ॥ २३१ ॥

कृष्णपक्षो यः शुक्लपक्षेतरस्तत्पातिन्यः कलाश्चन्द्रसंबन्धिन्य इति कृष्णपक्षपातिकलापदस्यार्थः । सर्वदा चित्रभास्वराः चित्रकान्तिमय्य इति सर्वदैता इत्यस्यार्थः । चित्रं किर्मीरकल्माषशवलैताश्च कर्बुरे इत्यमरः । स्वरेभ्यः षड्जादिभ्यः आगताः कला मधुरास्फुटध्वनय इव ते यथा सर्वदा चित्रभास्वराः शोभन्ते तथा नेति ॥ २३२ ॥

कृष्णवर्त्मगाः कृष्णस्य वर्त्मगामिन्यस्तस्मै स्वसंभोगदानार्थमिति भावः । कृष्णवर्त्मा वह्निस्तत्र गमनम् अथ कथमासां वर्त्मगेति भावः ॥ २३३ ॥

व्रजराजस्य तनये कृष्णे रमणार्थं या श्रद्धा तया बद्धाः । व्रजस्येति व्रजस्य राजतम् रजतस्य विकारः समूहो वा तस्य नये ग्रहणे ॥ २३४ ॥

हे वाचाले ! वाचा वाक्येन । तद्वैदग्ध्यम् ॥ २३५ ॥

अपरस्मादपरस्मादह्नो विलक्षणं लक्षणं यस्य तम् ॥ २३६ ॥

शशिनः खण्डं मौलौ यस्य तत् । कीदृशम् प्रैयं चन्द्रशेखरत्वेन ख्यातम् । अवर्णं आक्षेपरहितम् । विहीनम् । अवर्णाक्षेपनिर्वाद इत्यमरः । प्रथमेन वर्णेन शकारेण विहीनमिति वास्तवोऽर्थः २३७

१ प्रथु विस्तारे इत्यस्माद् घञर्थककप्रत्ययान्तान्मत्वर्थीयोच् ।

साह कसा देवता । इत्याह । अङ्गे ! साऽधुना साधुना भावेन मनोमय्येव मय्येव विश्वस्ता सती माऽन्यया शङ्किष्ठाः ॥ २३८ ॥

इत्येवं सत्येवं रससमयः समयः समपादि । तदा वदनजितचन्द्रा चन्द्रावलिरपि निजवयस्याभिरभिनव-वयस्याभिरभिनवरागवतीभिरेव निजकलाकलापमख्यापनेन कृष्णाङ्गसङ्गसङ्गररङ्गमङ्गलाभ्यासमभ्यासमासाद्य साद्यमानं यदि चकार विचकार विविध एव तदा कुलजा कुल जाति-शीलाद्यनपेक्षया ऽक्षयामोदकरः कोऽपि मधुररसमयः समयमान संकोचः सकलसकलकमलमुखीनां च ॥ २३९ ॥

एवं जलदसमये रसमये रसिको रसिकोरसि कोविदः कलाकलापे स खलु व्रजपुरपुरन्दरनन्दनो रमते स्म रमते स्म ॥ २४० ॥

ततश्च तस्मिन् श्रीकृष्ण आतिष्ठद्गु तिष्ठद्गुरुगौरवो गुरुजनान्तिकमेव तिष्ठति दिनन्दिनमायतीगवमायतीगवन्धुनिकरैः समं वनादायाति याति स्म वर्षासमयः २४१

ततश्चैवं विलसति सति सकलसौभगवति भगवति निजसेवोपरमे परमे दुःखेऽदुःखे भङ्गमिव सपन्तत एव जलदाः ॥ २४२ ॥

ततश्चासन्नेऽसन्ने निजसेवासमये स मयेह सेवनीय इत्युत्कण्ठयोत्कमना इव विकसद्वदनसारसा सा रसादिव विमलकासारा कासारापायसीमन्तितजम्बाला

---

सा देवता अधुना इदानीम् ॥ २३८ ॥

अभिनव वयसि कैशोरे आभिर्निजवयस्याभिः सह अभ्यासमासाद्य निकटं प्राप्य साद्यमानं व्यज्यमानं यदि चकार तदा कोऽप्यनिर्वाच्यो विविधो विचकार विकारो रोमाञ्चाद्यनुभावोऽभूदित्यर्थः । कथंभूतः । कुलजासंबन्धिनां कुलादीनामनपेक्षया अक्षयमामोदमानन्दं करोतीति सः। कुलादिनैरपेक्ष्यादेव सम्यक् अयमानः संकोचो यत्र सः।एवं चन्द्रावलेर्यथाऽयमुक्तस्तथाऽन्यासामपि ज्ञातव्य इत्याह सकलेति सकलानां सर्वासामेव कलासहित- कमलमुखीनां च ॥२३९॥

उपसंहरति स श्रीकृष्णः रसिकानां गोपीनाम् उरसि स्वयं च रसिकः स्मरमते कामतन्त्रमते रमते स्म अरमत । यतः कलाकलापे कोविदः पण्डितः ॥ २४० ॥

तत्र कालविभागमाह तस्मिन् जलसमये आतिष्ठद्गु गुरुजनान्तिकं तिष्ठति तिष्ठन्ति गावो यस्मिन् तं कालमभिव्याप्य प्रातरित्यर्थः यतस्तिष्ठद्गुरुगौरवः तिष्ठन्ति गुरूणां मातापित्रादीनां गौरवाणि स्वलालनप्रदानसम्माननादिलक्षणानि यत्र सः । दिने दिने प्रतिदिनम् तथा आयतीगवम् आयन्तः आगच्छन्त्यो गावो यत्र तस्मिन् आयतीगवं तिष्ठद्गुप्रभृतित्वात्साधुम्।आयत्यम् उत्तरकाले आयतिर्दीर्घा या या ईर्ष्ईमीर्त्तां गच्छन्तीति तथा ते च वन्धुनिकराश्च तैः समं सह आयाति गृहम् । आयतिस्तुस्त्रियां दैर्घ्ये आचारागामिकालयोरिति मेदिनी । तेन मध्याह्ननिर्गमादौ रमणमिति ॥ २४१ ॥

निजसेवाया उपरमे सति परमे दुःखे जाते खे आकाशे भङ्गमिव अदुर्दत्तवन्तः २४२

ततश्च निजसेवासमये आसन्ने सति । कीदृशे । असन्ने अविशीर्णे स श्रीकृष्णो मया इह वृन्दावने सेवनीयः सम्यक्पूज्यः संतोषणीय इत्युत्कण्ठया उत्कम् उत्कण्ठं कं सुखं यत्र तथाभू

ऽवालामोदमेदुरहंसहंसका कलकूजित-सारस सारसना दलदिन्दीवरवरलोचना शरद्वधूः समुपससाद ॥ २४३ ॥

ततश्च प्रक्षालितघनजम्बालमिव नभस्तलम् । सुजनमनांसीव सुप्रसन्नानि सलिलानि । उत्तमश्लोकश्लोका इव लब्धविकाशाः काशाः । निशानिशात इव निशाकरः । कृतोद्वर्चनानीव नक्षत्राणि । विकसितसप्तच्छदामोदमेदुरा वनश्रीः॥२४४॥

अपगतमानकालुष्याः प्रमदा इव क्रमहसत्कमला धवला वलाहकततीः सितसूक्ष्मसिचयततीर्विततीकृत्येव वर्षाऽऽसारसारस्यापसारणे वितते द्योतते द्योरमणी तपस्विनी ॥ २४५ ॥

अपिच । तरङ्गिणीनां रङ्गिणीनां वर्षासखीविरहतो हतोदकमाचुर्य्यादप्यकुल्यानां कुल्यानां श्रेणय इव बहिरवलोक्यन्ते पुलिनवीथयः ॥२४६॥

किंवा स्वच्छतयैव तासां बहिः प्रकाशिताः शुद्धा हृद्वृत्तय इव ॥२४७॥

ते मनो यस्याः सा इव शरद्वधूः समुपससाद । कीदृशी । विकसत् वदनसारसं मुखपद्मं यस्याः सा । पक्षे विकसद्वदनः सारसाः पक्षिणो यस्यां सा । सा इति च्छेदः रसात् अनुरागादिव विमलः निर्मलः कस्य सुखस्य आसारो यस्यां सा । पक्षे । रसं वर्षावृष्टं जलं प्राप्येव वीन् पक्षिणो मलन्ति धारयन्तीति तथाभूताः कासाराः सरांसि यस्यां सा । मल मल्ल धारणे पचाद्यच् । कस्य जलस्य आसारापाये सति आसारांशनाशे वा सति सीमन्तितः सीमन्तीभूतो जम्बालः पङ्को यस्याः सा अबालैः प्रौढैरामोदैर्मेदुराः स्निग्धा हंसा एव हंसकः पादकटको यस्याः सा । कलं कूजितं येषां ते सारसा एव सारसनं काञ्ची यस्याः सा ॥२४३॥

उत्तमश्लोकस्य भगवतः श्लोका यशांसि । निशया शाणस्थानीयया निशातस्तेजित इव । निशित-क्ष्णुत-शातानि तेजिते इत्यमरः । सप्तच्छदः छाईत्तन इति ख्यातः शतपना इति पाश्चात्ये च ख्यातः ॥ २४४ ॥

द्यौरेव रमणी तपस्विनी सती द्योतते । कदा । वर्षाभवेन आसारेण सारस्यं सरसतैव सरागता यस्यापसारणे वितते विस्तृते सति । शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रस इत्यमरः । वीतरागोचितं परिधानीयमाह वलाहकततीर्मेघश्रेणीरेव सितसूक्ष्मवस्त्रततीर्विततीकृत्य विस्तार्य्य । वलाहकततीः कथंभूताः । गतमानकौर्य्याः प्रमदा इव क्रमेण हसन्ति ह्रासयन्ति कमलानि सुखरोधकमालिन्यानि जलानि च यासां ताः । सुखशीर्ष जलेषु कमिति विश्वः । सलिलं कमलं जलमित्यमरः ॥ २४५ ॥

तरङ्गिणीनां नदीनाम् हतं यदुदकस्य प्राचुर्य्यं तस्माद्धेतोरपि अकुल्यानां क्षुद्रनदीत्वनप्राप्तानाम् कुल्याऽल्पा कृत्रिमा सरदित्यमरः । पुलिनवीथयः कुल्यानां श्रेणय इव अर्थात् समूह इव कीकसं कुल्यमस्थि चेत्यमरः ॥२४६॥

पुलिनानां स्वैश्रैतिम्ना कदाचिदश्लीलत्वं व्यज्येतेति पुनरन्यथोत् प्रेक्ष्यते किं वेति ॥२४७॥

१ सतपुरा इति मगमण्डले भिषग्भिरनूद्यते ।

सुललितलेखानां लेखानां च मनोहराणां चरतामनुकूलमनुकूल गिरां गिरां देव्या च कथयितुमशक्यश्रियां मदकल कलहंस-सार-सारस-सरस मनोरथ-रथ-चरण कुरर-कह्व कारण्डवादीनां चरण चिह्न-विचित्रितानि सैकतानि ॥२४८॥

अमल कमल कह्लार-हल्लक-हल्लीशकोपदेश पेशलस्तरलतर-ललित तरङ्ग-शीकर-निकर-निर्भर-मन्थरो मन्थरो जनमनसामज-नमन-सामग्रीसमवेत इव समुपसन्न-समीरणः समीरणश्चेति ॥२४९॥

तत्र सकलविलक्षणलक्षणसमेतायामुपेतायामुपेत्य वनपरिसरं विरतजलधरागमं रागमञ्जुलमेदुराऽदुरालोकलोकरमणीयमहसारस्यदेन स्यदेन धेनुनामनुसृतिमासाद्य ॥ २५० ॥

सह सहचरैः खेलता लतातरुवीथिवीथिषु सर्वदाबलाकामदेन कामदेन विलोलविकसितविमलप्रियकमालेन ॥ २५१ ॥

---

सुललिता लेखा श्रेणी चञ्चुचरणकल्पिता रेखा वा येषां तेषां लेखानां च देवानामपि । दिविषदो लेखा इत्यमरः। अनुकूलं कूले कूले चरताम् मदकला मत्ताः कलहंसाश्च साराः श्रेष्ठाः सारसाश्च सरसो मनोरथो येषां ते रथचरणाश्चक्रवाकाश्च निकृष्टत्वादप्राप्तविशेषणाः कुररादयश्च । तेषाम् कह्वो बकः । कारण्डवस्तद्भेदः ॥२४८॥

निर्मलानां कमलादीनां हल्लीशकस्य नाट्यविशेषस्य उपदेशे पेशलः दक्षः । अत एव तरलतराणां ललिततरङ्गाणां शीकरनिकरस्य निःशेषभरेण मन्थरः मन्दगतिः । अत एव सौगन्ध्यशैत्यमान्द्यैर्जनमनसां मन्थं मन्थनं राति ददातीति सः अजस्य श्रीकृष्णस्य नमनं नमस्कारः तस्य या सामग्री रिक्तहस्तेन नन्दनमयुक्तमिति हल्लीशकमुपदिश्य लब्धा दक्षिणारूपा परागशीकरादिका तया समवेत इव। अत एव समुपसन्नं सम्यक् ईरणं प्रवेशो यस्य सः॥२४९

अथ तत्र भगवतो विलासं वर्णयिष्यन् तत्संबन्धेन शरदोऽपि शोभावैलक्षण्यमाह तत्रेति तत्र शरदि वनपरिसरम् उपेत्य खेलता तेन श्रीकृष्णेन श्राव्योर्वर्षाशरदोः सन्धिरिव कोरयामास इत्यन्वयः । उपेतायाम् उपसन्नायाम् स्यदेन वेगेन । कथंभूतेन । रागेण अनुरागेण मञ्जुलानां मेदुराणां स्निग्धानाम् अत एव अदुरालोकानाम् अदुर्दर्शानां तन्निकटवर्तिनामित्यर्थः। तादृशलोकानां रमणीयो यो महस्तादृशादर्शनोत्सवस्तेन सारस्यदायिना । अनुसृतिम् अनुगतिम् आसाद्य प्राप्य ॥ २५० ॥

लतातरूणां वीथयः श्रेणयस्तासां वीथिषु पदवीषु । वर्षालक्षणव्यक्त्यर्थं श्रीकृष्णं जलदसमयरूपत्वेन विशिनष्टि । सर्वदा अबलानां रमणीनां कामदेन कन्दर्पसमर्पकेण । पक्षे । बलाकाया बकपङ्क्तेर्मदो मत्तता यतस्तेन । कामदेन सुखदेन । पक्षे । कामोद्दीपकेन । प्रियकमाला कदम्बस्रक् कदम्बपङ्क्तिश्च ॥ २५१ ॥

---

१ कर्मणि प्रयोगः  २ गत्यर्थे प्रयोगः

मदकलकलापिकलापिबर्हभूषणेन कनकनिकषकषणवसनविद्युता विद्युताभिरामेण ॥ २९२ ॥

मुरलीध्वनि स्तनित परम्परया परया मदमयूरमण्डलीमभितो नर्त्तयताऽऽर्त्तयता च खगमृगावलिं निर्झरयता रयतादवस्थ्येन गिरिकन्दरतो दरतोयं सरसयताऽऽयतायतेन सारस्येन तरुलताः सरितां च स्थगितप्रवाहतयाऽहतया जातपूरेणाम्बुपूरेणाम्बुजवनीमुत्सारयता सारयता च पुलिनवीथीः ॥२९३॥

परितश्च श्यामलतया श्यामलयता हरितो निवृत्यागतेनेव पुनरपि जलदसमयेन रसमयेन रतिप्रदेन व्रजमृगनयनापाङ्गशरदितेन ऋतुसन्धिरिव कारयामासे २९४

अथ कस्मिन्नपि दिवसे ।

चिकुरनिकरचञ्चच्चारुबर्हावतंसः श्रवसि दधदुदञ्चत्कुण्डले कर्णिकारम् ।
कनककपिशवासा वैजयन्तीं दधानो न्यविशत नटराजश्रीः स वृन्दावनान्तः॥२९५

चरणकमलचिन्हैरङ्कुशाम्भोजवज्रप्रभृतिभिरतिचित्रैश्चित्रयन् क्षोणिवक्षः ।
अधरकिसलयाग्रे वेणुमाधाय धीरं व्यतनुत शरदर्हं मालवश्रीप्रगाणम् ॥२९६॥

मदकला मत्ताश्च ते कलां नृत्यादिवैदग्धीम् आप्तुं प्राप्तुं शीलं येषां तथाभूताश्च ये कलापिनस्तेषां बर्हं शिखण्डो भूषणं शिरोवतंसो यस्य तेन । पक्षे । तेषां बर्हं भूषयतीति तेन । वर्षास्वेव तच्छोभोदयात् । कनकनिकषं निकषपरीक्षितं स्वर्णं कषति स्वशोभया तिरस्करोतीति तद्वसनमेव विद्युत् यत्र तेन । विशिष्टया द्युता दीप्त्या अभिरामेण ॥ २९२ ॥

स्तनितं मेघगर्जनम् । आर्त्तयता मुहुरास्वादेनाप्यतृप्तं कुर्वता गिरिकन्दरतः प्रसृतं दरतोयम् अल्पतोयमपि । रयस्य वेगस्य तादवस्थ्यं यथा वेग आगतस्तथैव स्थितः न तु प्रसृत इति तदवस्थत्वं निष्पन्दत्वमित्यर्थः । तेन हेतुना निर्झरयता निर्झरं कुर्वता जाड्येन परितः प्रसरणाभावात् पर्वतात् स्रुत्वा एकत्र स्थिते बहुजले निर्झर इत्यमरटीका आयतायतेन दीर्घदीर्घेन सारस्येन ह्रीत्यपरम्परेत्यर्थः । सरितां नदीनां स्थगितप्रवाहतया हेतुना परतः प्रसरणाभावात् अम्बुपूरेण पूर्वतः प्रसृतजलप्रवाहेण जातः पूरः पूरणं तेन अम्बुजवनीम् उत्सारयता जलवृद्ध्यनुसारेण वर्द्धनादूर्द्ध्वमुत्थापयतेत्यर्थः । अहतयेति स्थगितप्रवाहतयेत्यस्य विशेषणम् अपरास्ततयेत्यर्थः । पुलिनवीथीश्च सारयता जलवृद्ध्यैव लुप्ताः कुर्वतेत्यर्थः । सृ गतौ ण्यन्तः गतत्वमत्र लुप्तत्वम् । सर्वत्रैव मुरलीध्वनिस्तनितपरम्परयेत्ययं हेतुरनुवर्त्यः । वर्षाल्लक्षणं च स्पष्टम् ॥ २९३ ॥

श्यामलतया निजश्यामाधिम्ना परितश्च हरितः सर्वा दिशः श्यामलयता श्यामलवर्णाः कुर्वता । ततश्च जलदसमयेन निवृत्यापि पुनरागतेनेवेत्युत्प्रेक्षा प्रजस्य मृगनयनानां हरिणाक्षीणाम् अपाङ्गशरैर्दितेन खण्डितेन ॥ २९४ ॥

वेणुवादनविलासोचितवेशं तं वर्णयति चिकुरनिकरेति चूडाभूषनाम् चूडाचुम्बितचञ्चत्... वदधते च वैजयन्तीः पञ्चवर्णमयीं मालाम् ॥ २९५ ॥

धीरमचपलम् छलेन वेणोरपि तच्छिष्यतयेव गाने पाण्डित्यमिव जातमित्युत्प्रेक्षा च व्यञ्जिता ॥ २९६ ॥

धन्यासि भो मुरलि ! यत्परिपीयमाणा स्यामेन तद्दशनचन्द्रिकयासिदिग्धा । स्निग्धासतीमणितवत्कलकूजितानि संतन्वतीभुवनमुत्तरलीकरोषि ॥ २६७ ॥

तेषां वा दशनानां किमाभिरूप्यं निरूपयामः तथाहि । आपच्यमानदरदाडिमबीजराजीराजीवमध्यमपिचेदुररीकरोति।इन्दूरं विशति चेत् कुरुविन्दपङ्क्तिर्दन्तावलिः किमु तदस्य । तुलां बिभर्ति ॥ २६८ ॥

अत्यन्तसाहसवती मुरली यदेषा कृष्णाधरं पिबति यः परकीयपेयः । किं सौभगं तदनया तनियेनरत्नं यत्नं विनापि पुरतः स्वयमेति यस्याः ॥ २६९ ॥

यत्पीतशेषरसशीकरसंप्रयोगान्नद्यः प्रफुल्लकमलावलिलोमहर्षाः । स्तम्भन्ति रुद्धतरसस्तरवः प्रसूनमाध्वीकलोचनजलाः परितो रुदन्ति ॥ २७० ॥

धन्याजयत्यपि महीमहिता महिम्नाकृष्णस्य यच्चरणचिन्ह विचित्रवक्षाः । वंशीरवामृतरसैः सरसांतरेव या जस्रमेव यवसाङ्कुररोमहर्षा ॥ २७१ ॥

वृन्दावनस्य महिमानदिमादृशीनां गम्यो यदत्र मुरभिन्मुरलीरवेण । स्वान्तंविलास्यमृदुलास्य मयुर्मयूराः स्पन्दं जहुस्तरुलतामरुता इताश्च ॥ १७२ ॥

ननुशश्वाद्विहारिणि ! प्रतिदिनमेव तेन कान्तेन तथा दीव्यन्ती तर्हि त्वमेव धन्यतमासीति ननानुरागप्रौढिम्ना तस्य मुहुरनुभूतत्वेप्यननुभूतत्वमननेनालीकवादिनि ! कदा मे तथा सौभाग्यं जातमिति तत्रौत्सुक्यमेन व्यञ्जयन्तीतत्संबन्धवन्तीं मुरलीमेव संबोध्य स्तौति धन्यासीति मणितं सुरतध्वनिः ॥ २६७ ॥

दशनचन्द्रिकयासिदिग्धेत्यनुस्मृतं तद्दर्शनसौन्दर्य्यंविशेषेणाह तेषां वेति ॥ २६८ ॥

अथ तत्र तस्यैकाचिदीर्ष्यन्तीव तत्सौभाग्यमभिनन्दति । अत्यन्तेति यः कृष्णाधरः परकीयः पेयः सा जात्येन गोपिकानामेव पानार्हमित्यर्थः अतनि व्यस्तारि । तथा च गोप्यः किमाचरदित्यादि ॥ २६९ ॥

यस्याः पीतशेषो यो रसस्तस्य शीकरस्यापि संप्रयोगात् सुमुरलीवादनानन्तरस्नानावगाहनादिभिरधरे प्रवाहसंयोगात् रुद्धतरसः रुद्धवेगास्तरवस्तत्तत्तीरस्थास्तज्जलं मूलद्वारेणाकर्षन्तः परम्परया ततप्राप्यभिमानवन्त इति भाव. । तथा च यदत्रशिष्टरसमित्यादि ॥ २७० ॥

अन्या तद्विरहभीता तन्नित्यसंयोगं कामयमानेवाह-धन्येति जयति महलोकादिभ्योप्युत्कर्षेण-वर्तते मही श्रीवृन्दावनसंबन्धात्सर्वोपरीत्यर्थः । चरणचिन्हेति । एकेनावयवेनालङ्कृतेन अवयवी अलङ्कृत इव चरणचिन्हालङ्कृतेन वक्षस्थलरूपवृन्दावनप्रदेशे न कृत्स्नापि मह्यपि इत्यर्थः । अत्र विचित्रेति वक्ष इत्याभ्यां तस्याः कुचयोश्चित्रकञ्चुलिकानिमार्णं तेनैवोपभिव्यज्य सैव सदास्वाधीनकान्तेति सूचयति च या अन्तः सरसैव अत्राप्यजस्रमेव रात्रिं दिवमपि कृष्णाविच्छेदात्सम्भवादिति भावः ॥ २७१ ॥

मुरभिदः श्रीकृष्णस्य मुदिरकृतेर्मुरलीनादरूपगर्जनेन मयुः प्रापुः मरुता आहताश्चालिता अपि लता च वृन्दावनं सखि भ्रुर इति । ततश्च अहितान्यवरतान्यसमस्तसत्वमिति दृष्ट्वा तद्दवाशब्देन नतस्था विहगादयो उच्यन्त इति ॥ २७२ ॥

रभ्यमानमानसविकारास्तमेव वंशीकलमुद्दिश्यमुद्दिश्यमानकलपदाः पदार्थभूत-श्रीकृष्णगुणगणगणनकलया कलयामासुर्दिनसमापनम् ॥ २६३ ॥

तथा हि ।

किं ब्रूमोऽक्षिमतोऽक्षिसौभगमहो यद्रामदामोदरौ
वृन्दारण्यविहारिणावभवतां गोचारणे गोचरौ ।
स्निग्धापाङ्गतरङ्गरिङ्गितकृपातुङ्गीकृतानन्दथू
वेणुध्वानविधानधूनितधराधैर्यावहार्य्यश्रियौ ॥ २६४ ॥

चूडाचुम्बितचन्द्रकौ विलसिता वालोलया मालया दीव्यद्दीव्यतमालपत्ररचना-सत्युज्ज्वलौ धातुभिः । प्रत्यङ्गकृतमण्डनौ स्तवकिभिश्चित्रैर्लताखण्डकैस्तन्वाते नयनोत्सवं नटवरौ रङ्गाङ्गणाविव ॥ २६५ ॥

धन्याधयंतिमुखपङ्कजमस्यदृग्भ्यां चुम्बन्ति तत् किमपि धन्यतरास्त एके । ते नामके मुरलिका परिपीतशेषं येऽस्याधरं सुमुखि ! धन्यतमाः पिबन्ति ॥२६८॥

श्रेष्ठाः सीमन्तिन्यः सुन्दर्य्यस्तु गणशः प्रतियूथमेव अगणोऽगण्यः शोभाभरो यत्र तद्यथा स्यात्तथा निःशेषेण व्यूढो योऽनुरागपरभागः प्रेमोत्कर्ष तत एव यत् परं श्रेष्ठ भागधेयं भाग्यं तस्मादेव धेयं धारणार्हं सौशील्यं यासां ताः । समवासनास्तुल्यवासनाः अत एव परस्पररोचकस्वभावत्वादेव समवासा एकस्थानस्थितयश्च ताः । नाथितं प्रार्थितं परमसौहृदमन्योन्यं याभिस्तथाभूताश्चेति ताः । मुदा आनन्देन दिश्यमानानि निर्दिश्यमानानि कलानि मधुराणि पदानि किं ब्रूम इत्यादि सुप्तिङन्तवृन्दानि याभिस्ताः कलयामासुश्चक्रुः ॥ २६३ ॥

अत्रैकैकस्या यूथाधिपाया द्विशो द्विशः पद्यग्रन्थनप्रायेण तत्र काश्चित् प्रथमं निज भावं प्रकटमुद्घाटयितुमतिशङ्कितचित्ता अन्यजनवत्सामान्यतो विलासमात्रवर्णनेनान्यालक्षितं निजरसौत्कण्ठ्यं स्वसखीष्वेव किञ्चिद्व्यञ्जयन्त्याह **किमिति** अक्षिमतो नेत्रधारिणो जनस्य अक्ष्णोः सौभगं किं ब्रूमोऽनिर्वाच्यत्वादुक्तं न शक्नुम इत्यर्थः । ताववपश्यन्त्यो वयमेव दुर्भगनेत्रा इति भावः । **रामदामोदराविति** रामोल्लेखो निज भावगोपनार्थमेव तत्र विविक्तेऽपि तत्राकस्माद्भिन्नजातीय जनप्रवेशापातशङ्कया उत्तरोत्तरवाक्येषु तु प्रेमवैकल्यात्तदशक्तिरपि ज्ञेया । स्निग्धैरपाङ्गतरङ्गैरिङ्गिता गमिता ज्ञापिता कृपा तया तुङ्गीकृतआनन्दथुरानन्दस्तत्रत्य समस्तदृग्जनानां याभ्यां तौ तत्र वयमेव वञ्चिता इतिभावः । धूनित खण्डितं धारायाः पृथिव्याः धरास्थसमस्तलोकस्यापि वा धैर्य्यं याभ्यां तौ । तत्रास्माकं का कथेति भावः । अहार्य्या अव्यया श्रीः शोभा ययोस्तौ तथा च अक्ष्णवतां फलमिदमिति मूलपद्यम् ॥२६४॥

तमालपत्रं तिलकं धातुभिर्मनः शिलादिभिः तथाचूतप्रवालेति ॥२६५॥

अन्या प्रकटमेवोत्कण्ठमानाः शङ्काएवाह तस्य श्रीकृष्णस्य धयन्ति पिबन्ति दृग्भ्यां दूरत एव पश्यन्ति मात्रमित्यर्थः । तन्मुखपङ्कजं चुम्बन्ति दृग्भ्यामित्यस्यानुवृत्तेः स्वमुखेनैवेत्यर्थः । एके मुख्या जनास्ते ते नामके इति न तेषां सौभाग्यं वक्तुं शक्नोमीत्यर्थः । हे सुमुखिसखीति लदाादिकावधं शोभनमुखधारिण्योपि तदप्राप्त्याविफलमुख्य एवेति भावः ॥ २६६ ॥

धन्यासि भो मुरलि ! यत्परिपीयमाणा श्यामेन तद्दशनचन्द्रिकयासिदिग्धा । स्निग्धासतीमणितवत्कलकूजितानि संतन्वतीभुवनमुत्तरलीकरोषि॥ २६७॥

तेषां वा दशनानां किमाभिरूप्यं निरूपयामः तथाहि । आपच्यमानदरदाडिमबीजराजीराजीवमध्यमपिचेदुररीकरोति।इन्दूरं विशति चेत् कुरुविन्दपङ्क्तिर्दन्तावलिः किल तदस्य । तुलां बिभर्त्ति ॥ २६८ ॥

अत्यन्तसाहसवती मुरली यदेषा कृष्णाधरं पिबति यः परकीयपेयः । किं सौभगं तदनया तनियेनरत्नं यत्नं विनापि पुरतः स्वयमेति यस्याः ॥ २६९ ॥

यत्पीतशेषरसशीकरसंप्रयोगान्नद्यः प्रफुल्लकमलावलिलोमहर्षाः । स्तभ्नन्ति रुद्धतरसस्तरवः प्रसूनमाध्वीकलोचनजलाः परितो रुदन्ति ॥ २७० ॥

धन्या जयत्यपि महीमहिता महिम्ना कृष्णस्य यच्चरणचिन्हविचित्रवक्षाः। वंशीरवामृतरसैः सरसान्तरेव या जस्रमेव यवसाङ्कुररोमहर्षा ॥ २७१ ॥

वृन्दावनस्य महिमानहिमादृशीनां गम्यो यदत्र मुरभिन्मुरलीरवेण । स्वान्तंविलास्यमृदुलास्य मयुर्मयूराः स्पन्दं जहुस्तरुलतामरुता हताश्च ॥ १७२ ॥

ननुशश्वद्विहारिणि ! प्रतिदिनमेव तेन कान्तेन तथा दीव्यन्ती तर्हि त्वमेव धन्यतमासीति कन्नानुरागप्रौढिम्ना तस्य मुहुरनुभूतत्वेऽप्यननुभूतत्वमननेनालीकवादिनि ! कदा मे तथा सौभाग्यं जातमिति तत्रौत्सुक्यमेन व्यञ्जयन्ती तत्संबन्धवर्त्तीं मुरलीमेव संबोध्य स्तौति धन्यासीति भणितं सुरतध्वनिः ॥ २६७ ॥

दशनचन्द्रिकयासिदिग्धेत्यनुस्मृतं तद्दर्शनसौन्दर्य्यंविशेषेणाह तेषां वेति ॥ २६८ ॥

अथ तत्र तस्यैकाचिदीर्ष्यन्तीव तत्सौभाग्यमभिनन्दति । अत्यन्तेति यः कृष्णाधरः परकीयः पेयः सा जात्येन गोपिकानामेव पानार्हमित्यर्थः अतनि व्यस्तारि । तथा च गोप्यः किमाचरादित्यादि ॥ २६९ ॥

यस्याः पीतशेषो यो रसस्तस्य शीकरस्यापि संप्रयोगात् सुमुरलीवादनानन्तरस्नानावगाहनादिभिरधरे प्रवाहसंयोगात् रुद्धतरसः रुद्धवेगास्तरवस्तत्तत्तीरस्थास्तज्जलं मूलद्वारेणाकर्षन्तः परम्परया तत्प्राप्त्यभिमानवन्त इति भाव. । तथा च यदवशिष्टरसमित्यादि ॥ २७० ॥

अन्या तद्विरहभीता तन्नित्यसंयोगं कामयमानेवाह-धन्येति जयति मर्त्यलोकादिभ्योप्युत्कर्षेण-वर्त्तते महीश्रीवृन्दावनसंबन्धात्सर्वोपरीत्यर्थः। चरणचिन्हेति । एकेनावयवेनालङ्कृतेन अवयवी अलङ्कृत इव चरणचिन्हालङ्कृतेन वक्षस्थलरूपवृन्दावनप्रदेशे न कृत्स्नापि मही धन्येत्यर्थः। अत्र विचित्रेति वक्ष इत्याभ्यां तस्याः कुचयोश्चित्रकञ्चुलिकानिर्माणं तेनैवेत्यभिव्यज्य सैव तदास्वाधीनकान्तेति सूचयति च या अन्तः सरसैव अत्राप्यजस्रमेव रात्रिं दिवमपि कृष्णाविच्छेदासम्भवादिति भावः ॥ २७१ ॥

मुरभिदः श्रीकृष्णस्य मुदिराकृतेर्मुरलीनादरूपगर्जनेन मयुः प्रापुः महता आहताश्चालिता अपि तथा च वृन्दावनं सखि भुव इति । ततश्च अद्रिसानवचरतान्यसमस्तसत्वगिति दृष्ट्वा तद्रवाशब्देन तत्रस्था विहगादयो रुदन्त इति ॥ २७२ ॥

किं दुश्चरं चरितमालितपोमृगीभिः पश्यन्ति याः समुरलीकलमास्यमस्याअक्ष्णोः भकामकमनीयगुणत्वमासां मासांप्रतं भवति संप्रति संप्रतीहि ॥ २७३ ॥

सौभाग्यभागियमहो सखिकृष्णसारी सारीकरोति नयने सह कृष्णसारा । वंशीनिनादमकरन्दभरं दधानं कृष्णास्यपङ्कजमशङ्कितमापिबन्ती ॥ २७४ ॥

धन्या विमानवनिता जनितानुरागाद्रागात्तगाढरतिभिः पतिभिः परीताः । लीलाकलक्वणितवेणुमवेक्ष्य कृष्णं धैर्याद्‌था वरुरुहुमुमुहुर्मुहुश्च ॥ २७५ ॥

विस्रंसमानचिकुराः श्लथमाननीव्योदेव्यो धृतिव्यसनतो निखिलादिवीव । आरिप्स्यमानममरद्रुमपुष्पवर्षं विस्मृत्य हंत वद्वपुर्नयनाम्भ एव ॥ २७६ ॥

अर्द्धावलीढयवसाङ्कुरशोभिदन्ताः सोत्कण्ठमुन्मिषितनेत्रमुदीर्णकर्णम् । चित्रार्पिता इव पतन्तमिवामृतौघं वेणुध्वनिं श्रुतिपुटे गमयन्ति गावः ॥ २७७ ॥

चूषन्ति चूचुकमहो न न संत्यजन्ति वत्सा नयन्ति न पयःकवलं गलाधः । वंशीकलाहृतहृदां सखि नैचिकीनां स्नेहस्नुतिस्तनरसो धरयैव पीतः ।२७८।

वंशीकलं कलयतोऽस्य निपीय दृग्भ्यां रूपामृतं पुनरमुष्य रसानुभूत्यै । ध्यायन्ति मीलितदृशः सखि बद्धमौनं बद्धासनं मुनय एव पतत्रिणोऽमी ।२७९।

अन्या स्वदर्शनोत्सुक्यंसख्यामभिव्यञ्जयन्त्याह **किमिति** मासांप्रतं नायोग्यं संप्रति इदानीमेव संप्रतीहि सम्यक् प्रतीतिं याहि तथाहि "धन्याः स्म मूढमतय इति" ॥ २७३ ॥

तास्वेव कांचिन्निकटवर्त्तिनीमालक्ष्य उक्तपोपन्यायेनाह सारीकरोतीति च्विप्रत्ययादितः पूर्वं नयने श्रेष्ठे नाभूतामित्यर्थः । **सहकृष्णसारेति** कृष्ण एव सारो यस्येत्यन्वर्थनामत्वं तस्योचितमेव मत्पतिस्तु तद्विपरीतधर्मातिदुष्टोवेति भावः। **अशङ्कितमिति** अहं तु सायं व्रजागतमपि तं पत्यादिशङ्कया न सम्यक् पश्यामीति भावः ॥ २७४ ॥

न चस्वपतिसहिताया एव मृग्याः कृष्णेनुरागः पशुत्वेन विशेषविवेकाभावादिति वाच्यं यतः के वा विदग्धशिरोमणयोऽपि जनाः कृष्णेनानुरज्यन्तीत्यप्रस्तुतप्रशंसया काचिदाह **धन्येति** विमानवनिताविमानचारिण्यो देवाङ्गनाः श्लेषेण तासामपि मानं वेणुनादो लुंपेदेव अस्माकं तु का कथेति भावः । जनितानुरागा इति ता एव वनितापद वाच्यतामर्हन्ति नान्या इति भावः । वनिताजनितात्यर्थानुरागायां च योषितीत्यभिधानात् तथा च कृष्णं निरीक्ष्येति२७५

दिवीव नभसि वर्त्तमाना एव ॥२७६॥

अन्या तु वेणुमाधुर्य्यं प्राणिमात्राणामपि मुदा चित्ताकर्षकमिति वदन्ती प्रेमसामान्यरीतिं मालम्ब्य विजातीय भाववतीरपि गास्तत्र प्रतीति अर्द्धावलीढेति तथा च गावश्च कृष्णमुख निर्गतेति२७७

किंचाहारविहारमात्रप्रसक्तानां वत्सानामपि तत्र महान् प्रेमोदय इति सचमत्कारमाह । चूषन्तीति न चूषन्ति नच संत्यजन्ति ननु तर्हि वत्साग्रहमन्तरेण तन्मातरोऽपि किं प्रस्रवन्ति तत्राह वंशीकलेति धरयैव भूम्यैव । तथाचशाश्वः स्नुतस्तनपयः कवला इति॥२७८॥

अपरा च तिरश्चां मध्येऽप्यतिचपलानां पक्षिणामपि महाधीरमुख्यचिह्नमालक्ष्य किंचिदनुमिमाना सविस्मयमाह वंशीकलमिति कलयतः धारयतः कृष्णस्य तथाच प्रायो बताम्ब मुनय इति२७९

न स्पन्दते सखि न रौति न वीक्षतेऽन्यं नान्ये च शृणोति न जिघत्सति पत्त्रिसंघः रोमाञ्चवानिव मुदा गरुतं धुनानो वंशीकलास्वदनमेव परं करोति ॥२८०॥

स्रस्ते रथाङ्गकलहंसविचित्रचेले प्रव्यक्तसैकतनितम्बमुदीर्णफेनम् । आवर्त्तवर्त्तितघनभ्रमिभिः समीयेऽपस्मार एव मुरलीनिनदैर्नदीभिः ॥ २८१ ॥

वीचीकरैः सरसिजाञ्जलिमर्पयन्त्यः कृष्णाङ्घ्रिपङ्कजयुगं बहुमानयन्त्यः । सच्छीकरैः शिशिरयन्ति रसेन वंशीनादप्रहृष्टमनसः सखि शैवलिन्यः ॥ २८२ ॥

आच्छादयन् शरदशीतकरस्य तापं छत्त्रायितः स्ववपुषायमचेतनोऽपि । संसर्पति प्रतिपथं परितः प्रसर्पन् मैत्रीं विभावयति मेघरुचीह मेघः ॥ २८३ ॥

कर्पूरपूरपरमाणुसमेन वारां शीतेन शीकरभरेण विसारिणा यः । गोचारणश्रममपाकुरुतेऽनुगायन् वंशीममुष्य घन एव निसर्गबन्धुः ॥ २८४ ॥

स्निग्धेषु शाद्वलतलेषु पदारविन्दस्यन्दीनि वल्लभतमाकुचकुंकुमानि । वक्षोरुहेषु च मुखेषु च रूपयन्त्यो धन्याः पुलिन्दसुदृशः सुरसा भवन्ति ॥ २८५ ॥

---

प्रेमानुभावविशेषस्यैव मुनित्वगमकतामप्याह न स्पन्दत इति स्तम्भाख्योऽनुभाव एव समाधिलक्षणगमकः नरौतीत्यादिभिश्चतुर्भिः विषयान्तरारोचकमेव वागादीन्द्रियप्रत्याहारज्ञापकं रोमाञ्चवानित्युपयत्र भक्तिसूचकं तद्राहित्ये सति मुनित्वस्यापि वैफल्यज्ञापनाय न जिघत्सति न भोक्तुमिच्छति गरुतं पक्षम् ॥२८०॥

तमेवं मुरल्याः सर्वेष्वपि रसेष्वप्युद्दीपकत्वे शृङ्गारेऽतिवैशिष्ट्येन तत्कथयन्ती स्वीयं भावमेव व्याचक्षाणा काचिदचेतना अपि नदीं प्रस्तौति स्रस्तेइति रथाङ्गाः कलहंसाश्चैव विचित्रं चेलं परिधानीयवस्त्रं तस्मिन् स्रस्ते सति तेषामपि भाववैवश्येन पुलिनाद्बहिः प्रदेशान्तर्लुठनात् प्रव्यक्तं सैकतं सिकतामयपुलिनमेव येन तद्यथास्यादेवम् अपस्मारोऽत्रकामशराघातजनितो व्याधिविशेष एव समीये संप्राप्तः ॥२८१॥

शैवलिन्यो नद्यः तथा च नद्यस्तदातदुपधार्य्येति ॥२८२॥

एवं नद्यो यथानायिकात्वाभिमानवत्यो निजसच्छीकरादिभिस्तस्य भूतलगततापं शमयन्त्यः सेवन्ते तथा मेघोपि सख्याभिमानेन नभस्तलगतं तापं शमयन् सेव्यमानो लक्ष्यते अतः के वा तदास्यं न कुर्वन्ति केवलं वयमेव तत्र वञ्चिता इत्यभिव्यञ्जयन्ती काचिदाह आच्छादयन्निति शरदशीतकरस्य शारदसूर्य्यस्य मेघस्येवरुक्कान्तिर्यस्य तस्मिन् इति सावर्ण्यमेव मैत्रीहेतुः तथा जगत्तापशमकत्वादिकं च ज्ञेयम् इह श्रीकृष्णे ॥२८३॥

यः कृष्णः अमुष्य श्रीकृष्णस्य तथा च दृष्ट्वातपे इति ॥ २८४ ॥

हंतैव सर्वजगदेव प्राप्तकृष्णमाधुर्य्यार्णवानुशीलनतया धन्यं केवलमेकैवाहं तत्र वञ्चितेति मुह्यतना कापि सदा भोगेपि तद्गन्धमात्राधारस्तुतिरत्युज्ज्वलनीलमणिलक्षितमादनभावोदयेनाह । स्निग्धेष्विति अत्र यद्यपि वल्लभतमास्वयमेव तथापि अनुरागस्यातिप्रौढिम्ना स्वस्य तथात्वाननुभवात् अपरेति भावना पदारविन्दास्पन्दानीतिरतिसमयेऽल्पान्यासन्नित्यर्थः । रूपयन्त्योऽर्पयन्त्यः वक्षोरुहेष्विति तच्चरणार्पणस्यैवाभिमानः मुखेष्विति तासौ रम्यत्वोभयापरत्वेन ॥ २८५ ॥

हंताधिकार्य्यनधिकारितया न भेदः सर्वाभिलापसदने मधुरिम्नितस्य । युक्तं पुलिन्दसुदृशो यदिहानुरक्ता रागस्य चमत्कटनेह्ययमेव मार्गः ॥ २८६ ॥

यः कन्दकन्दरपयः फलधातुरागैः क्रीडोपयोगिभिरसौ भजतेऽनुवेलम् । गोवर्द्धनो गिरिवरः सहि माधवस्य लीलासखश्च सखि भागवतोत्तमश्च ॥२८७॥

यस्याश्रयं कृतवतां सखिवद्धतृष्णः कृष्णस्तनोत्यभिमतं मतमे तदेव । श्रेयः सिसाधयिषवो न विना सहायं योग्याश्च तद्धटयितुं कुशला भवन्ति ॥२८८॥

अथातिमानवतया नवतया च स्वदासदाक्षिण्यं वलवतानुरागेण परमधन्या धन्यादयः कुलकन्याः कुलकन्यायविदोऽपि विदोऽपि न गोचरयुत्कलिकामुत्कलिकामिव विभ्रत्योऽभ्रत्योघे मन्दाक्षस्यमन्दाक्षस्यदाः परस्परं परंपरम्परामाप्तमाक्तनमणयेन समालिङ्गन्त्यसमभाषत ॥ २८९ ॥

वंशीकलः किलहरेः सखि ! सिद्धवीर्य्यो वस्तुस्वभावपरिवृत्तिकरो हि मन्त्रः । निश्चेतनत्वमुदपादि सचेतनानां यचेतनत्वमुपपन्नमचेतनानाम् ॥ २९० ॥

अपि कार्य्यनधिकारितयेति स्वस्यापितत्र योग्यतास्थापमेनाश्वासनं युक्तमित्यत्र हेतुः सर्वाभिलासेति रागस्य प्रकटन इति स्वस्यायोग्यत्वे ज्ञातेपि लोभस्तु भवेदेवेति भावः । तथाच पूर्णाः पुलिन्द्यइति ॥ २८६ ॥

पुलिन्दीप्रस्तावेनानुस्मृतं तदास्पदस्य श्रीगोवर्द्धनस्य भूरिसौभगं वर्णयन्ती भग्या तत्रैव स्वाभिसारोत्सुक्यमपि सखीष्वभिव्यञ्जयन्त्याह यः कन्देति लीलासखश्चेति कन्दरादीनां क्रीडोपयोगित्वात्सख्यं भागवतोत्तमश्चेति कन्दपयः फलधात्वाद्युपचारैः परिचरणादास्यम् ॥२८७॥

वैष्णवोत्तमानुवृत्त्यैव विष्णोः प्राप्तिरिति सिद्धान्तयन्तीव तत्र श्रीगोवर्द्धनानुवृत्तेस्तु साक्षात् कृष्णवशीकारित्वलक्षणमतिवैशिष्ट्यमानयन्ती तत्रैव स्वस्यापिसंजिगमिषां प्राणसख्यां सूचयन्त्याह यस्येति मतमेतदेवेति सात्वततंत्रप्रमाण्यादपीति भावः । योग्याश्च योग्या अपि तथा च हंतायमद्रिरवला इत्यादि ॥२८८॥

पूर्वोल्लादी परोढानामालापमनुरागजं समाप्य पूर्वरागोत्थमनूढानामथाहत्रम् ।
नन्वेताभिर्व्रजस्थाभिः कृष्णे वनविहारिणि नदामिषपुलिन्द्यादिस्तथा भावस्तदात्मजः
ज्ञातः कथं शृणु प्रौढभक्तस्याप्यमले हृदि ऋतमेव स्फुरत्यासां मूर्त्तप्रेम्णां तु किं पुनः ।

अतिमानवतया लोकोत्तरतयेत्यर्थः । सदा नवतया नित्यनूतनत्वेन हेतुना वलवता वलवता प्रबलेनानुरागेण प्रेम्णा सदाक्षिण्यं परस्परहृदयोद्घाटनलक्षणसारल्यसहितं यथा भवत्येवमभाषन्त । उत्कलिकां उद्गतां कलिकामिव दुर्ज्ञेयान्तस्तत्वाम् उत्कलिकां उत्कण्ठां विभ्रत्यो धारयन्त्यः यतो विदोऽपि विज्ञस्यापि न गोचरम् आविष्टलिङ्गत्वात् पुंस्त्वम् । विदः कथंभूतस्य कुलकं समवायस्तस्य न्यायं विन्ते एताः समवेता भूत्वा नूनं किंचिन्मन्त्रयन्त्य इति विचारयतीति तथा तस्यापि । इदानीं तु वेणुगानारम्भे प्रेमवैवश्यात् मन्दाक्षस्य लज्जाया ओघे वेगे समूहे वा अभ्रति गच्छति सति "अभ्रगतावितिधातोः" मन्दः अक्षाणां करचरणादीन्द्रियाणां स्यदो वेगो यासां ताः। स्तम्भादिसात्विकोदयादिति भावः ॥२८९॥

उदपादि उत्पादयामास वंशीकलः कर्त्ता तथा ययतो वंशीकलात् ॥ २९० ॥

दृश्यतां चतदेतत् । स्तम्भन्ति हन्त हरिणाश्च गवां गणाश्च वृक्षौकसश्च सरितश्च जलेचराश्च । भूमिभृतश्च सखि ! भूमिरुहश्च भूश्च स्निह्यन्ति च प्रकटयन्ति च रोमहर्षम् ॥२९१

यं कालकूटमिव कालकरं करालं कालेन कालियरिपुः कलयांचकार । तं कालि कालयतु केलिमती कुलीना वंशीकलं किल कुलस्य कलङ्ककीलम् ॥ २९२ ॥

स्मरत स्मरतरलमानसं मानसंवलितसमदं समदं दह्यमानेन हृदयेन हृदयेनमतिरुचिरं रुचिरञ्जितसकलभुवनतलं वनतलं गतमगतमहोत्सवं व्रजराजराजनन्दनम् ॥२९३

सुस्निग्धदीर्घघनकुञ्चितकेशपाशं मन्दभ्रमद्भ्रमरकावलिभव्यभालम् । सुभ्रूलतं स्वलकमुन्नतचारुनासं प्रेयं भविष्यति कदास्य तदास्यपद्मम् ॥ २९४ ॥

किंच माधुर्यसिन्धुमधि यस्य भवेन्निपातस्तत् केवलं मधुरिमाणमुरीकरोति । उष्णीषसीमनि सहेलगता मुरारेर्गोच्छन्दरज्जुरपि मज्जति रम्यतायाम् ॥२९५॥

तदेतत्स्वभावपरिवर्त्तनम् दृश्यतामितिदूरवृत्तमपि तत्तत्सर्वं साक्षात् क्रियमाणमिवाभिप्रयन्ति स्तम्भन्तीति । हरिणादीनां पञ्चानां जङ्गमानां स्तंभः स्थावरधर्मः तथा भूमिभृदादीनां त्रयाणां स्थावराणां स्नेहाश्रुपातरोमहर्षौ जंगमधर्मौ । वृक्षौकसः पक्षिणः । जलेचराः मीनादयः । भूमिभृतः शैलाः । सर्वत्र चकाराः भावोदये सर्वेषामेव प्राधान्यसूचकाः । शैलानां भुवश्च तृणाद्यङ्कुरोद्गमनिर्झरादिभ्यां पुलकाश्रुपातौ । वृक्षाणां तु मुकुलोद्गमकरन्दाभ्यां तथा च प्रस्यन्दनं गतिमतामिति ॥ २९१ ॥

नन्वस्तु नामहरिणादीनां तिरश्चामल्पधियां तथाभूभृदादीनां च ततोऽपि ज्ञानाभावान्न्यूनकोटौ प्राप्तरेखानां तथात्वं दोषाभावापकमेव किंच विशिष्टपरामर्शशालिनृजातिष्वपि कुलकुलाङ्गनास्तु स्वधर्मरक्षार्थमपि यत्नतो धृतिमालम्बेरन्नेवेति तत्र सविचारमाहुर्यमिति । कालेन कैशोरप्राप्त्या यं वंशीकलं कलयांचकार । अभ्यस्तवान् कालियरिपुः कालकूटमूलखण्डकोऽपि कालकूटमिव कालकरं मृतिपर्य्यन्तदशाप्रापकम् अत एव करालं घोरम् हे ! आलि ! सखि ! तं का कुलीनापि कालयतु वारयतु प्रत्युत् केलिमती सतीति केलीनां भावित्वेऽपि तत्रनिश्चयदार्ढ्येनैव नित्ययोगार्थकमतुपा तदीसुक्यस्यापि दुर्निवारत्व ध्वनितम् । यद्वा केलिमती तेन प्राप्तसुरतापि कान्या तृप्तिं विभाव्य धृतिमालम्बतामित्यर्थः । वयं तु तदप्राप्तिमुर्मुरज्वलिता एवेति भावः २९२

अथ ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते इति तत्प्रशास्त्रोक्तदृष्ट्यातत्प्राप्तिसाधनं तत्स्मरणमेवेति निश्चिन्वन्त्यः तदेव सौहार्देन स्वीयाः प्रतिविदधाना इवाहुः **स्मरतेति** मानस्य सर्वजनकृतस्यादरस्य संपत्त्या समदं प्रस्तुतत्वादौचित्येन व्याप्तितेवणुगानगर्वं समेन सर्वाङ्गनागमाकर्षकमत्या तुल्येन तत् प्राप्त्यभावात् दन्दह्यमानेन हृदयेन मनसा स्मरत । कीदृशं हृदयेन हृदयनाथम् । अगतोत्सवं नित्यमहोत्सवयुक्तम् ॥२९३॥

अत एव स्मारणार्थमिव आकेशमाचरणाङ्गं मुख्यमुख्याङ्गं सनिजाभिलाषोद्गारं वर्णयन्ति सुस्निग्धेति । भ्रमरका उत्पादालका ॥ २९४ ॥

गवां छन्दरज्जुः पादबन्धनरज्जुः सा च पीतपट्टसूत्रमयी मुक्ताटम्बितचमर्या प्रेया ॥२९५

किंच । रत्नोल्लसन्मकरकुण्डलताण्डवेन विभ्राजमानतममस्य कपोलविम्बम् । ताम्बूलगन्धिरदनच्छदवन्धुजीवैर्धन्याः परं प्रमुदिताः परिपूजयन्ति ॥२९६॥ किंच । श्रीवत्सकौस्तुभरमावनमालिकानांलक्ष्मीभरेण परयापि च हारभासा । विभ्राजमानपरिणाहममुष्य वक्षः का नाम वामनयनेच्छति न प्रवेष्टुम् ॥२९७॥ किंच । जानुद्वयीलवणिमामृतमद्विधीपुः पार्श्वस्थयोर्मदमनोभवनागयूनोः । शुण्डाद्वयीव भुजयोर्द्वितयीयमस्य कस्या विलोडयति हन्त न हृत्तडागम् २९८ किंच । आवेल्लितं सुवलितावलिभिर्वलीभिर्मुष्टिप्रमेयमपि पुष्टमिवौजसा यत् । लग्नं मुहुस्तदवलग्नममुष्य नोऽन्तर्हा हन्त तत् कृशमिदं च कृशीकरोति२९९ किंच । लावण्यकल्पतरुकोटरकल्पनाभीनिर्यत्तनुभ्रमरराजिरिवोन्मुखीयम् । रोमावलिर्मलिनिमानमहो वहन्ती हा हन्त कालभुजगीव ददंश हृन्नः ॥३००॥ किंच । शोणारविन्दरुचिनिन्दकमङ्घ्रियुग्मं वज्राङ्कुशध्वजसरोरुहलक्ष्मलक्ष्मि । मञ्जीररत्नकिरणोल्लसदङ्गुलीकं वक्षस्तटीमहह भूषयिता कदा नु ॥ ३०१ ॥ इत्येवमुत्कण्ठमानाः कण्ठमानाय्य जीवितमिव ता एता एता इवानुरागपरभागेण कथंकथंचिच्छरदं गमयित्वा तरङ्गमयित्वातरंचोत्साहस्य साहस्यरयं गता अहहेमन्तं हेमन्तं समासेदुः ॥ ३०२ ॥

ताम्बूलगन्धीति तत्पूजनसाधनताद्दशपुष्पाणामेतदेव सौगन्ध्यमिति भावः ॥२९६॥

परिणाहो विशालता ॥ २९७ ॥ जानुद्वयीति भुजयोराजानुलम्बितत्वेनाग्राभ्यां स्वत एव तत्स्पर्शस्तथात्वेनोत्प्रेक्षितः ॥ २९८ ॥

सुवलिता- आवलियासां ताभिर्वलीभिः आवेल्लितम्- आवेष्टितं, यद्वा पूरकरेचकश्वासानुरोधेन. आवेल्लितम् ईषत् कम्पितम् ओजसा बलेन तत् अवलग्नं मध्यभागः नोऽस्माकम् अन्तर्मनसि लग्नं सत् कृशमपि अन्तः कृशीकरोति औत्कण्ठ्यात्मकताडनेनेति भावः यद्वा स्वयं कृशमपि सत् अन्यदपि कृशं करोति ॥ २९९ ॥

लावण्यकल्पतरोः कोटरकल्पा या नाभिस्ततो निर्यती निर्गच्छन्ती तनुः सूक्ष्मा भ्रमरराजिरिव मलिनिमानं वहन्ती रोमावलिरुन्मुखीसती तदीयहृदयपर्यन्तं गच्छन्त्यपि नोऽस्माकमेव हृदयं कालभुजगीव ददंश ॥ ३०० ॥

वज्रादिभिर्लक्ष्मभिर्लक्ष्मीः शोभा यस्य तत् अङ्घ्रियुग्मं कर्तृ वक्षस्तटीमित्यस्य पूर्वश्लोकस्थेन न इति पदेनानुषङ्गः भूषयिता भूषयिष्यति ॥ ३०१ ॥

जीवितं जीवनं कण्ठमानाय्य कण्ठगतप्राणा इत्यर्थः एवं पूर्वरागे दशम्या दशायाः प्राप्त्यभावप्राप्तिरुक्ता केवलमाशयैव निरुद्धजीविता इति भावः अनुरागपरभागेण महाप्रेमोत्कर्षेण ताः प्रसिद्धा एता गोपकन्या एता इव अन्यत्रौपम्याभावादनन्वयालङ्कारोऽयं तदपि उत्साहस्य अतरं दुस्तरं तरङ्गम् अयित्वा प्राप्य सहसा इत्यस्य भावः साहस्यं तस्य रयं वेगं गताः कात्यायन्यर्चनव्रतार्थमित्यर्थः अहहेति सुकुमारीणामपि तादृशं तप इति खेदे तं प्रसिद्धम् इमं तथा भावेदयेन साक्षादिवोपसन्नं हेमन्तं तन्नामर्तुं प्रापुः ॥ ३०२ ॥

ततश्च मूलमिलितदरपरिशिष्टविशिष्टविकचसौगन्धिकगन्धिकपिपासयेव नम्रक म्रकपिशपिशङ्गकणिशशालिशालिक्षेत्रस्य ॥ ३०३ ॥

दराङ्कुरितनिर्यवसयवसहितगोधूमधूमलितोदारकेदारकेवलवलमानशोभस्य मेदुरतरकुस्तुम्बुरुस्तम्बरुचिरमधुरामधुरावनेः ॥ ३०४ ॥

सुस्निग्धवास्तुकवास्तुकस्य दिक्षु दिक्षु वलदिक्षुवलजवलजनितलक्ष्मीकस्य सहसो मासस्य ॥ ३०५ ॥

शस्यसंपत्तिप्रथमे प्रथमेऽपि स्वभावसिद्धा भावसिद्धावुत्कण्ठयाकण्ठयापितजीविता इव साधकाभिमानजुषोऽमानजुषो विहितसंगोपनागोपनाथतनयो नयोपपन्नः पतिर्नो भूयादिति संकल्प्य सहोमासे सहोमासेवनमारेभिरे ॥३०६ ॥

इत्यानन्दवृन्दावनेकैशोरलीलालताविस्तारे ऋतुविहारे राधानवसंगमो नामैकादशः स्तवकः ॥ ११ ॥

ततश्च सहसो मासस्य हेमन्त ऋतोः प्रथमे सहोमासे मार्गशीर्षेमासि सह मिलिता एव ताः प्रसिद्धा धन्यादिकन्या उमायाः सेवनम् आरेभिरे इत्यन्वयः । सहो बलेऽप्येऽपि च मार्गशीर्षहेमन्तयोश्चापिसहाः प्रदिष्ट इति विश्वः । मासशब्देन ऋत्वभिधानमुपचारात् तदवयवत्वाद् यमकशोभार्थम् यद्वा सहसो मासस्येति व्यधिकरणषष्ठ्यौ ततश्च सहसो हेमन्तऋतोर्मासस्य मध्ये यः सहोमासस्तत्रेत्यर्थः । कीदृशस्य मूले मिलितं मूलमात्रलग्नं दरपरिशिष्टम् ईषदवशिष्टम् विकचसौगन्धिकगन्धि प्रफुल्लकह्लारतुल्यगन्धं कं जलं तस्य पिपासयेव तत् पातुमिच्छयेवनम्रा नताः कम्राः कमनीयाः कपिशपिशङ्गकणिशशालिनो जातिभेदेनकापिशवर्णं पिशङ्गवर्णमञ्जरीयुक्ता ये शालयो धान्यानि तेषां यत्र तस्य ॥ ३०३ ॥

दराङ्कुरितैर्जाताल्पाङ्कुरैर्निर्यवसैर्निस्तृणैर्यवसहितगोधूमैर्धूमलिताधूमलवर्णीकृता ये उदारकेदारा वृहत्क्षेत्राणि तैरेव केवल वलमाना शोभा यस्य कुस्तुम्बुरूणां धन्याकानां स्तम्बैर्गुच्छैरुचिरास्तत्साहित्येन शोभना या मधुरा मधुरिका महुरीति प्रसिद्धास्ताभिर्मधुरा माधुर्यवती अवनिः पृथ्वी यतस्तस्य ॥ ३०४ ॥

सुस्निग्धानि वास्तुकानि वास्तुभूमयो यैस्तानि वास्तुकानि शाकविशेषा यत्र तस्य दिक्षु दिक्षु वलन्ति इक्षुवलजानि इक्षुक्षेत्राणि तैर्वलैरेव जनिता उत्पादिता लक्ष्मीः शोभा यस्य तस्य ॥ ३०५ ॥

सहोमासे कीदृशे शस्यसंपत्या प्रथा ख्याता मा शोमा यस्य तस्मिन् स्वभावसिद्धा अपि नित्यसिद्धा अपि भावसिद्धौ कृष्णकान्तात्वरूपो यो भावस्तस्य सिद्धिनिमित्ते साधकाभिमानजुषः अमाना अपरिमाणा जुट् प्रीतिर्यासां ताः ॥ ३०६ ॥

इत्यानन्दवृन्दावने टीकायां सुखवर्तिन्यामेकादशस्तवकसंगमनम् ॥ ११ ॥

## द्वादशःस्तवकः

अथ यदहरेवारभ्य तादृशसंकल्पसंकल्पलताकुसुमसुमनोहराणामासामासादितसामञ्जस्यो व्यापारोऽपारोत्कण्ठया समजनि तदहरेव विशिष्टपतिलाभेन हृदयशंकुलबालानां शं कुलबालानां समुचितमितिविचारयंतौ तासां प्रत्येकं मातापितरौ मा तापितरौ बभूवतुः ॥ १ ॥

प्रत्युत तदनुकूलव्यापारपारणार्थे कुशलिनावास्ताम् ॥ २ ॥

तथा सति तासां मात्रामात्राधिकेन स्नेहेन परमरमणीया ते तनुव्रतती व्रततीस्पर्णतां सोढुमसांप्रतं सांप्रतं कथमेतादृशमत्साह मुत्साहमुत्साहसेन दधत्या दुष्करं कर्मकर्मठताशून्यतयाऽनन्यतयाऽनधिकारिण्या त्वया करिष्यते इति प्रत्येकं प्रतिसिद्धानामश्रद्धानाम श्रद्धा शुद्धाऽऽशु वरीवृद्ध्यत एव स्म ॥ ३ ॥

ततश्च तासां मातरःपप्रच्छुः पुत्र्यः किमुमा किमुमाधवः किमु माधवः किं कमलाकमलासनो वा का देवता वताराधनीया भवतीभिः कीदृशं वाराधनं धनं वा कियदुपयोगि कोत्र वाचार्य्यो वाचाऽर्य्यो विहित इत्यखिलं विचार्य्य नः कथयत ॥४॥

द्वादशे यस्य संगायानुर्चुरार्य्यो कुमारिकाः । स तासां परिधानीयवासास्यपहरद्धरिः ॥

तादृशः संकल्पः गोपनाथतनयः पतिर्नो भूयादित्युक्तलक्षणः स एव लताश्लेषात् परम्परितरूपकेण सकल्पलतैव सम्यक् कल्पलता वाञ्छितार्थसाधकत्वात् तस्याः कुसुमैर्भाविफलद्योतकैर्लक्षणविशेषैः सुष्टु मनोहराणां प्रासाश्वासतया स्तिमितचित्तत्वेन लोकैर्लक्ष्यमाणनामित्यर्थः । कुसुमसुमन इति पुनरुक्तवदाभासाऽलङ्कारोऽयम् । तदहरेवेति कालकर्मणि द्वितीया । विशिष्टपतिलाभेन कुलबालानां कुलकन्यानां समुचितं शं सुखमिति विचारयंतौ संतौ हृदये शंकुशा औत्कण्ठ्यलक्षणकीलग्राहिण्यश्च ताःबालाः प्राप्तप्रथमकैशोरावस्थाश्चेति तासां मातापितरौ जननीजनकौ मा तापितरौ न अतिशयेन तापवंतौ बभूवतुरित्यन्वयः । मत्वर्थकेणिप्रत्ययांतात्तरप्प्रत्ययः ॥१॥ पारणार्थे पारप्राप्तये पारतीरकर्मसमाप्ताविति धातोः ॥ २ ॥

किंच तासां प्रत्येकं मात्रा जनन्या मात्राधिकेन परिमाणाधिकेन स्नेहेन प्रतिसिद्धानामपि अश्रद्धानाम श्रद्धा वरीवृद्ध्यते स्मेव अतिशयेनावर्द्धत एव मात्राकर्णविभूषायां वित्ते माने परिच्छदे इतिमेदिनी । तत्प्रतिषेधवाक्यमाह परमेत्यादि ते तवतनुव्रतती देहलतावतस्य तीक्ष्णात तज्जनितं दुःखं सोढुमसांप्रतमयोग्या अत एव सांप्रतं इदानीं एतादृशीं निज तत्प्रोद्दिलक्षणां मुदं हर्षे सहते इति कर्मण्यण् तादृशमुत्साहमध्यवसायं उत्साहसेन उच्चैः साहसेन दधत्या धारयन्त्या त्वया दुष्करं कर्म कथं करिष्यते । दुष्करत्वे हेतुः कर्मठता शून्यतया अतो तव कर्मठता न लक्ष्यन इत्यर्थः । यत्राप्यनन्यतया पूर्वपूर्वाभिरीदृशव्रतस्यानाचरणादिति भावः । अतएवानधिकारिण्या ॥ ३ ॥

ततश्च तासां तन्निश्चयदार्ढ्यज्ञानानन्तरं उमा गौरी उमायाः धवः शङ्करः माधवो लक्ष्मीकान्तः कमला लक्ष्मीः कमलासनो ब्रह्मा वत अनुकम्पायां उपयोगिनैवेद्यादावित्यर्थः । आचार्य्य उपदेष्टा कीदृशः वाचा वेदादिमन्त्र वाक्येन आर्य्यः विज्ञः ॥ ४ ॥

तासां निगदिते विदिते वितर्कनिराशाय स्वतात्पर्य्यपर्य्यवसानस्य ता अपि सविनयमूचुः ॥ ५ ॥

जननिजननियमोयमेव यत्र यावद्यस्य श्रद्धा यद्वा बहुतरा भवति सा तस्य तावदेव देवता तेनेह तेनेऽहमुमामेव देवतां मनएवाचार्य्यं चार्य्यं तदुपदिष्टं दिष्टंन-स्तथाविधं जनयिष्यते नयिष्यते च पारमध्वनः तेन गुरुणा स्वप्नेनास्वप्नेनादिष्टो मन्त्र एव नोर्थसाधक इति ॥ ६ ॥

ततश्च ताभिरनिवर्त्यानां तासां तदेव निर्द्धार्य्यधार्य्यमाणोत्कलिकयाऽऽलिकया कृतानुकूल्यानां शुभेऽहनि हनिष्यमाणां तरा ये हृत्प्रमोदरससंदोहविध्यं हविष्यं समारभ्य कृतव्रतोद्यमानां बभूवुस्ताम्बूलाभावेन स्वभावभावहुलतया वर्णजलधौ तानि नवाशोकदलानीव दशनवसनानि ॥ ७ ॥

प्रत्यहमभ्यङ्गमभ्यङ्गराहित्येन परुषतया केतकीदलपाण्डुराण्यङ्गकानि ॥ ८ ॥

तथा निःस्नेहतयाऽहतया निर्विण्णजनमनांसीव रूक्षाणि चिकुरनिकुरम्बाणि९

इति तासां मातॄणां निगदिते भाषिते विदिते ज्ञाते सति ताः पुत्र्योपि ऊचुः । कथं स्वेयां तात्पर्य्यस्य यत्पर्य्यवसानं पतिभावेन श्रीकृष्णसंगप्राप्तिरूपं तस्य यो वितर्कस्तन्निराशाय प्रत्युत्तरप्रदानं विना सशङ्काभिर्मातृभिः सदा दृढानुसन्धानपराभिस्तदपिकदाचिद्वितर्क्यतैव वेत्यर्थः ॥ ५ ॥

ता ऊचुरिति तासु एकतया मुख्याया एकवचनेऽपि बहुवचनं सर्वासामैकमत्यात् अत एवाग्रे तेन इत्येकवचनमपि यद्वा स्वस्वमातरं प्रति ता एकैकश ऊचुरिति अत एव हे जननीत्येकवचनम् तेन हेतुना इह उमामेव देवतां अहं तेने सकामार्चने विस्तृतवत्यस्मि लिडादीनां भूतसामान्य एव भूरिप्रयोगदर्शनात् नात्रपरोक्षापरोक्षविवेकः आचार्य्यंच आचार्य्यमपि मन एव आर्य्यंश्रेष्ठं तदुपदिष्टं तस्योपदेश एव नोऽस्माकं तथाविधं दिष्टं अदृष्टं जनयिष्यते तच्च अध्वनो व्रतरूपवर्त्मनः पारं फलस्थानं नयिष्यते नेष्यति 'नयप्रापणे' इत्यात्मनेपदिनो रूपम् । तेन मनोरूपेण गुरुणा मंत्रः स्वप्नेन आदिष्टः ननु स्वप्नः स्वप्नोपम एवाप्रामाण्यात् मैवं अस्वप्नेन जागरणनिर्विशेषेण इत्यर्थः । यद्वा अस्वप्नेन जागरणेन च अकस्मादेव हृदि स्फुरणादिति भावः ॥६॥

ताभिर्मातृभिः अनिवर्त्यानांव्रतान्निवर्त्तयितुमशक्यानां तासां कुमारीणां उत्कलिकया उत्कण्ठया आलिकया सानुकम्पसख्या हनिष्यमाणा नष्टीकरिष्यमाणा अन्तराया विघ्ना येन तथाभूतेऽहनि हृत्प्रमोदरसानां संदोहस्य संदोहे व्रा या विड्व्याप्तिः विषु व्याप्तौ तस्यां साधुःसाध्वर्थे यः प्रत्ययः स्वभावेनैव भावहुलतया कान्तिबाहुल्येन ताम्बूलरसानावृतत्वादत्यरुणिमोद्गमादिति भावः७

अभ्यङ्गं अङ्गेऽक्षयीकृत्य अभ्यङ्गराहित्येन तैलाभ्यञ्जनाभावेन ॥८॥

निःस्नेहतया निष्प्रेमतया निस्तैलत्वेन च कीदृश्या वैराग्यसिद्ध्यर्थं व्रतस्यसाङ्गतासिद्ध्यर्थं च अहतया अप्रमादप्यनष्टया। अत्र यद्यपि तासामङ्गानि केशाश्च तैलाभ्यङ्गाभावेऽपि स्वभावादेवातिस्निग्धानि तदपि प्रेमवतां दृष्टृजनानां रुक्षतासम्भावनयैव रूक्षाण्युक्तानि यथा पुत्रेदृढं पुष्टमपि पश्यन्त्या मात्रा मत्पुत्रदेहोऽयं क्षुधाक्षाम इति संभाव्यते ॥९॥

तथासकृद्दनतयानतया तनवोऽपि-तनवोऽपिहितरुचोऽद्वितीयायाद्वितीयायाः शशिकलायाः सौभाग्यहारिण्यो हारिण्योऽपि ॥१०॥

यदि पुनरजनि रजनिविरामस्तदा भूशयनाः शयनादुत्थिताः सत्यः कृष्णाशयाशयालुता विरहेण विकषाकषायवदरुणनयना नयनादिधावनं विधाय रागानक्तं नक्तंनवसनं निरस्य रस्यतमं वसनान्तरं परिधाय ॥११॥

विगतवैकल्यं प्रतिकरयं प्रतिपत्स्यमानयमुनाप्लवप्लवमानमानसाः समनन्तरमनन्तरहसा पूर्वसंवादेनाकारणकारणाभावेपि मिलित्वालि ! त्वामपेक्ष्य वर्त्तामहे महेच्छे त्वरितमेहीति विलम्बमानां प्रति प्रतिपद्यमानमाननागिरः ॥ १२ ॥

तदनुपरस्परपरमप्रेम्णेव विपक्तविसलतावलिवलितललितलक्ष्मणा धरणितलसंचारिचारिमभरमगाढाः कमलिन्य इव इतरेतरतरलशाखाशाखाक्रमनं किंचन काञ्चनकान्तलतोद्यानमिव जङ्गमं निजनिजचपलतावलेपलेपनाय परस्परगुम्फन-

सकृद्दनतमेति कर्त्तरि ल्युप्रत्ययान्ताद्भावप्रत्ययः पुंवत्वं। कीदृश्या: अनतया पूर्ववदुद्धतयेत्यर्थः । तनवोऽपि देहा अपि तनवः कृशा अपिहितरुचः अनवकान्तयः यद्वा भागुरिमतेनाकारलोपे नञा अनाच्छन्नकान्तयः श्रीकृष्णसंगप्राप्त्याशावत्वादितिभावः। किंवा तनवोपि कृशा अपि तनवो हितरुचः कृष्णाङ्गसङ्गमोपयोगिकान्तय इत्यर्थः । अद्वितीयाया एकस्या एव द्वितीयायास्तिथेः संबन्धिन्याः शशिकलायाः सौभाग्यहारिण्यः सर्वजनकारुण्यजनककार्श्यादितिभावः अद्वितीयाया इति तस्या द्वितीयातिथिसाहित्ये किंचित्कलापुष्टिःसंभवेदिति हारिण्योपि हारवत्योपिहारकान्त्या सद्वितीया अपि अद्वितीया शशिकलायाः सौभाग्यहारिण्य इति विरोधः ॥१०॥

एवं व्रतिनीर्निर्गमयित्वा तच्चेष्टाविवृण्वन् आह । यदीति रजनिविरामो यद्यजनि जातस्तदा शयनानुजातायाः यमुनायाः रोधः पुलिनं समाजग्मुरित्यर्थः । शयालुता स्वाभाविकी निद्रा ।द्विरहेण विकषा मञ्जिष्ठा विकषा जिङ्गी त्यमरः । रागेण रक्तिम्ना अनक्तं न म्रक्षितं श्वेतमित्यर्थः । रस्यतमं सावध्यसौभाग्यव्यञ्जकं अरुणादिवर्णमित्यर्थः ॥११॥

प्रतिकरयं प्रतिप्रातः प्रतिपत्स्यमानेन भाविना यमुनायामाप्लवेन स्नानेन प्लवमानमार्द्रीभवन्मानसं यासां ताः । अनन्तरहसा अतिगोप्येन "रहोऽतिगुह्ये सुरते" इति विश्वः । पूर्वसंवादेन पूर्वदिनसायसमय संकेत्य श्वः प्रातरेव करिष्यामहे इति संकेतेनैव हेतुना आकारणकारणभावेऽपि आह्वानेहेत्वभावेऽपि सति । हूतिराकारणाह्वानमित्यमरः । मिलित्वा संमिल्य हे आलि ! हेसखि ! ॥१२॥

परस्परं गृहीतभुजवल्याश्चलन्तीस्ता उत्प्रेक्षते । परस्परं यः परमः प्रेमा तेनेव विपक्ताः परस्परं मिलिता विसलतावलयो मृणाललताश्रेणयस्ताभिरेव वलितं यल्ललितं लक्ष्म चिन्हं तेन कमलिन्य इव । किंच धरणितले सञ्चारिण्यश्च ताश्चारिमभरेण चारुत्वातिशयेन प्रगाढाश्चेति तथाभूता इत्याश्चर्यम् । अत्र सावर्ण्यानुपलम्भ । इति पुनरुत्प्रेक्षते इतरेतरं तरलशाखानां शाखो व्याप्तिः "शाखृ व्याप्तौ" घञन्तः तेन आक्रमनं सम्यक् शोभनं किंचन अद्भुतं काञ्चनस्य कनकस्य लतोद्यानम् अत्रापि जगत्तमोहरणपरमचमत्कारिप्रभानिबहालाभ इति पुन-

१ गुम्फिन्य इत्यपि पाठो दृश्यते ।

क्षणप्रभाः क्षणप्रभावितभूतलावताराः क्षणप्रभा इव गृहीतभुजवलयाः ॥ १३ ॥

वलयावलिनिनदनिर्जितमदकलकलविङ्कझङ्करणमान्दोलितकराः करालतरतरणिकिरणैर्यथा कमलिनीमलिनीभावो न भवति तथाहरहरातिजरीजृम्भ्यमाणकृष्णतृष्णापरिभवेनापि विलसन्मुख्यो मुख्योत्तमकल्पकल्पनासंभृतदेवीपूजासंभारभारमणीयपाणिभिरनुचरीभिरनुगम्यमानाः ॥ १४ ॥

चतुर्मुखमुखलेखलेखामुखमुखरितहरिगुणगुणनझङ्कारकारणदरविवृतमुखकमलामोदप्रमोदप्रपतदलिकुलातिरेकरेकणकणत्कूणनकमनीयनयनाञ्चलं भविकविकस्वरस्वरसौभाग्यं परिवादिनीपरिवादि नीरन्ध्रमृदुलतरं गायन्त्योलघुतरम् ॥१५॥

तमोनुद्यनुद्यति तिमिरनुदोऽपत्यतायामपि तिमिरधाराधारायमाणा याः सकलतापोपशमनानु जाताया: शमनानुजाताया: रोधोरोधोपशमपूर्वमेव समाजग्मुः१६

रप्युत्प्रवृत्ते-निजनिजचपलतायाः प्रतिस्वचापल्यस्य अवलेपेन अहंकारेण लेपनाय प्रलेपार्थं परस्परं प्रसञ्जनार्थमिति यावत् परस्परं गुम्फित्यः परस्परग्रन्थनपराः क्षणरूपा उत्सवमय्यः प्रभा यासां ताः क्षणादेव प्रकर्षेण भावितः कृतो भूतलेऽवतार आविर्भावो याभिस्तथा भूताः क्षणप्रभा इव विद्युत इव ॥१३॥

निर्जितं मदकलस्य मत्तस्य कलविङ्कस्य चटकस्य झङ्करणं झङ्कारो यत्र तद्यथा स्यात्तथा आन्दोलितकराः । कृष्णस्य तृष्णारूपेण परिभवेणेति सोऽपि कृष्णेनैव प्रयुक्तः कटुतरस्वतेजोविशेष एवेति दृष्टान्तसंगतिः । मुख्या या उत्तमकल्पस्य कल्पना तया संभृता ये देवी पूजासभाराः पुष्पदीपनैवेद्यादयः तेषां भा कान्तिस्तया रमणीयाः पाणयो यासां ताभिः ॥ १४ ॥

चतुर्मुखो ब्रह्मा तन्मुखास्तदादयो लेखा देवास्तेषां लेखाः श्रेण्यस्तासां मुखैर्मुखरिता ये हरिगुणास्तेषां गुणनं कीर्त्तनामन्त्रणं तस्य झङ्कारकारणाज्झङ्कारहेतोर्दरमीषाद्विवृतं यन्मुखकमलं तस्य आमोदात् निर्गच्छतः सुगन्धाद्धेतोः प्रमोदेन प्रपतताम् अलिकुलानाम् अतिरेकाद् रेकणं शङ्का तेन हेतुना कणत् प्रकाशमानं कूणनं सकोचस्तेन कमनीयं नयनाञ्चलं यत्र तद्यथा स्यात्तथा रेकृ शङ्कायां । कणीदीप्तौ । कूण सकोचे इतिधातवः । भविकं मङ्गलमयं विकस्वरस्य स्वरस्यापि सौभाग्यं यत्र तद्यथा स्यात्तथा । परिवादीनी वीणातामपि परिवादितु तिरस्कर्त्तुं शीलं यस्य तद्यथा स्यात्तथा । नीरन्ध्रं निबिडं च तत् मृदुलं कोमलं चेति तत् । गानक्रियाविशेषण पञ्चकम् ॥ १५ ॥

तमोनुदि सूर्य्ये अनुद्यति न उदयति सति शमनानुजाताया यमुनायाः रोधः पुलिनं समाजग्मुः । रोधः स्नेहात् पित्रादिकृतवारणं तदुपशमपूर्वकम् । शमनानुजातायाः कीदृश्याः तिमिरं नुदति दूरीकरोतीति तिमिरनुत्सूर्य्यः तस्य अपत्यायां सत्यामपि तिमिरधाराया आधारोऽधिकरणं तद्वदाचरन्त्याः सकलानां तापानामुपशमनं अनु पश्चात् जातं स्नानाचमनान्तरोत्पन्नं भवति यतस्तस्याः ॥ १६ ॥

सा च तरङ्गिणी तरङ्गिणीव तासां श्रीनन्दनन्दनं पतित्वेन लब्धुमिच्छूनां मिच्छूनां श्रद्धामद्धामहतीमालोक्य सबहुमानमागच्छतागच्छतेति तरलतरतरङ्गकरैरालिलिङ्गिपुरिव ॥ १७ ॥

तच्चरणसंचरणरणत्कलहंसकझङ्करणकोलाहलैर्झटिति झटिति कृत्वासमुड्डीयमानानां जलशकुनानामालापेन यथाभिमतसिद्धिमिव सूचयन्तीरयन्ती रमणीयमादरमिव विहगमिथुनस्य निशाविरहस्य रहस्यमुत्पादयितुमुद्यदरुणकिरणाहतहतनिद्रविसिनीकुसुमनयनाञ्चलैः सस्नेहमालोकयामास ॥ १८ ॥

ताश्चतदा विलम्बं सोढुमनीशा नीशारमपहाय सुमहिमहिमकणासारमपि सारमपिहितं हितं तन्वानं तन्वानन्दपर्यैव सहमाना मानातीतो त्कलिकयालिकयालिकयासममेव ॥१९॥

दरकम्प्रकं प्रचलदधरकिसलयलयविकसितसितदशनसंचारिचारिमशीत्कार सत्कृतमधुरहासमितरेतरेत्तणक्षणकौतुकमाकुञ्चितकलेवरं चितकले वरं व्रतरसे तरसेह समादरं वहन्त्यो भगवतीं कालिन्दीमभिवन्द्य तदम्भसि स्नातुमवतेरुः।२०

अवतीर्य्य चागणितशीतभीति यथाविधि विधीयमानस्नानाः समुत्साहसाहसमुदिताः समुदितास्तीरं समुत्तेरुः ॥ २१ ॥

---

तरङ्गिणी यमुना । मिदा स्नेहेन 'ञिमिदा स्नेहने' प्रेमपरिणामविशेषण शूनां वृद्धां टुओश्वि गतिवृद्ध्योः । अद्धा साक्षादेव॥१७॥

तासां तासां चरणानां संचरणे रणतां शब्दायमानानां कलहंसकानां शोभनपादकटकानां संहतानां झङ्कारकोलाहलैः जलशकुनानां जलचरपक्षीणां आदरमिव आदरमयं वाक्यमिव ईरयन्तीव । विहगमिथुनस्य चक्रवाकद्वयस्य निशायां विरहो यस्य तस्य रहस्यं सुरतमप्रसङ्गं रहोऽतिगुह्ये सुरते इतिविश्वः । उत्पादयितुमुद्यतोऽरुणस्य सूर्य्यस्य किरणानां आहतं आघातस्तेन हता निद्रा यस्य तत् विसिनीकुसुमं कमलपुष्पमेव नयनं तस्याञ्चलैः । १८ ॥

नीशारं शीतप्रावरणवस्त्रम् । शोभनो महिमा तपःप्रापकत्वलक्षणो येषां तेषां हिमकणानां आसारमपि आनन्दपर्य्यैव तन्वा सहमानाः । कीदृशम् सारं श्रेष्ठं हितं अपिहितं अनावृतं प्रकटमेव सत् तन्वानं विस्तारयन्तम् । यद्वा अपिहितं आच्छन्नं प्राप्यमाणस्य श्रीकृष्णसङ्गरूपहितस्य जनैरज्ञेयत्वात् । मानं परिमाणं तदतिक्रान्तया उत्कलिकयास्नानोत्कण्ठया हेतुना आलिकया सख्या समम् ॥१९॥

दर ईषत्कम्प्रं कम्पयुक्तं कं शिरो यत्र तद्यथा स्यात्तथा प्रचलतः प्रकर्षेण कम्पमानस्य अधरकिसलयस्य लयात् नाट्यात् विकसितेषु सितदशनेषु संचारीचारिणा चारुतया यः शीत्कारस्तेन सत्कृतो मधुरो हासो यत्र तत् । हासेहेतुरितरेतरेति । परस्परस्वसाधर्म्यदर्शनमेव हास्योद्गमकमितिभावः । ननुकिमेतावताशीतसहनेन तत्राह । इह व्रतरसेवरं श्रेष्ठं समादरं वहन्त्यः । कथंभूते चिता संचिता कला शिल्पं स्नानादिसमस्तव्रताङ्गकौशलं यत्र तस्मिन् ।२०।

सम्यगुत्साहादेव शीतादिदुःखसहिष्णुतायां साहसं तेन मुदिताः समुदिताः संमिलिता एव २१

स्नानसमुत्तीर्णानां मुत्तीर्णा नाञ्जसा जायते स्म यदि तासां तदा यमुनाङ्गसङ्गसंबाधेन चारुदतीनां रुदतीनां तनुरुचामश्रुबिन्दव इव सेसिच्यमानसिचयनिचया गात्रसलिलपृषताः पृषताक्षीणमक्षीणा महीतलं पेतुः ॥ २२ ॥

ये खलु लावण्यामृतसारविन्दवोऽरविन्दबोधकरकन्याकन्यायवासगमितवयसां वयसां गणेन सुचिरमन्वमीयन्त ॥ २३ ॥

तदा च सहजवैरवैरस्यमपहाय दयोदयोत्तरलाभिः कौमुदीभिरिव मुदीभिरिव मूर्त्ताभिः प्रतिभयाऽप्रतिभया रुदतीरिव तिमिरततीः रततीव्रसलिलनिःस्यन्दाः कबरीर्वरीयसीमार्जनेन मार्जनेन सलिलनिःसारेण सारेण लालयन्तीभिरिव शोभाभरेण पुनराभिराभिराम्यकाम्यकार्त्तस्वरकान्तकान्तिभिरासेदे कापि माधुर्य्यस्य परा काष्ठा ॥२४॥

---

स्नानसमुत्तीर्णानां स्नानात्सम्यगुत्थितानां तासां मुत् मनःप्रसादमयी प्रीतिः अञ्जसा शीघ्रं यदि न तीर्णा जायते स्म अपारत्वात् ताभि रेव इत्यर्थः । तदा चारुदतीनां तासां पृषताक्षीणां हरिणनयनानां गात्रतः सलिलपृषताः स्नानजलबिन्दवः अक्षीणा बहुतराः । महीतलं पेतुः । पृषतैणर्ष्यरोहिताश्चमरो मृगाः । पृषन्तिबिन्दुपृषताइत्यमरः । कथंभूताः । सेसिच्यमानः पुनः पुनः सिच्यमानः सिचयनिचयो वस्त्रसमूहो यैस्ते । तानेवोत्प्रेक्षते तनुरुचां अङ्गकान्तीनां अश्रुबिन्दव इव केन हेतुना यमुनायाः अङ्गसङ्गेन जलान्तःप्रवेशेन यः सम्बाधस्तेन । यमुनायाः श्यामत्वात् प्रतिकूलकान्तिभ्यः प्राप्ताघातत्वेनत्यर्थः ॥ २२ ॥

अरविन्दस्य कमलस्य बोधकरः सूर्य्यः तस्य कन्या यमुना तस्याः के जले यो न्यायवासः । न्यायप्राप्ता वसतिस्तेनैव गमितानि यापितानि वयांसि बाल्यादीनि यैस्तेषां वयसां पक्षिणां गणेन वृन्देन तानालोकयद्भिः पक्षिभिरपि तथा माधुर्य्यानुभवस्तत्पूर्वजन्ममध्ये क्वदापि न लब्ध इति भावः ॥ २३ ॥

अथ स्वस्वकवरीमार्जयन्तीस्ता उत्प्रेक्षते । सहजमौत्पत्तिकमपि वैरजनितवैरस्यं अपहाय त्यक्त्वा प्रत्युत दयाया उदय उद्गमस्तेनेव उत्तरलाभिः कौमुदीभिर्ज्योत्स्नाभिरिव । एवं कायनिष्ठं गुणं वर्णयित्वा मनोनिष्ठमपि गुणं वर्णयन्नेव वैरत्यागेऽपि कारणमाह मुदीभिरिवेति मुदां आनन्दानां ईभिर्लक्ष्मीभिरिव मूर्त्ताभिर्मूर्त्तिमतीभिः । प्रतिभयं भीतिस्तेन या अप्रतिभा कर्त्तव्यास्फुरणं तया रुदतीरिव तिमिराणां ततीः श्रेणीः रतः अभिरतस्तीव्रः सलिलनिःस्यन्दोऽश्रुपातरूपो यासु ताः कबरीः सलिलानां निःसारो निःसारणं तद्रूपेण मार्जनेन वात्सल्याक्षालयन्तीभिरिव । अतएव वस्त्रखण्डेन कृताश्रुजलापसारणामाश्वासितानां तासां रोदननिवृत्तिरभूदिति भावः । मार्जनेन कथंभूतेन मा शोभा तस्या अर्जनं लाभो यतस्तेन इति प्रत्युत तासां हर्ष एवाभूदिति भावः । तथा भूताभिः आभिः कुमारीभिः। आभिः राम्यं अभिरामता तेनापि काम्या कार्त्तस्वरात् कनकादपि कान्ता रम्या कान्तिर्यासां ताभिः कापि परा काष्ठा कोपि परम उत्कर्ष आसेदे प्राप्ता ॥२४॥

तदनु च विनिवारितवारितनुलताः कृष्णगानगानन्दमाधुरीधुरीणमुखकमलाः क-मत्रातोऽपि सौभगवत्योभगवत्योतमोतरागाः मत्युद्गमनीयमुद्गमनीयमुत्परिदधुः २५

तथा च सति परिगृहीतांशुकान्तांशुकान्तां मार्जितकेशकलापां कलापाण्डित्य-वतीं सैकतं कतमदुपेयुषीं संपादितसामग्र्यऽसामग्र्यऽवधानपराम् ॥ २६ ॥

दरशीतशीतलताजनितशीत्कारचारुवदनकमलपरिसरसरदलिपक्षवातवातूल-तातूलतान्तभ्रुवं कुमारिकाश्रेणीं यमुनातातोऽपि सुतातोऽपि सुतरां वात्सल्यपात्रीं कदुष्णेन मृदुना शीतोपशमकरेण करेण लालयन्नुदियाय ॥ २७ ॥

ततश्च जलचरचरणचिन्हानुपहतेऽहते च जनान्तरेणान्तरेणानिलं कुत्रचन कर्पूर-धवलेऽवलेपरहिते हिते पुलिने पुनरपि निजनिजकरकमलपरिशोधिते पूजनसामग्री-मग्रीयामवतार्य वतार्य्यचरितास्ताः किल कोकिलकोमलवचसो रचनारसिक-ताभिः सिकताभिर्भगवदुमामूर्त्तिर्निर्मिमितस्व:परस्परमभापन्त ॥ २८ ॥

सहचरि चरितमिदं न कदाचिदस्माभिरधुना धुनाना संभ्रमं भ्रमं च का नाम कुशला कुशलानामपि कुशलेऽस्मिन् न मवर्त्तताम् ॥ २९ ॥

विशेषेण निवारितानि वारीणि याभ्यस्तथाभूतास्तनुलता यासां ताः कृष्णस्य गानगतो य आनन्दस्तेनैव माधुरीधुरीणानि माधुर्य्यभारवाहकानि मुखकमलानि यासां ताः प्रत्युद्गमनीयं धौतवस्त्रयुगं तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगमित्यमरः । उद्गमनीया मतोपयोगिपावित्र्यद-दृष्टा उद्गमवती मुत् प्रीतिर्यस्मिंस्तत् ॥२५॥

परिगृहीतानाम् अंशुकानां अन्ता अञ्चलानि तेषां येंऽशवः कनकरससंबन्धिकिरणास्तैः कान्तांसैकतं सिकतामयं कतमत् पुलिनं उपेयुषीं प्राप्तवतीं संपादितं सामग्र्यं समग्रता । अखण्डत्वं यस्यास्तथा भूता या सामग्री पूजोपयोगिद्रव्याणि तत्रावधानपरां कदाचित् पतद्भिः पक्षिभिरुपहन्येत वेति शङ्कया ॥२६॥

दरशीतस्य अल्पशीतस्यैव या शीतलता वपुषां सौकुमार्य्यात् प्रातःस्नानानभ्यासाच्च यत् शीतदायित्वं तज्जनितेन शीत्कारेण चारूणां वदनकमलानां परिसरे सरतां सौरभं प्राप्य ग-च्छतां अलीनां यः पक्षसंबन्धी वातस्तस्य वातूलतया वातासहिष्णुतया तूलवत्तान्ता भीतिच-पला भ्रुवो यस्यास्ताम् । वातूलः पुंसि वात्यायामपि वातासहे त्रिष्वित्यमरः । यमुनातातोऽ पि सूर्योऽपि सुतातोऽपि सुताभ्योऽपि ॥२७॥

अनिलं अन्तरेण पवनेन विना । जनान्तरेण अहते किंतु अनिलेनैव हते प्रत्युत ऋजूकृते इति भावः । अवलेपः फेनादिकल्कप्रलेपस्तद्रहिते । अग्रीयां उत्तमाम् । अवतार्य्य स्थापयित्वा । रचनायां रसिकता यासु तथाभूताभिः सिकताभिर्वालुकाभिः ॥ २८ ॥

न चरितं न कृतम् इदं कात्यायन्यर्चनव्रतं तथापि कुशला स्वार्थचतुरा का नाम भ्रमं भ्रान्तिं संभ्रममावेगं च धुनाना दूरीकुर्वती सती कुशलानामपि कुशले मङ्गलानामपि मङ्गलेऽस्मिन् कर्मणि न प्रवर्त्तेत किंतु प्रवर्त्तेत एव ॥ २९ ॥

किंच । किमेकैकशः किमुत युगपदर्चनीया कात्यायनी कात्यायनीरसता यथा न भवति तथैव विधीयतां धीयतां श्रद्धां विधाय निर्धीयतां चेति कयाचिदुक्ते पुनरन्या ऊचुः ॥ ३० ॥

मिलित्वालि त्वादृशीभिरीदृशीभिरीश्वरी पूज्या न पुनरेकैकशोऽनेकशोऽनेकशोभा भविष्यतीति सकला एव सकला एवमतिमधुमधुरं कृष्णगुणगानमङ्गलमारभ्य सौरभ्यसौभाग्यकुसुमाञ्जलिं विकीर्य्य शुचिसरसिकताः समभ्यर्च्य भगवदुमादेव्या मूर्त्तिं निर्मातुमारेभिरे ॥ ३१ ॥

आरम्भमात्र एव सा भगवतीति सिकतामयतामयमानेव स्वयमेव स्वयमेव मूर्त्तिमती यद्यजनिष्ट ॥ ३२ ॥

तदैव ता अहो अहोभिर्बहुलैरप्येव न शक्नुवन्ति यन्निर्मातुं तदिदं क्षणेन सह सुसंपन्नमिति हृतमसादसादनेन देवीप्रसादसादनं जातमिति मन्यमाना मानाधिकां चित्तवृत्तिमेव ममाणीचक्रुः ॥ ३३ ॥

ततश्च अभितोऽभितोपततस्तामेव देवीमुपसेवितुमनसो मनसोप्यगोचरेण भावेन भावेन वशंवदा वदावदत्वमपहाय वाग्यता यतात्मानो यमुनासलिलमाहृत्य पूजोपकरणानि करणानियम्यानि सन्निहितानि विधाय निधाय निधिमिव हृदये श्रीकृष्णं विधिवद्विहितपादधावनाचमना मनागालम्बितवसनासनाः समानमान सत्वेन सत्वेन मौनावस्थावस्थानेऽपि समानमानसालापाः समाननिर्वाह्यवाद्यव्यवहाराश्च भगवतीमर्चयितुमारेभिरे ॥ ३४ ॥

---

कस्य सुखस्य अत्यायेन अत्ययेन या नीरसता समस्तभावहेतुकवैरस्यं सा यथा न भवति । धीयतां धिया बुद्ध्या यतां संयताम् ॥ ३० ॥

हे आलि । *त्वादृशीभिर्मिलित्वेश्वरी पूज्या ।* मिलने हेतुः *ईदृशीभिः* परस्परसौहार्दवतीभिः । अतो नात्र वैरस्यं भावीति भावः । नतु एकैकशः एकैकया पर्य्यायेणेत्यर्थः । विलम्बेन सर्वासां मुख्यकालालाभादिति भावः । अत एवानेकशोऽनेकाभिर्बह्वीभिः अनेका शोभा भविष्यतीति । सकलाः पूजनशिल्पवत्यः ॥ ३१ ॥

स्वयमेव सुष्ठु अयं शुभावहं विधिं मयते पूजापरिवर्त्तनेव ददातीति सा तथा । मेङ् प्रतिदाने ॥ ३२ ॥

क्षणेन सह उत्सवेन सह । सादनं प्राप्तिः ॥ ३३ ॥

भावेन प्रेम्णा भावेन भा कान्तिस्तामवति रक्षतीति तेन वशंवदाः परस्परं वशवर्त्तिन्यः । वदावदत्वं वचनप्रतिवचनादिकर्तृत्वं । पूजोपकरणानि धूपनैवेद्यादीनि करणेन वागिन्द्रियेण अनियम्यानि वर्णयितुमशक्यानि सन्निहितानि विधाय हस्तप्राप्तिदेशे स्थापयित्वेत्यर्थः । पूजासमाप्तिपर्य्यन्तमासनमङ्गस्यानौचित्यादिति भावः । मनागिति प्रौढ़पादत्वदोषनिरसनार्थं भूमिस्पृष्टचरणैकदेशा इत्यर्थः । सत्वेन सत्त्वगुणेन हेतुना *मौनावस्थया अवस्थितावपि* ॥ ३४ ॥

तत्र प्रथमं प्रथमञ्जसाऽजसाधारण्येन तस्यामेव सैकत्यां कात्यायनीमूर्त्तौ मनसा मनसैव सकलाः कलावत्यः समानमानसतया एकरूपमेव तदा सदावाहनं विदधति स्म ॥ ३५ ॥

यथा इहागच्छागच्छ देवि ! सन्निधानमिहाचर कृष्णस्य सन्निधानं नः प्रापयस्व नमोनमः इत्यावाह्य वाह्यवृत्तिरहिताः अवहिता अवनता नताङ्ग्यः पुनस्तथैव विमलमासनमासनमग्रतोऽप्रतोषेण समुपनीय पनीयतमं पूर्ववन्मनसैव निवेदयामासुः

आस्यतामिह भो देवि ! दिव्यमासनमिष्यताम् ।
अस्माकमङ्कपर्य्यङ्कं कृष्णासनमुदीरय ॥ ३६ ॥

इत्यासनं सनन्दनीयादरमदरमोदेन समर्प्य स्वागतं पप्रच्छुः ॥ ३७ ॥

स्वागतं तव हे देवि ! स्वगतं ते निवेद्यते ।
कृपया कारयास्माकं स्वागतं कृष्णमन्तिके ॥ ३८ ॥

इतिस्वागतमस्वागतमहापरितोषेण पृष्ट्वा समुचितचिततत्तद्द्रव्यधर्मभाजनस्थमुपपाद्यपाद्यमपि तथैव निवेदयांचक्रिरे ॥ ३९ ॥

उपपाद्यमिदं पाद्यं पादयोरभिवाद्ययोः । कृष्णप्रस्वेदपाद्यं नः शिशिरीकुरुतामुरः । संपाद्यतामनाद्ये नः कृष्णस्याद्य समागमः ॥ ४० ॥

---

प्रथं ख्यातम् । अञ्जसा साक्षात् । अजसाधारण्येन अजन्यवस्तुतुल्यत्वेन सैकत्यामेव सिकताविकारभूतायामेव । अकृत्रिमतया नित्यसिद्धत्वभनेनेत्यर्थः । मनसा मनसैव न तु मन्त्रवर्णान् स्पष्टमुच्चार्य्येति भावः ॥ ३५ ॥

कृष्णसन्निधानं नोऽस्मान् प्रापयस्वेति । अजां ग्रामं प्रापयेतिवत्सप्तम्यर्थ एव पर्य्यातिः तत श्च त्वमत्रैव कृष्णोऽपिअस्मासु सन्निहितो भवत्वित्यर्थः । पूर्वस्यसाधनत्वमुत्तरस्य फलत्वमिति । एवमग्रेपि । विमला मा शोभा तस्या आसनं स्थितिर्यत्र तथा भूतमासनम् । पनीयतमम् । अतिस्तव्यम् । पण स्तुतौ । पन चेतिदन्त्यत्वमपि ॥ ३६ ॥

नन्दनीयेनाभिनन्द्येन आदरेण सह वर्त्तमानं यथा स्यादेवम् । अदरमोदेन अनल्पानन्देन ३७

स्वगतम् अप्रकाशितं यथा स्यात् तथा चित्तवृत्त्यैव स्वागतं निवेद्यत इत्यर्थः । अस्माकमन्तिके कृष्णं सुष्ठु आगतं कारय संपादय यद्वा कृष्णं प्रयोज्यकर्त्तारं अस्माकं स्वागतं कारय कृष्णोऽस्मान् स्वागतं पृच्छत्वित्यर्थः । अत एव वक्ष्यति, "स्वागतं वो महाभागा,, इत्यादि॥३८॥

असुषु प्राणेषु आगतो यो महान् परितोषस्तेन पृष्ट्वा । सम्यगुचितैश्चितैरेकीकृतैस्तत्तद्द्रव्यैः पाद्योपयोगिश्यामाकादिवस्तुभिर्भव्यं सङ्गलभूतं यद्धर्मभाजनं कनकपात्रं तत्रस्थम् उपपाद्य कृत्वा पाद्यं पादाय वारिणीत्यमरः ॥३९॥

हे अनाद्ये दुर्गे नोऽस्मभ्यं कृष्णस्य समागमः संपाद्यतां दीयताम् ॥४०॥

इति पाद्यं निवेद्य वेद्यरहिता विधिवदाहृततदुपयुक्तयुक्ततमद्रव्यानर्घमर्घमर्घयामासुः ॥ ४१ ॥

यथा अर्घ्यार्घितैर्घैरर्घ्या स्त्वं तुभ्यमर्घोयमर्पितः। महार्घः श्रीकृष्णसंगः क्रियतां स्वर्घ एव नः ॥ ४२ ॥

इत्यर्घं निवेद्य कमनीयमाचमनीयमाचरितविधिविधानमर्पयामासुः । यथा इदमाचमनीयं ते कमनीयमुपाहृतं। कृष्णस्याचमनीयत्वमानयास्माकमाननम् ॥४३॥

इत्याचमनीयं निवेद्य घृतदधि मधुमधुरं मधुपर्कमर्पयामासुः ।यथा। मधुरोमधुपर्कस्ते मुखसंपर्कमापितः। कुरु कृष्णाधरपुटीमधुपर्कक्षमा हि नः ॥४४॥

इति मधुपर्कं निवेद्य वेद्यवलग्ना लग्ना इव संतोपसमाधौ समाधौतहृदयाः प्रेमरसेन पुनराचमनीयमुपकल्पयामासुः ॥४५॥

यथा - पुनराचमनीयं ते कमनीयमिदं पुनः । पुनराचमनीयं भोः कृष्णस्याननमस्तुनः ॥४६॥

इतिपुनराचमनीयमुपकल्प्य सौरभरभसवशीकृतगन्धवहं गन्धवहं विनापि विस्मापकत्वे सकलोहितमतिलोहितमतिलोभनीयं वलवचारिमणि मणिपुटके समुपपादितमभ्यङ्गयोग्यं तैलमग्रत उपनीय। देवि ! दिव्यमिदं तैलमभ्यङ्गार्थमुरीकुरु । अभ्यङ्गमङ्गं कृष्णस्य रङ्गादङ्गानि नः कुरु ॥४७॥

---

वेद्येन ज्ञातुमर्हेण पूजाविध्यादिना रहिता अपि विधिवदिति विरोधः। यद्वावेद्यरहिता ज्ञातुमशक्याः अन्यैरज्ञेयस्वरूपा इति यावत्। तदुपयुक्तैरर्घोपयोगिभिर्दूर्वादिभिर्युक्ततमैः परमोचितैर्द्रव्यैर्निमित्तैरनर्घम् अर्घो मूल्यं तच्छून्यं अर्घयामासुः निवेदयामासुः ॥४१॥

अर्घितैर्घैः पूजितसमूहैर्देवाभिरपि अर्घ्या पूज्या । अर्पितः निवेदितः । महार्घो बहुमूल्यः स्वर्घः सुलभः ॥४२॥

कृष्णस्याचमनीयत्वं कृष्णेनास्वाद्यत्वं आनय प्रापय ॥४३॥

कृष्णस्य अधरपुट्या यन्मधु तस्य पर्के संमेलने क्षमायोग्यानोऽस्मान् कुरु। यद्वा कृष्णस्याधरपुट्येव मधुपर्कस्तत्र तदास्वादने क्षमा योग्याः ॥४४॥

वेदिवदवलग्नंमध्यदेशो यासां ताः। वेदिः स्त्रियामङ्गुलिमुद्रायामिति मेदिनी। मध्यमं चावलग्नं चेत्यमरः ॥४५॥

पूर्वं कृष्णेनाचमनीयमस्मदाननमस्त्विति प्रार्थितं इदानीं पुनस्तदनन्तरं श्रीकृष्णाननं नोऽस्माकमस्माभिराचमनीयमस्त्विति प्रत्यधरपानाभिलाषः ॥४६॥

गन्धवहं पवनं विनापि सौरभवेगेन वशीकृता गन्धवहा नासिका येन तत् विस्मापकत्वे विस्मयोत्पादकत्वे सकलैरेव ऊहितं तर्कितं नासात्वगिन्द्रिययोरतिलोभनीयं। वलवांश्चारिमा चारुत्वं यत्र तादृशे मणिसंपुटे। कृष्णस्याङ्गमङ्गमभि प्रतिगात्रं लक्षीकृत्य नोऽस्माकम् अङ्गानि कुरु तदङ्गः कपोलादिभिरस्माकं कुचगण्डादीनि योज्यन्तामित्यर्थः ॥४७॥

इत्यभ्यङ्गं निवेद्य निविडतरमुद्वर्त्तनीयमुद्वर्त्तनीयमपि गन्धचूर्णं तूर्णं तूपकल्पयामासुः । यथा उद्वर्त्तनीयं ते दत्तं गन्धचूर्णमिदं मृदु । उद्वर्त्तनीयं नो दुःखं त्वया कृष्णाङ्गसङ्गतः ॥४८॥

अथ घनसारसारवासितं सुजातरूपजातरूपघटीसंभृतं स्नानीयमानीयमानतामुपपाद्य पूर्ववत् ॥४९॥

यथा कर्पूरपूरसौरभ्यं देवि! स्नानीयमर्पितम् । कृष्णाङ्गसङ्गसुधया कृपया स्नपयाशु नः । अथ सु विहिताकुञ्चनपरिपाटिकां शाटिकां शातकुम्भसूत्रकृतां कृताञ्जलिपुटं पुरस्कृत्य पूर्ववत् ॥५०॥

हे देवि ! परिधेहीदं कनकांशुकमंशुकम् । कृष्णांशुकेनांशुकानि परिवर्त्तय नोऽम्बिके ! ॥५१॥

अथ नानामणिमयनिरामयनिरामणीयकमलंकारमलंकारयित्वा समानीतं पूर्ववत् । रत्नालंकरणैरेभिर्भव भाविन्यलङ्कृता । कृष्णाङ्गसङ्गसुधया कारयास्मानलङ्कृताः ॥ ५२ ॥

अथ समुपचितकस्तूरीकस्तूरीकृतकर्पूरपूरः सरसतरागुरुर्गन्धसारगन्धसारः सदनुलेपपङ्कः पङ्कजनयनाभिराभिराभिमुख्यमानायि तत इदमूचे च । अनुलेपनमेतत्ते देवि ! दिव्यमुपाहृतम् । कृष्णानुलेपसौरभ्यैः सुरभीकारयस्व नः ॥ ५३ ॥

अथ गन्धवहानन्दि गन्धवहानन्दितगन्धं गन्धं समुपनीयपनीयमूचुः । गन्धैर्गन्धवहानन्दी देवि ! गन्धोऽयमर्पितः । कृष्णाङ्गगन्धेनास्माकमङ्गानि सुरभीकुरु॥५४॥

---

निविडतराभि र्मुद्भिरानन्दैर्वर्त्तनीयं भवितव्यं यत्र तत् । कृष्णाङ्गसङ्गतः कृष्णस्याङ्गसङ्गं प्राप्य नोऽस्माकं दुःखं उद्वर्त्तनीयं उत्पाटनीयम् ॥ ४८ ॥

घनसारसारेण श्रेष्ठकर्पूरवासितं सुगन्धितं सुजातं रूपं सौन्दर्य्यं यत्र तस्य जातरूपस्य कनकस्य घट्यां संभृतम् । पूर्ववदिति उपकल्पयामासुरित्यस्यानुवृत्तिज्ञापनम् ॥ ४९ ॥

सुष्ठुविहिता आकुञ्चनस्य सम्यक् कुञ्चतीकरणस्य परिपाटी यस्यां ताम् ॥५०॥

कनकानां अंशवः किरणा यस्मिंस्तदंशुकं वस्त्रम् ॥ ५१ ॥

नानामणिमयं च तत् निरामयाणि निर्मलानि नितरां रामणीयकानि रमणीयत्वानि यस्य तथाभूतं चेति तत् अलङ्कारं कटककुण्डलादिकं अलं अत्यर्थं कारयित्वा निपुणस्वर्णकारस्थाने इत्यर्थः ॥ ५२ ॥

आभिः पङ्कजनयनाभिः सदनुलेपपङ्कः देव्या आभिमुख्यं आनायि । कथंभूतः समुपचिता कस्तूरी मृगमदो यत्र सः । तुकारो यमकार्थः । उरीकृतः अङ्गीकृतः कर्पूरपूरो येन सः । सरसतरैर्गुरुभिर्गुरुःश्रेष्ठः।गन्धसारस्य चन्दनस्य गन्धेन सारः श्रेष्ठः ॥ ५३ ॥

गन्धवहां नासिकां आनन्दयितुं सुखयितुं शीलं यस्य तथाभूतो गन्धवहेन पवनेन आ सम्यक्प्रकारेण नन्दितः समृद्धीकृतोगन्धो यस्य तं पनीयं प्रशंसार्हम् ॥ ५४ ॥

अथ वृन्दावनस्थषड्ऋतुकालीनानि मधुपरागमधुपरागरञ्जीनि कुसुमानि पुरः संपाद्य । इदं वृन्दावनोद्भूतं प्रसूनं देवि ! गृह्यताम् । रदप्रसूनैः कृष्णस्य पूजिताः सन्तुनोऽधराः ॥ ९५ ॥

अथ सुरभितरकालागुरुगुरुतरगुग्गुलुगुलुच्छामृणालप्रभृतिभूतिसुगन्धितं धूपधूममग्रत उपकल्प्यासुगन्धिधूपधूमोऽयं धूपस्ते देवि ! कल्पितः । धूपिता भव नश्चित्तं धूपितं शीतलीकुरु ॥ ९६ ॥

अथ प्राज्यमाज्यकर्पूरवर्त्तिवर्त्तितं दीपमग्रे निधाय पूर्ववत् । कर्पूरवर्त्ति सुरभिर्देवि ! दीपोयमर्पितः । कृष्णकौस्तुभदीपेन दीप्तं नस्तादुरोगृहम् ॥ ९७ ॥

अथ मधुरमधुरसरसितासितसितासितातापतण्डुलसार्द्रकससैन्धवधवलमुद्गमुद्गविदलकदलकनारिकेलदमलपरिमलघनघनसारसारसरसरसतरापूपपूपशाष्कुलकुलकसदखण्डखण्डलड्डुकवलमानमानसामोदकमोदकसौरभरभसनिरपायपायसपक्वान्नदधिपयः प्रभृति नैवेद्यमुपकल्प्य निरवद्यं देवि ! हृद्यं नैवेद्यमुपयुज्यताम् । संपादयस्व कृष्णस्यनैवेद्यं नो नवं वयः ॥ ९८ ॥

इति नैवेद्यं निवेद्य । कात्यायनि ! महामाये ! महायोगिन्यधीश्वरि ! ।

मधुपानां भ्रमराणां रागो यत्र तेन मधुना परागेण च रञ्जीनि रञ्जकानि । प्रसूनमिति जातावेकत्वम् । रदा दन्ता एव प्रसूनानि कुन्दपुष्पाणि तैः ॥ ९५ ॥

गुलुच्छः स्तवकः अमृणालं वीरणमूलम् । मूलेऽस्योशीरमस्त्रियां । लामज्जकं लवुलयममृणालमित्यमरः । तत्प्रभृतीनां तदादीनां वस्तूनां भूत्या भूत्या सुगन्धितं । भुवनं धूस्तां पातीति धूपः सकम्प इत्यर्थः । धूपिता भव दीप्तिमती भव । धूप दीप्तौनोऽस्माकंधूपितं चित्तं संततं मनः ।" तप धूप संतापे "इति धातोः ॥९६॥

प्राज्यं प्रचुरं प्राज्य प्रकृष्टं घृतं यत्र तथा भूता या कर्पूरवर्त्तिस्तया वर्त्तितं । उत्पादितमित्यर्थः ॥ ९७ ॥

मधुरा च सा मधुनो रसेन रसिता च सितसिता श्वेतशर्करा तयासिता बद्धा अतापतण्डुला अप्राप्तपाकतण्डुलाश्च तथासार्द्रकाणि आर्द्रकखण्डसहितानि ससैन्धवानि सलवणानि धवलवर्णानि मुद्गानि आनन्दप्रापकाणि मुद्गविदलानि च तथा कदलकानि च नारिकेलानिकेलता उत्सर्पता अमलपरिमलेन घनस्य सान्द्रस्य घनसारस्य कर्पूरस्य यः सारः सारभागः तेन सरसतरा अपूपाश्च । केलृ गतौ धातुः । पूः पावित्र्यं तां पान्तीति तानि शाष्कुलानिशष्कुली संबन्धीनि कुलानि वृन्दानि च सद्भिरखण्डैरखण्डितैःखण्डलड्डुकैर्वलमानानि प्रवलानि मानसामोदकानि चित्तहर्षकाणि मोदकानि च सौरभस्य रभसैर्वेगैर्निरपायाः पायसाश्च पक्वान्नानि च दधिपयः प्रभृतीनि च यत्र तत् ॥ ९८ ॥

कात्यायनीति श्लेषेण कस्य ब्रह्मादिसद्गात्मकसुखस्य अतिअतिशयेन आयनि हे । प्रापयित्रि तथा हे महामाये ! महस्य उत्सवस्य अमो निष्परिमाण आयो यतः हे तथाभूते महायोगि-

नन्दगोपसुतं देवि ! पतिं मे कुरु ते नमः ॥ ५९ ॥

इति मन्त्रमुपांशु पांशुलताविरहेण विन्दुविसर्गविसर्गमतिवारं जेपुः ॥ ६० ॥

जपित्वा तु यथेष्टमाचमनीयानन्तरं ताम्बूलपूलकमुपकल्प्यैलालवंगकर्पूरं ताम्बूलमिदमश्यताम् । कृष्णास्यताम्बूलरसैरधराः सन्तु नोऽरुणाः । इति ताम्बूलं समर्प्य नीराजयामासुः। यथा। नीराजयामि त्वां दीपस्तवकेनमहेश्वरि ! । नीराजितानिकृष्णस्य त्विपाङ्गानि भवन्तु नः ॥ ६१ ॥

इति नीराज्य मनोराज्यराज्यभिलापलापकौशलशलत्तरलतयादण्डवन्निपत्य तुष्टुवुः ॥ ६२ ॥

अम्ब हेरम्बमातस्त्वां स्तोतुं स्तोकमपीश्वरः । न त्वदीशो न प्रजेशो न वागीशोऽपरे कुतः ॥ ६३ ॥

रसनादेव रसनाकण्डूखण्डनतः परम् । वयं तथापि स्तुमहेऽस्तु महेश्वरि ! ते कृपा ॥ ६४ ॥

प्रभविष्णोर्महाविष्णोर्योगशक्तिस्त्वमुत्तमा । भासि कर्तुमकर्तुं चान्यथा कर्तुमपीश्वरी ॥ ६५ ॥

त्वमेव तुष्टिः पुष्टिश्च त्वं शांतिः क्षान्तिरेवच ।
त्वमविद्या च विद्या च बन्धमोक्षकरीनृणाम् ।
मातः सर्वाणिसर्वाणिजगन्ति त्वदपाङ्गतः ।
उन्मीलन्ति निमीलन्ति भवन्तिविभवन्तिच ॥ ६६ ॥

नीति तेन नन्दगोपसुतेन सहयोगोऽपित्वयैव शीघ्रं स्वयं संपाद्यो न तु पित्रादिव्यवधानोपद्रवेणकालविलम्बस्यासह्यत्वादिति भावः । अत एव कुर्विति पदम् । अन्यथा कारयेत्युपन्यस्तं स्यात् । अधीश्वरीति तत्रसामर्थ्यद्योतकम् ॥ ५९ ॥

उपांशु यथास्यात्तथा जेपुः । शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयेत् । किञ्चिच्छब्दं स्वयं विद्यादुपांशुः सप्रकीर्तितः । इत्यागमोक्तरीत्या पांशुलताविरहेण उच्चारणे मुखविप्लुषां अनुद्गमेन विन्दुविसर्गादेर्विशिष्टः सर्गः सृष्टिः सम्यगुच्चारणं यत्र तत् । अतिवारं बहुवारम्॥६०॥

नीराजितानि निःशेषेण राजितानि दीप्तानि ॥ ६१ ॥

मन एव राज्यं तत्र राजितुं शीलमस्य तथाभूतो योऽभिलापस्तेन लापकौशलं शिल्पचातुर्यं रूप शिल्पयोगे तेनैव शलन्ती मिलन्ती या तरलता तया ॥ ६२ ॥

त्वदीशो महादेवो माहात्म्येन प्रजेशो ब्रह्मा ऐश्वर्येण वागीशो वाचस्पतिः पाण्डित्येन॥६३

रसनादेव आस्वादादेव खण्डनतो हेतोस्ते तव कृपा अस्तु ॥ ६४ ॥

योगशक्तिर्योगमायाख्या शक्तिः ॥ ६५ ॥

गौरीव सर्वान्तः पुरः प्रधानभूतेति वासवदत्ताश्लेषदर्शनान्महादेववाची सर्वशब्दो देव्यादिरपि ततश्च हे सर्वाणि ! शंभुपत्नि उन्मीलन्ति जायन्ते निमीलन्ति नश्यन्ति भवन्ति सत्तां प्राप्नुवन्ति विभवन्ति समृद्ध्यन्ति ॥ ६६ ॥

सर्वमङ्गलमूर्द्धन्येयमूर्द्धन्येव दिवौकसाम् । तवाज्ञाच समज्ञा च राजहंसीव राजते ॥ ६७ ॥
परात् परतरे कृष्णपरे परमवैष्णवि ! । परोपकारपरमे परमेश्वरि ! ते नमः ६८
मनो ज्ञासि मनोज्ञासि त्वं सर्वस्यैव देहिनः । देहि नः पतिरूपेण देवि गोपेन्द्रनन्दनम् ॥ ६९ ॥

इति स्तुत्वा चिरतरं रुचिरतरं रुच्यनुरूपं देवीं प्रणम्य यमुनायामेव विसर्जयामासुः एव मेवमहरहरहतोत्कण्ठाः कण्ठाभरणीकृतकृष्णगुणगणाः क्रमेधमानमानवलिवलितया सपर्य्यया पर्य्ययाऽविना भावेन भावेन भगवतीमम्बिकां प्रसादयन्त्यः सादयन्त्यश्च हृत्प्रसादं मासमेव तं कतिपयदिनावशिष्टं कारयामासुः ७०

नहि तथाविधविविधविशिष्टसिद्धसौभाग्यवतीनां योग्यवतीनां योगमायादिदेवतान्तराधनधनसापेक्षा मनोरथसिद्धयः ॥ ७१ ॥

तेन च तावतैव वतैवमसौभगवती सौभगवती परिश्रमेण वंशवदाऽवदातहृदया दयालुतमतया मतया च सुप्रसन्नासन्नाभिमतदायिनी मतिजनं मनसि प्रादुर्बभूव ॥ ७२ ॥

प्रादुर्भूय भूयसादरेणैव अयि शुभवत्यो भवत्योभगवद्रतिदेवतादेवतान्तरमाराधयितुं नार्हन्ति नहि लक्ष्मीका लक्ष्मीकामनयानया अन्यदेवतामाराधयन्ति ॥ ७३ ॥

---

समज्ञा कीर्त्तिः ॥ ६७ ॥ कृष्णः ईश्वरः परः श्रेष्ठः सेव्यत्वेन यस्या, वस्त्वर्थस्तु स्पष्ट एव ॥ ६८ ॥

मनोज्ञा श्रेष्ठा असि यतः सर्वस्यैव मनो जानासीति मनोज्ञा अतएवास्मन्मनोऽभ्यनुसारेणैवाभीष्टं संपादनीयमिति भावः । तथैव स्पष्टमाहुः । देहीति त्वमेव स्वयं देहि न तु पित्रादयो ददत्विति पतिं मे कुरु ते नम इति पूर्ववत् । त्वदर्चनस्यास्यास्मदभिप्रेतैतत्फलकत्वे कथंचित्तैर्ज्ञाते कुमारीणामस्माकं लज्जास्यादिति ते जानन्त्वपि नैवेति भावः । तथा त्वामभि रुचिरस्थासां श्रीराधादिसौभाग्यदृष्ट्या परकीयास्वेव कृष्णस्याभिरुच्याधिक्यसंभावानुमानादिति ज्ञेयम् ६९

क्रमेण राधमानो वर्द्धमानो मानः पूजा तथा बलिः पूजोपयोग्युपहारश्च ताभ्यां वलितया वर्द्धितया सपर्य्यया परिचर्य्यया पर्य्ययो विपर्य्ययाभावः । साहजिक्यं तस्य न विना भावो यत्र तेन अति स्थिरेणैव भावेनेत्यर्थः । कतिपयदिनावशिष्टं मासमेवव्याप्य अम्बिकाप्रसादयन्त्यः हृत्चित्तमपि सादयन्त्यः तस्यै प्रापयन्त्यः सत्यः तं प्रसिद्धं प्रसादं अम्बिकां कारयामासुः । तासां तादृशभक्त्या वशीभूतेव देवी प्रसादं अकरोदित्यण्यन्तवाक्यम् ॥ ७० ॥

अत्र वस्तुतत्त्वदृष्ट्यैवाशङ्कां परिहरन्नाह नहीति योग्या नरलीलत्वेनोचिता यतिर्याऽचनं यासां ताः । यतु याचने क्तिन्नन्तः । देवतान्तराराधनमेव धनं तत्सापेक्षा मनोरथसिद्धयो नहि किन्तु नित्यसिद्धप्रेयसीभावानामेव तासां लोकवल्लीलेयमिति भावः ॥ ७१ ॥

मतया उचितया । आसन्नस्याभिमतस्य वाञ्छितस्य दायिनी ॥ ७२ ॥

भगवद्रतेरपि देवतास्तत्प्राप्त्यर्थमन्यैर्देवादिभिरप्याराध्या इत्यर्थः । लक्ष्मीका लक्ष्म्यापि इकं कामनासुखं यासु ताः । विजिहीर्षे त्वया सार्द्धं गोपीरूपेति सात्वतादिति भागवतामृतधृतलघुतोषणीवचनात् इ खेदे पद्मोक्तौ च "कामदेवे त्वनव्ययं" तथा सुखदर्शनिजन्तेषु कथितः च विधः ७३

तथापि वः केवलवलमानोत्कण्ठाकण्ठाभरणमिदं ममापि यशोभारभारचनमेवे-दम्भोदम्भोज्झितं मदुपसर्पणं तेनाचिरतयैव रुचिरतयैव कृष्णासत्या भवितव्यम् ७४

अतः परं तपः करणतो विरमतेति निगद्यैव सर्वासामन्तरतस्तिरोबभूवेति तासामनुभवः समुत्पनीपद्यते स्म ॥७५॥

तत्साक्षि वामाक्षिभुजोरुपस्पन्देऽपस्पन्देनेव सुहृदा हृदापि निरवसादं प्रसादं प्रगतेनाश्वास्यमानाः करतलगं रतलगं मनोरथफलं जातमिवेति मत्वापि ता मास-प्रपूरमेवं करणीयमिति निरणैषु ॥७६॥

अनन्तरं मासावसानदिने दिनेश उदितवति दितवति कमलिनीमुदां मुद्रामणीयकेन केनाचिदाष्टत्तास्ताः पूर्वतोऽपि बहुगुणेन बहुगुणेन संभारेण भारेण देवीं पूजयित्वा ७७

जयित्वादतिशयप्रमोदाः प्रमोदारतया व्रतं समाप्य समाप्यमानतपः फलमिव स्वं स्वं जानत्यो नत्योत्कर्षहर्षवशात् परस्परमभिषेकार्थं कुतुकालिकालिकालिन्दी-जिगाहिषवः प्रागेव कात्यायन्या कात्यायन्यायप्रसादीकृतकृतकेतरचित्रपटपट-लस्य जलाविलीभावशङ्कया कयापि देशाचारचारुत्वेण च तदेव पटपटलमनुकूले कूले निःक्षिप्य सलिले सलिलमवललम्बिरे ॥ ७८ ॥

अवलम्ब्यपरस्परपरमकौतूहलहलनलुलितललितलसन्मनसोदिनकरकरकर-म्बिततया नातिशीतभीताः क्षणं विहरमाणाश्च राजन्ते स्म ॥ ७९ ॥

---

यशोभारस्य भा शोभा तस्या रचनं भो इति संबोधनं दम्भोज्झितं निष्कपटम् ॥७४॥

समुत्पनीपद्यते स्म अतिशयेनोत्पन्नः ॥७५॥

तस्य तादृशानुभवस्य साक्षि सूचकं वामाक्षिभुजोर्वेति प्राण्यङ्गत्वात् द्वन्द्वैक्यं अपस्पन्देन अगतःस्पन्देन निश्चलेन अतिसुस्थिरेणेति यावत् रतं श्रीकृष्णेन सह रमणं लगयति यो-जयतीति रतलगं ताः कुमार्य्यः मासं प्रपूरयित्वेति द्वितीयायां चेति णमुल्। निरणैषुर्निर्ण-यं कृतवत्यः ॥७६॥

कमलिन्या मुदां मुद्रितत्वं दितवति खण्डितवति मुदां आनन्दानां रामणीयकेन रम्यत्वेन बहुगुणेन शतस हस्रोर्द्ध संख्यावता बहुगुणेन चर्व्यचोष्यादित्वगुणयुक्तेन भाकान्तिस्तां राति गृह्णातीतितेन ७७

प्रभा प्रकृष्टा शोभा तस्या उदारतया महत्वेनयद्वा प्रमायां पूजासंभारप्रमाणे औदार्य्येण न तु कार्पण्येन नत्या परस्परं नमस्कारेण उत्कर्षो हर्षश्च तद्वशात्कुतुकानां आलिः श्रेणिर्या सा ताः कुतुकालिका आलयः सख्यो यत्र तथा भवत्येवं जिगाहिषवः कात्यायन्या दुर्गया कस्य सुखस्य अतिशये य आयो वृद्धिस्तत्र योऽन्याय औचित्यं तेन प्रसादीकृतानां कृतकेतरं अकृत्रिमं तन्त्रोत्थमेव चित्रं येषु तथाभूतानां पटानां कौशेयवस्त्राणां पटलस्य समूहस्य जले आविलीभावस्य मालिन्यस्य शङ्कया देशाचारेण हेतुना चारुत्वं चारुत्वेनव तेन हेतुनेति वि-ज्ञानाभावश्चोक्तः ॥७८॥

परस्परं परमकौतूहलेन हलन कर्षण "हल विलेखन" इत्यस्मात् तेन लुलितं संघृष्टं ललितं लसत्कान्तियुक्तं मनो यासां ताः ॥७९॥

एतस्मिन्नेव दिवसे प्रागेव नियतविचारचारस्थलमुखाभिसरणरणदनाकुलखगकुलाकुलायमाने नभसि ॥ ८० ॥

दिवसमुखे मुखेन्दुसुधासुधावितमुरलीकोऽलीकोज्झितमणयैर्वेलादिभिः प्रियसखैर्बलवति निराबाधेऽनुधेनुगणं संचारसुखे ॥ ८१ ॥

योगेश्वरेश्वरो व्रतरतकन्यारतकन्यायलब्धप्रेमवश्योऽवश्यो दास्यतत्तदुत्कण्ठाभरः कण्ठाभरणीकृततत्तद्गुणगणोगोचारणसुखं वयस्यगणसङ्गसुखं च विहाय हायनावधिविवर्द्धितापूर्वपूर्वरागाणां तासामुत्कलिकामुत्कलिकाविकाशोन्मुखीकरणाय ८२

सङ्गानविगानविरहेण प्रादुर्भावावधि समुत्पन्नतत्स्वज्ञानैरिवानन्दपृथुकैः पृथुकैः क्रीडाशालभञ्जिकाकृतिभी रम्याशयैः स खलु व्रजराजकिशोरो बलसुबलसुदामादिभिरप्यलक्षितः कात्यायन्या भारलाघवं तासां च सौभाग्यभारगौरवं स्वस्य वैदग्ध्यभारप्रकटनं करिष्यन् तत एवालक्षितमाजगाम ॥ ८३ ॥

आगत्य चासौ कृष्णोपि रक्तोरक्तोपि नच लोहितः न चलोहितश्च चलोहितश्च हितपरोऽपि नहि तपरः ॥ ८४ ॥

बद्धा केशान् यमितपरिधिर्नूपुरे मूकयित्वा
वारं वारं परिजनकथां वारयन् भ्रूविजृम्भैः।

प्रागेव पूर्वदिन एव नियतो विचारः श्वोऽत्र अमुत्र चरिष्याम इत्येवं लक्षणो यत्र तथाभूतस्य चारस्थलस्य मुखेऽभिसरणे रणद्भिरव्याकुलैराकुलायमाने सति नभसि ॥८०॥

तथा धेनुगणं अनुलक्षीकृत्य संचारसुखे च बलवति सति ॥८१॥

व्रतरताभिः कन्याभिः रतकात्प्रेष्ठनिष्ठरमणसुखाद्धेतोर्न्यायलब्धोयः प्रेमा तेन वश्यः। अवश्यः स्वतन्त्रोऽपि। अवश्यमेव उदास्य उत्क्षेपयितुं दूरीकर्तुं योग्यस्तासां स उत्कण्ठाभारो येन सः लुम्पेदवश्यमः कृत्ये इति मलोपः। उत्कलिका उत्कण्ठा तत एव या मुदा कलिका स्वदर्शनेन जनिष्यमाण आनन्दकोरकस्तस्या विकाशोन्मुखीकरणाय तां विकसनोन्मुखाकर्तुमित्यर्थः ॥ ८२ ॥

संगानं गुणदृष्टिर्विगानं दोषदर्शनम्। आनन्देन पृथुकैः प्रचुरैः पृथुकैर्बालकैस्तेन स्वप्रेयसीनां तासां लग्नत्वेतैर्दृष्टेपि न क्षतिः अत्रापि संगानेत्यादिविशेषणत्रयवैशिष्ट्ये नितरामेव। शालभञ्जिका पुत्तलिका ॥ ८३ ॥

रक्तः तासु अनुरागी कर्त्तरिनिष्ठा। रक्तोपि रज्यते अत्रेति रक्तः अधिकरणे निष्ठा तासामनुरागविषयोऽपीत्यर्थः। न चलम्। ऊहितं तर्को यस्य सः। न चलः न चञ्चलः हितः सुहृच्च। चलं ऊहितं अर्दनं यतः स चलोहितः। ऊहिर् त्वर्दे उहिर्दतर्के इति वोपदेवः। हितपरोऽपि उपकारकोऽपि नहि नैव तपरः तपस्तापस्तं राति ददातीति सः विरोधपक्षः स्पष्ट एव ॥ ८४ ॥

यमितः बद्धा संपतीकृतः परिधिर्लम्बमानपरिधानवस्त्रं येन सः। तासां आभिमुख्यं यथा स्यात्त-

न्यञ्चरंकायश्चकितनयनो गोपयन्नङ्गमङ्गै
र्गूढस्मेरोवसनमहरच्चौरिराभीरिकाणाम् ।
आच्छाद्य गात्रैः सहसाम्बराणि मूकीकृताशेषवयस्यवर्गः ।
शनैः शनैर्नीपभुजाधिरूढस्तदाभिमुख्यं हरिरुल्ललास ॥ ८५ ॥

तदनु ता नुताः सौभाग्यलक्ष्म्या सलिलादुत्तितीर्षवो निर्दुकूले कूले कृतालोका लोकातीताश्चाकितमिदमातर्कयामासुः ॥ ८६ ॥

अहो किमिदं केनाप्यपहृतमम्बरमम्बरमणिकरं विना करम्बिणा केनापि नात्र भूयते ॥ ८७ ॥

भूयतेह केवलं के वल्गन्तीनां विहगराजीनां पदराजी तदहो कयापि देवतया वत स्थापितानि कुत्रापि नो वसनानि ॥ ८८ ॥

यद्देवता एव धरणितलतलनाभावात् पदपदविलोकनाभावः ॥ ८९ ॥

इति चकितचञ्चलाञ्चलाक्षमभितोऽभितो विलोकमानानामानानाविधवितर्कं चिन्तयन्तीनामपाङ्गतरङ्गा मिहिरदुहितुरुपर्य्युपर्य्युत्फालफरफरायमाणसफरवधूश्रेणय इव मदमुदितचलदलिदलितविस्मापितकुवलयकुवलयदलानीव वा परितः परितस्त्रिरेदिशां मुखानि ॥ ९० ॥

ततश्चातिशयवैकल्येन वै कल्येन भूयत इति सकरुणारुणापाङ्गोऽपाङ्गोचरीभूता भूतापहारी हारीः ताः कुलकुमारिकाःसुकुमारिका सुललितमधुमधुरविकस्वरस्वरस्वर परिचितसुधासुधावितामुवाच वाचमतिरसपरिहाससहासपेशलं हासयन्नपि

---

येति तासां प्रसङ्गदर्शनार्थं नर्मसंवादार्थं च ॥ ८५ ॥ ताः कुमार्य्यः नुताः स्तुताः ॥ ८६ ॥

अम्बरमणिः सूर्य्यः तस्य करं किरणं विना करम्बिणा संयोगिना ॥ ८७ ॥

के जले वल्गन्तीनां प्रवल्गानां विहगराजीनां पदराजी चिह्नश्रेणी इह प्रदेशे भूयता भुवि यतत इति पचाद्यच् ॥ ८८ ॥ तलनं प्रतिष्ठा पदपदम् चरणचिह्नम् ॥ ८९ ॥

आनानाविधतर्कं विविधवितर्कपर्य्यन्तम् । मदमुदितैश्चलद्भिरलिभिः कनीनिकास्थानीयैर्दलितानि संमर्दितानि विस्मापितभूमण्डलानि यैस्तानिकुवलयदलानि नीलोत्पलपत्राणीव परितस्त्रिर इति स्तृञ् आच्छादने व्यापयन्त इत्यर्थः । शफरवधूश्रेणय इति प्रथममकस्मादतिचकितसंभ्रमतया सम्पूर्णापाङ्गानामेवातिचाञ्चल्ये दृष्टान्तः।मदमुदितचलदलीति तदनन्तरं किंचिद्विचारपरतया तदंशतारकामात्रचापल्ये इति ॥ ९० ॥

अतिशयवैकल्येन यै निश्चितं कल्येन प्रबलेन जायत इति हेतोः कल्यौ सज्जनिरामयाविति त्यमरः । ताः कुलकुमारिकाः प्रति व्रजराजयुवराजो वाचमुवाचेत्यर्थः । ताः कीदृशीः अपां जलानां गोचरीभूताः जलमध्यस्था इत्यर्थः । कारुण्ये हेतुः भुवः पृथिवीस्थमात्रस्यापि तापहारी किमुत तासाम् । हारी हारवान् । वाचं कीदृशीं सुललिता मधुतोऽपि मधुरो विकस्वरः स्वरो यस्यां तां स्वः स्वर्गेऽपि अपरिचितया सुधया सुष्ठुधाविता क्षालितामिव ।

पृथुपृथुकवयस्यगणमतिप्रियप्रियकतरुतरुणस्कन्धारोहरोहत्परभागोऽपरभागोजःपटलोद्धूतरविकिरणः श्रीव्रजराजयुवराजः ॥ ९१ ॥

भो भो माशङ्कनकननीयतापरां तापरां कुरुत मनोवृत्तिमात्मनीनामयमहमहं तां कृतुकरसमयं समयं प्राप्य कुर्वाणो लीलालोभवर्तीनां भवतीनां गतम्लान्यंशुकान्यंशुकानि निजद्वार ॥९२॥

निजद्वारमुपहारीकृत्य सरसमित एवागत्य गत्यनवसादेन मिलिता एकैकशोऽथवा निजनिजाम्बराणि वराणि समादध्वं मादध्वंसेन ॥९३॥

अथकात्यायनीव्रतव्रततेरिव फले दुष्पचे पचेलिमतां इवागत्य गलिते प्रकटसौरभरभसं तस्य रसमिव तत्कृष्णस्य सलोभव्याहरणं भव्याहरणं हरणमिव व्रतकर्मसमाप्तेः श्रवणपुटकेन पीत्वापीत्वा च व्रतपरिश्रमपारम् ॥९४॥

असमयसमयमानमाशालताविशालताविसौभाग्यफलमिव तमम्बरवरचोरमुपप्रमुपप्रस्य इव सकृद्दरकुड्मलितललितलक्ष्मपक्ष्मपतनचञ्चलाञ्चलाभिनीतमन्दाक्षमन्दाक्षतलक्ष्मीकेनापाङ्गेन ॥ ९५ ॥

---

रोहत्परभागः उत्पद्यमानशोभः । न परं भजते अपरभाक् स्वाधीन इत्यर्थः। यतः ओजःपटलेन तेजोवृन्देन तिरस्कृतसूर्य्यकिरणः इति तत्तदनीतिकर्मणि देशाध्यक्षादपि निर्भयत्वव्यञ्जनार्थम् ॥ ९१ ॥

आशङ्कनस्य आशङ्काया या कननीयता दीप्तता यत्परां "कनीदीप्तौ" अत एव तापरां तापप्रदां मनोवृत्तिं मा कुरुत किंतु अयमहमहं तां भवतीनां मनोवृत्तिं आत्मनीनां आत्मने हितां कुर्वाणः कर्त्तुं अंशुकानि निजद्वार हृतवानस्मि। कीदृशानि गता म्लानिर्येषां तथाभूता अंशवः किरणा येषां तानि ॥ ९२ ॥

समादध्वं गृह्णीत मादो मत्ततागर्वं तस्य ध्वंसेन तं विहाय इत्यर्थः ॥ ९३ ॥

दुष्पचे अन्यैर्दुःशक्यपाके । पचेलिमता स्वयमेव पक्वतां कर्मकर्त्तरि केलिमरः । तस्य फलस्य सलोभव्याहरणं लोभसूचकवाक्यं व्रतकर्मसमाप्तेः भव्याहरणं मङ्गलव्यापकं हरणं यौतुकस्तु भावुक भविकं भव्यमित्यमरः । हरणं यौतुकद्रव्यमितिमेदिनी । व्रतपरिश्रमस्य पारं इता प्राप्य ॥ ९४ ॥

तं अम्बरवरचोरं अपाङ्गेन उपप्रस्य इव इति अपाङ्गस्य अमर्षाभिनायकत्वमपि सूचितम् । तं कथंभूतमिव असमयेऽपि सम्यक् अयमानं स्वयमागच्छत् सौभाग्यरूपं फलमिव । तदपि कीदृशं आशैव लता तस्या विशालतायाः वीः प्रजननं यतस्तत् "वी प्रजननकान्तिगतिषु" उपप्रम् आश्रयम्। उपप्र आश्रय इति पाणिनिसूत्रम्। अपाङ्गेन कीदृशेन दरकुड्मलिताभ्यां ईषत् कुड्मलायमानाभ्यां ललितं लक्ष्म यत्र तयोः स्याच्चया पक्ष्मपतने चञ्चलाभ्यां अञ्चलाभ्यां अभिनीतं मन्दाक्षं लज्जा तेन मन्दा पुनः पुनरेव अक्षता अप्रतिहता लक्ष्मीःशोभा यत्र तेन मन्दोऽर्भाऽल्पेच मूर्खेपीति मेदिनी ॥ ९५ ॥

समुत्कर्षहर्षहठाकृष्टमनसोऽपि दारुदारुणया तयैवापत्रपयाप्रतिभापितहर्षचिह्ना अप्रतिभाप्रतिभासमानसमानसाध्वसाः साध्वसाधितशीतभयमाकण्ठमेव सलिलमवलम्ब्य विरेमुश्च क्षणमुत्तरतः ॥ ९६ ॥

परस्परां पराञ्चिताननाः सत्योऽसत्योदर्कमिव तं व्याहारं विदत्यः सुदत्यः सुभगत्वमुत्तरं देहि तमुत्तरमिति निभृतमेवोचुर्न तु कापि कुतुकादुत्तरमदात्॥९७॥

तदेवमभितः कृतचकितेक्षणं क्षणं निर्वचनरचनरम्यतमं तासां वदनकुलमवाचालचालचतुरचञ्चरीकं दरविकासं विन्ददरविन्दवृन्दमिव मग्ननालं नालंचकार यमुनायाः किमु कमनीयताम् ॥ ९८ ॥

एवमनुत्तरमनुत्तरङ्गितदृशां चिरसमयरसमयतां व्रजदरसतामेवोत्पादयतीति पुरोगां रोगान्तरवदुपद्रवकरीमपत्रपामत्र पारयित्वा ॥ ९९ ॥

मधुरतरतरलितपक्ष्मलक्ष्मीलक्ष्मीलदक्षिकमलमतिसकलसकलसरससंभ्रमविनयानुनयानुत्तमं नुत्तमन्दाक्षमतिदरहासितसितदन्तकान्तिकान्तिककलव्धिमधुरमधुरि

---

सम्यगुत्कर्षो यस्य तथाभूतेन हर्षेण हठादाकृष्टचित्ता अपि अप्रतिभया प्रतिभासमानं देदीप्यमानं समानं तुल्यंच साध्वसं यासां ताः । "भासृ दीप्तौ" प्रतिपूर्वः । साधु यथास्यात्तथा असाधितं अगणितं शीतभयं यत्र तद्यथा स्यात्तथा अवलम्बितवत्यः । उत्तरतः प्रत्युत्तरदानादपि अलं अतिशयेन विरेमुर्विरता ॥ ९६ ॥

परस्परामिति स्त्रीनपुंसकयोः सुप आम् वेति स्मृतिरित्याम् । पराञ्चितानना लज्जानतमुख्यः न सत्य उदर्क उत्तरफलं यस्य तथाभूतं व्याहारं कृष्णवाक्यमिति प्रत्युत्तरे दत्ते सति वस्त्रप्राप्तिसंभावना । सुभगत्वेन सौभाग्येन हेतुना मुत् आनन्दस्तया तरोऽभिभावो यत्र तद्यथास्यात्तथा देहि । तृ तरे अभिभवे स्तुत्यामिति कल्पद्रुम.निभृतमेव नीचैरेव परस्परां ऊचुः ९७

अवाचालौ चाले चलने चतुरौ चञ्चरीकौ भ्रमरौ यत्र तत् दर ईषत् विकासं विन्दत् प्राप्नुवत् अरविन्दवृन्दमिति । अत्र चञ्चरीकयोर्निर्वचनत्वेनैव अरविन्दवृन्दमपि निर्वचनमिति तादृशवदनकुलसाधर्म्यमप्यसिद्धम् । किमु नालं चकार अपि त्वलं चकारैव ॥ ९८ ॥

न उच्चैस्तरङ्गिता दृशो याभिस्तासाम् । एवमनुत्तरं प्रत्युत्तराभावः चिरसमयं व्याप्य रसमयतां व्रजतस्तत् अरसतां सारस्याभावमेव वस्तुविचारतउत्पादयतीति हेतोर्हरिमभापन्तेत्यन्वयः। ननु लज्जावतीनां कुलकुमारिकाणां कथमत्र संभवेदित्यत आह पुरोगां अग्रवर्तिनीम् पत्रपां लज्जां पारयित्वा समाप्य । पार तीर कर्मसमाप्तौ ॥ ९९ ॥

मधुरतर यथास्यतथा तरलितैः पक्ष्मभिर्लक्ष्मीं शोभां लाति गृह्णाति तथा भूतं क्ष्मीलत् सनिमेषं अक्षिकमलं यत्र तद्यथा स्यात्तथा " मील क्ष्मील निमेषणे " । अतिसकलं सर्वम. .. कथा शोभयेत्यत आह सकलं कला वैदग्धीतत्सूचकं सरसमरूत्तं ससंभ्रमं संभ्रमसूचकं विनयानुनयाभ्यां प्रश्रयप्रसादनाभ्यां अनुत्तमं श्रेष्ठं नुत्तमन्दाक्षं प्रेरितलज्जं तत्र तत्र यथा स्यात्तथा तत्र वैदग्ध्यादिसूचनं महेच्छेत्यादिभिर्विशेषणैर्यथायथं ज्ञेयम् । अतिदर आत्य-

माण्विलहरि हरिमभाषन्त ॥ १०० ॥

आं जानीमहे महेच्छ ! त्वां गोकुलमहीमहेन्द्रस्य विततनयं तनयं प्रगुणगुणरत्नरत्नाकरं करम्बितकरुणातरङ्गमवनीमङ्गलमङ्गलक्ष्मीभरेणवितन्वानं तत्रानन्दमय्या सकललोकलोचनरोचनरोचिषं व्रजानन्दनंदक्षिणमक्षीणसमञ्ञासमज्ञानमज्ञानहन्तारम् ॥ १०१ ॥

हन्तारंकथमनयमनय इममतिमहीयांसम् ॥ १०२ ॥

महीयां संपादयसि तत्रभवान् भवान् दुर्नीतिहानिं हा निन्द्यमिदमाचरितं। चरितं किमहो ॥१०३॥ -

महोन्नतकुलकुमारिकामारिकादेवतेव तेवते वतेयं ते रीतिः ॥१०४॥

यदमूनि नः समीचीनानिचीनानि जहार हा रसिकतेयं तेऽयं न जनयिष्यते परं त्वपयश एव ॥१०५॥

भो व्रजश्लाघ्य व्रज श्लाघ्यतां देहि तावदस्माकमम्बराणि वराणि सन्तु ते विशदानि यशांसि ॥१०६॥

अथ स पुनराह ता पुनराहताः व्रीडभारेण कुर्वन् ॥ १०७ ॥

स्पेन हसितेन सितस्यदन्तस्य कान्तीनां कस्य जलस्य अन्तिकलब्ध्या निकटप्राप्त्या तत्र प्रतिबिम्बितत्वात् मधुरा मधुरिमाब्धिलहरी यत्र तद्यथास्यात्तथा। अभाषन्तव्यक्तमब्रुवन् ॥१००॥

अङ्गलक्ष्मीभरेण अवन्यामङ्गलं वितन्वानं विस्तारयन्तम्। आनन्दमय्या तन्वा देहेन व्रजानन्ददम्। दक्षिणं सरलम्। अक्षीणया संपूर्णया समज्ञया कीर्त्या समं तुल्यमेव ज्ञानं शस्त्रशास्त्रादिपाण्डित्यं यस्य तमज्ञानहन्तारं अन्यस्मै अपि तादृशज्ञानदायकमित्यर्थः ॥१०१॥

विततनयं इत्यादिभिर्नवभिर्विशेषणैस्तत्तत्प्रतिरूपमनीतिं प्रगुणदूषणं शीतार्त्तकन्यास्वकारुण्यं नग्निकादिदृक्षारूपममाङ्गल्यं कन्यागणकटुकटाक्षनिपातीभावं दुःखदत्वम्। अदाक्षिण्यं दुष्कीर्त्तिम्। अविज्ञत्वम्। अज्ञानविस्तारं च क्रमेणाभिव्यञ्जयापि कोमलमुद्रया स्पष्टमप्याहुः। हन्त खेदे अरं शीघ्रम्। इमम्। अनयम्। अनीतिकथं त्वं अनयः गृहीतवानसि नीत्रो लब्धव्यमपुरुषैकवचनम्। अनयं कीदृशम् अतिमहीयांसम् अतिवृहत्तरम् ॥ १०२ ॥

महीयां मह्यै पृथिव्यै हितां दुर्नीतिहानिं भवान् संपादयसि तस्मै हित मिति छः। हा पीडायां निन्द्यं चरितमिदं किमहो किमर्थमाचरितम् ॥१०३॥

ननु किमत्र निन्दनं संभावितं तदाहुः कुलकुमारिका इति अनुकम्पायां कः। महोन्नताः व्रतोद्यापनोत्सवासक्ताः अत एव अनुकम्प्याः कुलकुमारीर्मारयतीति सा देवतेव इयं ते तव रीतिः तेवते दीव्यति। तेवृ देवने। वतेति खेदे ॥१०४॥

चीनानि वस्त्राणि हा इति शोके ते तवइयं रसिकता अयं शुभाग्रहविधिं न जनयिष्यते १०५

श्लाघ्यतां श्लाघ्यत्वं व्रज प्राप्नुहि ॥१०६॥

ताः प्रति स श्रीकृष्ण आह व्रीडभारेण लज्जातिशयेन आहताः मातापातारता:कुर्वन् कर्त्तुमित्यर्थः ॥ १०७ ॥

अयि नालीकमुख्यो नालीकमुख्योक्तिरहं कदाचन वचनवतामयमयथार्थ एव व्यवहारो ह्यारोपेण यद्याथातथ्या तथ्यायते भणितिः ॥ १०८ ॥

मम तु वचनामृतमृतमेवेति सुप्रसिद्धमेवैतत् परिहासेनापि नापिहितं करोमि सत्यं विशेषतस्तु व्रतवतीभिर्भवतीभिर्भवति न भव्यः परिहासः सहसा सह साधुवादेन यदुक्तमिहागत्य नीयन्तां त्वराण्यम्बराण्यञ्जसेति तन्न कदापि मिथ्या भवितुमर्हति ॥ १०९ ॥

पुनर्निजगदुस्तापहर हन्त हन्तरधर्मस्य धर्मस्य किमहो पन्थानं नारोहसि हसितेनापि सन्तो नैवं निगदन्तिदान्ति वरगामिन् भवन्ति हि भवन्तः सहजदयालवोदयालवोऽपि किमस्मासु नास्ति परदुःखमननुभवतां भवताम् ॥ ११० ॥

यदस्माकमतिहिममहिममयूखतनयाम्भोऽवगाहमानानां पृथुत्वेपथुमतीनां मतीनां वैकल्यं कल्यं भवतीति न विदाङ्कुर्वन्तु भवन्तः ॥ १११ ॥

तदहो वरमिह मिहिरदुहितरि हितरिच्यमानाः सुमहिमहिमपयसि मियामहेऽयामहे श्याम हे न विवस्त्रा वस्त्रासकारिणामन्तिकमयं हि कुलजाकुलजातिस्वभावो भावोऽयं ते खलु दृष्टः ॥ ११२ ॥

तद्विरम चिरमचिक्कणन प्रणमामो मामोहय वचसा च साधुपरिहासविशारद शारदशशिवाञ्छितास्यदास्य दास्य एव ते वयमिमा मिमान इव नो मनो यदा यदाज्ञापयसि तदेव करवामहै महैश्वर्यमिदं हीयतां हीयतां धर्मशरणिः ॥ ११३ ॥

---

नालीकमुख्यः हे कमलमुख्यः अलीकमुख्यामिथ्याप्रधाना उक्तिर्यस्य तथाभूतो नाहं वचनवतां जनानां कदाचित् कश्चित् अयथार्थो मिथ्याभूत एव व्यवहारो भवति कुतः यतोऽयाथातथ्यामिथ्याभूतैव भणितिः ह स्फुटं आरोपेण सत्यत्वारोपणेनैवकदाचनतथ्यायते से मिथ्याभूतमपि स्ववचनं सत्यमिव प्रत्याययन्तीत्यर्थः ॥ १०८ ॥

अपिहितं आच्छादितं न करोमि ॥ १०९ ॥

हे अधर्मस्य हन्तः ॥ ११० ॥

अहिम मयूखः सूर्य्यस्तत्तनया यमुना तस्या अम्भो जलमतिहिमं वैकल्यम् व्याकुलत्वं कल्यं समर्थं न विदाङ्कुर्वन्तु न जानन्ति न विचारयन्तीत्यर्थः ॥ १११ ॥

हितेन रिच्यमाना वियुज्यमानाः । रिच संपर्कवियोगयोः न अयामहे न गच्छाम अयगतो ते तव भावोऽभिप्रायः ॥ ११२ ॥

अचिक्कणकणनहेलकवादिन् वचसा च वाक्येनापि मा मोहय किं पुनः कर्मणा । शारदशशिनापि वाञ्छितं आस्यस्य मुखस्य दास्यं यस्य हे तथाभूतेति तादृशमुखात् अमृतस्यं प्रियमेव वाक्यं निःसर्त्तुमर्हतीति भावः । नोऽस्माकं मनो मिमान इव परिमातुं परीक्षितुमेवेत्यर्थः । हीतोशानच् इदं वस्त्रादानरूपं महैश्वर्यं हीयेतां त्यज्यतां "ओहाक् त्यागे„हि निषिन्नं दैवताम् अनुविधीयतां धर्मस्य शरणिर्मार्गः"इङ् गतौ:"॥११३॥

रसपरिहासामृतस्य मा प्रहीयतां प्रहीयतां नोऽरुचीर चीरनिचयः शिशुभिरेव रेवणानर्हैः ॥ ११४ ॥

इति सामभिरासामभिरामोक्तौ विरतायामन्याश्चतुरंमन्याश्च तुरङ्गवदना विकस्वरस्वरपरिवादिपरिवादिनीकलकण्ठस्वराः स्वरागमाकस्येन समागलभ्यमू चिरेऽचिरेण ॥ ११५ ॥

अहो कष्टं कष्टङ्कयतु धर्मपथं गोकुलनगरी गरीयसाऽन्यायेनैवं ना कदापि नाकदापिहिता अन्याये सति तदपसारार्थं सारार्थं यस्मै निवेदिष्यते स एवान्यायकारी का रीतिरभूदस्मिन् व्रजनगरे ॥ ११६ ॥

व्रजनगरेन्द्रनन्दनवसनानि चेन्न ददासिदासिकायमानाभ्यो नः तदा व्रजराजायजायमानयानयासूयया निवेदनीयम् ॥ ११७ ॥

पुनरसकौ रसकौतुकी स्मितव्याजहारो व्याजहारोचितं किमपि ॥११८॥

एतदयि दयितमुदितमुदितरथाकर्त्तुं नार्हथ ॥ ११९ ॥

यदि भवत मम दास्यो मदास्योदितं वा करिष्यथ तदुचितमुपचितमुपधिरहितं हितं खल्विदं मम वचनं कथं न पाल्यते नहीश्वरस्य रस्यमरस्यं वावचः खण्डयन्ति दास्योऽदास्यो वा कः पदार्थस्तासामीश्वराय ॥ १२० ॥

मा प्रहीयतां माकूपायताम् पुंस्येवान्धुः प्रहिः कूप इत्यमरः। चीरनिचयः प्रहीयतां प्रेष्यतां हे अरुचीर अस्माकमरुचिमरोचकमेव ईरयसि आचरसि तत् किमर्थमेवेति भावः। शिशुभिरेव द्वारभूतैः ननु स्वयमेवागत्य समर्थः कुतः रेवणानर्हैः शिशुत्वादिषु लज्जानुत्पत्त्या विश्वस्ता भवेम युवतयस्तु नैव तथेति भावः ॥११४॥

इति सामभिः प्रीतिलक्षणैरुपायैरभिरामायां रम्यायां उक्तौ वाचि विरतायां सत्यां अन्या भयप्रदर्शनरूपं भेदलक्षणमुपायमालम्बमाना ऊचिरे। चतुरङ्गवदनाश्चतुरङ्गसेनावन्निःशङ्कमुख्यः श्लेषेण तुरङ्गवदनाः मूर्त्ताः किन्नर्य्य एवेत्यर्थः। विकस्वरं स्वरं परिवदितुं शीलमस्याः सा परिवादिनी वीणा तस्याः कल इव कण्ठस्वरो यासां ताः ॥ ११५ ॥

टङ्कयतु निर्भिनत्तु धारयतु निश्चिनोतु वा। गोकुलनगरी एवं गरीयसा अन्यायेन कदापि नापिहिता नाच्छादिता अभावे सद्मनो नापी त्वम्भरः। कीदृशीनाकं स्वर्गं यति तिरस्करोति ततोऽपिसुन्दरीति भावः। यद्वा न अकं दुःखं ददातीति सा ॥ ११६ ॥

जायमानया तवानयचेष्टितेन हेतुना अधुनैव उत्पद्यमानया ॥ ११७ ॥

असकौ कृष्णस्ताभिरज्ञाताभिप्रायकत्वादज्ञातार्थे अकच् स्मितमेव वक्षसि द्योतमान सत् व्याजेन हारो यस्य सः। व्याजहार उवाच ॥ ११८ ॥

अयीति संबोधने एतद्दयितं प्रियम् उदितं वाक्यम्। कीदृशं उदितमुत् उदिता मुत् प्रीतिर्यतस्तत्। इतरथा कर्त्तुं प्रत्याख्यातुम् ॥ ११९ ॥

मदास्योदितं मन्मुखवाक्यं अदास्योऽदेयः। "दासृ दाने" ॥ १२० ॥

तेनोभयथैवागत्य नीयतां वसनकुलं न कुलं कलङ्कनीयं नो चेदहं न ददानि कुपितेन किं राज्ञावाऽज्ञा वाधिष्यते ॥ १२१ ॥

इति सनिर्बन्धं कृष्णस्य तदानीन्तनव्याहारं नव्या हारं हारं श्रवणपुटकेन केनचिच्चिरचितेन प्रणयेन नयसनाभिनाभिलषणीयदुर्लभजनभजनभाजनसभाजनसरसेन नातः परं हेलनीयं दुर्लभजनोदितं नो दितं च भवतीति विचारतया रयतारल्यवता वतान्तरेण कुपितामपि तामनुरक्तसखीमिव ह्रियं चानपेक्ष्यपरस्परं निर्विवादसंवादसंबद्धहृदयायुगपदेव ता देवता इव यमुनाजलाधिष्ठाच्यः कूलमनुकूलमनुसमुत्थातुमुपचक्रिमिरे ॥ १२२

यथा । स्कन्धद्वन्द्वादुरसि लुलितैरायतैः केशपाशै
रूरुस्तम्भावधिनिपतितैश्छादयन्तीपुरोऽङ्गम् ।
बालामालामिहिरदुहितुःप्रोत्ततारानुकूलं
[illegible] ॥१२३॥

[illegible] लोत्पलैरर्पिता
हंसीभिर्व्यधितोपढौकनमिव प्रस्थानलीलायितम् ।
सौन्दर्यं च सुसौरभं च कमलैस्तासां मुखेष्वाहितं
कालिन्दीपयसः प्रयाणसमये पूजेव सर्वैः कृता ॥१२४॥

उभयथा स्वमुखस्वीकृतेन मदास्येन मद्वाक्यपरिपालनेन वा हेतुनेत्यर्थः । तेन राज्ञा मत्पित्रा मयि परमवत्सलेन किंवा वाधिष्यते न वाधिष्यत एवेति । हे अज्ञाः एतदपि न जानीथेति भावः ॥ १२१ ॥

नव्या नवीना गोपकुमार्य्यः । हारं हारं हृत्वा हृत्वा गृहीत्वा गृहीत्वेत्यर्थः । । नयसनाभिना समुचितनीतिसोदरेण चिरचितेन बहुदिनसंचितेन अभिलषणीयं वाञ्छनीयं यद्दुर्लभजनस्य श्रीकृष्णस्य भजनं तद्भाजयतीति तच्च तत्सभाजनेन श्लाघया सरस चेति तथाभूतेन प्रणयेन हेतुना दुर्लभजनस्य उदितं वाक्यं अतः परं न हेलनीयं नो नापि दितं खण्डितं च भवति दास्यो भवेम तवोदितं च करवामेति स्वयमेवोक्तवतीनामस्माकमधुना योग्यप्रत्युत्तराभावादपीति भावः इति विचारयता अन्तरेण मनसा अनुकूलं कूलं तटं अनुलक्ष्यीकृत्य समुत्थातुं आरेभिरे अन्तरेण कीदृशेन रयः प्रेमवेगस्तेनैव तारल्यं चापल्यं तद्वता चिरं धैर्य्यं कर्त्तुमशक्नुवतेत्यर्थः । वतेति विस्मये उद्ज्ञातोऽपि प्रेमवेगस्यप्राबल्यद्योतनाय । अनुरक्तसखीमिवेति उपेक्षितायाः तिरस्कृताया अपितस्याःत्यागासम्भवात् ॥ १२२ ॥

लुलितैर्मृदुलितैः । आयतैर्दीर्घैः । ऊरू एवस्तम्भौ स्थूणे तावभिव्याप्य जानुपर्य्यन्तमित्यर्थः पुरोऽङ्गम् अग्रगात्रं । बालानां माला श्रेणी ॥१२३॥

सौन्दर्यं च सुसौरभं चेत्यत्र पूर्ववत् यौतकोपढौकनाद्युत्प्रेक्षणविशेषानुरूपया भ्रमप्रमाणलभ्यो दोषो ना शङ्कनीयः । पूर्वकमलैरेकैकवस्तुप्रदानात् तथोक्तिः । कमलैस्तु सौन्दर्य्यस्य चकाराभ्यां मृदुत्वप्रफुल्लत्वयोश्च प्रदानात्सर्वस्वार्पणमेव कृतं सर्वस्वार्पणस्य तु यौतुकदानत्वाभ्युपगमात् तथानुक्तिरिति व्याख्यानात् ॥१२४॥

किंच। ह्रिया शीतेनापि व्यरचि चिरमार्द्रं चरणयोर्मुदा वातेनापि व्यतनि तुहिनाढ्येन पुलकः। ह्रियौत्कण्ठ्येनापि प्रसभमविशेषं वलवता समातेनेऽन्योन्यं स्फुटमगतिगत्योरिव रणः ॥ १२५ ॥

किंच। किंचिद्दूरमुपेत्यहन्त सहसा व्रीडासखीतर्जनादन्योन्यं सरसोपहासपिशुनस्तासां वचोविग्रहः। त्वं याहि प्रथमं प्रयातु भवती याहित्वमेकाकिनी गच्छ त्वं व्रज तन्वि यातु भवतीत्येकान्तकान्तोऽभवत् ॥ १२६ ॥

किंच। सौभाग्येन परस्परं वलवता तुल्येन तुल्यं तदाकृष्टानां नहि तत्र काचन ययौ नो कापि तस्थौ पथि। सर्वा एव नताननाः द्रुतहृदो मन्दासमन्दोत्सवाः किंचिन्न्यञ्चदुदञ्चदञ्चलदृशः क्रमेण तत्रायमुः ॥ १२७ ॥

एवं समीपमुपसन्नानां सन्नानां ह्रीभरेण कासांचित् पुरोगाणामङ्गैरन्तरिताङ्गीर्नताङ्गीर्नयनकोणेन समालक्ष्य सवैलक्ष्यसवैदग्ध्यं सरसिकशेखरः खरतरमनोरागपरभागपरभाजनं जनं जनं प्रति प्रतिजगाद ॥ १२८ ॥

कथमयि मयि कृतसाध्वसाः साध्वसारस्येन पुरः पश्चाद्भावेनानवस्थितावस्थिताः कथं वारमानं गोपायितुमर्हिष्यथ उन्नतरूपतरूपरि परितस्थुषा मयासमया सकलाः कलावत्यो भद्रेणैव वीक्ष्यन्ते तत्किमनयानयानुवन्धपरया प्रतारणया ॥ १२९ ॥

तदधुना साधुनाऽसाध्वसेन श्रेणीभूय भूयसीं श्रियं दधत्योऽवस्थातुमर्हन्ति तथा कृते प्रकृते प्रयोजने वासोग्रहणेऽपि कौशल्यम् ॥ १३० ॥

---

तुहिनाढ्येन हिमकणयुक्तेन वातेन ह्रिया लज्जया औत्कण्ठ्येन च यथा क्रमम् अगतिगत्योर्निमित्तयोरन्योन्यं रणः सम्यगातेने व्यस्तारि। अविशेषम् वलवतेति द्वयोर्विशेषणं तत्र प्रथममेव आयत्यां औत्कण्ठ्यस्यैव अधिकवलत्वं गत्या लक्षितमिति ज्ञेयम् ॥ १२५ ॥

किञ्चिद्दूरं नाभिदघ्नजलप्रदेशम् ॥ १२६ ॥

परस्परंतुल्येन समानेन वलवता सौभाग्येन तुल्यं अनुरूपमेव यथास्यात्तथा तेन कृष्णेनाकृष्टानां तासां मध्ये काचन कापि न ययौ न तस्थौ च।किंच सर्वा एवेत्यादि।द्रुतहृदः प्रेमविक्लिन्नमनसः १२७

ह्रियो लज्जाया भरेण भारेण सन्नानां विषण्णानां पुरोगाणांअग्रगामिनीनां कासांचिदङ्गैरेवान्तरिताङ्गीराच्छादितगात्रीः सवैलक्ष्यं सविस्मयं स वैदग्ध्यं च यथास्यात् तथा यमकानुरोधात् द्वन्द्वैक्यं। खरतरस्यातितीक्ष्णस्य मनसोऽनुरागस्य परभागः सौन्दर्य्यं तस्य परभाजनं श्रेष्ठं पात्रम् ॥१२८॥

अनवस्थितमव्यवस्थितमवस्थितं स्थितिर्यासां ताः । उन्नतरूपस्य अत्युच्चाकृते स्तरोरुपरि श्लेषेण उन्नतं रूपं सौन्दर्य्यंतदेव तरुस्तस्योपरि परितस्थुषा स्थितवता सर्वसौन्दर्य्यगुणस्यापि चूडामणिनेत्यर्थः। तेन तासां प्रलोभनमयं स्वयं दौत्यं व्यञ्जितम्। समया निकट एव॥१२९

असाध्वसेन निःसङ्कोचेनतथा कृते तथावस्थाने कृते सति कुशलस्य भावः कौशल्यं चातुर्य्यम्। अन्यथा व्यवहितगात्रीणां पश्चाद्वर्त्तित्वाद्वाससो ग्रहणे परिधाने च कृच्छ्रमेवेति भावः १३०

कौ शल्यं तदेव यदन्तरङ्गजनरञ्जनकं न भवतीति मद्वचसा च सांमतं यासो गृह्णीते ति तदा तदाकर्ण्य कर्ण्यमतिरसायनं मतिरसायनन्ददपि पुरोगतानां समानभावेन समानभावेन तदा तदाज्ञानुरूपमेव यथायथं श्रेणीभूय तस्थुः १३१ ॥

तथा स्थितासु तासु सुप्रीतमना मनाग्विहस्य स्कन्धेनिहिततत्तदम्बरःपीताम्बरः पीताखिलकुमारीवदन इव दृशा दृशामभिरामः पुनराह ता हता मन्दाक्षेण १३२

अयि विरुद्धमेतत् विस्रस्तकीर्णाचकुरत्वमिदं ह्यलक्ष्मीलक्ष्म व्रतस्थितजनस्य तु निन्द्यमुच्चैः सामान्यलोकस विधेऽपि विमुक्तकेशा नार्हन्तिगन्तुमनुमान्यजनं पुनःकिम् १३३

हन्त भोः सुकेश्यः के श्यन्ति स्वहितं अनिवद्धाः । केशा नाकेशानामपि लक्ष्मीः दमीलयन्ति ततपि वदननिन्दितराकेशाः केशान् बध्नीतः ॥१३४॥

इति समाश्रुत्य श्रुत्यतिरम्यं शमितातङ्कं तं कञ्जनयनस्य व्याहारं सकलाः सकलाकौशलं शलन्त्यस्त्रपाजलनिधौ निधौतभावाः समाकुञ्चितोरुचितोरुरामणीयकमधिधरणिरणितहंसककलहंसककलहानुरक्तरक्तचरणकमलपार्ष्णियुगलोपरिपरिपातितजानुयुगलमुपविश्य ॥१३५॥

चलत्वलयझङ्कारकारणकर्णामोदकराभ्यां कराभ्यामदरसमुन्नमिताभ्यां मदरसमुन्नमिताभ्यां दरविकसदुरसो रसोल्लसितमानसाः केशकलापं केशकलापण्डित तया वबन्धुः ॥१३६॥

---

कौ पृथिव्यां तदेव शल्यं तद्वचः कर्ण्यं कर्णाभ्यां हितं मतेर्बुद्धेरसाय स्वादा स्वादार्थं न्ददपि समृद्धिमच्च पुरोगतानां समानभावेन च तुल्याकारत्वेन मान आदरो भावः प्रेम ताभ्यां सहितेन ॥ १३१ ॥ मन्दाक्षेण लज्जया हतास्ताः पुनराह ॥ ३२ ॥

मान्यजनम् आदरणीयजनं अनु लक्षीकृत्य तस्य निकट इत्यर्थः ॥ १३३ ॥

के जनाः स्वस्यहितं श्यन्ति नाशयन्ति । नाकेशानां स्वर्गपतीनामपिक्ष्मीलयन्ति मुद्रयन्ति राकेशश्चन्द्रः ॥ १३४ ॥

सकलाकौशलमिमिति व्याहारविशेषणम् । त्रपाजलनिधौ शलन्त्योगच्छन्त्यः तत्रैव निधौतभावाः अतिशयेन क्षालितस्वरूपाःनिमग्नोत्थिता इत्यर्थः । सम्यगाकुञ्चिताभ्यां उरुभ्यां चितं आनीतं उरु अधिकं रामणीयकं यत्र तद्यथा स्यात्तथा अधिधरणि धरण्यां रणितो ध्वनियुक्तो हंसकः पादकटक एव कलहंसः तस्य कलहे अनुरक्तयोः अनुरागिणोः रक्तयोरक्तयोश्चरणकमलयोः पार्ष्णियुगलस्योपरि परिपातितं संहतजानुयुगलं यत्र तद्यथा स्यात्तथा उपविश्य अत्र केशबन्धने लज्जया श्रेणीभावमपहाय पुनरप्यपरश्चाद्भावावस्थितिमङ्गीकुर्वाणानां तासां या श्रेण्यपरार्तिम्यः कुञ्चितनीचीनसंहतजानुयुगलोपरि निहितकफोणियुगलं उपविविशुस्तासामेव पार्ष्णियुगोपरि पृष्ठपार्श्वस्थस्यादृशजानुयुगलं निदधुरितिज्ञेयम् । अन्यथा स्वस्वपार्ष्णियुगोपरि निहितजानुयुगलेन सुखासनतयोपवेशे जघनप्रान्तोद्घाटनं स्यात् ॥१३५॥

चलतां वलयानां झङ्कार एव कारणं यस्य तथाभूत कृष्णस्य कर्णयोरामोदं कुरुत इति ताभ्यां कराभ्यां अदरं अनल्पं समुन्नमिताभ्यां मदरस हर्षरस उन्नं आर्द्रं इताभ्यां रोमाञ्चचिह्नेन प्राप्ताभ्यामित्यर्थः ॥१३६॥

वन्धुरथ तासां पुनरपि निजगाद निजगादप्रतिपालनतस्तुतोषच तोषचपलः ।१३७।
हन्त भोः पुरतो मान्यस्य मानस्य समुपवेशोऽभिशोभिता तामुपैति भवत्यो यद्यपि न सामान्या मान्यायस्तदपि मदग्रतो वः समुपवेशनम् । तदुत्तिष्ठन्तु तिष्ठन्तु च मच्छासनेऽच्छासनेऽस्मिन्नोपविश्यतामिति पुनरस्य रस्यतममुक्तंमुक्तं वदनचन्द्रमसः पीयूषमिव श्रवणंनिर्व्यथनेन निर्व्यथनेन निपीय जातसाध्वसाः साध्वसाधु विचारविरहेणैव सहसा सहसादरतया जानुनि जानु निधाय परस्पराशक्तकरकमलपिहितोरुमूलमामूल मालम्बमानावरोहरोहदतिरामणीयका मणीयकाननलता इव किञ्चिदानताः समुत्तस्थुः ॥१३८॥

पुनरुवाच वाचमतिसरसां स रसाञ्चितमना मनाग्विहस्य। हन्त भोः कुमार्य्यो मार्य्योपसेवनोचितं चितं चरितं न खलु व्रतपराः परास्तदुकूलतयानुकूलतयानुगम्य जलदुकूलतां कूलताण्डवितदृशः खेलितुमर्हन्ति ॥ १३९ ॥
नग्नतया सलिलावतरणे तरणेर्दुहितरि सलिलदेवता वतातिशयहेलिता भवति १४०
देवताहेला हे लालसाविरोधिनी च तदिदमागो मा गोचरीभूतं वः ॥१४१॥
व्रतफलफलनाय यदि वो दुर्लभाय लभायता भवतीच्छायास्तदा तदागःक्षरणाय पणायन्ताम् अस्तिनिरपाय उपायउत्तमस्तत्र कश्चिदिति निशम्य शम्यवस्थामापन्नेन हृदा सुहृदा सुखदेन सह सहसा हरिणनयना व्यचीचरत् ॥१४२॥

निजस्य गादो वचनं तस्य प्रतिपादनाद्धेतोस्तुष्टस्ततश्च तोषचपल आनन्देनास्थिरोऽभूत् १३७

मान्यस्य आदरणीयस्य पुरतः अन्यस्य अमान्यस्य जनस्य उपवेशः । मा अभिशोभितानुपैति न शोभ ते । मान्यायः अन्यायः । अस्मिन् अच्छासने निर्मलासने । श्रवणनिर्व्यथनेन कर्णच्छिद्रेण छिद्रं निर्व्यथनं रोकमित्यमरः। व्यथनस्यात्यंताभावोनिर्व्यथनं तेन निपीय आमूलं मूलसमीपपर्य्यन्तम् । आ ईषत् लम्बमानाभ्यां अवरोहाभ्यां रोहत् उत्पद्यमानम् अतिरामणीयकं यासां ताः मणीया मणिमय्यः काननलता इव ॥१३८॥

मेति निषेधे । आर्य्याणां । शिष्टानां उपसेवनोचितं अनुसरणयोग्यं युष्माकं चितं समुदितं चरितं न भवति । अनुकूलतया आनुकूल्येन जलदुकूलतां जलं दुकूलं यासां तथाभूतत्वम्। अनुगम्य प्राप्य ॥ १३९ ॥

तरणेर्दुहितरि यमुनायाम् ॥ १४० ॥

हेला अवज्ञा हे इति संबोधने लालसा कामना वो युष्माकं आगो अपराधः मा गोचरीभूतं न विषयीभूतम् ॥ १४१ ॥

ननु तर्हि संप्रति किं विधेयं तत्राह। व्रतफलस्य फलनाय निष्पत्तये "फल निष्पत्तौ" कीदृशाय दुर्लभाय। इच्छाया लभा लाभः आयता अधिका भवति। लभेः पित्वादङ्ःव्रतफलनिष्पत्यर्थं यदिच्छामधिकं प्राप्नुथेत्यर्थः। शमिनां शान्तानां अवस्थां प्राप्तेन स्वप्रौढिनाशात् प्राप्तदैन्येनेत्यर्थः। हृदा मनसा सह व्यचीचरत् परामर्शंसुखदेनसुहृदा अनार्जवत्यागादनुकूलप्रियसुहृद्रूपेणेत्यर्थः ॥ १४२ ॥

यद्यज्जगाद तदिहाकरवाम वामः किंवा परं वदति तन्नहि हन्त विद्मः। नैव क्रियेत यदि तद्व्रतसाध्यबाधाभीतिं प्रदर्शयति हा किमिहाचरामः ॥१४३॥

इति क्षणमितरेतरेक्षणसक्षणसचकितं शङ्कापङ्कापङ्गुमनसो न सोढव्यमन्यत्सोढव्यं वा किमपीति संदिहाना हानादानव्यसनिन्यो बभूवुः ॥१४४॥

तासां तादृशां दृशां कातर्यं समालोक्य समालोक्यवदनश्रीमालिन्यान्मनोग्लानिं चानुमायाऽमायामेवाश्रित्य स पुनराह ॥ १४५ ॥

आशङ्काचकितचकोरकान्तिचोरैः पश्यन्त्योऽक्षिभिरभितः परस्परास्यम्। किं बालाः कलयथ कर्कशान् वितर्कान् श्रूयन्तां कलुषमुषोऽस्मदीयवाचः ॥१४६॥

विनोदक विनोदकं भवति किं पिपासायाः सायान्हं च विना न भवति कोऽपि समयो निदाघवासरस्य रस्यस्तन्मदुपदेशो भवतीनां कार्यः ॥ १४७ ॥

अंहःसंघक्षपणपणनो मह्य मेत्र प्रणामः कल्याणानामपि जनयिता श्रद्धया कल्प्यमानः ऊर्द्ध्वे मूर्द्धामृजुतरतनूवल्लयो हन्त तस्मादद्धा बद्धाञ्जलि विदधतां सुभ्रुवोऽस्मत्प्रणामम् ॥१४

---

वामः प्रतिकूलचेष्टितः कृष्णः। व्रतस्य साध्यं फलं तत्र बाधारूपां भीतिम् ॥१४३॥

इतरेतरेक्षणं स्वपरविचारसंवेदनार्थं परस्परकृतदृष्टिकं सक्षणं प्रेष्ठस्य तादृशाग्रहदृष्ट्या सोत्सवं सचकितं हन्त किं भविष्यतीति सत्रस्तं तच्च तच्चेति द्वन्द्वैक्यम्। शङ्केव पङ्कस्तेन आ सम्यक् पङ्गुप्रवृत्त्यऽसमर्थं मनो यासां ताः। हाना दाने तदाज्ञायास्त्यागस्वीकारौ एव व्यसने विपची तद्वत्यो बभूवुः ॥ १४४ ॥

समग्रकुटिलं आलोक्यं दीप्तियोग्यं तद्वदनं तस्य श्रियः शोभायाः मालिन्याद्धेतोः अलोकौ दर्शनाद्योतावित्यमरः। अर्हार्थे यत्। अमायाम् अकैतवम् ॥ १४५ ॥

कलुषं व्रतवैगुण्यरूपं पापं मुष्णन्ति नाशयन्तीति ताः ॥ १४६ ॥

उदकं जलं विनापि पिपासायास्तृष्णाया विनोदकं निरासकं किञ्चिदस्ति किं नास्त्येव यत्र पिपासा तत्रोदके प्रातिकूल्यमयुक्तमिव मयि स्पृहावतीनां भवतीनां व्रतितीनां मद्रोचककृत्यानाचरणरूपं प्रातिकूल्यं मय्यनुचितमेवेति भावः। ननु कुलपालिकानां लज्जानिर्मूलेनात्यन्तविडम्बनमेव संप्रति ते रोचकं तत्कथं कर्त्तुं शक्यते रोचकान्तरमुच्यतां यद्वयमनुतिष्ठेम तत्राह सायान्हं विना निदाघवासरस्य कोऽपि समयोऽपराह्णादिर्न रस्यः तथा तं विना कथमप्यूष्मा न निवर्त्तते तथैव भवतीनां प्रकटमेव सर्वाङ्गदर्शनं विना ममाग्रहो न निवर्तिष्यत एवेति भावः ॥ १४७ ॥

एवं रहस्यं स्वचिकीर्षितमर्थमपदेशेनैव व्यञ्जनया बो(बो)धयित्वा प्रकटमप्यपराधरूपं मिषमाश्रित्य व्यवतिष्ठमान आह अंह इति। अंहः संघानां पापसमूहानां क्षपणमेव पणनं पणः फलं यस्य सः। किंच श्रद्धया कल्प्यमानः सन् कल्याणानां बहुतरमङ्गलस्वाभीष्टानामपि जनयिता उत्पादको भवति। ततस्ताः पश्चाद्गप्रणामं विधित्सतीः आशङ्क्य स्वाभीष्टाविरोधनीं तत्परिपाटीं स्वयमभिनयेन शिक्षयन्नाह मूर्द्ध्नि मस्तकानां ऊर्द्ध्वे सीमन्तप्रदेशे बद्धः अञ्जलिर्यत्र तद्यथा स्यात्तथा अस्मत्प्रणामं विदधतां कुर्वन्तु। सुभ्रव इत्यस्य विशेष्यत्वात् प्रथमपुरुषः। तत्रापि कुञ्चिताङ्गत्वं संभाव्याह ऋजुतरतनूवल्लय इति ॥ १४८ ॥

ततश्च ।
ह्रियं कृत्वा पश्चात् प्रियतमगिरोऽग्रे विदधती
स्वलावण्यं कृत्वा वसनमखिलाङ्गावरणकम् ।
ऋजूभूय स्थित्वा दरमुकुलिताक्षी करपुटीं
शिरोग्रे विभ्राणा हरिणनयनाश्रेणिरनमत् ॥ १४९ ॥

अथ यथानिर्देशं विहिताचरणमपञ्चाः पञ्चालिका दारवीरिव नाट्यमाना नाट्यमानाशयः शयकुशेशयशयसकलवसनःसनम्रमुखीस्ताः प्रति प्रीतिमना मनाग्विहसितसितसुधासुधावितावधरः प्रत्येकमेव प्रणयरसोत्कटाक्षः कटाक्षकलयानिरीक्ष्य निजगाद ॥१५०॥

प्रीतोऽहं वः साधुनाधुना निर्व्यलीकेन केनचिद्भावेन भावेन तदुन्नीयतां करकमलं नीयतां करकमलं कर्त्तुमुचितरागं वसनकुलं परिधीयतामुपरिधीयतामुचितचितपरितोषाणां मनोवृत्तिः ॥१५१॥

इति निगद्य तथा समुन्नीतकरकमलाभ्यः कमलाभ्यधिकसौभगाभ्यो निजकरकमलेन प्रतिजनं तथा समीचीनानि समर्पयामास यथा यथास्वमेव तदा तदापुर्न खलु विपर्य्ययः पर्य्ययते स्म ॥१५२॥

ततश्च ताः स्वं स्वं ललितांशुकमंशुकमङ्गलतामङ्गलतायां मूर्त्तिमत्यामिव संग-

दरमुकुलिताक्षीति हन्तास्माकमुरुमूलस्य कीदृशत्वं वा खल्वनेन दृष्टमभूदित्यालोकनार्थमतिलज्जयापि नेत्रयः सम्यङ्मुद्रणाभावः ॥१४९॥

दारवीः काष्ठमयीः पञ्चालिकाः पुत्तलिका इव नाट्यमानाः नृत्यं कार्य्यमाणाः स कीदृशः नाट्ये नर्त्तनायां मानो ज्ञानं यस्य तथाभूतआशयोऽन्तः करणंयस्य सः नर्त्तयितुं विचक्षणधीरित्यर्थः । शयः पाणिरेव कुशेशयं कमलं तत्र शेरते इति शयकुशेशयशयानि सकलवसनानि यस्य तथाभूतः वस्त्राणि दातुं स्कन्धतो हस्ते दधान इत्यर्थः । पञ्चशाखः शयः पाणिरित्यमरः । प्रणयरसेन उत्कटमत्तमन्तःकरणं यस्य सः प्रेमार्द्रचित्तइत्यर्थः ॥१५०॥

भां शोभां अवति पुष्णातीति भावस्तेन । वसनकुलं नीयतां ततश्च परिधीयतां कथंभूतं करकं दाडिमपुष्पमपि अलंकर्त्तुमुचितो रागआरुण्यं यस्य तत् । समौ करकदाणिमाविरयमरः। उचितानां योग्यानां चितपरितोषाणां समुद्यानन्दानां उपरि मनोवृत्तिर्धीयतां अर्प्यतां निजभावोचितसुखसिन्धुमग्नचेतसो भवत इत्यर्थः ॥१५१॥

चीनानि वस्त्राणि तथा तेन प्रकारेण समर्पयामास यथा यथास्वं निजनिजमेव तद्वसनं आपुः प्राप्तवत्यः विपर्य्ययः परि सर्वतो भावेन न अयते स्म न प्राप्तोऽभूत् ।किंत्वेकांशेनैव तत्र प्रथमं कञ्चुलिकां दत्वा तामेव ससंभ्रममन्तरीयतया परिहितवतीभ्योऽन्तरीयां शाटिकां ददाविति भावः ॥१५२॥

ललितांशवः किरणा यस्या तत् अंशुकं वस्त्रं अङ्गमेव लता सैव मङ्गलता मूर्त्तमती तस्यां संगमय्य योजयित्वा जयन्ति स्म ॥ सर्वोत्कर्षं प्रापुः । मदनस्य कन्दर्पस्य पताकिनी सौभाग्यवती तत् प्रिया रतिस्तस्याः क्रीडार्थं पताकिन्यः पताकाधारिण्यः कमलिनीश्रेणय इव पता

मध्य मदनधनाङ्किनीधवाङ्किनीरनिनीराजप इव जयन्ति स्म ॥१९३॥

अथ श्रीकृष्णकरकमलपरिमलपरिपूर्णामोदानि पूर्णामोदा निवीय वसनानि सना निर्मल्यानि सादरदरमन्दाक्षमन्दाञ्चताग्रविलोकनकनत्कनककमलाननास्त-दङ्गसङ्गसद्भावभाविता इव पुलककुलकञ्चुकितवतनवो नवोन्मीलदानन्दनिःस्पन्द-निःस्पर्शपरिष्वङ्गमङ्गलमिवानुभवन्त्यः क्षणमवतस्थिरे स्थिरेण प्रणयभरेण॥१९४॥

स च न जुगोप गोपराजयुवराजो गाम्भीर्य्यं यदतः परं परमकोमलताऽमल-ताधीनहृदयः सदयः समुवाच ॥ १९५ ॥

अयं वः संकल्पः प्रथम इव कल्पद्रुमितिरुहः प्ररोहः प्रागेव व्यजनि मधचित्त-स्य विषयः । इदानीं तदूर्द्धं व्यरचि विविधेयं विरचना परीक्षा च प्रेम्णोव्यतनि भवतीनां निरुपधेः ॥ १९६ ॥

यन्मदभिहितमभि हितमकारि हृदयं न कापि वामता मतासीद्वः तदयं वो मनोरथः साधुना नाधुनातनत्वमेति वासः सनातनत्वेन सह पूर्वपूर्वसिद्ध एव तदयं नित्यः सत्यः सरसश्च ॥ १९७ ॥

साधारण्येन ममायं स्वभावः । तथाहि । स्वकीयस्यानन्दे मयि विनिहितं धौ-तहृदयेन रागं रागत्वाभयमयि करोमि क्षणमपि । परं तु स्वानन्दामृतमयतया तं प्रविदधे नहि स्वच्छन्दौजा भवति रसकूपोऽन्यरसभाक् ॥ १९८ ॥

का वैजयन्त्यां च सौभाग्याङ्कुल्यजेऽपि चेति विश्वः ॥१९३॥

पूर्णामोदाः पूर्णानन्दवत्यः । निवीय परिधाय । सना सदा निर्मल्यानि " सना नित्ये इत्यमरः । सादरं यथास्यात्तथा दरमन्दाक्षेण ईषल्लज्जया मन्दआञ्चतं ईषद्दत्तं यत् अग्रविलोकनं संमुखदर्शनं तेन कनत् शोभमानं कनककमलतुल्यमाननं यासां ताः । तदङ्गसञ्चितवसनसङ्गादेव तद-ङ्गसङ्गस्यसद्भावेनेव भाविता वासिता इव । नवोन्मीलद्भिरानन्दैर्निःस्पन्दः स्पन्दरहितः निःस्पर्शः स्पर्शविनाभूत एव परिष्वङ्गस्तद्रूपं मङ्गलम् ॥१९४॥

परमकोमलतया या अमलता नैर्मल्यं तया क्षालितमनाः ॥ १९५ ॥

कल्पद्रुमितिरुह इति मदभीष्टस्यापि साधकत्वात् मच्चित्तविषयः प्रागेव व्यजनि अभूत् । इयं विरचना विविधहठनिदेशमयी । निरुपधेरुपाधिशून्यस्य ॥ १९६ ॥

हृदयं अभिमन्मनोऽभिलक्षीकृत्य मदभिहितं हितमकारि वो युष्माकं वामतापि अमता अ-सम्मता अभवत् तत एव हेतोरसौ मनोरथः साधु यथा स्यात्तथा अधुना तनत्वं न प्राप्नोति किन्तु नित्यसिद्धत्वेन इत्यर्थः । अयं मनोरथः सत्यो निष्कैतवः सरसः प्रेममयः ॥१९७॥

स्वकीयस्य परममहति आनन्दे तत्स्वरूपे रागं स्पृहां काममिति यावत् तं रागं स्वानन्दा-मृतमयतया मत्सुखामृततात्पर्यकत्वेन विदधे करोमि आश्रयसुखतात्पर्यकत्वेन काममयोऽपि रागो मयि निक्षिपेत् मल्लक्षणविषयसुखतात्पर्यकत्वेन प्रेममयतयैव फलतीत्यर्थः । स्वच्छ-न्दौजाः स्वतन्त्रभावः रसस्य पारदस्य कूपः अन्यं रसं न भजत इति योऽन्यः रसस्तत्र निक्षि-प्तो भवति स रसत्वं विहाय तस्य रसतां प्राप्नोति लवणाकरवदित्यर्थः ॥१९८॥

भवतीनां तु स्वभावसिद्धानामद्धा नाम स्वभावोऽयं भावो यं श्रीरपि प्रार्थयते १५९

सामान्यानाममि मयि परमे रससिन्धौ कामायानाऽङ्कुरायन्ते न कथिता नच भ्रष्टा यवादयो हन्त बीजन्ति ॥ १६० ॥

इति सरसतरतरलतालताकुसुममिव परिमलमलनमनोहरं प्रियतमवचनामृतममृतमेव मन्यमाना मानातीतहर्षोत्कर्षोत्कमनसो मनसो द्रुतस्येव शीकरनिर्गममिवानन्दाश्रुकणनिःस्यन्दमभिनयन्त्यो निरुत्तरमेव किंचिदाकुञ्चितेक्षणं क्षणं तस्थुः १६

तदनुत्तमप्रणयकलाकलालापकण्ठीः कलकण्ठीरिव शिशिरसमयावसानसानन्दतया कण्ठगुम्फितकूजिता जितारिरथपुनराललाप ॥ १६२ ॥

अयि व्रजत व्रजतलभागामिनीः क्षणदाः क्षणदाः समया मया सह रन्तव्यं सिद्धा एव भवत्यः स्तोभवत्यः स्तोकमपि मा भवन्तु इति लब्धाश्वासाःश्वासानिलधूताधरकिसलयं सलयं दलदिन्दीवरवरवर्षणमिव कटाक्षापातपातपरंपरांतदुपरिपरिकल्प्य कृच्छ्रेणैव व्रजं व्रजन्तिस्म ॥ १६३ ॥

इत्यानन्दवृन्दावने कैशोरलीलालताविस्तारे वस्त्राहरणं नाम द्वादशः स्तवकः ॥ १२ ॥

---

अद्धा साक्षात्। नामप्राकाश्ये। भावः दीप्तिधारी। यं स्वभावम् १५९॥

बीजन्ति बीजानीवाचरन्ति ॥१६०॥

सरसतरा या तरलता प्रेमार्द्रतया गाम्भीर्य्याभावः सैव लता तस्याः कुसुमं अङ्गसङ्गरूपफलकारणत्वात् परिमलः कर्णरोचकत्वं तस्य मलनेन धारणेन मनोहरम्। ऋतं सत्यम्१६१

अनुत्तमप्रणयकलया कलं मधुरास्फुटं आलपतीति स कण्ठो यासां ताः कलकण्ठीः कोकिलस्त्रीः कण्ठे गुम्फितं ग्रथितं कूजितं याभिस्ताः तेन अयि वचनं किंचिदाकर्णयसि किंचित् प्रत्युत्तरमपि देहि अयि नाहमत्र प्रभवामि त्वमुत्कण्ठसे चेत्त्वमेव निःसन्देहं पृच्छेत्यादि तासां नीचैः परस्परसंकथनमपि संज्ञाबहुलं समभूदिति व्यञ्जितम् जितारिः श्रीकृष्णः ॥१६२॥

समया निकट एव सलयं सश्लेषं कटाक्षाणां आपतपातस्तत्कालपातनं यस्य परम्पराम्। आपातस्तदात्वे, पतनेऽपि चेति विश्वः ॥ १६३ ॥

इत्यानन्दवृन्दावन टीकायां सुखवर्त्तिन्यां द्वादशस्तवकसङ्गमनम् ॥ १२ ॥

## त्रयोदशः स्तबकः

अथ भगवाननु गवाननुसंधानं क्षपितबहुकालोऽकालोपनतं किमपि मधुररसकोमलतालतालफलमिवान्तरान्तरास्वाद्यपुनर्गोचारणकुतूहलिना हलिना सह सहजलीलालीलावण्यभाजां सहचराणामपि सङ्गसङ्गत्वरत्वरतया सादरेण सोदरेण सोत्कर्षमानन्दितेन नन्दितः सहचरैरपि चाभिनन्दितो वनमध्यमवजगाहे॥१॥

अवगाह्य च सरसमधुरं मधुरञ्जिना वचसा च सादरं सोदरं सोऽयं वयस्यविशेषान् वयस्यविशेषानपि संबोधयति स्म ॥ २ ॥

तत्रभवन् भवन्नार्य्य रभसास्तोक स्तोककृष्ण अये उरुचिरांशो रुचिरांशो हन्त सकलसौभगश्रीदामन् श्रीदामन् अयि प्रणयवसुवल सुवल भोः प्रेमयशोनिवहेऽर्जुन हेऽर्जुन हंहो प्रणयविशाल विशाल हन्त श्रीमन्नोजस्विन्नोजस्विन् अङ्गप्रणयगिरिदेवप्रस्थ देवप्रस्थ हन्त भो मनोरथरथवरूथप वरूथप दृश्यतां दृश्यतां गतेयं विपिनश्रीः ॥३॥

यत्र द्रुमा विद्रुमाविशिष्टकिसलयाः सलया इव ॥४॥

---

चक्रेभक्तार्थिनां भक्तार्थिनां चिच्छेद चाच्युतः । त्रयोदशे व्यधात्सायं प्रमदाः प्रमदकुलाः। गवाननुसंधानं गवां अनुसंधानाभावं अनु लक्षीकृत्य क्षपितबहुकालः वस्त्राहरणादिलीलावेशेन गोचारणमपि विस्मृत्य यापितबहुक्षण इत्यर्थः । अकालेऽसमये संगवपूर्वाह्णादावपि उपनतं मिलितं सहचराणां सगे संगत्वरी संगमशीला त्वरा यस्य तत्तया आनन्दितेन सोदरेण भ्रात्रा बलदेवेन नन्दितः ॥ १ ॥

सोदरं बलदेवं सोऽयं श्रीकृष्णः वयस्यविशेषान् सखिभेदान् । कीदृशान् वयसिविशेषमप्राप्तान् तुल्यवयस्कानित्यर्थः ॥ २ ॥

रभसे हर्षे अस्तोक अनल्प । उरवः प्रधानाश्चिरं व्याप्य अंशवः किरणाः केलियुद्धादौ यस्य हे तथाभूत रुचिर सुन्दर अंशो इति विशेष्यपदम् । सकलसौभगमेव श्रीयुक्तं दाम माला यस्य हे तादृश प्रणय एव वसु धनं तेनैव वलत इति हे तथाभूत। प्रेमयशसां निवहे समूहे अर्जुन हे शुक्लवर्ण आतासमधराप्रत इति वत् तव प्रेमयशः समूहः शुक्लवर्ण इत्यर्थः । वलक्षो धवलोर्जुन इत्यमरः। अङ्ग इति संबोधने प्रणय एवगिरिदेवः पर्वतमुख्यः तस्य प्रस्थरूप प्रस्थः सानुरस्त्रियामित्यमरः । मनोरथ एव रथः तस्य वरूथं कवचं पाति इति तथा "वरूथो रथगुप्तौ स्याद्वरूथं वर्म्मवेश्मनो" रितिविश्वः।३। विद्रुमैः प्रवालैरविशिष्टानि किसलयानि येषां ते सलया इव परस्पराश्लेषवन्त इव यद्वा पत्रचापल्यभ्रमरझङ्कारकोकिलरावैश्च नृत्यगीतवाद्यगततालधारिण इव "लयो विनाशे संश्लेषे साम्ये तौर्य्य त्रिकस्यचेति" विश्वः ॥४॥

येषां च सर्वापत्राणि पत्राणि परितः संपरिवृताऽऽशाखाः शाखाः विविधवि-हंगविटपाविटपाः वशीकृतसुमनसः सुमनसः परुषापरुषाऽपरुषाणि गुम्फलानि फलानि ॥५॥

तिष्ठतु तावदेषां वृन्दावनतरूणां रामणीयकं सुरसामान्यान सामान्यानां च तरूणां जन्म परमसाधीयः ॥ ६ ॥

यतः पत्रैरेव शराः परसुखदा भवन्ति सुमनोभिरेव साधवःफलैरेवपुण्यकर्माणि त्वग्भिरेव शार्दूलाः समिद्भिरेव क्षत्रियाः भस्मीभावेनैव पारदाः तरवस्तु पत्र-सुमनः फलत्वक्समिद्भस्मभिरेव तत् खलु तरुजन्म सकलप्राणिसार्थसार्थकम् ७

इत्यनुपममनोहरं निगदन्ननुगवीनोऽनुगवीनो धेनुगणावनवनलीलालसो लालसो वयस्यानां हेतोरुदन्यादन्यादकृतालसस्य सस्यदगतिहीनं गवां गणं मिहिर-दुहितृरोधोऽरोधोदयं मापिपयिषुः पिपयिषुश्च परमां प्रीतिमन्तरेणक्षितिजन्मना-मन्तरेण क्षितिजन्म नालोक्यभावैर्वयस्यैकरूप्यं गतैः सह सह सहसाग्रजोऽग्रजो पमुपससर्प ॥ ८ ॥

स सर्पराजदमनो मनोज्ञचरितस्तरणितनयातटीगाः गाः पाययामास ॥ ९ ॥

सर्वापद्भ्यस्त्रायन्त इति मूलविभुजादित्वात् कः सम्यक् परिवृता आशा दिशः खमाकाशं च याभिस्ताः विविधा विहगाः पक्षिण एव विटाः पिङ्गास्तानपि पान्तीति तथा। सुमनसो देवाः सुमनसः पुष्पाणि परुषापरुषेति वीप्सा प्रतिपर्वेत्यर्थः । ग्रन्थिनी पर्वपरुषी इत्यमरः । अप-रुषाणि अरूक्षाणि गुम्फो ग्रन्थनं तं लान्तीति तानि ॥५॥

शोभने रसैः आ सम्यक् मान्यानां माननीयानाम् ॥ ६ ॥

पत्रैः पक्षैः शरा वाणाः परसुखदाः शत्रुसुखखण्डकाः परसुखदा भवन्तीति सर्वत्रान्वेति कर्माणीत्यत्र तु लिङ्गविपरिणामेनैव परेषां सुखदायिनो भवन्तीति तत्र तत्रार्थः। सुमनोभिः शो-भनैश्चित्तैः फलैः स्वर्गादैः त्वग्भिःत्वचर्मभिः। समिद्भिः साधुजनपालनार्थं युद्धैः । प्राणिसार्थे प्राणिसमूहे विषये सार्थकं सप्रयोजनकं किंतु याज्ञिकब्राह्मणजन्मैव निष्प्रयोजनमित्यप्रेतनलीला-नामभिप्रेत्य सूचना । वृक्षा अचेतनाः विप्रामदज्ञानादचेतनाः किंत्वेषां श्लाघयाकाण्डे धिक् तानेवेति सूचितम् ॥ ७ ॥

अनुगानां वीः कान्तिरिच्छा तस्या इनः प्रभुः । धेनुगणस्य अवनं यत्र तथाभूतायां वन-लीलायां रसो यस्य सः । उदन्यां पिपासां ददातीति सा चासौ न्यादो नितरामदनं च तेन कृतस्य अलसस्य हेतोःसस्यदया सवेगया गत्या हीनं गवां गणं मिहिरदुहितुर्यमुनायारोधः पुलिनं प्रापिपयिषुः प्रापयितुमिच्छुः । कीदृशं न रोधस्यावरणस्य उदयो यत्र तत्र तत्पिपयि-षुर्जिगमिषुः "पयगतौ,, क्षितिजन्मनां तरूणां अन्तरेण मध्येन पथा अन्तरेणेति तृतीयान्तम् वयस्यैः सह । कीदृशैः । क्षितिजन्म क्षितौ प्रादुर्भावं अन्तरेण विना नालोक्यः न आलो-कयितुं शक्यः भावः स्वरूपं येषां तैः । अन्तरेणेत्यव्ययं ऐकरूप्यम् तुल्याकारत्वम् अग्रेधिको जोषः प्रीतिर्यत्र तथा स्यात्तथा उपससर्प ॥ ८ ॥

ततः स कृष्णः सर्पराजस्य दमनः तरणीतनयायास्तटीं गच्छन्तीति ताः गा धेनूः ॥ ९ ॥

पयः पिबन्तीषु नैचिकीषु चिकीषुरपदवीदवीयसीनां विभभार्य्याणां विभभार्य्याणां मनोरागं रागं तरुमूलमालम्ब्य कृतविश्रामः स उच्चैः शुशुभे ॥ १० ॥

शुभे तस्मिन् समये धेन्ववनविहारवनविहारक्लान्ताः मातरकृताहारा नीहारानीतग्लानिकमलवदनाः सर्वे एव सखायः सममशनायया नाययामासिरे ग्लानिं यदि ॥ ११ ॥

तदामी तदामीलन्मोदा इव श्रीरामदामोदरयोर्मदामोदरयोः सोदरयोर्द्रुतमभ्यासमभ्यासन्नाः सकातरतया जगदुः ॥ १२ ॥

जगदुत्तमतममहोऽभिराम राम महाबाहो नवाम्बुवाहकृष्ण कृष्ण महाभुज भुजगविषवदतिकरालया बुभुक्षयाक्षया जठरपिठरपिपीडयिषा नो व्यतानि ॥१३॥ तन्निमानमपि नोपलभामहे निष्कृतेः तदुपशमनमननमनुविधीयतां तत्रभवद्भ्यां भवद्भ्याम् ॥१४॥ इति कुन्दसुभगदतस्तु सुगदतस्तु कोमलमना मनाक् स्मितं विधाय समुपदिदेश देशकालोचितं चितं प्रणयेन ॥ १५ ॥

भो भो यद्येवं क्षुद्वाधामनुभवन्तो भवन्तो विमनायन्ते तदा तदाबाधाप्रशमनाय शमनायत्तं यदुच्यते तदाकलयन्तु ॥ १६ ॥

इत एवाविदूरे दूरेक्षिणो महान्त ऊर्वीगीर्वाणा निर्वाणानिर्वचनीयश्रद्धालवोऽलोवोदित्वरप्रभावा भावाधिक्ये सत्रमाङ्गिरसं नाम रसत्राममूर्त्तिमन्तमन्तमिवारब्धवन्तः संततततबहुजनभोजनभोज्वलयशसः शसनविमुखा ज्ञानदशमिनोऽज्ञानदशमिनो भवन्ति द्वितीयाश्रमिणः श्रमिणः ॥ १७ ॥

---

विप्रभार्य्याणां रागं प्रेम चिकीषुः ज्ञातुमिच्छुः । कि ज्ञाने । कथं भूतं मनोरागं मनो रागयति रक्तं करोति इति तथा तम् । पदव्यावर्त्मनोदवीयस्यो दूरतरा न तथाभूतानां निकटवर्त्तिनीनामित्यर्थः । विशिष्टया प्रभया आर्य्याणाम् ॥ १० ॥

नीहारेण हिमेन आनीता ग्लानिर्यस्य तादृशकमलतुल्यवदनाः अशनायया बुभुक्षया ग्लानिं नाययामासिरे आत्मनः प्रति प्रापयां बभूवुः ॥ ११ ॥

तदामी तयैव बुभुक्षया हेतुना आसम्यक् प्रकारेण मीलन्मोदा इव अनुद्गच्छदानन्दा इव। मदस्य कस्तूर्या आमोदं सौगन्ध्यं रातः गृह्णीत इति तयोः । अभ्यासं निकटम् ॥ १२ ॥

नवाम्बुवाह इव कृष्णे श्यामवर्णे अक्षया क्षयरहिता जठरमेव पिठरः स्थाली तस्य पिपीडयिषा पीडनेच्छा बुभुक्षया कर्त्र्या व्यतानि व्यस्तारि ॥ १३ ॥ तन्निमानमल्पत्वम् ॥ १४ ॥ प्रणयेन चितं व्याप्तं पुञ्जीभूतं यथा स्यात्तथा ॥ १५ शं सुखं अनायत्तमायासशून्यम् ॥१६॥

दूरेक्षिणः दूरदर्शिनः निर्वाणैर्मुनिभि स्थानिर्वचनीया याश्रद्धा तद्वन्तः तदन्तविधित्यान्नुपगमादालुच् । निर्वाणो मुनिवन्ध्यादावित्यमरः । अलवोऽमल्पः उदित्वरः प्रभावो येषां ते संततमेव ततं विस्तृतं यद्बहुजनानां भोजनं तस्य भा शोभा तयैव उज्वलानि यशांसि येषां ते शसनं हिंसा तद्विमुखाः इत्यभोग्यानता निरस्ताज्ञानदशमिनो ज्ञानवृद्धा वर्षीयान् दशमी त्याथानिस्थपरः । अज्ञानं दशति खण्डयन्तीत्यज्ञानदाश्च ते शमिनः शांताश्चेति ते सन्ति द्वितीयाश्रमिणः गृहस्था श्रमिणः वैदिकक्रियाश्रमपराः ॥ १७ ॥

तानुपगम्य प्रणम्य प्रणयसाध्वसभक्तिपुरस्सरं जनं जनमामन्त्र्य महामहिमवर्य्याणामार्य्याणामाह्वयं मम च गृहीत्वा हीत्वा नातिनिकटं प्रकटं प्रश्रयेण भक्ष्याणि याचध्वम् ॥ १८ ॥

या च ध्वंसकरी याञ्चा या न सा त्रपात्रपालनीया निरपत्रपा हि स्वार्थसाधका भवन्ति ॥१९॥

इति भगवतादिष्टा दिष्टातीताः प्रमुदितहृदया हृदयालवस्तन्मार्गमार्गणनिपुणाः कियद्दूरमुपव्रज्य व्रज्यजातालस्या लालस्यालाघवसत्वराश्च पुरः पुरश्च तेषां ददृशुराभीरदारकाः ॥२०॥

ततश्च प्राज्य प्राज्यगन्धिधूमध्वजधूमध्वजनिवहेन नयनानन्ददं तत्सौरभरभसेन घ्राणतर्पणं प्रकटतरतद्गन्धसमीरसमीरणस्पर्शामोदेन त्वगामोदकं साम विकस्वरस्वरमावहता गानेन श्रवणरसायनम् आशोभिष्यमाणशोभिष्यमाणभक्ष्यलिप्सया रसनारसनायकमित्येव मनेकेन्द्रिय प्रियं यज्ञवाटं प्रविविशुः॥२१॥

प्रविश्य च रघुनायकमिव त्रेतावतारं कोशलापुरमिव विसरयूपारं भगीरथमिव समुन्नीतप्राग्वंशम् असमाप्तब्रह्मचर्य्यविप्रदारकामिव समेखलकुण्डलांसम् ॥ २२ ॥

---

हीत्वा हि निश्चितम् इत्वा गत्वा ॥ १८ ॥

ध्वंसकरी नाशकर्त्री त्रपा लज्जा सा अत्र विप्रगृहे ॥१९॥

दिष्टातीताः शुभाशुभकर्मशून्याः नित्यसिद्धा अपीत्यर्थः । मार्गणमन्वेषणम् । व्रज्ये गन्तव्ये जातालस्याः अतः परं श्रमाद्गन्तुमलसा अभवन्नित्यर्थः तदपि लालस्यं लालसा तस्य अलाघवेन अनल्पत्वेन हेतुना सत्वराश्च गमने त्वरावन्तश्च । पुरः अग्रतः पुरः पुराणि तेषां विप्राणां ददृशुः ॥२०॥

यज्ञवाटं यज्ञस्थानं प्रविविशुः। कीदृशं प्राज्यं प्रचुरं यत् प्राज्यं प्रकृष्टमाज्यं तद्गन्धिनस्तद्गन्धवतो धूमध्वजस्य यज्ञवह्नेर्धूमा एव ध्वजास्तेषां निवहेन। आशां उभिष्यमाणं पूरयिष्यमाणं च तत् कृष्णसमां प्राप्य शोभिष्यमाणं चेति "उभ उम्भ पूरणे" तथाभूतं यद्भक्ष्यं तस्य लिप्सया प्राप्तुमिच्छया रसनायै जिह्वायै रसनायकं रसप्रापक प्राप्तेः पूर्वमपि स्वाददायकमित्यर्थः। अनेकेन्द्रिय प्रियं उक्तप्रकारेण नयनादिपञ्चेन्द्रियसुखदम् ॥२१॥

प्रविश्य यज्ञागारं ददृशुः । त्रेतायां युगेवतारो यस्य तं पक्षे त्रेताया अग्नित्रयस्यावतरणं संनिधानं यत्र तं, दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः। अग्नित्रयमिदं त्रेतेत्यमरः। विशिष्टायाः सरय्वाः पारं पारवर्त्ति पक्षे यूपान् इयूर्ति प्राप्नुवन्तीति।कर्मण्यण्।यूपाराः विसराः समूहाः यूपाराः यूपसम्बन्धिनो यत्र तं यूपसमूहयुक्तमित्यर्थः । समुन्नीताः समुद्धृताः प्राग्वंशाः पूर्वपुरुषा येन तं पक्षे समुच्चीकृतः प्राग्वंशो हविर्गृहप्राग्वर्त्ति यजमानगृहं यत्र तम् । प्राग्वंशः प्राग्घविर्गेहादित्यमरः। समेखल मेखलासहितं कुण्डल मौञ्जीरज्जुरसे स्कन्धे यस्य तं कुण्डलम् कर्णभूषायां पाशेपि वलयेपिचेति मेदिनी। पक्षे मेखलासमेतं कुण्डं लान्ति गृह्णन्ति अंशा भागाः प्रदेशा यत्र तम् ॥ २२ ॥

रसिकजनहृदयमिव प्रविष्टरसं पूर्णं निमन्त्रणार्थपाकस्थलमिव प्राज्यस्थालीकं विरहिणीजननयनयुगलमिव सदाश्रुवासं वर्षानदनदीकदम्बमिव विशालपूर्णपात्रम् ॥ २३ ॥

दुरीश्वरसद इव साधुमृदुलूखलमुपलं क्षत्रियकुलमिव समित्कुशलं महेशमिव सहोमं यज्ञागारम् ॥ २४ ॥

उपायचतुष्कमिव सामप्रधानं विलासिवक्षःस्थलमिव पदकक्रमकं मुनिकदम्बकमिव सुजटं तरुणीस्तनयुगलमिव सुसंहितं गानं दधानैरीश्वरवरोपासकैरिव समयासमयज्ञैः कोदण्डैरिव प्रधानेज्याशीलैः समाकीर्णं ददृशुः ॥ २५ ॥

दृष्ट्वा च निःसाध्वसमेव शनैः पुरत उपगम्य त उपगम्यमानहोमधूमधूनिसुरभिपवनतर्पितनासा नासादिततनूपयोधरऽनुधरणिरणितवलयनूपुरं पुरंदराद्यादरणीया अपि दण्डवन्निपत्य बद्धाञ्जलयो जलयोगगंभीरस्वरं स्वरङ्गनसंचारिण

प्रविष्टो रसो यत्र तत्पूर्णमन्यूनं पक्षे प्रकृष्टेन विष्टरेण दर्भमुष्ट्या सम्पूर्णम् । प्राज्याः प्रचुराः स्थाल्यः भोजनपात्राणि यत्र तत् पक्षे प्रकृष्टमाज्यं च स्थाली च कं जलं यत्र तम् । सदा अश्रूणा वासो यत्र तत् पक्षे सदाश्रुवाणां आसोग्रहणं दीप्तिर्वा यत्र तम् । अस गतिदीप्त्यादानेषु । विशालं विस्तृतं पूर्णं भरितं च पात्रं नदीमध्यभागः स्थाल्यादिकं च यत्र तम् । पात्रं तदन्तरमित्यमरः ॥ २३ ॥

दुरीश्वरसदः दुष्टराजसभा । साधूनां मृदनाम् च या लूश्छिदा तस्यां विषयभूतायां खला एव मूपलरूपा यत्र तत पक्षे साधु यथा स्यात्तथा मृन्दातीति साधुमृत् उलूखलं मुपलं यत्र तम् । शमित्कुशलं युद्धनिपुणम् पक्षे समिधः काष्ठानि कुशांश्च लाति गृह्णातीति तम् सहोमम् उमासहितं होमसहितं च ॥२४॥

यज्ञागारं पुनः कथंभूतं गानं दधानैः प्रधानेज्याशीलैः समाकीर्णम् । गानं विशिनष्टि उपायेत्यादि चतुर्भिः । भेदो दण्डःसामदानमित्युपायचतुष्टय मित्यमरः । सामप्रीतिर्वेदविशेषश्च । पदकस्य निष्कस्य क्रमेण परिपाट्या कं सुखं यत्र तत् पक्षे पदानां सुप्तिङन्तानां केन सुखेन क्रमो यत्र तत् । शोभना जटा उग्रकचः स्वरादिसंमेलनं च यत्र तत् । जट झट संघाते सुसंहितं शोभनसन्धियुक्तं पक्षे शोभना संहिता यत्र तत् । समयमसमयं च जानन्तीति तैः पक्षे समयेषु प्रातर्मध्याह्नादिषु असमया यज्ञा येषां तैः । प्रधाने संग्रामे ज्या गुणं शालयन्ती धारयन्ति तैः । पक्षे प्रकृष्टधनाश्च ते इज्याशीला याज्ञिकाश्चेति तैः । एतदेव विशेष्यपदम् । इज्याशीलो यायजूक इत्यमरः ॥२५॥

ते आभीरदारका दण्डवन्निपत्य भूमिदेवानामन्त्र्य निवेदयामासुः । उपगम्यमानस्य उपगम्यमानस्य होमधूमस्य धूनिः कम्पनं यतस्तथाभूतेन सुरभिणा पवनेन तर्पिता नासा येषां ते । जलयोगो मेघस्तस्येव गम्भीरस्वरो यत्र तद्यथास्यात्तथा महसारानिव उत्सवादयानिव । जातवेदसोऽग्नेः । वेदस्य सोदरतया वेदविप्रयोस्तुल्यस्थानोद्भवत्वात् । अदरतया अनल्पतया । यथार्थानु

ऋषीनिव तपोमहसा महसारानिव मूर्तानिव जातवेदसो वेदसोदरतया दरतया यथार्थानुभवानिव मूर्तिमतो भूमिदेवानामन्त्र्य निवेदयामासुः ॥२६॥

भो भो आर्य्यास्तत्रभवन्तो विदाङ्कुर्वन्तु श्रीरामदामोदरयोः सखायो वयमतिथयस्तिथय इव प्रतिपदाद्या उभयपक्षसमसंख्याः ॥२७॥

तत्र तेन हि सकलगुणाभिरामेण रामेण समानमानससारेण सारेण रत्नसानुजेन सानुजेन वयमिह शुभवत्सु भवत्सु प्रहिताः ॥ २८ ॥

प्रहिता हि भवन्तः कृपाकूपाराः कूपारामादिपुण्यकर्माणो भोजनमात्रप्रिया भोजनमात्रप्रियान् प्राणिनः प्रीणयन्ति प्रायशो यशोवदाता दातारो ब्रह्मनिष्ठाः॥२९॥

अद्य प्रातरकृताहारतयाऽनारतया नानाविहारकलया च क्षुधितौ परिश्रान्तौ च तौ श्रीरामदामोदरौ क्षामोदरौ क्षान्त्वाक्षणमथान्नकाङ्क्षिणौ भवतोऽवतो गार्हमेध्यमेध्यव्रतं क्षुदुपशमनार्थमन्नमयाचितं तयोः सहसहचरगणयोः समुचितं चितं समादरेणान्नं दातुमर्हन्ति ॥ ३० ॥

इति निगदितवत्सु तेषु सवितानयज्ञानयज्ञा अपि बालवाक्तया वा लवाक्तया वा मूढतयाऽमूढतया गूहितया भगवत्कृपया रहिततयाऽहिततया वा निरस्ततथाविधसुकृततया वा तत्र कृतानादरा नादराहित्येन मूका इव दारुणतावधिरा वधिरा इव भद्रमभद्रमथवा यदि न किंचिदूचिरे चिरेणापि ॥ ३१ ॥

---

भवान् मूर्तिमत इव यथार्थानुभवातिशयवत् इत्यर्थः । मूर्तिमतः कठोरतायुक्तान् "मूर्तिः काठिन्यकाययोः" रित्यमरः ॥२६॥

समसङ्ख्याः तुल्यसंख्याः पक्षे सम्यगसंख्या इति बहुतरान्नदित्सां प्रवर्त्तयन्ति ॥ २७ ॥

सकलगुणैरभिरामेण वयं रामेण प्रहिताः प्रेषिताः । ननु स एव किमिति नागतस्तत्राहुः रत्नसानुः सुमेरुस्तज्जेन तद्भवेन सारेण स्थैर्य्येण समानो मानससारो धैर्य्यं यस्य तेन इति तद्गुणोद्गारेण दातुः श्रद्धामुत्पादयन्ति ॥ २८ ॥

प्रहिताः प्रकृष्टहिताः। कृपाया अकूपाराः समुद्राः। भो इति संबोधने जनमात्रस्यैव प्रियाः। भोजनमदनम् ॥ २९ ॥

अनारतया अविश्रामया नानाविहारकलया क्षणं क्षान्त्वेति रत्नसानुजेन सारेणेत्युक्तप्रकारेणातिधृतिमतोरपि तयोः क्षुधया धृतिच्युतिं श्रावयित्वा दयां जनयन्ति । भवतो युष्मान् अयाचितं कीदृशान् गार्हमेध्यं गार्हस्थ्यमेव मेध्यं पवित्रं व्रतं अवतः पालयतः परमादरेण चितं समूहम् ३०

वितानं विस्तारं यान्तीति तथाभूतैर्ज्ञानयज्ञैः सहिता अपि यद्वा सवितानस्य यज्ञस्य याचकानादरेण योऽनयस्तज्ज्ञा अपि। बालवाक्तया बालवचस्त्वेन हेतुना अप्रमाण्यात्तत्र निवेदने कृतोऽनादरो यैस्ते । अमूढतया स्पष्टतयैव या मूढता तया वा। कीदृश्या लवः पशुच्छेदः तत्राक्तया संसक्तया वा श्वसनविमुखा इति पूर्वोक्त भगवदुक्तिस्तु याञ्चाप्रवर्त्तनार्थैवेत्यवसेयं गूहितया गुप्तयापि भगवत्कृपया रहिततया वा। अहितो दुर्दैवं तत्तया वा निरस्तमनुत्पन्नमेव उत्पन्नविनष्टं वा तथाविधं सुकृतं येषां तत्तया वा इति हेतुपञ्चकम् विकल्पितम् । दारुणताया अवधिं सीमां रान्ति गृह्णन्तीति ते ॥३१॥

यदाभीरदायादा दायादानविरहेण विरसा रसायां तानतिजरजरठकाठिन्यमतीन् मत्वाऽमत्वाद्दुदन्मुखा इव दुःखपराः परावृत्तिरे ॥ ३२ ॥

परागच्छतोऽपरागच्छतोपः श्रीदामोदरो दरोदितस्मितमालोकयन्नाकारत इव रत एवमेषामकृतार्थतार्थतात्पर्य्यनिर्णये याज्ञिकच्छविप्राणांविप्राणां दयालुभावो नैव पुष्टो वपुष्टो निर्गत इवेति निरणैषीत् ॥ ३३ ॥

उपसृत्य च ते सर्वेमनस्यमूचुः भो राम रामणीयकस्य कस्यचित् परा कोटिरालोकिता कठिनता तादृशी कुत्रापि वर्त्तते तेषां यादृशी दृशीक्षितास्माभिः ते ब्राह्मणपुङ्गवाः पुङ्गवा एव यदात्ममोदनमोदनमस्माभिर्भवान्नाम्ना याचितं नाम्नायाचितं किमपि तैरुक्तम् । अस्तु दूरे दानप्रसङ्गः ॥ ३४ ॥

अपि तु पचतभृज्जता खादतपिवता आगच्छतगच्छता गृह्णीतचलतेत्यादि भूयस्य एव वाचः श्रुताः ॥ ३५ ॥

दृष्टाश्च तथा तथा व्यवहरन्तोऽभ्यवहरन्तोऽभ्यगारमगाधबोधाः परस्सहस्राः सह स्राविणः पुरुषा रुषा तत्र न गतमस्माभिरेषां विप्राणाममर्य्यादया दयालुतया च न स्थितं क्षणमपि व्रीडैवं परमर्जिता जिता च निजाभिजात्यरीतिः ३६

अहो वयस्य कृष्ण कृष्णवर्त्मनो धूमा एव यत् क्षणं पीतास्तदेव नो लाभः किं वदामो दामोदर यत्तावत्तावकं वचनं तदेव देवनिदेश इव नः शिरः शेखरी-

आभीरदायादा गोपबालका दायादौसुतबान्धवावित्यमरः । अतिथित्वाद्दायतुल्यं यदादानं ग्रहणं तस्य विरहेण अतिजरा अतिजीर्णा जरठस्येव काठिन्यं यस्यास्तथाभूता मतिर्येषां तान् मत्वा ज्ञात्वा । अमत्वात् मा शोभा तद्रहितत्वात् आशाभङ्गहेतोर्मालिन्यादित्यर्थः ॥ ३२ ॥

परावृत्य आगच्छतस्तान् आलोकयन् पश्यन्नेव विप्राणां दयालुभावो दयालुत्वं वपुष्टो देहतो न निर्गत इवेति निरणैषीत् निर्णीतवान् । कीदृशः अपराङ् न परास्तः अच्छन्तोपो यस्य सः तान् सरसीकर्त्तुं पुनश्च याञ्चायां प्रवर्त्तयितुं चेति भावः । आकारतः आकारादेव एषां गोपानां अकृतार्थतारूपो योऽर्थस्तस्य तात्पर्य्यनिर्णये रतः । यदेवाह याज्ञिकेत्यादि । याज्ञिकानां छवि रूपमात्रं न तु परानुग्रहरूपं स्वभावं प्राप्ति पूरयन्तीति तेषाम् ॥ ३३ ॥

रामणीयकस्येति विरुद्धलक्षणया कथनं आत्मानं मोदयतीति आत्ममोदनं यत् ओदनं अस्माभिर्भवन्नाम्ना तन्नामोल्लिख्य याचितं तत्र आम्नायोचितं वेदशास्त्रसंहीतं तैः किमपि नोक्तम्, "आचितः संगृहीतेऽपि वृन्देऽपि स्यात् त्रिलिङ्गक" इतिमेदिनी । वेदशास्त्रसंगृहीतातिथिसंमाननधर्माज्ञानमेव तेषां पुङ्गवत्वप्रयोजकमिति भावः ॥ ३४ ॥

पचतभृज्जतेत्यादि आख्यातमाख्यातेन क्रियासातत्ये इति समासः ॥ ३५ ॥

तथा व्यवहरन्तः रसवतीषु पचनभर्जनादिकव्यापारवन्तः । अभ्यवहरन्तो भुञ्जानाः । अभ्यगारं अगाराभ्यन्तरे । परःसहस्राः सहस्रतोऽप्युपरिसंख्याकाः । सह मिलित्वैव स्राविणः । गमनागमनपराः । "स्रुगतौ" ॥ ३६ ॥

कृष्णवर्त्मनो वह्नेः । ननु मामेव संबोध्य दुःखोद्गारेण याञ्चाप्रवर्त्तकमद्वचनस्यैव दुःखदा-

भवति खरीभवति न कदापि पीयूषयूषस्तेन भवद्वचसैव सैवमासादिता काचन व्रीडेति ॥ ३७ ॥

भूयश्च भूयश्चतुरतारतामुदारमुदारस्मितामुवाच वाचमसौ भगवान् सौभगवान् वल्लवेश्वरतनयो रतनयोदयमधुरम् ॥ ३८ ॥

भोभो मानवोढारो मा नवोढारोषेण विग्ना भवितुमर्हत न किं स्वार्थपराः स्वार्थपराहत्या हत्यामिव मन्यन्ते तदुचितमेव वो भो वोभोति मनोग्लानिः ॥३९॥

तथा पुनरपि नरपिशुनतादोषदृष्टिस्तेषु न कार्य्या कार्य्यान्तरानुरोधरोधवशा हि तेषां मनोवृत्तयस्तेन हि ते न हिते वो भवितुमशक्नुवन् ॥ ४० ॥

अतः परं परं निरपायमुपायमुपदिशामि दिशामितयैवानयैव भवद्भिर्व्यवह्रियताम् ॥ ४१ ॥

सन्ति तत्र लब्धोदया दया इव शरीरिण्यः आशु चिताः शुचिता इव मूर्तिमत्यः प्रमदामदात्मकता संपद इव धृताकृतयः ॥४२॥

मानव्योऽपि न मानव्यः प्रतीपदर्शिन्योऽपि न प्रतीपदर्शिन्यः क्षिप्रमोदा अपि अक्षिप्रमोदाः ॥४३॥

शातमदापि अशातमदाः सकला अपि निष्कलाः भूषिता अपि न भूषिताः

यित्वमधुना किमिति ध्वन्यते पूर्वमेव तत् किमित्यसम्मतं नाकृष्टं तत्राहुः यत्तावदित्यादि । तेन हि तत्प्रामाण्येनैवेत्यर्थः ॥ ३७ ॥

भूयश्च पुनरपि वाचमुवाच । भूयस्या चतुरतया चातुर्य्येण रतां संसक्तां उदारां मुदं हर्षं इयर्त्ति व्यञ्जकत्वेन प्राप्नोतीति तथाभूतं स्मितं यस्यां तां रतं प्रीतिर्नयो नीतिस्तयोरुदयेनमधुरं यथास्यात्तथा ॥ ३८ ॥

नवोढाया इव यो रोषः कारणाकारणविवेकशून्यस्तेन विग्ना उद्विग्नाः । स्वार्थस्य पराहत्या परकृताघातेन वो युष्माकम् । भो इति संबोधने वोभोति अतिशयेन भवति ॥३९॥

नरेषु पिशुनतया या दोषदृष्टिः सा तेषु न कार्य्या । तेन हेतुना हि निश्चितं ते विप्रा वो युष्माकं हिते विषये भवितुं नाशक्नुवन् ॥४०॥

अतः परमे तदनन्तरं परमन्य अमितया-अतुलया अनयैव दिशाव्यवह्रियताम् ॥ ४१ ॥

ननु भवन्तु ता दयामय्यः किंतु स्त्रीत्वादशुचित्वं तासामाशङ्केमहीति तत्राह आशु चिताः शीघ्र वृन्दीभूताः शुद्धता इव । मदात्मकता मदर्पितमनस्कता ॥४२॥

मानव्योऽपि मानुष्योऽपि न मानव्यः न मानस्य याचकापमाननलक्षणगर्वस्य वीः प्रजननं यासु ताः।प्रतीपदर्शिन्यःस्त्रियोपि,न प्रतीपदर्शिन्यःमयि न प्रतिकूलं पश्यन्तः।क्षिप्रं शीघ्रं मन्नामश्रवणमात्रेणैव जनिष्यमाणो मोदो यासां ताः।अक्षिप्रमोदाः अक्ष्णां द्रष्टृनेत्राणां प्रमोदो याभ्यस्ताः ४३

शातप्रदा यथेष्टभैक्ष्यवितरणेन सुखदायिन्यः अशातं क्षुद्बाधाल्पमम‌ङ्गलं प्रकर्षेण चन्तीति ताः न तत्र याचनापेक्षापीति भावः । सकलाः कलाः वैदग्धी तत्सहिता आकारादेव युष्माकमभिप्रायं ज्ञास्यन्तीति भावः।न तत्र दारिद्र्यमपि शङ्कनीयं यतो निष्कं पदकं अष्टोत्तरश-

प्रभार्या अपि विप्रभार्य्याः ॥४४॥

पत्नीशालामुद्दिश्यमानेन चेतसा तासामभ्यासन्नाः प्रसन्नाः प्रकामं मन्ना न्नासर्वमोदनमोदनमर्थयध्वम् ॥ ४५ ॥

ताः किल वोलऽवोत्पन्नामाशां कल्पव्रततिततिकल्पाः कल्पयिष्यन्ति परिपूर्णामेव ॥ ४६ ॥

तदपि दयितमिदं प्रीतिमदुदितं मदुदितं समाश्रुत्य श्रुत्यर्थमिव मत्वाच पुनर्गन्तुमर्हन्ति भवन्तः ॥ ४७ ॥

इति तद्वचनवलतो नवलतोद्यानतः प्रमोदतरङ्गरङ्गभाजः संभूय भूय एव यज्ञवाटकवाटकमध्ये प्रविश्य पत्नीशालां विशालां विनीताः संतःसमुपसर्पन्ति.स्म४८

उपसृत्यच सततसम्माननभोगा नभोगा अपघना अपघनासक्तचिरत्तणप्रभाः क्षणप्रभा इव ४९

अजलाशया नालीकिनीर्नालीकिनीरिव ॥ ५० ॥

अनारामाः अनारामाभाः संचारिणीः कार्त्तस्वरवल्लीरिव ॥ ५१ ॥

तत्सुवर्णं लान्ति गृह्णन्ति ददति चेति ताः साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले । दीनारेऽपि चनिष्कोऽस्त्रीत्यमरः । अत एव न भुवि उषिताः उपविष्टाः किंतु राश्य इव हेमपट्टादिष्वेवेति भावः । तथापि विप्राणां भार्य्याः अतएव प्रभया आर्य्याः श्रेष्ठाः ॥४४॥

मुत् प्रीतिस्तयैव दिश्यमानेन प्रेर्य्यमाणेन । अभ्यासं निकटम् सर्वमोदनं सर्वसुखदम् ।४५।

वो युष्माकम् । अलवोत्पन्नाम् । अनल्पोत्पन्नाम् ॥ ४६ ॥

दयितं युष्मत्प्रियं प्रीतिमत् तासामपि प्रीतदायि उदितं उद्गतं मदुदितं मद्वाक्यम्॥४७॥

संभूय मिलित्वा ॥ ४८ ॥

क्षणप्रभा विद्युत इव अपघने स्वाङ्गे असक्ता न संसक्ता । पक्षे आसक्ता समवेता एव चिरक्षणं व्याप्य प्रभाकान्तिर्यासां ताः अङ्गं प्रतीकोऽपघन इत्यमरः । अपघना निर्मेघाः पक्षे भकठोराः घनः सान्द्रे दृढे चापीति मेदिनी । नभोगाः श्रावणमासगामिनीः श्रावणस्तु स्यान्नभा इत्यमरः । पक्षे नञर्थकनकारेण कृष्णविरहाद्भोगहीना इत्यर्थः । ततेन विस्तृतेन संमानेन सम्यक् परिमाणेन सहिताश्च ता नभोगा आकाशगाश्चेति ताः पक्षे सततं सम्माननमेव भोगो धनं यासां ता. भोगः सुखे धने चाहेः शरीरफणयोरपीति मेदिनी ॥ ४९ ॥

नालीकिनीः कमलिनीरिव अजलाशयाः जलाशयविनाभूताः पक्षे अजलाशयाः नालीकिनीर्नाल्यां क्षुद्रमृणाले कं जलं तद्वतीः पक्षे न अलीकवतीः सत्यचरित्रा इत्यर्थः ॥ ५० ॥

कार्त्तस्वरवल्लीः कनकलताः संचारिणीर्जङ्गमा इत्युपमानविशेषणमेव स्वरूपेणाप्यभूतत्वव्यञ्जकम् । यद्यप्यपघना अजलाशया अनारामा इत्यादीनि अपि अभूतत्वव्यञ्जकानि तथापि तत्र तत्र स्वस्वयोग्याधिकरणेनैव विनाभूतत्वं विवक्षितं नतु स्वरूपेणेति श्लेषेणापमेयविशेषणान्यपि तानिस्युरिति अनारामा आरामविनाभूताः पक्षे न विद्यते आ सम्यक् रमणं कृष्णविरहाद्यासां ताः । अनारामाभाः विरामशून्या आभाः कान्तयो यासां ताः ॥ ५१ ॥

अनिशा निशाताश्चन्द्रमसश्चन्द्रिका इव ॥ ९२ ॥
अदररुन्धतीररुन्धतीप्रभृतीनामपि यशः मूर्त्तिमतीः कीलाः कीलालयोनेरिव९३
महसा महसारेण सस्नेहा अपि अस्नेहदीपिकावदुज्ज्वलन्तीर्दिव्यौषधीरिव२४
ललितान्नसभासभाजनजनकरूपश्रियस्तत्कालोचितव्यापारवतीः पारवतीरिव लौकिकचमत्कारस्य रस्यतमवत्सलतालताइव मूर्त्तिमतीर्मतीरिव भगवद्रतीः ॥ ९५ ॥
क्षमाः क्षमातलमाश्रिता इव गुणगणशोभा गणशो भातीरिव ॥ ९६ ॥
पवित्राः पवित्रावसथसंपत्तितिरस्कारिणीरमूरमूर्त्ता याज्ञिकपत्नीरवलोकयामासुः९७
अवलोक्य नमो वो द्विजवृषभदाराणामुदाराणामुदितमुदितकरुणेभ्योऽरुणेभ्योऽङ्घ्रिकमलेभ्यो निबोधत नो बोधतनोः श्रीकृष्णस्य सहचराणां निवेदितमित्युपक्रमसमकालमेव ॥ ९८ ॥
कृष्णनाम्ना नाम्नातेनापि प्रत्येकं कर्णाभ्यामितेन निखिलव्यापारतोपारतोऽद्यमाः केनाप्यनुपमोहनमन्त्रेणेव प्रकृष्टाकृष्टाद्धरिण्यो हरिण्यो वा युगपदेव ता देवता

अनिशा निशाविनाभूताः निशाताः नितरां तेजिताः निशितक्ष्णुतशातानि तेजित इत्यमरः । पक्षे अनिशमेव न नितरां शातं सुखं कृष्णविरहात् यासां ताः । एवं क्षणप्रभाद्युपमानचतुष्टयेन तासां क्रमेण कान्तिः मार्दवसौरस्ये दुर्लभत्वं च वर्णितं आह्लादकत्वं च वर्णितं तदधिकरणानां घनादीनां चतुर्णां श्रीकृष्णोपमानत्वं च व्यञ्जितम् ॥ ९२ ॥
एवं स्वरूपमुपवर्ण्य तासां साध्वीत्वमपि वर्णयति अदरेति अदर अनल्पं रुन्धतीः प्रभावं वर्णयति स्वयशसा आवृण्वतीः । कीला : शिखाः कीलालयोनेर्वन्हेः ॥ ९३ ॥
साद्गुण्यं वर्णयति महैरुत्सवैः सारेण स्थिरेण महसा तेजसा ॥ ९४ ॥
अप्यन्नादिसामिग्रीवितरणादिषु स्वातन्त्र्यमाह ललितान्नेति । ललितान्नसभास्थजनकर्तृकं यत्सभाजनं तस्य जनिका हेतुभूता रूपसंपत्तिर्यासां ताः लौकिकचमत्कारस्य पारवतीं सीमान्तर्वर्त्तिनीरित्यर्थः । बुभुक्षितजनमात्रोपेक्षणाशक्तिमाह रस्यतमवत्सलतेति मत्या बुद्ध्येव ईहिता भगवद्रतिर्याभिस्ताः ॥ ९५ ॥
कुपितपत्यादितर्जनसहनसामर्थ्यमाह क्षमा इति । अत एव गुणगणानां शोभा गणशः प्रतिगणं भातीरिव दीप्यमाना इव ॥ ९६ ॥
स्त्रीत्वादौत्पत्तिकाशौचस्य प्राप्तस्यापि राहित्यमाह पवित्रा इति स्वत एव महार्घ्यत्वमाह पविना वज्रेण त्रायत इति पवित्र इन्द्रस्तस्यावसथसंपत्तेरपि तिरस्कारिणीः याज्ञिकसंबन्धेन प्रसक्तकाठिन्यं वारयति अमूर्त्ता अकठिनाः ॥ ९७ ॥
उदितं मुदितं प्रफुल्लत्वं येषां तानि च करुणानि दयालूनि च तेभ्यो निबोधत अवगच्छत नोऽस्माकं निवेदितं बोधतनोर्ज्ञानघनमूर्त्तेः ॥ ९८ ॥
अनाम्नातेनापि अनभ्यस्तेनापि सकृदेवोच्चारितेनेत्यर्थः । तथापि कर्णस्यापि अभ्यन्तरे अभिमुखे वा अमितेन अपरिमितेन सता अपारतोद्यमा विरतोद्यमाः अनुपमम् । ऊहनं विस्मयमूलकवितर्कोयत्तस्तथाभूतेन मोहनमन्त्रेण इव प्रकृष्टं यथास्यात्तथा आकृष्टा हरिण्यो मृग्यः हरिण्यो वा हेमप्रतिमा वा । हरिणीस्यान्मृगी हेमप्रतिमा हरिता च या इत्यमरः । तेन जा-

इव प्रेमरसोपनिषदामवनिसदामवदातमनसः क्षितिसुररमण्यः ससंभ्रमं भ्रमदीक्षणं तेषामभिमुखानि मुखानि कृत्वा यथवतस्थिरे स्थिरेण मनसा ॥ ५९ ॥

तदा तेऽपि समाश्वासाश्वासाद्यमानाभ्यागमंगमकवदनश्रियो वाक्यशेषं समापयितुमारेभिरे ॥ ६० ॥

भो भो भूदेव्यः तत्र भवतीषु भवतीषु श्रीव्रजराजकुमारः कुमारः कुमारयन्नद्य प्रातरकृतभोजनतया जनतया सह क्षुधितोऽधितोत्तमयाच्ञामोदनार्थी मोदनार्थी चास्माकं सहचराणाम् ॥ ६१ ॥

स किल प्रमोदवर्षीवर्षीयसा देवेनवलदेवेन वलदेवेन वलमानो निकट एव विराजमानो वर्त्तते ॥ ६२ ॥

स तावदतिविश्रुतः श्रुतश्च भवतीभिरपि परंपरया परया वार्त्तऽवार्त्तया॥६३॥

यः किल वाल एव पूतनामापूतनामानमकार्षीत् तृणावर्त्तमपि तृणावर्त्तमपि शवकं चकं महाव्यालं व्यालङ्घितजीवनं निर्विषं विषं च कालिन्द्याः ॥६४ ॥

किं वहुना पल्लवेन लवेन यस्य गुणगणामृतजलधिशीकराणां चराचरन्तरे सुरासुरादिवन्द्या अपि न तुलामर्हन्ति ॥ ६५ ॥

---

ज्यभावोदये व्यञ्जितः प्रेमरसा एव उपनिषदस्तासां देवता अधिष्ठात्र्य इव । तासां कीदृशीनां अवनिषदां भूमावपि प्रचरन्तीनामित्यर्थः उपनिषदो हि सत्यलोकवर्त्तिन्य एव प्रसिद्धा इति अवदातमनसः शुद्धचित्ताः । ससंभ्रमं यथास्यात्तथा भ्रमन्तीपाकादिस्वस्वकृत्यतः परावृत्तमाने ईक्षणे यत्र तद्यथा स्यात्तथा क्षणं व्याप्य तेषां गोपबालकानाम् ॥ ५९ ॥

सम्यगाश्वासेन कर्त्र्या आशु शीघ्रं आसाद्यमानः प्राप्यमाणः स्वीक्रियमाणः आभ्यागमः आभिमुख्येनागमनसामर्थ्यं तद्गमिका तद्व्यञ्जिका वदनश्रीर्मुखशोभा येषां ते ॥ ६० ॥

कुमारः कौ पृथिव्यां मारःकन्दर्पतुल्यः कुमारयन् क्रीडयन् अधितअधारयत् ॥ ६१ ॥

वर्षीयसा ज्येष्ठेन देवेन देवेन्द्रः तत्तुल्येन वलेन दीव्यतीति तथा तेन वलदेवेन ॥६२॥

वार्त्तया कथं भूतया अवार्त्तया महत्येत्यर्थः । यद्वा निरामयया निर्विघ्नयेत्यर्थः वार्त्तं फल्गुन्य रोगेचेत्यमरः । ॥ ६३ ॥

पूतनां राक्षसीमपि आ सम्यक् पूतं पवित्रीकृतं नामापि यस्यास्तथाभूतामकार्षीत् स्तनमात्रदानप्रभावादिव मृताया अपि तस्या दग्धदेहस्याप्यगरुसौरभोद्गारादित्यप्रतर्क्यमाहात्म्यकम् । अलौकिकं शौर्य्यमप्याहुः तृणावर्त्तमसुरमपि तृणैराहत्यतेऽसाविति तथाभूतं शवमित्यर्थः । अकार्षीदित्यस्य सर्वत्रानुवृत्तिः । चकामपि शवकं कुत्सितशवम् । निर्विषं गरलशून्यं विषं जलं विषं तु गरले तोये इति विश्वः ॥ ६४ ॥

पल्लवेन विस्तारेण वहुना किम् । पल्लवोऽस्त्री किसलये विटपे विस्तरे वने इति मेदिनी । लवेन लेशेन ॥६५॥

इति तेषामुदितमुदितसुधासुधारायमाणमानयन्तीनां श्रवणसीमनि सीमन्तिनीनामासां मनोरथपथपरतरमभिलषणीयतमं तमञ्जसा स्वयमुपनतमिव महानिधिमहानिधिषणाधिरूढभावमहानि भावमहानि बहुलानि यदर्थं गमितानि तमासन्नमवगच्छन्तीनां सपदि द्रुतमेव चेतसा स्नातमिवाक्षियुगलेन कण्टकितमिव तनूलताभिः लुप्तेव करणवृत्तिः परिवर्तितानीव जननानि उद्वर्त्तितानीव सौभाग्यानि अन्यानीव शरीराणि उत्कण्ठामयः समयः यथाश्रुतश्रीकृष्णरूपमयो नयनव्यापारः ॥ १६ ॥

एवं यदि पुनस्तासामवस्थावस्थाने क्षणमुल्लास तदाग्रे व्रजकुमाराः सचमत्कारमितरेतरमालोकयन्तः समाशशङ्किरे । यथा । आकर्ण्य नः सरभसोत्कलिकाप्रमोदं याच्ञागिरं युगपदेव तदैव देव्यः । नैवालपन्ति न चलन्ति न लोकयन्ति हा हन्त हा प्रहग्रहीतदशा किमीयुः ॥ १७ ॥

किंच । पारुष्यादवहेलया च गणितं नास्माकमभ्यर्थनं
नोक्तं किंचन नैव दत्तमपि यद्भिर्मैनतत्कौतुकम्
श्रुत्वा सस्पृहमादरेण सुदृशो दातुं क्षमा नाभवन् ।
दुर्वारोत्कलिकाकुलीकृतहृदस्तन्नाम चित्रं महत् ॥ १८ ॥

इति तेषां उदितं वाक्यं श्रवणसीमनि आनयन्तीनां आसां सपदि तत्क्षण एव चेतसा द्रुतमित्यादियोजना । उदितसुधायाः प्रकटीभूतामृतस्य शोभनधारातुल्यं तं कृष्णरूपं महानिधिं अञ्जसा शीघ्रं स्वयमेव उपनतं प्राप्तमिव अवगच्छन्तीनाम् । कीदृशं तं न विद्यते हानिर्यस्य तथाभूतो धिषणाधिरूढो बुद्ध्यारूढो भावः सत्ता यस्य तम् । अहानि दिनानि बहूलानि यदर्थं गमितानि यापितानि । कथंभूतानि भावो भावना स्मरणं तेनैव मह उत्सवो येषु न तु साक्षात्कारेण तानि । चेतसा द्रुतं द्रवीभूतमिव ततश्च तद्द्रवेणैव स्नातमिवाक्षियुग्मेन तत्स्नानेनैव हेतुना कण्टकितं तनूलताभिस्तत्कण्टकाघातेनैव लुप्ता इन्द्रियवृत्तिः तल्लोपेनैव परिवार्त्तितानि जन्मानि जन्मपरिवर्त्तेनैव तत्फलभूतसौभाग्यानि उद्वर्त्तितानि सौभाग्योद्वर्त्तनलाभेनैव अन्यानीव शरीराणि तादृशशरीरप्राप्त्यैव योग्यतया प्रियाभिसारार्थमुत्कण्ठामयः समयः तदुत्कण्ठयैव योषितेन गाढभावनाभिनिवेशेन श्रीकृष्णरूपमयो नयनव्यापार इत्येवं रूपा अप्युत्प्रेक्षा व्यञ्जनीयाः ॥१६॥

सरभसं सोत्कलिकं सप्रमोदं च यथा स्यात्तथा आकर्ण्यद्वन्द्वात् परत्र पूर्वत्र वा श्रुतस्य प्रत्येकेनाभिसंबन्धात् । आकर्ण्येति क्त्वाप्रत्ययेनोक्तस्यानन्तर्यस्य वारणार्थं तदैवेति आकर्णनसमकालमेव इत्यर्थः । विनाप्यानन्तर्य्यं क्त्वाप्रत्ययस्य "झणत्कृत्य पतति" संहत्य हसतीत्यादिषु द्रष्टव्यात् पुनश्च युगपदेवेत्युक्तिराकर्णनस्यापि सर्वासामेव तुल्यकालत्वार्था । दातुं क्षमाः समर्था नाभवन् नैवालपन्तीत्यादिना व्यञ्जितजाड्यादेवेति भावः ॥ १७ ॥

तत्र हेतुर्दुर्वारेत्यादिना तेनोभयथास्माकमत्रप्रातिहानिरेवेति भावः ॥ १८ ॥

अथवा। यद्धेतुतां व्रजति यत्र मनोविकारे नासौ तदन्तरयितुं क्षमते विकारः।आलम्बनादिजनितो हि रसप्रकर्षो नालम्बनाद्यननुभूतिमुरीकरोति ॥ ६९ ॥

इति कृतसमूहे समूहे कृष्णानुगतानां गतानां चापि तादृशीं दशां तासां व्यापारान्तरान्तरायशून्ये स्वानुकूलकूलनाभावेन भावेन सरसे मनसि सान्द्रानन्दनन्दकसंस्कारसंस्कारवशादनुत्तरेणैव शादनुत्तरेणैवमुत्कण्ठाभरेण कृष्णामोदनमोदनमपि व्यञ्जना निजानुरागसंपदां समवधातुमेव भव्यापारो व्यापारो यदा समजनिष्ट ॥ ७० ॥

तदा विशालां पाककशालां पाककारिणीभिरभितः परिशोभितां प्रविश्य यथासमीहितमिष्टमिष्टतममपिष्टपिष्टकमपूपपूपशष्कुलिकुलकलाकलितलालित्यं सौरभ्यसौरस्योपायसपायसपायसविकारम् ॥ ७१ ॥

चतुः प्रकारमपि अनन्तप्रभेदं षड्रसमपि नवनवरसम् ॥ ७२ ॥

अथवेति पुनरप्यनुमानेनार्थान्तरन्यासव्यञ्जितेन प्राप्त्याशां साधयन्ति । यद्वस्तुयत्र मनोविकारे हेतुतां व्रजति स विकारस्तत् अन्तरयितुं अंतर्धापयितुं न क्षमते यथा आलम्बनादीत्यादि तेन श्रीकृष्णयात्राश्रवणजमिदमानन्दजाड्यं तत्प्रातिकूल्याय न प्रभवतीति प्राप्तिः संभवेदिति भावः ॥ ६९ ॥

कृष्णानुगतानां गोपबालकानां समूहे इति कृतसमूहे एवं कृतसम्यग्वितर्के सति तादृशीं जाड्योत्थस्तम्भमयीं दशां गतानामपि तासां ओदनं व्यञ्जनानि सम्यगवधातुं यदा व्यापारः समजनिष्ट तदा पाकशालां प्रविश्य अदनीयसामग्रीसमुदयं कलधौतधौतभाजनेषु निधाय जनाननादत्यबहिर्भवन्त्यस्ता नयनाञ्चलकृतचलनोपदेशं यथा स्यात्तथा कृष्णानुचराभिमुखमुखकमला यदि बभूवुस्तदा तेऽपि वर्त्मविशुनतया पुरतः पुनश्चलन्तो मुमुदिरे इत्यन्वयः । व्यापारान्तरमेव तादृशसुखस्यान्तरायस्तच्छून्ये मनसि भावेन प्रेम्णा सरसे । तेन कथंभूतेन स्वस्यानुकूलो विषयालम्बनरूपः कृष्ण एव तस्य कूलनाभाव आवरणाभावो यत्र तेन "कूल आवरणे" अत एव तत्र सान्द्रानन्दस्य नन्दकः समृद्धिकारकः यः संस्कारस्तस्य संस्कारवशात् तद्बोधरूपपरिष्कारवशात् अनुत्तरेणैव अवचनेनैव समवधातुम् । कुत एवमुत्कण्ठाभरेण ईदृशोत्कण्ठातिशयेन कीदृशेन शादनुत्तरेण विच्छेदद्दुःखोपशमकतमेन उत्कण्ठाभरस्यैव शीघ्रप्रियमिलनफलकत्वात् "शद्लृ शातने" नुदप्रेरणे घञन्ताक्विन्तौ। व्यञ्जनानि शाकसूपादीनि निजनिजानुरागसंपदां व्यञ्जनानि सूचकानि । भव्यापारः भव्यं मङ्गलं तेन अपारः व्यापारः७०

अपिष्टाः अखण्डिताः पिष्टका यत्र तम् । अपूपाश्च पूः पवित्रतां पान्तीति ताः शष्कुल्यश्च तेषां कुलस्य समूहस्य शिल्पविन्यासेन कलितं लालित्यं यत्र तम्। सौरभ्यसौरस्ययोरुपायो यत्र तथाभूतः सपायसः सपरमान्नः पायसविकारो दुग्धविकारो ध्यादिर्यत्र तम् । परमान्नं तु पायसम् इत्यमरः ॥ ७१ ॥

चतुःप्रकारं चर्व्यचोष्यलेह्यपेयरूपम् । नवनवा रसाः स्वादा यत्रतम् ॥ ७२ ॥

गोवर्द्धनमिव भगवदुपयोगिगन्धवहानन्दकन्दरामठम् अलङ्कारग्रन्थनिर्णयमिव अभिधालक्षणोत्तरव्यञ्जनानेकविधसौष्ठवम् ॥ ७३ ॥

स्वस्वमनोरथमिव सूपचितं दिव्यास्त्रमिव बहुशोभाजीराजितं स्वस्वानुरागपरिमलमिव सुरभितनानाशाकं गङ्गाप्रवाहमिव विलसत् काशीतलभावम्॥७४॥

कलधौतधौतभाजनेषु स्फटिकपुटिकाटिकान्तिकन्दलीकन्दलीलेषु सकलमदनीयमदनीयसामग्रीसमुदयं समुदयन्त्रितमानसतया निधाय सितसूक्ष्मसिचयाञ्चलेनाञ्चलेनारचिताच्छादनम् ॥ ७५ ॥

पश्यत्सु परितोऽध्वराध्वरागकृतसभाजनेषु सभाजनेषु स्वस्वकरकमलाहिततत्तद्भाजना जनाननादरस्य बहिर्भवन्त्यो विटपोदीर्णाभीष्टफलाः जङ्गमाः कल्पवल्ल्य इव धरणिसुरेन्द्रवामनयना नयनाञ्चलचलनचलनोपदेशं यदि कृष्णानुचराभिमुखमुखकमला बभूवुः ॥ ७६ ॥

तदा तेऽपि पुरतः पुरतश्चलन्तो वर्त्मपिशुनतयाशु नतयाचेतोऽट्टत्याच इत इत इति कलविकलविकस्वरमनोरमध्वानमध्वानमभिदर्शयन्तो मुमुदिरे ॥ ७७ ॥

---

भगवदुपयोगिना गन्धवहेन पवनेनानन्दो यत्र तथाभूताः कन्दरा एव मठा आलया यत्र तं पक्षे रामठगन्धं वहन्तीति तत् अत एव आनन्दकन्दं रामठं हिङ्गु यत्र तत् बाल्हीकं हिङ्गुरामठ इत्यमरः । अभिधेति स्पष्टम् पक्षे अभिधालक्षणाभ्यां चिन्हाभ्यां प्रधानानां व्यञ्जनानां शाकसूपादीनां अनेकविधं सौष्ठवं यत्र तत् ॥ ७३ ॥

सुष्ठु उपचितं सूपैश्चितं च । बहुशोभं च आजौ युद्धे ईरं प्रेर्यमाणं च अजितं च तत् पक्षे बहुशः बहुत्र बहुत्र भाजीभिः पक्वशाकादिसामग्रीभिर्दीप्तं "जानपदकुण्डेत्यादिना" ङीप् । सुरभिता नानाविधा आशा यत्र तत् । पक्षे स्पष्टम् विलसत् । काश्यास्तले भावः सत्ता यस्य तं पक्षे शीतलकं सुखं यतः स काशो अशीतलभावश्चेति तत् ॥७४॥

कलधौतानि स्वर्णमयानि धौतानि क्षालितानि च तेषु भाजनेषु । कीदृशेषु स्फटिकपुटिकासु तदुपरिनिहितासु अटितुं प्रतिबिम्बतया गन्तुं शीलं यासां तथाभूतानां कान्तिकन्दलीनां कन्दा स्वस्वकुवला लीला येषु तेषु । सकला अपि मदनीया हर्षणीया येन तं सकलानामपि मदनीयो हर्षोदय तमिति वा । समुत्थानन्दम् । अयन्त्रितमानसतया ॥७५॥

अध्वराध्वनि यज्ञपथे यो रागः प्रीतिस्तयैव कृतसभाजनमादरो यैस्तेषु सभाश्रितजनेषु पश्यत्सु । विटपेति करागा पल्लवं तत्रस्थानभाजनानां अभीष्टफलत्वम् नयनाञ्चलस्य चलनेनैव चलने गमने उपदेशो यत्र तद्यथा स्यात्तथा बभूवुः ॥७६॥

वर्त्मपिशुनतया वर्त्मसूचकत्वेन पुरतः पुरतश्चलन्तः आशु शीघ्रं नतया नम्रया कटोऽकुटलेन शिरः स्पष्ट इत्यर्थः । स ध्वानो विकस्वरः मञ्जुलो मनोरमः मधुरो ध्वानो यत्र तद्यथा स्यात्तथा इत इत इति अध्वानं मार्गं अपि चलन्तोऽध्वन्तः अन्नस्य अभिमुखीभूय अभिनन्दनं च दर्शयन्तः ॥ ७७ ॥

अथ करकमलगृहीतान्नस्थालीकास्थालीकारितसाहाय्यसौभाग्यासौभाग्यातिरेकारेका द्विजवनिताराजी राजीविनीततिरिवविलक्षणलक्षणविशालैकपत्रा धरणिविहारिणी हारिणी बभूव ॥ ७८ ॥

किंवा करतलगृहीतपुटपुटकिनीविशालतरैकपत्रपुटका करिणीघटेव ॥ ७९ ॥

राजमाना हृदयान्तरतरलायमानप्रणयसौभाग्यभारेणभारेण स्तनजघनभारेण पूर्णभाजनभारेण च दरनमदङ्गतया नमदङ्गतया च हृदयवृत्त्या लघु लघु चलन्ती पुरः पुरः परिलोक्यमानमिव हृदयाधिनाथं दयाधिनाथं च तमेव जानती न तीव्रतरं गमनखेदं च विदांचकार ॥ ८० ॥

किंच । स्तम्भश्चोत्कलिका च पङ्कजदृशां प्रस्थानलीलाक्रमे मान्थर्य्यं च यदि त्वरां च युगपत्संस्पर्द्धया चक्रतुः । निर्धूतप्रतिमेव हन्त लपति स्मान्ते तदा मेखला निक्वाणो न लघुर्बभूव न गुरुर्मञ्जीरयुग्मस्य च ॥ ८१ ॥

एवं गच्छन्त्यः कांताचित् पदानि चित्पदानि वृन्दावनतरुलतानिकुरम्बाणि गोवृन्दानि चाग्रे विलोक्यात्रैव निखिलगुणाभोगवता भगवता भवितव्यमिति मनसि विदधत्यो दधत्यो मतिमतिप्रमदमद लालितानुरागदलितां दलिताञ्ज-

आस्थाः श्रीकृष्णविषयाः अपेक्षा एव आल्यः सख्यस्ताभिः कारितं साहाय्यं यस्य तथाभूतं सौभाग्यं यस्याः सा आस्था स्थालम्बनास्थानयत्नापेक्षासु योषितीतिमेदिनी । भाग्यातिरेकेणैव अरेका निःशङ्का रेक शङ्कायाम् । विलक्षणलक्षणेति विविधवर्णान्नव्यञ्जनादियुक्तस्वर्णस्थाल्यास्तादृशाकारत्वात् । हारिणी रम्या राजीविनीततिरिव बभूवेति सौन्दर्य्यसौरभ्यमार्दवपावित्र्यभगवदुपयोगित्वादित्युक्तानि ॥ ७८ ॥

आसक्तिप्रागल्भ्ये प्रस्तुतां गमनशोभां चाह किंवेति करतलेन गृहीतं पुरटपुटकिन्याः कनककमलिन्याः विशालतरं एकं पत्रपुटं यया सा ॥ ७९ ॥

हृदयान्तरे मनोमध्ये वक्षोमध्येच तरलायमानस्य औत्कण्ठ्योष्मणा चपलायमानस्य हारमध्यरत्नायमानस्य च प्रणयभरस्य भारेण "तरलोहारमध्यगइत्यमरः"। दरनमदङ्गतया ईषन्नम्रगात्रतया नन्वादिमंभारद्वयं दुष्परिहारमेव पूर्णभाजनभारस्तु किंकरीकरे किमिति न निक्षिप्तस्तत्राह न मदं गतया न गर्वप्राप्तया हृदयवृत्त्या तथा करणं हि गर्वप्रतिपादनमेव भगवदुपसत्तौ तु दासीशतान्यपि विभो विदधुः स्म दास्यमिति रीत्या तदनौचित्यमेव दयया आधेर्मनःपीडाया नाथं उपतापकं नाशकमिति " यावत् नाथृ याच्ञोपतापैश्वर्य्याशीःषु" ॥ ८० ॥

स्तम्भो हर्षोत्थ उत्कलिका उत्कण्ठा च प्रेक्षावलोकनस्पृहोत्था तयोर्युगपदुद्भूतयोर्मान्थर्य्यत्वरे क्रमेणानुभावौ परस्परघातिनौ बभूवतुः तत्र मान्थर्य्येण त्वरायां बाध्यमानायां त्वरयाच मान्थर्य्ये बाध्यमाने सत्यपि कदाचित्स्पर्द्धावशादिव मान्थर्य्यांशप्राधान्ये मेखला अन्ते अन्त प्रदेशे एव निर्धूतप्रतिभेव लपति स्म कदाचित्त्वरांशप्राधान्ये मञ्जीरयुग्मस्यनिक्वाणः न लघुर्बभूव किंतु मान्थर्य्यस्याल्पेव सद्भाव इति गुरुरपि नैवेति ॥ ८१ ॥

चित्पदानि चिन्मयवस्तूनि अति प्रमदोऽतिहर्षः मदस्तद्रूपा मत्तता ताभ्यां लालितेनानुरागेण

नयनधाराधरकुवलयवलयतिरस्कारिमहोमहोज्वलमतिनेदीयो विलोकयामासुः ॥८२॥

तदिदमहो महोऽपि तासां नयनेषु कज्जलायितं कबरीषु कुवलयमालायितं श्रवणेषु तापिच्छगुच्छायितं पयोधरेषु नीलमणिहारायितं सर्वाङ्गेषु नीलनिचोलायितम् ॥ ८३ ॥

ततश्च । लावण्योर्मीमिव वरभुजां सख्युरंशे दधानो ।
धुन्वन्नब्जं युवतिमतिवत् पाणिना दक्षिणेन ॥
श्रीवत्साङ्कः कनकरसनो वर्हवान् वैजयन्ती ।
गुञ्जाधातुस्तवकरचनः श्यामधामाविरासीत् ॥ ८४ ॥

ततश्च ततश्चटुलतया चन्द्रिकासितहसितहठाकृष्टनवसुधासारोवसुधासारो लावण्यसार इव यथैवमासामासादितनयनातिथिभावो भावोन्नतमनसां तदा तासामपि ॥ ८५ ॥

लीलालास्योद्यत इव नटः पञ्चबाणप्रपञ्चः किंवा मूर्त्तः किमहह रसो मूर्तिमानाद्य एव । प्रेमानन्दः किमुत तनुमान् किं विलासः शरीरीत्येवं भूता मनसि कति नो हन्त तर्का जुघूर्णुः ॥८६॥

---

दर्शितां जातदर्शां मतिं दधत्यः । अतिनेदीयो अतिनिकटवर्त्ति ॥८२ ॥

तासां नयनादिषु तन्महः कज्जलायितं सदेवाविरासीदित्युत्तरेणान्वयः । तथा तथा भावस्तासां स्पर्शौत्सुक्यविशेषेण तत्र तत्र रोचकतया प्रेम्णा तथा तथा भानात् । तापिच्छः तमालः ॥८३ ॥

एवं किंचित् दूरतो निर्विशेषश्यामधाममात्रमपि परमरोचकत्वेनानुसंधाय निकटमभिसरन्तीनां तासां सविशेषस्वरूपसाक्षात्कारचमत्कारमाह लावण्येति सख्युः सुबलस्य अंशे वामभुजानिधानं संभोगविशेषोद्दीपनं तासां मोहनार्थं कमलधूननं तु स्वमाधुर्य्यस्य रसाम्बुधिविवर्त्तत्वेन प्रत्यायनं तत्र पिपतिषूणां पुनरुत्तरणाभावज्ञापनार्थं वैजयन्त्यादिव न्यवेदशोभानुभावनं तु स्वस्य निर्जनवृन्दावनवासासक्तत्वज्ञापनया निर्विरोधविलासविशेषलालसोत्थापकं तदेतच्च सर्वं तासां सङ्गमनञ्चीचिकीर्षोरपि तस्य तासां मानससंभोगविशेषवैशिष्ट्यजननार्थं तच्च शीघ्रमेव देहान्तरप्रापणया अत्रैव वृन्दावनप्रकाशविशेषे व्रजसुन्दरीणामिव स्वसाक्षात्संभोगप्रापकमेवेत्यवसेयम् ॥८४॥

चटुलतया नागरिमोचितचापल्येन । ततो विसृतः चन्द्रिकातोऽपि सितं यत् हसितं तेन हठादाकृष्टो नवः सुधाया आसारो धारासंपातो येन सः । वसुधाया सारः श्रेष्ठः ॥ ८५ ॥

पञ्चबाणप्रपञ्च इति हठादेव रससमर्पणशक्तमनुमानात् । आद्यो रसः इति तत्समर्पकत्वेऽपि तदभिन्नत्वेनैव प्रतीतेः । प्रेमानन्द इति तत्रापि तत्सुखतात्पर्य्येणैव तत्र स्वाभाविकतादृशस्वप्रहितसुखोदयदर्शनात् । विलास इति ततो जनिष्यमाणस्यापि तादृशविलासस्य तदनीव तचाद्यात्म्येनैव साक्षात्कारात् । जुघूर्णुरिति तथाभूततर्काणामपि प्रत्येकं समस्तसाधर्म्यग्रहणात्सामर्थ्यादपर्यातत्वमेवेति भावः ॥ ८६ ॥

एवं वितर्कयन्त्योऽसाध्वससाध्वसमसाहसहसदनुरागग्रहग्रहणनिग्रहीतमानसा मानसाराः ॥ ८७ ॥

क्रमेण । चित्ताद्बाह्यं गत इव पुनः बाह्यतो वा प्रविष्टश्चित्तं चित्रं युगपदुदयी किंतु चित्ते बहिश्च । इत्थं तर्काकुलितमनसो मीलदुन्मीलदक्षं चित्ते साक्षादपि च तमथालोकयन्त्योभिसस्रुः ॥ ८८ ॥

किंच । अन्नाद्युपायनविराजिकराब्जकोपाश्वेतोभिलाषफलदा इव कल्पवल्लीः। दिव्यौषधिव्रततिकाननवज्ज्वलन्तीरालोक्यताः सरसमेतदुवाच कृष्णः ॥ ८९ ॥

हन्त स्वागतमास्यतां मृगदृशो धन्याः स्थ यूयं महान् ।
सद्भावो मयि वः स्वयं यत इतः मात्रागृहीत्वौदनम् ॥
एतत् प्रत्युपकर्तृतास्ति न मम स्वेनैव भावेन वः ।
संतोषः परिपुष्टिमेतु नितरामानृण्यमप्यस्तु मे ॥ ९० ॥

ततश्च ताः शरदमृतमयूखविगलदमृतबिन्दुबिन्दुमधुरकलविकस्वरस्वरपरिमलपरिमलनकर्णरमणीयं रमणीयं तात्पर्य्यपर्य्यवसानविरहेण सामान्यतो मान्यतो

असाध्वसेन निःसङ्कोचेन साधु उत्तमं यदसमसाहसं अतिबृहत्तमसाहसं तेन हसन् प्रफुल्लोऽनुराग एव ग्रहस्तस्य ग्रहणेन निगृहीतं मानसं यासां ताः । यतो मानसाराः मानो ज्ञानं रसानुभव इति यावत्स एव सारो बलं यासां ताः। यतो मेति निषेधे न सारा न अपि तु साराः श्रेष्ठा एव इत्यर्थः ८७

किंच तासां तदानीं तदावेशोद्रेकेण इन्द्रियवृत्तयस्तन्मय्य एव बभूवुरित्याह बहिरनुसन्धाने चित्तादित्यादिः प्रथमः अन्तरनुसंधाने बाह्यत इत्यादिर्द्वितीय क्रमेण इत्यस्य उभयत्रैव सवन्धः विस्मये नैकदैवभयत्रानुसन्धाने चित्रमित्यादिस्तृतीयस्तर्कः। मीलंती चित्ते दर्शनार्थं उन्मीलंती बहिर्दर्शनार्थं अक्षिणी यत्र तद्यथा स्यात्तथा। तृतीयतर्कस्यैव सत्यत्वनिश्चय इत्याह चित्त इत्यादि८८

कल्पवल्लीरिव तासां कान्तिसाधर्म्यस्यापि प्राप्त्यर्थं विशिनष्टि दिव्यौषधीति ॥८९॥

हन्तेति आस्यतां इति धन्याः स्थ । सद्भावो मयीत्यादि यद्यपि तासामौत्सुक्यानुरूपमेव प्रथमतो वचनं तदपि एतत् प्रत्युपकर्तृतास्ति न ममेत्यस्य प्रकटार्थ एव प्रकटतात्पर्य्यात् प्रकटस्वीकारसूचकमेव वस्तुतस्तु तादृक्कामोद्दीपनस्वरूपचेष्टादर्शनप्रदानेन आस्यतामिति स्वपार्श्व एवोपवेशप्रदानेन च सत्यवाक्यस्य तस्यान्तः स्वीकार एव व्यञ्जितः। वो युष्माकं स्वेनैवभावेनेति न तु तदुचितेन मया करिष्यमाणेन भावेनेत्यर्थः । वस्तुतस्तु मया तादृशस्य भावस्य प्राप्तुमेवाशक्यत्वान्न पारयेहं निरवद्य संयुजामित्याद्युक्त्या गोपीष्विव युष्मास्वपि ममऋणित्वमेवेति भावः ॥९०॥

ततश्च ताः अस्य उदितं वचनं निशम्य नयनकमलस्य निर्म्मथनेन विद्रेण ते अंतर्हृदि निविश्य अनुरागसुमनोभरेण समर्चयो चक्रुः । उदितमेव स्वरूपतटस्थलक्षणाभ्यां क्रमेण विशिनष्टि शरदमृतमयूखात् शारदचन्द्रात् विगलतोऽमृतस्य बिन्दुबिन्दुतोऽपि मधुरं सुस्वादु च तत्कालः कोमलो विकस्वरः स्पष्टश्च यः स्वरः स एव परिमलस्तस्य परिमलनेन धारणेन कर्णरमणीयं चेति तत् । रमणीयं रमणीयोति तदभीष्टदाने पर्य्याप्नोतीति तत् । नन्वेतत्

दारप्रणय प्रणयनपरमिव प्रमुदितमुदितमस्य निशम्य ॥ ९१ ॥

कृतार्थमन्या इव नयनकमलनिर्व्यथनेन निर्व्यथनेन तमन्तर्हृदि निवेश्य भुजलताभ्यां जलताभ्याञ्छितेन मनसा नमनसान्द्रेण परिरभ्य सौरभ्यसौभगभृतानुरागसुमनोभरेण समर्चयाश्चक्रुः ॥ ९२ ॥

तदनु दनुजदमनो मनो मोहयन्निव निवरीवृत्यमानहृदयसंतापतापविचितसान्द्रानन्दा द्विजवरवधूरवधूतसकलकलनाः पुनरभापत ॥ ९३ ॥

तद्यात देवयजनं पतिदेवताभिर्युष्माभिरध्वरममी परिपारयन्तु ।

मन्मूर्त्तिमध्वरमयीमपि ये भजन्ति मामेव तेऽपि कृतिनः परितोषयन्ति ९४

इति तदमृतमयूखबिम्बतोऽविलम्बलम्बमानकालकूटकालकूटमिव मधुरतरमनोहरात्श्रीवदनादनास्वादनीयं कटुतरमालपितमालपीतवाससस्तस्य निशम्या शक्यासामाशा माशान्तिरप्यजनि ॥ ९५ ॥

यथा । दीर्घातिदीर्घतरसंश्रवणानुचिन्तासंतानपल्लवितकोरकितप्रतानाम् ।

आशालतां विफलतामुपसादयन्ती सा तस्य वाग्द्विजवधूर्विधुरीचकार ९६

अथ विधुरितवदनविधुरितवदनवरतमानन्दसंदोहं मन्यमानाऽप्रानानादराद्-

प्रत्युपकर्तृतास्ति न ममेत्युक्तेः कथं रमण्यभीष्टदाने पर्य्यासिस्तत्राह तात्पर्य्येति तस्य तात्पर्य्यस्य तद्यात देवयजनमित्युत्तरवाक्यानुसारेणाभिहितार्थे । एव यत् पर्य्यवसानं तस्य विरहेण तद्भिन्नेत्यर्थः । किंतु आस्यातामित्यनुसारेण मान्यतया आदरणीयत्वेन य उदारः प्रणयस्तस्य प्रणयनपरं प्रकटनपरं अत एव प्रकृष्टं मुदितं यतस्तत् ॥९१॥

निर्व्यथनेन छिद्रेण । निर्व्यथनेन तत् प्राप्त्या गतव्यथेन मनसा परिरभ्य। कीदृशेन जलता द्रवीभावस्तेन अभ्याञ्छितेन व्याप्तेन " आछि आयामे " । नमनं नम्रता तेन सान्द्रेण॥९२॥

निवरीवृत्यमानेन अत्यतं निवर्त्तमानेन हृदयसंतापस्य मानसज्वरस्य तापेन हेतुना विचितः उपचितः विविधवृन्दीभूतो वा सान्द्र आनन्दो यासां ता अत एव अवधूतं खण्डितं सकलकलनं सर्वव्यापारो यासां ताः ॥ ९३ ॥

नच मत्प्रातिकूल्यारोपमात्रेण पतयोऽत्र हेलनीया इत्याह मन्मूर्त्तिमिति ॥ ९४ ॥

काले यमस्तद्रूपकालकूटकूटमिव कृतान्तानेहसोः कालइत्यमरः । आलवत् पीतवाससः आलश्च हरितालक इत्यमरः । तस्य कृष्णस्य कटुतरं आलपितं वचनं निशम्य श्रुत्वा आसां यज्ञपत्नीनां आशा अशामि स्वयमेव उपरता नष्टेत्यर्थः । कर्मकर्त्तरि चिण् । ततश्च माशान्तिः शोभानाशोऽपि अजनि अभूत् ॥ ९५ ॥

दीर्घादपि अतिदीर्घतरैः सम्यक् श्रवणैर्या अनुचिन्ता निरन्तरभावना तस्याः सन्तानेन बाहुल्येन पूर्वमेव पल्लवितः संप्रत्यास्यतामित्याश्वासेन कोरकितश्च प्रतानो विस्तारो यस्यास्तथाभूतामपि ॥ ९६ ॥

विधुरितो वदन विधुर्यस्याः सा अनवरतं आनन्दसंदोहं इतवत् गततुल्यं मन्यमाना अ-

राहतहृदयेव हृदये वहन्ती गुरुखेदमधिकसवाष्पगद्गदगदनकलस्वर स्वरङ्गनाश्रेणि रिवविच्छाया ॥ ९७ ॥
सलिलकणभरमन्दाक्षं मन्दार्त्ता च निर्वास्य निर्वास्यमानदीपशिखेव मन्दप्रभामभावैकनिवद्धदृष्टिः शुष्यमाणकाकुदाक्षिण्यवती निजगाद भूमुरनितम्बवतीवितति:९८
अलमलमतिमात्रं कर्कशेनामुना ते वचनविलसितेन प्राणिमात्रप्रियस्य । नहि पुरुकरुणानामेष पंथाः शुभन्योयदहहपरमर्मच्छेदिवाग्वज्रमोक्षः ॥ ९९ ॥
अवधेहि वधेहितं मुञ्च मादृशां मा दृशां नः सुखमपाकुरु ॥ १०० ॥
घटतां वा कथमिदम् । न शिखरिशिखरेभ्यो निर्गताः शैवलिन्यः पुनरपि विनिवृत्ता हन्त तानाश्रयन्ते । अपि तु सुमुपसीदन्त्येव रत्नाकरान्तनं भवति निरपेक्षस्तासु रत्नाकरोऽपि ॥१०१॥
निष्किञ्चनमिव किंचन प्रियमस्माकं न भवन्तमन्तरेण कथमथमथनमुरस्य रस्यतामेतु नः पुनरगारगमनम् ॥१०२॥
यतः। न घनतरतमोऽन्तर्भ्रान्तिविभ्रान्तमार्गा जहति सुकृतपाकात् मामालोकमुच्चैर्न विधिविलसिते नायत्नमासादिताया विदधतिजनुषान्धादिव्यदृष्टेरुपेक्षाम्॥१०३॥
हन्त हन्तरघस्य तव वचनमिदं न मिदं जनयति नयतिलक तव संश्रवःश्रवस्तु श्रवणपुटके जागरूकमेवास्ते ॥१०४॥

मानः परिमाणरहितोऽनादरो यस्याः सा अदर अनलम् आहतं प्राप्ताघातं हृदयं यस्याः सा। स्वरङ्गनास्वर्गनारी विच्छाया छायारहिता कान्तिरहिता च ॥ ९७ ॥
सलिलानां कणभरैर्मन्दो अक्षिणी यत्र तद्यथा स्यात्तथा प्रकृष्टेन भावेन एकत्रैव निबद्धा दृष्टिर्यस्याः सा चिन्तानुभावोऽयं शुष्यमाणं काकुदं तालु यस्याः सा तालु तु काकुदमित्यमरः९८
सुभन्यः सुमङ्गलः ॥ ९९ ॥
मादृशां मद्विधानां वधे मारणे ईहितं इच्छां मुञ्च । ननु कोऽत्रवधोऽवगतस्तत्राहुः नोऽस्माकं दृशां नेत्राणां सुखं मा अपाकुरु त्वद्दर्शन विना मरिष्याम एवेति भावः ॥ १०० ॥
शैवलिन्यो नद्यस्तान् शिखरिणः ॥ १०१ ॥
हे मुरस्य मथन ॥ १०२ ॥
न घनेत्य प्रस्तुतप्रशंसया कृष्णविरहस्य तमस्त्वं तद्व्याकुलतायाश्च भ्रान्तित्वं सदुपायस्य मार्गत्वं कृष्णस्यत्वालोकत्वं आरोपितम् । यत्र च कथं विदीरिताख्पदृष्टिबलादालोकनैरपेक्षेऽपि यत्किंचित् गमनसामर्थ्यं संभवेदपीत्यन्यथैव पुनराहुः न विधाति विधिविलसितेन भाग्यवैभवेन एव कर्त्रा आसादितायाः प्रापिताया दिव्यदृष्टेरुपेक्षां जनुषान्धा जन्मान्धा न कुर्वन्तीति स्वेषां तु मूलता एव तद्विरहनिर्द्धूतधैर्य्याणां जन्मान्धत्वं ततश्च दिव्यदृष्टित्वं कृष्णस्य। यद्वा तत्रूपगन्धशब्दा अननुभवित्वं स्वेषामन्धत्वं तत्पार्श्वस्थितेर्दिव्यदृष्टित्वम् ॥ १०३ ॥
हे अघस्य हतः मिदं स्नेहं संश्रवसां यशसां श्रववणम् ॥ १०४ ॥

तदनुस्मर स्मर सहस्रसहस्रस्रवणकारिरूपसौन्दर्य्यनिशामयदनु वदामो दर दामोदर मदरन्धनमपाकृत्य ॥१०५॥

सकृदपि भजते यो यस्तवास्मीति वक्ति त्यजसि न तमितीयं पालयता स्वमतिज्ञा। प्रकटकटु कठोरैः कर्मभिः कण्टकाभैर्गृहगहनमपास्योपास्य दास्यो भवामः॥१०६

किञ्च संगृह्णन्तु न नः कदापि पतयो मुञ्चन्तु वा बान्धवाः
स्वीकुर्वन्तु न मातरो न पितरो न भ्रातरो न प्रजाः।
कामं वोपहसन्तु हन्त सुजना निन्दन्तु वा दुर्जना–
स्त्वत्पादाम्बुजसेवया वपुरिदं निर्वापयिष्यामहे ॥१०७॥

तदेवं देवं दिवेदयामो दया मोपेक्षणीयापेक्षणीया नो मनोरथपूर्तिः॥१०८॥

तथाहि। अङ्गीकुरुष्व करुणार्णव नः प्रपन्नाःसंमोदयस्व मदयस्वदयस्व देव। पादारविन्ददलदोलनविप्रकीर्णं निर्माल्यमाल्यमुरसा शिरसा वहामः ॥१०९॥

तदा तदाकर्णने कर्णनेयमाधुरीधुरीणवचनानां नानाङ्गरङ्गराङ्गिपुलकावलीनां लीनान्तरीणभावविशेषाणामशेषाणामपि मुखमालोक्य मधुरतरसितस्मितस्नपिताधरदलं रदलङ्घितशिखरोऽखरोऽस्रसहस्रसहजमधुराननो निजगाद श्रीदामोदरः ॥ ११० ॥

---

स्मरसहस्रस्य सहस्रस्तेजसः स्रवणं च्योतनं कर्त्तुं शीलमस्य तादृशं रूपसौन्दर्य्यं यस्य हे तथभूत। पूर्वस्य सहस्रशब्दस्यानाचिचेति सकारद्वित्वेन परस्य तु वा शरीति सत्वेन द्विसकारश्रवणम्। दर ईषदेव अनुपश्चात् यत् वदामः। किं कृत्वा मदरन्धनं स्वगर्वखण्डनम् अपाकृत्य दूरीकृत्य गर्वं धृत्वैवेत्यर्थः ॥ १०५ ॥

सकृदपीत्यैश्वर्यज्ञानमासां माधुर्य्यस्वादस्त्येव किंतु भगवत्कृपासिद्धानां तयैव समर्थाख्यरत्युदयान्माधुर्यज्ञानाच्छन्नमेव। यद्वा श्रीयत्पदाम्बुजरजश्चकमे इत्यादिवन्माधुर्यानुशीलनाविमर्दोत्थत्वाद्विरहादावैश्वर्यज्ञानस्य माधुर्यावरकत्वं वैष्णवतोषणीव्याख्यानदृष्ट्या अवसेयमिति। प्रकटकटु इति गृहगहनमित्यस्य विशेषणम् ॥ १०६ ॥

निर्वापयिष्यामहे समापयिष्यामः ॥ १०७ ॥

दया कृपा मा उपेक्षितुं योग्या ॥ १०८ ॥

संमोदयस्व प्रथममङ्गीकारेणैव संहृष्टाः कुरु, मदयस्व ततः स्वविलाससीधुवृष्ट्या मत्ताः कुरु एवं दयस्वेति, ननु सत्यं मच्चिकीर्षितमेवस्वमर्थयध्वे, स्वचिकीर्षितमपि, तत्राहुः पादारविन्देति १०९

कर्णयोर्नेयं नेतुं योग्यं माधुरीधुरीणं वचनं यासां तासां तदाकर्णने प्रार्थनाश्रवणे सति निजगाद। नानाङ्गेषु रङ्गरङ्गिनी रङ्गे कृष्णस्यापि रञ्जनशीला पुलकावली यासां तासाम्। अन्तरीणो भावः शृङ्गारमयः रदैर्दन्तैर्लङ्घितानि तिरस्कृतानि शिखराणि येन सः शिखरं पक्वदाडिमवीजाभमाणिक्ये शिखरेऽपि चेति विश्वः। अखरमतीक्ष्णमुस्रसहस्रं किरणसहस्रं यस्य स चन्द्र इव सहजमधुरमाननं यस्य स किरणोस्रमयूखांशु इत्यमरः ॥ ११० ॥

अयि समाकर्णयत कर्णयतमानमोदा मोदारेण हठेन वो भूयतां न वोभूयतां च खेदः। अत्रधातुमर्हन्ति शुभवत्यो भवत्यो मदालपितम् ॥ १११ ॥

श्रवणकीर्त्तनचिन्तनचातुरीकृतधियां यदि चारुतरायते ।
अपि पुरश्चरतो हि तदेक्षणान्मम वशीकृतये कृतिनी भवेत् ॥ ११२ ॥
तदयि यात निरन्तरमात्मना कुरुत मेऽनुगतिं गतिकोविदाः ।
मदनुधावनधूनितबन्धना भुवनबान्धवमेष्यथ मां ध्रुवम् ११३

किंच । न त्वादृशां नृजनुषां भवतीह देहे योग्यो ममायमतिमङ्गलमङ्गसङ्गः ।
भावाभिधेन वपुषा रमयध्वमन्तर्यद्वो मयापि सुदृढं मनसोपगूढम् ११४

किंच विद्वेक्ष्यन्ति भवादृशीर्न पतयो मय्येकतानात्मनो येनानेन मयात्मना पतिसुतभ्रात्रादयोतिप्रियाः। तस्मिन्नर्पितचित्तवृत्तिषु जनः को द्वेषमीहिष्यते हित्वैकान् मदुपेक्षितानिति गताशङ्कं गृहे गम्यताम् ॥ ११५ ॥

इत्येवमशेषविशेषविविधवाचोयुक्तिवाचो युक्तिमस्य श्रवणपुटके निधाय निधाय पीयूषमिव वचनं तदलङ्घनं तदलङ्घनं युक्तिमेवेति मत्वा परमसमुत्काः समुत्का मनोदत्वा कामनोदत्वादिदोषमविगणय्य तद्रूपलावण्यमादाय दायलब्धमिव समुचितविनिमयात् ॥ ११६ ॥

---

कर्णयोर्यतमानः स्थातुं प्रयत्नवान् मोदो यासां तथाभूताः सत्य एवाकर्णयत कर्णयोरानन्दं निवेश्य एव शृणुत नतु प्रस्तुतं खेदं धृत्वा इत्यर्थः । उदारेण महता हठेन वो युष्माकं मा भूयतां तथा खेदश्च न वोभूयतां न पुनः पुनर्भवतु ॥ १११ ॥

हि निश्चितं पुरश्चरतोऽपि मम अग्रेवर्त्तिन ईक्षणात् दर्शनात्सकाशादपि ॥ ११२ ॥

एष्यथ प्राप्स्यथ ॥ ११३ ॥

त्वादृशां ब्राह्मणजातिमात्राणां तत्र दोषभागिन्यो वयं भवाम ओमितिचेत् तत्राह ॥

अतिमङ्गलं यथा स्यात्तथा न भवति गोपजातेर्ममब्रह्मण्यतयातिख्यातस्य विप्रपत्नीसंभोगः प्रायो लोकैर्विगीयेतैव ततश्च तेषाममङ्गलं दुर्वारमेव स्यादित्यभिप्रायः । यद्वपुः वो युष्माकम् ॥ ११४ ॥

ननु बन्धुपत्यादिकृतमर्य्यादामुल्लङ्घ्यात्रागतवतीस्त्यक्ता एवास्मान्न पुनस्ते गृहीष्यन्तीति तत्राह विद्वेक्ष्यन्तीति येन मया आत्मना किंचिदंशमात्रेणैवात्मरूपेण सता एव पत्यादयः प्रियाः तस्मिन् परिपूर्णात्मनि मयि ॥ ११५ ॥

तादृग्वाचोयुक्त्यैव वाग्मस्य तस्यास्य युक्तिं भावाभिधेनेत्यादिना प्राप्युपायं "वाक्पदिमत्स्यमद्ग्नो युक्तिदण्डहरेष्वितिजुक् । तद्वचनं पीयूषमिवनिधाय पीत्वा धेट् पाने तस्य धर्मस्य अलङ्घनं कृष्णकर्तृकं तन्मङ्गलमयं अलं अतिशयेन युक्तमेव इति घनं सान्द्रं यथा स्यात्तथा मत्वा परमसमुत्का अपि समुत्का मुत्साहिताः सत्यो मानो दत्वा तस्मै स्वचेतः प्रदायदातव्यमिव तस्य रूपलावण्यं आदाय गृहीत्वा किंच तस्य कामनोदत्वादिदोषं कन्दर्पप्रेरकत्वादिकं नैगुण्यं आदिशब्दात्परदारापहारित्वादिदोषं च अविगणय्य ॥ ११६ ॥

तेनैव हृदये पूरिते वहिरुदितान् हृदय्यानिव कण्टकान् कण्टकान् सुखप्रकोपघनेष्वपघने प्वविरतमादधत्योनिरर्गलगलदस्रवः स्रवदखेदस्वेदसलिलपृषताः पृषताक्ष्यः कृच्छ्रेणैव पुरं प्रति निववृतिरे ॥११७॥

अथ तत्र पुरापुरामन्तरेषु निरनुरोधरोधनपरान् धर्मधनपरान् धर्मविप्लवायेमिति भ्रमविभ्रमविहतविचारानवनिगीर्वाणान् वाणानिवविपदिग्धानविगणय्य वहिर्भूतासु तासु या काचन विप्रवधूरवधूतभर्तृनिरोधा भवितुं न शशाक ।११८।

सा किल यथाश्रुति श्रुतिपथेपगतव्रजराजयुवराजयुवरूपलावण्यस्फुरणरणरणकमिवसाक्षादायित दायितं विलोकयंतीव तेनैव वहिः स्फुरतेव कृतोपदेशा देशाद्देशान्तरमिव यियासुः कृतशुभमुहूर्त्ता ॥११९॥

मुहूर्त्तादेव व्रजलोकान्तरकान्तरतिरङ्गेसंजिगमिषुः प्रवलरतिमत्तया तत्स्फुरणरणसंमुखीनया नयासादितमुचितमपि तमविधेयं तत्स्वरूपभावं निरस्य रस्यतमं तदङ्गसङ्गसंगमकमानन्दघनमपघनमपरिवर्त्तिनमापितापि तासामग्रतोऽग्रतोषेण तदङ्गसङ्गरङ्गिणी समजनीति न तच्चित्रम् ॥ १२० ॥

नहि तादृगनुरागजननीनां जनीनां गुरुपराधीनं पराधीनं जीवनम् ॥ १२१ ॥

तेनैव तद्रूपलावण्येनैव सुखस्य प्रकोपेन प्राबल्येन घनेषु निविडेषु अपघनेषु अङ्गेषु कण्टकान् रोमाञ्चान् आदधत्यः । हृदय्यान् हृदयभवान् कण्टकान् औत्कण्ठ्यरूपसूच्यग्रानिव सूच्यग्रे क्षुद्रशत्रौच रोमहर्षेच कण्टक इत्यमरः । स्रवन्त अखेदेनैव स्वेदसलिलस्य पृषता विन्दवो यासु ताः पृषताक्ष्यो मृगाक्ष्यः ॥११७॥

सिंहावलोकन्यायेन पूर्वकथान्तरारम्भे अथशब्दः । अवनिगीर्वाणान् देवान् ॥११८॥

यथाश्रुतिगोपीजनकवाक्यश्रवणानुसारेण कर्णपथोपगतस्य व्रजराजयुवराजस्य नन्दकुमारस्य प्रवलरूपलावण्यस्फुरणेन रणरणकं प्रेमात्मककामचिन्ता तेन निर्वृतं वृत्तिरहितीकृत अन्तःकरणं यस्याः अत एव करणान्तरशून्या वहिर्व्यापाररहिता । साक्षात् प्रत्यक्षमेव अयितं प्राप्तं तेनैव दयितेनैव कृत उपदेशः सर्वपरित्यागेनैव वृन्दावने मया सह सुखं रमस्वेत्याकारको यस्यै सा ॥ ११९ ॥

व्रजलोकस्य अन्तरे मध्य एव कान्तेन सह रतिरङ्गे संजिगमिषुः संगार्थिनी प्रवला या रतिमत्ता प्रेम तयैव कर्त्र्या नयासादित नीत्या प्रापितं तत्प्राप्त्याशादानेन कारितस्वीकारमित्यर्थः । तादृशमुचितं योग्यमपि अविधेयमनाच्छाद्यं तिरोधापयितुमयोग्यमपि तं प्रसिद्धं तत्स्वरूपभाव तत्स्वरूपत्वं विप्रपत्नीत्वमित्यर्थः निरस्य दूरीकृत्य । रस्यतमं अपरिवर्त्तिनं पुनः परिवर्त्तनशून्य अपघनमङ्गं प्रापिता। तासां निष्क्रान्तेवतीनामप्यग्रतः । प्रवलरतिमत्तया कथंभूतया मतया ममत्वेन तस्य कृष्णस्य स्फुरणमेवोत्कण्ठ्यदैन्यनिर्वेदादितीक्ष्णास्त्रसंमर्दमयत्वाद्रणो युद्धं तत्र संमुखीनया तत्तदाघातप्राप्तावपि स्थिरयेत्यर्थः । अग्रतोषेण श्रेष्ठानन्देन ॥१२०॥

तादृशोऽनुरागस्य जनिरुत्पत्तिर्यासु तासां जनीनां स्त्रीणां जनीसीमन्तिनी वध्वोरितिमेदिनी । परः श्रीकृष्णस्तदधीनं जीवनं नहि गुरूणां पराधीन भवति। अतो गुर्वनुरोधेन तस्या जीवने कथं स्यातुमर्हतीति भावः ॥ १२१ ॥

निखिलसौभगवति भगवति स्वभावजा भावजागरूकता हि भाविनीनां भाविनी नान्तरायैर्विहन्यते ॥ १२२ ॥

येन खलु नखलुलितललितलताखण्डमिव तत्कालकालतापत्ति वपुरेव पुरेऽवर्त्तत ॥ १२३ ॥

जीवनसहितः स हितः स्वभावो भावो भगवदङ्गसङ्गसरसकलेवरे कलेवरेऽनुप्रविष्टो व्रजकन्याव्रजकन्यायेन तत्साहचर्य्यचर्य्ययैवागामिनीषु यामिनीषु यास्यति भगवदानन्दहेतुतामिव किमशक्यं भगवद्रतेर्भगवतश्च ॥ १२४ ॥

ततश्च निविडयोगधारणाकारणाकालशरीरपरित्यजां परमयोगिनामपि नाम पिहितं विदधानं सकृदनुशीलितकृष्णगुणगणनाजनितरागतरागततदवलुलोकिपाभङ्गभङ्गमात्रसाधनेन सा धनेन तदनुधावनधावनधूनितविविधबन्धना धवं धनादिकमपि तृणीकृत्य निमेषमात्रेण यत्तनुत्यागं विदधे ॥ १२५ ॥

तदवलोक्य सचमत्कारमाकारमालिन्यभृता निभृतानिर्वचनीयनिर्वेदवेदनपटुना द्विजसमुदयेन मुहुरनुतेपे ॥ १२६ ॥

यथा । धिग्दाक्ष्यं धिगुदारतां धिगधिकां विद्यां धिगात्मज्ञतां धिक् शीलं च धिगध्वरादिरचनां धिक् पौरुषम् धिग्धियम् । धिग् ध्यानासनधारणादिकमहो धिग् मन्त्रतन्त्रज्ञतां श्रीकृष्णप्रणयेनहीनमनसां धिग्जन्म धिग्जीवितम् ॥ १२७ ॥

---

ननु गुरुनिरोधोऽस्याः साक्षात् भगवद्दर्शनेसाक्षादन्तरायरूपोऽभूदेवेति तत्राह निखिलेति स्वभावजा स्वाभाविकी भावस्य जागरूकता भाविनी जनिष्यमाणा भाविनीनां वनितानाम् १२२

येन अन्तरायविघाताभावेन हेतुना नखेन लुलितं मर्दितं ललितं लताखण्डमिव इति यथा लतायाः खण्डमात्रस्य भङ्गे लतानाशो न सिद्ध्यति समयान्तरे च तादृशखण्डस्योद्गमोऽपि भवति तथा तत्काल एव कालतायाः कालधर्मस्य पञ्चत्वस्य आपत्तिः प्राप्तिर्यस्यतत् । स्यात् पञ्चता कालधर्म इत्यमरः ॥ १२३ ॥

स भावो हितः स्वां भां अवतीति सः वरे श्रेष्ठे भगवत्स्वीकारोचिते कलेवरेऽनुप्रविष्टः । कीदृशे भगवदङ्गसङ्गेन सरसाः कलायत्र तस्मिन् । व्रजकन्यानां रासारम्भे अन्तर्गृहनिरुद्धानां व्रजस्य समूहस्य कं तत्प्राप्तिसुखं तत्न्यायेन तादृशरीत्या ॥ १२४ ॥

सकृदेवानुशीलितानां कृष्णगुणानां गुणना अभ्यासस्तया जनितो रागतरो महानुरागस्तत्र समुद्रायमाणे तदवलुलोकिपैव भङ्गस्तरङ्गस्तस्य भङ्गमात्रं व्याघातमात्रमेव साधनं तेन धनेन धनरूपेण सा विप्रवधूः तनुत्यागं विदधे । कथंभूतं तथा शरीरपरित्यजां परमयोगिनामपि नाम ख्यातिं पिहितमाच्छन्नं विदधानं कुर्वाणम् । तदनुधावनं कृष्णानुसन्धानं तत्र धावनमतिशैघ्र्यं तेनैव खण्डितविविधबन्धना ॥ १२५ ॥

द्विजानां समुदयेन समूहेन । तस्या मृतिदर्शनात् मुदाआनन्दानामयो नाशस्तत्सहितेन" इ गता वित्यस्मात्,, अनुतेपे अन्वतप्यत् ॥ १२६ ॥

उदारतां दानशीलत्वम् ॥ १२७ ॥

न शौचं नो वेदाध्ययनजपहोमाद्यधिकृतिर्न संस्कारो नात्मश्रवणमननादिव्यवहृतिः । प्रसङ्गेन प्राप्ते हरिगुणगणे कर्णविवरं तथाप्यासामीदृग्व्यवसितिरहो प्रेममहिमा ॥ १२८ ॥

यतः अमन्दा मन्दाक्षहानिरवधीरिताः सनाभयो भयोपेक्षया पराजिता गुरुगुरुता चपलताऽपलता गाढोत्कण्ठ्येन निराकृता रङ्गवतीरङ्गवतीचेतोवृत्तिस्तृणमिव पत्यपत्यसुहृदनुरोधः कृष्णानुग्रहग्रहग्रस्तमन्तःकरणं च बासामालोकि मालोकितं कुत्रापि तथाविधं विविधं विचित्रम् ॥ १२९ ॥

पुनरियं सविस्मया सा गोष्ठी विप्राणांविप्राणां तामवलोक्य ॥ १३० ॥

अहो अस्या पुनः किमाख्येयं । यतः । षट्चक्रक्रमभेदखेदपटवो योगेन योगीश्वराः । कृच्छ्रेणैव वशीकृतानिलजवा मुञ्चन्ति जीवाशयम् । एषा तु प्रियदर्शनाभिलषितप्रस्थानबाधावशाद्योगीन्द्रैरपि दुर्गमं पदमगात् प्रेम्णोऽद्भुतः प्रक्रमः॥१३१

अस्माकं वा दौरात्म्यं किमाचक्ष्महे । यतः ।

दृष्टाऽपि ते भगवतोऽनुचरा न दृष्टाः श्रुत्वापि याचितममुष्य न च श्रुतं तत् ।

तदिदमत्र मन्यामहे ।

आसां प्रसादविषये अपि धीमतां नस्तेनैव किं व्यरचि नो मनसो विमोहः १३२

इति विलपत्सु निरालपत्सु निराविलेन निर्वेदेन वेदेन भूषितेषु भूषितेषु भूसुरवरेषु कियता रागयेन समयेन वरप्रसादपूर्णाः पत्न्यश्च समाजग्मुः॥१३३

ततश्च ते भगवदवलोकनानन्दनन्ददन्तःकरणतया कृतयाऽकृतकया श्रियाऽपूर्वमहसोऽपरिमितगुणान् गुणान् दधतीरिवान्यादृशो दृशोरुभयेनाभयेनापीतपीत-

प्रेममहिमेति प्रेम्णः शौचाद्यनपेक्षित्वेन स्वतन्त्रतया माहात्म्यं शौचादीनां तु तं विना धिक्कारदायित्वमेवेति भावः ॥ १२८ ॥

प्रेम्णोऽनुभावानाहुरमन्देति । मन्दाक्षहानिः कुलवधूत्वाद्दुस्त्यजाया अपि लज्जायास्त्यागः । सनाभयो ज्ञातयः।पराजिता तिरस्कृता गुरुगुरुता गुरुगौरवम्। चपलतायाश्च अपलता अनल्पप्रमाणता । रङ्गवतीनां युवतीनां यद्रङ्गचाञ्चल्यकौतुकं तद्वती चेतोवृत्तिर्निराकृता ॥ १२९ ॥

विप्राणां विगतप्राणां तां विरुद्धाम् ॥ १३० ॥

जीवाशयं शरीरम्। प्रियेति भागवतः कृष्णस्य परमात्मत्वनिर्द्धारः परमात्मतायां च प्रियत्वौचित्यात् तदङ्गसङ्गेऽपि सिद्धान्ततो न दोषः इति तेषां परामर्शः सूचितः ॥ १३१ ॥

अमुष्य भगवतः तेनैव भगवतैव ॥१३२॥

विलपत्सुक्रन्दत्सुक्षणान्तरे च निराविलेन निर्मलेन निर्वेदेन निरालपत्सु आलापरहितेषु सत्सु वेदेन वेदशास्त्रज्ञानेन भूषितेषु अलंकृतेषु भुवि पृथिव्यां उषितेषु समया निकट एव इनवरस्य प्रभुवरस्य भगवतः प्रसादेन पूर्णाः ॥१३३॥

ततश्च तेभूसुरप्रवरास्ता निरीक्ष्य धनावाप्तितृप्ता इव अभिजग्मुः। ताः कथंभूताः भगवदालोकनानन्देन नन्दन्ति समृद्धिमन्ति अन्तःकरणानि यासां तत्तया कृतया निष्पादितया अ-

वसनरूपलावण्यामृतशीकरनिकरनितान्तोद्गमनोद्दा मनोहारिणा हर्षाश्रुलवलवणिमानमुद्गिरन्तीः ॥ १३४ ॥

पूर्वाभ्यासाऽभ्यासादितनिजनिजसदनवेशा नवेशानुभवविकस्वरहृदया दय इव मूर्त्तिमतीर्मतीरिवाविरतिरतिमतीरतिमतीयत्ताकसुकृता विनिवृत्ता निवृत्ताखिलबन्धना धनावाप्तितृप्ता इव महाप्रमोदं वहन्तो हन्तोदारमतयो दारमतयोऽपि तासु सुकृतिवरा वरारोहास्ताः निरीक्ष्य सादरदरप्रणयमुत्थाय पूर्वतोऽपि सर्वतोऽपि समुल्लासितं संमानमानयन्तोऽभिजग्मुः ॥ १३५ ॥

नैतच्चित्रम् एवमेव श्रीकृष्णानुरक्तजनसमालोकनप्रभावः प्रभावहुलतां व्यनक्ति ॥ १३६ ॥

ताश्च श्रीकृष्णालोकनकनत्कनकनिधिलाभायमानमानसोल्लासभाजोऽपि श्रीकृष्णानवलोकशोकशोशुष्यमाणतया समुज्झितजीवनाया विलोकेन लोके नह्यस्याः समाना समाना सौभगवती काचिदपीह यतोऽस्माकमपि पुरतः पुरतो नवगोपुरतोऽनवगोचरीकृतेन तेन सह तदङ्गसङ्गसमुचितमङ्गलाङ्गलावण्यसारसारस्येन विहरतीयं तद्वयमधन्या धन्या खल्वियमिति भाषमाणा मुहूर्त्तमवस्थान्तरावस्थानमासेदुः ॥ १३७ ॥

---

कुलकया अकृत्रिमया श्रिया शोभया अपूर्वमहसः अद्भुतकान्तीः । हर्षाश्रुलवानां लवणिमानं लावण्यं उद्गिरन्तीः । तत्रोत्प्रेक्षार्थं दृशोरुभयेन निःसंकोचेन आ सम्यक् पीतानां पीतवसनस्य कृष्णस्य रूपलावण्यामृतानामेव शीकरनिकरस्य नितान्तमुद्गमनभिःयेव रूप उहस्तकोंयासु ताः । दृशोर्द्वयेनेत्यस्य विशेषणं मनोहारिणेति ॥ १३४ ॥

सदनवेशो गृहे प्रवेशः । मूर्त्तिमतीरित्यस्य काकाक्षिगोलकन्यायेनोभयत्र सम्बन्धः । वृरतिशून्या या रतिरनुरागस्तद्वत्यो या मतयो बुद्धयस्ता एव मूर्त्तिधारिणीरिवेत्यर्थः । अतिक्रान्ता मतीयत्ता ज्ञानमर्य्यादा यैस्तथाभूतानि सुकृतानि यासां ताः । विनिवृत्ताः पुनरप्यागता इत्यर्थः । हन्तेति विस्मये उदारमतयस्तासां दर्शनमात्रादेव भक्तिं प्राप्य प्राप्तनिर्मलमतय इत्यर्थः । अत एव तासु दारमतयोऽपि भार्य्याबुद्धिमन्तोऽपि । सादरदरप्रणयं श्रद्धासस‌ङ्कोचभक्तिसहितं यथास्यात्तथा उत्थाय अभ्युत्थाय सर्वतो 'गुरुविप्राग्निवेदादिभ्योऽपि समुल्लासितं समुल्लासितम् ॥ १३५ ॥

प्रभावहुलता प्रेमशोभाबाहुल्यम् ॥ १३६ ॥

श्रीकृष्णालोकनमेव कनत् कनकं दीप्यमानसुवर्णं तदेव निधिस्तस्य लाभेन आयमानं आगच्छन्तं मानसोल्लासं भजन्त इति तास्तथाभूता अपि । समुज्झितजीवनायाः प्रतिनिरोधवशात्संत्यक्तप्राणाया विलोकेन तां दृष्ट्वेत्यर्थः । इहलोके यस्याः समाना तुल्या समाना माननीया काचिन्नास्ति । यतो नवगोपुरतः नवीनपुरद्वारात् पुरतः अग्रत एव तेन श्रीकृष्णेन सह इयं विहरति । किंतु अस्माकमपि निरोधमुल्लङ्घ्य साक्षात्तं दृष्टवतीनामग्रत एव वयं तु बहुकालानन्तरमेव तं प्राप्स्याम इति भावः । तेन कीदृशेन अनवगोचरीकृतेन नेदानीमेव मिलितेन किंतु प्रतिजन्मैवेति भावः ॥ १३७ ॥

अथ श्रीकृष्णोऽपि स्वभावस्वभावज्ञो द्विजसुतनुतनुत्यागसमज्ञासमज्ञानकोमलहृदयो दयोत्तरतरलतालतापाशबद्ध इव सर्वमस्तुतमस्तुतभोजनेप्यलभमानो रुचिमितितदनुकूलकूलराहितरातितरङ्गिणीरङ्गिणीमिच्छामुरीकृत्य कृत्यकोविदो विदोनिराविलविलसद्विलासिनीजनसभासभाजितामेव तां कारयित्वा विलसद्रागे द्रागेव निजाङ्गसङ्गेसमुपयोगिनीं संयोगिनीं संभाव्य ततः परमेव परमे बलदेवेन सहसहचरगणस्य तदोदनभोजनमोदने मोदनेता भवन् स्वयमपि बुभुजे ॥ १३८ ॥

सहजसुरसं तदनिरसं तदतिशयानुरागरसवत्तया कृष्णस्य परमास्वाद्यमासीत् ॥ १३९ ॥

एवं सरसहासपरिहासपरितोषकलया सकलया सह सहचरसभया सभया सवैदग्धि सग्धि समापनानन्तरमनन्तरमणोऽह्नाय परह्नाय परासन्नं दिवसमालोक्य नैचिकीनिचयसमभिहारविहारविशेषेण मुरलीरवव्याजया जयाय लब्धवसुधया सुधया खगमृगमृगयावागुरयेव तरुलतिकातिकान्तदिगङ्गनाङ्गनानाविकारमिर्वापयन् निर्वापयन् निर्वाधमेव व्रजवनितानितान्तदिवसकृतसंतापं । व्रजपुराभिमुखो भवति स्म ॥१४०॥

---

तथाहि। गोधूलीधूम्रकम्रालकलसदलिकस्तिर्यगुष्णीपबन्धप्रेङ्खोलत्कैङ्किरातस्त-

स्वस्मिन् यो भावस्तस्य स्वभावं निसर्गं जानातीति सः द्विजसुतनोर्विप्रपत्न्यास्तनुत्यागरूपा या समज्ञा कीर्तिस्तस्याः समं साधु यथा स्यात्तथा यद्ज्ञानं काचित्तत्र निरुद्धापि भविष्यत्यवश्यमित्यभ्यूहवशेन वा सार्वज्ञ्यशक्त्या वा सहसा स्फुरणं तेन कोमलहृदयः । सर्वैः प्रकर्षेण स्तुतं प्रस्तुतं यत् भोजनं तत्रापि इति हेतोस्तस्या अनुकूला रुच्यनुसारिणी कूलरहिता अपरिमेया या रतितरङ्गिणी प्रेमनदी तस्यां रङ्गिणीं रङ्गवतीं स्वेच्छां उरीकृत्य । ततश्च विलसन् रागो यत्र तादृशे निजाङ्गसङ्गे निमित्ते सम्यगुपयोगवतीं तां संयोगिनीं संभाव्य प्राप्तसंयोगां निर्धार्य । ततः परमेव सुस्थचित्तः सन् इति भावः । परमे उत्तमे ओदनभोजनस्य मोदने अनुमोदनेजाते सति । मोदनेता भवन् हर्षग्राही सन् ॥ १३८ ॥

सहजसुरसं स्वभावतः सुस्वादु तत् ओदनं अतिरसगतिरासां यथास्यात्तथा आस्वाद्यमभूत्। तासां यज्ञपत्नीनामतिशयानुरागेण रसवत्तया रसवैशिष्ट्येन यद्वा तास्वतिरागेण रसिकतया कृष्णस्यैव ॥ १३९ ॥

सहचरसभया सह । कीदृश्या सभया भा कान्तिस्तत्सहितया सग्धिः सहभोजनम् । अह्नाय शीघ्रम् । परागतं च तदहश्चेति पराह्णस्तस्मै पराह्णाय । समभिहार एकीकरणम् । मुरलीरवोव्याजरूपं यस्यास्तया सुधया जयाय उत्कर्षप्राप्त्यर्थं लब्धवसुधया पृथिव्या मप्यवतीर्णयेत्यर्थः । खगानां मृगाणां मृगया सम्बन्धिन्या वागुरया जालेनेव तरुभिर्लतिकाभिश्चातिकान्ता दिश एवाङ्गनास्तासामङ्गेषु नानाविकारं मकरन्दमुकुलादिव्याजेनाश्रुपुलकादिकमित्यर्थः ॥ १४०

तिर्यगुष्णीषबन्धे प्रेङ्खोलता चलता कैङ्किरातस्तबकेन अशोकगुच्छेन नवा नवीना कला शिल्पविशेषो यस्य तादृशं बार्हिबर्हं मयूरपुच्छम् दिनकरस्य किरणैः क्लान्तस्य कर्णोत्पलस्य अ-

वकनवकलं वर्हिवर्हं दधानः । आवलात्कुण्डलश्रीर्दिनकरकिरणक्रान्तकर्णोत्पलान्तर्निर्यत्किञ्जल्कलेशच्छुरितलघुतरस्विन्नगण्डान्तलक्ष्मीः ॥१४१॥

किंच । मन्दमन्थानलीलामदमधुररणन्मञ्जुमञ्जीरनादश्रेणीसम्वाद्यमानश्रुतिमृदुमुरलीस्थाननिष्णातकर्णः अग्रे कृत्वाग्रजातं सहचरनिकरं पृष्ठतः पार्श्वयोश्च प्रेमानन्दस्तनूमानिव नयनवतां स व्रजं प्रविवेश ॥१४२॥

किंच । श्रीकृष्णागमनोत्सवस्य कथनं सायान्ह एवाग्रतः संधत्ते तदनन्तरं व हुतरीकुर्वन्ति गोधूलयः। सत्यं सत्यमितीव यद्दृढतरी कुर्वन्ति धेनुस्वनाः तत्रैवावसरे तनोमृगदृशां मुष्णाति वंशीस्वनः ॥ १४३ ॥

एवमनुभूयमानोत्कण्ठारसकलमहो सकलमहो विम्लाता कुमुद्वतीव मुद्वतीवर्त्म विहाय हायनसहस्रमिव क्षणमेकमभिमन्यमाना मानान्तरानपेक्षितमहारागा मयूखमालिमालिन्यसमागममागमयन्तंसमयमपेक्ष्य प्रियगोकुलचन्द्रसमालोकनाशया नाशयामास ह्रीमुद्रा मुद्रामणीयकभागाभीरभीरुराजी ॥ १४४ ॥

राजीववन्धौ समभिपद्य वारुणीभावमरुणीभावमपि लब्ध्वा निपतति सति अकृतगगनावतारासु तारासु तारान्तराणीव हर्म्याङ्गनगगने स्म ताः समुज्जिहते ह तेन विगतेतिकर्तव्यताकाः पताकाः परमसौभाग्यसंपद इव ॥ १४५ ॥

---

न्तर्निर्यन् अभ्यन्तरतो निर्गच्छन् यः किञ्जल्कस्तस्य लेशेन छुरितं च तत् लघुतरं यथा स्यात्तथा स्विन्नं च यद्गण्डान्तं तेनापि लक्ष्मीः शोभा यस्य सः ॥१४१॥

तादृशमञ्जीरनादश्रेण्या सह संवाद्यमानाभिः संवादं कार्य्यमाणाभिः श्रुतिभिः षड्जादिसंबन्धिनीभिर्मृदुः कोमलो यो मुरलीस्थानः तत्र निष्णातौ दोषापकृष्टगुणतारतम्यज्ञाननिपुणौ कर्णावेव यस्य सः । एतच्च परमकलावतीषु स्वप्रेयसीषु चमत्कारातिशयाधानार्थम् ॥ १४२ ॥

तत्रैवावसरेषु मुष्णातीति स्वस्वलोचनेन्द्रियमेव संतर्पयितुं व्यग्राणां तासां मनोरत्नं प्रति त्वरसावधानतामालक्ष्येति भावः ॥ १४३ ॥

मयूखमालिनि सूर्य्ये मालिन्यसमागमम् । आगमयन्तं प्रापयन्तं समयं अपेक्ष्य आभीरभीरुराजी कुमुद्वतीव प्रियं गोकुलं किरणसमूहो यस्य तथाभूतस्य चन्द्रस्य पक्षे प्रियश्चासौ गोकुलचन्द्रः कृष्णश्च तस्य सम्यगालोकनाशया ह्रियो लज्जा एव मुद्रा मुद्रणानि ता नाशयामास । यतो मुदां सम्प्रलानन्दानां रामणीयकं भजत इति सा । पूर्वं कथंभूता, अहो आश्चर्यम् अनुभूयमाना उत्कण्ठारसस्य कला अंशा यत्र तथाभूतं सकलमहः सर्वं दिनं व्याप्य विम्लाना मुद्वतीनाम् आनन्दवतीनां वर्त्म मार्गं विहाय त्यक्त्वा दुःखवतीनां वर्त्म आश्रित्येति भावः । मानान्तरम् अन्यज्ञानम् ॥१४४॥

ततश्च राजीवानां परममित्राणामपि वन्धौ सूर्य्ये वारुण्या मदिरायां भावं प्राप्तिं पानाभिप्रायं वा पक्षे वारुण्यांपश्चिमायां दिशि भावं सत्ताम् आभिपद्य प्राप्य । न कृतो गगने अवतारः प्राकट्यं सूर्य्यास्तमनानिर्धारेणेव याभिस्तथाभूतासु सतीषु तारासु । ता आभीरभीरवः । विगता इति कर्त्तव्यता यासां तथाभूताः सत्य समुज्जिहते स्म सम्यगुदितवत्यः । ह स्फुटं तेन तादृशसमुदयेन हेतुना परमसौभाग्यसंपदः पताका इव ॥१४५॥

चपलतरचिल्लीलताचिल्लीलतातरङ्गनिकुरैरलमम्बरमम्बरमणिदुहितुवीचिनिचयैरुचितं चितं विदधत्य इव ॥१४६॥

तदन्तरान्तराच चञ्चलैरपाङ्गैर्नयननिमीलनोन्मीलनोन्मीलितधवलिमनीलिमनीराजितैःकुमुदकुवलयवलयवलनामिव विरचयन्त्यो वदनमण्डलैश्च जृम्भारम्भारञ्जिदशनरुचिरुचिरैः किञ्जल्कराजिराजिराजीवत्रनपटिमानं सृजन्त्य इव॥१४७॥

दूरादेवश्रीकृष्णाननिस्तन्द्रचन्द्रचटुलिमानमानयन्त्य इव सविधं विचित्रचित्तचमत्कारकारणं रणं कुसुमशरासनस्येव यत् मनोगतं तदेव हि बहिरिव प्रकाशयन्त्यऽमूरवतस्थिरे ॥ १४८ ॥

स्थिरेणानुरागेण दत्ताश्वासाश्वासाद्यमानक्षणदाक्षणदाक्षिण्यवशादतिसमुपचीयमानमानसाभिलाषविशेषा काचन निजाभिमुखमुखकमलमिव तं मन्वाना मद्वालयमयमवश्यमेष्यतीति सप्रमोदमालिजनवदनमीक्षते स्म ॥ १४९ ॥

काचन धृतिमुक्तामुक्तालतां करपुटपुटकयुगलेनाधृत्य कातरतरतरलनयनं सखीजनमामन्त्र्य निगदति स्म ॥ १५० ॥

हन्त कुन्ददन्तिदन्तिवरमन्दगामी यावदयमपरस्या रस्याया भवनं नोपसरति तावदिहानीयतां नीयतां ममेयमेकावली वलीयांश्च मणामोयं यदि मे जीवितमवितुमपि कर्त्तुमभिलषति भवती तदा मा परं विलम्बतां लम्बतां त्वरितमिति ॥१५१ ॥

ततश्च अमूस्तत्रैवावतस्थिरे ।.किं कुर्वत्यः चपलतरे चिल्ल्यौ भ्रुवाविव लते तयोश्चिल्लीलता चिन्मयलीलत्वं तस्यास्तरङ्गाणां निकरैः समूहैरलमत्यर्थं अम्बरमाकाशम् अम्बरमणिदुहितुर्यमुनायाः वीचिनिचयैः उचितं यथास्यात्तथा चितं आच्छन्नं विदधत्य इव" चित छन्ने त्रिषु" इति मेदिनी ॥१४६॥

तदन्तरान्तराच तथाभूताम्बरस्य मध्ये मध्ये तु नयनयोर्निमीलनोन्मीलनाभ्यां च प्रतिद्वयं पृथक्पृथगुन्मीलिताभ्यां उद्गताभ्यां धवलिमनीलिमभ्यां निःशेषेण राजितैरपाङ्गैः क्रमेण कुमुदकुवलयानां श्वेतनीलोत्पलानां वलयवलनां मण्डलघटनां किञ्जल्कानां राजिभिः श्रेणीभिः राजिनो राजमानस्य राजीववनस्य पाटमा न नैरुज्यम् ।पटुर्दक्षेच नीरोगे चतुरेप्यभिधेयवत् इति मेदिनी । एवं श्रीकृष्णमुखचन्द्रोदयादुत्पलानां प्रफुल्लत्वंयुक्तमेव कमलानामपि प्रफुल्लत्वेन नीरोगत्वं त्वाश्चर्य्यमिति भावः ॥१४७॥

अन्यदप्याश्चर्य्यमाह श्रीकृष्णस्याननमेव निस्तन्द्रश्चन्द्रस्तस्य चटुलिमानं सौन्दर्य्यं सविधं स्वनिकटम् आनयन्त्य इव तादृशचिल्लीतरङ्गैश्चलापाङ्गैः सजृम्भवदनमण्डलैश्च तैस्तैः पुनः पुनः प्रेषितैरिवेति भावः । किमर्थं मनोगतं कुसुमशरासनस्य इव यद्रणं युद्धं स्थित तदेव हि निश्चितं वहिरपि प्रकाशयन्त्यः प्रकाशयितुम् ॥ १४८ ॥

अत एव तासु मध्ये काचन आशु शीघ्रं आसाद्यमानायाः क्षणदायाः रजन्याः क्षणे उत्सवे यदाक्षिण्यमानुकूल्यं तद्वशात् ॥ १४९ ॥

धृतिमुक्ता धैर्य्यरहिता । आधृत्येति सख्यै मुक्तालता मुक्ताचलेन दातुमिति भावः॥१५०॥
मे जीवितं जीवनमपि । अवितं रक्षितं कर्त्तुं यदीच्छति । लम्बतां हर्म्यपृष्ठतोऽवतरतु ॥१५१॥

काचन हे सखि किं करिष्यन्ति गुरवो रवोपताडनेन किमपि व्रीडापीडापीयं सह्यते चल तावत् लतावत् वेष्टयामो मनोरथकल्पतरुतरुणमिमं मिमङ्क्षवो वेयमानन्दाम्बुनिधौ निर्धौतसंतापाः सखि व्रज व्रजराजगृहमेव यामो यामोऽयं शुभ एव जातः ॥ १९२ ॥

इत्येवमादिकया दिशादिशावल्येन भावानामसंबद्धालापरतासूपरतासूद्दाम निखिलकरणवृत्तिभ्यःकृष्णैकतानतया समुत्कण्ठया कण्ठमापितजीवितासु तासु१९३

सदनुरागरसोत्कटाः कटाक्षलक्ष्मीर्निक्षिपन्नक्षिपन्नमोदो मनसा रमयन्निव सारमयन्निव निवर्हीभूतभूतलाविदितमणयामृतस्य मृतस्य संजीवनो वनोद्देशात् उपेयिवान् ॥ १९४ ॥

गाढोत्कण्ठाभरणतां प्राप्तमधिकमधिकमनीयतमं मनोरथं सफलयन्निव मत्येकमुखसंमुखसंवीक्षणक्षणलक्षणक्षणनिर्वृतो वृतोऽनुचरगणेन कृष्णोऽपि निजभवनमाससाद ॥ १९५ ॥

---

चल गच्छ । मिमङ्क्षवः मग्ना भवितुमिच्छन्त्यः यामो गच्छामः केनचित् छलेनेत्यर्थवशात् यामः प्रहरः ॥ १९२ ॥

एवमादिकया दिशा । भावानां विविधसंचारिणां आदिरुपत्तिश्च शावल्यं संमर्दश्च यथा मदालयमयमवश्यमेष्यतीत्यत्र स्वाभिमुख्यहेतुपरामर्शान्निश्चयान्तवितर्कोदयः तथा च किं करिष्यन्ति गुरव इतीष्टलाभाद्गर्वेण गुरुहेलनं ततश्च किमपि व्रीडापीडा सह्यत इत्युक्त्यैव सूचितेन हन्त कुलवधूरहं सायमुद्गतेव कथं बहिर्निर्गच्छामि इति वाक्येन व्रीडया तस्य संमर्दनं पुनश्चल तावल्लतावद्वेष्टयाम इत्यौत्सुक्येन तस्या अपि संमर्द इत्येवं गर्वादिभावः शावल्यं तेन असंबद्धः विशिष्टवैदग्ध्यचातुर्यादिशून्य आलापस्तत्र रतासु सतीषु । अत एव करणवृत्तिभ्य इन्द्रियव्यापारेभ्य उपरतासु । यतः कृष्णैकतानतया या समुत्कण्ठा तया एकतानोऽनन्यवृत्तिरित्यमरः ॥ १९३ ॥

अनुरागरसेन उत्कटाः कटाक्षसंपत्तीस्ता सुनिक्षिपन्नेव अक्ष्णोः पन्नः प्राप्तः परिवर्त्तेनैव मोदो येन सः मनसा ताः प्रेयसी रमयन्निव ततश्च ताभिर्दक्षिणात्वेन कल्पितमिव निवर्हीभूतस्य भूतले अविदितस्य काप्यदृष्टश्रुतस्य प्रणयामृतस्य सारं अयन्निव प्राप्नुवन्निव अतएव मृतस्य संजीवनः ॥१९४॥

प्रत्येकं मुखानां सम्मुख एव यत्सम्यग्वीक्षणं तेन यत्क्षणलक्षणमुत्सवचिह्नं प्रफुल्लत्वपुलकितादि तेनैव क्षणं व्याप्य निर्वृतो मनोरथं सफलयन्निव । कीदृशेन गाढाभरेण कण्ठस्यैवाभरणतां प्राप्तम् । अद्य सस्मितानि सकटाक्षाणि प्रेयसीमुखानि किमालोकिष्ये इत्यादिमनोरथवाक्यस्य मुहुरावृत्त्या कंठस्थीकृतत्वात् ॥१९५॥

सा दयितावलिरपि चेतसा चेतसाफल्यभृता भृतातिशयानन्दं तस्य सङ्गेनैव गता केवलं विपुलपुलकायेन कायेन जगृहे गृहेऽवस्थानम् ॥ १९६ ॥

अथ निजनिजगृहं गतेषु वयस्यसंचयेषु वयस्यसंचयेषु निर्जलसजलजलधरसोदरौ सहोदरौ श्रीरामदामोदरौ मोदरौ जनकजननीजननीरन्ध्रनयनानन्दसुधासारेण सारेण च लावण्यमधुरिम्णोः ॥ १९७ ॥

अथ पूर्वपूर्वदिवसवदम्बाभ्यां समोदकदम्बाभ्यां समोदकनिर्धौते रेणुनिकरे करेणुकलभाविव नीरजस्कौ मार्जितसमार्जितसमीचीनशोभाभरौ परग्राहितद्दितवसनानुलेपनाभरणभूषितौ भूषितौ चन्द्राविव यथा समयं रसमयंरम्यमाहारमभ्यवहृत्य निज निजगृहेऽधिपरार्ध्यशयनं शयनं कुरुतः स्म ॥ १९८ ॥

इत्यानन्दवृन्दावने कैशोरलीलालताविस्तारे यज्ञपत्नीजनानुग्रहो नाम त्रयोदशःस्तवकः ॥ १३ ॥

---

चेतसा मनसा। कीदृशेन चेतस्य ज्ञानस्य यत्साफल्यं श्रीकृष्णमाधुर्य्यैकनिष्ठत्वं तद्बिभर्त्तीति तथा तेन " चिती संज्ञाने " घञन्तः" तस्य कृष्णस्य स्वसङ्गेनैव भृतः पुष्टश्चासावतिशयानन्दश्चेति तं गता प्राप्ता केवलं कायेनव । कीदृशेन विपुल । कानां आयो वृद्धिर्यत्र तेन कर्त्रा । जगृहे गृहीतम् ॥ १९६ ॥

वयस्यसंचयेषु सखिसमूहेषु वयसि न सम्यक् चयोऽतिसमृद्धिर्येषां तथाभूतेषु कुमारप्रायेष्वित्यर्थः । सहोदरौ तुल्यौ सहोदरौ भ्रातरौ । जनकजननीजनेषु नीरन्ध्रेण निविडेन नयनेषु आनन्दसुधाया आसारेण । लावण्यं च मधुरिमा च तयोः सारेण सारभागेन च मोदरौ मोददायिनौ ॥ १९७ ॥

मोदस्य कदम्बेन वृन्देन सहिताभ्याम् । समेन कालोचितेन यद्वा सुवासितत्वादिना प्रमाणेन वा समेन तुल्येन उदकेन निर्धौते क्षालिते रेणुनिकरेसति । आदौ मार्जितौ च ततः सम्यग्मार्जित उपार्जितः समीचीनायाः शोभाया भरो याभ्यां तौ च तथा तौ। परिग्राहितैर्हितैर्गात्रानुरूपैर्वसनादिभिर्भूषितौ मण्डितौ भुवि पृथिव्यामुषितौ कृतवासौ । अधिपरार्ध्यशयनं परार्ध्यमूल्ययोः शय्ययोः ॥१९८॥

इत्यानन्दवृन्दावनटीकायां सुखवर्तिन्यां त्रयोदशस्तवकसंगमनम् ॥१३॥

## चतुर्दशः स्तवकः

अथ विभातायां विभावर्य्यां विभावर्य्यां सहचरमण्डलीमादायानुगवीनो नवीनो नट इव ललिताकल्पः कल्पद्रुम इवानुगतसंकल्पकल्पकः पूर्वपूर्वदिनवद्वनविनोदाय नोदाय खगमृगतरुवीरुधां विरहदुःखस्य च यदि स्म व्रजति व्रजतिलकनन्दनः ॥१॥

तदा तदासत्तमसहचरः स तावदेव भूदेवभूरतिपीनावटुर्वटुः कुसुमासवो नाम यदृच्छयाच्छया मनोवृत्त्या सकलसौभाग्यलक्ष्मीसंपुटभेदनं पुटभेदनं तद्गोकुलाख्यं भ्रमन्नेक एव दैवतो वतोत्तमस्थविराभिराभिराभीरीभिरीक्षितः सादरमाहूतश्च कुतुकादुपससाद ॥२॥

आसन्नः सन्नतिसन्नतिपरं ताभिरथ निजगदे ॥ ३ ॥

जगदेकललितमेधमेधमानप्रतिभ प्रतिभयरहितं भवन्तं जानीमः कृष्णस्य प्रियनर्मसहचरम् ॥ ४ ॥

तदेवं पृच्छामो भवता किमधीतं धीतंसरूपम् ॥ ५ ॥

आह स हसन्नेव भो भो मया महाज्योतिषागमावेवाधीतौ धीतौवरकृता किमन्येन शास्त्रेण ॥ ६ ॥

ता निजगदुर्जगदुत्तम को नयोऽनयोः प्रतिपाद्यभूतः प्रभूतः प्रथयस्व तमस्मभ्यम् ॥ ७ ॥

---

चतुर्दशेवटुर्भेजेसार्वज्ञंजरतीव्रजे । व्रजेन्द्रसूनुः कान्ताभिस्तेने तेन मधूत्सवम् ॥
ग्रीष्मवर्षाशरत्पूर्वहेमन्ता वर्णिताः क्रमात् । तत्पश्चाच्च शिशिरो नाप्रसिद्धेरिहस्तुतः ॥
वृन्दावने सदा सत्वात् प्राधान्यात् केलिवर्द्धनात् । मधुस्तुतकर्पयामासे तन्महानन्दवर्णनैः ॥
ललिताकल्पः समीचीनवेषः । खगादीनां विरहदुःखस्य नोदाय दूरीकरणाय ॥१॥
भूदेवभूर्विप्रतनयः अतिपीनावटुः पुष्टग्रीवः सकलानां सर्वेषामेव सौभाग्यलक्ष्म्याः संपुटं भिनत्ति स्वसौभाग्यश्रिया चूर्णयतीति तत् यद्वा सकलमेव सौभाग्यलक्ष्म्याः संपुटं भिनत्ति उद्घाट्य प्रदर्शयतीति तत् पुटभेदनं पत्तनं । वत हर्षे । उत्तमस्थविराभिः श्रीकृष्णप्रेयसीनां श्वश्रूभिः २ निजगदे उक्तः ॥३॥
जगति मध्ये एका मुख्या ललिता रम्या मेधा धारणावती बुद्धिर्यस्य तथाभूतम् । अत एव एधमाना वर्द्धमाना प्रतिभा यस्य हे तथाभूत । ततश्च प्रतिभयरहितं निःसाध्वसम् ॥४॥
धियो बुद्धेस्तत्सरूपं भूषणभूतं "तसि अलङ्कारे" ॥५॥
महाज्योतिषा अतितेजस्विना ज्योतिषं च आगमश्च तौ "ज्योतिषं ज्यौतिषं चापि इतिद्विरूपकोषात्" । धियो बुद्धेस्तौवरकृता वैरस्यकारिणा इव "तूवरस्तु कषायोऽस्त्रीत्यमरः" ।तुवरस्य भावस्तौवरम् ॥६॥
अनयोः शास्त्रयोः । को नयः का नीतिः ॥७॥

स उवाच वाचमतिसरसां हंहो व्रजपुरपुरन्ध्रीप्रधानाः प्रधाना हि ज्योतिः-प्रभावाः प्रभावाहिनः ॥ ८ ॥

तथाहि। इह भूमध्ये भूमध्येयं भद्राभद्रभूतंभूतं शुभाशुभवत्। भवत् कुशलाकुशलभाविभावि सर्वं ज्योतिःपाठेन ज्ञायते ॥ ९ ॥

आगमगमकं तु देवताराधनतः कर्त्तुमकर्त्तुमन्यथा कर्त्तुं च क्षमकरत्वमिति। १०।

ता ऊचिरेऽचिरेण भो निर्मञ्छनं ते यामो यामोऽयं समीचीन एव तदत्र किंचित् पृच्छामोऽच्छामोदकानि मोदकानि ते दातव्यानि ॥ ११ ॥

तदस्माकमनुयोगो यो गोकुले प्रष्टव्यो न भवति स शुभवति भवति प्रकाश्यते१२

तस्योत्तरं दीयतां दीयतां च नो मनः संदेहो देहो विद्या वा द्यावापृथिव्योः केन हि न हिताय परेषां क्रियते ॥ १३ ॥

सहासं स जगाद गा दस्थ चेद्भद्रतरास्तदाऽस्तदारुणभावोऽरुणभावोधः खल्वहं सकलमेव वक्तुमीशेऽमी शेरते हि मयि सर्वज्ञतादयः सर्व एव प्रभावा विप्रभावादविरुद्धाः ॥ १४ ॥

रेणुस्ता रेणुस्तावदिदं गवादि वसु वसुधायां किमदेयं ते यदि नः समीहितं वक्तुमर्हसि ॥ १५ ॥

---

तत्रापि ज्योतिषो ज्योतिःशास्त्रस्य प्रभावाः प्रधाना मुख्याः। यद्यपि प्रधानशब्दस्य "क्लीबे प्रधानमित्यमरदृष्ट्या" आविष्टलिङ्गत्वं तथापि तट्टीकायां पालितदृष्ट्या पुंस्त्वस्यापि प्रतिपादनात् "ज्वरः प्रधानो रोगाणां" प्रधाना हरितोमुद्रा इतिवैद्यकदर्शनात्" त्वं सर्वेषां मम गुणनिधे बान्धवानां प्रधान" इत्युद्धवसंदेशदर्शनाच्च वाच्यलिङ्गत्वमपि साधितम्। प्रभाकान्तिस्तद्वाहिनस्तद्युक्ता इत्यर्थः ॥८॥

इह भूमध्ये जगतीत्यर्थः। भूम्ना बाहुल्येन ध्येयं भावनार्हं भद्रा भद्ररूपं वस्तु। भूतं अतीतं। एवं भवत् वर्त्तमानम्। कुशला कुशले भवितुं शीलमस्य तत्। भावि भविष्यत् ॥ ९॥

आगमगमकं आगमलक्षणम् ॥ १० ॥

यामः प्रहरस्तत्तस्मात्। अच्छानि निर्मलानि च तानि आमोदकानि सुखदानि चेति तानि ११

तत्तस्मादनुयोगः प्रश्नः प्रश्नोऽनुयोगः पृच्छा चेत्यमरः। प्रष्टव्यः। प्रष्टुं शक्यो न भवति स्वगृहच्छिद्रप्रकाशशङ्कयेति भावः ॥ १२ ॥

दीयतां खण्ड्यताम्। द्यावापृथिव्योः स्वर्गमर्त्यलोकयोर्मध्ये केन वा जनेन परेषां हितार्थं देहो विद्या वा न क्रियते अपितु क्रियत एव ॥ १३ ॥

भद्रतराः गाः बहुदुग्धवतीर्धेनूः। अस्तदारुणभावस्त्यक्तक्रौर्य्यः। अरुणस्य सूर्य्यस्य भाः ज्योतींषि ताभिरेव बुध्यते लग्नक्रमेण भद्राभद्रं जानातीति सः। तथा वक्तुमीशे शक्नोमि। कुतः अमी सर्वज्ञतादयः प्रभावाः मयि हि निश्चितमेव शेरते गुप्ता वर्त्तन्ते इत्यर्थः ॥१४॥

ता आभीर्य्यः रेणुर्जगुः रभसादूचुरित्यर्थः। "रण ध्वन शब्दे"। इदं गवादिकं वसु धनं रेणुस्तावत् रजःसदृशमित्यर्थः। दातुं पुनः किमशक्यमिति भावः ॥ १५ ॥

स पुनराह न रा हरणीयो मे किंतु प्रतिष्ठाप्रतिष्ठापनमेव ममोद्देश्यं तत् पृच्छ्यतां भोः पृच्छ्यताम् ॥ १६ ॥

निजगदुस्ता निजगदुस्तापजननं किमपि अस्माकं स्माऽकण्टकव्रजपुरवसतीनां सतीनां न किमपि कण्टकतुल्यं किंत्वेक एव मानसामयो न सामयोग्यः ॥१७॥

यत् खलु नो वधूराजी राजीवनीसमापि मापि कतमा नः सुखाय बभूव१८

यतोऽपूर्विवाह दिनावधिवधिरा इव भर्तृनामश्रवणेऽपि अपि तदीयवन्धावन्धा एव किं पुनस्तेषामवलोके लोके क दृष्टमीदृशं पतिवैरस्यम् ॥ १९ ॥

यद्यप्यासां पतिष्वभिमानोऽपि नो जातो नो जातोत्कटमेवमेव दुःखम्॥ २० ॥

तदप्यस्य कः प्रतीकार इति विचारय चारय निजं यशो दिक्षु विदिक्षु विशेषेणेति ॥ २१ ॥

एतदधिगत्य कृत्रिममौनी ममौ नीरसतया मनसि तन्निदानमिव कुसुमासवः २२

चिरं विचार्य्याचार्य्याकारं चाभिनीय सविषादमिव दमिवदऽतिनिगृहीतमना मनाक् शुष्कं विहस्य पुनरुवाच वाचस्पतिर्मेधावी धावी कुतुकमये वर्त्मनि ॥२३॥

अपि शुभंयुवरा युवराजकृष्णस्य गोचरोऽयमुदन्तो मुदन्तोचितो मे भविष्यति२४

तेनायं संगोप्यो गोप्योऽवश्यमेव ॥ २५ ॥

वक्ष्यामिसिद्धफलमेकं फलमेकं समानयत इति तथानीतं फलमादाय क्षणं विभाव्य विभाव्यपसुदुर्दर्शः पुनर्निजगाद ॥ २६ ॥

रा इति धनं न हरणीयः न मम ग्राह्यः किन्तु प्रतिष्ठायाः ख्यातेरेव प्रतिष्ठापनं लोकैर्गवादिदानं तु तस्याः ज्ञापकमेव । अत एव प्रथममहं गाः प्रार्थितवानस्मीतिभावः ॥ १६ ॥

निजगं निजगतं दुष्टतापजननम् । मानसामयो मनस्तापः न सामयोग्यः न सान्त्वनार्हः १७

मापि कतमा कतमापि न ॥ १८ ॥ तदीयवन्धौ स्वदेवरादौ अपि अन्धा एव ॥ १९ ॥

सोऽस्माकं दुःखमेवमेव । कीदृशं जातं च तत् उत्कट चेति तत् यदेव जातं तदैव वर्द्धितमित्यर्थः ॥ २० ॥ चारय प्रचरितं कुरु ॥ २१ ॥

कृत्रिमं मौन यस्यास्तीति सः । नीरसतया नितरां इरा सरस्वती यस्य यत्तया तन्निदानं ममौ प्रमितवान् । इवेति सर्वत्र तां एव तथा प्रत्याययति वस्तुतस्तु सर्वकृत्रिममेवेति सूचयति॥२२॥

दमिवत् दान्त इव अतिनिगृहीतमनाः स्थिरचित्तः ॥ २३ ॥

शुभंयुषु शुभवतीषु वराः श्रेष्ठाः युवराजस्य कृष्णस्य मत्प्रियसखस्य गोचरः सन्नयं उदन्तो वृत्तान्तः मे मम मुदामानन्दानां अन्ते नाशे उचितो योग्यो भविष्यति या एव मां मिथ्यापरिवादेन दूषयन्ति तास्वेव वृद्धाभीरीषु मत्प्रियसखो भूत्वापि सर्वज्ञतया सर्वं भद्राभद्रं मुक्त्वा हितमुपदिशन्तीति मयि कृष्णो दुर्मनायिष्यते इति ॥ २४ ॥

तेन हेतुनाऽयं उदन्तो वृत्तान्तः संगोप्यः संगोपयितुमर्हः हे गोप्यः ! ॥ २५ ॥

सिद्धं फलं पतिवैमुख्यरूपं यस्मात् तत्कारणं वक्ष्यामि कीदृशमेकं मुख्यम् । विभायाः कान्तेरपयेन अपयाभावेन हेतुना सुदुर्दर्शः ॥ २६ ॥

भो भो आर्य्या लौकिकालौकिकान्येवात्र दूषणानि दृश्यन्ते लौकिकानि कानि च लग्नालग्नानि यैः किल पतिविपत्तताऽक्षता क्रियते अलौकिकानि तावदवधारयत रयत एव ॥ २७ ॥

काचिदत्र प्रतियोगिनी योगिनी योगिनीराजितपदारविन्दा रविन्दारयितुमपि समर्था योगमाया माया विवाहं कारयित्वा कौतुकवती कौ तु कवतीतरेषु तदभिज्ञतो विवाहमिति पुनरासां नरासांप्रतं पतिविद्वेषं च जनयामास ॥ २८ ॥

स्वभावतः पुनरिमा न मानव्यः तेनाशु तस्या महतीह तीव्रतरा प्रीतिरत एव मानवयाऽमानवानां संगतिरसांप्रतं सांप्रतं त्विति स्वयमेव मतिभेदं कारयित्वा रयित्वाच्च तस्य स्पर्शादिकंच न कारयति रयतिग्मा सा खलु योगिनी ॥ २९ ॥

तदासु भवतीभिर्वधूतावधूता क्रियताम् ॥३० ॥

किंतु निकाममना ममता तु कर्त्तव्या तया तु वः क्षेमं विधास्यते ॥ ३१ ॥

अपि च यदि वः पुत्राशाऽत्राशाविसारिणी भवितुमर्हति तदासां स्पर्शोऽपि यथा न भवति तथा कार्य्यं नहि कृष्णभुजगा बलाबलाकृष्टाः सुखं जनयन्ति ३२

अस्ति भाग्यं वः सुतानां यदासां तेभ्यः स्पर्शोऽपि जातः ॥ ३३ ॥

अथ ताः सविषादवैकल्यं वै कल्यं पुनरूचुः। अयि मूर्त्तप्रमाण माणवक भवतः कथा मानवकथा नेयं किंतु सर्वज्ञैतेवयं ते ॥३४॥

---

लौकिकानि स्वभाववैरूप्येण सौरूप्यकौरूप्याभ्यां च अरोचकत्वानि लौकिकानि लोकप्रसिद्धानि तानि लग्नेषु ज्योतिश्चक्रशास्त्रोक्तिषु न लग्नानि प्रत्यक्षनिदानकत्वात् किं तद्गणनयेति भावः। रयतो वेगतः ॥ २७ ॥

प्रतियोगिनी युष्म प्रतिकूला योगिनी। नन्वेवं चेत् सा मान्त्रिकैस्तत्त्वैः सहेलमेव विनाश्या तत्राह योगिनी राजितेति। भवतु तथापि भवतातितेजस्विना असौ पराभाव्या इति तत्राह रविमपि दारयितुं समर्था योगेन उपायेन माया यस्याः सा। कौ तु पृथिव्यां तु तदभिज्ञतस्तन्मायाभिज्ञादितरेषु अज्ञजनेषु विवाहं कवति कीर्त्तयति सति पुनरिति हेतोरेव आसां नरेषु असाम्प्रतं अयोग्यम् ॥ २८॥

तस्याः योगिन्याः असांप्रतमयोग्यम्। तस्य मतिभेदस्य रयित्वात् तेजस्वित्वाच्च स्पर्शादिकमपि पतीनाम्। रयेग तेजोन तिग्मा तीक्ष्णा दुर्वारेत्यर्थः २९ वधूता वधूभावः अवधूता खण्डता ३०

नात्यन्तं तर्हि ताभिरुदासितव्यामित्याह किंत्विति। तया तु योगिन्या तु क्षेमं पुत्रयोग्यधनादिकं अन्यथा तु विनाशयिष्यत इति भावः ॥३१॥

यदि वो युष्माकं पुत्राणामाशा धनादिवाञ्छा अत्र गोकुलनगरे आशाविसारिणी सर्वदिग्व्यापिनी अतिप्रवृद्धिमतीति यावत् अन्यथा त्वाशा न फलिष्यतीति भावः ॥ ३२ ॥

तेभ्यो युष्मत्सुतेभ्यः स्पर्शोऽपि संप्रदानमपि "विश्राणनं वितरणं प्रदर्शनं प्रतिपादनमित्यमरः"। आसां दानात्मकस्पर्श एव हेतुं भाग्यकल्पकः। संयोगात्मकस्पर्शस्तु कृष्णभुजङ्गस्पर्शात् सांघातिक एवेति भावः। अत एव भीता श्रीराधादिप्रतिच्छायास्पर्शोऽपि रासादिरात्रिषु तत्पतिभिर्न क्रियते स्मेत्यवसेयम् ॥ ३३॥ मे निश्चितं कल्यं निरामयं यथास्यात्तथोचुः॥३४।

त्वया परमज्योतिषा ज्योतिषाध्ययनप्रभावो दर्शितः आगमाध्ययनस्य च महीमहीयान् प्रभावो दर्श्यतां कस्या देवताया वतायासकृतेनाराधनेन धनेन योगिनीकृतविलसितं विलसितं भवति तदप्युपदिश्यतां दिश्यतां च तदाराधनविधिरिति ॥ ३५ ॥

स उवाच । अस्त्युपायो निरपायो निरवकरः कोऽपि कोपिन्यास्तस्याः कोपशमनाय देवतान्तरोपासनासनाथः । ता अथ सप्रमोदं प्रमोदन्तामिव तं व्याहारं हारं मत्वा निजगदुर्निजगदुःखहानिकृते कृतेनाभिलापेण ॥ ३६ ॥

ब्रह्मवटोऽवटोत्तमोऽसि गुणरत्नानां रत्नानां यथार्थभावेन त्वां पृच्छामः कासौ देवता यतास्या वा किं नाम नाम कीदृशी वा तदुपासना सनानाभावं कथयितुमर्हसि स सहर्षमवददवधत्त भो महाभागा महाभागाः ॥ ३७ ॥

अस्ति किल कश्चनातिकालः कालकुमारो नाम मारो नाम मूर्त्तिमानिह वृन्दावने कुञ्जदेवता देवतावृन्दमहनीया योगिनी च नीचसादृश्यं यतो भजते सोपासिता सितापाङ्गीनां कामं निकामं निर्वाहयति ॥ ३८ ॥

सा चेत् प्रसीदति सीदति न तदा जनः कोऽपि कोपितां वा यद्येति तदा न सपिनाकोऽपि कोऽपि रक्षितुमीष्टे ॥ ३९ ॥

तथाहि। कुञ्जेकुञ्जे विहरति न केनापि संलक्ष्यतेऽसौ ध्यानादाविर्भवति भजतामेकभावव्रतानाम्। पूजात्वस्याः समयनियमापेक्षिणी दुष्करैका पुण्यात्मानःप्रकृतिनः केवलं कुर्वते ताम् ॥ ४० ॥

---

महीमहीयान् मह्यां भूतले महत्तमः। वत खेदे। आयासो यत्नस्तेन कृतेन। विलसितं चेष्टितम्। विलेगर्त्ते सितं बद्धं भवति विलुप्तं भवतीत्यर्थः ॥३५॥

प्रमोदन्तामिव प्रकृष्टा मा संपत्तिस्तस्या उदन्तं प्राप्स्यैवृत्तान्तमिव ॥ ३६ ॥

अवटोत्तमोसि श्रेष्ठगर्त्तोऽसि गर्त्तावटौ भुवि श्वभ्रे इत्यमरः। सनानाभावं नानाभिप्रायसहितं यथा स्यात्तथा कथयितुम्। महान् भागो भाग्यं यासां ताः अत एव महतीम्। आभां गच्छन्तीति ताः। यद्वा महत्या आभया गायति गानवद्दृश्यतीति महाभागाः सोमपा शब्दवत्स इत्यस्य विशेषणम् ॥ ३७ ॥

अतिकालः अतिश्यामलः कालातीतश्च। कालस्य कुमारः। पक्षे कालः श्यामलः कालः श्यामलश्चासौ कुमारो युवराजश्चेति स तथा। नाम प्राकाश्ये। कामम् अभीष्टं कन्दर्पश्च। निकामं यथेष्टम् ॥ ३८ ॥

यदि वा कोपितां क्रुद्धत्वं एति प्राप्नोति यदि कस्मैचित्कुप्यतीत्यर्थः। सपिनाकोऽपि पिनाकसहितो रुद्रोऽपि ॥ ३९ ॥

समयेषु वक्ष्यमाणेषु नियमानेव वक्ष्यमाणान् अपेक्षितुं शीलं यस्याः सा। एका मुख्या॥४०॥

दुष्करत्वं चावधत्त । परार्ध्यमणिभूषणोत्तमविलेपचेलान्वितैः स्वयं कुसुमसंचयावचयनाय गम्याटवी । तदेकहृदयैरनाकलितलोकलज्जैर्द्वेधा वचोरचनवर्जितैर्नियतमेव भाव्यं जनैः ॥ ४१ ॥

एवं च वञ्चनविमुखतयाभिमुखतयाभिलाषपुरस्सरं सुसंपादिते पूजोपचारे साचारे साधीयसि ॥ ४२ ॥

कुञ्जे कुञ्जे तमथ मुदिताः पुष्पधूपप्रदीपैर्नैवेद्यैश्च प्रियसुरभिभिः पूजयेयुस्त्रिसन्ध्यम् । पूजोपान्ते नवकिशलयस्रस्तरस्रस्तदेहा बन्धुव्रातैरपि सह निशां जागरेण क्षिपेयुः ॥ ४३ ॥

एवं प्रातः प्रातर्मध्यान्हपूजे धर्मम् ॥ ४४ ॥

साधयति सर्वजनं सिद्धव्यवसायं सायंपूजा निखिलाभिलाषक्षणदा क्षणदापूजा चेति ॥ ४५ ॥ वर्णितोऽयं त्रिकालपूजामहि माऽनुमहि मानुषे लोके लोके नातः परं व्रतम् ॥ ४६ ॥

अस्याश्चदेवतायाः सर्वातिरेका मन्त्राः कामन्त्राणकारिणो बहव एव सन्तितेषु प्रधानतमोऽष्टादशाक्षरोऽक्षरोपमः कोप्यस्ति यदि वो भो वोभोति श्रद्धाविशेषस्तदा तमपि वर्णयिष्यामः ॥ ४७ ॥

ताभिरभिव्याहारि हारि वचः हे बालाचार्य्य विना मन्त्रेण कथमुपासनासनाथा भवतु ॥४८॥

तत्रभवता भवता सोऽस्मभ्यमुपदिश्यतां दिश्यतां प्रयातु ते यशः॥४९॥

अटवी स्वयमेव गम्या गन्तव्या नात्र प्रतिनिधिकल्पनं युक्तमिति भावः । तत्र नियमानाह, तदेकेति ॥ ४१ ॥

वञ्चनविमुखतया वित्तशाठ्यराहित्येन अभिमुखतया तत्सांमुख्येन ॥ ४२ ॥

तं फालकुमारम् । स्रस्तर शय्या ॥ ४३ ॥ धर्मं प्रातः पूरयतः " प्रा पूर्तौ " प्रथमपुरुषद्विवचनान्तः ॥ ४४ ॥ सायंपूजा कर्त्री साधयति करोति । क्षणदा उत्सवदायिनी क्षणदा पूजा रात्रिपूजा ॥ ४५ ॥

त्रिकालेति प्रातर्मध्यान्हयोरपि धर्मपूरकत्वेन फलसाम्यादैक्यमभिप्रेत्योक्तं ततश्च प्रातरुक्तौ मध्याह्ने पूजा अवश्यमेव कार्य्येति भावः फलानामुत्तरोत्तरप्राधान्यात्सर्वाशक्तौ रात्रिपूजा त्वावश्यकयेत्यपि द्योतितम् । मानुषे लोके अतः परं व्रतं न लोके न पश्यामि " लोकृ दर्शने " उत्तमपुरुषैकवचनान्तः । कीदृशं अनुमहि अनुगता भवति मही यस्मात् तन्महीपदेन तत्रस्थाः सर्वजना लक्षिताः ॥ ४६ ॥

कामं यथेष्टम् । अक्षरोपमः मक्षोपमः । वो युष्माकम् । भो इति संबोधने । वोभोति आतिशयेन भवति ॥ ४७ ॥

अभिव्याहारि स्पष्टमुक्तम् ॥ ४८ ॥

स मंत्रः दिश्यतां प्रयातु सर्वदिग्व्याप्तित्वं प्राप्नोतु दिक्षु भवं विद्यमानं दिश्यं तस्य भावो दिश्यतां ताम् ॥४९॥

अस्माभिरुपदेष्टव्य एष्टव्य एष वधूभ्य इति ॥९०॥

बाढं तत्साम्प्रतं सांप्रतं प्रीयतां सैव भगवती काचन देवतेति मङ्गलमङ्गलं कृत्वा स च सचमत्कारमुपदिदेश देशकालोचितं तमेव मन्त्रराजम् ॥९१॥

यथा अचिन्त्यमहसे कुञ्जदेवतायै रसात्मने स्वाहा इत्युपदिश्य पुनराह एतस्याः स्वरहस्यं रहस्यज्ञसा कथितमुपासनाकाण्डं प्रकाण्डं प्रथममनेनसानेनसाधु समाराधितयातया देवतया प्रतिकूला कूलाप्लाविनी सरिदिव सा त्वरया त्वऽरया भविष्यति योगिनीति प्रकटितमागमद्वयाभ्यासमर्यादार्या दाक्षिण्यंच ॥ ९२ ॥

इति निगद्यानवद्या नवसुधायमाना गिरो झटिति निष्क्रान्ते कुतुकपटौ कपटौज्ज्वल्यकृति वटौ ताः किल तस्य वाचो वाचोयुक्तिपटुताजुषो जुषोपपन्नाः कृत्वा समुपगृह्य गृह्यकृत्यनिमुखाःस्त्वगमवस्थाय भवनमध्यमध्यवस्थाय च स्वस्ववधूः स्ववधूतमात्सर्य्यमाहूय हूयमानदहनशिखा इव ज्वलन्तीरथ समुपदिशन्ति स्म ॥९३॥

एष मन्त्रः कथंभूतः सन् एष्टव्यः इच्छाविषयीकरिष्यमाणः सन् अर्थात्ताभिर्वधूभिरेव ९०

बाढमित्यभ्युपगमे तत्तस्मात्साम्प्रतं युक्तमेव सांप्रतमिदानीम्। मङ्गलं स्वस्तिवाचनादिकं अङ्गलम्बं अङ्गसमेतं कृत्वा साङ्गमेव मङ्गलमाचर्य्येत्यर्थः। स च कुसुमासवः ॥९१२॥

रहसि विविक्ते स्थाने अनेन उपासनाकाण्डेन साधु यथा स्यात्तथा समाराधितया तयाकुञ्जेचर्य्या देवतया हेतुना सा योगिनी तु अरया वेगरहिता भविष्यति त्वरया शैघ्र्येणैव का इव कूलाप्लाविनी सरिदिव कार्त्स्न्येन निःसारयितु तु सादुःशकैवेतिभावः। वेगराहित्ये च नद्या इव स्थितयापि तया न किंचिदसामञ्जस्यामिति तद्द्वयमपि निःशेषेण न निर्वर्त्तितमिति सर्वकालमेव तासां स्वस्ववधूजनवनप्रस्थापनार्थं गूढचातुर्य्यमस्य । नदीदृष्टान्तेन च मदुक्तैतत् प्रतीकाराकरणे तु प्रतिदिनमेव वर्द्धमानवेगा सा युष्मत् कुलमेव सर्वमुन्मूलयिष्यतीति भयमुत्पाद्य तादृशपूजनायामपि ताः शीघ्रं प्रवर्त्तिता आगमद्वयस्य गणनाशास्त्रस्य च उपासनाशास्त्रस्य च अभ्यासमर्यादा प्रकटिता हे आर्य्या दाक्षिण्य च युष्मासु स्वानुकूल्यं च प्रकटितमिति अथैतत् प्रकरणस्येदं तत्त्वम्। यद्यपि श्रीराधादीनां वनाभिसरणादौ तत्तत्प्रतिच्छायानिर्माणेन संपातिश्वश्र्वादिसमाधानं योगमाययैव सुशकमेवास्ति तथापि तासां स्वगुरुजनसमाधानाभावभावनायां सत्यां कुञ्जादिविहारस्वाच्छन्द्यं न संभवेत्। नच तथैव तासां तदानीं सा भावना नोत्पादयितव्येति वाच्यं तासां स्वेषु परकीयात्वदृष्टौ वर्त्तमानायां तद्भावनानुदयासंभवात् । नच तथा दृष्टिरपि तदानीं तयैव लोप्येति वाच्यं तस्या उज्ज्वलनीलमणावुक्तयुक्त्या रसोद्रेकाहत्वेन लोपानर्हत्वात्। ततश्च कदाचिन्मधुपनोदेकादिकेनु...रात्रिदिवेन विलासवृद्ध्या गोष्ठगमने विस्मारिते सति कदाचिच्च मुरलीनादोन्मादितानां तासां वनगमने ...गाढसङ्केतुकाभिसारत्वेन गुरुभिर्विदिते सति च योगमायायास्तत्तत्प्रतिच्छायाभि स्तत्समाधानमावश्यकमेव उपायान्तरासंभवादिति ॥ ९२ ॥

जुषा प्रीत्या उपपन्ना उपयुक्ताः कृत्वा। गृह्यकृत्य गृहसंबन्धि कर्म्म। सुष्ठु अवधूतं खण्डितं मात्सर्य्यं यत्र तद्यथा स्यात्तथा आहूय। हूयमानस्य प्रज्वलनघृतधारस्य दहनस्य । ततश्च तस्य दाक्षिणात्वेन बहुगोहिरण्याम्बरभक्ष्यादीनि ताः प्रेषयामासुरिति ज्ञेयम् ॥ ९३ ॥

अयि हे जन्यो जन्योत्तमा भवत्यो गुणशीलौदार्यदार्यमाणसुरसुरमणीगर्वा-स्तया धन्या एव ॥ ५४ ॥

किंतु दूषणमपीदं महीयो महीयोगे यन्न दृश्यते कुत्रापि यत् खलु भर्तृवैमुख्यं मुख्यं नारीणां नाऽरीणां चैतद्भवतु कदापि ॥ ५५ ॥

चिन्तयथ ॥ ५६ ॥

...रि श्रद्धामीतिविवृद्धये गु-रुजनस्यानन्दसंपत्तये । श्रीवृन्दावनमध्यमध्यनुपमा कुञ्जेचरी देवता काप्यास्तेऽखिलकामदा मुहुरियं युष्माभिराराध्यताम् ॥ ५७ ॥

वध्वस्ततो ध्वस्ततोपा इव साशङ्कमात्मगतं वितर्कयामासुः ॥ ५८ ॥

एता नः किमु परीक्षन्ते किमु परीक्षन्ते वा कमप्यर्थं तावदधुना धुनाना इव हृदयं किमपि तूष्णीमेव तिष्ठामो यावदद्रागूरामूलमेव कथयन्ति ॥५९॥

इति तासु स्थितासु स्थिरतया पुनरपि हिता नरपिहितापहितापदेशा देशा-चारलब्धं तदेव व्रतमामूलतः कथयामासुः ॥ ६० ॥

आकर्ण्य कर्णयोरिव न कयापि रसायनं प्रयोगमिव कुसुमासवस्य क्षतिरस्ये-

अयि जन्यः हे वध्वः " समाः स्नुषा जनीवध्व " इत्यमरः । जन्या जन्मना उत्तमा एव यूयम सदभिजाता इत्यर्थः । इति स्वनियोगग्रहणे श्रद्धामुत्पादयन्ति ॥ ५४ ॥

दूषणमपि इदं दृश्यते किं तत् यत् नारीणां भर्तृवैमुख्यं तन्मुख्यमेव दूषणं न स्वल्पमित्यर्थः । एतन्न अरीणां शत्रूणामप्यस्तु तेष्वपीदृशदोषाशंसा न युक्ता कर्तुमितिभावः ॥ ५५ ॥

तत्तस्मादेतद्दूषणोपशमनाय उपायं कथं न चिन्तयथ कीदृश । आसन्नमेव शं सुखं यत-स्तम् । अनायासमायासरहितम् ॥ ५६ ॥

सौभाग्यस्यादि फल कुसुमासवेनानुक्तमपि स्वमत्यनुसारेणैव तासां रुच्युत्पादनार्थमुक्तम् । योगिनीकृतोपद्रवशान्तिस्तु तासां भीरुत्वमालक्ष्य तस्या अपि भयेन प्रकटं नोद्घाटिता । अत्र वास्तवार्थस्तु भर्तुः कृष्णस्य अगुरुजनस्य अनुवर्त्तिलोकस्य ॥ ५७ ॥

ध्वस्ततोषा इति कुञ्जेचर्य्यादेवतायास्ताभिरकस्मात् प्रस्तावात्कृष्णाङ्गसङ्गविलासव्यक्ति-संभावनया ॥ ५८ ॥

किंवा अस्माकमुपरि कमप्यर्थं किंचिद्वस्तुप्रयोजनं वा ईदृन्ते पर्य्यालोचयन्ति यावदमूः अ-दर सर्वमेव ॥ ५९ ॥

तासु वधूषु हिता हितरूपाः अत एव नरेषु पिहितं आच्छादितं अपहितं योगिनीकृतवै-गुण्यं अपदेशेन छलेन याभिस्ताः तटस्थजनैः पृष्टास्ता धनादिकामनया देवपूजार्थं वधूः कारयाम इति वदन्ति स्म इत्यर्थः देशाचारलब्धमितिरूपैरेव तज्ज्ञानोपादानस्य प्रश्नशङ्कया कुसुमा-सवेन स्वसंगोपनार्थमुक्तत्वात् ॥ ६० ॥

विभावाः कान्तेर्व्यतिषङ्गणपरस्परामेलनेन सरसवदनास्तासां मध्ये एकस्या स्वाभिप्रायानु-रूपतो दीप्त्या मदनसारस्येन अन्यस्या अपि तथैव मदनसारस्यं जातमित्यर्थः । किमपि रसव-

भ्रमहो महोत्सवकरी नः समुपादीति मनसि क्षणं विभाव्य विभाव्यतिपङ्कसरस-वदना रसवदनायासं ताः किमपि निजगदुः ॥ ६१ ॥

आर्य्याः का नाम नार्य्यो नार्य्योदित मध्वानमध्वानमनुसरन्ति ॥६२॥

तदनुष्ठीयतां तीव्रतरं व्रतरंहोऽनुष्ठाय वपुः कार्श्यं विदधामो धामोदरे किं वृथा समयं नयामो न यामो नः सार्थको याति मियसौभगाय गायमान प्रयत्नं का न भवति ॥ ६३ ॥

एवं वधूजनेनाङ्गीकृते गुरुजनवचनवृन्दावने कुसुमावचयनय नासीद्यदि विप्रतिपन्नता ॥ ६४ ॥

प्रतिपन्नतारल्या तदा अनुवासरमेव रमेव नानाविग्रहग्रहणतत्परा परानन्देन सा वधूततिरवधूततिरस्कारा गुरुपुरस्कारा गुरुपुरतो वहिर्भूय भूयसा परिजनेन सह सहमाना मनोरथवेगं रथवेगं च जित्वा सत्त्वरेण सत्त्वरेण मनसा वृन्दावनमध्य मध्य वस्थाय ॥ ६५ ॥

कुसुमान्यवचिन्वती न्वतीव कौतुकेन कौ तु केनचिद्धेन्ववनवनविहारिणो हारिणो भगवतः कृष्णस्यावलोकनकनत्कामा कामाल्हादधुरां नाससाद ॥ ६६॥

अथ सा च कुमारिकामाला कामालाघवलाघवध कारिणस्तस्याश्वासवाचम पेक्षमाणाक्षमाणामऽतिविलम्बसहनेऽक्षवृत्तीनामुद्वेजनजनकेन केनचिदुत्कण्ठाभरेण

---

त् रसयुक्तवचो निजगदुः ॥ ६१ ॥

का नार्यो वध्वः आर्य्याभिः श्वश्रूभिरुदितं कथितम् अध्वानं मार्गं अध्वानं निःशब्दं यथास्यात्तथा अनुसरन्ति अपितु सर्वा एव ॥ ६२ ॥

धामोदरे गृहाभ्यन्तरे । नयामः यापयामः न यामोऽपि न प्रहरोऽपि । प्रियं यत्सौभगं सौभाग्यं तस्मै तदर्थं श्लेषेण प्रिये श्रीकृष्णे विषये तस्माद्वा यत्सौभग तस्मै प्रयत्नं गायमानेति वचसि चानशन्तम् गानवद्भिः पृच्छन्ती का न भवतीत्यर्थः ॥ ६३ ॥

वचनवृन्दस्यावने पालने ॥ ६४ ॥

रमा इव नानाविग्रहग्रहणतत्परा एकैव लक्ष्मीर्नानादेहधारिणीवेत्युत्प्रेक्ष्यमाणा इत्यर्थः । एतच्च नरलीलत्वेन तदातनलोकसंभावनयैव वर्णनं न तु वस्तुतः सिद्धान्तोपयोगित्वेन रूपगुणादिभिरपि रमातोऽप्यासां परमोत्कर्षादिति । गुरुभिरपि पुरस्कारो यस्याः सा । सत्त्वरेण सत्वगुणयुक्तेन मात्रयुक्तेन वा मनसा "सत्वं गुणे पिशाचादौ वलेऽपि द्रव्यभावयो" रिति मेदिनी ॥ ६५ ॥

नु इति विकल्पे अन्यद्वा किंचित् कुर्वतीत्यर्थ । कौ तु पृथिव्यां तु केनचित् अतीव कौतुकेन कामाल्हादधुराम् आनन्दातिशयं न प्राप अपि तु सर्वमेव ॥ ६६ ॥

कामस्य अलाघवेन गौरवेण हेतुना लाघवस्य धैर्यादिसामर्थ्यस्य वधकारिणो नाशकर्त्तुः "राघृ लाघृ सामर्थ्ये" तस्य कृष्णस्य उत्कण्ठाभरेण कण्डूयुक्तमनाः कीदृशेन अतिविलम्बसहने अक्षमाणां असमर्थानां अक्षवृत्तीनां चित्तवृत्तीनां उद्वेजनस्य उद्वेगस्य जनकेन । म्लानवत् म्ला

कण्ठाभरेण कण्डूलमना मनागिव विम्लानवदना म्लानवदनाकुलकुलमर्य्यादाभिर्जननीभिरभ्यभाषत ॥ ६७ ॥

अयि दुहितरो हितरोपणार्थे यदार्य्यापरिचयो भवतीनां बभूव भूवलयचमत्कारी का रीतिः तस्य समजनीति नीतिमद्वचनश्रवणानन्तरं तरङ्गवती नाम तासां कापि धात्रेयी निजगाद ॥ ६८ ॥

हंहो गृहेश्वर्य्यः एतदवधीयतां तदवधीयतां दिवसानामन्तरेऽन्तरेण भवादृशीनां पृच्छामिच्छा मिथः कथनाय कथमासां भवतु कुलकन्याकुलकन्याय एषः संप्रति लब्धानुज्ञा नु ज्ञानसमं कथयिष्यन्ति ॥६९॥

यद्यनुमन्यध्वे तदा मया समयासन्नया सन्नयादेव कथ्यते ॥ ७० ॥

आराधिता हि सा योगमाया अगमाया सर्वदैवतैः सर्वदैव तैः प्रत्यादिदेश देशकालोचितं किमपि ॥ ७१ ॥

कश्चित् प्रभावी प्रभावीचीनीचीकृतसकलमहा महामहिमा हिमादशामपि न गोचरो गोचरो भवन्नऽल्पेनैव दिनेन दिनेन इव कमलनीनामलिनीनामिव महाली महालीलो भवतीनां धवो भविता ॥ ७२ ॥

यो भविता यस्या सङ्गेन हे परमा रमातोऽपि युष्माकमुष्माकमुत्तमं प्रथयन् सौभाग्यभास्करस्य ॥ ७३ ॥

किंत्वस्य पतिकामानुव्रतस्य व्रतस्य काचिदुत्तरा क्रिया क्रियाजीवनमय्याऽऽपि

नाभिरिव कन्यानां मुखम्लानिदृष्ट्या तद्दुःखेनैव दुःखिनीभिरित्यर्थः। तथाप्यनाकुलेति तद्व्यतिक्रमं कर्तुं सहसा अशक्नुवतीभिरित्यर्थः ॥६७॥

आर्य्यापरिचयो देवीप्रत्यादेशः ॥६८॥

तदवधि तत्प्रत्यादेशदिनमारभ्य इयतां एतावतां दिवसानां गतानां अन्तरे मध्ये भवादृशीनां पृच्छां प्रश्नमन्तरेण आसां मिथः परस्परं युष्मान् श्रावयितुं तत्कथनाय इच्छा कथं भवतु। नन्वत्र को दोषस्तत्राह कुलकन्यानां कुलकस्य वृन्दस्य न्याय एवैषः मातापित्रादिगुरुसन्निधौ स्वयमेव स्वाभीष्टपतिप्राप्त्यर्थकव्रतमुद्घाटने महत्येव लज्जेति ॥६९॥ सन्नयात् सन्नीतिमालम्ब्य ७०

सर्वदैव सर्वस्मिन्नेव काले तैः प्रसिद्धैः सर्वदैवतैः अगमः अगम्य आयो गतिर्यस्याः सा७१

कश्चित् प्रभावी भवतीनां धवः पतिः भविता भविष्यति । प्रभानां वीचिभिस्तरङ्गैर्नीचीकृतानि सकलानामपि महांसि तेजांसि येन सः । हि यतो महान्महिमा माहात्म्यं यस्य सः । कमलिनीनां दिनेनो दिनप्रभुः सूर्य्य इव । तत्रासाजात्यमनिकटवर्तित्वमपरस्परसापेक्षोल्लासत्वं चालोस्यान्यपोपमिमीते अलिनीनां भ्रमरीणामिव महाली महाभ्रमरः ॥ ७२ ॥

यस्य सङ्गेन रमातोऽपि लक्ष्मीतोऽपि युष्माकं सौभाग्यभास्करस्य उष्मा प्रतापो योभविता अतिशयेन भविष्यति । किं कुर्वन् कं सुखं उत्तमं प्रथयन् ख्यापयन् ॥ ७३ ॥

उत्तरा क्रिया कथंभूता क्रियाणां सर्वासामेव जीवनमयी साफल्यदायिनी। अपि स्वयमेव स्वयम्भि प्रासेत्यर्थः । सा भवतीभिः कर्त्तव्या । ननु देवि मयि आश्रितः प्रापितो विश्वासो

मय्यार्पितविश्वासाभिः कर्त्तव्याऽक्षोभवतीभिर्भवतीभिः || ७४ ||

सा चावधीयतांधीयतां विधाय श्रद्धामद्धागन्नियोगेन भो निरुपमगुणवृन्दावृन्दावन देवता वृन्दा नाम दानामन्दा मत्स्वरूपा स्वरूपातिकरुणा काचिदस्ति सा वोऽभिमतसिद्धये भाविनीति नीतिवशाद्वृन्दावनानुगमनं कतिदिनानि ना निवर्त्तनीयम् ७५

इदं हि सिद्धवनं तपः फलोपगमस्य फलोपगमस्य सकलाभिलाषसंपादकत्वम् । ७६ ।

अस्योपसत्त्यां सत्यां समीहितसिद्धिरचिरेणैव भाविनीति तदनुमन्यध्वमन्यध्वनिनिरसनपुरस्सरं पुरःसरंहसो निष्क्रम्य यथाहरहो वनमध्यमवस्थाय तदुदितकर्मशेषं समापयन्ति || ७७ ||

इति तदस्याः सप्रमुदितमुदितमाकर्ण्य तथानिदेशजननीभिर्जननीभिर्यदि सिष्मिये || ७८ ||

तदा तदनुमता मतान्तरानिरासेन निराबाधन्यायधन्या धन्यादयो वृन्दावनपरिसरणं ताःकुर्वन्ति || ७९ ||

तदा द्वयीषामपूढानामूढानामनूढानां च सम एव वृन्दावनचारिचारिमचातुरीतुरीयेकौतुके सति विरराम शिशिरसमयो रसमयो वसन्तश्चाससाद || ८०||

याभिस्त्वाभिर्युष्मासु मम विश्वासो जातः अतः प्रीत्यास्वयमेव कथयामीतिभावःअक्षोभो धैर्य्यं तद्वतीभिः||७४||

धियोबुद्धेर्यतं यमोऽन्यासक्त्युपरमो यस्यां तां श्रद्धां विधाय दाने वाञ्छितदाने अमन्दा परमसमर्था स्वरूपेण स्वभावेन अतिकरुणा ना इत्यव्ययं निषेधवाचकं न निवर्त्तनीयमित्यर्थः ७५

हि निश्चितं इदं सिद्धं सिद्धस्वरूपं सिद्धानां वा वनम् । कथं भूतं तपःफलोपगं तपसा फलेनैव हेतुना उपगच्छति मिलतीति तत् बहुतपःफलप्राप्यमित्यर्थः । अत एवास्य सिद्धवनस्य यः फलोपगमः फललाभस्तस्य सकलाभिलाषसम्पादकत्वं नित्यं वर्त्तत इत्यर्थः । ७६ ।

उपसत्तिरनुवृत्तिस्तत्तस्मात् अनुमन्यध्वं अनुमतिं दत्त यथा अन्यध्वनित्यागपूर्वकं पुरोऽग्रे सरंहसः सवेगाः सत्यः । ७७ ।

अस्या धात्रेय्यास्तत् उदितं वाक्यम् निदेशजननीभिर्निर्देशकर्त्रीभिः सिष्मिये इति ईषद्धास्यं सम्मतिद्योतकम् । ७८ ।

निराबाधोनिर्बाधो न्याय उक्तप्रकार स्तेन हेतुना धन्याः||७९||

अमूढानां परमबुद्धिमतीनां कौतुके समे तुल्ये सति । कथंभूते वृन्दावनचारिणी वृन्दावनप्रवेशोपयिकी चारिम्णा चारुतया या चातुरी तया तुरीये अतिश्रेष्ठे कनिष्ठमध्यमोत्तमातिश्रेष्ठानां मध्ये चतुर्थे इत्यर्थः । यद्वा ऊढानां पुष्पावचयच्छद्मगम्या चातुर्य्या कौतुकं प्रथमं ततोऽनूढानां कात्यायन्यर्चनप्रथागम्या वस्त्रहरणादिमयं द्वितीयं ततः पुनरप्यूढानांश्वश्रूणामनुमत्या कुञ्जेचरदेवताराधनमय्या तृतीयं तदनन्तरमिदानीमनूढानां वृन्दापूजनच्छद्मगम्या चतुर्थमिति कौतुकस्यास्य तुरीयत्वं साधितम् । साम्यं च द्वयीषामेव युगपदेकत्रैव कृष्णसङ्गलब्धेस्तुल्यत्वात् ||८०||

यथा। गतः शिशिरवारणो गलितकुन्ददन्तो जरां सकेसररदोद्गमः सुरभिसिंहशावोऽभवत्। हिमे व्रजति दक्षिणे मरुति वाति कालस्य नुर्नसोरिव विराजते श्वसितमारुतव्यत्ययः ॥ ८१ ॥

किंच। अपि प्रौढां गर्भे प्रसुवति लतालयो न कलिकां कुहूकण्ठः कण्ठे कलयति कलं न प्रथयते। चकार प्रस्थानं त्यजति मलयं नापि पवनः प्रतीक्षन्ते यान्तं युगपदिव सर्वे हिमऋतुम् ॥ ८२ ॥

आसन्नप्रसवतया लताङ्गनानां रोलम्बीसुहृद्वलावलिः प्रसज्य। उद्वेगं मुहुरिव कुर्वती समन्तादामच्छां मृदुकलहूंकृतैः करोति ॥ ८३ ॥

किंच। रसाले सालम्बो नवमुकुलसन्धानकलया पिको दत्ताश्वासः किमपि मरुता तत्सुरभिणा। कुहूरित्यालापं सपदि गुफितं कण्ठकुहरे श्रुतौदर्शत्रासादिव लपति दीर्घव्यवहितम् ॥ ८४ ॥

एवमुपनतेन तेन कुसुमसुरभिणा सुरभिणालङ्कृतेऽहनि हनिष्यमाणहिममऽहिममर्मणि स्नातमिव विपिनेन उल्लसितमिव तरुभिः उर्द्धसितमिवलताभिः उत्कण्ठितमिव विहगैः हसितमिव दिग्वधूभिः अनुलिप्तमिव चन्द्रिकाचन्दनेन रजनीभिः अङ्कुरितमिव चन्दनानिलेन संचरितमिव परिमलेन गुम्फितमिव गोष्ठी मधुव्रतैः पुलकितमिव माकन्दैःजागरितमिव माधवीभिः किं बहुना परिवर्त्तितमिव वपुर्मनसिजेन ॥ ८५ ॥

इत्येवं यद्यपि स्फुरदृतुपट्कपट्कलाकमनीयप्रदेशं वृन्दावनं तथापि क्रीडासमयानुरूपरूपतया क्वचित् क्रमेणाक्रमेणापि क्वचन नवनवतया वत याच्यमानेव

शिशिर एव वारणो हस्ती जरां गतः प्राप्तः। सुरभिर्वसन्तः हिमे व्रजति सति दक्षिणे महति वाति चलति सति। कालस्य कालात्मकस्य नुः पुरुषस्य नसोर्नासिकयोः ॥ ८१ ॥

प्रथमं वयः सन्धिमिव शिशिरवसन्तसन्धिं वर्णयति अपि इत्यादिभिः। प्रस्थानं उत्तरदेशं प्रति गमनम् ॥ ८२ ॥

रोलम्ब्य एव सुहृद्वला मित्रस्त्रियस्तासामावलिः ॥ ८३ ॥

कण्ठकुहरे कुहूरिति सहदीर्घमालापं गुफितं प्रथितमपि श्रुतौ शब्दश्रुतिक्रमे तु दीर्घव्यवहितं सहृस्वं यथास्यात्तथा लपति उच्चारयति तत्र हेतुमुत्प्रेक्षते दर्शस्य अमावस्यायास्त्रासादिव कुहरिति दीर्घश्रुत्या सहसा अमावास्यायाः प्राप्तौ प्रतीतायां औषधीशनाशशोकेनेव रसालवृक्षेण स्वमुकुलानि नोत्क्रमयिष्यन्त इति शङ्कित इत्यर्थः। चन्द्रिकाबहुलपक्ष एव आम्रमुकुलोद्गम इति लोकप्रसिद्धेः। सा नष्टेन्दुकलाकुहूरित्यमरः ॥ ८४ ॥

हनिष्यमाणं अद्य श्वो वा नाशयमानं हिमस्य महिम्नो मर्म यत्र तथाभूतेऽहनि ॥ ८५ ॥

स्फुरत. ऋतुषट्कस्य षड्भिरेव कलाभिः रञ्जकस्वस्वशिल्पैः कमनीया प्रदेशा यस्य तथाभूतमेव वृन्दावनं तथापि भगवतो नरलीलतया माधुर्य्यविशेषार्थं क्रीडानां समयानुरूपमेव रूपं येषां तत्तया तेषां ऋतूनां क्वचित् क्रमेणानुवृत्तिर्याच्यमानेव स्यात् हेमन्तानन्तरमेव शिशिरस्य तत एव वसन्तस्य इत्येवं क्वचन अक्रमेणापि यथा प्रावृष्यपि वसन्तसमृद्धिर्विदग्ध-

तेषामनुवृत्तिः ॥ ८६ ॥

अथ प्रथमप्रथमनुरागमावहन्तीनां गोकुलकुलललनानां ललनानां परिपूर्त्तये कापि वसन्तोत्सवलीलावली वलीयसी विरचनीया ॥ ८७ ॥

इति मनसि विचारयतो रयतो लब्धप्रमोदस्य प्रमोदस्यमानप्रणयिजनहृद्वाष्पस्य निखिलसौभगवतो भगवतो व्रजराजयुवराजस्याशयं विदित्वा वनदेवता एवता एवमभिनवसुरभिसुरभितमऽपि वनं स्वस्वकौशलशलदतिचारिमचारिमहाशिल्पकल्पनाकल्पनानाविधत्वभूषितं भूषितं सकलसौभाग्यमेकीकृतमिव विदधति स्म ॥ ८८ ॥

तथा च । लाङ्गलैश्चमरीचयेनपुष्पा विपिनक्षोणीतलं मार्जितं कस्तूरीहरिणीगणेन विदधे स्वैः स्वैर्मदैर्वासितम् । पुष्पाणां मकरन्दबिन्दुनिकरैः सिक्तं द्रुमाणां कुलैः सङ्गीतानि वितेनिरेऽलिनिवहैर्लास्यानि वीरुद्व्रजैः ॥ एवं सति । अथ प्राक्प्रमधुवासरे मधुमदक्रीडाविशेषालसः श्यामः श्यामलयन् दिशः स्वमहसां पूरेण दूरेरिणा । माधुर्यामृतशीकरोत्कराकिरा तन्वापि वर्षाभ्रमं तन्वानोऽपि विधास्यतीह परितो मूर्त्तं वसन्तोत्सवम् ॥ ८९ ॥

इति मुहुरनुरथ्यं तथ्यमुद्धुष्यमाणेश्रवणनयनचित्तोद्घर्षवर्षिण्युदन्ते । सहजसदनुरागावेगविघ्नान्तराणामजनिविधुमुखीनां चित्तमुत्कण्ठमानम् ॥ ९० ॥

एवं सति । चन्द्रावल्या सह परिजनै राधया स्वालिवृन्दैः श्यामादेव्या सह सहचरीमण्डलैरात्मनीनैः । श्रीवासन्तोत्सवरतिकलासंदिदृक्षाचिकीर्षाव्यग्रं जाग्रन्मधुमदहृतव्रीडमुद्यानमीये ॥ ९१ ॥

ततश्च । वृन्दादिभिः सरभसं वनदेवताभिः प्रीत्यादरेण महताभ्युपगम्यमानाः कामं वसन्तमहमङ्गलवेषवासोभूषादिभिर्विदधिरेपरिभूषितास्ताः ॥ ९२ ॥

---

माधवेभगवदिच्छावशादुक्ता क्वचन नवनवतयेति यथा प्रथमग्रीष्मानन्तरमेव प्रथमवर्षा तत एव प्रथमशरदित्येवम् ॥८६॥

अत एव प्रथमा प्रथा ख्यातिर्यस्य तादृशमनुरागं वहन्तीनां गोकुलकुलललनानां कुलाङ्गनानां या ललना वाञ्छास्तासां परिपूर्त्तये लल ईप्सायां युजन्तः ल्युडन्तो वा ॥८७॥

प्रकृष्टा मा शोभा तया उदस्यमानः उत्क्षिप्यमाणः प्रणयिजनानां हृद्वाष्पो येन तस्य । अभिनवेन सुरभिणा वसन्तेन सुरभितं सुगन्धीकृतमपि वनं स्वैः स्वैः कौशलैः शलन्ति मिलन्ति अतिचारिमचारीणि अतिचारुत्वगामीनि यानि महाशिल्पानि तेषां कल्पनाभिराकल्पस्य वेशस्य यन्नानाविधत्वं तेन भूषितं मण्डितं भूषितं भुवि पृथिव्यां उषितं स्थितम् ॥८८॥

दूरेरिणा दूरं ईरितुं व्याप्तुं शीलमस्य तेन ॥ ८९ ॥

अनुरथ्यं रथ्यायां रथ्यायां प्रतिमार्गमित्यर्थः । उदन्ते वृत्तान्ते ॥ ९० ॥

आत्मनीनैः आत्महितैः संदिदृक्षा चिकीर्षाभ्यां व्यग्रं यथास्यात्तथा ॥९१॥

वेषाः षोडशाकल्पाः वासांस्यतिवैचित्र्यात्ततः पृथगुक्तानि भूषा द्वादशाभरणानि आदिशब्दात्समयोचितकौसुमटकुटिकाकन्दुकादि ॥ ९२ ॥

एवं चागामिनीर्यामिनीर्यापयिष्यथ प्रमदा मदासङ्गेनेति कृष्णेन दत्ताश्वासाश्चासादितभूरिसंकल्पाः कल्पायुतमिव क्षणमपि मन्यमानाः कुमार्य्योऽपि साध्वसाध्वसा एव यदि समुपसेदुस्तदा काञ्चनकाञ्चनलतोद्यानपरम्परां परां जङ्गमामिव मन्वाना वनदेवता अपि ता अपि वीक्ष्य विसिस्मियिरे ॥ ९३ ॥

प्रणयादरादराः पूर्ववद्वसन्तमहा महानुरूपवेषादिभिरभूषयन्नपि च ॥ ९४ ॥

यथा । कचौघे पुन्नागं वकुलमुकुलानि भ्रमरके-
ष्वशोकं सीमन्ते श्रवसि सहकारस्य कलिकाः ॥
स्तनाग्रे वासन्तीकुसुमदलमालेति कुसुमैः ।
स्वयं वृन्दा राधां सपदि मुमुदेऽलंकृतवती ॥ ९५ ॥

तथान्याश्चान्यासां मधुमदमहोत्साहमहिम-प्रमुद्यच्चित्तानामहमहमिकासत्वरहृदः ।
प्रसूनालंकारै रुचिररचनैः प्रत्यवयवं विलासैः सौरभ्यप्रणयिभिरलंचक्रुरभितः॥९६॥

किंच । रत्नालंकरणानि काञ्चनमयीः शाटीश्च कुर्पासक-
श्रेणीश्चातिविचित्रताः सुमृदुलाश्चीनोत्तरासङ्गिनीः।
तांवूलान्यनुलेपनानि विविधाः पौष्पीः स्रजो गन्धिनीः॥
स्वच्छन्दं सुषुवुः सकल्पलतिकाः कल्पद्रुमाः सर्वतः ॥ ९७ ॥

किंच । चाप्यच्छेद्यसदच्छजातुषपुटीगर्भेषु संपूरितां
नानावर्णविलासचूर्णपटलीं पङ्कञ्च कास्तूरिकम् ।
पौष्पं कार्मुकमायुधं च विविधं नानाविधान् कन्दुकान्
रत्नानां जलयन्त्रकानि सुषुवुःकल्पद्रुमाणां गणाः॥९८॥

---

हे प्रमदा मदासङ्गेन मम सम्यक् सङ्गेनेति वस्त्राहरणदिने दत्त आश्वासो याभ्यस्ताः कुमार्य्योपीति तावत्कालविवासहिष्णुतया तत्पूर्वमपि विहारं प्रापुरेव किंतु रासविलासवतीषु यामिनीषु विहाराधिक्यविवक्षयैव तथोक्तिः भूम्ना व्यपदेशा भवन्तीति न्यायात्काञ्चन काञ्चिदपूर्वामित्यर्थः । काञ्चनमयीनां लतानामुद्यानस्य परम्परां सन्तति परामुत्कृष्टाम्. ता अपि कुमारीरपि राधाद्या व्यूढास्तु वीक्ष्य किं मुतेत्यर्थः ॥ ९३ ॥

प्रणयेन अदरः अनल्प आदरो यासुताः ॥ ९४ ॥

भ्रमरकेषु ललाटकम्प्यलकेषु स्वत्रनजैर्वृन्दावनो ॥ ९५ ॥

अन्यावृन्दानुवर्त्तिन्यो वनदेवता अन्यासां चन्द्रावल्यादीनां प्रत्यवयवमलंचक्रुरित्यन्वयः कीदृश्यः अहमहमिकया इयमहमेनामलंकरोम्येषाअहमेवैनामलंकरोमि न त्वमित्येवंरूपया सत्वरं भूषयितुं त्वरायुक्तं हृन्मनो यासां ताः "अहमहमिका तु सा स्यात् परस्परं यो भवत्यहंकार" इत्यमरः ॥ ९६ ॥

कुर्पासकश्रेणीः कञ्चुलिकाततीः। कीदृशीः चीनोत्तरासङ्गिनीः चीनोत्तरासङ्गाः सूक्ष्मोत्तरीयाणि सन्तीः। गन्धिनीः प्रशस्तगन्धवतीरिति स्रजो विशेषणम् ॥ ९७ ॥

जातुषपुटः जतुविकारसंपुटाः "त्रपुजतुनोः षुक् च" इति षुगणौ ॥ ९८॥

तेषामनुद्वृत्तिः ॥ ८६ ॥

अथ प्रथमप्रथमनुरागमावहन्तीनां गोकुलकुलललनानां ललनानां परिपूर्त्तये कापि वसन्तोत्सवलीलावली वलीयसी विरचनीया ॥ ८७ ॥

इति मनसि विचारयतो रयतो लब्धप्रमोदस्य प्रमोदस्यमानप्रणयिजनहृद्राष्प्रस्य निखिलसौभगवतो भगवतो व्रजराजयुवराजस्याशयं विदित्वा वनदेवता एव ता एवमभिनवसुरभिसुरभितमऽपि वनं स्वस्वकौशलशलदतिचारिमचारिमहाशिल्पकल्पनाकल्पनानाविधत्वभूषितं भूषितं सकलसौभाग्यमेकीकृतमिव विदधति स्म ॥ ८८ ॥

तथा च। लाङ्गलैश्चमरीचयेनपुष्पा विपिनक्षोणीतलं मार्जितं कस्तूरीहरिणीगणेन विदधे स्वैः स्वैर्मदैर्वासितम्। पुष्पाणां मकरन्दविन्दुनिकरैः सिक्तं द्रुमाणां कुलैः सङ्गीतानि वितेनिरेऽलिनिवहैर्लास्यानि वीरुद्व्रजैः ॥ एवं सति। अथ प्राङ्मधुवासरे मधुमदक्रीडाविशेषालसः श्यामः श्यामलयन् दिशः स्वमहसां पूरेण दूरेरिणा। माधुर्यामृतशीकरोत्करकिरा तन्वापि वर्षाभ्रमं तन्वानोऽपि विधास्यतीह परितो मूर्त्तं वसन्तोत्सवम् ॥ ८९ ॥

इति मुहुरनुरथ्यं तथ्यमुद्घुष्यमाणेश्रवणनयनचित्तोद्घर्पवर्पिण्युदन्ते। सहजसदनुरागावेगविघ्नान्तराणामजनिविधुमुखीनां चित्तमुत्कण्ठमानम् ॥ ९० ॥

एवं सति। चन्द्रावल्या सह परिजनैः राधया स्वालिवृन्दैः श्यामादेव्या सह सहचरीमण्डलैरात्मनीनैः। श्रीवासन्तोत्सवरतिकलासंदिदृक्षाचिकीर्षाव्यग्रं जाग्रन्मधुमदहतव्रीडमुद्यानमीये ॥ ९१ ॥

ततश्च। वृन्दादिभिः सरभसं वनदेवताभिः प्रीत्यादरेण महताभ्युपगम्यमानाः कामं वसन्तमहमङ्गलवेषवासोभूषादिभिर्विदधिरे परिभूषितास्ताः ॥ ९२ ॥

माधवे भगवदिच्छावशादुक्ता क्वचन नवनवतयेति यथा प्रथमग्रीष्मानन्तरमेव प्रथमवर्षा तत एव प्रथमशरदित्ययम् ॥८६॥

अत एव प्रथमा प्रथा ख्यातिर्यस्य तादृशमनुरागं वहन्तीनां गोकुलकुलललनानां कुलाङ्गनानां या ललना वाञ्छास्तासां परिपूर्त्तये लल ईप्सायां युजन्तः ल्युडन्तो वा ॥८७॥

प्रकृष्टा मा शोभा तया उदस्यमानः उत्क्षिप्यमाणः प्रणयिजनानां हृद्राष्पो येन तस्य। अभिनवेन सुरभिणा वसन्तेन सुरभितं सुगन्धीकृतमपि वनं स्वैः स्वैः कौशलैः शलन्ति मिलन्ति अतिचारिमचारीणि अतिचारुत्वगामीनि यानि महाशिल्पानि तेषां कल्पनाभिराकल्पस्य वेशस्य यन्नानाविधत्वं तेन भूषितं मण्डितं भूषितं भुवि पृथिव्यां उषितं स्थितम् ॥८८॥

दूरेरिणा दूरं ईरितुं व्याप्तुं शीलमस्य तेन ॥ ८९ ॥

अनुरथ्यं रथ्यायां रथ्यायां प्रतिमार्गमित्यर्थः। उदन्ते वृत्तान्ते ॥ ९० ॥

आत्मनीनैः आत्महितैः संदिदृक्षा चिकीर्षाभ्यां व्यग्रं यथास्यात्तथा ॥९१॥

वेषाः षोडशाकल्पाः वासांस्यतिवैशिष्याततः पृथगुक्तानि भूषा द्वादशाभरणानि आदिशब्दात्समयोचितकौसुमलकुटिकाकन्दुकादि ॥ ९२ ॥

एवं यागामिनीर्यामिनीर्यापयिष्यथ प्रमदा मदासङ्गेनेति कृष्णेन दत्ताश्वासारचासादितभूरिसंकल्पाः कल्पायुतमिव क्षणमपि मन्यमानाः कुमार्य्योऽपि साध्वसाध्वसा एव यदि समुपसेदुस्तदा काञ्चनकाञ्चनलतोद्यानपरम्परां परां नम्रमामिव मन्याना वनदेवता अपि ता अपि वीक्ष्य विसिष्मियिरे ॥ ९३ ॥

प्रणयादरादराः पूर्ववद्वसन्तमहा महानुरूपकल्पादिभिरभूषयन्नपि च ॥ ९४ ॥

यथा । कर्णाग्रे पुन्नागं बकुलमुकुलानि भ्रमरके-
ष्वशोकं सीमन्ते श्रवसि सहकारस्य कलिकाः ॥
स्तनाग्रे वासन्तीकुसुमदलमालेति कुसुमैः ।
स्वयं वृन्दा राधां सपदि सुमुदेऽलंकृतवती ॥ ९५ ॥

तथान्यास्त्वन्यासां मधुमदमहोत्साहमहिम-प्रमुग्धचित्तानामहमहमिकासत्वरहृदः ।
प्रसूनालंकारै रुचिररचनैः सत्प्रययुगं विलासैः संरम्यप्रणयिभिरलंचक्रुरभितः ॥ ९६ ॥

किंच । रत्नालंकरणानि काञ्चनमयीः शाटीश्च कूर्पासक-
श्रेणीश्चातिविचित्रताः सुमृदुलाश्चीनोत्तरासङ्गिनीः ।
तांबूलान्यनुलेपनानि विविधाः पौष्पीः स्रजो गन्धिनीः
स्वच्छन्दं सुषुवुः सकल्पलतिकाः कल्पद्रुमाः सर्वतः ॥ ९७ ॥

किंच । वाष्पच्छेद्यसदच्छजातुषपुटीगर्भेषु संपूरितां
नानावर्णविलासचूर्णपटलीं पङ्कञ्च कास्तूरिकम् ।
पौष्पं कार्मुकमायुधं च विविधं नानाविधान् कन्दुकान्
रत्नानां जलयन्त्रकानि सुषुवुःकल्पद्रुमाणां गणाः ॥ ९८ ॥

---

हे प्रमदा मदासङ्गेन मम सम्यक् सङ्गेनेति यज्ञाहरणदिने दत्त आश्वासो याभ्यस्ताः कुमार्योऽपीति तावत्कालवियासहिष्णुतया तत्पूर्वमपि विहारं प्रापुरेव किंतु रासविलासवतीषु यामिनीषु विहाराधिक्यविवक्षयैव तथोक्तिः भूम्ना व्यपदेशा भवन्तीति न्यायात्काञ्चन काञ्चिदपूर्वामिस्यर्थः । काञ्चनमयीनां लतानामुद्यानस्य परम्परां सन्तति परामुत्कृष्टाम्. ता अपि कुमारीरपि राधाद्या व्यूढास्तु वीक्ष्य किं मुतेत्यर्थः ॥ ९३ ॥

प्रणयेन अदरः अनल्प आदरो यासु ताः ॥ ९४ ॥

भ्रमरकेषु ललाटलम्बमानकेशेषु स्वयं वनदेवी वृन्दावनी ॥ ९५ ॥

अन्या वृन्दानुवर्तिन्यो वनदेवता अन्यासां चन्द्रावल्यादीनां प्रत्यवयवमलंचक्रुरित्यन्वयः कीदृश्यः अहमहमिकया इयमहमेनामलंकरोम्येवाहमेवैनामलंकरोमि न त्वमित्येवंरूपया सत्वरं भूषयितुं त्वरायुक्तं हृन्मनो यासां ताः "अहमहमिका तु सा स्यात् परस्परं यो भवत्यहंकारः" इत्यमरः ॥ ९६ ॥

कूर्पासकश्रेणीः कञ्चुलिकाततीः । कीदृशीः चीनोत्तरासङ्गिनीः चीनोत्तरासङ्गाः सूक्ष्मोत्तरीयाणि तद्वतीः । गन्धिनीः प्रशस्तगन्धवतीरिति स्रजो विशेषणम् ॥ ९७ ॥

जातुषपुटः जतुविकारसंपुटः "त्रपुजतुनोः षुक् च" इति षुगणौ ॥ ९८ ॥

किंच। मातङ्गी नाम संगीतकनिगमकलाकौशलाचार्य्यवर्य्या
नानावीणाप्रवीणाः प्रणयिसहचरीः सङ्गिनीः संविधाय।
मूर्त्ते रागं वसन्तं सरिगमपधनीन् मूर्त्तिभाजः स्वरांश्च
स्त्रीवेशेन श्रुतीश्च प्रकटमुपचिताः कुर्वती प्रादुरासीत् ॥ ९९ ॥

प्रादुर्भूय सा भूयसादरेण दरेण च वराङ्गीनां प्रवरां वराम्बुजमुखीं वार्षभानवीमभितोऽभितोपवशंवदा वदाग्रणीर्यथवतस्थे तदावृन्दाभ्यभापत ॥ १०० ॥

श्रूयतामयि गुणमयि गुणकृतावधाना वधानाशु विस्रम्भम् ॥ १०१ ॥

इयं मातङ्गी नाम संगीतनिगमगमकचातुरीतुरीयाचार्य्या चार्य्यायास्तत्रभवत्या भवत्यानन्ददायिनि वसन्तोत्सवकौतुके कौतुकेन रज्यन्तीति कृत्वा संगीतसामग्रीमग्रीयामादाय भवतीमुपरञ्जयितुमागता ॥ १०२ ॥

इमाश्चास्याः सहचर्य्यो विविधवीणाप्रवीणाः प्रवरगुणभाजः ।
अयंतु । केशौघैविरचितशेखरः शिखण्डैः पुष्णानः परभृतमाम्रकोरकेण।
आमत्तः प्रकृतित एवमेघनीलः स्त्रीवेशस्तव निकटे वसन्तरागः ॥१०३॥

अथ तं प्रति प्रतिपन्नकौतुका कृष्णाकारतयारतया दिदृक्षयाक्षयानन्दा सरसभृकुटिनापाङ्गेनैव किंचिदीक्षयामास यदि वार्षभानवी ॥ १०४ ॥

नवीनपरिग्रहीतनारीवेषः स च वसन्तरागोऽन्तरागोचरं कमपि कृतार्थभावमात्मनो मन्यते स्म ॥ १०५ ॥

सा च मातङ्गी मातङ्गीव ललितगतिराह ॥ १०६ ॥

सरीति षड्जऋषभगान्धारमध्यमपञ्चमधैवतनिषादान् स्वरान् सप्तश्रुतीर्द्वाविंशतिं संगीताधिष्ठात्री देवतैव मातङ्गीनाम्नी सती प्रादुरासीदिति किन्नरलोकत इव गानप्रसिद्धिमवकलयितुमिव वृन्देच्छयाकल्पवृक्षद्वारैवेति तदानींतनी प्रतीतिस्तासाम् ॥ ९९ ॥

सा मातङ्गी भूयसा आदरेण दरेण संकोचेन च यथवतस्थे वदाग्रणीर्वदानां वाग्मिनीनांश्रेष्ठापि १००

गुणे गानाशिल्पमये कृतम् अवधानं यया तथा भूता सती आशु विस्रम्भं विश्वासं वधान कुर्वित्यर्थः ॥ १०१ ॥

संगीतस्य तन्निगमस्य गमकानां च, यद्वा संगीतस्य निगमेन यतस्तेषां गमकानां या चातुरी तया तुरीया चतुर्थी मुख्यामुख्यतरामुख्यतमातोप्यतिश्रेष्ठा इत्यर्थः । आचार्य्या च किंनरीणां अध्यापिका चेत्यर्थः । आर्य्यायाः पूज्यायास्तत्रभवत्या वसन्तोत्सवकौतुके भवति उत्पाद्यमाने। अग्रीयां श्रेष्ठाम् ॥ १०२ ॥

परभृतं कोकिलम् ॥ १०३ ॥

आरतयेति दिदृक्षयेत्यस्य विशेषणम् ॥ १०४ ॥

अन्तरागोचरम् अन्तःकरणानामप्यविषयम् ॥ १०५ ॥

ललिता गतिः पादन्यासः संगीतविन्यासभेदश्च यस्याः सा ॥ १०६ ॥

अवेहि वधेऽहिभोगस्य कुतुकिनः कृष्णस्य दयिते ऽयि ते चरणपरिचरणपरिचयाय समुपससाद। सरिगमपधनीनां मण्डलीयं स्वराणां तव चरणसमीपे योषिदाकारचारुः श्रुतिपरिषदपीयं विंशतिर्द्वियुक्ता नहि दधति विभक्तिं किन्नरीणां च कण्ठे १०७

तदा तदाकलय्य रसवशतो विशतो विचित्रभावे मनसो मुदर्थमुदर्थचमत्कारं किमपि ललिता ललिताक्षरमभाषत ॥ १०८ ॥

अयि संगीतदेवि किं न रराज किन्नरराजवधूगणः कण्ठेन श्रुतीर्विभाजयितुम्। १०९।

तां प्रति प्रतिजगाद मातङ्गी अयि। कफादिदूषिते कण्ठे तासां व्यक्तिर्न जायते। अतो वीणाद्वयं वक्ष्ये चलं चाचलमेव च॥ इति। हे परमे परमेष्ठिनैव चलाचलवीणे कृते चलवीणायां द्वाविंशतिरेव श्रुतयो निबद्धाः अचलवीणायां सप्तैव स्वराः ११०

किंबहुना पश्यन्तु श्यन्तु च संदेहं सर्वोपरीक्षया परीक्षया एता एताकाराश्चतस्रः खचस्य षड्जस्य श्रुतयः सुश्रुतयः सुदुर्विभाव्याः कण्ठस्य ॥ १११ ॥

इति चतुः श्रुतिभास्वरं स्वरं षड्जमालपन्त्यां तत्र तद्ध्वनि ध्वनिता सा षड्जस्य वनिताकारा तनुरतनुरम्या स्वयमेव ॥ ११२ ॥

तस्य चतसृणां श्रुतीनां स्वस्वभागं भागं कण्ठेन विधातुं धातुं च समारब्धवत्यां

हे कृष्णस्य दयिते प्रिये राधे। तस्य कीदृशस्य अहिभोगस्य कालियनागफणस्य वधे नाट्यमिषेण हिंसने कुतुकिनः "भोगः सुखेस्त्र्यादिभृतावहेश्च फणकाययोः" रित्यमरः तेन तद्दयितात्वात् तवापि नाट्यज्ञता महतीति भावः। अयि इति संबोधने। ते तव इयं स्वराणां मण्डली समुपससाद तथा इयं श्रुतिपरिषदपि या द्वियुक्ता विंशतिः श्रुतयः किन्नरीणां च किन्नरीणामपि कण्ठे विभक्ति विभागं न दधति, न प्राप्नुवन्तीत्यर्थः ॥ १०७ ॥

मनसो मुदर्थमानन्दार्थम्। कीदृशस्य, चित्रभावे विशतः प्रविशतः उदर्थः। उत्कृष्टप्रयोजनकः चमत्कारो यत्र तद्यथा स्यात् तथा ॥ १०८ ॥

किन्नरराजस्य वधूगणः कण्ठेन श्रुतीर्विभाजयितुं किं कथं न रराज न राजते स्म न समर्थ इत्यर्थः तेन स्वेषां तत्सामर्थ्यं द्योतितम् ॥ १०९ ॥

तासां श्रुतीनाम् ॥ ११० ॥

पश्यन्तु तत्रभवत्यः सर्वासां श्रुतीनाम् उपरि अग्रे ईक्षया दृष्ट्या एताश्चतस्रः षड्जस्य श्रुतयः संदेहं श्यन्तु क्षिण्वन्तु कीदृश्यः एताकाराः शबलवर्णाः "शबलैताश्च कर्बुरे" इत्यमरः सुश्रुतयः सुश्रव्याः ॥ १११ ॥

अस्य एता इत्यङ्गुल्या एव तं ताश्च दर्शयित्वा आलपन्त्यां सत्यां तत्रालापे तद्ध्वनि कण्ठवर्त्मनि षड्जस्य तनुः स्वरूपं स्वयमेव ध्वनिता निजलक्षणोपलब्धेः सापि ध्वनति स्मेत्यर्थः वनिताकारा स्त्री रूपा योषिदाकारचारुरित्युपक्रान्तत्वात् ॥ ११२ ॥

ततश्च तस्य षड्जस्य चतसृणां श्रुतीनां स्वं स्वं भागं कण्ठेनैव भागं भायुक्तं विधातुं कर्तुं धातुं च सम्यगारब्धवत्यां सत्यां तासां श्रुतीनाम् एकापि तनुः एकमपि स्वरूपं सविशेषं

25822

सत्यां सविशेषं नैकापि तासां तनुः संवादवती बभूव ॥ ११३ ॥

अथ तु सा संगीतप्रवीणा वीणायां चलायामेव षड्जस्य चतस्रः श्रुतीर्यथार्थविक्रमेण क्रमेण तन्त्रीषु वादयामास तदा दयामासत दाक्षिण्येनैव ताः श्रुतयः श्रुतय इव सतो यथार्थवादिन्य एवासन् ॥ ११४ ॥

एवं सति चमत्कारकारणे तस्मिन् संगीतविद्याविनोदे संगीतविद्या विनोदेन कापि राधायाः सहचरी चरीकरीति स्म परिहासमिव ॥ ११५ ॥

अयि संगीतदेवते तदेतत्ते परमकौशलं यदयमेकः स्वरो विकस्वरोऽविकलश्चतुर्धा विभज्य तन्त्रीषु विशकलितःकलितःनैकापि श्रुतिर्निषादस्पर्शिनी,न कापि ऋषभस्पर्शिनी ॥ ११६ ॥

. किंतु स्वरपरिचयः स्वरपरिचयवतां दुर्लभ एव ॥ ११७ ॥

अपितु यमस्या वार्षभानव्या नव्या कापि सखी सुलालिता ललिता नाम कण्ठे नैव विभाजयितुं समर्था भवति । भवति चेत् कुतुकं तदादिश दिशमसौ दर्शयतु स्वकौशलस्य लस्यमानतायाः ॥ ११८ ॥

कस्य स्वरस्य काः श्रुतय इत्यपरिचितानामपि चितानामपि चैकत्र सर्वासामासामासाधारण्येनैव द्वाविंशतिक एव गणः परिचाययितुं शक्यः कण्ठोन्नीतश्रुतिमतिश्रुतिमतिपत्त्येति एवं सति वनदेवतास्तामूचुः अयि संगीतविद्ये संगीतविधेयमनया देव्या चतुर्मुखमुखनिर्गतेव व्याख्याता ख्याता चेयं वो विरञ्चिमपञ्चत एव हि वह्निरितितदुभयमेव निरवद्यम् ॥ ११९ ॥

---

यथा स्यात् तथा न संवादवती बभूव निजलक्षणानुपलब्धेर्नानुध्वनति स्मेत्यर्थः तेन कण्ठे स्वरा एव उत्पद्यन्ते न श्रुतय इति दर्शितम् ॥ ११३ ॥

दयामासत स्वरूपोपलम्भादनुध्वननेन दयामकुर्वन्नित्यर्थः। "ऋषयः सत्रमासतेतिवत्" यद्वा दयां प्रति आसत कर्तुं स्थिता इत्यर्थः। श्रुतय इव वेदा इव यतः यां वीणांप्राप्य ॥ ११४ ॥

संगीतविद्येति कर्तृपदं विनोदेना विशिष्टनोदेन प्रेरणयेत्यर्थः संबन्धानुक्तिः प्रेरणस्यान्यालक्षितत्वबोधिका परीहासमिति सौहार्दसूचनार्थम् इवेति पराभवदाने तात्पर्य्यात् ॥ ११५ ॥

· एकः स्वरः षड्जाख्यः चतुर्धेति चतसृणां श्रुतीनां प्रत्येकं योगात् विशकलितोऽखण्डितः कलितोनिर्दिष्ट उद्गीतो वा ॥ ११६ ॥

स्वराणां परिचयः । स्वःस्वर्गेऽपरिचयवतां गन्धर्वाना मित्यर्थः अत्र षष्ठी स्वरसंबन्धापेक्षया ॥ ११७

तदा आदिश आज्ञापयस्वकौशलस्य या लस्यमानता तस्यादिशम् असौ ललिता दर्शयतु आदिशेति गौरवप्रदानं स्वेषां शालीनताव्यञ्जनाय ॥ ११८ ॥

सैव कीदृशी दिगित्यपेक्षायामाह एकत्र स्वरे चितानां कलानामप्यासां श्रुतीनां आसाधारण्येनैव असाधारणानां भाव आसाधारण्यं तेनैव ॥ ११९ ॥

अथ मातङ्गीस्तोभजनितबाधा राधाऽरालीकृतचिल्लीलता चिल्लीलतापरमा परमाप यदि खेदं तदा स्वयमुवाच वाचमयथामतिके संगीतविद्ये भवती निजगाद यदशक्यं देवतानां तानांशकरणं श्रुतीनां श्रुतीनां भिन्नार्थकरणमिति तत् किं मानवानां नवानां प्रयत्नसाध्यम् ॥ १२० ॥

तदलीकवादिनि विरम रमयापि नैतत् कर्तुं शक्यते किंपुनर्ललितया तदपि दयितसंगीते संगीतेन तोषयितुमर्हति तत्रभवती भवती स्वाधीनवनदेवतावृन्दां वृन्दाम् ॥ १२१ ॥

वृन्दाह न यावत् श्रीकृष्णो नवसन्तं वसन्तं गायन्निह विहरति रतिमान् न तावद्वसन्तो गेयस्तदपरोपरोऽङ्गीक्रियतां रागो रागोदयेनेति रसाब्धिवेलावली वेलावलीरागोगातुमारभ्यत तयाततया कौतुकेन केनचिदेव देवतया मातङ्गया॥१२२॥

तदनु तदनुगानकारिणीनां गणो विपञ्चीपञ्चीभूतासु महतीमहतीत्रिकविलासिकालासिकान्त कच्छपीकच्छपीवरस्वरमण्डलिकासु वीणासु प्रवीणासु प्रपञ्चयामास रञ्जितश्रुति श्रुतिजातं पञ्चविधमप्येकामिव ॥ १२३ ॥

तासां तथाविधस्वरसमुत्कण्ठकण्ठतन्त्रीसमुद्गतो मुद्गतोत्कर्षकारी का रीतीः प्रमोदस्य न जनयामास स किल निनादः ॥ १२४ ॥

एवं च तत्रावहितासु हि तासु राधाप्रभृतिषु वृन्दादिषु वनदेवतासु तासु च दूरादेव देवलोकस्य चमत्कारी कश्चन ॥ १२५ ॥

---

मातङ्गया स्तोभेन मानदस्ताभाव्यात् कारुण्येन जनिता बाधा पीडा यस्याः सा स्वसखीं संगीतविद्यां अरालीकृता कुटिलीकृता चिल्लीलता ययासा चिल्लीलता चिन्मयल्लीकत्वं तेन परमा सर्वसुखदेत्यर्थः हे अयथामतिके मिथ्याबुद्धिके देवतानामपि यदशक्यम् श्रुतीनां तानैः कण्ठको पैरेवअंशकरणं भागकरणम् ॥ १२० ॥

दयितं संगीतं यस्या हे तथाभूते मातङ्गितवसंगीतं ममातिरोचकमिति संमानप्रयोजनकोभावः १२१

नवश्चासौ संश्चेति स तथा तं रसाब्धेर्वेलावली जलराशितुल्यः वेलास्यात्तीरनीरयो रित्यमरः वेवावलीरागो विलावल इति पाश्चात्येषु ख्यातः तया मातङ्गया गातुम् आरभ्यत कीदृश्या केनाचिदेव कौतुकेन आततया परिपूर्णया ॥ १२२ ॥

तदनु तदनन्तरंतस्यामातङ्गया अनुगानकारिणीनां गणो विपञ्चयपञ्चीभूतासु विस्तृतीभूतासु महत्यादिषु वीणासु वीणापञ्चविध्यात् पञ्चविधमपि श्रुतिजातम् एकमिव प्रपञ्चयामास. रञ्जिते श्रुती कर्णौ येन तद्यथा स्यात्तथा महतीमहेच उत्सवे तीव्रा कविलासिका च लासिनी कांता कच्छपी च कच्छः पीवरो यस्याः सा स्वर मण्डलिकाचतास्तथा तासु ॥ १२३ ॥

स निनादः प्रमोदस्य आनन्दस्य का रीतीर्न जनयामास अपितु सर्वाएव कीदृशः तथाविधे स्वरे सम्यगुत्कण्ठा यस्य स कण्ठश्चतन्त्री च ताभ्यां समुद्गताः समुत्थितः मुद्गतमानन्दनिष्ठमुत्कर्षं कर्त्तुंशीलमस्य सः ॥ १२४ ॥

तत्र निनादे अवहितासु कृतावधानासु ॥ १२५ ॥

वीणावेणुमृदङ्गकांस्यपणवैः प्रत्येकसंदर्शनादेव व्यक्ततमैःसमानमुखरैरुद्वान्त एकः स्वनः आमोदी समभागपिष्ट इव नो भेदक्षमः कर्णयोः सर्वाङ्गीणकयक्षकर्दम इवानन्दैककन्दोऽभवत् ॥ १२६ ॥

तन्निशमनेन शमनेन कर्णयोः कलयता जयतालादियुतेऽपिमातङ्गीसंगीतरसेऽपि ताः सावहेला हेलालोलमानसा मृग्य इवसमुत्कर्णाः कर्णायतलोचनाः लोचनाञ्चलचञ्चलचटुलतया परितः परिपश्यन्ति स्म ॥ १२७ ॥

ततस्तत्रैवाध्वनि ध्वनितेन वसन्तरागेणान्तरागेणायमपि मूर्त्तो योषिदाकारतो रतो वसन्तरागो ध्वनति स्म ॥ १२८ ॥

ततश्च तेनानुमातामितानन्दनन्दकिशोरवसन्तोत्सवागमनमननुभूतभूतलप्रमोदं निर्णीय वनदेवतानिभाल्यभाल्यवगाढगाढमाधुर्य्यधुर्यतनवो नवोल्लासेनारादालोक्य कृष्णं निर्वर्णयन्ति स्म ॥ १२९ ॥

अयि वार्षभानवि न विना'कृष्णोत्सवेनैतादृशो दृशोरानन्दः सपद्यतेऽद्य ते स एव हृदयाधीशो धीशोभिनाभिनायकेन केनचिदानन्दगुरुणा गुरुणा सुरभिकालागमेन संपादितसमुल्लासो मुल्लासोचितवेशभूषः समधुमदमदनः सह सहचरगणेन भगणेन गवानिन्दुरिव संपाद्यमानवसन्तोत्सवः ॥ १३० ॥

---

वीणादिभिर्मिलित्वा एक एव स्वनः आनन्दैककन्दः सुखैकमूलोऽभवत् । कीदृशैः प्रत्येकम् इयंवीणा अयं वेणुरयं मृदङ्ग इत्येवं दर्शनादेव व्यक्ततमैः श्रवणात् तु विभक्तुमशक्यैरित्यर्थः । आमोदीव्यापकः सर्वाङ्गीणंसर्वाङ्गकसुखं यतस्तादृशो दक्षकर्दम इव तत्सर्वादे रित्यादिना खःकुङ्कुमागुरुकस्तूरीकर्पूरं चन्दनं तथा । महासुगंधिरित्युक्तो नामतो यक्षकर्दमः । इति धन्वन्तरिः ।१२६।

तन्निशमनेन तच्छ्रवणेन हेतुना। कीदृशेन कर्णयोः शं सुखम् अनेन स्वनेन कलयता कुर्वता सावहेलाः सावज्ञाः हेला भावविशेषस्तया लोलमानसाः । लोचनाञ्चलानां चञ्चलचटुलतया चञ्चलतया चटुलतयाचेत्यर्थः ॥ चटुलः सुन्दरे चले इति धरणिः॥ १२७ ॥

अन्तरागेणतन्मध्यगेन ॥ १२८ ॥

न अनुभूतो भूतले प्रमोदो यस्य तत् । वनदेवताभिरेव निभाल्या निभालयितुं शक्या या भाली शोभाश्रेणी तया अवगाढं कृतावगाढं गाढं निबिडं यन्माधुर्य्यं तस्य धुर्य्यास्तनवो यासां ताः ॥ १२९ ॥

अद्य ते तव स एव हृदयाधीशः । कीदृशः सुरभिकालागमेन संपादितसम्यगुल्लासः । तेन कीदृशेन धियं शोभयितुं शीलं यस्य तेन अभिनायकेन अभिनयकर्त्रा विदग्धनटेनेत्यर्थः । आनन्द एव गुरुरुपाध्यायस्तेन सह वर्त्तमानेनेत्यर्थः स्वयमपि गुरुणा श्रेष्ठेन मुल्लास आनन्द प्रकाशस्तदुचितवेषभूषः । मधुना वसन्तेन मदो यस्य स चासौ मदनश्चेति तेन सह वर्त्तमानः भगवान् श्रीयुक्तः भगं श्रीकाममाहात्म्येत्यमरः ॥ १३० ॥

सबहुतरखेलनसामग्रीकमग्रीकरणायेव परमाप्रमोदस्य सुसज्जोऽसुसज्जोपाय योषाणामयमयमुज्जिहीते ह्री ते सौभाग्यस्यसम्पदो महिमा हि मादृशा किं वर्णनीयः ॥ १३१ ॥

पश्य पश्य। एकेनैवशिखण्डकेन चलता रोलम्बसंभाषिणा पुंनागस्तवकेन चारु ग्ररजःपूरेण चालंकृतम् तिर्य्यङ्न्यासविशेषशोभमलिकप्रान्तावलम्बालसं शुभ्रोष्णीषमनीषदुज्ज्वलमतिश्लक्ष्णंशिरस्यादधत् ॥ १३२ ॥

किंच। वल्गद्वल्गुमणीन्द्रकुण्डलधुरा दीर्घीकृतच्छिद्रयो र्बिभ्रत्तत्क्षणभुग्नचूतमुकुलं श्रीकर्णयोरेकतः गण्डे तत् प्रतिबिम्बभाजि मधुरां कांचित् त्विषो मञ्जरीं ग्रीवासीम्नि विलासबद्धचिकुरस्तोमेऽतिमुक्तस्रजम् ॥ १३३ ॥

किंच। लीलाङ्गीकृतपीतकञ्चुकपरिप्रोदञ्चितालंकृतिश्चञ्चत्काञ्चितटीनटीं पशिमयीं कर्पूरधानीं दधत् । दोलत्सारसनाग्रचुम्बनलसज्जङ्घातलः किङ्किणीरत्नोद्यच्छुटिकःपदाम्बुजलसच्छिञ्जानमञ्जीरकः ॥१३४॥

अपिच। वेणुं वामकरेण दक्षिणकरेणांदोलयन् कन्दुकं सैन्दूरं न विदूरयन् वदनतो रागं वसन्ताभिधम् उद्गीते सुबलादिभिः प्रियसखैः श्रीमूर्द्धनिर्धूनने नास्वादं प्रथयन्मदालसलसद्घूर्णायमानेक्षणः ॥ १३५ ॥

पार्श्वद्वये प्रियसखद्वयदीयमानं ताम्बूलिकादलपुटं पुरटप्रकाशि स्निग्धेन शोणरदनच्छदनद्वयेन लीलाक्रमादुभयतः कुतुकेन गृह्णन् ॥ १३६ ॥

परंच। उद्धूनितैस्तत इतः पटवासपूरैर्बालारुणाकृतिभिरुद्भटगन्धवद्भिः अत्यन्तलाघवतया नभसि भ्रमद्भिरमासमौलितिलकालकपक्ष्मलक्ष्मीः ॥ १३७ ॥

---

सबहुतरेति क्रियाविशेषणम् परमप्रमोदस्य अग्रीकरणाय प्रधानीकरणार्थम् तेनापि किं फलमत आह योषाणाम् स्त्रीणाम् असुभिः प्राणैः सज्जोप उत्तमा सेवा तदर्थम् योषाः स्वप्राणानपि प्रदाय मासेवन्तामित्येवमर्थमित्यर्थः । अयमयमिति हर्षेण द्वित्वम् ह्री विस्मये ते तव १३१

रोलम्बसंभाषिणा भ्रमरझङ्कारवता अनीष दुज्ज्वलमिति अग्रभागे रागचूर्णधूसरितत्वात् ॥१३२॥

चूतमुकुलमित्यश्लीलत्वमक्षरपरिवृत्त्या पाठात् सोढव्यं मुकुलितपुलकितचूते मुकुल प्रसूतिश्चूतानां सखि शिखरिणीव मित्यादि महाकविप्रयोगात् अतिमुक्तस्रजं माधवीपुष्पमालाम् ॥१३३॥

चञ्चन्त्यां काञ्चितट्यां नटीं चञ्चलाम् दोलता सारसनस्याग्रेण लम्बमानपट्टसूत्रस्तवकेन चुम्बनाल्लसत् विराजमानं जङ्घातलं यस्यसः ॥१३४ ॥

सैन्दूरमरुणचूर्णकल्पितम् " सिन्दूरंरक्तचूर्णके " इति मेदिनी ॥ १३५ ॥

पुरटप्रकाशि कनकत् प्रकाशधारि ॥ १३६ ॥

पटवासपूरैर्वसन्तखेलाचूर्णपटलैः बालारुणा कृतिभिः उदितसूर्य्यवद्वर्णैः अत्यन्तं लाघवं येषां तेषां भावस्तत्ता तया ॥ १३७ ॥

अपिच । गायन्तो मृदुचर्चरी द्विपदिकां ग्रामैस्त्रिभिः सप्तभिर्निर्मिश्रश्रुतिभिः स्वैरुपचिते रागे वसन्ताभिधे । अन्योन्यं कुतुकेन केनचिदमी घ्नन्तो मुहुः कन्दुकैः सैन्दरभितोऽभितः सहचराः खेलन्ति नृत्यन्ति च ॥ १३८ ॥

तदाकलितं ललितं लसत्तरमेतदतिरुचिरं रुचिकरं जातमचेतनानामपि यदिमं लासलालसंलसन्तमालोक्य वनलता अप्यनेकविधं भावमाविष्कुर्वन्ति ॥ १३९ ॥

पश्यत पश्यत । आमन्दचन्दनसमीरगुरूपदेशात् मत्यग्रपल्लवकराभिनयं दधत्यः गीतेन भृङ्गमिथुनमकरस्यवल्यः कृष्णावलोकनमुदा सरसं नटन्ति ॥ १४० ॥

तत्रैव काचित् । संत्रासं नवदलपाणिकम्पितेन मोत्साहं कुसुममयेन सुस्मितेन । रोच भ्रमरघटाकटाक्षपातैरासन्ने मधुमथने करोति वल्ली ॥ १४१ ॥

अन्याचेयम् । एकेनानिलचपलेन यत्रहस्तेनारौत्सीत् स्तवकपयोधरं परेण आक्षेपं न न न न नेति चञ्चलालिभ्रूभङ्ग्या व्यथित हरिं विलोक्य वल्ली ॥ एहीत्याह्वयतः इवापरेण कांचित् सव्रीडा कुसुममयं स्मितं व्यधत्त ॥ १४२ ॥

तदत्र सचेतनानां क नाम धीरताधीररतास्तु ॥ १४३ ॥

तदा तदाकलय्य मन्दमधुरमधुरस्यस्मितमुवाच वृषभानुनन्दिनीङ्गितज्ञा श्यामा श्यामामृतकरादेव ते वनदेवतेऽवनमानन्दस्य तदेतस्यैव खेलनं सुखेऽलनं सुष्ठुक्रियतां किमस्माकमुत्तम्भनेन यच्चेत्थमात्थ मान्यथा तद्भवितुमर्हति ॥ १४४ ॥

किंतु कौतुकलो भवति भवति हीदृशं कुलजा[illegible]द्व्रीवाटिकाकवाटिका कठोरत्वं यदेषा खरतरतथाविधोत्कण्ठाकुठारेणापि छेत्तुं न शक्यते ॥१४५॥

त्रिभिर्ग्रामैः षड्जमध्यमगान्धाराख्यैः निर्मिश्राः श्रुतयः प्रत्येकमेव येषां तैः स्वरैः सरिगमपधनिभिः ॥ १३८ ॥

तत्गानमाकलितं श्रुतं सत् अचेतनानामपि रुचिकरं जातम् ॥ १३९ ॥

कृष्णावलोकनमुदा कृष्णकर्तृकावलोकनेन मुद्हर्षस्तया इति कृष्णस्य सम्पातम् ॥ १४० ॥

मधुमथने श्रीकृष्णे स्तवकग्रहणार्थमासन्ने सति काचिद्वल्ली कुट्टमितभाववतीति भावः ॥ १४१ ॥

स्तवकमेव पयोधरं स्तनम् एकेन वामेन पत्ररूपहस्तेन अरौत्सीत् आवृतवती एहीति अपरेण दक्षिणेन पत्र हस्तेन कृष्ण चाञ्चल्यदृष्ट्या स्वसाहाय्यार्थं काचित्सखीमाह्वयत इव व्यधत्त तिरोऽधत्त विहृतनामायं भावस्तल्लक्षणं यथा ह्रीमानेर्ष्यादिभिर्यत्र नोच्यते स्वविवक्षितं व्यज्यते चेष्टयैवेदं विकृतं तद्विदुर्बुधाः इति ॥ १४२ ॥

धीरता धैर्य्यं धिया बुद्ध्या रता संसक्ता कास्तु न कापीत्यर्थः ॥ १४३ ॥

हे वनदेवते वनाधिष्ठात्रि वृन्दे श्यामामृतकरात् श्यामचन्द्रात् श्लेषभङ्ग्या श्यामस्य कृष्णस्य अमृततुल्यहस्तात् ते तव आनन्दस्यावनं पालनम् तत् तस्मात् एतस्यैव खेलनं सुष्ठु क्रियतां कीदृशम् अलनं परिपूरकम् "अल भूषण पर्य्याप्त्यादिषु भ्वादिः । यत् इयम् अन्यथा तत् मा भवितुमर्हति ॥ १४४ ॥

कुलजानां कुलस्य जातिकृता स्वभाव सिद्धाया ह्रीवाटिकायाः कवाटिका तस्याः कठोरत्वं हि ईदृशं भवति यद्यस्मादेषा कवाटिका ॥ १४५ ॥

या समीहितमऽपि हितमऽपिधत्ते धत्ते च हृद्व्यथां कामपि ॥ १४६ ॥

तेनाधुना साधुनाऽसाधारणेन धैर्य्येणैव यज्यते तदेव निरवद्यमद्यमहोत्सववासरे ॥ १४७ ॥

विशिष्टा शिष्टाचारपरिभाषा रचितदौर्भगापचितिरऽपचितिरऽनङ्गस्य विधातव्येति व्येति न मनोरथोऽस्माकम् ॥ १४८ ॥

तेन तत्संपादनायानायासलभ्यमानकुसुमचयावचयावसरेण वर्त्तमाना निरीक्षामहे महेन महितं सकलकलाकलापे हे शुभंयुवरा युवराजं व्रजराजस्य ॥१४९॥

सरसमतो रसमतोचितमस्या वचनमाकलय्य पुनरपि वृन्दावनदेवी श्रीराधामुवाच ॥ १५० ॥

भवतु नाम नामरूपाकृतिकृतिनीनां भवतीनामिदमेव सौशील्यं तथापि मातङ्गीगीतिसंगीतसहकारा सहकाराटवीमध्यमध्यवस्थाय चन्द्रावली बलीयसा महोत्सवानुकारेण कुतूहलहलहलापुरस्सरं पुरस्सरन्ती त्वदीया च सखी चारुचन्द्रा रुचन्द्रापयतु मादृशां दृशां सफलयतु च वसन्तरागस्य स्वरश्रुतीनां मूर्तिमत्तां मत्तां च प्रमोदरभसादरभसा मातङ्गीम् ॥ १५१ ॥

इति वनदेवतावचसा च सा सचारुचन्द्रा चन्द्रावली विविधवीणाप्रवीणा प्रकटितवसन्तसंततसंतन्यमानश्रुतिश्रुतिसुखदं गायन्त्या संगीतदेवतया आद्रियमाणा ॥ १५२ ॥

---

*या हृदो मनसो व्यथां कामपि अनिर्वाच्यां धत्ते धारयति तथापि हितमपि समीहितं वाञ्छितमऽपिधत्ते आवृणोतीव नतु प्रकाशयतीत्यर्थः । १४६ ।*

अथ तदेव निरवद्य निर्दूषणम् । १४७ ।

किंच अद्य अनङ्गस्य कन्दर्पस्य अपचितिः पूजा विधातव्या इति मनोरथोऽस्माकं न व्येति न विगतो भवति । पूजा नमस्याऽपचिति रित्यमरः । कीदृशी रचिता दौर्भगस्य अपचितिः क्षयो यया सेति प्रयोजनमुक्तम् ॥ १४८ ॥

तेन तस्याः अपचितेः संपादनाय अनायासेनैव लभ्यमानानां कुसुमचयानाम् अवचयावसरे वर्त्तमानाः सखी वयं व्रजराजस्य युवराजं निरीक्षामहे हे शुभंयुवराः परमशुभयुताः ॥ १४९ ॥

अत एतदनन्तरं रसगतं संमतम् उचितं योग्यं अस्या वचनं सरसं यथा स्यादेवमाकलय्य श्रुत्वा १५०

नामादिभिः कृतिनीनां योग्यानां । कृतीसयात् पण्डिते योग्ये इति मेदिनी । तथापि चन्द्रावली त्वदीया च सखी चारुचन्द्रासहकाराटवी आम्रवणं तन्मध्यमध्यवस्थाय मादृशां दृशां दृष्टीनां रुचं द्रापयतु कथंभूता मातङ्ग्या गीतं यत्संगीतं तेन सहकारः सहव्यापारो यस्याःसा पुरःसरन्ती अग्रगामिनी प्रमोदस्य गानानन्दस्य रभसाद् वेगात् मत्तां मातङ्गीं सफलयतु सार्थकयतु स्वयं तु अरभसा सावधानेत्यर्थः ॥ १५१ ॥

चारुचन्द्रया सह चन्द्रावली सहकाराटवीं गत्वा यदि वसन्तक्रीडां आरेभे तदा राधा तस्मिन् एव देशे अतिमुक्तवाटिकायां विललासेत्यन्वयः । प्रकटिताभिर्वसन्ते संततं संतन्यमानाभिः श्रुतिभिः श्रुतिसुखदं कर्णसुखदापि यथा स्यात्तथा गायन्त्यासंगीतदेवतया मातङ्ग्याआद्रियमाणा १५२

कल्पद्रुतो द्रुतोदीर्णमहोत्सवक्रीडनककनककमनीयबालारुणारुणामोदमोदनविलासधूलीधूलीलया मणिखचितसुखचितसुमञ्जुलजलयन्त्रभरनिर्भृतजगुडजगुडकस्तूरिकाघनसारगन्धसारद्रवद्रवणखेलया च ॥ १९३ ॥

संगीततालसमं गमनमेव नटनयन्तीभिर्नयन्तीभिः प्रमोदस्य परां कोटिं कोटिं च स्वर्वाणिनीनां तिरस्कुर्वतीभिः सहचरीभिः सहसहर्षमारेभे मारेभेन प्रेरिता यदि वसन्तक्रीडाम् ॥ १९४ ॥

तदा सरसमधुमधुरस्मितं विस्मितं विरचय्य मनो मनोज्ञचरिता श्रीराधा च कियतीभिः सखीभिरुभयोऽभयतोपतो विलोकयन्ती कृतकुसुमावचयव्यपदेशे देशे तस्मिन्नेव विललास ॥ १९५ ॥

एवं सति तं देशमेव खेलनानुक्रमेण क्रमेण समनुसरत्सु सरत्सुखसंदोहदोहनपरेषु व्रजराजयुवराजयुवसहचरेषु पुरस्सरेण वटुनावटुनाटितरम्यहारेण कौतुकारोहसमानेन हसमानेन दिशि विदिशि वितीर्णनयनेन ॥ १९६ ॥

---

कल्पद्रुतः कल्पद्रुमात् द्रुतमेव उदीर्णा उद्गता चासौ महोत्सवे क्रीडनं यतः सा च कनककमनीया च कनकोत्तमवर्णा च बालारुणवत् उदितसूर्य्यवदरुणा च आमोदेन सौगन्ध्येन मोदनो हर्षकरी च या विलासधूली तस्या धूः कम्पनं प्रचलनं तद्रूपया लीलया मणिभिः खचितं च तत्सुखानां चितं समूहो यत्र तच्च सुमञ्जुलं च यत् जलयन्त्रं तत्र भरेणातिशयेन निर्भृतस्य जगुडजगुडस्य कुङ्कुमगोलकस्य कस्तूरिकाघनसारगन्धसाराणां मृगमदकर्पूरचंदनानां च ये गन्धेन सारा द्रवास्तेषां द्रवणं क्षेपणवशात् प्रचलनं तद्रूपया खेलया च। गुडः स्याद्गोलके हस्तिसंनाहेक्षुविकारयोरिति मेदिनी ॥१९३॥

गमनमेव खेलोपयोगि द्रुतमप्यमन्दभेदैः स्वाभाविकं नटनयन्तीभिर्नटनं कुर्वतीभिः। संगीततालसमं यथा स्यादिति तादृशगमनानुसारेणैवोचिततालप्रयोगं तदनुकूलमेव संगीतं च कुर्वतीभिरित्यर्थः। अतं एवातिवैदग्ध्येऽप्यतिकौशलास्वर्वाणिनीनां स्वर्गनर्त्तकीनां कोटिमपि तिरस्कुर्वतीभिः। वाणिन्यौ नर्त्तकीमत्ते इत्यमरः ॥ १९४ ॥

मनो विस्मितं विस्मययुक्तं विरचय्य कृत्वा उभयतः श्रीकृष्णस्य गानादिकमेकतश्चन्द्रावल्या अन्यतो विलोकयन्ती। अभयं विजातीयदुष्प्रवेशवनमध्यस्थत्वान्निःशङ्कत्वं तच्च तोषं आनन्दश्च ताभ्याम् ॥ १९५ ॥

क्रमेण चरणविन्यासेन क्रमः शक्तौ परीपाट्यां क्रमं चलनकम्पयोरिति विश्वः। सरतां प्रसरतां सुखसमूहानां दोहनपरेषु प्रपूरकेषु सत्सु पुरःसरेण अग्रता कुसुमासवेन वटुना कोऽपि नादः शुश्रुवे। कथंभूतेन अवटौ घाटायां नाटितः भ्रूनृत्यभङ्गया स्कन्धग्रीवाचालनेन नर्त्तितो रम्यहारो येन तेन। कौतुकस्य आरोहेण हेतुना समानेन सगर्वेण ॥ १९६ ॥

दूरत एव महोत्सवमवृत्तचारुचन्द्राचन्द्रावलीप्रभृतिकलसंगीतसङ्गी तरलतरललितवलयलयप्रियंकरकरतालिकालिकान्तः सकलकलाकलापविदग्धमुग्धमुरजमृदङ्गवीणासंवादिवादित्रविलासिकालासकाचरणसंचरणसंचलन्मणिमञ्जीरनिक्कणक्कणसनाथः कोपि नादः शुश्रुवे ॥ १५७ ॥

श्रुत्वा च त्वाचमुद्धर्यमभिनीय समुत्कः समुत्कः प्रियवयस्यं श्रीकृष्णमुवाच १५८

प्रियवयस्य किमऽयमऽयतेऽस्माकमेव संप्रति प्रतिश्रुति श्रुतिनिकरोतिनिकरोति वा कोऽप्यपरोऽपरोक्ष एव केषांचन महोत्सवसङ्गी संगीतककलकलः १५९

तदवगन्तुमर्हमर्हत्तमैरेतादिति निगदितेन तेन किशोरवरमुकुटमणिना मणिनालंकारधारिणा स पुनरयमवादि ॥ १६० ॥

वादित्रध्वनिरयमन्यदीय एव तन्निभालय भालय कुतोद्यातोद्यान्तरध्वनिरयं रयं रयं गतः ॥ ६१ ॥

इति निगदितेन वटुनातिपटुनातिपरमोल्लासेन सत्वरमुपगम्याऽतिरमणीया रमणीमणीसभासभाजिता जिताम्बितनया नयार्जवजवाजवारुणकरचरणपल्लवापल्लवाग्रमवधूत्य माधवीकुसुममवचिन्वती न्वऽतीन्द्रिया भुवनमवतीर्णा वसन्तलक्ष्मीरिव प्रथमतो वार्षभानवी ददृशे ॥ १६२ ॥

तदव्यवहिता हिताचरणशालिनी ललिता ललिताकारा श्यामा च तद्दूरे महामहानन्दपरवशाश्चारुचन्द्राचन्द्रावलीप्रभृतयश्च ॥ १६३ ॥

---

नादः कथंभूतः तरलतराणां ललितवलयानां लयेन परस्परं संश्लेषेण प्रियंकराभिः करतालिकाश्रेणिभिः कान्तो रम्यः । सकलानां समस्तानां कलानां कलापे समूहे विदग्धाश्च ताः मुग्धानां मनोहराणां मुरजादीनांसंवादित्रं समेलकं यद्वादित्रं वाद्य तत्र विलासिकाश्चेति ताश्च लासिका नर्त्तक्यश्च तासां द्वयीषां चरणसंचरणैः सम्यक् तालानुसारेण चलतां मणिमञ्जीराणां निक्कणेन सनाथः ॥ १५७ ॥

त्वां च त्वगवं रोमाञ्चरूपमित्यर्थः समुत्कः द्रष्टुं समुत्कण्ठः समुत्कः सहर्षः ॥ १५८॥

प्रतिश्रुति प्रतिकर्णम् अस्माकमेव संगीतस्य श्रुतिनिकरः श्रुतिसमूहः अयते प्रत्यागच्छति कोऽप्यपरो वा अपरोक्षः प्रत्यक्ष एव सन् अतिनिकरोति अस्मन्महोत्सवकालमतिक्रम्य तिरस्करोतीत्यर्थः। निकरः स्यात् परिभव इति धरणिः ॥१५९॥

तत् तस्मात् एतत् अस्मदतिक्रामकं गीतम् अवगन्तुं ज्ञातुमर्हत्तमैरस्माभिरर्हम् उचितम् १६०

हे भालय कान्त्यालय कुतः स्थानात् अद्य अयम् आतोद्यान्तरध्वनिर्वाद्यान्तरशब्दः रयं रयं गतः वेगयुक्त लयं साम्य प्राप्तः लयस्तु त्रिविधः। प्रोक्तो द्रुतो मध्यो विलम्बित इति गीतप्रकाराः ॥१६१॥

इति निगदितेन वटुना सत्वरमुपगम्य वार्षभानवी ददृशे। सभाजिता स्तुता जिताम्बितनया सौन्दर्य्येण विजितलक्ष्मीका नयस्य नीतेरार्जवस्य ऋजुत्वस्य जवो वेगो यस्यां सा अतीन्द्रिया अमूर्त्तापि वसन्तलक्ष्मीर्भुवनमवतीर्णा मूर्त्तिमतीवेत्यर्थः ॥१६२॥

तद्दूरे सहकारवाटिकायां चन्द्रावलीप्रभृतयश्च ददृशिरे इति वचनविपरिणामेनानुषङ्गः ॥१६

दृष्ट्वा च स तरसाऽऽह साहसिके ललिते किमितिमितिमदेनोऽतिमदेनोऽन्वतिविधीयते ॥१६४॥

यदद्य नववसन्तमहे महेच्छस्य मम वयस्यस्य वयस्यस्य नवातिमुक्तस्य कुसुमं न केनापि गृहीतं ही तं तस्यातिप्रियमतिमुक्तं मुक्तं पल्लवैः कुसुमैरपि कुर्वन्ति भवत्यो दर्पवत्यो दर्पकदर्पकलाहारिणो न जानीथ मद्वयस्यस्य भुजभुजगभोगदर्पं तदिदानीमेवज्ञास्यथ ॥ १६५ ॥

तदहमितो गत्वा निवेदयामीति सत्वरं श्रीकृष्णमुपसृत्य वयस्य सम्प्रति प्रतिपन्नः किल वसन्तमहो महोदयस्य भवतः । यतः । वसन्तलक्ष्मीः स्वयमेवमूर्त्ता त्रिभूतिभिः स्वाभिरिवाङ्गनाभिः । इतो न दूरे विविधैर्विलासैर्गूर्णं वसन्तोत्सवमातनोति । तथाहि । आतोद्यं कातुपोद्यं भवतु भुवि तया सा च सङ्गीतभङ्गी स्वःसङ्गीतोद्धुराणामपि नहि विषयः कोऽपरस्तां तनोतु । सामग्री या च या चोत्सवरभसविधेर्नास्ति सा ब्रह्मशिल्पेऽनल्पेकल्पेत लोकः कथमहह महत्कौतुकं दृष्टमासीत्॥१६६॥

तत्र तु व्रजराजकुमारस्य मा रस्यतमा तादृशी महती महती व्रता ॥ १६७॥

सखाय ऊचुरयि कुसुमासव मा सबहुमानं परपक्षं स्तुहि वस्तु हि बहुमतं स्वमतमेव तत् त्वमधुना मधुना मत्तोऽसि ॥ १६८ ॥

स ऊचे नहि कुसुमासवः स्वयं माद्यति मादयत्येव सर्वान् तत्रापि नाहं सुकुसुमासवो यं पीत्वैव माद्यन्ति मम तुशब्देनैव सर्वे मत्ता भवन्ति ॥ १६९ ॥

श्रीकृष्ण आह साधु वयस्य साधु साधुना महोत्सवस्थली पुनरपि चाक्षोभवता भवता द्रष्टुमर्हा पश्चादस्माभिश्च ॥ १७० ॥

स कुसुमासव आह हे ललिते किं किमर्थं इतिमितिना एतत्परिमाणकेन मदेन गर्वेण उन्नतिमत् आधिक्ययुक्तं एनोपराधः अनु सह अतिविधीयते अतिशयेन क्रियते अनुहीने ।

अस्य नवातिमुक्तस्य वयासि केनापि कुसुमं न गृहीतं नवातिमुक्तस्येति नवत्वादतिशयेनैव पुष्पानवचयादस्माभिरपि त्यक्तस्येति श्लेषार्थः दर्पकस्य कन्दर्पस्यापि दर्पकलाहारणः ॥१६५॥
तां संगीतभङ्गीं अनल्पे प्रचुरेऽपि ब्रह्मशिल्पे सा सामग्री नास्ति । अतस्तत्र लोकः कथं कल्पेत तां संपादयितुं कथं समर्थः स्यादित्यर्थः १६६
तत्र तु महस्य उत्सवस्य तीव्रता मा तादृशी रस्यतमा ॥ १६७॥
सबहुमानं यथास्या तथा परपक्षं मा स्तुहि मधुना माध्वीकेन श्लेषाद्वसन्तेन नर्मभङ्गयामदेन च ॥१६८ ॥
कुसुमस्यासवो मधु मम शब्देनैवेति वाङ्मात्रेणैव युष्मादृशान् भ्रामयितुं शक्नोमीति भावः१६९
साधुना भवता ॥ १७० ॥

इति तेन सरसमुदितो मुदितो वटुः पुनरसकौ रसकौतुकी तं देशमासाद्य साटोपं दुर्ललिते ललितेऽपसर सरसीरुहाक्षनिदेशतो देशतो हि तावदस्मादस्माकमतिमुक्तकुसुमं मापहर हरसि चेत् प्रतिफलं लप्स्यसे। साह साहसिक वटो कपटपटो जल्पन्निदमवद्यमवद्यासि किमिति निजसौजन्यम् ॥ १७१ ॥

शिष्टपरम्परापरागता रागतारतम्येनाऽप्यानवद्या नववसन्तोत्सवयासरे वासरेशतनयाकूलेऽनुकूलेऽनुरक्ता रक्ताशोकमूले मदनमर्चयति वधूततिरिति रीतिरिति रीणधुरीणतया स्वयमेव कुसुमावचयनाय नायकमणीसदृक्षयाक्षयाभिजनयानया नयासन्नसकलगुणयाप्रियसख्या सख्यातिकया कयाचन राधाभिख्यया सह समागता वयं कथमुन्मत्त इवात्र प्रलपसि ॥ १७२ ॥

स आह रे हरेरपरः कोऽन्यो मदनो मदनोदनो यः सकलानामुन्मादको मुन्मादकोमलश्च ॥१७३॥

तस्मिन्साक्षाद्वर्तिन्यसाक्षाद्वर्तिन्यहो मदने वः पूजारतिः किमिति भवत्य एवोन्मत्ता मत्तावत्यत्शृणुत ॥१७४॥

अयमहं महं वः कारयिष्यामि स्वस्तिवाचनपूर्वकमपूर्वकमनीयं पुरोहिततया पुरोहिततया तदित इत इत तस्यैव समीपम् ॥१७५॥

श्रीराधाह पूजार्होयं वटुः पटुः परं ललिते तदादिश चारुचन्द्राचन्द्रावल्यौभद्रे नायं पुरोहितः पुरोहिततया पूज्यतामिति । तदुक्ताभ्यां ताभ्यां महामहान्धाभ्यां प्रसभमाकृष्य विविधवर्णचूर्णचूर्णनगन्धोदकोक्षणक्षणपराभूतो भूतोत्तम इव यदा विदधे तदासौ चुक्रोश क्रोशगामिना स्वरेण ॥१७६॥

---

हे वटो कपटपटो इति कपटपाटवेनैव त्वया वटुत्वं साधितमिति भावः तेन तुभ्यं गालिप्रदानमपि नानुचितमिति द्योतितम् । इदमवद्यं निन्द्यं जल्पन् निजसौजन्यं किमिति अवद्यसि खण्डयसि स्वदौर्जन्यमेवास्मन्मुखत आख्यापयसीति भावः ॥ १७१ ॥

रागस्यासक्तेस्तारतम्येन अव्य अनवद्या अनिन्द्या वधूततिर्मदनमर्चयतीति रीतिः शिष्टपरम्परापरागतत्वेन्वयः इति हेतोः रीणा क्षरिता या धुरीणता प्रभुता तया रागीतकण्ठ्यान्निजप्रभुतामप्यनादृत्येत्यर्थः नायकमणी हारमध्यगरत्नं तत्तुल्यया अक्षयोऽभिजनः कुलं यस्यास्तया महाकुलवत्या इत्यर्थः ॥ १७२ ॥

मदनोदनः गर्वखण्डनः सकलानां सर्वेषां किंतु उन्मादयतीति स इति मदनशब्दवाच्यः स एवेत्यर्थः स्वयं तु मुद् हर्षः मादो मत्तता ताभ्यामपि कोमलः ॥१७३॥

तस्मिन् हरौ भगवतीति साक्षाद्वर्तिनि सति असाक्षाद्वर्तिनि परोक्षे मदने मत्तावत् मत्तवत् ॥१७४॥

अहं पूजामुत्सवं वा पुरोहिततया पौरोहित्येन पुरो हिततया पुरोऽग्रे हितकृत्त्वेन यद्वा हीति पृथक् पदं ततया विस्तृतया इत इत इति तद्धर्मोपदेशः इत गच्छत ॥१७५॥

विविधवर्णैश्चूर्णैश्चूर्णनं सर्वाङ्गपेषणं तच्च गंधोदकैरुक्षणं सेचनं च ताभ्यां क्षणं ...... पराभूतः ॥१७६॥

उन्मत्ताभिर्वसन्तोत्सवरभसमदैर्गोदुहां कन्यकाभिः क्षोदैः सिन्दूरकाश्मीरकमलयरुहां हा धिगन्धीकृतोस्मि । जाड्यं गन्धाम्बुसेकैर्जनि तत इतो धावितुं नास्मि शक्तो व्यापद्येहं वयस्य प्रियसखमव मां मास्त्विह ब्रह्महत्या ॥ १७७ ॥

तदा तदारादाकर्ण्य तदाक्रन्दितं दितं च प्रतिभाप्रतिभानं च विदित्वा कुसुमासवस्य कुतुकसरलाभिरबलाभिरहो कौतुकमिति त्वरया रयारूढरागैः सह सहचरैः कुतूहलहलहलापुरस्सरं पुरःसरंहाः समुपससाद ॥ १७८ ॥

स सादरदरव्रीडमालोक्यमानो मानोन्नताभिरपि ताभि सुभगतमो गतमोदमिवाऽवलोक्य वटुमपटुमपरितुष्टमना इव कृतकृतकसंरम्भं व्याजहार विहारविशेषेण १७९

हंहो कथमयं निरागा रागान्धाभिर्भवतीभिरुपालब्धो लब्धोरुतरापमानो मम ममतापात्रं वटुः तदपराधपराधमतामतानि प्रतिफलानि सहन्तामिति सहचराऽनवलोकयति स्म ॥१८०॥

ततश्च । सहचरकरदत्तैः कन्दुकैः कैङ्किरातैः सकलकुलवधूनामेव विक्षोभि वक्षः । यदकृत कृतहस्तो यौगपद्येन सद्यस्तदमरवरनार्य्यः साधुवादैः पुपूजुः १८१

तथा सति द्वयोरेव सेनयोरनयोपरमेणैव । शोणश्लक्ष्णारुणसुरभिभिर्धूलिभिर्धूलिभिश्च क्रीडायुद्धं समजनि महत् कन्दुकैःकन्दुकैश्च। शृङ्गोन्मुक्तैः कुसुमधनुषो वारुणास्त्रैरिवारात् काश्मीरीयैरतिसुरभिवारिभिर्वारिभिश्च ॥ १८२ ॥

ततस्तु ततस्तुतिभिः सुरवधूभिरुभयबलसाम्यमालोकयन्तीभिः क्रियमाणे साधुवादे सति ॥ १८३ ॥

अभयमुभयसेनाचारिभिर्धूयमानैः समजनि पटवासैरन्धकारोऽतिगाढः । व्यतनुत हरिरस्मिन साहसं तीक्ष्णमेको न्यऽविशतपरचक्रं यन्मनोजेन तुल्यः १८४

धावितुं पलायितुं व्यापद्ये अहं म्रिये ॥ १७७ ॥

तदाक्रन्दितं तस्यातिक्रन्दनं अबलाभिरेव दितं खण्डितं विदित्वा· अहो कौतुकमिति ब्रुवन्नित्यर्थः । संरंहाः सवेगः ॥ १७८ ॥

ततश्च स श्रीकृष्णः मानोन्नताभिरपि गर्वाधिकाभिरपि सादरदरव्रीडं यथा स्यात्तथा आलोक्यमानः तत्र महाराजनन्दनन्दनत्वादादरः तत्प्रियसखावमाननाद्व्रयं कन्दर्पोद्दोधकपेशलत्वेन लज्जेति अत एव सुभगतमः । वटुं अपटुं चेष्टनासमर्थमालोक्य ॥ १७९ ॥

निरागा निरपराधः अपराध एव परो मुख्यो यस्यां सा अधमता तस्या मतानि संमतान्युचितानीत्यर्थः ॥ १८० ॥

कैङ्किरातैरशोकपुष्पोद्भवैः वक्ष· कुचयोर्मध्यप्रदेशं विक्षोभि विशिष्टक्षोभयुक्तं यत् अकृत अकार्षीत् कृतहस्तो युद्धकुशलः कृतहस्तः सुप्रयोगे विशिख इत्यमरः ॥१८१॥

अनयोर्द्वयोरेव सेनयोः अनयोपरमेण अनीतिराहित्येन । शोणारुणयोः किञ्चित् श्यामलिमविश्रणामिश्रणत्वेन भेदः धूलिभिर्धूलिभिरित्यादिर्वीप्सा शृङ्गोन्मुक्तैर्जलयन्त्रोन्मुक्तैः शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके इतिमेदनी१८२ तता विस्तृता स्तुतिर्यासां ताभिः१८३

अभयं निःशङ्कं यथास्यात्तथा धूयमानैः क्षिप्यमाणैः पटवासैर्गन्धचूर्णैः उभयसेनाव्यापारिभिः १८४

ततश्च। न पतति लघुभावात् पूर्णति व्योम्नि तस्मिन् रजसि तमसि गाढं जायमाने मुहूर्त्तम्। न परिचयमवापत् कापि कस्यापि कश्चित् तदनु स परचक्रे कृष्णवेणुर्व्यराणीत् ॥ १८५ ॥

अथ यदि परचक्रे विक्रमी कृष्णवेणुः सुरतसमरभेरीभावमाविश्वकार। दिशि विदिशि तदासीदङ्गनापाङ्गभङ्गीसशिखविशिखपातो यौगपद्येन जातः ॥ १८६ ॥

अथैवं मुहुरजनि रजनिरण इव यदि स लीलारणो रणोद्धुर एकस्तदा हि तदाहितदाक्षिण्यः ॥ १८७ ॥

संमस्थापनसंज्ञमायुधमिव भूचापमारोपयन् लीलालोलकटाक्षमक्षिविषयं कुर्वन् समस्ताङ्गनाः। स्रस्ताङ्गं विनिमीलिताक्षमलसेनोज्जृम्भमाणाननं कूजत्कण्ठतटं चलाधरपुटं चक्रे प्रसुप्ता इव ॥ १८८ ॥

एवं सति तथाविधा विधातव्यशून्याः स्वसेना निरीक्ष्य। तथाविधपराक्रमं क्रमत एत्य चन्द्रावली निपात्य पुरुवीचिकां नयनकोणनाराचिकाम्। निबध्य निबिडं भुजाभुजगपाशबन्धेन तं चमूरुनयनाचमूपतिरमूमुहन्मोहनम् ॥ १८९ ॥

ततश्च क्षणत एव प्रतिमुद्धर। तिमिरमिदमनल्पं नैव यावद्बभूवसीदतिलघु लघुहस्तस्तावदेवैकवीरः। व्यतनुत तनुमध्याव्यूहमालोड्यमानं मदकलकलभेन्द्रः पद्मिनीनामिवौघम्। तथा सति। विरते चमरागजान्धकारे रागजान्धकारे तु वलमाने छिन्नानां मृगलोचनाचयचमूमानद्विपानामिव क्षोणी सा क्षतजैरभूदरुणिता स्निग्धारुणैः पांशुभिः। भृङ्गघ्रातमदैरिवास मलिना कस्तूरिकाकर्दमैराकीर्णा जनिकीकरैरिव परिभ्रष्टैर्मणीभूषकैः ॥ १९० ॥

अथ तथाविधविविधविकारविकलां तां वधूसेनामवेक्ष्य सुखजलधि जलधिया वटुना ही हीति भुजावुद्यम्य नटता अटता च कृष्णसमीपं किंचिदवादि १९१

कस्यापि जनस्य परिचयं कश्चिदपि जनो न अवापत् न प्राप्तवान् तदनु तदनन्तरमेव १८५

तदा च अङ्गनानां अपाङ्गभङ्ग एव सशिखविशिखाः सामग्रशरास्तेषां पातो जात आसीत् कृष्णो पर्यायात् ॥ १८६ ॥

रणोद्धुरो युद्धचण्डः तत्र युद्धे आहितं अर्पितं दाक्षिण्यं स्वातन्त्र्यं येन सः दक्षिणो दक्षिणो हृतसरलच्छन्दवर्त्तिष्विति मेदिनी ॥ १८७ ॥

लीलया लोलं कटाक्षमेव संप्रस्थापनसंज्ञम्। आयुधं शारं भूरेव चापस्तं आरोपयन् आरोपयन्। स्रस्ताङ्गमित्यादीनि क्रियाविशेषणानि अनङ्गक्रियाभरजस्य मदस्यानुभावाः॥१८८॥

पुरुवीचिकां बहुतरप्रयुक्तां नाराचिकां क्षुद्रशरम्। अमूमुहत् मोहयामास ॥ १८९ ॥

क्षतजैः शोणितैः। आस बभूव। आस्यं उत्ताप इवास यत्न इत्यादिदर्शनादनुप्रयोगादन्यत्रप्यस्तेर्भूभावे केचिदेनं सन्निपातुमदीपः। यद्वा अस गतिदीप्त्यादानेषु इत्यस्य रूपमनेकार्थत्वात् सत्तायां वृत्तेः। कीकरैरिरिभिः अत्र क्षतजादीनामर्त्तत्वं नाशकृत्वं तेषां प्राणिनिष्ठत्वेन तथात्वस्यसद्भावात् न तूपमेयप्रवादो समुद्रश्च मुद्रांतुशिवादिभिरप्रयोगात् ॥ १९० ॥

नटता च गच्छता च ॥ १९१ ॥

साधु वयस्य साधुवयस्यस्मदीये नैतादृशं सुखमनुभूतमनुभूतलम् ॥१९२॥

यदमूभिर्निर्वंशिकाभिर्वंशिकाभिरतपाणेस्तत्र सहचरोहं रोहं प्रापितोऽस्मि दुरवस्थायाः संप्रति तथैव दुरवस्थितिस्थितिभाजः पश्यामि ॥१९३॥

तथाहि। छिन्नाः कञ्चुलिकाः प्रयत्नगुम्फिताक्षुण्णा च हारावली सामग्र्योऽपि मधूत्सवस्यपरितो भ्रष्टा लुठन्ति क्षितौ। धम्मिल्लालकभालगण्डयुगदृग्वक्षांसि शोणान्यहो चूर्णैः किंशुकपाटलैर्निजकृतेः संप्राप्तमाभिः फलम् ॥१९४॥

किंतु वयस्य इमाः खलु महाचतुरा हा चतुराननसृष्टिवद्विरेव हि रेजिरे१९५

ततुयावत्पुनरपि संभूय भूयसीभिरपराभिः पराभिर्वृषभानुतनूजादिभिर्भवन्तं विजेतुं नोत्सहन्ते हन्तेदानीमेव तावदपसरामः बद्धवैरा वै रागेण किं न कुर्वन्ति ॥ १९६ ॥

सखायः सर्वे सहासं निजगदुर्निजगदुर्मुखतादोषेणायं भीत एवाधिकोधिकोपतया क्षणं तीव्रश्च भवति तदयमाश्वास्यतां सखे सखेदोऽयं यथा न भवति१९७

स आह कुसुमासव यतस्ते भयं तामधुना साधुनाऽसाध्वसेन मां दर्शय मयि सति किं ते भयमिति निगदितो दितोरुभयो भयोत्कटः साटोपमग्रेसरो भवन्नित इत इत्यालपन्नति मुक्तवाटिकापरिसरं परिसरन्तीं ललितादिभिरालिमालाभिः कुसुमप्रवचिन्वतीं न्वतीन्द्रियरूपां तां दर्शयामास ॥ १९८ ॥

---

अनुभूतलं भूतलं लक्ष्यीकृत्य अस्मदीये वयसि बाल्यादौ एतादृशं सुखं नानुभूतम् ॥ १९२ ॥

निर्वंशिकाभिरिति विदूषकत्वात् स्वावमाननमनुस्मृत्याभिशापात्मकगालिप्रदानं श्लेषेण वंशीरहिताभिः रोहं उद्गमम् ॥ १९३ ॥

किंशुकपाटलैः किंशुकवर्णैः श्वेतरक्तवर्णैश्च तथापि शोणानीति शोणिम्ना पीतिमश्वेतिम्नोर्ग्राससंभवात् ॥ १९४ ॥

रेजिरे इति वर्तमानतायामपि भूतत्वपरोक्षत्वारोपो न केवलमद्यतन एवासां पराक्रम इति बुबोधयिषया सा च स्वातिभयमूलैव ॥ १९५ ॥

संभूय मिलित्वा अपसरामः पलायामहे रागेण कोपेन किं न कुर्वन्ति अपितु मर्य्यादामप्यतिक्रमन्त एवेत्यर्थः। त्वामेव लीलयैव जित्वा मत्पैशुन्यमनुस्मृत्य न जाने मम कंचन दण्डं ब्रह्महत्यामेव वा करिष्यन्तीति भावः ॥ १९६ ॥

निजगा निजगता या दुर्मुखता स्वाभाविकमेव निरुपाधि मौखर्य्यं तद्दोषेण भीत एवायं अधिकोपतया कोपाधिक्येन तीक्ष्णश्च भवतीत्यतितारल्यात् क्षणेनैव साहसं किंनिदानं वा दैन्यगसादि किंनिदानकं वा गर्वकोपादि स्यादिति न विद्म इति भावः ॥ १९७ ॥

दितोरुभयः खण्डितबहुभयस्ततश्च भया कान्त्या उत्कटः ॥ १९८ ॥

तस्मिन्नेव रससमये समये । आलीनां कुटिलकटाक्षबाणलक्षैराविद्धो हरिरसृजत्कटाक्षबाणम् । राधाया उरसि निपत्य ही कथं चित्सव्रीडाकवचविभेदमेव तेने । तदनु । व्यतनुत वृषभानुनन्दनीयं तनुतरकज्जलकालकूटदिग्धम् । स हसितनिशितः कटाक्षबाणो हरिहृदयं विदयं विनिर्बिभेद ॥ १९९ ॥

तदा तदाघातेन विमूढमूढरभसतया तमालोक्य सरसतरं सतरङ्ग इव वटुराबभाषे ॥ २०० ॥

वयस्य एष ते सहायतमोऽहं मोहं मा गा इति केलिकन्दुकान् ग्राहयित्वा विद्रावय वयस्यैता यस्यैतादृशः पार्ष्णिग्राहकोऽहं हन्त तस्य किमशक्यमिति निगदति २०१

लीलालसं मुकुलिताक्षमरालितभ्रूझङ्कारिकङ्कणमुदस्य कराब्जकोपम् । केनाप्यलक्षितमथो वृषभानुपुत्री सिन्दूरकन्दुकमुरस्यकिरन्मुरारेः ॥ २०२ ॥

तेन च तदासौ प्रबोधितो ग्वितोपसुप्तः केशरिकिशोर इवातिकुपितोऽपि तोषकरः सखीनां करकमलगृहीतकन्दुको राधामनुधावन्नथ ललितयोचे ॥२०३॥

अये तवोरसि रसिकया कया कृतः सिन्दूरस्य कन्दुकनिक्षेपो निक्षेपो निजानुरागस्यैव का जानाति नातिमुग्धेन भूयतामनुभूयतामनुपरोधिनीं वृथास्मत्सखीमुपधावसि । तथापि धावन्नेव सकौतुकम् ॥ २०४ ॥

---

तदन्विति कृष्णकटाक्षानन्तरमपि राधाकटाक्षोद्गमो व्रीडाकवचभेदाद्धसन्तोत्सवेऽत्रोपयोगात् तनुतरेणात्यल्पेन कज्जलरूपकालकूटेन दिग्धमुपचितं यं व्यतनुत स कटाक्षबाणः हसितेन निशितस्तीक्ष्णः ॥ १९९ ॥

विमूढं तं सखायं आलोक्य ऊढरभसतया वेगयुक्तः सन्नित्यर्थः । सरसतरं सातिविक्रमं सतरङ्ग इति भुजाग्रीवादिकं मुहुश्चालयन्नित्यर्थः ॥ २०० ॥

इति निगदति सति वटौ ॥ २०१ ॥

तत्कन्दुकनिक्षेपेमाऽधर्य्यमवधार्य्य तत्र निजातिलाघवं दर्शयन्ती श्रीराधिकैव प्रथमं कन्दुकं व्यनुददित्याह लीलेति । क्रियाविशेषणद्वयम् । केनाप्यलक्षितमित्यन्यालक्षितत्वेऽपि यस्यमोहं प्राप्तवतापि श्रीकृष्णेन लक्षितत्वं निभृतमेवावश्यं मन्तव्यं लीलालसमित्यादीनामन्यथा तदनास्वाद्यत्वेन नातिसार्थकत्वमेवेति ॥ २०२ ॥

तेनासौ प्रबोधित इवेत्यभेतनकौतुकार्थे स्वस्य तथाभूतत्वेन ज्ञापनमेव । अधितोदेणाधिकसुखेन सुप्तः केशरिकिशोर इवेति स्वप्रहारिकाभिमुखधावनस्वभावत्वधर्मेणापि । सखीनां कुसुमासवादीनां ललितादीनां च ॥ २०३ ॥

त्वं चेज्जानासि तां दर्शयेत्यत ऊचे का जानातीति । मुग्धस्त्वविचारातत्वं सदा भवस्येव किन्त्वतिमुग्धेन मा भूयतां तदस्यापैर्य्यमालोक्य पुनरूचे अनुभूयतामनुभवोऽपि क्रियतातानवधीयतामित्यर्थः ॥ २०४ ॥

आलीनां वलये निलीयवसतिं श्यामां कलाकौतुकात्स्मेरापाङ्गतरङ्गिताङ्कितरुचा संदर्शितां राधया। तस्या एव मधूत्सवस्य विभवैर्गन्धोदधूलीमुखैस्तामुच्चैः स लिलेप भालकवरीगण्डेषु वक्षस्यपि ॥ २०५ ॥

तमन्यायमवलोक्य तदा तदाली वकुलमालाकुलमालापमाविश्चकार अहो ते वैदग्धी वै दग्धीकरोतीव नो हृदयम् ॥ २०६ ॥

यतः कन्दुकमुक्तावत् मुक्तावत्किरति हसितदीधितिं सितदीधितिं विडम्बयन्तीव मुखमण्डलेन तामपहाय निरागसं रागसंबाधबाधया पिच्छापीड पीडयसि मे सखीम् ॥ २०७ ॥

इति वचनतात्पर्य्यपर्य्यवसानेन सानेन साराधिकां राधिकां यदि सूचयति स्म तदा तदालापेन जातकौतूहलो राधाभिमुखीभूय भूयसा रागेण ॥ २०८ ॥

मकटय वलं गर्विण्येहि क्षिप क्षिप कन्दुकानिति सरभसं स्मित्वा वीक्ष्योप सर्पति माधवे। परिशृणुत भो निष्मत्यूहं व्रत व्रत चैकदेत्यथ कलकलः पद्माक्षीणां पिकैश्च गुरूकृतः ॥ तथा सति स तिलकायमानो रसिकसभानां सभानां नववधूनां वृन्देन वन्दीकृत इव यदा समजनिष्ट ॥२०९॥

तदा। आकीर्णः कतिभिर्विलासरजसां पूरैः पराभिर्हतः पौष्पैः कन्दुकसंचयैश्च कतिभिर्माणिक्यशृङ्गस्रुतैः। सिक्तः कुङ्कुमचन्दनादिसलिलैरप्येक एव स्वयं श्री गोपेन्द्रसुतः सलीलमसकृद्विद्रावयामास ताः २१०

निलीय श्रीराधयैव सह तस्य द्वन्द्वयुद्धरीत्या कौतुकदर्शनार्थं निन्हुत्य वसतिश्च यस्यास्ताम्। संदर्शितां राधयेति स्वरमणेन तेन सह प्रथमं तामेव खेलयित्वा तत एव स्वयं खेलितुमिच्छन्त्येति भावः। ततश्च निलीयवसतिमिति लीनत्वमेवापराधलक्षणमिति ज्ञापितं च। स्मेरस्यापाङ्गस्य तरङ्गिणी तरङ्गयुक्ता ताङ्किता श्यामाशङ्कया स्खलनवती च या रुक् कान्तिस्तया। तरिस्खलनकम्पिगतिषु ॥ २०५ ॥

आकुलं यथा स्यात्तथा वै निश्चितं दग्धीकरोतीति। परमविदग्धस्यचतुरसिंहस्यापि तवेदृशं मौग्ध्यमभूदिति हृदयानुतापाय एवास्माकमिति भावः ॥ २०६ ॥

कन्दुकं मुञ्चतीति कन्दुकमुक्। सितदीधितिं चन्द्रम्, रागेण। मात्सर्य्येण संबाधा जाता या बाधा व्यथा तया विशिष्टः सन् श्लेषभङ्ग्या रागेणानुरागेण। ततश्च कर्तृकर्मणोर्द्वयोरपि वैशिष्ट्यं युक्तम् ॥२०७॥

सा वकुलमाला। साराधिकां बलाधिकाम् वचनतात्पर्य्यस्य यत्पर्य्यवसानं तेनैव। तच्च ललितादिष्वपि हसितदीधितिं किरन्तीषु तामपहायेति स्वागस्य प्रातिसापेक्षत्वात् प्रातिश्च राधायामेव पूर्वप्रसक्तत्वात् तस्यामेव संभावितम्। एतच्च स्वयूथेश्वरीं श्यामामेव अभिमुखयितुं तत्सौहार्दानुरूपमेव सख्या भाषितम् ॥२०८॥

सभानां सकान्तीनाम् ॥२०९॥ असकृदिति विद्रुतापि मुहुर्मुहुरावृण्वतीः ॥२१०॥

ततश्च । मधुमहमहसैव द्राविताया त्रपायां सहजसदनुरागावेगकण्डूलचित्ताः । पुनरपि युगपत्ताः साहसेनातिभूम्ना प्रियमथ परिवव्रुश्चन्द्रिकावत् पयोदम् ।२११।

ततश्च । मातङ्गीप्रमुखो गणः सरभसं वीणादिनानाविधध्वानध्मातहरिन्मुखो व्यरचयद्गानं वसन्तोदितम् । रोलम्बाश्च पिकाश्च चित्रविहगाश्चान्ये कलं तुष्टुवुर्नृत्यद्वातगुरूपदेशवशतो लास्यं व्यधुर्वीरुधः ॥२१२॥

परतश्च । नानायन्त्रमनादयन्त कतिचित् केचिद्वसन्तं जगुः केचिद्गन्धरजांसि कन्दुकचयानन्यान्यमीचाक्षिपुः । श्रीकृष्णानुचरोत्करेषु तु वलश्रेष्ठेषु हृष्टान्तरो हासैकप्रणयी वटुः पटुरटन्नुल्लासनृत्यं व्यधात् ॥२१३॥

एवं सति । मदकलकलविङ्कीकुलकलकमनीयझङ्कारिकङ्कणमुखरकरकमलमुन्नीय भुजमृणालदण्डमुद्धन्तुमुद्दण्डितहृदयाभिरबलाभिरभिरम्यमभितोऽभितोऽभिहन्यमानः प्रणयितमाबलाबलात्कारसुखचमत्कारकारणकरणकलहे पराजयं जयं मन्यमानो मानोचितं चरितं नाचरन्निव सावहित्थमित्थमिन्दुमुखोविग्लानिमिवाभिनयन् यदि क्षणमुपरतपरतरप्रभावो बभूव ॥२१४॥

तदा काचिद्वंशीमपहृतवती कापि पानीययन्त्रं काचित् पौष्पं धनुरनुपमं बाणजालं च काचित् । अप्यन्यस्यां कुतुककलया मण्डनान्याहरन्त्यां भ्रूभङ्गेन स्मितमधुरुचेना राधिका बाधिकासीत् ॥ २१५ ॥

ततश्च स्वाञ्चलेन घुसृणादिकपङ्कान् स्वेदवारि च शनैः क्षपयन्त्या । यत् प्रपेधुरिमास्य दृशा तद्वीरपानमिव जातममुष्याः ॥ २१६ ॥

अतिभूम्नेति साहसे हेतुः ॥ २११॥

ध्वानैर्ध्माता नि प्रतिध्वनिप्रतिध्वनियुक्तीकृता नि हरितां मुखानि येन सः ॥२१२॥

श्रीकृष्णानुचरोत्करेषु मध्ये केचिन्नानायन्त्रमवादयन्त इत्यादि ॥२१३॥

मदकलानां मत्तानां कलविङ्कीनां चटकस्त्रीणां कुलस्य कलात् मधुरास्फुटध्वनितोऽपि कमनीयझङ्कारयता कङ्कणेन मुखरं करकमलं उन्नीय उत्थाप्य । कथं भूतं भुज एव मृणालदण्डो यस्य तत् अभिरम्यं यथा स्यात्तथा हन्यमानः सन् प्रणयितमा या अबला तत्कर्तृको बलात्कार एव सुखचमत्कारस्य कारणं यत्र तथाभूते रणकलहे पराजयमेव जयं मन्यमान इति स्वपराजये स्वैर तद्बलात्कारसौलभ्यात् अत एव मानोचितं अहङ्कारयोग्यं चरितं पूर्ववत् बलात्कारं न कुर्वन् । सावहित्थमिति निजासामर्थ्यज्ञापनं विग्लानिमिति विशिष्टा स्वग्लानिरेव बहुखेदनश्रमोत्था तत्र हेतुरिति ज्ञापयन् इत्यर्थः । सर्वेषामेव कान्तिमत्वात् इवकारः ॥ २१४ ॥

भ्रूभङ्गेनेति मण्डनोत्तारणनिषेधक स्वभ्रूभङ्गं श्रीकृष्णं दर्शयित्वा तस्मै महापराजयदुःखदानामिव स्वकार्यं व्यञ्जयति स्म ॥ २१५ ॥

स्वाञ्चलेनेत्यादि स्वेन पराजिते प्रतियोद्धरि स्वयमेव कृपया तासन्धुक्षणमयपरिचरणादिकं स्वैराति उज्जाविडम्बनकरामिति प्रकटायां व्यञ्जितः पराधर्षश्च तन्निवेश निःशङ्कतया स्वमनोऽभिलाषसम्पादनमेव । भूते भविष्यति वा रणे योधानां मद्यादिपानं वीरपानम् ॥ २१६ ॥

पुनश्च। आकृष्य सख्याः करपद्मकोषात्ताम्बूल वीटीः स्वयमाशयन्ती। भ्रूभङ्गिसङ्गीङ्गितविज्ञया तं सा श्यामयावीविजदात्मनाथम् ॥ २१७ ॥

एतस्मिन्नेवावसरे स रेणुरूपिततिरश्चीनीकृतावटुः वटुरवलोक्य विरचितोत्साहसाहसिक्यमुच्चैः स्वरं जगर्ज गर्जदम्बुवाह इव ॥ २१८ ॥

ही ही जितमस्माभिर्यदियं सर्वोत्तमानन्तमाहात्म्या भो वयस्यवृषभा वृषभानुसुता सुतानितगर्वापि पराजिता राजितारं विजयमहसा महसालसं प्रियवयस्यमस्माकं स्माकम्पितानुगृहीतदास्यरसेव सेवते ॥२१९॥

किमतः परं परं कौतुकं उचितमेवैतत् यस्य मया धीसचिवता वताङ्गीक्रियते तस्य कथं पराजयो राजयो हि जयसम्पदामेवेति परमतृप्तः सुखभुजा भुजानुबन्ध्य नरीनृत्यते स्म ॥२२०॥

तस्य तया प्रतिभयोभयोरेव पक्षयोरक्षयो रभसः समजनि ॥२२१॥

समजनितसंतोषया देव्यापि वार्षभानव्या नव्या हारयष्टिः प्रसादीचक्रे॥२२२।

इत्येवं चिरविहरणरणपरिश्रमालसलसदवसादसादरसेव्यमानवपुषां तेषां तासां च माधुरीधुरीणतात्कालिकरुचिररुचिरसतरङ्गमालोक्य वनदेवता देवता च सा मातङ्गी संगीतस्य सात्मश्लाघमुल्लाघमुल्लाघमुल्लाघवाभावतो भावतोऽपि सहजादुत्सवविराममेवाभिराममेवाभिरुचितं मन्यन्ते स्म ॥२२३॥

---

अवीविजत् वीजनं कारयामास ॥ २१७ ॥

स वटुः। रेण्विति क्रियाविशेषणम्। विरचित उत्साहो यत्र तथाभूतं साहसिक्यं सहसा प्रवर्त्तनं यत्र तद्यथा स्यात्तथा ॥ २१८ ॥

भो वयस्यवृषभा हे सखिश्रेष्ठाः सुबलादयो विजयतेजसा राजितारं दीप्तिमन्तम्। महात् निजोत्सवात्सालसं ल्यब्लोपे पञ्चमी। तं प्राप्येत्यर्थः। स्मेत्यवधारणे अकम्पिता निश्चला एव सतीत्यर्थः ॥ २१९ ॥

धीसचिवता मन्त्रित्वम्। वत हर्षे। राजयः श्रेणयः। सुखभुजा सुखस्य भुक् भोगस्तया सुखानुभवेन हेतुनेत्यर्थः ॥ २२० ॥

तया प्रतिभया भण्डवद्वलाननटनादिमय्या। उभयोरेव पक्षयोः। रभसो हर्षः ॥ २२१ ॥

समम्न्यूनं यथास्यात्तथा जनितहर्षया ॥ २२२ ॥

माधुरीधुरीणश्च तात्कालिकस्तत्कालभवश्च रुचिरा रुचिः प्रीतिर्यतः स च यो रसतरङ्गस्तं तेषां तासां चावलोक्य उत्कृष्टो यो लाघवस्याभावः परमश्रैष्ठ्यं ततो हेतोस्तस्यामेव शोभायां पर्य्यवसानाकाङ्क्षया इत्यर्थः। सहजात्भावतः प्रेमतश्च परिश्रमदर्शनाच्चेत्यर्थः वनदेवता वृन्दादयाः संगीतस्य देवता मातङ्गी च उत्सवस्य विराममेव अभिराममेव रम्यमेवाभिरुचितं मन्यन्ते स्म। उल्लाघं निरामयं निर्विघ्नमित्यर्थः रसतरङ्गस्य विरामस्य वा विशेषणम् ॥ २२३ ॥

विश्रान्ते च तस्मिन् वसन्तोत्सवे स वेणुपाणिः सहसहचरैर्मिलितोऽलितोप-
झङ्कारमुखरवनमालो वनमालोत्तमच्छायामवलम्ब्य नवमधुमहामहानन्दभरोद्गा-
रपरिमलेन विरचयन्नितरेतरतरलिमानमाननन्द ॥ २२५ ॥

सा च सकला सकलाभीरकिशोरीशोरीकृतखेलनविरामा रामानुजसङ्गसङ्गतप-
रमानन्दनन्दथुमालिमालिकाभिः सह सहर्षमनुभवन्तीस्वरमणरमणमाकन्दमाकन्द-
कन्दलित वासन्तीमण्डपकृतविश्रामा मातङ्गीवर्गमाहूय सबहुमानमानम्य पारि-
तोषिकतोषिकमनीयमनसं कारयित्वा विसर्जयामास ॥ २२६ ॥

इत्यानन्दवृन्दावनेकैशोरलीलालताविस्तारे वन्सतोत्सवोनामचतुर्दशः स्तवकः १४

---

अलीनां तोपझङ्कारेण हर्षशब्देन मुखरा वनमाला यस्य सः वनमालेयं नव्या तदाकल्प-
निर्माणसमये श्रीराधयैव स्वहस्तेनार्पिता ज्ञेया पूर्वस्याः खेलनवेगच्छिन्नभिन्नत्वात् । नवमधो-
र्न्यत्रसन्तस्य महामहो महानुत्सवस्तत्रानन्दभरस्य खेलापरिपाटीजनितस्य उद्गारस्तत्तदनुकथनं
स एव परिमलस्तेन इतरेतरस्य तरलिमानङ्गाम्भीर्य्यरक्षणासामर्थ्यं विरचयन् सन्नाननन्द आ-
नन्दं प्राप ॥ २२४ ॥

सकलानामाभीरकिशोरीणां ईशा श्रीराधापि स रामानुजस्यसङ्गेन संगतस्य परमानन्दस्य
नन्दथुं समृद्धिं अनुभवन्ती तत्तत्खेलाकौतुकोद्गारेणास्वादयन्ती स्वरमणस्य श्रीकृष्णस्य रमणमा
विहारसंपत्तिः सैव कं सुखं तद्ददातीति स चासौ माकन्देन कन्दलितश्च योवासन्तीमण्डपस्त-
त्रैव कृतो विश्रामो यया सा। तेन वनदेवतोपनीतविविधमधुरफलभोजनानन्तरं सुप्तेषु निजस-
हचरगणेषु तत आगतस्य कृष्णस्य तया सह नियतविहारोऽपि व्यञ्जितः॥ २२९ ॥

इत्यानन्दवृन्दावनटीकायां सुखवर्त्तन्यां चतुर्दशस्तवकसंगमनम् ॥ १४ ॥

## पञ्चदशः स्तवकः

इत्येवं विधेन विविधेन विलासेनानाविलासनानाविष्कृतवैमुख्येन मुख्येन वृन्दावनान्तरङ्गिणा रङ्गिणामग्रणी रसचानूढानूढादिभिराभीरराजाभीरराजात्मजोऽयं तिथीः कतिथीः कलानिधिरिव ताराभिराभिराम्येण ॥ १ ॥

वासरे तु सह सहचरसमुदयेन रसमुदयेन गोचा गोचारणकौतुकेन कुमारयामास मारयामास च कदाचिदमरविद्विषो विद्विपोपमान् ॥ २ ॥

ततः परमनिर्वृतानेकदानेकदाक्षिण्यदयावतो यावतो वल्लवान् वल्लवराजमुखानभिमुखानभिशतमखमखमखण्डसमारम्भानरं भानवतो नवतोषाननेकमकारां सामग्रीमग्रीयामाहरतो विलोक्य वयोवृद्धाद्वृद्धानादाय कृतसभं सभङ्गिपितरमुवाच श्रीकृष्णः ॥ ३ ॥

आर्यपादाः किंनामायं महो महोदारः कास्य वा देवता वतास्य को वाचार्यो वाचार्योऽस्य कं वा विधिमधिमन्यध्वे किंप्रयोजनोऽयं जनो यन्त्रित इव सर्वतो धावति मेधावति मे हृदये किमपि न प्रतिभाति प्रतिभातिरेको हि वर्षीयसामेव ॥ ४ ॥

---

देवेन्द्रगर्वमदखण्डनकृद्गिरीन्द्रपर्वातिगर्वभरतः कृतगोष्ठरक्षः । सिद्धैर्नुतः स्वजनविस्मयभृत् सुरेशैः स्तुत्वाभिषिच्यत स पञ्चदशे गवेन्द्रः । आभीरराजात्मजः कतिथीः कियतीनां वसन्तोत्सवसम्बन्धिनीनां-पूर्णास्तिथीर्व्याप्य ताराभिः सह कलानिधिरिव आभिरूढानूढादिभिः सुन्दरीभिः रराज राजते स्म । आदिशब्दात् तत्तत् परिवाराणां स्वनर्मसखानामपि ग्रहणं अनाविलासेन अनाविलो निर्मलः आसः श्री शोभा यतस्तेन " अस दीप्तौ " । अत एव न आविष्कृतं वैमुख्यमलंबुद्धिर्यत्र तेन । वृन्दावनान्तः वृन्दावनमध्ये अङ्गिना उपयुक्तबहुङ्गसहितेन अभिरामस्य भावः आभिराम्यम् ॥ १ ॥

गोचारणमेव कौतकं तेन गोचा गां पृथिवीमञ्चता रसेनानुरागेण मुदाम् आनन्दानां अयः प्राप्तिर्यत्र तेन । विद्विपोपमान् विदां विदुषां विषोपमान् ॥२॥

एकदा एकस्मिन् समये वल्लवराजमुखान् यावतो वल्लवान् अभिशतमखमखं शतमखस्य इन्द्रस्य मखं यज्ञं लक्षीकृत्यं अखण्डसमारम्भान् अभिमुखान् स्वसंमुखानवलोक्य श्रीकृष्णः सभङ्गि यथा स्यात्तथा पितरं उवाच । कथंभूतान् परमनिर्वृत्तान् अतिहृष्टान् नतु वृतादावित्र तत्र यन्त्रितानित्यर्थः । अनेकदाक्षिण्यदयावतः बहुतरसारल्येन कृपालून् सर्वजनसुखवासार्थमिति भावः । अरं अतिशयेन भानं दीप्तिस्तद्वतः । यतो नवतोषान् उत्सवागमनहेतुकेन नवीनहर्षेणापि युक्तान् । अग्रीयां श्रेष्ठाम् पितरं कथंभूतं वयोवृद्धो ऋद्धान् समृद्धान् जनानादाय कृता सभा येन तम् ॥३॥

महोदारः महामहिमवान् । वाचा आर्य्यः प्रमाणवचनकः । मे मम मेधावति मेधायुक्ते हृदये । ननु परेङ्गितज्ञानफला हि बुद्धयः इत्युक्तत्वात् निजबुद्धिप्रतिभयैव ज्ञायतां त्वद्बुद्धेः किं दुष्प्रवेशमित्यत आह प्रतिभाया अतिरेक उद्रेकः वर्षीयसां वयोऽधिकानाम् ॥४॥

यदि बालतया मयीदमप्रकाशनार्हं नार्हन्तु तदा प्रकाशयितुं उत चेदुपैति क-थ्यतां कथ्यतां तदाकरः ॥ ५ ॥

गुप्ता हि वार्त्ता सुहृदि हृदि च दुरपनोदा नोदासीने विपक्षेऽपक्षेपणीया भवति ॥ ६ ॥

इति विरतवचनरचने च नेदीयसि च सिचयासनमध्यासीने च तनये नयेन सादरदरहसितसितदशनमहोमहोल्लासेन पीयूषपीयूषपीनधौतमिव श्मश्रुभरं जनयन् नयनेऽपि तमङ्कमनङ्कमिव सुधाकरं वसुधाकरम्बितमथाभीरराजो रराजोपक्रम्य वचनरचनाम् ॥ ७ ॥

तात सातत्यतन्यमानमान एष नः कुले निराकुले निराविलः परंपरापरायण आचारआचारणादिपरिगीतः समुन्मीलति ॥ ८ ॥

यदस्माकं इह गोधनं धनं तच्च घासघासप्रात्रजीवनं स च घासोऽनघासो न भवति विना वृष्टिं सा च दुर्बला बलाहकानन्तरेण ते च नात्मवशाः पुरंदरदरतः९

अतस्तदीयं महमहमुपपादयन्नस्मि अनेनसानेन साधुनाधुना विधीयमानेन म-हेन प्रीतिसुमनसा सुमनसामधिपेन तेन प्रतिवर्षं वर्षं सुरीत्या संपाद्यते ॥१०॥

कथ्यतां कथनार्हत्वं चेत् उपैति तदा कथ्यतामुच्यतां तस्याकरः कारणम् ॥५॥

ननु बालत्वेपि महाबुद्धिमत्वात् नास्ति ते बालत्वदोषः किंत्वतिरहस्यैवेयं वार्त्तेति चेत्सत्यं गुप्तापि वार्त्ता हृदि मनसि सुहृदि च दुरपनोदा अपन्होतुमशक्यानौचित्यादेव श्लेषेण सुहृदो हृदयादप्यन्तरङ्गत्वमानीतं किंतु उदासीने विपक्षे च न अपक्षेपणीया प्रक्षेप्तुमयोग्या मयि तु सुहृत्वेन युष्माकं हृदयतुल्यत्वात् तत् प्रकाशनं युक्तमेवेति भावः ॥ ६ ॥

तनये श्रीकृष्णे इति विरतवचनरचने सति आभीरराजः वचनरचनां उपक्रम्य आरभ्य रराज । कथंभूते तनये प्रथमं नेदीयसि निकटवर्त्तिनि ततः सिचयासनं वस्त्रासनमध्यासीने च । स्वयं च कथंभूतः सादरं अहो प्रश्नमाधुर्य्यमिति कृतादरं यद्धसितं तत्प्रकाशितः सितदशनथ तयोर्महसो ज्योतिषो महोल्लासेन पीयूषो नवदुग्धं स एव पीयूषममृतं तेन पीनं पुष्टं यथा स्यात्तथा धौतं क्षालितमिव श्मश्रुभरं जनयन् स्वभावतस्तिलतण्डुलितमपि श्मश्रुभरं हसनदशनकान्त्या सर्वशुक्लमिव कुर्वन्नित्यर्थः । पेयूषोऽभिनवं पयः इत्यमरः । तं तनयमपि अङ्कं-क्रोडमङ्कं प्रति नयन अनङ्कं निष्कलङ्कं वसुधाकरम्बितं भूमौ मिलितं सुधाकरं चन्द्रमिव ॥७॥

सातत्येन तन्यमानः मानः आदरो यस्य सः ॥ ८ ॥

घासस्य तृणस्य घासः भक्षणं तन्मात्रमेव जीवनं यस्य तत् । अनघो निर्व्यसनो निर्विघ्नः आसः स्थितिर्यस्य तथाभूतः न भवति । अहो दुःखव्यसनेष्वघम् आस उपवेशने "असदीसौ वाघन्न्तः । सा च वृष्टिः । बलाहकान्मेघान् । पुरन्दरदरतः इन्द्रभयात् ॥९॥

अनेनसा एनोऽपराधस्तद्रहितेन अनेन महेन यागोत्सवेन । सुमनसां देवानामधिपेन इन्द्रेण ॥१०॥

तथा संमति संप्रतिपत्तिकारिणा भवितेत्थं रीतिरीदृश्येव तेषां मानवतां मानवतां गतस्य समाराधनमिया न मियाय मन्यन्ते स्वर्गीयगीयमानमपि सुधादिकं ते ॥ ११ ॥

स्वसंपदापदारोहणपरापि समाराधिताऽऽधितानवं नवं नवमीहते हि देवता अनाराधिताधितादवश्यमेव ॥ १२ ॥

अथ तदाकर्णनकर्णनवकषायतायतापि न केनापि यथा यथार्थभावेन लक्ष्यते तथा कृतावहित्थमित्थमिदमतिमधुमधुरतरतरङ्गितस्मितविस्मितविविधजनमनोमनोज्ञतमं किमपि संमोहजनकं जनकं यदवादीदवादीव मीमांसावादं सविवादं सविधाय तदतिचित्रम् ॥ १३ ॥

तथाहि ।अहो अहोनाथसदृशां ईदृशामीशतुल्यानां यः खलु सुखलु सुबहुलमविचारि चारित्र्यम् ॥ १४ ॥

यतः कर्मणैव जन्तव उत्पद्यन्ते विपद्यन्ते म्रियन्ते च। यो हि यदा यदाचरति कर्म तदेव देवता देवतान्तरं नाम नामनन्ति सन्तः ॥ १५ ॥

संप्रत्यधुनापि संप्रतिपत्तिकारिणा असमयोगक्षेमसंपादकेन इन्द्रेण । नन्वमृतभुजां देवानां युष्मदीयमाने हविषि का प्रीतिः स्यात्तत्राह । मानवतां सम्मानदायिनां तेषां ईदृश्येव रीतिः यत् मानवतां गतस्य मनुष्यत्वं प्राप्तस्य सम्यगाराधनं प्रियं येषां ते। स्वर्गीयैः स्वर्गसम्बन्धिभिर्नैर्गीयमानं स्तूयमानमपि ॥ ११ ॥

ननु देवा अप्यसुराद्युपद्रववशाद्दुःखसुखमया मनुष्यवदेव लक्षिताः सत्यं स्वस्याः संपदः आपदश्च कदाचिद्दिष्टवशादारोहणपरापि समाराधिता सती आधेर्मनः पीडायास्तानवं क्षीणत्वं आराधकजनस्य ईहते चेष्टते कुरुते इत्यर्थः । तच्च नवं नवं यथा स्यात्तथेति तत्र कदाचिदपि नोद्विजत इत्यर्थः । अनाराधिता तु सती आधेस्तादवश्यमेव ईहते इत्यस्यैवानुषङ्गः १२

अथ तद्वचनाकर्णनेन कर्णयोर्नवा कषायता गर्ववत इन्द्रस्यादरश्रवणासहिष्णुतया कालुष्यं सा आयतापि प्रचुरापि यथा केनापि न लक्ष्यते तथा जनकं प्रत्यवादीव यदवादीत् उक्तवान् तत् अतिचित्रं तथा कृतावहित्थमिति गाम्भीर्य्येणासूयालक्षणाच्छादनात्। तदेवाह अतिशयेन मधुतोपि मधुरतरं च तत् तरङ्गितम् आवृत्तिप्रत्यावृत्तिभ्यां तरङ्गसदृशं च यत् स्मितं तेन विस्मितानां विविधजनानां मनसो मनोज्ञतमं अतिरोचकम् । सविवादं विवादसहितं कृत्वा वाचन्तरपराभावार्थं स श्रीकृष्णः। ऐश्वर्य्यं शक्त्या सहसा निवेदितो निजप्रभुः स्वावसरप्रवीणया। चिकित्सितुं दुर्मतिशक्रदुर्मदं परामम्रशाथ स गोपशर्मदः । जनको नु ममापि देवतां भजते यन्नरलीलतावशात् । तदिहाप्यभिमन्यते मदान्मघवानं यत्तदिहास्मि शासितुम् इति ॥ १३॥

अहो नाथसदृशां सूर्य्यतुल्यानामिति स्वत एवातिप्रतापवत्त्वम् ईशतुल्यानामित्यन्यदुर्वारत्वं च सूचितम्। तथापि सुखस्य लूरवेदन यतस्तत् अविचारि न विचारयुक्तम् ॥१४॥

उत्पद्यन्त इत्यादिना उत्पत्तिप्रलयस्थितयः सर्वेषां कर्माधीना एवेति ॥१५॥

ईहितहिताहितातिरिक्तफलदानासमर्थमर्थयन्तां के नाम देवतान्तरं तान्तरंहसो हि कर्मातिरिक्तां देवतां मन्यन्ते ॥ १६ ॥

नाप्यन्तर्यामी यामीरयति क्रियां तामेव करोति जन्तुः वस्तुतस्तु तथाविध एव कश्चित्स्वभावो हि स्वभावो हिताहिताचरणप्रवर्त्तकः किं तत्रान्तर्यामियामिकतया ॥ १७ ॥

नहीश्वर एव जगदुत्पादयति विपादयति विशिष्य पालयति अपितु तस्योत्पादकविपादकविपालकानि रजस्तमःसत्त्वानि तेन रजोघनाः घनाः स्वभावत एव त एवमभिवर्षन्ति ॥ १८ ॥

न च तत्र घनागमे भुवनमुचि नमुचिसूदनो नाम देवता मेरिका या खल्वाराधित्राधितानवं करोति ॥ १९ ॥

किममी धराधरा वा किमेते वा नदीना न दीनास्तदाराधनं चक्रुः कथमेतेष्वेते ते वर्षन्ति तदलमप्रस्तुतेन शतमखमखकरणेन ॥ २० ॥

किंच । ब्राह्मणा ब्रह्मणा व्रतिनो राजन्या राजन्यायेन शोभिनो विशो विशोभन्ते कृष्यादिभिरवरवर्णा वरवर्णानां सेवयाराजन्ते इति चतुर्वर्णावस्थावस्थानव्यवस्थायां कृषिगोरक्षवाणिज्यकुसीदविशांविशांचतुष्टयी वृत्तिवृत्तिः ॥ २१ ॥

तत्रास्माकं गोरक्षपक्षपरता नेदानीं न च पुरा पुरावनिसर्गा निसर्गावगाहिनी

---

ईहिताभ्यां कृताभ्यांहिताहिताभ्यां सुकृतदुष्कृताभ्यामतिरिक्तस्य फलस्य दानेऽसमर्थदेवतान्तरं के जना अर्थयन्तां स्वाभीष्टं याचन्ताम् न केपीऽत्यर्थः । तान्तम् अशक्तं रंहो बुद्धिव्यापारादीनां वेगो येषां त एव ॥१६॥

*कर्मणोऽन्तर्यामिपरमेश्वरयामिति मतं निरस्यन्नाह नान्तर्यामीति। यां क्रियाम् ईरयति प्रेरयति।* कश्चिदिति तथाविधकर्मभिरेवाभिव्यञ्जितः स्वभावो निसर्गः स्वस्यैव भां कान्तिम् अवतीति सः अत एवान्तर्यामिणो यामिकतया नियामकत्वेन किम् ॥१७॥

तस्य जगतो रजोघना रजसा निविडाः । जन्तूनामुत्पत्त्यदृष्टवशादेव वर्षन्ति ॥ १८ ॥

*न च तत्तद्देशाध्यक्षकृताराधनसंतुष्टस्येन्द्रस्यप्रेरणवशादेव मेघाः प्रावृषि वर्षन्तीत्याह नचेति।* घनागमे वर्षासमये । भुवनस्य जलस्य कुम् मोचनं यत्र तस्मिन् । नमुचिसूदन इन्द्रः ॥१९॥

नदीनो इना ईश्वराः समुद्रा एते किं तस्याराधनं चक्रुःअपितु नैवेत्यर्थः। यतो न दीनाः न जलदारिद्र्यवन्त ॥ २० ॥

तर्हि किं प्रस्तुतमित्यपेक्षायां निजविहितधर्मानुष्ठानमेव दीपकरीत्या अप्रस्तुतोपन्यसेनाह ब्राह्मणा इति। *ब्रह्मणावेदेन अवरवर्णाः शूद्राः चतुर्णां वर्णानाम् अवस्थास्वभावस्तत्तस्या अवस्थानेन* स्थित्या या व्यवस्था तस्यां कृष्यादिषु विशन्ति इति क्विप् तेषाम् तत्र कुसीदा वृद्धिजीविका । वृत्तीनां कृष्यादिजीविकानांवृत्तिः सत्ता: ॥ २१ ॥

अस्माकं नेदानीं नापि पुरा पुरस्य अवनेः शालिक्षेत्रादेर्वा सर्गा निश्चयाः सृष्टयो वा । तर्हि

गिरिवनचरता ॥ २२ ॥

चरतामिह नो हन्त किमनया शतक्रतुक्रतुकल्पनयाऽनयारब्धया ॥ २३ ॥

विस्रब्धया विध्वस्तविपदा मम गिरा गिरावस्मिन् न केवलं नाम्नैव गोवर्द्धने गोवर्द्धनेऽर्थतोऽपि संमानमानयद्भिरनैनैव शतमन्युमन्युसंभारेण निपुणमहो महोऽस्य गिरिवरस्य विधीयतामत्रोभवद्भिर्भवद्भिः ॥ २४ ॥

सकला एव गावोदुह्यन्तामुह्यन्तामुदाराः पयोभाराःपयोभाराःपरमान्नादीनि पच्यन्तां रच्यन्तारम्याणि शष्कुल्यादीनिकुल्यादीनि विधीयन्तां घृतमधुपानकादीनाम् ॥२५॥

मथितोदधिदधिमहोदधिनवनवनीतसितसिताशिखरिशिखरिणीरसाला रसाला भवन्तःसन्तुदिगन्ता गन्तारश्च सर्वे निमन्त्रयन्तु वसुधासुरान् ॥ २६ ॥

सुधासुरान् सुरानुपहसन्तु ते चादन्तो दन्तोत्थकिरणकन्दलीभिः स्निग्धानना न नाकपृष्ठमपिगरिष्ठं जानन्तु ॥ २७ ॥

ऋत्विजश्चाहूयन्तां हूयन्तां चानला न लाघवेन दीयन्तां तेभ्यो धेनुदक्षिणा दक्षिणाशया ब्राह्मणभोजनाय भोजना यतन्ताम् ॥ २८ ॥

मुद्गा-छुद्गादिसूपसूपचितनानाविधसौरभरभसव्यञ्जनव्यञ्जनानिकरकराञ्चितामि-

किं तत्राह निसर्गोवगाहिनी स्वाभाविकी गिरौ गिरौ वने वने चरन्तीति तेषां भावस्तत्ता सैवास्माकंसदेत्यर्थः ॥ २२ ॥

अत एव इह व्रजभुवि चरतां नैकत्र सदा स्थायिनां नोऽस्माकम् अनया किम् न किंचिदपि प्रयोजनमित्यर्थः । कीदृश्या अनयेन अनीत्यैव आरब्धया ॥ २३ ॥

तर्हि किं यागार्थकत्वेनोपकल्पितानां तत्तद्द्रव्याणां पुनरादानं युक्तं नहि नहि तैरेव युक्तंघ-तुरूपं यागान्तरं क्रियतामित्याह विस्रब्धया विश्वस्तया विध्वस्ता ध्वस्ता विपद्यया तया मम गिरा अस्मिन् गिरौ निपुण संमानमानयद्भिर्भवद्भिःअस्य गिरिवरस्य महो विधीयतां शतमन्योरि-न्द्रस्य मन्युसंभारेण यागोपकरणवृन्देन । "मन्युर्दैन्ये क्रतौक्रुधी,, त्यमरः ॥ २४ ॥

कुल्यादीनि कुल्यावापीसरांसि कुल्या कृत्रिमा सरिदित्यमरः ॥ २५ ॥

मथितानामुदधिश्च दध्नां महोदधिश्च नवानि नवनीतानि च सितसितानां श्वेतशर्कराणां शिखरी च शिखरिणीं रसालानां रसालाघर्वं च अपर्य्याप्तत्वादुदध्यादिवत् कथयितुमशक्तेः तद्ब-त्तेदिगन्ताः सन्तु । गन्तारो धावका यतस्तत एव वसुधासुरान् विप्रान् निमन्त्रयन्तु ॥२६॥

ते च विप्रा अदन्तोभुञ्जानाः सुष्ठु रान्तीति तादृशानपि सुरान् उपहसन्तु ॥ २७ ॥

दक्षिणाशया:सरलान्तःकरणा भना ब्राह्मणभोजनाय ब्राह्मणान् भोजयितुं यतन्ताम् भो-ज्यवर्धापनार्थम् ॥ २८ ॥

दक्षिणाभोजनाद्युल्लेखेन ब्राह्मणान् स्वपक्षीकृत्य सर्वजनप्रसादनगर्भोपर्वतपूजां विदधानआह मुद्गाः प्राप्तहर्षाः विप्रा ओदनकूटं विरचय्य गिरीन्द्रस्य पूजनमुपकल्पयन्तु । ओदनकूटंकी-दृशम् मुद्गादिसूपे। सुष्ठु उपचितारच नानाविधस्य सौरभस्य रभसं वेगंव्यञ्जयन्तीति ते च ये

घ्रमिष्टपिष्टकरसनिरपायपायसकुण्डकुण्डलितमामोदनमोदनकूटं विरचय्य पाद्यादिभि- र्यथाचारैरुपकल्पयन्तु गिरीन्द्रस्य पूजनम् ॥ २९ ॥

जनं जनमाश्वपाकमाश्वपाकमापतितं च पूर्णभोजनं प्रदीयतामित्येवं भूतेज्याविधौ सति ॥ ३० ॥

भेरीभांकृतिभिर्विशृङ्खलतमैः भेङ्कालशङ्खस्वनैर्नन्दवृदुन्दुभिदुंकृतैस्ततइतो निष्पक- ढक्कारवैः । विद्वद्वेदविदामुदारमधुरैर्वेदप्रगानोत्सवैर्नान्दीभिः सह वेदिनां कलकलो दिक्चक्रमाक्राम्यतु ॥ ३१ ॥

ततश्च ।दिव्यालंकृतिभिर्भकृतिश्रुतिसुखैर्दिव्याम्बराडम्बरैः पुम्भिः स्तम्भितदैवतैर्वर- वधूवृन्दैश्चमन्दस्मितैः । वीणावेणुमृदङ्गमङ्गलरवव्यासङ्गिसंगीतके नृत्यत्प्रर्तकनर्तकी गणयुतैर्यानप्रयाणोत्सवैः ॥ पूजां विधाय विधिवद्विदुषो द्विजाग्र्यानग्रे विधाय च निधिनाधिमङ्गलानाम् । सर्वे सुपर्वमदमोदपराः परार्धस्पर्धाः, परिक्रमत पर्वणि पर्वतेन्द्रम् ॥ ३२ ॥

नचैवं मनसि विचार्य्यमभिलषितप्रदावस्थावरः स्थावरः कथमयमास्थाकरो भविष्य- ति ॥ ३३ ॥

द्वितीय इव गिरीशोऽयमाशु माशुद्धः सर्वार्थसिद्धिसमर्थनसमर्थनयो भाविष्यति ३४

किं बहुना कथितोऽयं मम समीहितो हितोऽतिपन्थाः यदि रोचते तात तदानेनैव गम्यताम् ॥ ३५ ॥

इति विरते तद्वचनोपक्रमे क्रमेण सर्व एव तच्छ्रद्दधिरे दधिरे च मनोरथसिद्धे- रावश्यकत्वम् । आचार्य्यतामुपगतेन तदध्वरस्य कृष्णेन संजनयता शतमन्युमन्युम् । उत्कण्ठया परमयैव तदानुपूर्व्या सर्वं तदोपनतमेव चकार सर्वः ॥ ३६ ॥

---

व्यञ्जनानि कारास्तैः करम्बितम् । इष्टाः परिणामेऽपि सुखदा मिष्टाः पिष्टकाश्च रसैर्निरपायानि पायसकुण्डानि च तैः कुण्डलितं मण्डितम् ॥ २९ ॥

आश्वपाकं श्वपचपर्य्यन्तम् । आश्वपाकं शुनः कुकुरस्य पाको बालकस्ततपर्यन्तं "पोतः पाकोऽ- र्भको डिम्भ" इत्यमरः । आपतितं सर्वतः सुलभत्वेन समाकीर्णमिव यथा स्यात् तथेत्यर्थः ॥ ३० ॥

सह मिलितीभूय ॥ ३१ ॥

अधिमङ्गलानां निधीन् निधिरूपान् द्विजाप्रधान् परार्धैः परार्द्धप्रमाणजीवितैर्देवैरपि सह स्पर्द्धन्ते इति तथाभूताः ॥ ३२

अभिलषितप्रदस्य वाञ्छितदातुरवस्थायां वरः पर्वतश्रेष्ठः स्थावरः पर्वत आस्थाया आकरः कथं भविष्यति ॥ ३३ ॥

माशुद्धः शोभया निर्मलः सर्वार्थसिद्धेः सम्यगर्थनं प्रार्थनं प्रति समर्थो दानशक्तो नयो नीतिर्यस्य सः ॥ ३४ ॥ अतिपन्थाः सत्पथः ॥ ३५ ॥

कृष्णेनेति हेतौ तृतीया सहार्थे वा ॥ ३६ ॥

शब्दान्तरं हरति मङ्गलतूर्यघोषे वेदध्वनिध्वनिपरेषु च दिङ्मुखेषु । तेषामहो गिरिमहोल्लसितान्तराणामानन्दकन्दलित एव बभूव कालः ॥ उत्कण्ठमानकलकण्ठगणः पुरन्ध्रीनीरन्ध्रमङ्गलतरङ्गितगानघोषः । कर्णान्तिकोपनत एव हि कर्णभाजा कर्णेन्द्रियस्य फलमुल्ललयांचकार ॥ ३७ ॥

ततश्च । गावश्च रत्नमयकिङ्किणिजालमालाचीनाञ्चलप्रचलमौक्तिकमालिकाभिः भूषां दधुः किमपि काञ्चनशृङ्गकोषैः स्वस्वप्रसूपरिचये मुमुहुश्च वत्साः ॥ ३८ ॥

एवं प्रवृत्ते गिरिमहे महेच्छेन व्रजपुरपुरंदरेण गिरिपुरतः पुरतः समानीतं पूजोपहारं प्रतिपाद्य पाद्यप्रभृतिभिरर्चनं कारयता रयतानितं तुलितगिरिसंप्रतिपन्नकूटमन्नकूटमतिकुतुकेन केन च न संपादयांबभूवे भूवेपथुजनकमिव ॥ ३९ ॥

मध्ये कर्पूरगौरं शिखरमिव गिरेः शुद्धमन्नस्य कूटं तद्गात्रे गण्डशैला इव विविधरुचः पिष्टकानां समूहाः । मूलेप्रत्यन्तशैला इव दधिपयसां पायसानां च कुम्भास्तन्मूले व्यञ्जनाल्यःसुरभितररसाः सूपमुख्याः सरस्यः ॥ ४० ॥

कर्पूरैलालवङ्गादिभिरति सुरभि घ्राणसंतर्पणेन प्राज्येनाज्येन सिक्तं द्रुतकनकपयःसिक्तकैलासकल्पम् । नानापुष्पैः फलैश्च प्रचितमित इतस्तान्निरीक्ष्यान्नकूटं गोपेन्द्रो भूधरेन्द्रोचितमिदमिति स प्रीयमाणस्तदासीत् ॥ ४१ ॥

अथ तथाविधविविधविचित्रमन्नकूटं कूटं सुमेरोरिव निरीक्ष्य सविस्मितस्मितवदनो हरिरयं रयं प्रमोदस्य प्राप्तः सपरिजनजनकप्रत्ययं प्रत्ययान्वितकौतुकः पर्वतोपरि परिकल्प्य वपुरपरं परंतपस्तपनसहस्रसहस्रस्तमहःपूरमिव रमिवर्गशेखरः प्रखरः प्रमुदितमनामनागवलोक्य निजगाद ॥ ४२ ॥

हंहो पूज्यपादा निलकियत यतमानानां शुभवतां भवतां शुचितराः श्रद्धावद्धा बहुविधा निरपचितीरपचितीरादातुमनुग्रहग्रहगृहीत इव मूर्त्तोऽयमुज्जजृम्भे धराधराणां धुरन्धरो गोवर्द्धनः ॥ ४३ ॥

---

उत्कण्ठमानः तादृशस्वरशिक्षार्थं सोत्कण्ठः कलकण्ठानां कोकिलानामपि गणो यत्रस ॥ ३७ ॥

मुमुहुश्चेति चकारस्त्वर्थेऽप्यर्थे वा वत्सास्तु वत्सा अपि इति वा ।ते लालनार्थं मुहुरागतानां स्वस्वप्रसूनां महाभूषितानाम् । वत्साः सशङ्का गलशृङ्गपृष्ठन्यस्तेक्षणा दुद्रुवुरेव मुग्धाः ॥ ३८ ॥

पुरतः पुरात् । रयतानितं वेगेनैव विस्तारितम् तुलित उपमितो गिरिर्येन तत् गिरिसदृशमित्यर्थः । सम्यक् प्रतिपन्नानि कूटानि शृङ्गाणि यस्य तत् ॥ ३९ ॥

विविधरुच इति कुङ्कुमादिरसाक्तत्वात् ॥ ४० ॥ अतिसुरभि अतिसुगन्धं घ्राणसंतर्पणेन सुगन्धिना ॥ ४१ ॥

परं प्रतिपक्षरूपमिन्द्रं तापयतीति सः । तपनसहस्रस्यापि सहस्रं तेजसां स्रस्तं स्रंसनं यतस्तथाभूतो महःपूरो यस्य तम् पूर्वत्र स्रशब्दे अनचिचेति द्वित्वम् । उत्तरत्र "या शरी"ति सत्वम् । रमिवर्गशेखरो रसिकवृन्दमुख्यः ॥ ४२ ॥

यतमानानां यत्नवताम् अपचितीः पूजाः कीदृशी निरपचितीः अपचयशून्याः शुचितरा अतिशुद्धाः श्रद्धया बद्धा आवृताः ॥ ४३ ॥

पश्यत पश्यत। स्फारस्फीतगभीरकन्दरमुखो धत्ते मुखं चन्द्रवद् वृत्तमायभुजोऽप्ययं भुजयुगप्रद्योतिरत्नाङ्गदः। ग्रावाङ्गोऽपि सुकोमलानि मधुराण्यङ्गीकरोत्यङ्गकान्यस्य स्थावरविग्रहोपरि परिस्पन्दी चरो विग्रहः ॥ ४४ ॥

किंच। मरकतशिलापट्टश्लाघ्यं प्रकाण्डमुरःस्थलं शिखरसुषमाकान्ता दन्तावली विलसत्यसौ। दशनवसनस्याभा धातुप्ररोहविडम्बिनी क्षितिधरपतेर्मूर्तिद्वन्द्वं परस्परसोपमम् ॥ ४५ ॥

किंच। कलयतभवद्भक्त्युद्रेकाद्बुभुक्षुरिव स्वयं समणिवलयं दोर्दण्डाग्रं प्रसारयति द्रुतम्। अयमयमहो कामः सिद्धोबभूव भवादृशां नमत नमतेत्युक्त्वा कृष्णः स्वयं च ननाम तम् ॥ अथ सर्वे मूर्ध्नि बद्धाञ्जलयोजलयोनिमिव ज्वलन्तं तमवलोक्य नमो नमो नम इति विपुलपुलकाकुलाः कुलावलावलयश्च कुलवृद्धाश्च भक्तिश्रद्धावन्तो धावन्तो मेधावन्तो निजभाग्यमनुवर्णयन्तोऽयं तोषवन्तो मूर्तिमन्तमिव मेनिरे ४६ देवानामश्वन्यध्वन्यतिशयो ध्वनिरासीदभिवाद्यानां वाद्यानां स्थाने ॥ ४७ ॥

स्थाने स्थाने च वाणिन्यो वाणिन्यो ननृतुस्तरामधिकमधिकमनीयतमं च जगुश्च किंपुरुषाः किंपुरुषास्त एवेति न निश्चेतुं शक्याः कतिचन संगीतचरणाश्च नानाविधे तत्र कौतुके कौतुकेनात्मानं विसस्मरुः ॥ ४८ ॥

अभितोऽभितोपेण च सर्वेषामहो महोत्सवस्य महिमायं गिरिवरस्य रस्यतमः ॥४९॥

यदयं स्वानुरूपं रूपं समास्थाय समास्थायतं व्रजपुरपुरन्दरस्य समर्हणं समग्रहीत् ॥५०॥

---

विरोधालंकारं युञ्जाने रूपद्वयं वर्णयति। स्फारैर्विस्तारैः स्फीता पुष्टाः गभीरा कन्दरा एव मुखानि यस्य सोऽपि ॥ ४४ ॥

शिखरं माणिक्यमिव पक्षे शृङ्गमिव सुषमया कान्त्या परस्परसोपमामिति उरःस्थलमिव मरकतशिलेत्येवम् ॥ ४५ ॥

जलयोनिं वह्निम् अयं शुभावहविधिं मूर्तिमन्तमिव मेनिरे। धनजनसुतगोभूसौभगायूंष्यतृण्वन्नतिलघुनिजगेहानीलनैवेद्यहस्ताः॥यदखिलकुलवृद्धास्तत्कृपापाङ्गभङ्ग्या व्यतरदथ वधूभ्यःस्वप्रसादामृतं सः ॥

स्वनयनकरशाखासंज्ञयैवाह राधांत्वमिह मदुपकण्ठे वाञ्छितार्थं लभेथाः॥प्रतिदिनमिति तस्यां ततप्रसादातिरेकं ददृशुरथ जरत्यस्तुष्टुवुस्तां जनाश्च ॥ ४६ ॥

अध्वन्यध्वनि अभिवाद्यानां नमस्कार्य्याणां देवानां देवप्रतिमानां स्थाने वाद्यानाम् अतिशयो ध्वनिरासीदिति संबन्धः ॥ ४७ ॥

स्थाने स्थाने प्रतिस्थलमेव वाणिन्यो नर्तक्यो ननृतुस्तराम्। वाणिन्यः मत्ताःसत्य इत्यर्थः। वाणिन्यौ नर्तकीमत्ते इत्यमरः ॥ ४८ ॥

गिरिवरस्य यो महोत्सवस्तस्यायं महिमा रस्यतमः प्रशस्यमनुमोदनादास्वाद्यः ॥ ४९ ॥

सम्यगास्थया विश्वासेन आयतं समर्हणम् ॥ ५० ॥

इतिजनरवो नरवोधदुर्गमो दुर्गमोचनायैव बभूव भूवलयस्य ॥ ५१ ॥

तदनु दनुजदमनजनकेन निर्वाहिते हिते महीश्वरमहे कृतभोजनेषु जनेषु च संतर्पितेषु गीतवादित्रादिजीवेषुजीवेषुचाश्वपाकपाकर्पतितादिषु दिव्याम्बरवरमणिमयालङ्कारकारणमाखर्व्यपर्याकुलितदिग्वलयं सकलं सरसममी पर्वतपर्वतरलाः सर्वत एव प्रदक्षिणं कर्तुमारेभिरे ॥ ५२ ॥

तद्यथा । अग्रेणान्यग्रजाग्रत्सुपटिमपटहप्रौढभांकारिभेरीढक्काढक्कारहिक्कामुखरितककुभो वादकाः संप्रतीयुः।पश्चाद्गाश्चालयन्तो मणिकनकचिताः कुङ्कुमैरङ्किताङ्गीराभीरा वीतभीकाः करकृतलगुडा जागुडाक्तप्रतीकाः ॥ ५३ ॥

किंच वीणावेणुप्रवीणा मृदुमधुरकलोत्तानगानावधानाः पश्चात् पश्चात् प्रनृत्यप्रमुदितमनसो वादका नर्तकाश्च । तत्पश्चात् स्वर्णकर्णीरथसमशकटीगर्भनिर्भातवासा गोप्योगोप्यानिगोपेश्वरसुतचरितान्युद्गिरा प्रोद्गिरन्त्यः ॥ ५४ ॥

किंच । प्रत्यूहव्यूहहारी हरिरिह विहरन् सुप्रशस्यैर्वयस्यैः सार्द्धश्रद्धानुबद्धात्माभिरभि रभसारब्धहासोपहासैः । पश्चादाभीरराजप्रभृतिरतिमुदामोदिमन्दारदामोद्दामाम्नातोरुवक्षाःस्मितसुरसमुखो मुख्य आभीरवर्गः ॥ ५५ ॥

इत्येवं यथाविधिहितविप्रदक्षिणं प्रदक्षिणं गिरेरथ तथा विधाय तथाविधाय प्रमोदाय प्रमोदायस्थलमनाकलयन्तो लयं तोष एव ते जग्मुः ॥ ५६ ॥

---

जनरवः परंपरया सर्वदेशगतः सन् दुर्गमोचनायैव श्रुतः कीर्तितश्च संसारादिदुःखत्राणार्थमेवाभूत् ॥ ५१ ॥ पाका बालकाः ॥५२॥

अव्यग्रं यथा स्यात् तथा जाग्रत् प्रकाशमानः शोभनः पटिमा वादनचातुर्यं यत्र तथाभूतः पटहश्च प्रौढभांकारिणी भेरी च ढक्कानां ढक्कारश्च त एव हिकास्ताभिर्मुखरिता इव ककुभो दिशो यैस्ते ॥ ५३ ॥

स्वर्णस्य कनकस्य कर्णीरथो विमानं तत्समास्तत्तुल्याःशकटयस्तासां गर्भे निर्भातःप्रदीप्तो वासो यासां ता गोप्यः संप्रतीयुरिति पूर्वस्यानुषङ्गः ॥ ५४ ॥

प्रत्यूहो विघ्नः। अभि निःशङ्कमेव। अतिमुदा अत्यानन्देन। प्रतीयायेति वचनविपरिणामेनात्रानुषङ्गः। आमोदिनीभिर्मन्दारदामभिरुद्दामं स्वच्छन्दं यथास्यात् तथा आम्नातानि आच्छन्नानि उरूणि बृहन्ति वक्षांसि यस्य तथाभूतः सन् ॥ ५५ ॥

विधिमनतिक्रम्य विहिता विप्रेभ्यो दक्षिणा यत्र तत् प्रदक्षिणं विधाय कृत्वा तथाविधाय प्रमोदाय तादृशमानन्दं निवासयितुं प्रमायाः प्रमाणस्य उत्कर्षेण आयो वृद्धिर्यत्र तथाभूतं स्थलम्-अनाकलयन्तः अपश्यन्तः आत्मनामल्पप्रमाणत्वात् तस्य तु प्रमोदस्यातिबृहत्वात् तोषे तस्मिन् प्रमोद एव लयं श्लेषं जग्मुः प्रापुः तमानन्दमात्मसु वासयितुमशक्ता आनन्द एव तस्मिन्नात्मनो वासयामासुरित्यर्थः। अत्रोद्देश्यप्रतिनिर्देश्यतया प्रमोदे इति वक्तव्ये तोषे इत्युक्तिर्यमकानुरोधात् ॥ ५६ ॥

ततश्च परेद्यवि द्यवि भुवि प्रथमानमानमहत्या महत्या मुर्देवानकादिशब्दमनिवार्य्यैव तेनैव क्रमेण भाविन्यां भाविन्यां यमयमभगिनीमियायामद्वितीयायां द्वितीयायां यमुनास्नानार्थं तत्तटमेव सर्वे समाजग्मुः ॥ ९७ ॥

विभातायां च तस्यां क्षणदायां क्षणदायां विशिष्टशिष्टसमाचारलब्धे भ्रातृद्वितीयानिमन्त्रणे मन्त्रणेन चतुरया रयादेवोपनन्दात्मजयात्मजयाय सदा मोदरस्य दामोदरस्य भ्रातुर्निमन्त्रणं यदकारि ॥ ९८ ॥

तदा स च सचराचरजगन्मनोरञ्जनारञ्जनोचितभगिनीवात्सल्यानुरोधेन विराधेन विरहितं हितं समुपचितनिचद्रवोदययादयया शरीरिण्येव तया परिवेष्यमाणमिष्यमाणमिष्टपिष्टकादिकमतिसुरसबहुरसबहुविधमामोदनमोदनपानादिकं साहचरैर्हासरसपटुनावटुनावलितैः सह कुतूहलिना हलिना च सुरसं भुञ्जानो हसता सता तेनैव माणवकेन नवकेन नदनविनोदेन जगदे जगदेकमोहनः श्रीकृष्णः ॥ ९९ ॥

हन्त हन्तरधस्य वयस्य दुर्मेधसा वेधसा वेइ सकला एव तिथयोऽतिथयो भ्रातृद्वितीयात्वेन न कृताः कथं वा हे श्रीवत्सर वत्सरदिनसंख्यासंख्याताः स्वसारोद्याः स्वसारो दयाः शरीरिण्य इव नाभवन् भवतः ॥ ६० ॥

यद्युभयोः कतरदेकतरदेव समभविष्यद्भविष्यदतिकौतुकं तदैव नः ॥ ६१ ॥

नहीदृशं पर्वतपर्वतरले गतेऽहनि च निचयीभूतेऽन्नपानेमया भो जनमिय भोजनमियतमेन भुक्तं यथाद्येति तदुपहासहासरसवचसा च सान्दमभ्यवजहार जहार च सकलजनमनो मनोज्ञचरितः सघोषराजयुवराजः ॥ ६२ ॥

---

ततः परेद्यवि भाविन्यां तत परदिने भविष्यन्त्यां भाविन्यां कान्तिरक्षिण्यां यमश्च यमभगिनी यमुना च तयोः प्रियायां द्वितियायां प्रातर्यमुनास्नानार्थं प्रतिपद्येव सायं समाजग्मुः। द्यवि-भुवि स्वर्गे मर्त्यलोके च प्रथमानो मानआदरो यस्य तं शब्दम् अहत्या प्रतिघाता भाविनैवानिवर्य्य ।९७।

उपनन्दात्मजया यदि भ्रातुर्निमन्त्रणमकारि तदा तया परिवेष्यमाणमोदनपानादिकं भुञ्जानः श्रीकृष्णो हसता माणवकेन जगद इत्यन्वयः। निमन्त्रेण विषये यन्मन्त्रणं योग्यविवेचनशक्तिस्तेन हेतुनाचतुरया उपनन्दात्मजया सुनन्दया भ्रातुः कथंभूतस्य आत्मजयार्थं सदा एव मोदरस्य हर्षयुक्तस्य हर्षदायिनो वा ॥ ९८ ॥

अरक्षिप्रेमेव सम्यगुपचितश्चित्तद्रवस्य उदयो यस्यास्तया इष्टान्यनपकारीणि पिष्टकादीनि यत्र तत् अतिसुरसं च तत् बहुभी रसैर्बहुविधं चेति तत् नदनविनोदेन वचोविलासेन ॥ ९९ ॥

भ्रातृद्वितीयात्वेन अतिथयः नियमागमनपराः। श्रीवत्सर हे श्रीवत्साख्यसल्लक्षणयुक्त इदमप्येकं मद्वाचकमुत्तमलक्षणं कथं तव नाभूदिति भावः।यद्वा श्रीः संपत्तिस्तयुक्तं वत्सं वक्षो रातीति तथापि संपत्तिस्तत्रोचितैवेति भावः। स्वेषां सारःश्रेष्ठ उदयःसुखभोजनात्मको याभ्यस्ताः स्वसारो भगिन्यः ॥ ६० ॥

भो हे जनप्रिय जनसंघट- एव प्रीयसे न पुनरेकान्ते मिष्टद्रव्यभक्षणसुखपरिपाटीं जनासीति भावः। तदुपहासस्य हासःप्रकाशस्तेन सरसवचसा ॥ ६२ ॥

अथ परस्परादरपरा परार्ध्यमणिकनकालंकारसिचयचयव्यावदायी समजनि जनितकौतुका जनिमतामतानवेनैव ॥ ६३ ॥

एवं समाप्ते भ्रातृद्वितीयामहे या महेन्द्रस्य मखभङ्गापीडा पीडाजनि तदुपशमकृते कृतेयं तस्य या कुरीतिरीतिदरी ऽधुना साधुना मतेन वर्ण्यते ॥ ६४ ॥

तथाहि स्थितोऽधिसुरसभं रसभङ्गविमना विहते निजमखे सखेदं खे दंदह्यमान इव पुरंदरोऽदरोदरोदितमनस्तापरुषा एरुषाकारमजल्पत् ॥ ६५ ॥

अहो चित्रमहो महो मेपातितः पाल्यमानपशुभिः पशुभिः शिशुवाचाशु ॥ ६६ ॥

वाचामधीशापि यस्य मे वास्तवं स्तवं कुरुते तत्र मदुपासापासनाकारमागो मा गोपा गणयन्ति स्म यन्ति स्म केवलं वलं मदान्धतायाः ॥ ६७ ॥

भद्रं वो भद्रमाभीरा भीराहित्येन कथं सन्ति संतिग्मतयो भवन्तः ॥ ६८ ॥

कथं वालो वा लोलमतिरयं तिरयंस्त्वादृशामघं शतमन्युमन्युतो युष्मानायुष्माना-सादयतु प्रियं प्रियंभावुको भावुकोदयेन कथं वा भवतु वः पश्यामि ॥ ६९ ॥

व्यावदायी परस्परदानम्। जनिमतां जन्मवताम्, अतानवेनैव बाहुल्येनैव जनितं कौतुकं यया सा ॥ ६३ ॥

मखभङ्ग एव आपीडः शेखरो यस्याः सा पीडा। ईतिरतिवृष्टिलक्षण उपद्रवः ॥ ६४ ॥

अदरो निर्भयः अत एव अदरोदितेन अनल्पोद्गमेन मनस्तापेन या रुट् क्रोधस्तया ॥ ६५ ॥

पाल्यमानपशुभिर्गोपैः पशुभिः पशुतुल्यैः आशु शीघ्रं शिशुवाचा मे महः पातितः। वस्तुतस्तु पशुभिरपि पाल्यमानमपेक्ष्यमाणं पशुदर्शनं येषां तैः 'अव्ययंपशुदर्शन' इति मेदिनी ॥ ६६ ॥

वाचामधीशापि सरस्वत्यपि। तत्र मयि आगोऽपराधं गोपा मा गणयन्ति स्म। आगः कथंभूतं मदुपासनाया अपासना त्यागस्तदाकारम् मदान्धताया मदान्धत्वस्यैव वलं यन्ति स्म प्राप्तवन्तः। वस्तुतस्तु मे वाचाम् अधीशापि मम दुर्गतेरपि सरस्वती यस्य शिशोर्वास्तवं स्तवं कुरुते तत्र तस्मिन् श्रीकृष्णे सति किंच मम आ सम्यक् प्रकारेण अन्धता एव यास्ता वलं यन्ति स्म प्रापुः तत्र श्रीकृष्णे मम त्वङ्गत्वान्येव वर्धन्त इत्यर्थः ॥ ६७ ॥

एवं परुषवल्गनैरप्यशान्तो बुद्ध्या अभिमुखीकृत्य सतर्जनमाह भद्रमिति। भीराहित्येन निर्भयत्वेन संतिग्ममतयः सम्यक्कटुबुद्धयः। वस्तुतस्तु भीराहित्ये सति भवन्तः सुतीक्ष्णमतयः कथं न सन्ति अपितु सन्त्येव अत्र पक्षे भद्रं भो भद्रमित्युल्लासे ॥ ६८ ॥

लोलमतिरयं बालः कृष्णः शतमन्युमन्युतो हेतोस्त्वादृशामघमपराधं तिरयन् दूरीकुर्वन् स्वयं वा आयुष्मान् सन् कथं युष्मान् प्रियम् आसादयतु प्रापयतु कथं वा वो युष्माकं भावुकोदयेन मङ्गलोदयेन हेतुना प्रियंभावुको भवतु तदहं पश्यामि। वस्तुतस्तु अलोलमतिराति धीस्त्वादृशां त्वद्विधानामन्येषामप्यघं व्यसनं तिरयन् सन् भावुकोदये सति कथं न प्रियम् आसादयतु कथं वा न प्रियंभावुकोभवत्विति नेत्यस्य उभयत्रापि संबन्धः ॥ ६९ ॥

इति प्रतिघाप्रतिघातभग्नमना मनाग्विचिन्त्यमहाकल्पकल्पनकारिणो महापवना-न् घनान् क्रोधनिर्बन्धतो बन्धतो मोचयित्वा रचयित्वारमतिरलाघया वलमानमा-ननाभाजनान् कृतसभा जनान् कृतसद्यावलोकान् संवर्त्तकादीनुवाच ॥ ७० ॥

हंहो रंहोऽञ्जिता जिताखिलासारकृतः सारकृतः खलु भवतां मन्ये मदोज-सां वर्द्धकः ॥७१॥

यन्मया निगद्यतेद्य तेन भवन्ता भवन्तो मत्प्रियाय कृतार्थयन्तु माम् ॥७२॥

मास्तु विलम्बो निराविलं वो निरासकत्वमस्ति जगतः किमेकस्य प्रदेशस्य तदधुना धुनाना इव भवनकोषम् व्रजनगरनाशाय वर्षन्तु ॥ ७३ ॥

इत्येवमुक्तो मुक्तो बन्धनतो नतोऽतितरां संवर्त्तको नाम गणः प्रचक्रमे क्रमेण स्वदर्पमुपपादयितुम् ॥ ७४ ॥

प्रथमतः कापि कादम्बिनी गगनसरसः शैवालावली वलीयसीव किरणमालि-मालिन्यमासादयामास ॥ ७५ ॥

क्षणमात्रतो रसातलतलतः उत्थिता वलमानमाननागनागरीनिःश्वासधूम-धोरणीव दिग्वलयमन्धकारितम् चकार कापि घनश्रेणी ॥७६ ॥

तदविलम्बतः केदारदारणखेलापरिणतदिक्करिकरिणीगणा इव युगपदेव देववर्त्मरुरुधुरुरुधराः केचिदम्भोदा दम्भोदात्ताः ॥ ७७

तदनु शतकोटिकोटिभिरक्षुण्णपक्षतयाऽक्षतया कायव्यूहमिवारचयन् मैनाको नाकोपरि परिभ्रमन्निव कोपि घनगणो घनत्वमाससाद ॥ ७८ ॥

प्रतिघायाः क्रोधस्य प्रतिघातेन भग्नं मनो यस्य सः "प्रतिघा रुट्क्रुधौ स्त्रियाः" इत्यमरः महाकल्पस्य महाप्रलयस्य कल्पनकारिणो निर्माणसमर्थान् महापवनान् बृहच्छरीरान् अतिरला-घया यूयं महाबलिन एव मम परमसहाया इत्येवं प्रोत्साहनेन वलमानमननाया अत्यादरस्य भाजनान् अरं शीघ्रमेव रचयित्वा उवाच । कृतं सभाजनं भवत्किंकरा एव त्वदाज्ञानुवर्त्तिन इत्येवमिन्द्रस्तुतिर्यैस्तान् ॥ ७० ॥

जितमखिलं यैस्तथाभूतान् आसारान् धारासंपातान् कुर्वन्तीति ते । सारकृतो मदः बलजनितो गर्वः ॥ ७१ ॥

भवन्तो यूयं मत्प्रियाय मत्प्रीत्यर्थं भवन्तो वर्त्तमानाः ॥ ७२ ॥

वो युष्माकं निराविलं यथा तथा जगतो विश्वस्यापि निरासकत्वं संहारकत्वम् अस्ति तादृशी योग्यता वर्तत इत्यर्थः ॥ ७३ ॥ अतितरां नतःकृतप्रणामः ॥ ७४ ॥

कादम्बिनी मेघमाला ॥ ७५ ॥ मानः परिमाणं गर्वो वा ॥ ७६ ॥

केदारः पर्वतविशेषः। देववर्त्म आकाशम् । दम्भेन उदात्ता उद्धताः ॥ ७७ ॥

शतकोटिकोटिभिर्वज्रैः । अक्षतयेति अक्षुण्णपक्षतयेत्यस्य विशेषणम् अक्षुण्णपक्षता तस्य भञ्जना संपूर्णैव न लेशांशेनेत्यर्थः ॥ ७८ ॥

तत्समकालमेव लोकालोकाचल इव खरशिखरशिखाभिरभित एवयुगपदूर्ध्वमूर्ध्वमूर्जस्वलतया वर्द्धमानाभिरितरेतरेण परित एव समासक्ताभिर्ज्योतिश्चक्रं निवार्य्य वहिर्लोकमिवान्तरं लोकमपि तमोमयं कुर्वाणः कथन धाराधाराणां निकायोऽतिकायोऽतिवरामासीत् ॥ ७९ ॥

एवं सति स तिमिरसंघातः खरतरपरपरशुच्छेद्योऽपि यदि नाभूत् तदा तमोभूरिव भूरि वर्द्धिष्णुतमा भुवनत्रयीयमासीत् ॥८०॥

इदमसीममसीमयमिव जगदण्डभाण्डं च ॥८१॥

तथापि व्रजपुरपुरंदरनन्दनचरणनखसुधाकिरणकिरणकन्दलीदलितमिवव्रजपुरं प्रति प्रतिकूलं तथा नासीत् ॥८२॥

एवं द्रव्यमिव दशमन्द मुहूर्तं यदि समन्दीकृत्य दिशो भृशमन्धतमसमन्धतमसकलजनमिव जगत्कुर्वाणमिव घुणविद्धादिवो ॥८३॥

तदा तदाकारिमकमिव विन्दुजालं महीमहीनकर्दमा नखगड्डकटाहाद् गलतामावरणवारां वारान्तरानुत्पन्नं समनन्तरमनन्तरयास्त एव विन्दवो विन्दुतामपहाय गगनमहान्यग्रोधस्ये न्यग्रोधस्यदा महावरोहाकारा धाराभावमापेदिरे ॥ ८५ ॥

एवं सति । वत्सानाच्छाद्य सास्नावलयवलनयाद्राघयन्त्यः शिरोधीन् मूर्द्धानं नम्रयन्त्यः कुटिलितनयना निश्चला लम्बिलूमाः । धारापाताघातक्षुभितपृथुतरोत्कम्पभूयिष्ठपृष्ठाः कातर्य्येणेक्षमाणाः शरणमुपययुर्धेनवः कृष्णमेव ॥८६॥

---

खराभिः शिखराशिखाभिः शृङ्गाग्रैःऊर्ध्वमूर्ध्वं व्याप्य ॥ ७९ ॥

परशुनापि छेतुमशक्य इति कविप्रौढोक्तिरतिनैविड्यताद्रूप्यां । तमोभूरन्धकारस्वामिका भूमिः ॥८०॥

असीममसीमयमिव इति वस्त्वन्तरस्यापि कालिमापादकत्वांशेनोत्प्रेक्षा ॥८१॥

सुधाकिरणश्चन्द्रः ॥८२॥ पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनोभ्यो नवभ्यो द्रव्येभ्योऽतिरिक्तम् । अन्धतमसं नाम दशममिव द्रव्यं दश दिशो मन्दीकृत्य अन्धतमाः सकला एव जना यत्र तथाभूतं जगत्कुर्वाणमिव ॥ ८३ ॥

तत प्रसिद्धम् आवरणवाराम् अण्डकटाहवहिःस्थितजलानामिव विदुन्जालं कर्तृ आकारिमकमकस्मादुद्भूतमिव किंच वारान्तरेऽनुत्पन्नम् अहीनकर्दमां सपूर्णकर्दमयुक्तां महीं चक्रे ८४

अनंतरयाः अनन्तवेगाः गगनमेव महान् न्यग्रोधो वटस्तस्य महान्तः अवरोहाः शाखाशिखास्तदाकाराः न्यञ्चो न्यग्भूताः रोधस्यदा आवगवेगा येषां ते ॥८५॥

सास्नाभिर्गलकम्बलैर्वलयवलनया मण्डलीकरणेन वत्सानाच्छाद्य । शिरोधीन् ग्रीवाः । कुटिलितनयना इति आसारसंमर्दभीत्या नेत्रयोर्मुद्रणात् वहिर्दर्शनार्थं च किंचिदुन्मीलनाच्च । लम्बिलूमाः लम्बमानपुच्छाः ॥८६॥

किंच । आविद्धः शृङ्गकोटावतिपृथुनि ककुन्मण्डले गण्डशैले संशीर्यन् जर्जरत्वं प्रगत इत इतः शीकराकारनाशः । भग्नः पृष्ठे गरिष्ठे स्फटिकमणिशिलापेशले हन्त वारां धारापातः मकोपं रुजमपि विदधे धावतां पुंगवानाम् ॥ ८७ ॥

अथ क्षणक्षणतो विलक्षणलक्षणतो रम्भास्तम्भास्तरुणतरा इव स्थूलभावलभा वर्षोपसीधाराः सुदुर्वारा वारामवलोक्य सर्व एव सातङ्कं तङ्कनाऽकालकल्पकल्पमाशु मन्यमाना वलमानावलभावा व्रजपुरजना जनानन्दकरं श्रीकृष्णमुपसंगम्य गम्यमानखेदातिशयं निवेदयांचक्रुः ॥ ८८ ॥

भो भोः कृष्ण महाबाहो महावाऽहो नः खलु विशंकटं संकटं संचचार ८९

तदिदं गोकुलमात्मनाथमात्मनाथ मा विलम्बेन प्रतिपालयितुमर्हसि ॥९०॥

पश्य पश्य । इयं विद्युद्वीथीकुपितफणिजिह्वेव चलते शिलासारः सारं हरति पुरवाटीक्षितिरुहाम् । अयं मेघज्योतिर्व्यतिकर उदीर्णोऽधिसलिलं ज्वलत्युच्चैरौर्वानल इव समुद्रोदरचरः ॥ ९१ ॥

किंच । यथोर्ध्वं स्फायन्ते पुरुपुरुपगर्जं जलमुचः क्रमस्थूणास्थौल्यं तिरयति च धाराततिरियम् । अयं क्षोणीनत्युन्नतिपरिचयच्छित् परमपामपारो व्यापारः प्रलयजलधित्वं प्रथयते ॥ ९२ ॥

परितश्च पश्य । निपण्णानुरसङ्गे खरतरकिलापातविकलान् स्वतन्वा संच्छाद्य व्यथितवपुषो वत्सनिचयान् । दवाग्नेः संत्रस्ताः सपदि सलिलात् पाहि न इति प्रतीक्षन्ते वाष्पाकुलचलदृशस्त्वां सुरभयः ॥ ९३ ॥

---

पुंगवानां शृङ्गककुत्पृष्ठपातितानासारान् यथास्वरूपोदयं वर्णयति आविद्ध इति। प्रकोपं युयुत्साभिप्रायेण क्रोधम्। रुजम् अत्याघातवशात्पीडाम् ॥८७॥

तरुणतरा अतिपुष्टा रम्भाणां स्तम्भा इव स्थूलभावं स्थौल्यं लभन्त इति ताः वारां धाराः तम् अकाले असमयेऽपि कल्पः कल्पनं यस्य तादृशं कल्पं प्रलयम् । वलमानोऽवलभाव आवल्यं येषां ते ॥८८॥

हे महाव हे उत्सवरक्षक सदा सुखदायिनि त्वयि तिष्ठति कथमेतद्दुःखमिति भावः। अहो आश्चर्य्यम्। नोऽस्माकम् विशंकटं वृहत् ॥ ८९ ॥

आत्मनाथं त्वन्नाथकं आत्मना स्वयमेव यद्वा आत्मना सह अथ अनन्तरमेव मा विलम्बेन अविलम्बेनः ॥ ९० ॥

शिलानां आसारः सपातः मेघज्योतिषां वज्राग्नीनां व्यतिकरो व्यतिषङ्गः ॥ ९१ ॥

यथा स्फायन्ते वर्द्धन्ते तथैवेयं धाराततिः स्थूणास्थौल्यं स्तम्भस्य स्थूलतामपि तिरयति तिरस्करोति । अप्यर्थे चकारः ततश्च क्षोण्याः पृथिव्या नत्युन्नत्योः निम्नत्वोन्नतयोः परिचयं छिनत्तीति तथा भूतोऽपां जलानां व्यापारोऽपारः ॥ ९२ ॥

कृपां जनयितुं धेनूनां दुरवस्थां तर्जन्या दर्शयन्त आहुः निपण्णानिति ॥ ९३ ॥

अन्यतश्च पश्य । पश्य । चूर्णायित्वा महति ककुदि क्षोणिपृष्ठं गते द्रागोघे मुक्ताव्यतिकर इव स्थूलवर्षोपलानाम् । मेघान् क्रोधोन्नमितशिरसो भीममुद्वीक्षमाणा धारापातप्लुतमुखदृशो यान्ति कष्टं महोक्षाः ॥ ९४ ॥

किंच । अनल्पः कल्पान्तक्षमतममहावर्षणतनूरनर्थानां सार्थो दुरुपशम एष व्यजनि नः । परित्राता नान्यस्त्वदपर इति त्वामिह वयं प्रपन्ना व्यापन्नानहह निजलोकान् न कुरु नः ॥ ९५ ॥

इत्याकर्णयन्नाकर्णयन्नयनप्रान्तो विलोकयन्नपि धेनूनामनूनामपग्लानिं शतमन्युमन्युजन्यमिदमिति विचारयन्मधुमधुरमकम्पानुकम्पानुचर्या गिरा मा भैष्ट भो मा भैष्ट क्षुद्रो हि क्षुद्रोहिबाधोदय इवायमुपद्रव इत्याश्वास्य ॥ ९६ ॥

संकल्पकल्पनमात्रादेव तमनर्थमनर्थकत्वमापादयितुं समर्थोऽपि भजतामाकल्पमाकल्पमिव वाङ्मनसयोः सुरकिन्नरनरनिकरेण गास्यमानममरपरिवृढमदालीलाविशेषं लीलाविशेषं कुसुमसुमधुरया तन्वा तन्वानोऽकृतपरिकरबन्धोऽवहेलावहे लावण्यसरसि स रसिकशेखरः सुस्नात इव ॥ ९७ ॥

---

प्रियाणां पुङ्गवानामोजःपरिभवं तच्चरित्रेण दर्शयन्तस्त्राणे संत्वरमेव समुत्साहयन्त आहुश्चूर्णायित्वा चूर्णानीवाचरित्वा चूर्णीभूयेति यावत् स्थूलवर्षोपलानां ओघे समूहे क्षोणिपृष्ठं गते सति महोक्षा महावृषाः ॥ ९४ ॥

कल्पान्ते महाप्रलये क्षमतममतिसमर्थं यन्महावर्षणं तस्य तनुर्मूर्त्तिरूपः अनर्थानां सार्थः समूहः । नोऽस्मान् प्रपन्नान् व्यापन्नान् न कुरु । अत्र प्रत्युपद्रवसमयमेव सर्वव्रजवासिनां नारायणसमो गुणैरिति य एतस्मिन्महाभाग इति अरानके रक्ष्यमाणा इत्यादिसर्वज्ञगर्गवाक्यानां सहसा स्मरणात् तत्प्रपत्तिर्ना सगतेति ॥ ९५ ॥

इत्याकर्णयन् मा भैष्ट मा भैष्ट इत्याश्वास्य लीलाविशेषं तन्वानो यदा गोवर्द्धनमुद्धिधीर्षुरभवत् तदैवास्य कृष्णस्य करोदरे स गोवर्द्धनो लोकेन व्यालोकीत्यन्वयः । आकर्णं कर्णपर्यन्तं यन् गच्छन् नयनप्रान्तो यस्य सः । ग्लानिं कथंभूतां न ऊनां अनूनां सम्पूर्णामेवेत्यर्थः । इदं अतिवर्षणम् । अकम्पा निश्चला या अनुकम्पा सैव अनुचरी यस्यास्तया गिरा तद्वागधीनैव कृपाशक्तिस्तामाश्रित्य प्रवर्तत इत्यर्थः । यद्वा प्रथममनुकम्पा तदनुचरी तदनुगामिनी च या गीस्तया । हि निश्चितं क्षुद्रोऽयमुपद्रवो क्षुधो बुभुक्षाया द्रोही द्रोहकरो बाधोदयः पीडोद्गम इव अल्पप्रयोगमात्रेणैव सुचिकित्स्य इति भावः ॥ ९६ ॥

लीलाविशेषं तन्वानो विस्तारयितुम् । कथंभूतं भजतां जनानां आकल्पं कल्पपर्यन्तं वाङ्मनसयोराकल्पं भूषणमिव कीर्त्तनीयत्वचिन्तनीयत्वाभ्याम् । किंच अमरपरिवृढस्य इन्द्रस्य मदालीनां मदश्रेणीनां लावी छेदो शेषो यस्य तम् । अवहेला इन्द्रं प्रत्यवज्ञा तां वहति व्यनक्तीति तथाभूते लावण्यसरसि ॥ ९७ ॥

छत्राकं कुतुकेन बालक इव स्तम्बेरमः स्तम्बवत् श्रीगोवर्द्धनमुद्दिधीर्षुरभवच्चित्तेन कृष्णो यदा । तर्ह्येवास्य करोदरे चटचटाध्वानध्वनत्कन्दरासुप्तोद्बुद्धकिशोरकेशरिसभोन्यालोकि लोकेन सः ॥ ९८ ॥

ततश्च । धातुर्ध्यानप्रतानक्षपणपणपटुः मौणनागेन्द्रनारीक्रीडामाध्वीकपानोत्सवनवरभसास्वादबाधप्रगल्भः । दिङ्मातङ्गेन्द्रदानद्रवणविघटनस्तत्समुल्लासनोत्थो भ्राम्यन् ब्रह्माण्डभाण्डोदरमधि न ममौ कोऽपि कोपी प्रणादः ॥ ९९ ॥

. . . . . . . . . . . .

णां वर्षमासीदधिधरणि यशःपातवद्वज्रपाणेः ॥ १०० ॥

किंच । ऊर्ध्वोर्ध्वं वर्द्धमानैः खरतरशिखरैश्छिन्नभिन्नाभ्रपङ्क्तेस्तस्य क्षोणीरुहौघैः परिभवितुमिव प्रोद्ययै नन्दनद्रून् । सिंहैर्दन्तावलेन्द्रभ्रमकुपिततमैर्दारुणं दारयद्भिस्तीक्ष्णाग्रैर्नखाग्रैर्जलधरपटलीं सर्वतः संप्रसस्ते ॥१०१॥

स्तम्बेरमः हस्ती । स्तम्बवत् गुच्छमिवेत्यर्थः । बालकस्य छत्राकोद्धरण एव बलं पर्य्याप्तमित्यपर्य्याप्तत्वेन स्तबेरमेण ९.६ पुनरुपमानम् । यदैव चित्तेनोद्दिधीर्षुरभवत्तदैव तस्य करोदरे लोकेन सन्यालोकीति संकल्पसमकालमेव तादृशव्यापारोदयात्तत्रानायासः सूचितः चित्तेनेति केवलेन मनसैव न तु स्वकरेणापीति दिधीर्षया अपि सामान्यतः प्रथमावस्थैव उक्ता मनसा पाटलिपुत्रं प्रथमं जिगमिषतीतिवत् । कीदृशः सन् न्यालोकि चटचटाध्वानेन ध्वनन्तीषु कन्दरासु सुप्ता एवोद्बुद्धा स्वापावस्थतयैव सहसोच्छलनात् प्राप्तजागरा किशोरकेशरिणां सभा बलिष्ठसिंहश्रेणी यत्र सः ॥ ९८ ॥

चटचटाध्वानमेव सविशेषं वर्णयति धातुरिति । क्रमेण ऊर्द्ध्वाधोमध्यलोकव्याप्तिः । ध्यानस्य प्रतानस्य क्षपणं दूरीकरणमेव पणस्तत्र पटुस्तत् सिद्धौ चतुरः । आस्वादस्य बाधे प्रतिबन्धे प्रगल्भः। दानस्य द्रवणं तत् विघटयति दूरीकरोतीति सः तत्समुल्लासनोत्थः पर्वतोत्क्षेपेण जनितः। त्रयाणामप्येषामन्यासम्भावासंभवेऽपि सहसा त्रासोदयसूचनात् प्रणादस्य जातिप्रमाणाभ्यामतिशयः सूचितः ॥९९॥

वर्षं वर्षणं वृष्टिर्वर्षमित्यमरः । तदेवोत्प्रेक्षते । ओजसो बलस्य कण्डूला स्वानुरूपपात्रादृष्ट्या कण्डूवती या लीला तया लसति शोभते इति तेन करकमलेन उद्धाप्यमानस्याद्रेः स्वप्रभुपराक्रमदृष्ट्यैव हासप्रकाशस्य प्रसरः प्रसरणं स इव सम्यगाम्रतोऽम्यस्तस्तत्कारणभूतो हर्षप्रकर्षो यत्र सः । बहुहर्षजनित एवायं हास इत्यर्थः । किंच हासोऽयं स्वगोत्रशत्रुमिन्द्रं प्रत्यवहार्थं प्रयुक्त इत्युत्प्रेक्षान्तरं सूचयन् पुष्पाणां धरणौ पतनलिङ्गवशात् पुनरप्युत्प्रेक्षते यशः पातवदिति ॥१००॥

तस्य गोवर्द्धनस्य क्षोणीरुहौघैः प्रोद्ययै प्रोदगम्यत । नन्दनद्रून् नन्दनवनवृक्षान् । दन्तवलो हस्ती । जलधरपटलीं दारयद्भिः सद्भिः सिंहैः सर्वतः समन्तात् सप्रसस्ते प्रोद्गम्यते स्म १०१

उदस्ते कृष्णेनावरकरतलेनाचलपताबद्धो कोऽयं व्योम स्थगयति किमेतत्कथमिति । चकम्पे कैलाशः समजनि सुमेरुः पुरुभयो ममज्जोर्वैर्गैः पयसि चकितो दिग्गजगणः ॥१०२॥

किंच । जलासारैर्विश्वक्स्रुतिभिरथ मुक्ताक्षरचयैर्मुरारातेः श्रीदोर्मरकतमणीदण्डरुचिरम् । अभेद्यं दम्भोलेरपि पवनवेगेऽथ न धुतं महारत्नच्छत्रं समजनि गिरिर्गोकुलजुषाम् ॥१०३॥

एवं नाम वामकरकमलेनोल्लास्य निजगिरिवरं निजगिरि परं विश्वासमासादयन्नुवाच वाचस्पतिभिरप्ययमनिर्वचनीयचारुचरितः ॥ १०४ ॥

मातर्मा तरलं मनः कुरु पितर्मा चिन्तनीयं त्वया संदेहं सुहृदो न धत्त पतिता नाऽयं गिरिर्मत्करात् । साक्षादेवविलोकितं तनुमता येनार्चनं स्वीकृतं तस्य व्योम्नि कृतावलम्बनतया किं दुष्करावस्थितिः ॥१०५॥

किंच । आकारेण महानयं गिरितया यद्यप्ययं स्थावरो देवत्वात्सहजादलौकिकतया तर्कस्यनो गोचरः । पश्यायं लघिमास्य येन हि मयाप्युल्लासितो लीलया तत्राहं तु निमित्तमात्रमहह स्वेच्छामयोऽयं गिरिः ॥१०६॥

ततः । अस्याधः प्रविशन्तु सन्तु सुखिनः स्वं स्वं गृहीत्वा व्रजं स्वच्छन्दं निवसन्तु गोपनगरान्नेदं विलं भिद्यते । कल्पान्ते जगतां जना हि वपुषा नारायणस्योदरे सूक्ष्मेणैव वसन्ति तत्र नतरामेतादृशं कौतुकम् ॥१०७॥

किंच । उल्लासक्रमवेगतः समुदितैः सारैर्मृदां संचयैः प्राकाराभतया स्थितैस्तत इतो नास्मिन्नपामागमः । स्वच्छाकाननचारतोऽपि सखिभिर्द्वन्द्वैर्गवां भूयतां स्वस्वावासविलासवासरभसो विस्मर्यतां वन्धुभिः ॥ १०८ ॥

इति धरा धराधिपभृता भृतोऽमृतरसेनेव व्याहारो हारोपमो यदि सपदि स परिशशाम तदा तदाश्वस्तहृदः सुहृदः सुतकलत्रधनगोधनगोष्ठसहिताः सपरोधसोऽरोधसोपूयमाणसुखा निःपमपरमपरभागर्त्ते गर्त्तभूधरवरस्य रवरस्य माविविशुः१०९

अवरकरस्य वामहस्तस्य तलेन उदस्ते उत्क्षिप्ते सति ॥१०२॥ विष्वक् समन्ततः स्रुतिः क्षरणं येषां तैः। दम्भोलेर्वज्रस्यापि ॥१०३

निजागिरिनिजवाक्येवर विश्वासं आसादयन् प्रापयितुम् ॥१०४ तरलं शङ्काचपलम् न पतिता न पतिष्यति ॥१०५॥

येन लघिम्ना हेतुना मयापि शिशुनापि ॥१०६॥ गोपनगरान्न भिद्यते ततो न भिन्नं तत्तुल्यमेवेत्यर्थः ॥१०७॥ सारैर्दृढैःसारैर्मेतुमशक्यैरित्यर्थः ॥ १०८ ॥

धराधराणां पर्वतानामाधिपं प्रभुं श्रीगोवर्द्धनं विभर्त्ति इति तेन भृतः पुष्टः । हारोपम इति हृदये सादरधारणात् परिशशाम परिशान्तो विरत इत्यर्थः । अरोधमवारितं यथा स्यात्तथा सोपूयमाणानि सुखानि येषां ते । निःपमेण निस्तुलेन परमपरभागेन अतिशोभया ऋतं दीस मृतमुञ्छशिले जले । क्लीवं सत्ये च दीते स्यादिति मेदिनी । रवेण कोलाहलेन रम्यं (?)सनीयं यथा स्यात्तथाविविशुः ॥ १०९ ॥

प्रविश्य च निराविलविलस्वर्गमिव तं वतंसरूपमखिलभुवनानां परिसरसरदनुपमयवसमानयवसमानननीयशाद्वलं विमलसरसीसरसीकृतपर्य्याप्तपर्य्याप्तविविधाभोगभोगसामग्रीसहितगोगोपगोपनभाजनभाजनकमवलोक्य सर्व एव विसिष्मियिरे सिष्मियिरे च ॥ ११० ॥

ततश्च । गावःस्वच्छन्दमूपुः परिसरिणि वहिर्मण्डले शाद्वलाढ्ये
गोपालास्तत्पुरस्तात्सहधराणिसुरास्तत्पुरस्तत्पुरन्ध्र्यः॥
तत्रैव क्वापि राधाप्रभृतिकुलवधूमण्डली क्वापि कन्याः ।
पार्श्वद्वन्द्वे सखायो वटुरपि पितरावग्रतो लाङ्गली च ॥ १११ ॥

एवं व्रजनगरीगरीयसा कौतुकेन केनचिदनातङ्कं तं कचन निर्वृतिप्रदेशं प्रदेशं समासाद्य महाकल्पकल्पघनघटाघटावलिवलितनिर्मुक्तासारसारपराभवभवदवसादं विजहति स्म सर्व एव स्वेच्छासमं समन्ततः स्थिता अपि गोवर्द्धनधरस्य रस्यतममात्मनयनाभिमुखं मुखं मन्यन्ते स्म ॥ ११२ ॥

अथ वेदविदामवनिनिर्जराणां निर्जराणां मङ्गलाशीराशी रामनुजं मानुजं लोकमासाद्य विहरन्तं हरन्तं च निखिलसुरासुराणामभिमानमानन्दयामास ॥ ११३ ॥

तदनु च मातापितृपितृव्यैर्विस्मयस्मयजया जयाशंसया शं स यापितो भ्रातश्च शिरसि रसितो रोहिण्या वात्सल्यरसोक्षणेन नितरामपि प्रममजनिजनितवलेन वलेन चोपगूहितो हि तोषसमुल्लासेन ॥ ११४ ॥

तं प्रसिद्धं सुतलादिकं विलस्वर्गमिव परिसरे पर्य्यन्तभुवि सरद्भिर्मिलद्भिर्यवसमानैर्यवतुल्यैर्यवसैस्तृणैर्हेतुभिर्माननीयः शाद्वलः शादहरितप्रदेशो यत्र तम् । अपर्य्याप्ता च आप्तः प्राप्तो विविधः रूपरसादिमयः आभोगः परिपूर्णता यया सा च या भोगसामग्री तया सहितानां गवां गोपानां च गोपनभाजनं च रक्षणसमर्थं च तत् भा कान्तिस्तज्जनकं चेति तम् । विसिष्मियिरे विस्मयं प्राप्ताः । सिष्मियिरे ईषज्जहसुश्च ॥ ११० ॥

परिसरिणि प्रसरणशीले । लाङ्गली वलदेवः ॥ १११ ॥

निर्वृतेरानन्दस्य प्रदायां प्रदाने ईशं समर्थं महाकल्पं महाप्रलयं कल्पयन्तीति तेषां घनानां मेघानां घटाभिः श्रेणीभिर्घटावलिवलित इव कलसश्रेणिसमुद्धलित इव निर्मुक्तो य आसारस्तस्मात्सारो वलवान् यः पराभवस्तस्माद्भवन् योऽवसादस्तम् ॥ ११२ ॥

अवनिनिर्जराणां विप्राणां निर्जराणां तेजस्विनां मङ्गलाशिषां राशिः रामानुजं कृष्णं आनन्दयामास । मानुजं मनुष्यसंवन्धिनम् ॥ ११३ ॥

विस्मयस्मयजया विस्मयो लोकोत्तरक्रियादर्शनोत्थः स्मयो हर्षोत्थं मुखप्रफुल्लत्वं ताभ्यां जनितया जयाशंसया वत्स विजयी भव सर्वा पन्नगो वन्धूंस्त्रायस्व । इत्यादिकया शं कल्याणं यापितः प्रापितः । वात्सल्यरसस्य उक्षणेन सेकेन नितरां क्षण उत्सवो यस्मात् तेन ॥ ११४ ॥

समुल्लासेन स्मयमानस्मयमानमाननकमलमलसदरविकसन्नयनमीषदुन्नमयन्तीभी रमयन्तीभी रतिकलाकलापमाभीरीयमाणप्रणयामृताङ्क्षिताभी राधादिभिरभिनवानुरागपरभागसुकुमारिकाभिः कुमारिकाभिश्च नयनचकोरकोरकितचपलप्रान्तलक्ष्मीभिरक्ष्मीलमालिङ्गितः ॥ ११५ ॥

प्रमदभरनिःसहसहचरचयप्रणयनिरीक्षणक्षणनिर्वृतो वृतो बन्धुजनेन सकलेन स कलेन वचसा च सानन्दं नर्मपटुना वटुना वदनमुन्नीय निजगदे जगदेकवल्लभ वयस्य यस्य ब्रह्मवर्चसममोघमोघवत्तरमनुभवन्तो भवन्तो मोदन्ते सोऽहं सोऽहं कथयामि ॥ ११६ ॥

किमयि मयि तस्मिन् सति सखे सखेदोऽसि गिरिवरधारणेन न कथमाज्ञापयसि पयसिजेक्षण क्षणमहं गिरिवरमेनं त्रिभर्मि भर्मिणा दण्डकाग्रशिखरेण खरेण श्रमेण श्रान्तो भवान् क्षणं विश्राम्यतु ॥ ११७ ॥

तदुपाकर्ण्य निजगाद गोष्ठेश्वरी अहो एभिरेव पुनरुद्धतैक्ष्ण्येन चेतसा मुहुरुद्धतीकृतोऽसि भो वत्स ! वत्सरकृत्यं शतमखमखमखण्डितं खण्डितं यत् कृतवानसि न सिद्ध्यति हि शर्मणे देवताहेलनम् ॥ ११८ ॥

कथं नाम सुराणामसुराणामपि द्वेषो नरस्य रस्यतामेतु उभयभयं यदि जातं तदाकथं वसतिरतिरस्या स्यादिति सवात्सल्यं सरससुखाकरकरकमलपलाशेन श्रीकृष्णस्यानन्दघनमपवनमपरिश्रममतिश्रममतितया परामृशन्ती गिरिवरभरभुजं भुजं परिस्पृश्य पुनरूचे ॥११९॥

अहो कथमभिनवनवनीतशीतलतरोऽमलतरो भुजवलयोऽवलयोगेन महीधरभरं सहते ॥१२०॥

---

आननकमलमीषदुन्नमयन्तीभिः राधादिभिः कर्त्रीभिर्नयनचकोरस्य कोरकितश्च चकितश्च चपलश्च यः प्रान्तः व्रीडाशङ्कौत्सुक्यसूचकस्तस्य लक्ष्मीभिः संपत्तीभिरक्ष्मीलं निर्निमेषमेवालिङ्गितः । तत्प्रकारमाह । मुल्लासेन हर्षप्रकाशेन आननकमलं ईषदुन्नमयन्तीभिः । कीदृशं स्मयो वाम्यसूचको गर्वः मानो दाक्षिण्यसूचकः आदरस्ताभ्यां स्मयमानं प्रफुल्लम् । रतिकलानां कलापः संघो यत्र यथा स्यात्तथा ॥ ११५ ॥

स श्रीकृष्णः कलेन मधुरेण ॥ ११६ ॥

आज्ञापयसीति तादृशो ब्रह्मवर्चस्यप्यहं सख्येन गोपजातेरपि तवाज्ञाकारीति किं तव भाग्यं वर्णनीयमिति भावः । भर्मिणा । भर्म कनकं तद्वता ॥ ११७ ॥

एतैः कर्तृभिः उद्धतीकृतोऽसि रुद्धमावृतम् । अन्तः संवृतं तैक्ष्ण्यं तीक्ष्णत्वं नतु देवतासंमानमयमार्दवं यत्र तादृशेन चेतसा करणेन ॥ ११८ ॥

उभयभयं देवासुराभ्यां भयम् । सुखाकरेति "सुखप्रियादानुलोम्येडाच्" अपवनमङ्गम् । अपरिश्रमं परिश्रमरहितमपि । अतिश्रममतितया अतिश्रमयुक्तत्वभावनया । गिरिवरभरं भुङ्क्ते अनुभवतीति तम् ॥११९॥

भुजवलयो बाहुमण्डलः । अवलयोगेन बलयोगाभावेन ॥१२०॥

हंहो धराधराधिनाथ नाथति जनोऽयं वरमेकं यदि सत्यमेव तत्र भवान् भवान् देवतात्मको वतात्मकोमलतालघुताभ्यां समुचितंचित एव तदास्तु मास्तु मान्यतम मम तनयस्य मतनयस्य खेदः ॥१२१॥

वटुरुवाच–मातर्मैवं वादीः क नामास्य खेदः अवधीयताम् । कल्पान्तप्रतिमं महाघनघटासङ्घट्टमुद्घाटयन् किंवा नोपचकार नः प्रकुपितो देवः स वज्रायुधः । पश्याद्रीन्द्रविधारणेऽस्य यदिदं माधुर्य्यमुज्जृम्भते मातस्तत्कथमन्यथाक्षिपुटकैरस्माभिरापास्यत ॥१२२॥

साह साहसिक माधुर्य्यं माधुर्य्यं खल्विदमपितु खेदवैधुर्य्यं वै धुर्य्यसलं गिरिवरवहनस्य ॥ १२३ ॥

पश्य पश्य । ललाटस्य प्रान्ते श्रमजलकणक्लिद्यमानालकालि मुखं शुष्यत् प्रायं सरसिजमिव म्लायमानं हिमान्या । भरेण द्रागद्रेर्वमदिव पुरः पाणिपादं सुरागं कथं मातुः प्राणाः शिव शिव परं कष्टमेतत्सहन्ताम् ॥ १२४ ॥

श्रीकृष्ण आह।मातः परं मातः परं कौतुकमस्ति वृथाकिमाशङ्क्यते मम खेदः खेऽदः पश्य गिरिवरस्य स्वयमवस्थानं निगदितमेव पुरा वपुरात्मीयं मे निमित्तमात्रमेवात्र ॥ १२५ ॥

साह। वत्स भवतु। तथापि। एतावन्तं कालमालम्ब्य वालो मन्दस्पन्दं बाहुमुद्यम्य तिष्ठन्। अद्रेः सङ्गात् खेदवत्पाणिपद्मः खिन्नो न स्याः कस्य हेतोर्न विद्मः । वचनमिदं परं मन्यते मन्यते यदि तव करसङ्गरसं गमयित्वा स्वयमेव खेऽवखेलन्निवायमवतिष्ठते ॥ १२६ ॥

---

नाथति याचते । तदा आत्मकोमलताळघुताभ्यां समुचितं यथा स्यात्तथा चित आच्छन्न एव भवान् अस्तु। हे मान्यतम। अतिमानिनोऽपि मम तनयस्य खेदो मास्तु । मतः संमतो नयो नीतिर्यत्र तस्य कोमलाङ्गे धारकेऽस्मिंस्तव तथाभूतत्वमेव नीतिः सम्मतेत्यर्थः ॥१२१॥

संघट्टः संमर्दः । अन्यथेति यदि देवः प्रकुपितो नाभविष्यत्तदा कथमस्माभिरक्षिपुटकैः अस्य माधुर्य्यं आपास्यत नापास्यतैवेत्यर्थः । "भूते क्रियातिपत्तौ लृङ्" ॥१२२॥

माधुर्य्यं मास्त्विदं यतो धुर्य्यं धुरि भवं "दिगादित्वाद्यत्" नहि भारान्माधुर्य्यमुद्रवतीत्यर्थः। अपितु वै निश्चितं धुरि भारे असलं वलवत् खेदवैधुर्य्यं खेदेन वैकल्यमेव "बलवान्मांसलोंऽसलः" इत्यमरः । गिरिवरवहनस्य कृष्णस्य ॥ १२३ ॥

हिमान्या हिमसंहत्या । सुरागमिति अतिसौकुमार्यात् रागवहनस्य सार्वकालिकत्वेऽपि तदात्वाधिक्यं रागस्य सुशब्देन बोधितम् ॥ १२४ ॥

हे मातः अतः परं इतोऽन्यत् परमोत्कृष्टं कौतुकम् मास्ति नास्ति। खे शून्य एव अदोऽवस्थानं निभाल्य ॥ १२५ ॥

खेदवत् खेदयुक्तं पाणिपद्मं यस्य सः पाणिपद्मस्य खेदे प्रकटं दृश्यमानेऽपीत्यर्थः । गमयित्वा निरस्य ॥ १२६ ॥

वटुराह । गोष्ठेश्वरि! मन्त्रप्रभावतो विप्रभावतो विशिष्टशिष्टस्य मम ममतैकभाजनं वयस्यममुममुञ्चन्नपि गिरिवरोऽयं करकमलेऽस्थितः सुनखे न खेदयते दयते हि सर्व्वारागनाथं प्रति सर्व एव ॥ १२७ ॥

साह । धृष्ट ! किं प्रलपसि मम प्राणा दन्दह्यन्ते नह्यन्ते न तावदाश्वासपाशेन कृतमिह हासपरिहासपरिकल्पनयानया ॥ १२८ ॥

व्रजेश्वर आह । अयि कथमयमाक्रुश्यते वटुः मायशो यशोऽवतामीदृशि दुष्करे कर्मणि नर्मणि नयशैरुत्साहसाहसवर्द्धनं क्रियते तेन नासमयज्ञोऽयं अस्य वचसि च सिद्धानुरागोऽयं वत्सः ॥ १२९ ॥

इत्येवमवसरे परितः परितस्थुषां गिरिवरधरस्य रस्यमूर्त्तेर्माधुरीधुरीणतामवलोकयतां लोकयतां धियमतीत्य रतिमुद्वहतां हृतांहसामन्योन्यरसालापः समजनिष्ट ॥ १३० ॥

तथाहि । अहो अहोभिरेतावद्भिरपि इदं नानुभूतं भूतंसभूतं लावण्यमस्य १३१

पश्य पश्य । उद्यत्पार्ष्णिपदाग्रचुम्बितमहीपृष्ठं कियत्कुञ्चित-
श्रीमज्जानुविभुग्नवङ्क्षणतटव्यालोलमालाञ्चलम् ॥
हेलोद्धूनितवामबाहुमहसा व्यालक्ष्यकक्षस्थलं ।
वामंपार्श्वममुष्य पश्य त्रिवलीवल्लीकमृज्वायतम् ॥ १३२ ॥

किंच । लीलाभुग्नकफोणि कोमलकरप्रादेशपार्श्वोल्लस-
च्छ्रोणीसीम वलद्वलीकमनृजुव्यालम्बिमालाञ्चलम् ।
सम्यङ्न्यासविलासिना पदतलेनालम्बितक्ष्मातलं ।
पार्श्वं दक्षिणमस्य पश्य यदहो निर्व्याजमुद्भ्राजते ॥ १३३ ॥

किंच । स्वेदाक्लिन्नकपोलमण्डललसत्कर्णावतंसीकृतश्यामाम्भोरुहकेशरामदभरव्याघूर्णमानेक्षणा । अद्यान्यैव निरीक्ष्यते क्षितिधरोद्धारश्रमेऽपि श्रमाभावव्यञ्जकरञ्जकस्मितसुधा वक्त्रद्युतिर्द्योतते ॥ १३४ ॥

---

अमुञ्चन्निति मत्संमाननासिद्ध्यर्थमेवेति भावः । सुनखे करकमले स्थितोऽप्यमुं न खेदयते नखस्पर्शासहसौकुमार्य्यं स्वीय प्रकटय्य स्थित इति भावः ॥ १२७ ॥

आश्वासपाशेन न नह्यन्ते न बद्ध्यन्ते किंतु दाहपीडया निःसर्तुमेवेच्छन्तीति भावः १२८

सिद्धानुराग इत्यन्यथा निरुत्साहत्वेऽस्य श्रमानुभावः स्यादिति भावः ॥१२९॥

लोकयतां लोकव्यापारवतीं धियं अतीत्य अतिक्रम्य " यती प्रयत्ने " पचादिः॥१३०॥

भुवः पृथिव्यास्तंसभूतं अलंकाररूपम् ॥१३१॥

विभुग्नात् किंचित् वक्रीभूतात् वङ्क्षणस्य ऊरुसन्धेस्तटात् व्यालोलं दक्षिणपार्श्वे प्रत्युप्तं मालाञ्चलं यत्र तत् । विगता वलीरूपा वल्ली यत्र तत् ॥१३२॥

कोमला च सा करस्य प्रादेशस्तर्जन्यङ्गुष्ठविस्तारो यत्र सा च पार्श्वे उल्लसन्ती च श्रोणीसीमा यत्र तत् । वलन्ती पुष्टीभवन्ती वली यत्र तत् ॥ १३३ ॥

स्वेदक्लिन्नेति केशरविशेषणं । अद्य वक्त्रद्युतिरन्यैव द्योतते ॥ १३४ ॥

अन्यतश्च केचिदाहुरहो रहोन्तरमिदमतिमतिमर्दनमर्दनमपि सकलापदो पदाम्बुजयोः संचरणाभावेन मूकमिव कलहंसकयुगलं हंसकयुगलं यथासरोजाग्रजाग्रदपि निद्रितम् ॥ १३५ ॥

कादाचित्कचित्कमनीयविन्यासविशेषेण यथास्थितविन्यासविपर्यासनिस्पन्दे तस्मिन्नेव पदतामरसेऽमरसेवाभिनन्दिते कृतनादमाकस्मिकीं चलनशङ्कां समासादयति ॥ १३६ ॥

पुनरन्यतः केचिदूचुः । अहो पश्यत पश्यत । एकेन पाणिकमलेन विलासवंशीं बिम्बाधरेऽनुगमयन् मृदु वादयंश्च । अद्रीन्द्रधारणविधौ विगतश्रमत्वमावेदयन् रसयति प्रियवर्गचेतः । तस्मिन्नेव समये वदन्त्याह भो भो अतिसाहसमिदम् । मा वादय स्वमुरलीं निनदैरपुण्याः शैलो यदि स्खलति वा द्रुत एव वा स्यात् । तर्हि त्वमद्य विधिना कतमेन बन्धून् रक्षिष्यसि प्रियवयस्य न दृश्यते सः । यदस्या निर्वंशिकाया वंशिकायास्तथैव प्रभावः प्रभावः यत् खलु निनदेन शैलमपि विद्रावयति विद्रावयति स्रोतस्वतीस्रोतः स्वनीवानर्थकारिणीयम् ॥ १३७ ॥

सहचराऊचुः । कुसुमासव गिरिरयं नो रक्षन् महासारो महासारोपद्रवतो द्रवतो निजवपुषः किमाघातेन नाशयिष्यति नैतत् ॥ १३८ ॥

महासाराः खलु पृथुनानन्दथुना नन्दतोऽपि द्रुतं द्रुतं चात्मानं स्तम्भयन्ती भयं तिलमात्रमप्यत्र नास्ति श्रूयतां मुरलीनादो नादोऽभूयतां चित्तवृत्तिरिति । १३९ ।

परतश्चापरे निजगदुः । अहो मूढतामूढतादृशकोपस्य पश्यत शतमखस्य अस्मिन्नपि मर्त्यसुहृदि हृदि वैरायते ॥ १४० ॥

---

रहोऽन्तरमिदं एतदपि रहस्यमेकमित्यर्थः । किं तत् पदाम्बुजयोः संचरणाभावेन कलहंसकयुगलं मधुरपादकटकद्वयं मूकमिव । दृष्टान्ते अनुकम्पार्थे कः ॥ १३५ ॥

कादाचित्कः कदाचिद्भवश्चासौ चित् उपलब्धिस्तया कमनीयश्च यो विन्यासविशेषस्तेन यथास्थितविन्यासस्य विपर्यासे विपर्यये सति निर्यासनः स्पन्दः किञ्चिच्चलनं यत्र तथाभूते पदतामरसे कृतो नादेन झणत्कारो येन तत् हंसकयुगलं चलनशङ्कां धारयति ॥ १३६ ॥

विद्रावयति विद्रुतं गलितं करोति स्रोतस्वत्याः नद्याः स्रोतः विद्रावयति द्रव एव द्रावो गलितत्वं विगतद्रावं कठिनं करोतीत्यर्थः । अत एव सुष्ठु अतीवानर्थकारिणी ॥ १३७ ॥

महासारो महाधृतिः महतामासाराणां धारापातानां उपद्रवतो नोऽस्मान् रक्षन् । द्रवतो द्रवीभावात् हेतोः ॥ १३८ ॥

द्रुतं शीघ्रं द्रुतं क्लिन्नं न भिवतृश्चित्तवृत्तिभूयतां नातिचपलीक्रियताम् ॥ १३९ ॥

शतमखस्य मूढतां पश्यत अस्मिन्नपि ऊढतादृशः कोपो येन तस्य ॥ १४० ॥

अयं गोत्रोन्नेता भवति स हि गोत्रक्षयकरः ।
स गृह्णात्येवायं जगति शतकोटिं वितरति ॥
स एकाशापालो दिशति सकलाशाफलमयं ।
कथं धत्तेऽलज्जो हरिरिति स नाम्नःप्रतिकृतिम् ॥ १४१ ॥

अन्यतश्चान्ये जगदुः अहो किमेतत् । अमी मलयमारुताः
मलयवारिदा अप्यमी इदं मलयदुर्दिनं मलयवारिवारोऽप्ययम् ।
भ्रमः किमयमेव नः किमियमिन्द्रजालक्रिया कुतोऽपि न पराभवः
क्वचन कोऽपि कस्याप्यभूत् ॥ १४२ ॥

अन्यतश्च । मधुरगोष्ठीनिष्ठ्यूतः कश्चनवसुधानवसुधाप्रवाह इव परस्परपरमरमणीयसौहृदहृदयालुतया कोमलपरिमलपरिहाससहासपेशलःसमजनि समजनिकौतुकःकथारम्भः ॥ १४३ ॥

तथाहि गोवर्द्धनं सुमुखि ! यावदयं बिभर्ति राधे न तावदिह लोलय लोचनान्तम् ।
मास्तामनुष्य पृथुवेपथुभङ्गभाजः पाणिस्थलस्खलितशैलकृतो विपाकः ॥ १४४ ॥

इति मधुमधुरध्वनिभृतानभृतपरिहासपेशलया श्यामलया परिहसितासितापाङ्गी कृपाङ्गी कृतत्रपा तामाह ॥ १४५ ॥

मा हरिणलोचने निजमदं मदन्तरे संचारय स्वयमुपदिश्यतामात्मा ॥ १४६॥

अन्याह । महासारोऽयं येन धराधराधीशोऽयं कन्दुकीकृतस्तस्य समुपचितवैदग्ध्यविपाकयापि कया विधीयतां सारः ॥ १४७ ॥

सारोऽस्य शैलधरणेऽद्य निरीक्ष्यते यो मन्ये तदैव गरिमाणममन्दमस्य । मुग्धे

गोत्रः पर्वतो गोत्रं कुलं च । स इन्द्रः शतकोटिं वज्रं गृह्णात्येव अयं तु शतानां कोटिं वितरति ददाति । एकाशापालः पूर्वदिक्पालः सकलानामप्याशाफलम् अभीष्टं दिशति । स इन्द्रः । प्रतिकृतिं प्रतिच्छायाम् ॥१४१॥

वारिवारो जलसमूह ॥ १४२ ॥

समा जनिरुत्पत्तिर्यस्य तथाभूतं कौतुकं यत्र सः कथारम्भः कौतुकं च युगपदेवाभूदित्यर्थः१४३

लोचनान्तमपाङ्गं न लोलय न चपलीकुरु ॥१४४॥

कृपया अङ्गीकृता त्रपा यया सा त्रपां प्रति कृपां कृत्वैव तां स्वीकृतवतीत्यर्थः तेन तदानीं त्रपाया दौर्बल्याच्चापल्यमेव ध्वनितम् ॥१४५॥

हरिणलोचने इति तवैव लोचनचाञ्चल्यं स्पष्टीभवतीति भावः ॥१४६॥

महासारो महाधृतिमान् । सम्यगुपचितो विवृद्धो वैदग्धस्य विपाकः परिपाको यस्यास्तादृश्यापि कया वा अस्य सारो धैर्यं विधीयतां छन्नीक्रियतां लुप्यतामिति यावत् ॥१४७॥

तामन्येति हन्त हन्त सा त्वं सा त्वमेव भवसि मन्मुखेन स्वगुणं याचयितुमेव त्वमेवमुपक्रान्तसीत्याह सारोऽस्येति । तदैव अस्य सारस्य गरिमाणं अमन्दं मन्येऽहं यदि तव स्तनकुम्भ-

घनस्तनि तत्र स्तनकुम्भलक्ष्मीसंदर्शनेऽपि यदि वीक्ष्यत ईदृगेव ॥ १४८ ॥

अपराह । पराहतपरिहासा हासावलोकलोकरमणीयं रमणीयन्त्रणाकारिनागरिमगरिमगम्भीरमालोकयत यतमाना मधुरिमाणमस्य ॥ १४९ ॥

वामेन पाणिकमलेन त्रिभङ्गिशैलं वंशीं परेण मृदु वादयते सलीलम् । आलोकते मनिजनं नयनाञ्चलेन शृण्वन् सुहृज्जनगिरं च शिरो धुनीते । अथ राधिकामन्यतमाह । माहमन्यथा निगदामि पश्य पश्य ॥ १५० ॥

इह सकलजनावलोकलीलाक्रमघटिते भवदाननावलोके । द्रुतमुदितममी वपुर्विकारं गिरिधरणोत्थितमेव तर्कयन्ति ॥ १५१ ॥

अथ काचिदवादीदवादी ते व्याहारो हारो यथा कण्ठे कर्त्तुमर्हः । तथाहि राधालोकनजातसंमदभरात् मत्स्वेदकम्पादिकं [illegible]
कारोत्करम् । श्रान्तोऽयं गिरिधारणेऽभव [illegible]
णो गृहीतलगुडास्तं धर्त्तुमारेभिरे ॥ १५२ ॥

इत्युक्ते सति मन्दाक्षमन्दाक्षमाकृण्वत्या स्वमप्यतिमुग्ध्या विधुमुख्या विधुरितमनसस्ते गिरिधरणोद्यता नतेनैव तेनैव नयनाञ्चलेन यदि तथैव सकृद्ददृशिरे।१५३

तदा दरोदञ्चदञ्चलेन मुखमावृत्य निजसखीभिरप्यलक्षितं स्मितं चकार। इत्येतदवसरे वटुराह तान् । मा भैष्ट भो व्रजभुवो लगुडैर्यतध्वं कण्डूयने न वपुषो धरणीधरस्य । शश्राम नामलवलः स बलानुजोऽयं साराधिका न रुचोऽपहतौ प्रयाते १५४

स्यापि लक्ष्म्याः शोभाया अपि संदर्शनेऽपीदृगेव सारो धैर्य्यं वीक्ष्यते तेन कर्णकण्डूयनादिव्याजेन कञ्चुलिकान्तव्यक्तं स्तनप्रान्तं अस्मै दर्शयित्वा संदेहोऽस्य निरस्यतामिति नर्मद्योतितम्।१४८

पराहतपरिहासाः परिहासं परित्यज्य यतमाना यत्नवत्यः सत्योऽस्य मधुरिमाणं आलोकयत ।कीदृशं रमणीनां यन्त्रणाकारिणो नागरिम्णो नागरत्वस्य गरिम्णा गौरवेण गम्भीरम्। १४९

शिरो धुनीतः इत्यनुमोदनार्थम् ॥ १५० ॥

सकलजनकर्मको योऽवलोकस्तल्लीलाक्रमेण इव घटिते भवत्या आननावलोके सति अमी सकलजनाः॥१५१॥अवादी निर्विवादः । पर्य्यन्ताश्रयिणः उपान्तस्थायिनः सन्तः ॥१५२॥

मन्दाक्षेण लज्जया मन्दाक्षं यथा स्यात्तथा आकृण्वत्या विधुमुख्या राधया ते गिरिधरणोद्यता अतिमुग्धास्तेनैव नयनाञ्चलेन नतेनैव लज्जया नम्रेणैव यदि सकृद्ददृशिरे दृष्टास्तदा।१५३।

लगुडैर्धरणीधरस्य गोवर्द्धनस्य वपुषः कण्डूयने निमित्ते न यतध्वं नहि युष्मल्लगुडैर्गोवर्द्धनस्य धारणं संभवति किंतु कण्डूयनमेवेत्युपहासः ननु तर्हि कस्तावदुपायस्तत्राह स प्रसिद्धो रामानुजोऽयं न शश्राम न श्रान्तोऽभूत् यतो अमललवलस्तत्र लिङ्गं सारेण बलेन अधिका रुचयः कान्तयः अपहृतौ अपयाते सति न न प्रयाते न न गच्छन्ति अपि तु गच्छन्त्येव इत्यर्थः। अयं तु ताः कान्तयो वर्तन्त एवेति सर्वान् ज्ञापयितुमिष्टोऽर्थः । सा प्रसिद्धा राधिका आननरुचा स्वमुखकान्त्या अपहृतौ कम्पादिभिरुपघाते निमित्ते प्रयाते प्रयातीत्ययमर्थस्तु कृष्णम् ॥ १५४॥

१ मञ्जन गि पवि दृश्यते क्वचित् ।

तदा तदाकर्ण्य गम्भीरस्मयमानः स्मयमानः कुवलयवलयसुकुमारः कुमारः श्रीव्रजपुरपुरन्दरस्य दरस्यन्दमानमानसरसमाननचन्द्रमधुरिमाभिषिक्तदशनोस्रसहस्रसहकारचारुणारुणाधरपरिस्पन्देन मन्देन मधुरेण व्याजहार हारहासविकसद्वक्षास्तमेव वटुम् ॥ १५५ ॥

वटो स्वभावो हि भावो हिततरोऽयममीषां मयि किमुपहस्यते सा राधिकापि कापि मम मूर्त्तिस्तथात्वेनामीभिर्न ज्ञायते मयि निरन्तरायनिरन्तरायमानबालभावेन तेनेदमतिशोभनमेव बहुलमतः परं कौतुकं किमिति ॥ १५६ ॥

अतः परं तानेवाह भो भो मदेकवत्सलाः अलमलम्बो लम्बोदरजनकवन्मान्यानां सामान्यानां साधारण्येन तदुपरमत परमतमात् परिश्रमात् अयमहमश्रान्तमश्रान्त एव ॥ १५७ ॥

अथ कुतोऽपि पुनः पुरतः एव तनयवत्सला वत्सलालसा यथा माता माता सा व्रजेश्वरी निजगाद ॥ १५८ ॥

वत्स अभूत्कालो भूयान् निरशनतया खिद्यसे तात कामं वपुः क्षामं पतितमुदरं विश्लथश्चेलबन्धः अपि स्वेच्छाचारी सविधसुलभे शाद्वले नास्ति शस्यं गवां स्तोमः पश्यन्ननशितवतः शुष्यदास्यं तवैतत् ॥ १५९ ॥

तदिदमावेदयामि दयामिन्नमना मनागधुना भुङ्क्ष्व वेणुविद्याविनोदं विनोदव्याजेन पाणेर्मय्येवापवर्ज्यमानमानकमले कियदशान दशा ननु यदा यादृगुत्पद्यते तदुचितमाचारमाचारविदो वदन्ति ॥ १६० ॥

गम्भीरस्य स्मयस्य विस्मयस्य मान आश्रयः मानश्चित्तोन्नतौ गृह इति विश्वः । दर ईषत्स्यन्दमानः क्षरन् बहिर्निःसरन् मानसो रसो यत्र तद्यथा स्यात्तथा व्याजहार अरुणाधरस्य परिस्पन्देन सञ्चलनेन कथंभूतेन आननचन्द्रस्य मधुरिम्णा अभिषिक्तानां दशनानां उस्रसहस्रस्य किरणसहस्रस्य सहकारेण मेलनेन चारुणा मनोहरेण । हारेण हासेन च हारवद्धासेन वा विकसत् प्रकाशमानं वक्षो यस्य सः । अनेन किञ्चिदल्पज्ञानमत्वं च ध्वनितम् ॥ १५५ ॥

साऽरा(?) राधिकापि अतिवलिष्ठापि काप्यनिर्वचनीया मम मूर्त्तिः शरीरमिति सर्वान् ज्ञापयितुमिष्टोऽर्थः सा प्रसिद्धा राधिका काप्यनिर्वाच्या मम मूर्त्तिरपि परमप्रेयसीत्वान्मत्शरीराभिन्नापीत्येषोऽर्थस्तु वटुं राधिकावर्गं च । निरन्तरायो निर्विघ्नश्चासौ निरन्तरमविरतमेव अयमानः प्रसरंश्च यो बालभावो वात्सल्यं तेन ॥ १५६ ॥

लम्बोदरजनको महेशस्तद्वन्मान्यानां वो युष्माकं सामान्यानामितरजनानां साधारण्येन साधर्म्येण अलं तत् तस्मात् अयमहमित्यात्मानं तर्जन्या दर्शयति अश्रान्तं निरन्तरमेव अश्रान्तः श्रमरहितः॥१५७॥माता गौः । मातागौर्य्यादिजननीगोब्राह्मण्यादियोषितीति मेदिनी॥१५८॥

अनशितवतः अभुक्तवतस्तव आस्यं मुखं शुष्यत् पश्यन् सन् गवां स्तोमोऽपि शस्यं नास्ति न खादति ॥ १५९ ॥

दयामिन्नमनाः कृपाक्लिन्नचित्ता पाणेर्विनोदव्याजेन हस्तस्योद्गमनं विनैव अशान भुङ्क्ष्व मय्येव अपवर्ज्यमानं दीयमानं दानपर्याये अपवर्जनसंहाते रित्यमरः॥ १६० ॥

तेन स्त्यानमस्त्यानमदुष्णभावमपूपमपूपहति सरसरसं दधि दधिरसिम॥१६१॥

समुचितसौभ्रात्रो भ्रात्रोत्तमकुतूहलिना हलिना सह सहचरैश्च समं समञ्जसतयाभोक्तुमर्हसि ॥ १६२ ॥

वटुराहवयस्य समुचितमेवाह माता मा तावदन्यथा कर्त्तव्यमिदं मयापि बुभुक्षाऽत्तयापरितोषेण भूयते ॥ १६३ ॥

स रसवानाह नाहमत्र मुहूर्त्तमपि गतं मन्ये तर्कयन्ति कथं बहुकालं का लंघयितुं युज्यते गीर्गुरूणां कियतायता क्षणेन तत्करणीयम् ॥ १६४ ॥

इति स्थिते शतमन्युरथ मन्युरथमिवारूढोऽपि लोकरावणैरावणैधमानगतिजवः पविपवित्रकरो घनाघनानुपर्य्युपर्य्युपोढगाढरागतया गतया कियतायतायतेन कालेन तत्र वृत्तमिति दिदृक्षया क्षयाय व्रजभुवां कृतारम्भोरंभोगीव कुपितः समेत्य समालोकयामास ॥ १६५ ॥

भित्त्वा गाढपटीयसीं घनघटामूर्ध्वं गतैःसानुभिर्वर्पाभावसुखस्थितद्विजमृगव्रातस्य भूमीभृतः । तस्यामेखलमास्थितैर्जलधरैः कल्पान्तवातांम्बुभिर्धौतप्रान्तभुवो व्यधायि सुषमा मुक्तातपत्राकृतिः ॥ १६६ ॥

---

स्त्यानं स्निग्धं अपूपमस्ति स्त्यानं स्निग्धे प्रतीघाते इति विश्वः । आनमन् ईषद्रटमानः उष्णभावो यत्र तत् । पूः पावित्र्यं न विद्यते तस्या उपहतिर्यत्र तत् । दधि कीदृशं सरेण सरसं स्वादुवत् । दधिरसिम धारयन्त्यस्मि धाञकृसृजनिनमिभ्यः इति किः ॥१६१॥

समुचितं सौभ्रात्रं यस्य सः अत एव भ्रात्रा हलिना सहेति तत्प्रवर्त्तनार्थमनुरोधो दर्शितः १६२

अत्तयोऽपरितोषो यस्य तेन ॥१६३॥

रसवान् इति ततखेदोपशान्त्यर्थं स्वसारस्य व्यञ्जना । का गीर्लङ्घयितुं युज्यते । इति श्रान्त्युत्था बुभुक्षा तु न मे संभवतीत्यर्थः। तत्तस्मात् कियता क्षणेन अयता गच्छता सता । तत् भोजनम् ॥१६४॥

मन्युः कोप एव रथस्तम् आरूढस्तथापि लोकान् रावयाति क्रन्दयतीति तादृशेन ऐरावणेन ऐरावतेन हेतुना एधमानो गतिवेगो यस्य सः पविना सौम्यः वज्रेण करो यस्य सः पवित्र इति हिंसत्वद्योतनाय विरुद्धलक्षणया घनघनान् वृष्टिशीलमेघान् उपर्य्युपरि उपोढा धृता या गाढरागता निविडप्रणयिता तया अगतया निश्चलया मेघगणोपरि निबद्धनिश्चलप्रेमतयेत्यर्थः वर्षुकाब्दा घनाघना इत्यमरः उभसर्वतसोः कार्य्या धिगुपर्य्यादिषुत्रिष्विल्यादिना द्वितीया व्रजभुवां क्षयाय कृतारम्भः इयता एतावता आयतेन दीर्घेण कालेन अयता गच्छता सता तत्र गोष्ठे किंवृत्तमिति दिदृक्षया समेत्य अरं शीघ्रं भोगीव सर्प इव ॥१६५॥

गाढा निविडा च सा पटीयसी अतिदक्षा चेतितां घनघटां भित्वा ऊर्द्धं गतैः सानुभिर्हेतुभिस्तस्य पर्वतस्य आमेखलं मेखलामभिव्याप्य आस्थितैः तथा च हरिवंशे स धृतः संगतो मेघैर्गिरिः सव्येन पाणिना। गृहभावं गतस्तत्र गृहाकारेण वर्चसा इति। कल्पान्ते प्रलय इव वान्तानि अम्बूनि यैस्तादृशैरपि तैर्धौता क्षालिता प्रान्तभूर्यस्य तस्य गोवर्द्धनस्य सुषमा अतिशोभा एव व्यधायि। मुक्तामयस्यातपत्रस्येव आकृतिर्यस्यां सा ॥१६६॥

तथा निरीक्ष्यापीश्वरम्मन्यो मन्योरन्तं जिगमिषुर्महाप्रलयदुर्दिनाकृतिक्रान्तानि जलमुचां कुले निर्घातध्वानमुचि नमुचिसूदनोऽनुतापरुषा परुषायित हृदयो दयोपरोधरहितोऽहितोद्यमाय पुनरपि समुत्तेजनां जनयामास तदुपरोधात् पुनस्तेऽपि सम्भूय भूयसा सामर्थ्येन ववृषुः ॥ १६७ ॥

अथ पुरन्दरदरतस्तदुपदिष्टा दिष्टान्तकारिणो महाप्रलयसमीरणा रणार्थमिव सन्नद्धा गिरिवरोद्धतये कृताभियोगा मिथो गाढतरां पदवीं विरचयन्ति स्म॥१६८॥

तथासति बाले कष्टातिवृष्टिः खरतरमरुतः सम्प्रपातः शिलानां ज्योतिः पातोम्बुदानामपियदजनयन् क्लेशमुर्वीधरस्य । लीलापीयूषवर्षैर्मुखकमलमधूद्गारिभिः श्वासवातैर्हासाज्ज्योत्स्नाप्रपातैस्तनुमणिकिरणैस्तं हरिः संजहार ॥ १६९ ॥

किंच । वर्हिर्मेघा विद्युद्व्रततिततयः शक्रचापोतिवृष्टिर्मुकुन्दोऽन्तर्मेघः कुवलयदृशो निष्प्रकम्पाश्च शम्पाः । धनुश्चेन्द्रं वर्हाभरणमतुला कापि लावण्यवृष्टिः स वाक्षान्तस्तुल्यो धिकमिदमसौ कौस्तुभोऽन्तर्विवस्वान् ॥ १७० ॥

अथ भूयोऽपि भूयोऽपिधीयमाननिजश्रमाशङ्कं मधुमधुरं धुरंधरो माधुर्यधुर्य्यसंसदः सरसतरं तरङ्गितनयनाञ्चलो मुरलीकलं कलङ्करहितसितमयूखमुखो वादयामास ॥१७१॥

तदाकर्ण्य केचिदाहुः अहो पश्यत पश्यत । न्यञ्चद्दामश्रवणकुवलयं तन्वतो वेणुनादं लीलोदञ्चज्जयति गिरिभृतो दक्षिणं भूलताग्रम् मञ्जुन्यापि प्रभवति भगवान् किं पुनर्वामदोष्णा धर्त्तुं क्षोणीधरमिति कथयत् प्रकारं च भिन्नत् १७२

---

नमुचिसूदन इन्द्रः अतितापेन या रुट् तया दया गोषु उपरोधो भगवति ताभ्यां रहितः अहितमपकारस्तदुद्यमाय ॥१६७॥

दिष्टान्तो नाशो दिष्टान्तः प्रलयोऽत्यय इत्यमरः । गिरिवरोद्धतये गोवर्द्धनमुच्चालयितुं मिथो भगवत् कोपोत्थस्पष्टभयस्य गाढतरां पदवीम् ॥१६९॥

यद्यथा बाले अतिवृष्ट्याद्याः क्लेशमजनयन्नकुर्वन् तथैव लीलापीयूषवर्षादिभिस्तैस्तैरेव यथाक्रमेण तत्तदुत्थं तं क्लेशं संजहार ॥ १६९ ॥

अधिकमिदमिति विवस्वतो वहिर्वर्त्तमानत्वेऽपि मेघान्तरानुपलब्धेः ॥१७० ॥

भूयोऽपि पुनरपि भूयः वहुतरं यथा स्यात्तथा अपिधीयमाना आव्रियमाणा निजश्रमाशङ्कायेन तद्यथा स्यात्तथा माधुर्य्यधुर्य्यसंसदः माधुर्य्यधारिण्याः सभाया धुरन्धरो मुख्यः । १७१ ।

केचित् पौराः लीलया उदञ्चत् उद्गच्छत् भ्रूलताग्रं कर्तृ इति कथयत्सत् जयति किं तत् मञ्जुन्यापि मम भ्रुवोऽग्रेणापि क्षोणीधरं धर्त्तुं प्रभवति किं पुनर्दोष्णेति । भगवान् पराक्रमी कीर्तिमान् वा भगो श्रीकामयाहात्म्यवीर्य्ययत्नार्ककीर्तिष्वित्यमरः ।१७२

एवं तत्र गिरिगर्तोदरेऽदरे दामोदरादरानुग्रहतो हतोपद्रवा द्रवातिरेकेण समयं समयं आनन्तः केऽपि किमपि नापरं परं तदेकमनसो मनसो विपयीचक्रुः॥१७३॥

तेषु च। एके विस्मयिनः परे रतिभृतः। केचित् प्रहासप्रियाः प्रोत्साहाश्रयिणः परे साखितया प्रीत्येकनिष्ठाः परे। सर्वे कौतुकिनःस्मयेन रभसेनापि प्रसीदद्धियोवात्सल्यादनवस्थिता तु जननी न स्वास्थ्यमालम्बते ॥ १७४ ॥

एवं सति सा सादरमेलालवङ्गखण्डाखण्डामोदघनघनसारसारस्यरस्यतमं विदलितमुद्वेगमुद्वेगहारि हारितरताम्बलिकादलपुटघटितवीटीपरिपाकललितं करकमलेनिधाय निजगाद १७५॥

वत्स मुरलीवादनं परिहर नादेनास्या दामोदर मोदरपूरणं भवति। भव तिरोधापयितुं खेदमधुना धुनासि किमपरं मे मनो मनोहरमिदं प्साहीप्सां हीयते यत्र। १७६।

गतो हि बहुतिथो नेहा नेहापरं विलम्बस्व ॥ १७७ ॥

यदि विलम्बसे दिवि लम्बसेपिच्यमानजलविरामापेक्षया रामापेक्षया तदा कृतं ते पदयं बुभुक्षितः खिद्यति ॥ १७८ ॥

अथ वेदं ताम्बूलमद्धि मद्धितकृत इति सुवलमामन्त्र्य सुवलवलमानस्ते महानत्र

---

द्रवातिरेकेण सारस्याधिक्येन। अपरं श्रीकृष्णादन्यम् परम् उत्कृष्टम् ॥१७३॥

अथ तत्र विविधवासनानां सर्वेषामेकत्र स्थितानां निखिलरसपोषकस्वरूपे तस्मिन् श्रीकृष्णे स्वस्वभावोदयमाह। विस्मयिनो विप्रपौराद्याः। रतिभृतः श्रीराधाद्या गोपीजनाः। प्रहासप्रिया विदूषकाः सखिभेदाः। प्रोत्साहाश्रयिणः प्रियसखाः सुवलादयः। प्रीत्येकनिष्ठा दासा रक्तकपत्रकाद्याः। जननी न स्वास्थ्यमिति तत्रापि वात्सल्यस्योद्योद्रेक इति शान्ताद्याः पञ्च मुख्यरसा दर्शिताः ॥१७४॥

विदलितं कर्तितम् उद्वेगम् गुवाकफलम्। "गुवाकः खपुरोऽस्य तु फलमुद्वेग" मित्यमरः। कर्थभूतं एला च लवङ्गखण्डानि च अखण्ड आमोदो यत्र तथाभूतो घनो निविडो घनसारः कर्पूरस्तैर्युत् सारस्यं सरसता तेन रस्यतमम् अत्यास्वाद्यम् ॥१७५॥

अस्या मुरल्या नादेन उदरपूरणं मा भवति न स्यात् खेदं तिरोधापयितुं दूरीकर्तुम् अधुना भव वर्त्तस्व इदं मनोहरं वस्तु प्साहि भुङ्क्ष्व यत्र ईप्सा हि निश्चितं ईयते प्राप्नोति तत् प्साहि "प्साभक्षणे" ॥१७६॥

बहुतिथः बहूनां पूरणः अनेहा कालः ॥ १७७ ॥

दिवि लम्बानि लम्बमानानि सेपिच्यमानानि अतिक्षरन्ति जलानि तेषां विरामापेक्षया यदि विलम्बसे तदा रामापेक्षया तव कृतमलमित्यर्थः। रामापेक्षा त्वयातः परं त्यक्तेति हूपणं भोजनप्रवृत्तिफलकमिति भावः ॥ १७८ ॥

अधुनैव त्वया भोजितोस्मीति नेदानीं मेवुभुक्षेत्यनन्तरमाह अथवेदमिति। अद्धि भुङ्क्ष्व

प्रणयः तदिदमाशय समाशय सरसताम्बूलमिति तस्य करे ददाति ॥ १७९ ॥

सच सचमत्कारमादाय समाकृष्य वंशिकां वंशिकाङ्गरागस्य तस्य मुखकमलमञ्चलेन विमृज्य ताम्बूलमादयामास मादयामास च मातृहृदयं हृदयंगमो धराधरधराधरपुटं च रञ्जयामास ॥ १८० ॥

अथ बहिश्च । पृष्ठस्थेन विडोजसा दृढरुषा नुन्नो घनानां गणो यावच्छक्ति ववर्ष शक्तिसदृशं वाति स्म झञ्झानिलः । अद्रीन्द्रस्य तु मेखलापरिसराभिर्वासिता धूलयो नैवाक्लेदि खगैर्मृगैश्च न दलैः शीर्णं तरूणामपि ॥ १८१ ॥

आरात् पारावारवारादपरान् वारां भारान् वारिदा यानहार्षुः ते तं जग्मुः क्ष्मां गताः किंत्वमीषां गारोद्गारक्षोभ एवावशिष्टः ॥ १८२ ॥

किंच । श्रान्तं भूरिमहानिलैर्बहुतरं वान्तं पयोदैः पयः श्रान्तं तैरपि तैश्च हन्त पतितं तस्यैव पादोपरि । न श्रान्तं पतितं च नैव तदपि क्रोधेन वास्तोष्पतेः क्रोधान्धः परमन्ध एव हतधीर्नान्धो दृशान्धो जनः ॥ १८३ ॥

एवं वृष्ट्यै निरन्तरायनिरन्तरायमाणाः मलयकालतद्विधनगत्प्रभञ्जनप्रभञ्जनसहिताः प्रबला बलाहका अहो अहोरात्रान् सप्ततन्तु सप्ततन्तुभङ्गजनितमन्युं शतमन्युं शतकोटिकोटिकुटिलं प्रीणयितुमशक्नुवन्तोवन्तोऽनिशं तन्निदेशमपि विनाशनाशया व्रजभुवां स्वस्थपुटभेदनस्य स्वस्थपुटभेदनस्य दशामात्रं गता गतासव इव यदा बभू

---

मद्वितत्कृते मदनुरोधार्थमित्यर्थः । आशय भोजय । समः सख्या तुल्य आशयोऽन्तः करणं यस्य हे तादृश ॥ १७९ ॥

वंशिकाया अगुरुरसस्य अङ्गरागो यस्य तस्य वंशिकागुरुराजार्हे त्यमरः धराधरधरस्य कृष्णस्याधरपुटम् ॥ १८० ॥

विडोजसा इन्द्रेण विडोजाः "पाकशासन„ इत्यमरः । श्लेषभङ्गयागाढिप्रदानं च नुन्नः प्रेरितः ॥ १८१ ॥

पारावार वारात्समुद्रसमूहात् ते वारां भारास्तं समुद्रमेव क्ष्मां गताः सन्तो जग्मुः । अमीषां वारिदानां गारोद्गाराभ्यां निगिलनोद्गिलनाभ्यां क्षोभः ॥१८२॥

तस्यैव इन्द्रस्यैव॥ १८३॥

अहोरात्रान् सप्त व्याप्य वृष्ट्यर्थं निरन्तरायं निर्विघ्नं यथा स्यात्तथा निरन्तरमयमानश्चञ्चलोऽबलाहका मेघास्तं तु शतमन्युमिन्द्रं तु प्रीणयितुमशक्नुवन्तः श्रान्त्या गतासव इव यदा बभूवुस्तदा पुरन्दरो निजपदं गन्तुं त्रपया न इयेष नैच्छत् । तं तु कीदृशं सप्ततन्तोर्मखस्य भङ्गेन जनितमन्युं शतकोटिकोटेर्वज्राग्रादपि कुटिलम् । व्रजभुवां स्वस्थं यत् पुटभेदनं पत्तनं तस्य विनाशनस्याशया तन्निदेशमिन्द्राज्ञामनिशमयन्तः पालयन्तोऽपि । किंच स्वेषां यानि

धुस्तदा त्रपयापयातमदो निजपुरं पुरन्दरो न गन्तुमियेष ॥ १८४ ॥

तस्य तुसप्तभिरहोभिरहो सप्तयुगावितं धरणिधरधरपरिजनानां तु सप्तघटिका भिर्यदि काभिरमणीयतेयं भगवतो विभवस्य भवस्य कमलभवस्य च यो न गोचरो यो नगोचरोऽस्य करकमलगतः स च तावता वतायामवतापि तापिभुवनेन तापिभुवनेन धारानिकरकरकापातवातबाधासहस्रेणापि निरुपद्रुतोद्रुतोद्वर्त्तितशरीर इव बहुशो बहुशोभाभरनिर्भर इवाभाति स्म ॥ १८५ ॥

व्रजे पुरगोपुरगोपानसीमभृतिकमपि शोभाभरमायातिमभावतो भावतो विपदो कृतमङ्गलस्नानमिव ॥ १८६ ॥

तथा सति जन्मान्तरमापन्नमिव गगनं अङ्कुरिता इव हरितः नश्यद्दशायामन्धतमसेरुद्गीर्ण इव प्रकाशनामा पदार्थः । तत्कालमदितिगर्भान्निष्क्रान्त इव किरणमाली तत्क्षणमादिवराहेणोन्नीतमिवावनितलं सद्यः प्ररूढ वर्द्धिता इव तरुगुल्मलतादयः उन्मादव्याधिविनिर्मुक्त इव अपस्मारतो निर्गत इव प्रकृतिं गतः पवन॥१८७॥

पतिव्रतताव्रततादवस्थ्येन जलानिधिपतिकृतात्मसमर्पणतया तद्गतजीवनत्वेन नाममात्रैकशरीरा गिरिदुहितरः भगवतत्त्वावबोधसंपत्तौ कामादयइव कुतोऽपि द्रुतविद्रुताः पयोवाहाः ॥ १८८ ॥

क्रमपतितेषु सप्तस्वहोरात्ररूपगर्भेषु कालभार्य्याया अष्टममिवापत्यमहः समुत्पन्नं यदि तदा श्रीगोवर्द्धनधरः सरससुवाच ॥ १८९ ॥

भोभो आर्य्यपादाः। नष्टा कष्टातिवृष्टिः क्षयसमयघनाः संक्षयं माप्नवन्तः शान्तं ध्वान्तं समन्तात् क्षितिरपि रहिता दुर्दमैः कर्दमौघैः । सप्ताहं मासपूर्णो नयनमिव समुन्मीलयामास सूर्यः पुर्य्यो वः पूर्वरूपाः सपदि समुचितः प्रक्रमो निष्क्रमस्य॥१९०॥

---

स्थपुटानि शिरोस्थीनि तेषां भेदनस्यैव स्फोटनस्यैव दशां गताः ॥१८४॥

सप्तभिरहोभिः सप्त भिर्घटिकाभिरिव अघटि चेष्टितं समभावीति वा इन्द्रस्य महत् कष्टमेवा तुमहत्सुखमेवेति ध्वनितम् वर्णितमर्थमुपसंहरन् सशीत्कारमाह भगवतो विभवस्य केयमभिरमणीयता यो विभवः भवस्य शंभोर्यो चरो निश्चलो नगो गोवर्द्धनपर्वतः । स च तावतापि धारानिकरादिसहस्रेणापिनिरुपद्रुतो भगवच्छक्तिसंचारादिति भावः । वतेति विस्मये । आयामश्च तापि यतस्तापीनि अनुतापयुक्तानि भुवनानि लोका यतस्तेन प्रयतः तापकानि जलानि यत्र तेन ॥१८५॥

किंच । व्रजे पुरेति तत्रापि भगवच्छक्तिनिधानमेवहेतुरित्याह अतिप्रभावत इति ॥ १८६ ॥

उन्मादापस्माराभ्यां परनिजोद्वेजकत्वद्योतनम् ॥ १८७ ॥

पतिव्रतता पातिव्रत्यं तदेव व्रतं तस्य तादवस्थ्येन स्वस्थत्वेन जलनिधिरेव पतिस्तत्र कृतमात्मसमर्पणं याभिस्ततया । जीवनं जीवितं जलं च गिरिदुहितरो नद्यः पयोवाहामेघाः । १८८।

कालएवभार्य्यातस्याः ॥ १८९॥

क्षयसमयो महाप्रलयः। सप्ताहमिति विशत्यधिकचतुः शतघटिकातिक्रमज्ञानात् ॥१९०॥

एवमुक्ते भगवतागवता सर्व एव समुदिता मुदिताः सन्तो महोत्साहे तथाविधेऽनूना अनूनां धेनूनामावलिमग्रतोनिष्कामयितुं प्रचक्रमिरे ॥ १९१ ॥

तासां च यथाहुंकृतमेव वहिर्जिगमिषूणामिषूणामिव वेगोयद्यपि समजनितथापि तथा पिबन्तीनांभगवदाननमाधुर्य्यमाधुर्य्य मिवात्मानंमन्यमानानामन्यमानानादरतयाद रतया च तद्बाधदुःखस्य क्षणविलम्बे विलम्बेप्यति सति स तिलमात्रतो निष्कम्पानुकम्पानुगतया तया पाङ्गभङ्गयैव निष्कामयामास ॥१९२॥

ततश्च । पातालोदरतः फणीशितुरिव स्फीताः सहस्रं फणा ज्योत्स्नाजालमिवालमन्धतमसत्रस्तं भुवो गर्भतः । अद्रीन्द्रस्य शिफावलिः स्फटिकजा संचारिणीवोद्धृता निश्चक्राम समन्ततो विलभुवः स्निग्धा गवां संततिः ॥ १९३ ॥

एवं श्रीकृष्णोक्तिविक्रमतः क्रमतः सर्व एवाभीरा भीराहित्येन विकसदन्तरा दन्तराजिराजिकिरणमञ्जरीजरीजृम्भ्यमाणवदना गिरितलविवरतो वरतोषेण निश्चक्रमुश्चक्रमुत्साहस्य साहस्यसमासन्नं च समासेदुः ॥ १९४ ॥

ततश्च भुवो गर्भात् सिद्धौषधिततय इव प्रज्वलन्त्यो दिवापि क्षरन्तीनां शैलाद् घृणय इव महादिव्यरत्नावलीनाम् भुजंगानां लोकादिव भुजगफणावृन्दमाणिक्य भासःसमुत्तस्थुः कृष्णौविनिहितनयनमान्तमाभीरनार्य्यः ॥ १९५॥

---

भगवता गिरिधारिणा समुदिताः प्राप्तसमुदयाः महोत्साहे ऽनूना अन्यूनाः ॥ १९१ ॥

इषूणामिवेति बहुक्षणनिरोधोत्तरनिष्क्रमे पशूनां तथा स्वाभाव्यात् तथापि तथा निर्विघ्नं पिबन्तीनामित्यर्थः आधुर्य्यमतिश्रेष्ठम् अत एव अन्यमाने सुखहेतुकसंमानान्तरे अनादरतया तद्बाधदुःखस्य तस्यमाधुर्य्यपानस्य बाधे प्राप्ते यद्दुःखं तस्य अदरतया अनल्पतया च हेतुना क्षणविलम्बे सति श्रीकृष्णनिष्क्रमादर्शनात् पुनः स्वस्थलादेव परावृत्य विलंगर्त्तं वेष्ट्यति सति स श्रीकृष्णः अपाङ्गस्य भङ्ग्यैव अयमहमधुनैव युष्माननुसर्पामीति व्यञ्जयन्त्या इत्यर्थःतया प्रसिद्धया ताभिः शिक्षितप्रकारकयेत्यर्थः ॥ १९२ ॥

फणीशितुः शेषनागस्य फणा इति अत्र घोरत्वप्रसक्तिमाशङ्क्याह ज्योत्स्नाजालं चान्द्रिकासमूहः तस्यापि दिने सूर्य्यतः पराभवमाशङ्क्यपुनराह शिफावलिः स्फटिकजेति ॥ १९३ ॥

दन्तराजीनां दन्तश्रेणीनां राजिनीभिर्विराजमानाभिः किरणामञ्जरीभिरतिप्रकाशवदनाः हसोदासस्तेन सह वर्त्तमानं सहसं सहसस्य भावः साहस्यं तेन समासन्नं संसक्तम् उत्साहस्य चक्रं हासोल्लासयोरेकत्रा साहित्यौचित्यात् ॥ १९४ ॥

आभीरनार्य्यः श्रीगोपयुवतयः शैलात् क्षरन्तीनां दिव्यरत्नावलीनां घृणयः किरणा इव । अत्र सिद्धौषधि तत्पादीनां तिसृणामुपमानां कान्त्या महार्घ्यतया चोत्तरोत्तर प्राशस्त्यादुपमेयानामप्युत्तरोत्तरश्रेष्ठानां कनिष्ठक्रमेण निष्क्रमो ज्ञेयः ॥ १९५ ॥

एवं निःसृतेषु तेषु च सहचरादिषु । स्वयमपि च । करतलकृतशैलः शैलसीमामतीत्य व्रजभुवि कृतपादाम्भोजलीलाविलासः कुसुममयमिवैकं कन्दुकं वामपाणेः शिथिलितामिव कृत्वा तं यथास्थानमास्थत् ॥ १९६ ॥

एवं यथास्थलस्थलक्षणे क्षणेन कृते सति गिरीन्द्रे स्नेहानुता पितरौ पितरौ गादमालिङ्ग्य शिरो जिघ्रतुः कुतूहली हली चालिलिङ्ग सस्नेहास्रम् ॥ १९७ ॥

हा ध्वंसमानवलामिवाखिलमङ्ग गिरिभरेण निर्भरेण निर्भातमस्तीति प्रसूः प्रसूतत्रात्सल्यातिशया शयाभ्यां वामबाहुमस्य मृद्नतीवामकरतलं चुचुम्ब ॥ १९८ ॥

वात्सल्यकाष्ठाधिरोहिणी रोहिणी च मणिदीपावलिवालितकरतला साश्रुनीरं नीराजयामास ॥ १९९ ॥

व्रजपुरपुरन्ध्रयोऽरन्ध्रयोजितशुभाशिषो निविडतरस्नेहोदध्यक्षता दध्यक्षताङ्कुरितदूर्वादिभिः पूजयामासुः ॥ २०० ॥

विप्रा विप्रागल्भ्या विप्रभार्य्या विप्रभार्य्याश्च सस्नेहमाश्लिष्य संप्रशंसाभिराशंसाभिरानर्चुः ॥ २०१ ॥

सन्नन्दादयश्च पितृव्याः पितृव्याकुलतानूना वत्सलतालतापाशबद्धा इव निर्भरमालिङ्ग्यशिरो जघ्रुः ॥ २०२ ॥

केवलवलमानानुरागरागवत्तरतरलमन्दाक्षमन्दाक्षतविलोचनाञ्चलचलदनुपमानिरीक्षणक्षणविसृष्टशोभासहचरीकेन केनचिन्मनोविलासविशेषेण समर्हयामासुरनुरागिण्यः ॥ २०३ ॥

---

सहचरादिष्विति । अत्रायंक्रमः । निर्जग्मुः कालयन्तो गाः गोपास्तास्तत्सखा अपि । पौरा गोप्यस्ततो वृद्धा नन्दः सर्वान्ततः प्रसूः वामपाणेः सकाशात् शिथिलितमिव कृत्वेति दक्षिणहस्तास्पर्शः स्वस्यानायासत्वं सर्वान् प्रति ज्ञापयितुम् । यथास्थानं तस्य स्थानमनतिक्रम्य आस्थत् निक्षिप्तवान् ॥ १९६ ॥

स्नेहादनुतापितरौ अतिशयेनानुतापिनौ ॥ १९७ ॥

प्रसूः श्रीयशोदा शयाभ्यां पाणिभ्यां मृद्नती संवाहयन्ती ॥ १९८ ॥

वात्सल्यस्य काष्ठा उत्कर्षस्तामधिरोढुं शीलमस्याः सा ॥ १९९ ॥

अरन्ध्रं निश्छिद्रमेव योजिताः शुभा आशिषो याभिस्ताः यतो निविडतरे स्नेहोदधौ अक्षताः क्षतं छिद्रं तद्रहिताः अव्यभिचारिता इत्यर्थः ॥ २०० ॥

विप्रागल्भ्याविशिष्टप्रागल्भ्यवन्तः विशिष्टया प्रभया आर्य्याः ॥ २०१ ॥

पितुर्या व्याकुलता तस्यामनूना न न्यूनाः ॥ २०२

केवलं वलमानेन अनुरागेणरागोरञ्जनं तद्वत्तरं च तत् तरलेन विश्लथेन मन्दाक्षेण लज्जया मन्दं यथा स्यात् तथा अक्षतं च यद्विलोचनाञ्चलं तस्माच्चलत् प्रसरच्च अनुपमं च यन्निरीक्षणमवलोकनं तत्क्षणे तदवसर एव विसृष्टं दत्तं शोभासहचर्या शोभैव सहचरी तद्द्वारा कं सुखं यतस्तेन ॥ २०३ ॥

एवमुक्ते भगवतागवता सर्वे एव समुदिता मुदिताः सन्तो महोत्साहे तथाविधेऽनूना अनूनां धेनूनामावलिमग्रतोनिष्कामयितुं प्रचक्रमिरे ॥ १९१ ॥

तासां च यथाहुंकृतमेव वहिर्जिगमिषूणामिषूणामिव वेगोयद्यपि समजनि तथापि तथा पिबन्तीनां भगवदाननमाधुर्य्यमाधुर्य्य मिवात्मानंमन्यमानानामन्यमानानादरतयाद रतया च तद्वाधदुःखस्य क्षणविलम्बे विलम्बेवर्ष्यति सति स तिलमात्रतो निष्कम्पानुकम्पानुगतया तया पाङ्गभङ्ग्यैव निष्कामयामास ॥१९२॥

ततश्च । पातालोदरतः फणीशितुरिव स्फीताः सहस्रं फणा ज्योत्स्नाजालमिवालमन्धतमसत्रस्तं भुवो गर्भतः । अद्रीन्द्रस्य शिफावलिः स्फटिकजा संचारिणीवोद्भूता निरचक्राम समन्ततो विलभुवः स्निग्धा गवां संततिः ॥ १९३ ॥

एवं श्रीकृष्णोक्तिविक्रमतः क्रमतः सर्व एवाभीरा भीराहित्येन विकसदन्तरा दन्तराजिराजिकिरणमञ्जरीजरीजृम्भ्यमाणवदना गिरितलविवरतो वरतोषेण निश्चक्रमुश्चक्रमुत्साहस्य साहस्यसमासन्नं च समासेदुः ॥ १९४ ॥

ततश्च भुवो गर्भात् सिद्धौषधिततय इव प्रज्वलन्त्यो दिवापि क्षरन्तीनां शैलाद् घृणय इव महादिव्यरत्नावलीनाम् भुजंगानां लोकादिव भुजगफणावृन्दमाणिक्यभासःसमुत्तस्थुः कृष्णविनिहितनयनप्रान्तमाभीरनार्य्यः ॥ १९५ ॥

भगवता गिरिधारिणा समुदिताः प्राप्तसमुदयाः महोत्साहे ऽनूना अन्यूनाः ॥ १९१ ॥

इषूणामिवेति वहुक्षणनिरोधोत्तरनिष्क्रमे पशूनां तथा स्वाभाव्यात् तथापि तथा निर्विघ्नं पिबन्तीनामित्यर्थः आधुर्य्यमतिश्रेष्ठम् अत एव अन्यमाने सुखहेतुकसंमानान्तरे अनादरतया तद्वाधदुःखस्य तस्यमाधुर्य्यपानस्य बाधे प्राप्ते यद्दुःखं तस्य अदरतया अनल्पतया च हेतुना क्षणविलम्बे सति श्रीकृष्णनिष्क्रमादर्शनात् पुनः स्वबलादेव परावृत्य विलंगर्त्ते वेष्टयति सति स श्रीकृष्णः अपाङ्गस्य भङ्ग्यैव अयमहमधुनैव युष्माननुसर्पामीति व्यञ्जयन्त्या इत्यर्थःतया प्रसिद्धया ताभिः शिक्षितप्रकारकयेत्यर्थः ॥ १९२ ॥

फणीशितुः शेषनागस्य फणा इति अत्र घोरत्वप्रसक्तिमाशङ्क्याह ज्योत्स्नाजालं चान्द्रिकासमूहः तस्यापि दिने सूर्य्यतः पराभवमाशङ्क्यपुनराह शिफावलिः स्फटिकजेति ॥ १९३ ॥

दन्तराजीनां दन्तश्रेणीनां राजिनीभिर्विराजमानाभिः किरणमञ्जरीभिरतिप्रकाशवदनाः हसो हासस्तेन सह वर्त्तमानं सहसं सहसस्य भावः साहस्यं तेन समासन्नं संसक्तम् उत्साहस्य चक्रं हासोत्साहयोरेकत्रा साहित्यौचित्यात् ॥ १९४ ॥

आभीरनार्य्यः श्रीगोपयुवतयः शैलात् क्षरन्तीनां दिव्यरत्नावलीनां घृणयः किरणा इव । अत्र सिद्धौषधि तत्यादीनां तिसृणामुपमानां कान्त्या महार्घतया चोत्तरोत्तर प्राशस्त्यादुपमेयानामप्युत्तरोत्तरश्रेष्ठानां कनिष्ठक्रमेण निष्क्रमो ज्ञेयः ॥ १९५ ॥

एवं निःसृतेषु तेषु च सहचरादिषु । स्वयमपि च । करतलकृतशैलः शैलसीमामतीत्य व्रजभुवि कृतपादाम्भोजलीलाविलासः कुसुममयमिवैकं कन्दुकं वामपाणेः शिथिलितमिव कृत्वा तं यथास्थानमास्थत् ॥ १९६ ॥

एवं यथास्थलस्थलक्षणे क्षणेन कृते सति गिरीन्द्रे स्नेहानुता पितरौ पितरौ गाढमालिङ्ग्य शिरो जिघ्रतुः कुतूहली हली चालिलिङ्ग सस्नेहासम् ॥ १९७ ॥

हा स्वंसमानवलामिवाखिलमङ्ग गिरिभरेण निर्भरेण निर्भातमस्तीति प्रसूः प्रसूतवात्सल्यातिशया शयाभ्यां वामबाहुमस्य मृद्गतीवामकरतलं चुचुम्ब ॥ १९८ ॥

वात्सल्यकाष्ठाधिरोहिणी रोहिणी च मणिदीपावलिवलितकरतला साश्रुनीरं नीराजयामास ॥ १९९ ॥

व्रजपुरपुरन्ध्रयोऽरन्ध्रयोजितशुभाशिषो निविडतरस्नेहोदध्यक्षता दध्यक्षताङ्कुरितदूर्वादिभिः पूजयामासुः ॥ २०० ॥

विप्रा विप्रागल्भ्या विप्रभार्य्या विप्रभार्य्याश्च सस्नेहमाश्लिष्य संमर्शसाभिराशंसाभिरानर्चुः ॥ २०१ ॥

सन्नन्दादयश्च पितृव्याः पितृव्याकुलतानूना वत्सलतालतापाशबद्धा इव निर्भरमालिङ्ग्य शिरो जघ्रुः ॥ २०२ ॥

केवलवलमानानुरागरागवत्तरतरलमन्दाक्षमन्दाक्षतविलोचनाञ्चलचलदनुपमानिरीक्षणक्षणविसृष्टशोभासहचरीकेन केनचिन्मनोविलासविशेषेण समर्द्धयामासुरनुरागिण्यः ॥ २०३ ॥

---

सहचरादिष्विति । अत्रायंक्रमः । निर्जग्मुः कालयन्तो गाः गोपास्तास्तत्सखा अपि । पौरा गोप्यस्ततो वृद्धा नन्दः सर्वान्ततः प्रसूः वामपाणेः सकाशात् शिथिलितमिव कृत्वेति दक्षिणहस्तास्पर्शः स्वस्यानायासत्वं सर्वान् प्रति ज्ञापयितुम् । यथास्थानं तस्य स्थानमनतिक्रम्य आस्थत् निक्षिप्तवान् ॥ १९६ ॥

स्नेहादनुतापितरौ अतिशयेनानुतापिनौ ॥ १९७ ॥

प्रसूः श्रीयशोदा शयाभ्यां पाणिभ्यां मृद्गती संवाहयन्ती ॥ १९८ ॥

वात्सल्यस्य काष्ठा उत्कर्षस्तामधिरोढुं शीलमस्याः सा ॥ १९९ ॥

अरन्ध्रं निश्छिद्रमेव योजिताः शुभा आशिषो याभिस्ताः यतो निविडतरे स्नेहोदधौ अक्षताः क्षतं छिद्रं तद्रहिताः अव्यभिचरिता इत्यर्थः ॥ २०० ॥

विप्रागल्भ्याविशिष्टप्रागल्भ्यवन्तः विशिष्टया प्रभया आर्य्याः ॥ २०१ ॥

पितुर्या व्याकुलता तस्यामनूना न न्यूनाः ॥ २०२

केवलं वलमानेन अनुरागेण गोरञ्जनं तद्वत्तरं च तत् तरलेन विक्षयेन मन्दाक्षेण लज्जया मन्दं यथा स्यात् तथा अक्षतं च यद्विलोचनाञ्चलं तस्माच्चलत् प्रसरच्च अनुपमं च यन्निरीक्षणमवलोकनं तत्क्षणे तदवसर एव विसृष्टं दत्तं शोभासहचर्या शोभैव सहचरी तद्द्वारा कं सुखं यतस्तेन ॥ २०३ ॥

अथ तस्मिन्नेवानेहसि हसितसुधासुधावितमधुराधरं मधुराधरञ्जिनं वसन्तमिव सकलसुमनःपरिमलं तमेनमेनसोऽपहारिणं हारिणं व्रजराजयुवराजं नभसि भसितकुसुमसमूहावृष्टिकिरां प्रसिद्धसिद्धसरसविद्याधरविद्याधरसुसाध्यसाध्यशुभगन्धगन्धर्वकिंपुरुषपुरुषयोषितामावलिरतितुष्टा तुष्टाव ॥ २०४ ॥

जय जयनन्दात्मज जय वृन्दावनरसकन्दातुलगुणवृन्दाधिकतरनन्दच्चिन्मकरन्दस्वपदरविन्दद्वयकुरुविन्दप्रभनखचन्द्रावलिभिरतन्द्रामलरुचिसान्द्राकृतिभिरलं द्रावितनिजलोकव्यतिकरशोक स्फुरदस्तोकप्रथितश्लोक श्रीधरधीर व्रजवरवीर प्रकटाभीर श्यामशरीर ॥ २०५ ॥

वारमेकमात्रमेव तेऽहमित्युदीरयन्ति ये तु तानपि त्वमत्र नाथ पासि जन्ममृत्युखेदभेदकारिहारिपादपद्ममेव ते भजन्ति ये तु तान्नु किंतु। नित्यसत्यशुद्धबुद्धमुक्तरूपपार्षदौघसेव्यमानमाननीयगीयमानगोकुलेन्द्रपुत्र चित्रसच्चरित्र देवदेव तुभ्यमेव मे नमो नमो नमोऽस्तु ॥ २०६ ॥

प्रकुपितवक्रोद्धतमदशक्रोद्भटकृतविक्रोशनघनचक्रोज्झितगुरुवृष्टिक्षतपुरुसृष्टिव्रजजनतुष्टिप्रथनपरीष्टिप्रकटितहेलालसभुजखेलातोलितशैलाधिप हे जय जय ॥२०७॥

---

माधुर्यो दधिसंमग्नप्रियवर्गेण सत्कृतम् ऐश्वर्योदधिसंमग्नाः सिद्धाद्यास्तुष्टुवुर्हरिम् । अथानन्तरं तस्मिन्नेवानेहसि समये "अनेहापि समय" इत्यमरः तं प्रसिद्धसिद्धादीनामावलिस्तुष्टाव । मधुराधौ चैत्रवैशाखौ रञ्जयितुं शीलमस्य तं वसन्तमिव सकलानां सुमनसां पुष्पाणां पक्षे देवानां साधूनां वा परिमलो गन्धः पक्षे सादृगुण्यं च यतस्तम् एनसोऽघस्यापहारिणम् । भानि नक्षत्राणीव सितानि कुसुमानि तेषां समूहावृष्टि किरन्तीति तासाम् ॥ २०४

वृन्दावने रसानां सर्वेषां विषयत्वेन आश्रयत्वेन च कन्द मूलभूत वृन्दावने रसो रागस्तेन कं सुखं ददातीति वा अतुलैर्गुणवृन्दैरधिकतरं च तत् नन्दन्ती समृद्धिमती चित् उपलब्धिरेव मकरन्दो यत्र तच्च यत् स्वपदरविन्दद्वयं तस्य कुरुविन्दप्रभाभिर्नखगचन्द्रावलिभिः । कीदृशीभिः अतन्द्रा चासौ अमला निष्कलङ्का च रुचिभिः सान्द्रा च आकृतिर्यासां ताभिरिति कमले चन्द्रश्रेणी साचातन्द्रत्वादिलक्षणेत्यभूतत्वम् अलमतिशयेनद्रावितो निजलोकानां व्यतिकरेण व्यतिषङ्गेण शोको येन इति शोकस्य तमस्त्वं संतापत्वं वा व्यञ्जितम् । स्फुरन्नस्तोकः प्रचुरः श्लोको यशो यस्य हे तथा भूते ॥ २०५ ॥

तेऽहमिति तवास्मीति । नित्यमेव सत्याश्च तेशुद्धबुद्धाः शुद्धज्ञानवन्तश्च मुक्तरूपा ये पार्षदौघास्तैः सेव्यमानश्चासौ माननीयश्च गीयमानश्चेति स तथा ॥ २०६ ॥

प्रकुपितश्चासौ वक्रश्च उद्धतमदश्च यः शक्रस्तेन उद्भटं यथा स्यात्तथा कृतं विक्रोशनं यत्र तादृशं यद्घनचक्रं मेघसमूहस्तेन उज्झिता गुर्वी वृष्टिस्तया क्षता पुरुसृष्टिस्तदुपशमोपायनिर्माणं येषां तथाभूतानां व्रजजनानां तुष्टिप्रथनं सन्तोषविस्तार एव परीष्टिः परिचर्या तया प्रकटिता हेलालसस्य भुजस्य या खेला तयैव तोलित उन्नीतः शैलाधिपो येन सः ॥ २०७ ॥

लीलाकन्दुककल्पीकृतगिरितल्पीकृतकरमल्पीभवदविकल्पीभूतसुरेशस्मयमखिले-शव्यतिकरकेशप्रणयिमणीश व्रजजनवन्धो करुणासिन्धो दृढतरवन्धो न खलु मदान्धो भजति भवन्तं भुवि विहरन्तं त्रिभुवनकान्तं स्वमहसि सन्तम् ॥ २०८ ॥

जय जय गोपीरतिरसरोपी सकलकलापीवर सुखवापीचर तव देहो घनरसदेहो ऽनिशसुखदोहो गतसंदेहो महदहमादिप्रकृतिपुमादिर्नियतमनादिर्धुतरवदिव्यतिकरजल्पः करुणाकल्पः स्वमहिमतल्पश्चिद्रसकल्पः सपरमहंसैर्योगिवतंसैः प्रथिताशंसैश्चित्सुखशंसैरपि हृदि भाव्यो निजजनसेव्यो जगदतिनव्यो जयतिसुभव्यो व्रजजनरञ्जी नवघनगञ्जी निरवधिपुञ्जीकृतसुखसञ्जीवनरसमूर्त्ते कृतरसपूर्त्ते ज्ञातजगदार्त्ते सुविशदकीर्त्ते ॥ २०९ ॥

जय जय कृष्ण प्रणयसतृष्ण द्विपति महोष्ण प्रधनिषु धृष्णक् । जय जय धीर व्रजवरवीर प्रकटाभीरस्यामशरीर ॥ २१० ॥

तव पादसरोजमधुव्रततां गतवानपवर्गमपि ह्यभिकाङ्क्षति न के नु धर्मधनैः सुखभोगकथासुतदारसुहृत्प्रभृतिग्रहिलत्वमपि । भवनं द्रविणं सुहृदः सुजना गुरवो गरिमा महिमा यशसां च ततिर्भगवन् भजतामखिलं स भवान् निरुपाधिकृपाजलधिर्गुणरत्नमयः ॥ २११ ॥

त्वां स्तुमहे स्तुतिदूरविदूरतिरागपरा गहनाविभृतोऽत्रिह विभ्रतमभ्रकदम्बविड़-;

मदान्धो जनोः भवन्तं न भजति । कीदृशमपि लीलया कन्दुककल्पीकृतो यो गिरिस्तस्य तल्पीकृतः करो येन तम्। अल्पीभवन्नाति तुच्छीभवत्यविकल्पीभूतोपि सुरेशस्य शक्रस्य स्मयो गर्वो यतस्तं श्लेषेण अविकल्पीभूतो मेघःसदृशी भूतो यः सुरेश इत्याक्षेपः। अखिलानाम् ईशव्यतिकराणां केशप्रणयी शिरोवर्त्ती यो मणीशो रत्नमुख्यस्तद्रपदृढतरोवन्धः संसारो यस्य सः ॥ २०८ ॥

गोपीनां रतिरसं रोपयितुं शीलमस्य तथाभूतः सन् जय जय। हे सकलकलापीवर तव देहो जयति। कथंभूतः घनं सान्द्रं रसं दिग्धउपाचिनोतीति सः । अतोऽनिशमेव सुखं दोग्धि पूरयतीति सः । अतोनात्र प्राकृतत्वाशङ्केत्याहुर्गतसंदेह इति । किंच महदहमोरादी यो प्रकृतिपुमांसौ तयोरप्यादिः। स्वमहिमैव तल्पं शय्या यस्य सः । करुणा कृपैवआकल्पो भूषणं यस्य सः तस्या आकल्प इति वा । चिद्रसानां कल्पनं कल्पः यस्मा त्सः । सुभव्यः सुमङ्गलः ॥ २०९ ॥

द्विपति शत्रौ महोष्ण प्रधनिषु योधृषु धृष्णक् हेप्रगल्भ ॥ २१० ॥

अपवर्गं मोक्षमपि नअभिकाङ्क्षति के नु धर्मधनैः किं पुनर्धर्मार्थाविद्यर्थः । अत एव भजतां जनानां सुखादिग्रहिलत्वं न स्यात् किंच भवनादिकमखिलं भवान्नेव ॥ २११ ॥

रतिरागपराःप्रेमासक्तिपरा जनास्त्वां विदुर्जानन्ति वयं तुस्तुमेह नतु विद्म इति भावः । किंच हे स्तुतिदूर स्तुतिभिरपि दुर्गम तथापि तेदीनवात्सल्यस्वभाव एवास्मान् प्रवर्तयतीत्याहुः।

म्वकमङ्गमनङ्गतरङ्गसुर्सगतभिन्दुमदं दुरवापमिवापरमानयदाननविम्वमलं विमलं वनशोभन लोभहमुद्वह मुद्वह दुत्कसमुत्कर हे ॥ २१२ ॥

पद्मरुगघस्मरनेत्रमतित्रसमञ्चितकुञ्चितसद्धैर्यमहार्घ्यकचप्रचयमकटीकृतभाकृतकामकलामतचामर । तामरसाक्ष समक्षरदुन्मधुसन्मधुराधरसेधधुरानिजवैभवतो धुतसाधु सुविम्वफलं वसुधामहधामद ॥ २१३ ॥

मौक्तिकपङ्क्तिदकुन्दकसुन्दरदन्त निरन्तरभासुरभासुरसामलधामरहास ।२१४।

विलासकवंशिकमंशिकनूत्नसरत्नककाञ्चनपञ्चककुण्डलताण्डवलोलकपोलवतंस कर्मसंसगुञ्जितमञ्जुसरन्मधुपोन्मधुरागपरागधुरामलकोमलमाल्यसुपाल्यलसद्वरपीवर वक्षसमक्षरसौभगशोभ मपारकृपारम मारम ॥ २१५ ॥

---

गहनार्त्तिभृतो जनस्य आर्त्तिं पीडां हन्तीति हे तथाभूत । त्वां कथंभूतम् अभ्रकदम्बविडम्बक मेघसमूहतिरस्कारकमङ्गंबिभ्रतम् । विद्यते परः शत्रुस्तिरस्कारको यस्य तत् अपरम् आननविम्वं च बिभ्रतम् कथंभूतम् इन्दोश्चन्द्रस्यमदं गर्वं दुरवापमिव दुर्लभमिव आनयत् कुर्वत् । अलमतिशयेन वनं वृन्दावनं शोभयतीति हे तादृश । अत एव लोभहाम् अन्यस्पृहाहारिणी मुदं महति प्रापयतीति तथा उक्तपोषन्यायेनाहुः मुद्वहन्तो हर्षधारिण उत्कसमुत्करा उत्सुकसमूहा यस्य तथा २१२

पद्मरुचां कमलकान्तीनाम् घस्मरे कवलकारिणी नेत्रे यस्य तम् । त्रसमतिक्रान्तम् अतित्रसं धीरमित्यर्थः "त्रसमिङ्गंचराचर"मित्यमरः । अञ्चितश्चासौ कुञ्चो कुटिलश्च सद्धैर्यश्च महार्घ्योऽभिनन्दनीयश्च यः कचप्रचयस्तेन प्रकटीकृता या भा तया कृतं कल्पितं कामकलासु मतं चामरं यस्य हे तथाभूत ॥ हे तामरसाक्ष सम्यगक्षरत् निश्चलम् उत्कृष्टं मधु तत्र स चासौ संश्च मधुरश्च योऽधरस्तस्य सेधधुरामाङ्गल्यातिशयस्तया धुतं खण्डितं साधु सुविम्वफलं येन तम् । वसुधाया भूमेर्महधामनीः उत्सवकान्ती ददातीति हे तादृश ॥ २१३ ॥

मौक्तिकपङ्क्तिं द्यन्ति खण्डयन्तीति ते च ते कुन्दवत्सुन्दरश्च दन्ता यस्य हे तथाभूत निरन्तरमेव भासुरः कान्तिमांश्चासौ भस्य नक्षत्रस्य इव आसम्यक् सुरसम् अमलं धाम रातीति तादृशश्च हासो यस्य तथा ॥ २१४ ॥

विलासं कायति गायतीति विलासका वंशिका यस्य तम् । अंशि परिपूर्णं कं सुखं दर्शने यस्मात् तच्च नूत्नं च सरत्नकं च यत्काञ्चनं तस्य पञ्चो विस्तारो ययोस्तयोः कुण्डलयोस्ताण्डवेन लोले चपलौ कपोलचारिवतंसौ यस्यतम् अंसे स्कन्धे तद्गतंचेत्यर्थः सगुञ्जितं मञ्जु यथा स्या तथा सरन्तो मधुपा यत्र तच्च तत् उन्मधु उत्कृष्टो मकरन्दः रागो रक्तिमा परागः पुष्परजस्तेषां धुरा आतिशयेन अमलं कोमलं च यन्माल्य तेन सुपाल्यं लसत् वरं पीवरं वक्षो यस्य तम् आक्षरमचलंसौभगं यस्यां सा शोभा यत्र तम् अपारया कृपया रमयतीति हे तथाभूत ॥ २१५ ॥

वन्धुरसिन्धुसुताङ्कसशङ्कसुदामानि धामनिकामसुधामानि । वक्षसि लक्षणलक्षित दक्षिणकौस्तुभवास्तुनि निस्तुलवस्तुनि हारविहारतरङ्गिणि रिङ्गितवल्लभतल्लजतीव्रवधूव्रजहृद्भवमुद्भवदुन्नतिमन्नवदर्पकदर्पणदर्पसमर्पणमुत्कटमुत्करभेन्द्रसुसान्द्ररसाकरसत्करदोर्भरनिर्भर ॥ २१६ ॥

गोष्ठगरिष्ठमहिष्ठवरिष्ठमहेन्द्रसुसान्द्रमदक्षयसुक्षमनन्दय नन्दज नो दययोदजजन्मनुतोन्मददानवहानद निर्जरदुर्जय भोजय भोजय ॥ २१७ ॥

त्रिलोकशोकभञ्जनं स्वभक्तचित्तरञ्जनं भवप्रवाहखण्डनं शिखण्डखण्डमण्डनम् । स्फुरत्कलिन्दनन्दिनीतटान्तकान्तकानने तमस्तमालगञ्जनं भजामहे महन्महः॥ प्रथमशाखा ॥ २१८ ॥

त्वं जय रञ्जय नो जय योजय सादरपादरतौ भवभीभरमर्दय मर्दय दुमर्दनिर्दयकाममदामयमाशयमाशय शं जनपाञ्जनपुञ्जनिगञ्जन ॥ २१९ ॥

रञ्जनकुञ्जविहारविकारविशारदशारदचन्द्रवितन्द्रदरस्मित विस्मितकृद्वदनाब्जत

---

वक्षसि लक्षणैर्लक्षित । कथंभूते वन्धुरो मनोहरो यःसिन्धुसुताङ्कः लक्ष्मीरेखा तत्र सशङ्कं तच्छोभाच्छादनसभयं सुदाम सुमाल्यं यत्र तस्मिन् धाम्नां कान्तीनां निकामसुन्दरगृहे दक्षिणस्य सरलस्य कौस्तुभस्य वास्तुनि वासभूमौ निस्तुलवस्तुनि निरुपमपदार्थरूपे हाराणां विहारा एव तरङ्गास्तद्वति । रिङ्गितः संचारितः वल्लभतल्लजे प्रियमुख्ये तीव्रे दुष्प्रवेशे वधूव्रजे हृद्भवः कामो येन तम् । ततश्च उद्भवन्नेव उन्नतिमान् यो नवः दर्पकः कन्दर्पः स एव दर्पणः स्वप्रतिबिम्बास्पदं तत्र दर्पस्य समर्पणं संचारणं यस्य तं उत्कटा मुत् हर्षो यस्य तथाभूतस्य करभेन्द्रस्य सुसान्द्रो रसाकरश्च यः सत्करः स इव दोर्बाहुस्तस्य भरेण भारेण निर्भरनिरतिशय ॥ २१६ ॥

गोष्ठस्याहितोपदेष्टृत्वात् आश्रयत्वात्मुख्यत्वाच्च क्रमेण गरिष्ठादिक महेन्द्रस्य सुसान्द्रमदक्षये सुक्षम हे नन्दज नोऽस्मान् दयया नन्दय । उदजन्मा ब्रह्मा तेन नुत स्तुत उन्मदानां दानवानां हानद नाशक । निर्जरेण देवेनापि दुर्जय । भोजय स्वयं प्रयोजको भूत्वा अस्मान् पालय भुजेर्ण्यन्तात्लोट ॥ २१७ ॥

तमस्तमालगञ्जनमिति तमोगुणस्य साक्षाद्विनाश एव तमालस्य तु सारूप्येण तिरस्कार एवात्र व्याख्येयः ॥ २१८ ॥

नोऽस्मान्रञ्जय । केन प्रकारेण सादरं यथा स्यात्तथा पादरतौ चरणसेवाप्रीतौ योजय । एवं योऽस्मान् जय कामवशतां विधूय स्ववशीकुर्वित्यर्थः । ननु संसारिणां युष्माकं कथमेव भवत्त्राहुर्भवभीभरं मर्दय । तत्र प्रथमं काममद एव आमयो व्याधिस्तं मर्दय । यतो दुर्मदेषु दुष्टेषु निर्दयहे निष्करुण । ततश्च शं कल्याणं जनय । जनयित्वा च आशयमन्तःकरणम् आशय व्यापय भक्त्यासौ । हे अञ्जनपुञ्जस्य निजवर्णकान्त्या तिरस्कारक ॥ २१९ ॥

रञ्जनो रञ्जको यः कुञ्जविहारस्तत एव विकारो हर्षादिभावोद्गमो यस्य तथा हे विशारद शारदचन्द्रवद्वितन्द्रं दरस्मितं मन्दहासो यस्य तथा । विस्मितकृतो विस्मयकारिणो वदनात्सका-

विक्षरदक्षरनर्मद मर्मरसग्रहणग्रह जल्पविकल्पहसुश्रुतविश्रुत जल्पितकल्पितकर्णरसार्णवशुद्धरसोद्धव ॥ २२० ॥

मन्मथसन्मदघूर्णनपूर्णदलत्कमलोत्करह्रीकरभाकरलोलविलोचन लोचनरोचन ॥ २२१ ॥

तापकृदापदपायकृपायद भक्त्यनुरक्त्यनुरूपसुरूपनुवज्जनहृज्जलजासनवासल ॥ २२२ ॥

कोपयमोपमशक्रपराक्रममण्डलखण्डनचण्डिममण्डन हेलनखेलनशैलवितोलननिर्भयदोर्भरताण्डवपाण्डरपङ्कजशङ्कनहंसवतंसन रूपनिरूपकपूर्तिदकीर्तिक॥२२३॥

वामकरामलपद्मसुसद्मलगोत्र विचित्रचरित्रपवित्र चराचरगोचरखेचरभूचरविस्मयनस्मयकार महारय ॥ २२४ ॥

वल्लववल्लभ सुप्रथ सुप्रभ दुर्मददुर्मरदुर्धरवार्धरवर्गनिसर्गसुकष्टसुरिष्टसुपीवरसं-

शात् विक्षरद्भिरक्षरैर्नर्म ददासि । वतेति हर्षे । मर्मण्यपि यो रसस्तस्य ग्रहणे ग्रहः आग्रहो यस्य तथा । जल्पविकल्पौ विवादसंशयौ हन्तीति तथाभूतं यत्सुश्रुतं वेदशास्त्रं तत्र विश्रुत विख्यात् " श्रुतमाकर्णिते वेदे " इतिमेदिनी । जल्पितेन वचनेन कल्पितः कर्णयो रसार्णवो येन तथा शुद्धरसेनैव उद्भव उत्सवो यस्य तथा ॥ २२० ॥

मन्मथेन कामेन हेतुना सन्मदे विद्यमानमदे घूर्णनपूर्णे दलत्कमलोत्कराणां स्फुटत्पद्मसमूहानां ह्रीकरे तिरस्कारिणी भानां कान्तीनां आकरो खनी तद्रूपे लोले चपले विलोचने नेत्रे यस्य तथा लोचनानि सर्वजननेत्राणि रोचयतीति तथा ॥ २२१ ॥

तापकृत् या आपत् विपत्तिस्तस्याः अपायो यतस्तथाभूता कृपा यस्य तथा अयः शुभावहो विधिस्तं ददातीति तथा भक्तिर्भजनमनुरक्तिः प्रेम तदनुरूपेण सुरूपं शोभनं सौन्दर्यं नुवतां स्तुवतां जनानां हृदेव जलजासनं कमलरूपमासनं तत्र वासं लातीति तथा॥ २२२ ॥

कोपेन यमोपमस्यापि शक्रस्य पराक्रममण्डलं खण्डयति यश्चण्डिमा तेनैव मण्डनं भूषणं यस्य तथा। हेलनेन हेलयैव खेलनशैलस्य क्रीडापर्वतस्य वितोलनं उन्नयन तत्र निर्भयस्य दोषो भुजस्य भरेण भारेण ताण्डवं नाट्यं ययोस्ते पाण्डरपङ्कजशङ्कने श्वेतकमलशङ्काधारिणी हंसवतंसने सूर्य्योपमकुण्डले यस्य तथा । रूपनिरूपकस्य पूर्तिदा कीर्तिर्यस्य तथा ॥ २२३ ॥

वामकर एवामलपद्मं तदेव सुसद्म तत् लाति गोत्रः पर्वतो यस्य तथा । विचित्रेण चरित्रेण पवित्र । हे चराचराणां गोचरखेचराणां देवादीनां भूचराणां मनुष्याणां च विस्मयनेन स्मयकार ईषद्धास्यकारक । हे महारय महावेग उत्सवालय इति वा ॥ २२४ ॥

वल्लवा एव वल्लभा यस्य तथा । शोभना प्रथा यस्य तथा । हे सुप्रभ । दुर्मदश्चासौ दुर्मरो मरणभून्यश्च दुर्धरो धर्तुमशक्यश्च यो वार्धरवर्गः प्रलयमेघसमूहस्तस्य निसर्गात् अतिवृष्टिरूपस्वभावात् सुकष्टोऽतिकष्टश्च सुरिष्टोऽत्यशुभश्च सुपीवरः अतिपुष्टश्च संश्रसंचयो

वरसंचयसंचरणाकुलगोकुलरक्षणदक्ष लसत्तमवृत्तजवाद्भुतसद्भुजविक्रमचक्रमहत्तर सत्तम ॥ २२५ ॥

निस्तुलशस्त दयामय कामद चिद्घनसद्घनवृन्दविनिन्दनविग्रहविग्रहजाग्रदनुग्रह दक्ष विपक्षविनिग्रहणोग्र विशिष्टसदिष्टद दुष्टसुकष्टद ॥ २२६ ॥

दलत्कदम्बकेसरप्रभाविडम्बिडम्बरच्छविच्छटावराम्बरो महामनस्विनां वरः। मदान्धताधुरंधरं जिगाय यः पुरंदरं जुगोप गोपगोकुलं स वस्तुतः स्तुतोऽस्तु नः द्वितीयशाखा ॥ २२७ ॥

देवबकीबकवत्सकवत्सकलासुरभासुरगर्वहदोर्वर घुसृणसुक्षमतुङ्गभुजंगमदैत्यमहात्ययदक्ष रिपुत्वयशौण्डिमपण्डित चण्डिमखण्डितपद्मजपद्मजतामदधामजवाहितवाहितकालियपालितसूरसुतारस मोहदसाहस दावदवावरबन्धुपु बन्धुर२१९ गोपसुतापरभागसुरागरहस्यतरस्यनुपक्तयनुरक्तयनुबन्धधुरंधर तत्पटहृतपर हासविलासकलापसुलापक ॥ २२९ ॥

---

जलसंचयस्तस्य संचरणादाकुलस्य गोकुलस्य रक्षणे दक्ष, " रिष्टं क्षेमाशुभाभावे " ष्विति, " नीरक्षीराम्बुसंवर " मिति चामरः। लसत्तमश्चासौ वृत्तो दृढश्च जवेनाद्भुतश्च संश्च यो भुजाविक्रमस्तस्य चक्रेण महत्तर। हे सत्तम ॥ २२५ ॥

निस्तुलं शस्तं क्षेम यतस्तथा। हे दयामय। हे कामद। चिद्घनश्चासौ संश्च घनवृन्दस्य विनिन्दनः कान्त्या तिरस्कारकश्च यो विग्रहो देहस्तस्य विशिष्टो ग्रहो ग्रहणं प्रपञ्चलोके प्रकटीकरणं तेन जाग्रत् अनुग्रहो यत्र तथा। हे दक्ष। विपक्षाणां विनिग्रहणे उग्र। हे विशिष्टसदिष्टदायक। दुष्टानां सुकष्टद ॥ २२६ ॥

डम्बर आटोपः। वस्तुतो यथार्थतः ॥ २२७ ॥

हे देव बकी पूतना च बकश्च वत्सकश्च तद्वत्तेषामिव सकलासुराणां भासुरं गर्वं हन्तीति तादृशो दोर्वरो भुजवरो यस्य तथा। घुसृणं चन्दुसतर्पणं तत्र सुक्षम। तुङ्गभुजङ्गमः अघासुरो दैत्यः तस्य महात्यये मारणे दक्ष। रिपुत्वये यः शौण्डिमा मत्तता तत्र पण्डित। चण्डिम्ना खण्डितः पद्मजस्य ब्रह्मणः पद्मजतामदो येन तथा। धामजवस्य तेजोवेगस्य आहितेन आधानेन वाहितो निर्यापितः कालियो येन तथा पालितः सूरसुताया यमुनाया रसो जलं येन तथा। बंधुषु मोहदं साहसं यस्य तथा। तदेवाहुः दावदवाद्वनवह्नेः सकाशात् आवं रक्षणं राति ददातीति तथा हे बन्धुर सुन्दर ॥२२८॥

गोपसुतानां परभागः सौन्दर्यं सुरागोऽतिप्रेमा च ताभ्यां रहस्यं रहसि भवं तरो वेगविशेषस्तत्र हेतुना अनुपक्त्या अनुषङ्गेण हेतुनायोऽनुरागानुबन्धस्तत्र धुरंधर। तस्यैव प्रकारमाहुः तासां पटानां हृपर हरणपर ततश्च हासविलासवान् कलापो वृन्दं यत्र तथथा स्यात् सुष्ठु लपति भाषत इति तथा ॥२२९॥

विप्रवधूप्रणयक्षणसक्षण भिन्नतदन्नपरिग्रहणाग्रपटो हठतो हतयज्ञसमज्ञतयोद्धतबुद्धिर मन्दपुरन्दरसृष्टविदृष्टिसहस्रसहस्त्र सखेलसहेलतयोन्नमितोन्नतपर्वतपर्वद संमतसम्मद ॥ २३० ॥

भोजय भो जगदण्डकरण्डगजन्तुकमन्तुविनाशकृदाशविभो जय भो जनलोचनरोचन२३१शैलशिखालसदाहतिसाहसनन्दनकन्दलवोत्सववत्सल ॥ २३२ ॥

किं पुरु किंपुरुषास्तव शस्तरुचेः शुभमाशु भणन्तु विदन्तु भगो गुणमागुरु के पुनरापुरुदारतमा वत कांततदन्त तथा त्वमसात्वतदुर्गम दुर्गतहीनसुदीननतातिकृतावन ॥ २३३ ॥

धुक्षय नोऽक्षतया कृपया कृतमोदमहोदधिमज्जनसज्जधियो हतमोहतमस्तरस स्वतभक्तिविरक्तिमतस्तव निस्तमसस्तवशस्तमतीन् कुरु नः कुमतिं च नुमोऽथ भवन्तमनन्तभमीश वयं शरणं करुणं करवाम ननाम च नाम भणाम च भोजय भो जगदुत्तम चित्तग ॥ २३४ ॥

---

विप्रवधूनां प्रणयक्षणे प्रेमसमये सक्षण सोत्सव। भिन्नं स्निग्धं यत्तदन्नं तस्य परिग्रहणे अग्रपटो हे मुख्य चतुर। हठतो हठादेव हतो यज्ञः समज्ञा कीर्त्तिश्च यस्य तस्य भावस्तत्ता तया हेतुना उद्धतो बुद्धिं राति गृह्णातीति सः। मंदो यः पुरंदरस्तेन सृष्टं यद्दृष्टिसहस्रं तस्य सह सस्तेजसः सकाशात् त्रायत् इति तथा। सखेलसहेलतया उन्नमितेन पर्वतेन हेतुना पर्व उत्सवं ददातीति तथा। तदेव स्पष्टयन्ति सम्मतः स्वस्वोचितः सम्मदो हर्षो यस्मात्तथा ॥२३०॥

जगदण्डमेव करण्डं तत्र गतानां जन्तुकानां निकृष्टजीवानां मन्तुरपराधस्तद्विनाशकृत् आशा यस्य तथा। भो विभो प्रभो। जनलोचनानि रोचयतीति तथा ॥२३१॥

शैलशिखानां गोवर्द्धनशृङ्गाणां कर्तृणां लसता स्पष्टेन आहति साहसेन नन्दनस्य इन्द्रोद्यानस्य कन्दलवो मूलोत्खानो यस्मात्तथा किंच हे उत्सववत्सल स्वजनानन्दवर्धक इत्यर्थः २३

किं पुरुषास्तव पुरु शुभं किं आशु शीघ्रं भणन्तु स्तुवन्तु न किमपीत्यर्थः। कथंभूतस्य तव शस्तरुचेः प्रशस्तसौन्दर्यस्य हे भगो भगवन् के गुण आ सम्यक् गुरु यथा स्यात्तथ विदन्तु। वत खेदे के उदारतमा गुणं आपुः प्रापुः। हे कान्ततदन्त कान्तो रम्यस्तेषां गुणानां अंतः स्वरूपं यत्र तथा अंतो नाशे स्वरूपे ना इति मेदिनी। यथा तेन प्रकारेण च नोऽस्मान् धुक्षय जीवयेत्यन्वयः। असात्वतैरभक्तैर्दुर्गम दुर्ज्ञेय। दुर्गताश्च हीनाश्च सुदीनाश्चापि ये नतास्तेषां अतिशयेन कृतं अवनं येन तथा ॥ २३३ ॥

अक्षतया कृपया कृतं मोदमहोदधौ मज्जनं यया तथाभूता सज्जा धीर्येषां तथाभूतान् नोऽस्मान् कुरु। एवं द्वितीयान्तानां कुर्वित्यनेनैवान्वयः। हतं मोहतमसस्तरो येनो येषां तान्। स्वतता विस्तृता भक्तिश्च विरक्तिश्च तद्वतः। निस्तमसा तमोरहितान् स्तवैः स्तुतिभिः शस्ता मतिर्येषां तथाभूतान्। कुमतिं च खण्डय "दो अवखण्डने" लोट्। अथ भवन्तं नुमः। अनन्तभं अपरिमेयकान्तिम् हे ईश ॥ २३४ ॥

विपक्षलक्षतक्षणं स्वपक्षपक्षरक्षणं क्षणक्षणक्षणप्रदं सगर्वगर्वखर्वणम्। कृपाविपाकपालिते व्रजे व्रजन्द्रजेश्वरव्रजेश्वरीमदामदं भजामहे महन्महः। तृतीया शाखा २३५

श्रीबलदेवकनिष्ठ महिष्ठकनिष्ठ गरिष्ठपटिष्ठदविष्ठपवित्रविचित्रचरित्र न कुत्र चमत्कृतिमत्कृतिमानतिमानतिरस्कृतदुष्कृतिकस्त्वमवस्त्वतिरन्धन बन्धनमोचन शोचन रोचन कोचनकाशननाशनरक्षणसक्षण सद्गुणसद्गण ॥ २३६ ॥

वल्लवतल्लजकन्यकयान्यजनाधिकसाधितसौभगशोभित सत्तमयात्तकलाधिकराधिकया स्मयविस्मयहासविलासयथार्थसमर्थनदर्पकदर्पनमत्हृदयोद्धृतपर्वतपर्वत २३७

---

क्षणे क्षणे प्रतिक्षणमेव क्षणप्रद आनन्ददं महो भजामहे। कथंभूतं व्रजे मजत् जङ्गमम्। कृपाया विपाकः परीपाकस्तेन पालिते ॥२३५ ॥

महिष्ठे के सुखे निष्ठा यस्य तथा। गरिष्ठादिकं चरित्रं यस्य तथा। चमत्कृतिमती कृतिः क्रिया तद्वान् त्वं कुत्र न अपि तु सर्वत्रैवेत्यर्थः। अतिमानेन अतिसेवया तिरस्कृतानि दुष्कृतानि यतः स त्वम्। अवस्तुनः संसारस्य अतिरन्धन नाशक। अत एव हे बन्धनमोचन। यतश्च शोचनेभ्यो न सेवितवन्तो वयमेतावन्तं कालमित्यनुशोचद्रूप। रोचन रोचक। ततश्च तेषां कोचनकाशनयोः संकोचप्रकाशनयोर्यथासंख्येन नाशनरक्षणाभ्यां सक्षण सोत्सव। सतामुत्कृष्टानां गुणानां सन् वर्त्तमानो गणो यत्र तथा ॥ २३६ ॥

वल्लवतल्लजकन्यकया श्रेष्ठगोपकन्यया अन्यजनाधिकं यथा स्यात्तथा साधितं यत् सौभगं तेन शोभित। सत्तमया आत्तकला चासौ अधिका च या राधिका तया सह स्मयादीनां यथार्थमेव समर्थनं यत्र तथाभूतो यो दर्पकः कामस्तेनैव दर्पो यस्य तथा। नमतां प्रणमतां हृदयं मनो यत्र तथा। उद्धृतः पर्वदायिपर्वतो येन तथा ॥ २३७ ॥

हे सर्वद! शर्वविरिञ्चिमुखा अर्चिनः पूजका ये विचक्षणास्तेषां लक्षाय विलक्षणकक्षं च त्रिशिष्टं चसत् शोभनं च यदिष्टं तद्ददातीति तथा। मिष्टं मधुरं सुदिष्टमतिभाग्यं ददातीति तथा तुण्डिरुण्डिदा च दष्टैः सुदण्डिदा च मूर्त्तिर्यस्य तथा कीर्तिकथया अर्त्तेः पीडातः सुपूर्त्तिः सुष्ठु पालनं यस्यास्तथा। यद्वा कीर्तिकथायां आर्त्तिरुत्कण्ठा तस्याः पूर्त्तिर्यस्मात्तथा ॥ २३८ ॥

गोपकन्याः पदयोः संचलनेन भवदलङ्कृतं चपलनूपुरं च झंकृता झङ्कारयुक्ता किङ्किणिश्च ताभ्यां शङ्कितो डिण्डिमचाण्डिमा यस्य तथाभूतेन मन्मथेन कामेन हृदि ममकाररूपो यो विकारस्तस्माच्च यो विलासस्तस्य विकासं प्रकाशं विशेषयतीति तथा। शेषमुखैः संकर्षणादिभिः तैः प्रसिद्धैः तव ईहितं किमु गम्यं न गम्यमेवेत्यर्थः। हे अगम्य ज्ञातुमशक्य। अपरिमितैः आहितर्ककुतर्कपरैरनारणमाच्छादनं यस्य तथा हे तारणस्य कारणवारणस्य गजस्येव खेला यस्य तथा। महेला गतिर्यस्य तथा। हे अदरगोऽदग! अनल्पाहर्षयुक्त ॥ २३९ ॥

भोस्तवकस्तवनेऽस्तु न वस्तु वरं तवनन्तमलन्तव शन्तम तत्त्वमतत्त्वविदो वि दो विषयो विविधा हि विधा हितकर्त्तरवर्त्तत यस्य रहस्यतमस्य रहस्यत एव न. देव तवेहितमूहितमीश महेशमुखैरपि तैरमुना किमु नाकिजनेन धनेनजलेनमुखेन वसन् भगवन् भव नो हृदि सौहृदधामनि कामदहास रसासुरजर्जरनिर्जरवृन्द ममन्दरुचं कुशलं कुरु ॥२४०॥

विदग्धमुग्धसुन्दरीकदम्बचुम्बडम्बरं सुमंजुकुञ्जकुञ्जरं नवाञ्जनौघगञ्जनम् । अनङ्गरङ्गमङ्गलमसङ्गतुङ्गसङ्गरं रहोमहो महोदयं नुमो नुमोनुमोनुमः ॥२४१॥

इत्येवं स्तवस्तवकितभारतीभारतीव्रसिद्धविद्याधरप्रमुखमुखरितेषु दिशां मुखेषु गुरुतरचमत्कारकारणसमुत्कसमुत्कमानसाः मानसाराः सर्व एव गोपा गोपापितारं व्रजपुरस्य चरितमुपगम्य समश्रयं श्रयन्तः किमपि निवेदयांबभूवुः २४२

इंहो व्रजाधीशा धीशावलयहेतोरिदं वः प्रच्छामोऽच्छामोदाः ॥ २४३ ॥

यदि इ स्वयागक्रमातिक्रमातिम्लायमानमानवसुना सुनासीरेण रेणव इवासं-

तव स्तवने स्तुतौ कोऽस्तु न कोपीत्यर्थः । तव तत्त्वम् अतत्त्वविदो न विषय इत्यन्वयः। कीदृशं तत्त्वं वरं श्रेष्ठं वस्तु तत् अनिर्वचनीयं अनन्तमपरिच्छिन्नम् । अलमतिशयेन हे शंतम विविधा विधा बहुविधं विधानं हे हितकर्त्तः हितकारिन् यस्य रहस्यतमस्य तव रहसि अवर्त्तत अत एव हे देव ! हे ईश ! महेशमुखैः तैरपि तवेहितं न ऊहितं न वितर्कितम् । ततश्च अमुना नाकिजनेन स्वर्गवासिदेवेन किमपीत्यर्थः धनेनः कुवेरश्च जलेनो वरुणश्च तन्मुखेन तदादिना हे भगवन् । नोऽस्माकं हृदि वसन् भव कथंभूते हृदि सौहृदस्य धामन्याश्रये । हे कामदहास रसायाः पृथिव्या ये असुराः कंसाद्यास्तैर्जर्जरनिर्जरवृन्दं देवसमूहं अमन्दरुचं कुरु कुशलं यथा स्यात्तथा कुशलयुक्तमिति वा ।२४०।

महान् उदयो यस्य तन्महः किमपि तेजो नुमः स्तुमः चुम्बे चुम्बने डम्बर आटोपो यस्य तत् । अत्र त्वां स्तुमहे स्तुतीत्यादिभिश्चतसृभिरशीतिभिः कलाभिश्चतस्रो महाकलिका द्विगादिगणवृत्ते कोरकाख्या ज्ञेयाः । तदुक्तं विरुदावलीलक्षणे । द्विगादिकलिकां धीराः कोरकाख्यां प्रचक्षते । द्विगभस्तलसंदर्भैरनन्यगणपातिभिः । खेन्द्वावसानैः संक्लृप्तां द्विगादिकलिकां विदुरिति । अत्र तु भद्वयेन कलानिर्माणं श्लोकच्छन्दांसि तु पञ्च चामराख्यानि ॥२४१॥

एवं स्तवेन स्तवकिता स्तवकिनी कृता या भारती वाणी तस्या भारेण तीव्रा एकान्ता ये सिद्धादयस्तैर्मुखरितेषु शब्दितेषु सत्सु गुरुतरश्चमत्कार एव कारणं हेतुस्तेन समुत्कं किंचित् जिज्ञासया समुत्सुकं समुत्कं सहर्षं च मानसं येषां ते । संमाननीया इत्यर्थः ॥ २४२ ॥

व्रजाधीशा इति गौरवेण बहुत्वम् धियो बुद्धिवृत्तीनां शावल्यं संशयनिश्चयशङ्कास्मृत्यादिसंमर्दस्तद्धेतोः ॥ २४३ ॥

यदिह तवायं बालकः सप्तहायनः सप्त दिवसानि व्याप्य नगराजं पर्वतराजं समुद्धृत्य शतमन्युमिन्द्रं नगराजं नगरस्याजं प्राम्यच्छागमिव चकार तदयं क इति न विद्म इत्यन्वयः। बालकः कथंभूतः सुनासीरेण इन्द्रेण ये जलधराः प्रहिताः हि निश्चितं तान् अलमोघान् अलमत्यर्थं अमोघो वेगो येषां तानपि मोघान् व्यर्थान् कुर्वन् सुनासीरेण । कीदृशेन स्वयागस्य

ख्याः संख्या संवर्त्तकगणत्वेन प्रलयसमयसमयमानमहावृष्टिकारिणो व्रजनगरगर-णायजलधरा धराप्लवनाय महिता हि तानलमोघानमोघान् कुर्वन् ॥ २४४ ॥

तत्रायं बालको लम्बालकोऽलं लघुतरं तरङ्गितकौतुकः सौकुमार्याकरेण करेण वामेन मेनकादुहितृनाथस्यापि दुर्द्धरमुपरि परितः स्यन्दमानपुष्करं पुष्करं मदकल-कलभेन्द्र इव दिवसानि सप्त सप्तहायनः सलीलं समुद्धृत्य नगराजं नगराजं चकार शतमन्युं शतमन्युम् ॥ २४५ ॥

तदयं क इति न विद्मो विमोह एव नो जायते येनानेन जातमात्रेणैव सकलबन्धु-जीवेन बन्धुजीवेन सदृशाभ्यां सदृशाभ्यां मधुमधुरौष्ठाधराभ्यां विषविषमं स्तनरसं पिबताचताशुतरामेव पूतना पूतनामाऽकारि ॥ २४६ ॥

तदनु मञ्जुलवञ्जुलवनसलयकिसलयकिशोरललितेन पदतलेन विशङ्कटशकट-शकलीकारोऽपि रोपितः ॥ २४७ ॥

तदनु च पमुनाशैवलवलयसदृशेन भुजवलयेन जवलयेन सोत्कण्ठं कण्ठं विधृत्य धृत्यवरोधकविलोको लोकोपप्लवकरोऽवकरोदयवत् प्राणैर्वियोजितोऽजितोऽखि-लसुरासुरादिभिरपि महावात्यादैत्यः ॥ २४८ ॥

तदनु च वत्सवत्सवकस्याघव्यालस्यापि व्यरचि मारणं रणं विनैव नैव कु-त्रापि परिश्रमः ॥२४९॥

अस्माकं स्माकम्पित एवात्र तथैवास्याप्यस्मासु निरन्तरायो निरन्तरायोरति रासोऽहरहरतितरामौत्पत्तिक एव संपनीपद्यमानो विद्यमानो विशिष्यानिरुच्य-

क्रमः परिपाटी तस्यातिक्रमेण अतिम्लायमानो मान आदर एव वसुधनं यस्य तेन । संख्याः सम्यक् ख्यातिमन्तः । गरणाय गलनाय नाशायेत्यर्थः ॥ २४४ ॥

लघुतरमतिशीघ्रं स्यन्दमानानि स्रवन्ति पुष्कराणि मकरन्दजालानि यत्र तत् पुष्करं कम-लमिव॥ ॥ २४५ ॥

विदो ज्ञानस्य मोहः सकलानां बन्धूनां जीवेन शदृशा सदृशेनेत्यर्थः । आभ्यां मधुतोऽपि मधुरौष्ठाधराभ्यां व्यवधानान्वयो- यमकानुरोधात् बोद्धव्यः । आशुतरां अतिशीघ्रमेव पूतनामा पवित्रनाम्नी मृतदेहस्याप्यगुरुसौरभोद्गारात् ॥२४६ ॥

वञ्जुलस्याशोकस्य वने कदाचित्सलयः संश्लेषसहितः किशलयः किशोरःस्यात् ततोऽपि ललितेन विशङ्कटस्य वृहतः शकटस्य सकलीकारः खण्डनं रोपितः जनितः कृत इति यावत् रुह जन्मनि प्रादुर्भाव इति धातोः ॥ २४७ ॥

तदनु महावात्यादैत्यः प्राणैर्वियोजितः धृत्यवरोधको धैर्य्यनाशको विलोकोऽवलोकनमपि यस्य सः ॥ २४८ ॥

वत्सवत् वत्सासुरस्येव अघव्यालस्यापि । कीदृशस्य अघमपराधं विशेषेण आ सम्यक् लाति गृह्णातीति तस्य ॥२४९॥

निरन्तरमेव आयो वृद्धिर्यस्य सः रतिरासः प्रेमोल्लासः अनिरुच्यमानोऽशक्यनिरुक्तिकः रुचिभिः प्रभाभिरमानो निरुपमः । किमत्र तावमिति अस्य मानुषत्वे तनूतात्कर्म दुर्घटं ईश्वरत्वे

मानो रुच्यमानोऽनुभूयत एव भवद्भिरपि तत् किमत्र तत्त्वं तत्त्वम् कथयितुमर्हसि २९०

तदा तदाकर्ण्य व्रजपुरपुरन्दरोऽदरोदितहसितसितिस्नातिस्नातसुधाधरमधरिम-गवशनवसनं किंचिदुवाच ॥२९१॥

भो भो वल्लवतल्लजा अवधीयतां निरवद्यानां मे वचसां तत्त्वम् २९२

यदेनं नाम नामकरणसमये सुकुमारं कुमारं समुद्दिश्य स मुदिश्यमानमानसो निरवद्यसार्वज्ञादिगुणवर्गो गर्गो गतमोहं तमोहन्ताहन्ताह ॥२९३॥

अस्य तव कुमारस्य मा रस्यतायाः पारमास्ते ॥२९४॥

पारमहस्यां पारमहं स्यां गतो विद्यायामित्यभिमानवानपि न रहस्यमस्य म-न्तुमर्हति ॥२९५॥

अस्य ह्यविकृता कृतादिषु चतुर्युगेषु चतुर्युगेषु वर्णभिदा ॥२९६॥

कृतेऽवलक्षो वलक्षो वर्णस्त्रेतायां जितारुणोऽरुणो द्वापरे श्यामश्यामः कलौ कृ-ष्णः कृष्णः खल्विदानीमयम् ॥२९७॥

कदाचिदेष चिदेष एव वसुदेवादत्रासीत्तेनायमभिधास्तु सुस्तवास्तु वासुदे-वाभिधोऽपि ॥२९८॥

एतेनापि त्वमस्य महिमनि मनो मारा नारायणसम एवायम् ॥२९९॥

---

एतत् कर्तृकमस्मासु प्रीतिगौरवभावादिति सन्देहः ॥२९०॥

अहो मत्पुत्र एवासावमीभिस्तत्त्वमश्रुतवद्भिः परमेश्वरत्वेन कल्प्यत इति अदरोदिता हसितिः २९१

निरवधि ईयतां प्रतीयताम् ॥२९२॥ स गर्गः मुदा दिश्यमानं वशीक्रियमाणं मानसं यस्य सः। तमोहन्ता संशयच्छेत्ता ॥२९३॥

रस्यतायाः सौभाग्यस्य पारं मा आस्ते ॥२९४॥

पारमहस्या विद्याया पारं गतोऽहं स्याम्। इत्यभिमानवानपि ॥२९५॥

अस्य अविकृता निर्विकारैव वर्णभिदा चतुर्युक् चतुःसंख्यावती एषु कृतादिषु ।२९६।

वलक्षः शुक्लो वर्णः अवलक्षः न वलस्य क्षा दाये यस्मात्सः। श्यामो मेघ इव श्यामः। श्यामः श्यामेचके वृद्धदारके हरिते घने इति विश्वः। कलौ कलियुगे कृष्ण इति। वैव-स्वतमन्वन्तरगताष्टाविंशचतुर्युगीयकलौ तु पीत एवेति। मूर्त इव कलौ कलौ पीत इति पंचम स्तवकोक्त्या न विरुध्यते। इदानीं द्वापरावसाने खल्वयं कृष्णः ॥२९७॥

चित् चिन्मय एव एष इच्छा यस्य तथाभूतः सन्नेवाति तादृशेच्छावशादेव न तु कर्मव-शादित्यर्थः ॥२९८॥

अहो कश्चिदसौ महासिद्धो वा मद्गृहेऽवतीर्ण इति वितर्कयन्तं मां पुनरप्यवधापयन्नाह एतेने-ति त्वमस्य महिमनि माहात्म्ये मनो न अराः न दत्तवानसि अवधेहि नारायण सम एवायमिति तेन देवेन्द्रादि निर्जयोऽप्यस्य संभवत्येवेति भावः ॥२९९॥

एतस्मिन् ये पुनरातिरतिमन्तो मन्तोरणुमात्रमपि न तेषां तेषामङ्ग मङ्गलमेव परितोऽपरितोषो न कुत्रापि प्रेमास्पदमयं सकलनरनारीणां नारीणां च पराक्रमक्रमणिकात्रेति ॥२६०॥

तत्कृतमत्र शङ्कया शङ्कयायमीहया नेहतेऽस्माकं तदुचितं चितं वः प्रेमात्र मात्रबन्धुता धुता करणीया वयमपि पुत्रभावमेव कुर्वीमहि ॥ २६१ ॥

महिमश्रवणेनापि स्वभावो हि भावो नाहार्यतामालम्बतेऽलम्बतेह वो मान्यतया मान्यतया चात्मा खेदयितव्यो दयितव्योऽयं मे कुमार इति निगदिते सर्व एव यथामनीषमनीषदेव निर्वृता वृताश्च बन्धुजनैर्यथापूर्वमतयो यथास्थानमवतस्थिरे ॥ २६२ ॥

स्थिरे सति सकलजनमनसि निजलोकतोऽजलोकतोषितां तदनुमोदितां मोदितां स्वसंतानरक्षणलक्षणतः सकलसौभाग्यपरिमलसुरभिं सुरभिं समुपव्रजन्तीमुपव्रजन्तीव्रतरापत्रपापत्रपालिच्छन्ननयनसहस्रसहस्त्रवद्रोषरजा निर्वेदसंपदेव पुरुहूतः पुरुहूतः पथि संगम्य ॥ २६३ ॥

स्वापराधं क्षमापयितुमापयितुमपि स्वविनयं नयं च तत्सौभाग्यलक्ष्म्या समाकृष्टमिव नगोपरि परितोषेण विहरन्तं च हरन्तं तस्य वातवृष्टिजन्यक्लममिव कस्मैचित्

---

न चात्र महिमदृष्ट्या बन्धुभावश्लथनेन संभ्रमः कार्य्य इत्याह एतस्मिन्निति मन्तोरपराधस्य नारीणां न शत्रूणाम् ॥२६०॥

तत्तस्मात् अत्र शङ्कया कृतं नारायणोयमिति न मन्तव्य इत्यर्थः । कया ईहया चेष्टया अयं अस्माकं शं मङ्गलं न ईहते अपि तु सर्वथैव ॥ २६१ ॥

भावः स्वपुत्रत्वमयः अहार्य्यतां न आलम्बते आश्रयति यतः स्वभावः स्वप्रभावस्थी अत एव इह श्रीकृष्णे वो युष्माकं मान्यतया आदरणीयतयालं युष्माकमेतद्गुरुत्वादिति भावः । वतेति खेदे अनुकम्पायां वा । कृष्णसंबन्धात् अन्यतया च आत्मा मा खेदयितव्यः अयमीश्वरो नु स्याद्वयं तद्वन्य एव गोपाः कथमेतत्सबन्धवन्तोभवितुमर्हाम इति भावनाकष्टं न कर्त्तव्यमित्यर्थः किंतु दयितव्योऽनुकम्प्योऽयं अनीषदेव अनल्पमेव निर्वृता आनन्दिताः ॥ २६२ ॥

ततश्च पुरुहूतः इन्द्र उपव्रजे निजलोकतः समुपव्रजन्तीं सुरभिं पथि संगम्य स्वापराधं क्षमापयितुं नगोपरि विहरन्तं श्रीकृष्णं रहसि समुपससादेत्यन्वयः । सुरभिं कथंभूतां अजलोकैः अजेन ब्रह्मणा तल्लोकैश्च तोषितां सकलसौभाग्यमेव परिमलस्तेन सुरभिं सुगन्धितामित्यर्थः । स च कीदृशः तीव्रतरा या अपत्रपा लज्जा तस्याः पत्रपालिभिर्दलश्रेणीभिरिव छन्नं यत् नयनसहस्रं तेन सह स्रवंति गलन्ति रोषरजांसि क्रोधगर्वादीनि यस्य सः । निर्वेदस्य स्वावमाननस्य संपदा कर्त्र्या पुरु अधिकं यथा स्यात्तथा हूतः स्वचरणार्थमिव कृताह्वान इत्यर्थः ॥ २६३ ॥

आपयितुं प्रापयितुं ज्ञापयितुमित्यर्थः । नगस्य गोवर्धनस्योपरि । तस्य नगस्य सौभाग्यसंपत्त्या समाकृष्टमिवेति विहरणे हेतुरुत्प्रेक्षितः । हरन्तं चेति तत्र प्रयोजनमुत्प्रेक्षितम् ।

कार्य्यान्तरायान्तरायापन्नक्षणसङ्गसुखैरनुचरैः रहिततयाततया च कृपयाद्वितीयं कृष्णं रहसि समुपससाद ॥२६४॥

सादरमथ सा गवां जननी गवां देवीव देवी वक्तुमुपचक्रमे क्रमेण भो देव व्रजराजराजधानीमृगमदविशेषक विशेषकथामवधेहि ॥२६५॥

वधेहि गवां गोदुहां च कृतोयमस्यातिशतमन्योः शतमन्योः प्रबलतरतरसं कष्टामतिवृष्टिमतिवाह्य मतिवाह्यताया अप्यविषयमतिमहिमानं महिमानं प्रकटयन् यदखिलसौभगवान् भगवान् तत्रभवान् भवान् गोकदम्बमरक्षीत् तेन स्वयं स्वयंयोनिना परममुदितायां मुदि मुदितमनसाहमुक्ता मुक्तातिधैर्येण ॥२६६॥

याहि सुरभे देवि सुरभेदे विगतस्पृहं देवोपनतेन शतमन्युमन्युना विपद्यमानां महाकविपद्यमानानां महाकरुणं गवां रक्षणक्षणपरं सानन्दा नन्दात्मजं त्वमधुना गवामिन्द्रत्वेनाभिषेक्तुमर्हसि ॥ २६७ ॥

एष चाहं स हंसमारुह्य ब्रह्मर्षिसुरर्षिसुरकिन्नरचारणसिद्धसिद्धसाहित्यस्तमहमहतमहानन्दमालोकयितुमनुसरामीति ॥ २६८ ॥

अयं च मुहुरागोपहतो मन्दाक्षमन्दाक्ष एव निजाभव्यताभव्यतापः स्वमवमन्तुमना मन्तुमनाकलितमपमार्जयितुमागतोऽपि पुरो भवितुं पुरन्दरो दरोपहत आस्ते ॥ २६९ ॥

तदनुमन्यतामन्यतामागत इवायं स्वयमेव भवचरणाभ्यासमभ्यासन्नः स्वगतं निवेदयतु ॥ २७० ॥

---

कस्मैचित् इन्द्रादिप्रसादनरूपाय । अनुचरैः रहिततयेति तन्नतैः साहित्ये रसभङ्गापत्तेः । अत एवान्तरायेण विघ्नेन आपन्नं विपन्नं क्षणं व्याप्य सङ्गसुखं येषां तैः ॥ २६४ ॥

गवां वाचां देवीव । देवी सुरभिः । विशेषक-तिलकरूप ॥ २६५ ॥

कष्टां अतिवृष्टिमतिवाह्य पराभूय भवान् यद्गोकदंबमरक्षीत् तेन स्वयंयोनिना ब्रह्मणा मुदितमनसा अहमुक्तेत्यन्वयः प्रबलतर तरो वेगो यस्यास्तामतिवृष्टिम् । मतिभिर्बुद्धिभिर्वाह्यताया वोढुं शक्यताया अप्यविषयं अतिशयो महिमा वृहत्वं यस्य तं महिमानं प्रकटयन् लोके प्रदर्शयन् मुदि आनन्दे परमं यथा स्यादेवं उदितायां सर्वत्रोदितवत्यां सत्याम् ॥ २६६ ॥

सुराणां भेदे विगता स्पृहा येन तद्यथा स्यात्तथा याहि महाकवीनां पद्यैर्मानः स्तवो यासां तासाम् ॥ २६७ ॥

एष च स तद्रूपत्वेन प्रसिद्धो वात्सवत्साहरणागसि दृष्टचरतद्वैभव इत्यर्थः ब्रह्मर्ष्यादिभिः सिद्धं साहित्यं मेलनं यस्य तथाभूतः सन्नेवेति विलम्बे द्योतितः ॥ २६८ ॥

आगोऽपराधश्च रागस्तद्धेतुः क्रोधश्च ताभ्यामुपहतः स्वं मुहुरमवन्तुमना इति सम्बन्धः । मन्तुमपराधं अनाकलितमननुभूतपूर्वं दरोपहतो भयव्याकुलः ॥ २६९ ॥

अन्यतामागत इव अन्यो जनो यथा स्वयमेव निवेदयति तथा अयमपीत्यर्थः ॥२७०॥

इति तयोक्ते भीतभीत इव नयनसहस्रसहस्रवदम्भा दम्भादवतीर्य मुकुटत- टघटमानमहामणीन्द्रमहसा सहसा क्षालयन्निव चरणमूलमवललम्बेऽलम्बेऽणु- रतम्त्र इव ॥ २७१ ॥

निरादुत्थाय सादरदरमञ्जलिं निबध्य सापराधतयाधोमुखः पदनखराखरा- मलमरीचिवीचिवीक्षणक्षणः किंचिदस्तौदस्तौजा विडोजा निविडोऽज्ञानियतद- म्भेनापि नापिहितविनयः ॥ २७२ ॥

त्वमसि सकललोकनाथनाथो व्रजपुरनाथसुतः स्वतः स्वतन्त्रः । महमहितमः द्यामहत्त्वतरवस्तव महिमा नहि मादृशैर्विगाह्यः ॥ २७३ ॥

निजमदमदिरामुदा मदान्धाः कथमथ ते महिमानमामनन्तु । प्रकृतिकृतविका- रदृष्टिदोषा द्युमणिरुचो न विलोकयन्ति घूकाः ॥ २७४ ॥

अथ मदमदिराविनष्टदृष्टेरयमुचितो मखखण्डचण्डदण्डः । पुरुकरुण सुदण्ड एव पथ्यो हतजनुषां जनुषान्धमण्डलानाम् ॥ २७५ ॥

उपकृतमिदमेव मे त्वया यत् पुरुकरुणावरुणालयेन देव । अपकृतमिति नन्मया विबुद्धमकृतिखलाः किल विमतीकबोधाः ॥ २७६ ॥

अपि गतरजसं रजो धुनीते विषयविषामिषलालसान् किमस्मान् कथयितुम- थवा मदः कथं स्यात् मभवति चेत् तव दुर्नमा न माया ॥ २७७ ॥

जय जयद जगत्त्रयैकसार व्रजपुरमङ्गल मङ्गलावतार । निरुपमगुणनामधाम दा- मोदर वसुदामसुदामदामबन्धो ॥२७८॥

---

नयनसहस्रात्सहैव स्रवन्ति अम्भांसि यस्य सः दम्भादवतीर्य वियुक्तीभूय दम्भं परित्य- ज्येत्यर्थः ॥ २७१ ॥

सादरदरं सादरं सभयं च पदनखराणाम् अखराः स्निग्धा अमला या मरीचयस्तद्वीचीनां वीक्षणे क्षण उत्सवो यस्य सः अस्तौजा गततेजास्कः अजा माया तया नियत एव यो दम्भस्तेन निविडोऽपि तदानीं न अपिहितो न आच्छन्नो विनयो यस्य स अन्यदा तु पारिजातहरणादौ दुर्विनयवत्त्वेऽपीति भावः ॥ २७२ ॥

मदेन उत्तरेनापि महितं पूजितं नतु स्वेनोपमातुं शक्यं महामहत्वं यस्य तदेव तत्त्वं यस्य सः ॥ २७३ ॥ प्रकृतिः स्वभावः घूकाः पेचकाः ॥ २७४ ॥

सुदण्ड एव पक्षे ऋजु उत्कृष्टम् ॥ २७५ ॥ विबुद्धं विरुद्धतया बुद्धम् ॥ २७६ ॥

गतरजसं वीतरागं मुनिमपीत्यर्थः । अस्मान् कथयितुं किम् अस्मान् धुनीते इति वक्तुं किमवाच्यमित्यर्थः अस्माकं का कथेति यावत् । दुर्नमा दुर्दमा ॥ २७७ ॥

निरुपमानां गुणानां नाम्नां धाम हे आश्रयभूत ॥२७८॥

दुरगवमे नमो नमो न मोहं पुनरुपपादयदेव नो दयस्व। सुघटविघटनाय दुर्घटस्यापि च घटनाय भवन्ति ते कटाक्षाः ॥२७९॥

अभव बहुभवोऽशतः पुरा त्वं विबुधमुदे कुतुकादभूरुपेन्द्रः स्वयमयमधुनोक्षितः सुरभ्याभव सकलेन्द्रशिखेन्द्रनीलनीलः ॥२८०॥

गोविन्दे त्वभिरामनाम यदपि प्रागेव सिद्धं सदा गोलाभादथ गोविचारकतया श्वश्वद्भवां सत्तया। गोपेन्द्रात्मज भोस्तथापि भगवन्नद्याभिषेकोत्सवे श्रीगोवर्द्धनभूधरेन्द्रधर हे गोविन्दनामा भव ॥२८१॥

इति वास्तवस्तवनेन स्वमानमुचि नमुचिसूदने सति पुरस्कृतकमलासना सनातनसनकसनन्दनसनत्कुमारकुमारसहितसोमसोमशेखरा दिगधीशपरम्परापराचिता नारदतुम्बुरुप्रभृतिकोत्तममहर्षिमहर्षिमण्डलमण्डितारुन्धतीप्रभृतिमुनिभार्य्याभार्य्या रूपगुणलावण्यसमानमाननारा नारायणोरुजाप्सरःप्रधानाप्सरःप्रधा नानाविधा सभा सुराणां भासुराणां तदभिषेकमहामहाधिकादिदृक्षयाऽक्षयानन्देन नभो मण्डयामास ॥ २८२ ॥

तस्मिन्नेव समये। सिंहासनं विविधरत्नशिलाविलासि गोवर्द्धनः स्ववपुषोऽवयवेन चक्रे। पाशायुधः स्वयमुपेत्य मणीन्द्रमुक्ताविस्रावि तत्र विदधार सदातपत्रम् २८३

सचारुचामरविधूननधूनहस्ताः श्रद्धावशेन परितो मरुतोऽपि तस्थुः। पूर्णः सुधांशुरपि मण्डलरूपयैव तन्वा विहृत्य मणिदर्पणतामियाय ॥ २८४ ॥

---

दुरवगम हे दुर्ज्ञेय पुनर्मोहं न प्रापय ॥२७९॥

अभव हे अज तदपि त्वं बहुभवो बह्ववतारः पुरा अंशतोऽंशेन विबुधानां मुदे कुतुकादेव स्वमुपसर्जनीकृत्य उपेन्द्र-इन्द्रकनिष्ठोऽभूः सुरभ्या उक्षितः अभिषिक्तः सन् ।२८०।

गोलाभादित्यादिना "विदॢ लाभे" "विद विचारणे" "विद सत्तायां,, मिलितैः साधितं गोविन्देति ॥२८१॥

नमुचिसूदने इन्द्रे स्वमानमुचि स्वगर्वं त्यक्तवति सति तस्य कृष्णस्य अभिषेकमहामहस्य अधिकदिदृक्षया सुराणां नानाविधा सभा नभ आकाशं मण्डयामासेत्यन्वयः। सनातनादिभिः सहितः सोम उमासहितः सोमशेखरो महादेवो यस्यां सा। कुमारः कार्त्तिकेयः नारदतुम्बुरुप्रभृतिकं च तत् उत्तमम् उत्कृष्टशोभं च हर्षि हर्षयुक्तं च यन्महर्षिमण्डलं तेन मण्डिता। मुनिभार्य्याणां भाभिः कान्तिभिरार्य्या रूपगुणादिभिः समानां अनुरूपां माननाम् आदरं राम्तिप्राप्नुवन्तीति सोमपाशब्दवत् ताश्च नारायणोरुजा उर्वशी अप्सरःप्रधानं यासां ताः अप्सरसश्च तासां प्रथा प्रकृष्टधारणं यस्यां सा ॥२८२॥

गोवर्द्धनस्य सर्वतः श्रेष्ठयात् सिंहासनस्यापि इन्द्रत्वेमुख्यालिङ्गत्वात् प्रथमं तेनैव सदुपहृतमित्याह सिंहासनमिति सत्सुन्दरम् ॥२८३॥

विहृत्य विहृतीभूय ॥२८४॥

देध्मीयते स्वयमथ स्म विधाय कायव्यूहं मुहुस्तत इतोऽप्यथ पाञ्चजन्यः । ज्योतिर्मयः परित एव रुचां चयेन जाज्वल्यते स्वयमुपेत्य सुदर्शनः स्म २८५

पद्मं विभोरपि विभुत्वमुपेत्य नाना छत्राणि हंसविशदानि समन्ततोऽभूत् । कौमोदकी तु महसा महिताभिषेकपद्मोत्सवस्य मणियूप इवावतस्थे ॥ २८६ ॥

सप्तार्णवाश्च सरितश्च नदाश्च पुण्याः पुण्यानि यानि सलिलाशयमण्डलानि । स्वस्वाम्बुपूर्णमणिमङ्गलकुम्भहस्तैस्तैस्तैरभात्रि परिभावितदिव्यदेहैः ॥ २८७ ॥

भूमिः स्वयं तनुमती मणिपात्रिकायामाहृत्य सप्तमणिसंपुटिकोदरस्थाः । आचारतोऽथ दधती शुचिसप्तमृत्स्नाः कृत्स्नाभिलापवरदस्य पुरोऽवतस्थे ॥ २८८ ॥

मूर्त्ताः समेत्य ततयश्च महौषधीनां सर्वौषधीश्च परिगृह्य महौषधीश्च । अग्रे समासत वनस्पतयश्च पुण्या वैदूर्यपात्रगतपञ्चकषायहस्ताः ॥ २८९ ॥

नानाफलोदकघटीघटिताग्रहस्ता नानाविधानि च फलानि करे दधानाः । अन्याययुस्तत इतो वनदेवताश्च नानामणीश्वरकरा गिरिदेवताश्च । शङ्खादयश्च निधयो नव सिद्धयोऽष्टौ चिन्तामणीन्द्रनिकरा अपि कामगव्यः । कल्पद्रुमा अपि गृहीत्तमनोज्ञरूपा दूरे कृताञ्जलिपुटाः पुर एव तस्थुः ॥२९०॥

स्वर्णाम्बराण्युपनिनाय सुमेरुलक्ष्मीर्हारावलीरुपजहार हिमालयश्रीः । श्रीगन्धमादनभवा कनकारविन्दान्यादाय मानसजलात्स्वयमाजुगुम्फ ॥२९१॥

गन्धोत्तमं मलयजं मलयस्य लक्ष्मीर्गोवर्द्धनस्य दृषदि स्वयमापिपेष । कैलाशतो गिरिसुतागिरिशाद्यदृष्टां तच्छ्रीः समाहरत कामपि रत्नमालाम् ॥२९२॥

---

देध्मीयते स्म अतिशयेन ध्वनितवान् । जाज्वल्यते स्म दीपादिरूपेणेत्यर्थः ॥२८५॥

विभोः पद्ममपीति संबन्धः ॥ २८६ ॥

परिभावितः तिरस्कृतो दिव्योऽपि देहो यैस्तैः । यद्वा परि सर्वतो भावेनैव भावितः कृतो दिव्यो देहो यैस्तैरभात्रि तत्राभूयत ॥ २८७ ॥

शुचिसप्तमृत्स्नाः प्रशस्तमृत्तिकाः वल्मीकात् पर्वताग्राच्च सरस्तीराद्ध्रदाद्गजात् । आन्यागारात्तु गृहणीयादिति भविष्यपुराणोक्ताः आहृत्य मणिपात्रिकायां दधती सती पुरोमतोऽवतस्थे । तनुमती मूर्त्तिधारिणी ॥ २८८ ॥

सहदेवी वचा व्याघ्री बला चातिबला तथा । शङ्खपुष्पी तथा सिंही सूर्य्यावर्त्ततथाऽष्टमीति अष्टमहौषधीः । मुरा मांसी वचा कुष्टं शैलेयं रजनीद्वयम् । शटीचम्पकमुस्तं च सर्वौषधीगणःस्मृत । इति महौषधीश्च परिगृह्य सर्वौषधीनां च ततयः समासतेति चकारात् । २८९ ।

नानाफलानां नारिकेलादीनां उदकपूरिता या घट्यस्तासु घटिता अग्रहस्ता यासां ताः । इन्द्रनीलमुकुन्दादीन्मकरानन्दकच्छपान् । शङ्खपद्मादिकौ चापि निधीनष्टौ क्रमाद्यजेदिति क्रमदीपिकानुसारेणाष्टौ । हारावल्यां तु नवैव निधयः । अणिमादयोऽष्टौ सिद्धयः प्रसिद्धा एव २९०

मानसजलात् तत्रत्यमानसाख्यसरोवरजलात् ॥२९१॥

तच्छ्रीः कैलाशश्रीः गिरिसुता च गिरिशश्च तदादिभिरप्यदृष्टाम् ॥२९२॥

मन्दाकिनीसलिलतो विकचानि काले सप्तर्षिभिर्निजकरैः समुपाहृतानि। चन्द्रांशुभिः पुनरथो मुकुलीकृतानि पङ्केरुहाणि रविरुत्कचयांचकार ॥२९३॥

वन्हिः स्वयं कलितकाञ्चनधूपपात्र्यामालम्बमानवरविद्रुमशृङ्खलायाम्। उद्यत्पिधानगतरन्ध्रसहस्रधूमं चक्रेसुचारुसुरसागुरुदारुदाहम् ॥२९४॥

ज्योतिर्मयेनकनकोत्तमभास्वरेण पक्षद्वयेन गरुडो विदधे वितानम्। भोगान् भुजंगपतयः फणरत्नशेषांश्चकुर्ध्वजानपि च रत्नमयीः पताकाः ॥ २९५ ॥

श्रीसूक्तयोप्यथ परेप्यभिषेकमन्त्रा धृत्वा वपुः किमपि पुरुषसूक्तयश्च। आत्मानमेव वभणुर्मधुरैरुदात्तमुख्यैः स्वरैर्मुनिगणाहितसाधुवादाः ॥ २९६ ॥

गव्यानि पञ्च सुरभिः स्वयमाजहार पञ्चामृतानि चतुरानन एव देवः। ऐरावतः करहृतैः सुरदीर्घिकायास्तोयैर्मणीन्द्रमयकुम्भकदम्बममात्। तूर्याणिनेदुरभितोदिवि देवतानां देव्यस्तु नन्दनवनीकुसुमान्यवर्षन्। गन्धर्वाकिंपुरुषचारणसिद्धसाध्यविद्याधरा मुमुदिरे ननृतुर्जगुश्च ॥ २९७ ॥

नाट्यं मुखप्रभृति पञ्चसुसंधिबन्धं नानाविधं सरसमप्सरसोऽभ्यनैषुः। काश्चिन्निरीक्ष्य तमथो मुमुहुर्बभूव नारायणोरुजनिरेव निकामभक्ता ॥ २९८ ॥

एवं रसमये समये पितामहोमहोत्सुकहृदयो दयोचरतरलतालतासुरभिसुरभिमासाद्यकिंचिदुवाच ॥ २९९ ॥

अयि अद्य निरवद्यनिरवसरसरसः समयः समयामास मासरलेऽतः परमिष्यतां विलम्बो लम्बोदरजनकमनुज्ञाप्य समारभ्यतामभिषेकः ॥ ३०० ॥

यावत् कृष्णं समया मया गम्यते तावन्मत्प्रियमनुरुन्धतीयमनुरुन्धतीयमनुसूयासूयारहिता च धूतरजस्तमोलोपा लोपामुद्रा च मुद्राचतुरा भगवती सर्वसन्मानगा नगात्मजा च पुरुगायगायत्री च वेदमाता माता च देवानामदितिरिदितिरपीयं च-

चन्द्रस्य तदानीं तत्रागत्य स्वीकृतमणिदर्पणात्मकताकस्य अंशुभिः किरणैः ।२९३।

उद्यन्नुद्गच्छन् पिधानगते रन्ध्रसहस्रे धूमो यतस्तथथा स्यात्तथा दाहं चक्रे ।२९४।

भोगान् फणान् ध्वजांश्चक्रुः फणानां रत्नशेषान् रत्नमान् पताकाश्चक्रुः अत्र मिथोविरोधिनामपि भगवदनुवृत्तौ निर्वैरत्वादुल्लास एव सर्वेषामुदभूत् ॥ २९५ ॥

वभणुः शब्दितवन्तः उदात्तमुख्यैरुदात्तानुदात्तादिभिः ॥ २९६ ॥

सुरदीर्घिकायाः स्वर्गङ्गायाः अमात् पूरयामास ॥ २९७ ॥

मुखप्रभृतीनां मुखप्रतिमुखगर्भविमर्शनिर्वहणानां पञ्चानां शोभनसन्धीनां बन्धो यत्र तत् नानाविधं रूपकोपरूपकाद्यवान्तरबहुभेदं अभ्यनैषुरभिनीतवत्यः ॥ २९८ ॥

दयोत्तरा तरलता कृपाप्रधानं तारल्यं सैव लता अनुकम्प्यजनावरणात् तस्याः कुसुमेन सुरभिकृत्वाभिव्यञ्जकप्रकाशेन समीचीनामित्यर्थः तद्यथा स्यात्तथा ॥ २९९ ॥

निरवद्यश्चासौ निःशेषेणानवसरेण सरसश्चेति सः सम्यगयामास प्राप्तः ॥ ३०० ॥

कृष्णं समया कृष्णस्य निकटम्। सर्वांगणमूर्द्धन्यत्वेन माङ्गल्याधिक्यादरुन्धत्याः प्राङ्निर्देशः। मुद्रासु दाने तत्र चतुरा नगात्मजा पार्वती। पुरु प्रचुरं गायति अभिधत्त इति पुरुगाया सा

गिरां देवी देवी स्वाहा स्वाहार्यगुणा चेति सर्वा एव तन्निकटमुपसर्पन्त्विति परि-
माष्य तन्निदेशं देशं तमनुसृतासु तासु भगवानपि स्वयं स्वयंभूरनुससार ॥३०१॥

अनुसृत्य च। अर्घ्येण पाद्यपयसाचमनीयकेन वस्त्रेन्दुसीम्नि मधुपर्कसमर्पणेन
सिंहासने समुपवेश्य गिरां प्रयत्नैः पद्मासनः स समपूजयदम्बुजाक्षम् ॥ ३०२ ॥

तदनु तन्निदेशेनैव पञ्चामृतैः सुरभिभिः सह पञ्चगव्यैर्भव्यैर्निजस्तनरसैः सुर-
भिश्च देवी। ताभिः समं कमलजासनसन्नियोगात् श्रद्धान्विता शिखरिधारिणम-
भ्यषिञ्चत् ॥ ३०३ ॥

तदा तदालोकयद्भिरेवमतर्क्यत। ज्योत्स्नाभिर्नवनीरदः किमथवा शुक्लेन नी-
लोगुणः। शुद्धस्फाटिकरत्नकान्तिसलिलैः किंवेन्द्रनीलाङ्कुरः। मुक्ताभिः किमु वा
तमालतरुणः स्नातः समुद्भ्राजते किंवा श्यामसरोजमुज्ज्वलविधुक्षोदैर्मुरारेर्वपुः ३०४

तदनु च। गायत्रिकाच गिरिजाच सुरप्रसूश्चसारुन्धती च परमा पतिदेवतानाम्
चूर्णैर्महासुरभिभिः शुभगानपूर्वं चक्रुर्विरूक्षणमपेक्षितमातृमोदाः ॥ ३०५ ॥

ततश्च। मत्येकमन्त्रपरिपूतमहाभिषेकद्रव्योज्ज्वलैः शुभजलैः सुरदीर्घिकायाः।
एकैकशः मनुदिताः सनकादयश्च सप्तर्षयश्च गिरिधारिणमभ्यषिञ्चन् ॥३०६॥

ततश्च। सिन्ध्वादिभिर्निजनिजोदकमर्पयद्भिस्तेषां करे स्वजनिनाथ नियोज्य-
मानैः। कृष्णोऽभ्यषेचि रभसोद्गतलोचनाम्भोरोमाङ्कुरक्षुभितचित्रपवित्रगात्रैः३०७

भूयश्च शोणतरसुन्दरगन्धतैलेनाभ्यज्यशैलतनयादय एव देव्यः। कर्पूरपू-
रितसुशीतसहस्रधाराधाराजलैस्तदनु शङ्खजलैरसिञ्चत् ॥ ३०८ ॥

---

च्चासौ गायत्री चेति सा। दिति खण्डनमदितिः तद्रहिता गिरां देवी सरस्वती। सुष्ठु आहार्य्या गुणा यस्याः सा ॥ ३०१ ॥

सिंहासने समुपवेश्य अर्घ्यादिना समपूजयदिति योजना ॥ ३०२ ॥

ताभिररुन्धत्यादिभिः ॥ ३०३ ॥

तदा अभिषेककाले ज्योत्स्नाभिरितिस्नानीयदुग्धदध्यादिवस्तूनां कदाचित् जलमिश्रितत्वेन तारल्यात्। शुक्लेन गुणेनेति तेषामेव कदाचित् जलमिश्रितत्वेन नैविड्यात्। शुद्धस्फाटिकेति- तेषामेव प्रत्येकमन्ते शुद्धगङ्गोदकेन क्षालनात्। मुक्ताभिरिति तेषामेव कदाचित् ललाटादि- षु कणरूपेणावस्थितेः। उज्ज्वलविधुक्षोदैः उत्तमकर्पूरचूर्णैरिति तेषां सर्वेषां सौरभ्यादुत्प्रेक्षा यदुक्तं पञ्चामृतैः सुरभिभिरिति ॥३०४॥

विरूक्षणमभ्यङ्गानन्तरं गन्धचूर्णैरुद्वर्त्तनम्। अपेक्षितः मातुरिव मोदो हर्षो याभिस्ताः ३०५

सुरदीर्घिकायाः गङ्गायाः ॥३०६ ॥

तेषां सनकादीनां स्वजनिना स्वयंभुवा रभसेन हर्षेण उद्गताभ्यां लोचनाम्भश्च रोमाङ्कुरश्च ताभ्यां क्षुभितानि चित्राणि पवित्राणि गात्राणि येषां तैः ॥३०७॥

कर्पूरपूरितैः सुशीतैश्च सहस्रधाराख्यपात्रस्यान्या धाराजलैः ॥ ३०८ ॥

एवं तस्मिन्नेव समये । चिन्ताश्मकल्पतरुकामगवीप्रभावलक्ष्मीप्रसूतसुकुमारकुमारिकाणाम् । वर्गेण सूक्ष्मसितकोमलचैलखण्डैश्चक्रे निकाममभिषेकजलापसारः ॥ ३०९ ॥

काचित केशकलापतोऽथवदनाम्भोजात् परा वक्षसः काचिद्वाहुयुगात् परा चरणतो गात्रस्य काचिच्छनैः । वासःखण्डमनार्द्रकं विदधतीश्रोणीतटे वेष्टितं वासोऽन्यास्तिमितं विहाय्य सलिलं तस्मादपासीसरत् ॥ ३१० ॥

एवं शिखिशिरःकेशमापादपद्ममभिमार्ज्य । पूर्वोपनीतवसनाभरणानुलेपैः कन्यागणोऽतिचतुरः सममण्डयत्तम् । शैलाधिराजतनयाद्युपदिश्यमानः केशान् प्रसाध्य निपुणं पुनराबबन्ध ॥ ३११ ॥

गोगोपगोपवनितादिरसप्रसङ्गस्वाभाविकव्रजविलासमुहूर्त्तहानेः । कृष्णस्य तत्तदुपरोधवशेन सर्वं स्वीकुर्वतः क्षणमुपद्रववद्बभूव ॥ ३१२ ॥

तथापि तथा पितामहादीनामनुरोधत उद्वेगस्य तरङ्गा रङ्गाहतये तस्य न बभूवुः ॥ ३१३ ॥

प्रत्युतभक्तभक्ततया ये यथावत् कुर्वन्ति तथैव तदनुमोदमानो मानोन्नतो गाम्भीर्यमेवावलम्बते स्म ॥ ३१४ ॥

ते स्मयमानमुखाश्चतुर्मुखादयः स्नातमलंकृतमलंकृतकर्माणं तमवलोक्य कल्पतरुप्रसूते सर्वतोभद्रे सर्वतोभद्राभद्रासने समुपवेश्य तेनैव कन्यकागणेन कृतचरणधावनं कारयामासुः ॥ ३१५ ॥

समनन्तरं विरिञ्चः सर्वोत्कर्षाञ्चिका चिकारयिषुः पूजा मनसि चिन्तयामास ३१६

केन करिष्यते मदभिमता मतावपरिछिन्नरसानिरपचितिरपचितिरस्य ॥३१७॥

---

चिन्ताश्मादीनां प्रभावलक्ष्मीः प्रभावमयी संपत्तिस्तया प्रसूता । आविर्भाविता या सुकुमार्य्यः कुमारिकास्तासां वर्गेण ॥ ३०९ ॥

केशकलापादितः सलीलं अपासीसरत् अपसारयामास । अनार्द्रकं शुष्कम् तस्मात् श्रोणीतटात् तत्तत्कर्ममातृकल्पानामदित्यादीनां कर्त्तुमयोग्यमिति कान्तायमानानां कुमारिकाणां मृष्टिः ॥ ३१० ॥ चतुरो दक्षः ॥ ३११ ॥

गोगोपगोपवनितानां रसप्रसङ्गेन स्वाभाविक एव यो व्रजविलासस्तस्य मुहूर्त्तं व्याप्य हानेर्हेतोः ॥ ३१२ ॥

रङ्गाहतये तेषां स्वस्यरङ्गनाशार्थमित्यर्थः ॥ ३१३ ॥

मानेनादरेण उन्नतः ॥ ३१४ ॥

अलमत्यर्थं कृतकर्माणं कृतकृत्यम् । सर्वतो भद्रे पीठे सर्वतोभद्राया गंभार्य्या भद्रासने ३१५

पूजां चिकारयिषुः कारयितुमिच्छन् कीदृशीं सर्वोत्कर्षं अञ्चति प्राप्नोतीति सर्वोत्कर्षाञ्चिकाम् ॥ ३१६ ॥

निरपचितिरपचयशून्या अपचितिः पूजा ॥ ३१७ ॥

रस्यतमेन केन मन्त्रेण वा भवितव्यं नहि निर्मन्त्रमर्हणमर्हणमिति तमथ चन्द्रशेखरोऽखरोऽदितवचा निजगाद ॥ ३१८ ॥

भो भो चतुरानन चतुरा न न चिन्तयन्ति कुमारोऽयमर्चयिष्यति ॥ ३१९ ॥

इत्युक्तवत्येव व्योमकेशे नाकेशेनाभिमुखमीक्ष्यमाणो महोमहोदय इव गोविन्दाभिषेकपूजोपयुक्तो गोविन्दनामाङ्कितोमूर्त्तिमानष्टादशाक्षरो महामनुराविरासीत् ३२०

तमद्भुतमहसं महसंतोषवर्द्धकमालोक्य पितामहो महोल्लासमासाद्याहो महामनुरसौ रसौघवर्षी स्वयमाविर्भूतोऽनुभूतो नु मया यत ऋषिरमुष्य नारदो नारदोपहर्त्ता छन्दश्च गायत्री उभाभ्यामेव निर्विशिष्टोऽस्मि ॥३२१॥

तेनानेनाहमेव कृष्ण देवतामर्चयिष्यामीति संभृतसंभारो भारोपद्विगुणगुणगणो भक्तिवासने तत्वासनारदेन नारदेन तत्सधासनसनकादिभिश्च भक्तिरसध्रुवेण ध्रुवेण च सकलजलमनःप्रह्लादेन प्रह्लादेन च सात्वतमतवसुना वसुना च तथापरैश्च परमभागवतैः सर्वं समुपससार ॥३२२॥

उपसृत्य च कृतपादशौचं भगवन् पूजार्थमाबद्धपद्मासने पद्मासने चतुर्दिगवस्थितानि चत्वारि मुखानि भगवदभिमुखमुखत्रयैकमुखीकृत्य हृष्टाभिरष्टाभिर्दृष्टिभिरीक्षमाणे सति भगवत्पूजामहार्घ्यादिभाजनयोग्याः महार्घ्यादिभाजनयोग्याः सर्वोपरिभापरिभावितदुग्धा दुग्धाब्धिना समुपानीयन्तदीर्घतरपुङ्खाः शङ्खाः ॥ ३२३ ॥

शतधृतिधृतिकर्य्या तु सुमेरुश्रियोरुश्रियो हाटकघाटतास्त्रिपदिकाश्च समाह्रियन्त ३२४

कैलाशलक्ष्म्या तु प्रमोदवर्द्धिनी वर्द्धनी स्फटिकेन्द्रस्य ॥ ३२५ ॥

हिमगिरिश्रिया धियापरिमितानि सभासभाजनानि भाजनानि पुष्पादीनां तत्तत्क्षणादेव देवताभिर्वनानां गन्धपुष्पाक्षतयवकुशाग्रतिलसिद्धार्थार्घ्यद्रव्याणि श्यामाकदूर्वाकमलागराजितराजितानि पाद्यद्रव्याणि सुजातिजातिककोलत्वक्ष्वान्याचमनीयद्रव्याणि परमेष्ठगन्धो गन्धो धरण्या नन्दनवनदेवतया तु कुसुमानि-

---

अर्हणे पूजनम् अर्हणं योग्यं अर्हतीत्यर्थः। अखरं यथा स्यात्तथा उदितं उद्गतं वचो यस्य सः ३१८

न न नहि नहीत्यर्थः संभ्रमे वीप्सा । कुमारोऽयमिति तर्जन्या मूर्त्तमष्टादशाक्षरमन्त्रं दर्शयति। ३१९। व्योमकेशे महादेवे । नाकेशेन इन्द्रेण महसां महान् उदय इव ॥३२०॥

महसंतोषवर्द्धकम् । उत्सवसंबन्धिसुखवर्द्धकम् । नारदोपहर्त्ता नरसमूहस्य भक्तिप्रतिबन्धकदुरितहारी ३२१ भा कान्तिस्तया आरोपेण मन्त्रकान्तिसंक्रमेण द्विगुणितो गुणगणो यस्य सः। वासनां रदति उत्पाटयतीति तथा तेन रद उत्पादने ॥३२२॥

भगवतः पूजामहस्य पूजोत्सवस्य अर्घ्यादिपात्रार्हाः शङ्खा दुग्धसमुद्रेण समुपानीताः । कथंभूताः महार्घ्या बहुमूल्याश्च ते आदिभाजनयोग्याश्चेति ते आदिभाजनयोग्यं प्रथमार्चनप्रवर्तनोपायं अर्हन्तीति ते भाजनमिति भजतेर्हेतुमण्यन्तात्ल्युट् ॥३२३॥

एतां त्रिपदिकाः कुतो लब्धा इत्यधैर्य्यं प्रशक्ते सति शतधृतेर्ब्रह्मणोधृतिकर्य्याधैर्य्यकारिण्या उरुश्रियः विपुलशोभाः ॥ ३२४ ॥ वर्द्धनी मङ्गलघटी ॥ ३२५ ॥

अर्घ्यद्रव्याणि इत्यादिषु सर्वत्र वचनव्यत्ययेनापि समाह्रियन्तेत्यनेनानुषङ्गः सिद्धार्थः श्वे-

कल्पतरुणा तरणाभरणानि पीताम्बराणि वराणि ॥ ३२६ ॥

पुरपुरस्सरसरसागुरुपारिमलमलयजादिधूपो घनसारमारचितवर्त्तिकः सुरभिसुरभिसर्पिष्कः प्रदीपश्चाग्निवल्लभया कामगव्या गव्यानि नानाविधानि देवमात्रामात्रारहितानि हितानि पूपादीनि ॥३२७ ॥

दलितोद्वेगानि दलितोद्वेगानि जाम्बूनदाभताम्बूलीदलानि ताम्बूलानि पौलोम्या सुलोम्यानुरञ्जितमनसा ॥ ३२८ ॥

इत्येवं युगपदेव देवदेवीभिरावतः समाहृतेषु पूजोपकरणेषु विचक्षणोऽपि स्वयं स्वयंभूरानन्दमन्दमज्ञतयाऽज्ञतया मुग्ध इव मन्त्रर्षिणा नारदेन दर्शितक्रमोमूलमन्त्रमुच्चार्य्य भगवन्तमर्घ्यादिक्रमेण क्रमेण यावत् पूजयितुमारेभे ३२९

तावदेव ध्वनिपरिवर्त्तः कृत इव देवदुन्दुभिभिः जन्मान्तरमासादितमिवाप्सरसां लास्येन लब्धयौवनमिव गन्धर्वादिगानं जरातः प्रतिनिवृत्य पुनस्तरुण इव चारणादिस्तवः हर्षस्यापि हर्षः समुत्पन्न इव एवं स एव समयः समयान्तरमिव भवन् सर्वेषां चित्तं चित्तान्तरमिव जनयामास ॥ ३३० ॥

ततः सुमहा महासेनो रसेनोरसिलस्तदातपत्रं तस्य शिरसि निदधार।३३१।

तस्मिंस्तदारूढे रूढेन परमानन्देन महर्षिगणगीतमन्त्रपुरस्सरं पुरः स रञ्जितमनाः परमेष्ठी परमे ष्ठीव्यन्मणिमहःपदलं तन्मुकुटवरं श्रीकृष्णशिरसि निवध्य सम्पादितविशेषकं विशेषकं च विलिख्य भाले भालेपललित इव सकलदेवदेवेन्द्रो गोऽसिन्द्रोसीति निजगाद ॥१३२॥

गदिते च तथा तेन सर्व एव महर्षयो हर्षयोगेन सनन्दादयो नादयोगेन तुष्टुवुः ३३३

तत्सर्षपः ॥ ३२६ ॥

पुरपुरस्सरः गुग्गुलयुक्तः कौशिको गुग्गुलुः पुर इत्यमरः । घनसारः कर्पूरः सुरभीनि सुरभेः सर्पींषि यत्र सः । मात्रारहितानि अपरिमितानि ॥३२७॥

दलितः खण्डित उद्वेगो मुखनाड्यं यैस्तानि दलितानि शिल्पकौशलकर्त्तनात् दलायमानानि उद्वेगानि गुवाकफलानि यत्र तानि गुवाकः क्रमुकःस्यात्तु फलमुद्वेगमित्यमरः।पौलोम्या शच्या ३२८

क्रमेण शक्त्या ॥३२९॥

ध्वनीति देवदुन्दुभ्यादीनां तेषां प्रतिस्वकर्मसु तदानीमभूतपूर्वं वैचक्षण्यं श्रीभगवत्शक्तिप्रभावात् स्वत एवोद्भूतमिति भावः ॥३३०॥

सुमहाः सुतेजाः महासेनः कार्त्तिकेयः तस्य मूर्ध्नि रसेन प्रीत्या आतपत्रं छत्रं दधार । उरसिलः प्रशस्तवक्षा इति सौन्दर्य्येण बलिष्ठतया च तस्यैव तद्योग्यमितिव्यञ्जितम् । स्यादुरस्वानुरसिल इत्यमरः ॥ ३ ३१॥

तस्मिन् छत्रे तदारूढे तन्मूर्द्धोपरिस्थे सति परमे श्रीकृष्णशिरसि परमेष्ठी ब्रह्मा तन्मुकुटवरं निबध्य नियोज्य कीदृशं ष्ठीव्यतामिव मुद्गिरताम् उद्गिरतामिव मणीनां महःपटलानि यत्र तत् भाले विलिख्य । कीदृशोभानां कान्तीनां लेपेन प्रलेपेनेव ललिते ॥ ३३२ ॥

नादयोगेन उच्चैः शब्दप्रयोगेन ॥ ३३३ ॥

यथा । जय श्रीमद्वृन्दावनमदन नन्दात्मज विभो प्रियाभीरीवृन्दारिक निखिलवृन्दारकमणे। चिदानन्दस्यन्दाधिकपदरविन्दासव नमो नमस्ते गोविन्दाखिलभुवनकन्दाय महते ॥३३४॥

ततश्च । पूजान्ते सहतुम्बुरुरुपरितोषेण रूढरोमाश्वः । गिरिवरधरणक्रीडां नारदजपवीणयापास। ततश्च। मन्दाकिनीसमवगाहविधौतभूतिर्मालाकपालभुजगाभरणानि हित्वा मौलीन्दुकान्तिकमनीयमणीन्द्रदीपैर्नीराजनामथ चकार पतिः पशूनाम् ॥ ३३५ ॥

एवं कृते पूजाङ्गे तस्मिन्नारात्रिके पुनरभिषेकमहोत्सवाङ्गं महीगन्धशिलाधान्यादिभिर्महर्षिगणगीतप्रत्येकमन्त्रपूतैरेकैकशः श्रीकृष्णशिरः संस्पृश्य पुनः पुनः काञ्चनभाजनास्थितैर्मिलितैरेव सकलैः पूर्ववन्मन्त्रान्तरपाठपूर्वकं महानीराजनां च विदधे ॥ ३३६ ॥

तमश्चाचारतो गायत्री गौरी चारुन्धतीप्रभृतयो मुनिपत्न्यश्च देवमातरो देवपत्न्यश्च मङ्गलदीपकलिकाभ्यामन्योन्यविपर्यस्तविन्यस्तप्रकोष्ठकरतलाभ्यामेकैकशो नीराजयामासुः ॥ ३३७ ॥

एवं वृत्ते महोत्सवे भगवानात्मयोनिर्भगवन्नैवेद्यं विष्वक्सेनगरुडादिपरमभागवतेभ्यो विभज्य दत्त्वाशङ्खादिनिधिवर्गकल्पतरुचिन्तामणिकामधेनूरादिदेश देशकालोचितम् भो भोः संप्राप्ते प्रतिपन्ने भगवन्महोत्सवे। देवोपदेवमुनयश्च तदङ्गनाश्च नागेश्वराश्च गिरिकाननदेवताश्च । ये चाप्सरसः प्रभृतयोऽप्यपरे समस्तास्तान् भूषयन्तु विविधं परिधापयन्तु । इति तन्निदिष्टा दिष्टातीतफलप्रदाः प्रत्येकं परमसुभगभगवदुत्सवावलोककारिमात्रमेव ते वासोऽलङ्कारतिलकताम्बूलैरर्हयामासुः ॥ ३३८ ॥

अनन्तरमनन्तरहसो महोत्सवस्य परिसमाप्तौ श्रीकृष्णं प्रदक्षिणीकृत्य कृत्यकोविदाः कोविदारा इव सुमनोरक्ताः पितामहादयो दयोद्धुराः सद्य एव तिरोदधुः केवलं शक्रसुरभी सुरभीतिहारिणस्तस्य पुरतः क्षणमतिष्ठताम् ॥३३९॥

प्रिया आभीरी वृन्दारिका यस्य हे तथाभूत ! स्वयं च निखिलानां वृन्दारकाणां देवानां रूपवतां वा मुख्यानां वा मणे रत्नसदृश । चिन्मयस्यानन्दस्य स्यन्द.क्षरणं यतस्तथाभूतः अधिकः पदारविन्दयोरासवो मकरन्दो यत्र तथा ॥ ३३४ ॥ मन्दाकिन्यत्र मानसगङ्गैव ॥ ३३५ ॥

महोत्सवाङ्गमिति महानीराजनीनामित्यस्य विशेषणमाविष्टलिङ्गम् ॥ ३३६ ॥

अन्योन्यं विपर्यस्तेन व्यत्ययेन विन्यस्तौ प्रकोष्ठौ ययोस्ताभ्यां करतलाभ्यां वामप्रकोष्ठे दक्षिणप्रकोष्ठमुपर्यधोभावेन तिर्यग्विन्यस्य स्ववामे दक्षिणकरतलधृतया स्वदक्षिणे च वामकरतलधृतया दीपशिखयेत्यर्थः ॥ ३३७ ॥

ते शङ्खनिध्यादयः पुमान् स्त्रिया एकशेषात् पुंस्त्वम् ॥ ३३८ ॥

कोविदाराः काञ्चनारवृक्षाः सुमनोभिः पुष्पैः रक्ता अरुणाः पक्षे शोभनमनोभिरनुरागिणः। महादयोद्धुरा इति दया चात्र इन्द्रविषयिका भगवदभिषेकोत्सवैः सर्वलोकविषयिका च ज्ञेया ३३९

नैतदाश्चर्यं नेदमधिकमैश्वर्यं नेदमतिरस्यं चास्य वैभवं ये भवन्ति यस्यामी केचिदंशाः केचिदंशांशाः केचित् कलाः केचिद्विभूतयः तैः कृतेऽस्यादरे स्यादरेन किञ्चदपि वैचित्र्यम् ॥ ३४० ॥

अथ तिरोहितेषु तेषु चतुर्मुखमुखाविबुधवर्गेषु पुरोऽवस्थितं पुरंदरमदरमनीयम-नीयदनुग्रहोदयसदयसरसतरं तरङ्गितकौतुकः किमपि कृष्णो निजगाद ॥३४१॥

कथय शतमन्यो मन्योरुपशमस्ते जातः न त्वमन्तरङ्गोन्तरङ्गोपयितुमर्हसि न मया नमयामासे तव मदोऽयमुद्रोहेण मुद्रोहेण केवलम् ॥३४२॥

यतः स्वजनमदोमदोजसा न सह्यत स्वजनो हि मत्तो मत्तो हि दण्डमर्हति।३४३।

शतमख मखभङ्गस्तेऽनुग्रहत एव कृत इति मातः परं परंतप मामसूयितुमर्हसि याहि सुखेन भुज्यतां निजमैन्द्रं पदं संपद संततां तामाश्रित्य मा पर प्रमत्तेन भवितव्यमिति सानुकम्पमुदितो मुदितोतिसरसभगवद्वलमानकृपाकशासनः पाकशासनः समश्रयं प्रणम्य प्रदक्षिणीकृत्य च भगवन्तं निजपुरमेव जगाद गामपि सुरभिं सुरभिं कृत्वा प्रणयपरिमलेन विमलेन विसर्ज्य स्वीकृतपूर्ववेश एव एकान्तकान्तलावण्यो निमेषमात्रात् कुतोपि समागत इव श्रीकृष्णोऽपि व्रजमाविवेश ३४५

इत्यानन्दवृन्दावने कैशोरलीलालताविस्तारे गोवर्द्धनोद्धरणो नाम

पञ्चदशः स्तवकः ॥ १५ ॥

---

वैभवं प्रभुत्व ये निश्चितं भवन्ति तैरादरेऽस्य कृते न किमपि वैचित्र्यं स्यात् अरे इति स्थूलधियः प्रति ससरम्भ सम्बोधनम् ॥३४०॥

अदरमनीय निर्भयबुद्धिम् ॥ ३४१ ॥

कथयेत्यादिना प्रणयपरिहासेन किंचित्सद्व्याशमुपस्थाप्य तेन च सलज्ज सकम्प च शक्रमालक्ष्य पुनस्तं स्वस्थीकर्त्तुम् अधिकृतदासोचितभावानुकूलस्वप्रभुताविष्कारेणाह तथाय मदो मया उद्द्रोहेण उद्रिक्तेन द्रोहेण न नमयामसे किंतु केवलं मुद्द्रोहेण तव या मुदा मदमर्षा तस्या ऊहेन यद्वा मुदो हर्षस्य रोहेण उत्पत्त्या ईदृशं कौतुकं द्रष्टुमिति भाव ॥३४३॥

मदोजसा मदोजसा कर्त्रा मत्तो मदयुक्तः मत्तो हि मत्सकाशादेव ॥ ३४४ ॥

अतिसरसो भगवतो वल्गमाना कृपा कापति गापाति व्यनक्तीति तादृशं शासनं यस्य स. ३४५

इत्यानन्दवृन्दावनटीकायां सुखवर्त्तिन्यां पञ्चदशस्तवकसंगमनम् ॥ १५ ॥

## षोडशः स्तबकः ।

अथ कथकजनकथकथामोदमोदकारिहारिविचित्रचरित्रचरितार्थीकृततदितरकथाश्रवणे ॥ १ ॥

श्रवणेन्द्रियकृतार्थताकारिगुणावलीले लीलेहितहृतसकलजनमानसे मानसेव्यमानरूपलक्ष्मीके ॥ २ ॥

लक्ष्मीकेलिकलाकलापतोऽपि परमसंगोपरमणीयगोपरमणीयशःप्रदकेलिकेऽलिके विलसत्तरकाश्मीरविशेषके ॥ ३ ॥

विशेषकेशरकुसुमसुमनोज्ञकेशलकलापे कलापेशलगोपवनितानितान्तसौभाग्यस्वरूपे रूपेण जितकोटिकन्दर्पे ॥ ४ ॥

दर्पेणाधरीकृतसकललोकपाले कपालेरवरादिसर्वदेवाभिवादितेऽदितेरपत्यात्ययहारिणि हारिणि व्रजपुरपुरन्दरनन्दने नन्दनेश्वरमदखण्डनाय गोवर्द्धनधृत्या गोवर्द्धनधृत्या च गोविन्दनामालंकुर्वति भगवति रतिरसवतां व्रजभुवां परमानन्देन कियत्सु यत्सु दिवसेषु ॥ ५ ॥

पूर्वपूर्ववत् सह सहचरैस्तस्मिन्नपि गोचा गोचारणादिकेन विहारेण रसमयं समयं रचयित्वा गमयति सति ॥ ६ ॥

कदाचिद् घोषाधीशो धीशोधिकायामेकादश्यामुपोषितः पोषितश्च तदामोदेन द्वाद

---

श्रुत्वा केशाहृतं तातं केशवे तत्पुरं गते । षोडशे गोपिकामोहो गोपानां ब्रह्मदर्शनम् ॥

अथ भगवति रतिरसवतां व्रजभुवां जनानां परमानन्देन कियत्सु दिवसेषु यत्सु गच्छत्सु सत्सु कदाचिद्घोषाधीशो द्वादशीपालनकृतादरतया निशाशेष एव शमनस्य स्वसारं यमुनां स्नातुमवजगाहे । भगवति कथंभूते कथकजनानां कथा यत्र तथाभूताभिः कथाभिः किं हर्षस्यापि हर्ष इति-यत् मोदस्यापि मोदकारीणि हारीणि विचित्राणि चरित्राणि यानि तैश्चरितार्थीकृतानि श्रवणयोरैश्वर्याद् गतार्थीकृतानि तदितरकथाश्रवणानि येन तस्मिन् ॥ १ ॥

श्रवणेन्द्रियस्य कृतार्थकारिणीं गुणावलीं लाति गृह्णातीति तस्मिन् । लीला नेत्रान्तचरणादयङ्गभङ्गयः ईहितानि गोवर्द्धनोद्धारणानि कर्माणि । मान आदरः ॥ २ ॥

लक्ष्म्याः केलिकलासमूहतोऽपि परमसंगोपाः परमरहस्या रमणीया रम्या गोपरमणीनां यशःप्रदाः केलयो यस्मिन् । अलिके ललाटे विलसत्तरं काश्मीरविशेषकं कुङ्कुमतिलकं यस्य तस्मिन् ॥ ३ ॥

विशेषेण केशरकुसुमैर्बकुलपुष्पैः सुमनोज्ञः केशानां कलापो भूषणं यस्य तस्मिन् ॥ ४ ॥

अत्ययोऽतिक्रमः । गोवर्द्धनधृत्या च कान्तिवर्धिनी या धृतिर्धारिता तया च ॥ ५ ॥

गोचा गां कान्तिमञ्चता प्राप्नुवता ॥ ६ ॥

धियं बुद्धिं शोधयतीति तस्यां धीशोधिकायाम् । तस्या द्वादश्या दरतया अल्पतया हेतुना सत्वरस्नानयुक्तो निशाशेषे रात्रेश्चरमयाम एव "कलाद्रों द्वादशीं दृष्ट्वा निशीथादूर्ध्वमेव हि । आमध्याह्नाः क्रियाः सर्वाः कर्तव्याः शंभुशासनात्" ॥ इति स्मृतेः । अनिशं निरन्तरमेव

श्रीपालनकृतादरतया दरतया च तस्याः सत्वरो निशाशेपेऽनिशाशेपेहितमुक्तैस्त्रिचतुरैरतिचतुरैरतिमद्भिर्बन्धुजनैः समं समुपेत्य प्रकटितस्वसारं स्वसारं शमनस्य मनस्यवहितः स्नातुमवजगाहे ॥ ७ ॥

ततश्च स्नानसमसमयान्यथाभावेन जातप्रतिघाः प्रतिघातक्षिप्तचेतसः प्रचेतसः पुरसदो रसदोत्तमचरितं भगवतो जनकं जनकन्दनास्ते प्रसह्यासह्यातिक्रमं तमपां पत्युरभ्यासमभ्यासमनयन्त ॥ ८ ॥

ततस्तटस्थास्तटस्था इव किमिदं किमिदमिति जातसंभ्रमा भ्रमापहं श्रीकृष्णमुद्दिश्य तारस्वरं चुक्रुशुः ॥ ९ ॥

हन्त हन्तरसुराणां सुराणां प्रतिकर्तरार्तबन्धो बन्धोपशमन कृष्ण पाहि पाहि भो अत्याहितमत्याहितमेष ते पिता पितामहादेरपि माननीयो नीयते यमुनामवगाहमानो मानोद्धतैः कैश्चन तन्महाबाहो भवानद्य त्रायतामत्रायतामतिविपदं त्वां विना विनाशयितुं कः क्षमः ॥ १० ॥

इति गोदुहामार्तस्वरं स्वरंहसा विसारिणं श्रीकृष्णः समाकर्ण्य माकर्ण्यमतिविरसत्वेन दुरावारा वारां पत्युरनुचरापसदानां सदानान्ध्यवर्जितानामक्रियेयमिति जानन् यथास्थित एव तरुणवरुणवरसुकृतकृतसमाकर्ष इव तत्पुरःपुरस्कारकारणत एव तत्र समभिजगाम ॥ ११ ॥

---

अशेषेण निःशेषेण साङ्गोपाङ्गतया ईहितानि कृतानि सुकृतानि यैस्तैः । प्रकटितस्वसारामिति स्नानक्रियाविशेषणम् । तत्र द्वादशीपारणानुरोधनासुरकालेपि मे जले प्रवेशो नासमञ्जस इति स्वचकप्रकटनं स्वसङ्गिनस्तत्र समुत्साहयितुमिति ज्ञेयम् । अवहितः सावधानः ॥ ७ ॥

स्नाने समः समञ्जसो यः समयस्तस्यान्यथाभावेन जातप्रतिघा उत्पन्नक्रोधाः प्रतिघातेन जलावघातमात्रेणैव क्षिप्तचेतसः प्रचेतसो वरुणस्य पुरे सीदन्तीत्यद्भुतं जनानां कन्दना उद्वेजकाः प्रसह्य बलात् अपां पत्युर्वरुणस्य अभ्यासं निकटम् अभि आभिमुख्येन आ सम्यक् अकष्टेन सामिति संगत्या अनयन्त ॥ ८ ॥

तटस्थाः कूलस्थितास्तथा इव उदासीना इव तत्प्रतीकाराशक्तेः सह गमनासंभवाच्च तथाविनोत्प्रेक्ष्यन्त एव नतु वस्तुनस्तटस्था इति । भ्रमम् अनिष्टाशङ्कामयम् अपहन्तिध्यतीति तम् ॥ ९ ॥

हन्तरित्यादिविशेषणचतुष्टयेन दुष्टनिग्रहशिष्टपालनदीनपालत्वबद्धत्रायकत्वलक्षणागुणाःप्रस्तुतोपयोगिन उक्ताः । पाहि पाहीत्यादिद्वित्वंभयेन । मानोद्धतैर्गर्वोद्धतैः । अत्र आ अपताम् आगच्छतु १०

अतिविरसत्वेन मा कर्ण्य न कर्णहितम् । वारां पत्युर्वरुणस्यानुचरापसदानां भृत्याधमानामिवर्जिता कुकर्म इति जानन् पश्यनुदान् । अक्रिया कर्थभूता दुरावारा तेनापि वारयितुमशक्या तस्य को दोष इति भावः । सदा सर्वदा या आन्ध्यस्य भाव आनान्ध्यं चक्षुष्मत्वं तद्वर्जितानाम् तरुणे वरुणस्य वरं सुकृतं तेन कृतः समाकर्षो यस्य तथाभूत इव । तत्पुरस्य पुरस्कार आदरः साफल्यमिति जानन् स एव कारणं हेतुस्तत एव मिलसन्निधानेन तत्पुरं कृतार्थीकर्तुमित्यर्थः । तत्र वरुणपुरे ॥ ११ ॥

अथ तत्र गतवति भगवति प्रचेतःसदनं चेतःसदनं बभूव गोकुलभुवां च कुलभुवां च बालानाम् ॥ १२ ॥

न भवति यद्यपि सुदृशां सदावकाशो हरेस्तदपि। एकग्रामनिवासो ह्येकालयवासवद्भाति ॥ तेन प्रवासवासरमिव तं भगवतः श्रीकृष्णस्य विदित्वाऽनुरागिण्योऽबला बलापायपातुकशरीरा इव समासत क्षणमपि युगसहस्रमिव मन्यन्ते स्म ॥ १३ ॥

न शृणोति नैव पश्यति न वदति न स्पन्दतेऽङ्गनावितति:। अन्तःकरणमिवास्या गतमिव कृष्णस्य सङ्गेन ॥ १४ ॥

जीवितमिव न विलोलं प्रेमास्यास्तेन जीवितेऽपि गते। प्रियविरहे खिन्नाङ्गीं राधां प्रेमैव जीवयति ॥ १५ ॥

तथापि। संवीजनेन नलिनीदलतालवृन्तैः सेकेन चन्दनजलैस्तनुदाहमस्याः। शेकुर्न संशमयितुं यदि बन्धुवध्वो मूर्च्छां सखी किमपि निर्वृतिमाततान ॥ १६ ॥

प्रशिथिलतूलकधूननमूलकमनुमीयते श्वसितम्। तेन च जीवनमस्याः सखीजनैस्तेन च स्वायुः ॥ १७ ॥

आयाति कृष्ण इति बन्धुवधूजनोक्त्या कृच्छ्रेण पङ्कजदृशा स्थिरपक्ष्मतारे।

---

चेतःसदनं चेतसोऽवसादः "सदॢविशरणगत्यवसादनेषु"। गोकुलभुवां व्रजवासिमात्राणां कुलभुवां कुलजानां बालानां रमणीनाम् ॥ १२ ॥

बलस्यापायेन पातुकानि पतनशीलानि शरीराणि यासां ता इव ॥ १३ ॥

बलापायेत्यादिना "चिन्तात्र जागरोद्वेगौ तानवं मलिनाङ्गता। प्रलापो व्याधिरुन्मादो मोहो मृत्युर्दशा दश" इत्यासां द्वित्रा दशाः सूचिता अत्यन्तभाव्यसहस्रैव दशम्यपि दशा आसन्नप्राया बभूवेत्याह। न शृणोतीति मोहः ॥ १४ ॥

वृन्दावनेश्वरी तु दशमीमेव दशां संश्रितवती ननु तर्हि संवीजनचन्दनसेकादिकं परिजनैः किमर्थं कृतं तत्राह जीवितमिवेति अयमर्थः जीवितेन हि प्रियविरहानलज्वालां सोढुमसमर्थेन झटित्येव तस्या देहान्निष्क्रान्तवता स्वचापल्यदोष एवोपार्जितः प्रेम तु महाधीरं तादृश्या ज्वालयापि दुर्जरं प्रत्युत प्रतिक्षणं वर्द्धमानं सत् स्वशक्त्या तद्देहं संजीव्यैव रक्षितुं स्वस्थैर्यसाद्गुण्यमेव प्रथयामास इति एवं च जीविते नष्टेऽपि न प्रेमास्याः क्षीयत इत्यायातम् इदमत्र तत्वं कृष्णविप्रलम्भेऽरिष्टनिष्टाशङ्कामयेऽपि श्रीगर्गादिसर्वज्ञवाक्यविश्वासात् पुनः प्राप्तिप्रत्याशया मद्दर्शका या तदा मत्कान्तं सुखयितुं पारयिष्यति मदृशां श्रुत्वा तस्यापीदृशी दशा नूनं भविष्यतीति शङ्कया च कष्टेनापि प्राणधारणमेव दुष्करं प्राणत्यागश्च सुकर एवेत्यन्यायेन प्रेमाशप्रातिकूल्योद्भावकश्च तेनास्या जीवनं प्रेमबलेनैव रक्षितमगतमेव तत्तेनोत्प्रेक्षितम् ॥ १५ ॥

तेन नवम्येव दशास्याः प्राप्तावसरेत्याह संवीजनेत्यादि ॥ १६ ॥

प्रशिथिलस्य तूलकस्य धूननं कम्पनमेव मूलं गमकं यस्य तत् श्वसितम् ॥ १७ ॥

यथैव उन्मीलिते तथैव तस्थतुरिति सखीवाक्यविश्वासानुसन्धानेन इति उन्मीलिताभ्यां

उन्मीलिते वत यथैव दृशौ तथैव ते तस्थतुर्लिखितपङ्करुहद्वयीव ॥ १८ ॥

कृष्णः क्षणादिह समेष्यति सर्वथेति स्वालीजनस्य वचने यदपि प्रतीतिः। हन्त क्षणो यदि स एव युगायते तत् किं दूषणं वत तथा विरहव्यथायाः ॥ १९ ॥

उन्मील्य नेत्रमथ कृष्णमलोकयन्त्या हृत् पूर्वतोऽपि नितरां परितप्तमस्याः। हृद्वर्तिकृष्णमहसः पटली यदेषा धाराञ्जनाश्रुकपटेन बहिर्बभूव ॥ २० ॥

एवं गतवति करुणावरुणालये वरुणालये तमालोक्य ससंभ्रममुपगम्य प्रणम्य प्रणयाभिभूतः प्रचेताः प्रचेताश्चर्य्ययाश्चर्यया्ऽर्घ्यादिकया कयाचन पूजयित्वा जयित्वादधृष्यमहसं महसंचयमिव मूर्त्तिमन्तं मूर्त्तिमन्तं चिदानन्दरसमिव भगवन्तं तुष्टाव ॥ २१ ॥

नमस्ते करवाम वामदेवादिदेवादिदेव देवकीगर्भरत्न रत्नगर्भाभारावतारकावतार कामकोटिकमनीय कृतार्थोऽहमद्य निरवद्यनिरवकाशप्रकाश प्रकटपरमानन्द नन्दतनय तव चरणरजो रजोऽपहारि मम पुरीपुरीतत्परिशोधनं समजनि जनिरपि मे कृतार्था ॥ २२ ॥

---

दृग्भ्यां कृष्णमदृष्ट्वा एता मृषैव मामाश्वासयन्तीति तदैव पुनर्मूर्च्छामालम्बितवत्यास्तस्या जाड्येन दृशोर्निमेषाभावात् ॥ १८ ॥

क्षणादिहेति कृष्ण आयातीति नास्माभिर्मृषोक्तं किंतु क्षणमात्रविलम्बेनेति किमिति न विश्वस्यत इत्यभिप्रायज्ञानात् ॥ १९ ॥

उन्मीलिते वत यथैव दृशौ यथैवेत्यत्र किंचिदवर्णितमवशिष्टं पुनः पद्येनैव वर्णयितुं तदेवोट्टङ्कयति उन्मील्येति पूर्वतोऽपि तप्तमिति तप्ततैलकटाहमध्ये जलबिन्दुपातादिव तन्मध्यतः सखीजनाश्वासप्रक्षेपात् हृद्वर्तीतितत्तापसहनासमर्थैवेति भावः ॥ २० ॥

प्रचेताः वरुणः प्रचेताः प्रकृष्टचित्तवान् चर्य्यया परिचर्य्यया आश्चर्यया पूर्वया अर्घ्यादिकया पूजयित्वा तुष्टाव। कथंभूतं जयित्वात् सर्वोत्कर्षवत्वात् अधृष्यतेजसं महसंचयम् उत्सवसमूहं मूर्त्तिमन्तमिव देहधारिणमिव इति सपरिकरनिजपरमोल्लासः चिदानन्दरसं मूर्त्तिमन्तं घनीभूतमिवेत्यननुभूतचरपरमरसास्वादश्च सूचितः "मूर्त्तिःकाठिन्यकाययो"रित्यमरः ॥ २१ ॥

वामदेवः शंभुस्तदादीनां देवानामप्यादौ दीव्यतीति हे तथाभूत तदपि देवकीगर्भखनौ रत्न नीलमणिस्वरूप किमर्थं रत्नगर्भायाः पृथिव्या भारावतारकः अवतारो यस्य तथा न केवलमेतदेव प्रयोजनं किंतु स्वरूपमाधुर्य्यानुभावनेन जगदपि कृतार्थयितुमित्याह कामकोटीत्यादिभिस्त्रिभिर्विशेषणैः तत्र प्रथमेन देहसौन्दर्य्यस्य द्वितीयेन तच्छवीनां तृतीयेन तत्स्वरूपतत्वस्य निरूपणम्। निरवद्यश्चन्द्रसूर्य्यादीनामिवातिशीतोष्ण्यादिरहितो। निरवकाशोऽवच्छेदशून्यः प्रकाशो यस्य तथा प्रकटेति प्रकटत्वं प्रपञ्चगोचरीभूतत्वं परमत्वं मायातीतत्वं स्वीयभावानुसारेण पूर्वं देवकीगर्भरत्नेत्युक्त्वापि सम्प्रति माधुर्य्यनिमग्नचित्ततया प्राह नन्दतनयेति तव चरणरजो ममरजोऽपहारि रजोगुणहन्तृ समजनि तथा मम पुर्य्यां पुरि शरीरे [illegible] ये तन्वन्ति ते पुरीपुरीतती मण्डलेश्वरास्तेषामपि परिशोधनं "ममःका"वित्यत्र "ममादीनामिति वक्तव्य"मिति तनोतेः क्विप्यनुनासिकलोपे रूपम् ॥ २२ ॥

किंच । कालाख्यभवदपाङ्गभङ्गिभङ्गुरमिममुपलभ्यविभवं विभवन्तं भवन्तं यत्र विभो विमोहेन तत्र तत्रभवत्या भवत्यायतो हेतुः प्रभावो भवन्मायायाः ॥ २३ ॥

मा यायावरादिमुनिनिकरदुर्गयानयातः परं परंपरागतेन मोहेन नष्टदृशो मादृशो माधव कारयितुमर्हसि ॥ २४ ॥

हन्त हन्तरघासुरस्य सुरस्यचरित तापकृतापकृताप्युपकृतं मे तव जनकं जनकंसन समानयता मानयतात्मनः सौवुद्ध्यं बुद्ध्यंशलेशाभाववताऽपि मदनुचरेण ॥२५॥

रेणवस्ते चरणकमलयोरनयोरनयोद्धुरस्य मम शिरः शेखरीभूताः खरीभूताः किल्विषविषज्वालाश्च शान्ताः ॥ २६ ॥

तेन वन्दे नवन्देवाधिदेव ते रुचिरुचिरताजितनवतमालमालम्बमानवनमालमाललितशतपत्रपत्रनेत्रमाबन्धुरोदरमदरमहःपूरमायतदृत्ताद्विबाहु बाहुलेयजनकादिवृन्दारकवृन्दवन्द्यचरणकमलामिदं वपुरपूर्वम् ॥ २७ ॥

इत्युभिष्टुत्य चरणकमलममलमधुगन्धिनाम्बुनाम्बुनाथो निजकरकिशलयेन धावयामास धावयामास च सकलापदं पदं सकलसौभाग्यस्य ॥ २८ ॥

तदनु दनुजदमनं पुनर्जगाद भगवन्ननुगृहाण गृहाण यद्रोचते च ते वस्तुपु मदीयलोकरत्नभूतेष्वेतेष्वेतदखिलं तवैव वै बहुना किमुक्तेन ॥ २९ ॥

विभवःसंपत्तिःविभवन्तं विभुं विमोहेन ज्ञानमोहेन आयतो विस्तृतो हेतुर्भवति ॥ २३ ॥

यायावरादीनामपि मुनीनां निकरैर्दुर्गया दुस्तरया अनया मायया अतः परं मद्विधान् नष्टदृशः कारयितुं मा अर्हसि ॥ २४ ॥

मदनुचरेण तव जनकं समानयता मम तापकृता तथा अपकृता भृत्यापराधेन स्वामिनो दण्ड इति न्यायेन ममापकारं कुर्वताऽपि उपकृतमेव हे जनकंसन जननाम्नोऽसुरस्य कंसन घातक "कसिहिंसायां" हे जनार्दनेत्यर्थः। मदनुचरेण कीदृशेन आत्मनः सौवुद्ध्यं सुबुद्धित्वं मानयता वस्तुतस्तु बुद्ध्यंशलेशस्याप्यभाववता ॥ २५ ॥

अहो परमदुर्लभं वस्तु मया कृतागसाऽपि लब्धमित्याह रेणव इति किल्विषरूपपापः पापकूटं संसारो वा तद्विषज्वालाश्च शान्ताः । कीदृश्यः खरीभूताः ॥ २६ ॥

हे देवाधिदेव तेन हेतुना तव नवं वपुरिदं वन्दे । कथं भूतं रुचीनां कान्तीनां रुचिरतया जितो नवतमालो येन तत् । आ सम्यक् लम्बमाना वनमाला यत्र तत् । आयतौ आजानुलम्बिनौ वृत्तौ सुवर्तुलौ द्वौ बाहू यत्र तत् । बाहुलेयः कार्त्तिकेयः ॥ २७ ॥

सकलसौभाग्यस्य पदं चरणकमलं धावयामास क्षालयामास सकलापदं धावयामास द्रावयामास 'धावु गतिशुद्ध्योः' ॥ २८ ॥

मदीयलोके रत्नभूतेषु एतेषु वस्तुषु मध्ये यद्रोचते तद्गृहाण ॥ २९ ॥

वयमपि तावका चकार्दन तत एवास्माभिः समुपचितसुकृतसुकृतफलोदयवशादेव क्षणमात्रमपि लब्धचरणपरिचरणः पितापि तावदयं ते हन्तेह रक्षितोऽक्षितोपाय भवदवलोकनोत्थाय नोत्थाय विरतो भवति भवति कुतोऽभिलाषः ॥ ३० ॥

तथापि क्षम्यतामयपराधोऽपराधोचितदण्डधर धरणितलालंकार किंवा क्षमाभृत्या भृत्यापराधे स्वामिनो दण्डइति ममोद्दण्डोदण्डो ह्येव समुचित इतिकृताञ्जलि जलितमदमातिकम्रेडितमाम्रेडितमाकर्ण्य पाशभृतो भृतोदारकारुण्यः श्रीकृष्णो निजगाद॥३१॥

परितुष्टोऽस्मि भोश्चरमदिगधीश धीशवलताभावेन भावेन ते ॥ ३२ ॥

अखिलमेवैतन्मे तन्मेदुराशय दुराशयदूर्वर्तिने मह्यं किं पुनर्देयं त्वय्येवास्तु वास्तुरयं ममैवेतिनिगद्य मितममितमधुरं धुरंधरो माधुर्य्यवतामथ विधाय पितरमग्रेसरमग्रे सरहसो विस्मयस्य स्मयस्य च वर्त्तमानः समाजगाम व्रजपुरं व्रजपुरंदरनन्दनः ॥ ३३ ॥

तदा प्रभूतभूतमङ्गलकोलाहलोहलोलमनसां सहचरीणां सह चरीणां प्रमोदसुधाधारामुद्वहन्तीनां विरहिसखीसमाश्वासमाश्वासरसतया जनयन्तीनां नयन्तीनां प्रेमपरिपाकं महानुत्साहो जातः ॥ ३४ ॥

अथ व्रजपुरपुरन्दरेणादरेणादरेणातिविस्मयतः पाशभृतःपुरः श्रीरथीयमाणमालिन्या

---

हन्त अनुकम्पायाम् अकष्टमेव इह रक्षितः अक्षितोपाय भवदवलोकनादुत्तिष्ठति योऽक्ष्णोस्तोपस्तदर्थम् ॥ ३० ॥

भृत्यस्यापराधे सति स्वामिनः क्षमाभृत्या क्षमाधारणेन हेतुना दण्डः यदि तु भृत्यं न क्षमते स्वयं दण्डयत्वेव तदा स्वामी न दण्डय इत्यर्थः समुचित इत्यत्र क्रियतामित्यनुक्तिराज्ञापनदोषप्रसक्तिभयात् कृताञ्जलि यथा स्यात् जलितमदं जरा संजाता अस्य जरितो जलितो मदो मत्तता येन तद्यथा स्यात् तथा अतिकम्रमीडितम् आम्रेडित द्वित्रिरुक्तम् ॥३१॥

धीशवलता बुद्धेः शावल्यं कर्बुरत्वं मालिन्यमित्यर्थः तस्या अभावो यत्र तेन भावेन प्रेम्णा ॥ ३२ ॥

मेदुराशय हे स्निग्धाशय । विारमु अग्रेसरं । निधाय सरहसः सरहस्यस्य विस्मयस्य स्मयस्य प्रफुल्लतायाश्च अग्रे वर्त्तमानः सन् समाजगाम । तदागमनानन्तरंव्रजस्थानां तादृशविस्मयप्रफुल्लत्वे समाजग्मतुरित्यर्थः ॥ ३३ ॥

तदा सहचरीणां महानुत्साहो जातः प्रथमं प्रभूतभूतः प्रचुरीभूतो यो मङ्गलकोलाहलस्तेन ऊहः श्रीकृष्णागमनवितर्कस्तेन लोलमनसां ततश्च जनसंवमुखात्तदागमनं निधार्य्य सह च साहित्येन रीणां क्षरितां प्रमोदसुधाधाराम् उत्कर्षेण वहन्तीनां ततश्च विरहिणी या सखी पूर्वेशा तस्याः समाश्वासम् आशु आसरसतया जनयन्तीनां यथासौ जायते तथा कथयन्तीनामित्यर्थः ॥ ३४ ॥

व्रजपुरपुरन्दरेण यदवलोकयामासे तदखिलं तदाननतः आश्रुत्यगोपा इमं श्रीकृष्णम् अखिलजगतो गोपापितारम् ईश्वरं मन्यमानाः किमयं महाङ्घ्र परमहोऽस्मान् दर्शयिष्यति इत्येवं

वनमालिन्यावनत्यं च लालित्यं च स्तुतीनां यदवलोकयामासे ॥ ३५ ॥

तदाननतो ननतोपतरलास्ततोदखिलमाश्रुत्य श्रुत्यर्थमिव मूर्त्तिमन्तामिमं तमिमे गोपा गोपायितारमखिलजगतो गतोहं मन्यमाना मानातीतोऽयमीश्वरः स्वयमात्मनो ब्रह्माख्यं परमहो महोदारं किमहो दर्शयिष्यतीति सर्वेयदि संकल्पकल्पका बभूवुः॥ ३६॥

तदा तदाज्ञाय तेषां मनोरथगतमथ महाकारुणिको नराकारवपुर्ब्रह्म ब्रह्मतोऽप्यानन्दकन्दकमनीयमिति व्यतिरेकेण बोधयिष्यन् धयिष्यन्निति मोहतमोहतधियां कुतर्ककृतां संदेहं व्रजभुवाममीषां ब्रह्माकारामधिकारामधिषणाया वृत्तिंकारयामास॥ ३७॥

ततश्च ब्रह्मसाक्षात्कारेऽविकारेऽविशेषतस्तदानन्दानानन्दानाकलनानुभवबाधे बाधेव तेषां यद्यजनि जनितकरुणस्तदा तदाकारवृत्तितो मुक्तियातुधानीजठरपिठरपिनद्धानमूनमूढयाश्वेवनिवहीभूतप्रणयानात्मजनान् न कदापि दापितमुक्तिग्रहग्रहणान् करोतीति सिद्धान्तयन्निव निष्क्रमय्य भूयो भूयोऽपिहितहितमानन्दनन्दकं कुतोऽपि कदापि न वै कुण्ठं वैकुण्ठं नाम परमं स्वलोकं दर्शयामास ॥ ३८ ॥

ततश्च समाधितः समुत्थिता इव तमथ मूर्त्तं ब्रह्मानन्दमिव समालोक्यतममालोक्य तमसः परं परं प्रमोदमापुरमी पुरमीमांसकाः सन्तः किमपि विषयीकर्त्तुं न

हृदि संकल्पकल्पका यदि बभूवुस्तदा अमीषां ब्रह्माकारां धिषणाया वृत्तिं कारयामासेत्यन्वयभेदेन निर्भयेन । न श्रीयमाणं नस्वीक्रियमाणं मालिन्यं यया सा पुरः श्रीः । आवनत्यम् आवनतत्वम्॥ ३५।

ननतोपतरला अपितु परमगम्भीरा अपि तदाश्रुत्य आनन्दचपलाः सन्तः । गतोहं गतावितर्कं यथास्यात् तथा मन्यमानाः। मानातीतो ज्ञानातीतो निष्परिमाणोवा परमहः परमतेजोमयम् ॥ ३६॥

महाकारुणिक इति मुक्तिसुखगेवामी बहु मन्यन्ते तत् तु किंचिन्मात्रादपि भक्तिसुखात् न्यून किं पुनरेतदीयादिति तदनुभावनेनैव तस्यारोचकतामेषां जनयित्वा वर्तमानमेतत् प्रेमसुखमेव समुत्कर्षयिष्ये तथा वरुणलोकसंपत्तिमात्रश्रवणेनैवानुमितसर्वोत्कर्षे मद्वैकुण्ठलोके वासेप्सूनेतान् तदनुभावनेनैव ततोऽपि निवर्तयिष्य इति स्वागतं परामृश्येत्यर्थः । व्यतिरेकेण नराकारब्रह्मविषयकप्रेमास्वादस्य त्याजनेन । अतिमोहेन तत्कारणभूततमसा च हता धीर्येषां तेषां कुतर्कं कुर्वतां संदेहं धयिष्यन् चुलुकीकरिष्यन् दूरीकरिष्यन्नित्यर्थः । अधिक आरामः प्रेमसुखास्वादनं यो यस्यास्तादृश्या अपि धिषणाया बुद्धेर्वृत्तिंब्रह्माकाराम् ॥ ३७ ॥

तस्य कृष्णस्य आनन्दश्च अनानन्दश्च तयोः स्वकर्तृकत्वानाकलनोर्द्वयोरनाकलनम् अदर्शनमज्ञानं वा तेन हेतुना अनुभवस्य पूर्वसिद्धस्य बाधे सति तेषां बाधा इव व्यथा इव यद्यजनि तदा तयैव बाधया जनिता करुणा यस्य तादृशः सन् ब्रह्माकारवृत्तितो निष्क्रमय्य भूयः पुनरपि भूयो बहुतरं वैकुण्ठं दर्शयामास दापितेति भक्तेः कर्तृत्वं स्वस्य च प्रयोजकत्वमिति णिच् दापितेन मुक्तिग्रहेण ग्रहणं स्वीकारो येषां तथाभूतान् न करोति किंतु कथंचिद्भक्तेच्छानुरोधात् । तान् प्रियन्तं कालेन तत्स्पृष्टान् करोतीति अत एवोक्तं मुक्ता अपि लीलया विग्रहं कृत्वा भगवन्तं भजन्त इति । न पिहितमाच्छादितं हितं यत्र तत् आनन्दस्य नन्दकं समृद्धिकरम् ॥ ३८ ॥

समालोक्यतमम् अतिशयेन दर्शनीयं तं वैकुण्ठं तमसः प्रकृतेःपरम् । परं प्रमोदमापुरिति

शक्नुवन्ति स्म ॥ ३९ ॥

क्षणमात्र एव ब्रह्मकैवल्यं वल्यं च वैकुण्ठसुखमनुभवन्तो भवन्तो युगसहस्रमिव मन्यमाना न्यमाना इव बभूवुर्निखिलसौभगवतो भगवतोऽसुखानवलोकेन ॥ ४० ॥

नवलोकेन पुनस्तेन तेषामानन्दं वर्द्धयितु वर्द्धयितुं च परितापं पुनस्तदपि वैकुण्ठं कुण्ठं चकार कारणरसविग्रहो भगवान् ॥ ४१ ॥

तदनन्तरं तराङ्गितमहा महानन्दनिर्वृताः श्रीकृष्णं विलोकयन्तो बभूवुरेते । एतेन ब्रह्मब्रह्मस्वरूप स्वलोकसायुज्ययुज्यमानताभ्यामपि तदलौकिकलौकिकलौकिकलीलालावण्यादिकपरिशीलनमेव परमरमणीयमिति सिद्धान्तः ॥ ४२ ॥

स एवं हि बंहिष्ठमहिमा नहि मानवद्भिरपि वितर्ककुतर्ककुलकर्कशकश्मलमतिभिर्वेदितुं सुशको दुःशको दुःशीलैरनुसंधातुमपि यः खलु लीलारिङ्गदपाङ्गतरङ्गतरलिममात्रेणैव प्रयुज्य सायुज्यसाधीयस्त्वमथ ततोऽतिदुर्घटघटनविघटनविधिना निष्कासयामास किमशक्यं तस्य लीलाशक्तेरिति ॥ ४३ ॥

इत्यानन्दवृन्दावने कैवल्यलीलालतावितारे ब्रह्मलोकदर्शनो नाम षोडशः स्तवकः ॥ १६ ॥

---

मुक्तियातुधानीजठरतो निष्क्रान्तां तेषां तत्रापि संधुक्षणाप्राप्तेः । ततश्च पुरस्य निजगोष्ठवसतेमीमांसकाः विमर्शकाः सन्तः किमपि वैकुण्ठीयं वस्तु विषयीकर्त्तुं द्रष्टुं श्रोतुं स्प्रष्टुं घ्रातुं वा न शक्नुवन्ति स्म ॥ ३९ ॥

तत्र हेतुर्मधुरनरलीलामयस्य श्रीकृष्णस्यादर्शनमेवेत्याह क्षणमात्रएवेति । वल्यंवलार्हं कैवल्यादुज्ज्वलादित्यर्थः न्यमाना इव नितराम् अमानास्तत्सुखवञ्चनादनादृता दीना इव ॥ ४० ॥

ततस्तदपि वैकुण्ठं कुण्ठं चकार व्रजवासिनामसारस्यापातात् ततोऽपि तान् निष्क्रमयामासेत्यर्थः । किमर्थं नवलोकेन नवीनस्वावलोकेन यद्वा नित्यनवो यो लोको गोकुलाख्यस्तेन । परितापं च वर्द्धयितुं छेदयितुम् नन्वेतस्य कुतस्तथा शक्तिस्तत्राह कारणभूतश्च रसमयश्च विग्रहो यस्य तथा कर्तुमकर्तुमन्यथाकर्तुं च समर्थ इत्यर्थः ॥ ४१ ॥

ब्रह्म च ब्रह्मभूतः स्वलोको वैकुण्ठश्च तयोर्यथाक्रमेण सायुज्यं च युज्यमानता च ताभ्यामपि अत एव "ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृता" इत्यादेस्तात्पर्यार्थमुद्घाटयद्भिः श्रीमद्रूपगोस्वामिचरणैरुक्तम् लोको रम्यः कोऽपि वृन्दाटवीतो नास्ति क्वापीत्यञ्जसा बन्धुवर्गम् वैकुण्ठं यः सुष्ठु संदर्श्य भूयो गोष्ठं निन्ये पातु स त्वां मुकुन्दः ॥ इति ॥ ४२ ॥

मानवद्भिरपि ज्ञानवद्भिरपि । अत्र स्तवकद्वयोक्तलीलासमयक्रमो वैष्णवतोषणीदृष्ट्या ज्ञेयो यथा कार्त्तिकस्यामावास्यायां कर्मवादोत्थापनेन इन्द्रमखभङ्गः तच्छुक्लप्रतिपदि गोवर्द्धनमखोत्सवः द्वितीयायां यमुनातीरे भ्रातृद्वितीयाभोजनोत्सवः तृतीयामारभ्य नवमीपर्यन्तं गोवर्द्धनधारणं दशम्यां गोपानां विस्मयकथावाहुल्यम् एकादश्यां गोविन्दाभिषेकः द्वादश्यां वरुणलोकगमनं पौर्णमास्यां ब्रह्मलोकदर्शनमिति ॥ ४३ ॥

इत्यानन्दवृन्दावनटीकायां सुखवर्तिन्यां षोडशस्तवकसंगमनम् ॥ १६ ॥

## सप्तदशः स्तवकः ।

अथ चतुर्मुखमुखसर्वगर्वगरिमखण्डनानन्तरमनन्तरमदमदकलकन्दर्पदर्पदमनाय॥१॥

निजमुरलिकालिकात्तशिक्षापरीक्षापरीष्टये च ॥२॥

भुजयुगयुगलेन युगपदनेकरमणीरमणीयपरिरम्भाय ॥३॥

कात्यायन्युपासनासनातनानां कुमारीणामारीणाममृतधारामिवनवानुरागरसलहरिकामकामवृंहितां हितां समकालमकालपाकेन केनचिदिच्छाविशेषेणाशेषेणानुमोदयितुं च समये मयेमा रंस्यथ क्षपा इति मनीषितबहुतररजनी रजनीरेकान्तदीर्घां निर्माता ॥४॥

मातापित्रोरपि पूर्वपूर्वनिशानिशान्तावस्थानप्रत्ययं प्रत्ययं भगवान्कृतशक्तिनि-

---

जयत्यतुलमाधुर्य्यवर्षिणी विश्वहर्षिणी । लक्ष्मीसंतर्पिणी रासक्रीडा गोपीप्रकर्षिणी । सूभ्रांशुवेणुनिनद प्रमदाभिसारकूटाभिदानविरहाधिदिपादवाचः । कांतप्रसादनविहारतिरोहितानि वर्ण्यानि सप्तदशके स्तवके क्रमेण । अथ वनसीम्नः सीमन्तंसीमन्ततुल्यं वर्त्म आश्रित्य भगवान् प्रदोषे समये स्वयोगमाया मविलेषु कार्य्येषु तदुपयोगिषु नियोज्य रन्तुं मनश्चक्रे इत्यन्वयः । तत्र चत्वारि प्रयोजनानि चकारद्वयेन आनुषङ्गिकत्वमुख्यत्वाभ्यां द्विशो द्विशो विभज्य क्रमेण निबध्नाति अनन्तरेण निश्छिद्रेण निबिडेन निरवधिना वा मदेन मदकलो मत्तो यः कंदर्पस्तस्य दर्पदमनाय यथा अहं परमेष्ठी महैश्वर्य्यवानिमं मोहयामीति प्राकृतजगदैश्वर्य्यमत्तस्य चतुर्मुखस्य मदं चिदानन्दघननिजाचिन्त्यमहैश्वर्य्याविष्कारेण व्यखण्डयत् तथैवाहमेव श्रृङ्गाररसमयो धीरललितो विश्वमेव मोहयामीत्यात्तमदं कन्दर्पमपि निजरासादिविलासदर्शनेन "साक्षान्मन्मथमन्मथ" इतिब्रह्माणमिव तमपि संमोह्यैव गर्वपर्वतादवरोहयामासैवेत्यर्थः ॥ १ ॥

निजा मुरलिकैव आलिका अनुकम्पितसखी तस्याः सकाशात् तया वा आत्ता गृहीता या शिक्षा तस्याः परीक्षापरीष्टये प्राकाम्यायपरीष्टिः परिचर्य्यायां प्राकाम्येन्वेषणेस्त्रियामिति मेदिनी यथेष्टपरीक्षार्थमित्यर्थः ॥ २ ॥

भुजयुगं योति मिश्रयति यद्गल तेन मिश्रणाद्यादिष्वउपतंल्यानमिति ङः ॥ ३ ॥

कात्यायन्युपासनमेव आ सम्यक् सनातनं नित्यं यासां तासां विशेषोपचारमप्यासमाप्तार्चनमतं समाप्यापि नित्यं तामुपासीनानामित्यर्थः । आरीणां सम्यक् क्षरन्तीं न कामेन वृंहितां कान्तसुखतात्पर्य्यकत्वात् प्रेम्णैवेत्यर्थः । हितां स्वीकारोचितां समकालं परोढाप्रसंभोगादेस्तुस्यकालमेव । ननु ताः कन्यापरये विचित्रनाव्यमानेदृश्यप्रगाढसंभोगयोग्यतावत्वः सहसैव कथनभूवंस्तत्राह अकालेऽपि पाको यस्मात्तेन तदीयेच्छाशक्तेः किमशक्यमिति भावः मनीषितस्य बुद्धिविषयस्य रासादिविलासस्य बहुतरा जनिरुत्पत्तिर्यासु ता रजनी रात्रीरेकान्ततो दीर्घा ब्रह्मरात्रिकल्पा निर्माता तृजन्तोऽयम् ॥ ४ ॥

अभेदा विभेदरहिता उदारा महती सारा श्रेष्ठा या साधुता तया पूर्वपूर्वनिशास्विव निशान्तावस्थानप्रत्ययं मुग्धशय्यायां मयारोपितः पुत्रः सुप्तेनैव निद्राति गृहस्थितिप्रतीति

क्षेपोऽक्षेपोदारसारसाधुतया धुतया लोकापेक्षयाक्षयामोदः ॥५॥

वनसीमसीमन्तमाश्रित्य प्रदोषे प्रदोषे विराजमानो मानोज्ज्वलः संकल्पितसंकल्पितगणरात्रदेवता वताग्रे मूर्तिमतीराज्ञाप्रतीक्षणक्षणवतीरालोक्य सकलाः सकलाः सत्यो भवत्यो भवन्त्विवति निगद्य च ॥६॥

विशेषरहःश्रिकीर्ष्चिकीर्षितकेलिकलाकलापस्यानियोजितसर्वाध्यक्षतयाक्षतया-भगवतीं स्वयोगमायामायासरहितामखिलकार्येषु नियोज्य रन्तुमनश्चक्रे॥ ७ ॥

अथ ताश्च निशा निशातमहसो महसोपूयमाणसुरभिनिदाघशरत्कालिका-लिकशोभाबहुशोभाबहुलतयाऽपरिमिता अपरिमिता अभवन् ॥८॥

त्रयाणामेव ऋतूनामनूनामनूत्तमां कुसुमादिश्रियं च शिश्रियुः ॥ ९ ॥

तथाहि । हरिति हरिति हारी पूर्णयन् कर्णमोदं मदकलकलकण्ठीकण्ठनादो जजृम्भे । सुमधुरमधुरा जन्माधवीगन्धवन्धुर्गनितमतनुतमन्दश्चान्दनोगन्धवाहः १०

कुसुमकुलमफुल्लं मल्लिकावल्लिकानां मदमधुपयुवानोऽलंकृताझंकृतेन । उपरि परिपिवन्तो वादयन्ते स्म शङ्खानिव निविडनिदाघश्रीविहारोत्सवस्य ॥११॥

---

प्रति कृतः शक्तिनिक्षेपो यस्य सः यतोऽयं भगवान् लोकद्वयापेक्षया धुतया खण्डितया सत्या अक्षयआमोदो यस्य सः तदुक्तं रागेणोल्लङ्घयन् धर्ममित्यादि ॥ ५ ॥

प्रकृष्टा दोषा रात्रिर्यस्मात्तथा भूते प्रदोषे समये संकल्पिताः सम्यक् कल्पवदाचरिताश्च ताः संकल्पिताः प्रतिज्ञाताः शारद्यश्चेति या गणरात्रदेवताः बहुरात्र्यधिष्ठात्र्यस्ताः आलोक्य गणरात्रं निशा बह्वय इत्यमरः । इयमुत्प्रेक्षैव ज्ञेया वस्तुतस्तु यदि सकला एव रजन्यः पूर्णचन्द्रा विलासबहुला अतिदीर्घाः संभवेयुस्तदैव मे विचित्ररासादिविलासः सिध्येदिति यदैव तदिच्छा समजनि तदैव तस्य सत्य सङ्कल्पत्वात्तास्तथाभूता बभूवुरिति ॥ ६ ॥

योगमायानियोजनमप्येवं ज्ञेयम् । रहो रहस्यं तस्य चिकीः कर्तुमिच्छुः समन्तात् क्विप् । अनियोजितसर्वाध्यक्षतया नियोगं विनापि अभिप्रायज्ञानादेव या सर्वाध्यक्षता तया आयासरहिताम् ७

नितरां शातं सुखमयं महो यासां ताः महेन उत्सवेन सोपूयमाना अतिशयेनोत्पद्यमानाश्च ताः सुरभयो मनोज्ञाश्च याः सुरभिनिदाघशरत्कालीनाः शोभास्तासां बहुशो भूरिशो भावबहुलतया प्रकाशबाहुल्येन अपरिमिताः परिमाणशून्याः मनोज्ञेच सुगन्धौच वाच्यवत्सुरभिस्मृतमिति विश्वः। वसन्ते पुष्पसमयः सुरभिरित्यमरः । न विद्यते परि सर्वतोभावेन मितमुपमा यासां ताः ॥८॥

अनु अनन्तरं उत्तमां कुसुमादिसमृद्धिं च शिश्रियुः श्रितवत्यः कीदृशीं अनूनां न ऊनां संपूर्णामित्यर्थः ॥ ९ ॥

तामेव एकैक पद्येन क्रमाद्वर्णयति हरिति हरिति दिशि दिशि ॥ १० ॥

मल्लिकावल्लीनां अफुल्लमविकासितमेव कुसुमकुलं परिपिवन्तो मदमधुपयुवानः शङ्खानिव वादयन्तेस्म । अत्र दार्ष्टान्तिके कोरकाणां पाने दृष्टान्ते च शङ्खानाम् । अग्र भागे मुखं विन्यस्य वादनं मत्ततात्पर्यकम् ॥ ११ ॥

किंच । सरसि सरसि सारं सारमामोदमीयुर्मदकलकलहंसाः सालसाः सारसाश्च । विकचकुमुदिनीनां मण्डले गन्धलुब्धा व्यधिषत रतिकेलिं चञ्चलाश्चञ्चरीकाः ॥ १२ ॥

अथ सेवासमयसमयमानादरोदरोच्छलत्किरणः समुदियाय तुहिनकिरणः स च प्रथमं कोपारुणमुखकमलायाः कमलायाः कपोलपोलकः कनकताटङ्क इव १३

युवजनहृत्पटरङ्गकुण्डवलय इवानङ्गरङ्गरजकस्य ॥ १४ ॥

नभः कुण्डताण्डविता रसमयसमयनिश्चयघटिका घटिकापात्रीव ताम्रमयी १५

भगवद्दिदृक्षयात्तयामोदं पीतनपीतनवकान्तिकन्दलीकमुन्मुखं मुखं हरिहरिदङ्गनाया इव ॥ १६ ॥

कमलपरागरागपिञ्जरो राजहंस इव पूर्वदिक्सरसः ॥ १७ ॥

तत्कालकालपुरुषमथ्यमानगगनदध्युदध्युद्गतो नवनीतपिण्ड इव ॥ १८ ॥

सितपटमण्डप इव रश्मिरश्मिवितानितः ऋतुराजस्य ॥ १९ ॥

---

सारं सारं सृत्वा सृत्वा आमोदं हर्षम् ॥ १२ ॥

कोपेति मानिन्याः कमलायाः लक्ष्म्याः कपोले पोलकः स्फीतइत्यर्थः । पुल महत्वे कनकताटङ्कः स्वर्णकुण्डलं स्वस्य पीतिम्ना गण्डस्यारुणिम्ना मिलितस्य पीतरक्तस्य गण्डलाकृतेस्तस्य उद्यच्चन्द्रसारूप्यम् १३ ॥

तस्य कामोद्दीपकत्वमाह युवजनेति ॥ १४ ॥

मध्यगगनचिक्रमिषया तस्योदयस्थानात् किंचिच्चलनमालक्ष्याह । नभ एव कुण्डं तत्र ताण्डवितं वलनविशेषो यस्याः सा रसमयस्य स्निग्धस्य समयस्य निश्चयं घटतीति साघटिकापात्री दण्डप्रहरादिप्रमात्री अनेन युवजनसम्प्रयोगादिमनोरथसाधकत्वमुक्तम् ॥ १५॥

ततोऽपि किंचिच्चलने त्यक्तारुण्यगुणस्य तस्य पीतिमानमालक्ष्याह । हरिरिन्द्रस्तस्य दिगेवाङ्गना तस्या मुखं भगवतो दिदृक्षया उन्मुखं उद्गताग्रमिव पीतनेन कुङ्कुमेन पीता नवा कान्तिकन्दली यत्र तत् अनेन तस्य प्रागभावकारणमपि सूचितं भगवतः पराङ्गनासमाकर्षकत्वगुणनिदर्शकत्वं च उक्तम् ॥ १६॥

अथ तदेव नक्षत्रमण्डली प्रकटोदया शरत्कालीनत्वेन पूर्वदिशोऽपि स्वच्छतामालक्ष्याह कमलपरागेति कमलेतिप्रथमातिशयोक्त्या नक्षत्राण्युक्तानि व्रजविधोः श्रीकृष्णस्यापि राधानुराधादिस्वप्रेयसीगणकुचकुङ्कुमपिञ्जरितत्वापादकभाविविहारशुभसूचकत्वमप्युद्भातम् ॥ १७॥

क्षणान्तरे च तं अदृष्टचरस्निग्धाह्लादमयसुदश्वेतिमवरं स्वकान्त्याच श्वेतीकृतगगनमालक्ष्य सचमत्कारं असौ वर्णितलक्षणश्चन्द्रो न भवति किन्त्वसावन्य एवेत्युत्प्रेक्ष्यते तत्कालेन शीघ्रेणैव काल एव पुरुषस्तेन मथ्यमानं गगनमेव दध्युदधिः तस्मादुदितः अभ्युद्गतः नवनीतपिण्ड इवात्यन्तर्बहिःस्नेहमयत्वेन लब्धविश्वासस्य विरहिणीजनस्यापि दिदृक्षणीयत्वम् ॥ १८॥

ततश्च विरहिणीभिः सूर्यस्यैव दुःसहतेजस्त्वेन कुञ्चितनेत्रतया दृश्यमानस्य तस्य किरणानां रज्जुसमत्वामालक्ष्याह सितपटेति रश्मयः किरणा एव रश्मयो रज्जवस्तैर्वितानितो विस्तारितः ऋतुराजस्य वसन्तस्य तत्र शरदि तस्यापि सत्वात् ॥ १९॥

जगदण्डमण्डपस्थनभोविटङ्कस्य विटङ्कस्य समेधवलधवलपारावत इव ॥२०॥
अविकलकलङ्कशङ्कितताम्बूलप्रतिबिम्बः स्फटिकसम्पुटपुटक इव दिगङ्गनानाम्॥२१
नभोऽकूपारपारमागन्तुमुद्यत इव सकलधौतकलधौतपातः कालपोतवाणिजस्य २२
सपल्लवो राजतकुम्भ इव रजनीजनीमहोत्सवस्य ॥ २३ ॥
एवं हीरककुण्डलमिव कुतूहलंहलधरस्य ॥ २४ ॥
अण्डमिव शरत्कीर्त्तिहंस्या ॥ २५ ॥
मृणालोपधानमिव स्वमदोष्णकन्दर्पस्य ॥ २६ ॥
मालतीकुसुमगर्भक इव विदोषप्रदोषप्रभादेव्याः ॥ २७ ॥
पाञ्चजन्य इव उरीकृतविष्णुपदस्य विष्णुपदस्य ॥ २८ ॥
रजतातपत्रमिव मदनराजचक्रचक्रवर्त्तिनः ॥ २९ ॥
स्फटिकाज्यस्थालीव तमोऽभिचारचारवोत्पादस्य यज्ञस्य ॥ ३० ॥
विकीर्णतरताराकारातुलमौक्तिकानां पटलः शुक्तिसंपुट इव गगनक्षीरनीरनिधेः ३१

कान्तसंयुक्ताभिस्तु सम्पूर्णनेत्रतया दृश्यमानस्य तस्य तत्क्रीडोपकरणायमानत्वमेवेत्याह ज-गदण्डमेव मण्डपः तत्रस्थं नभ एव विटङ्कः कपोतपालिका तस्य पारावत इव कीदृशस्य विशिष्टङ्को बन्धो यस्य तस्य "टाकि बन्धे" । सम्यगेधते वर्द्धत इति समेधं बलं यस्य स चासौ धवलश्चेति सः ॥२०॥

तन्मध्यगतं मालिन्यं निभाल्याह अविकलेन कलङ्केन शङ्कितोवितर्कितस्ताम्बूलप्रतिबिम्बो यत्र सः ॥ २१ ॥

स्फटिकताम्बूलसंपुटस्य चलनं न संभवतीत्यन्यथोत्प्रेक्षते नभ एव अकूपारः समुद्रस्तस्य पारमासम्यक् गन्तुमुद्यतः सकलं धौतं यस्य स चासौ कलधौतपोतो रजतनौका काल एव पोतवाणिजस्तस्येति अनेन स एव तन्मध्यवर्त्ती कालवर्णः कलङ्कस्योपमा ॥२२॥

कलङ्कित्वेपि सौन्दर्य्यं माङ्गल्यं चाह सपल्लव इति ॥२३॥

कलङ्क एव न भवति किन्तु मध्ये छिद्रमेव तथात्वेनालक्ष्यत इत्याह हीरकेति ॥२४॥

सच्छिद्रत्वमपि दुष्कीर्त्तिरिति तां वारयितुमाह अण्डमिवेति अन्तर्वर्त्तिनोऽजातपक्षस्य शावकपिण्डस्य प्रतिबिम्ब एव कलङ्कतयोच्यत इत्यर्थः ॥२५॥

मृणालोपधानेति तापहारित्वं कामिलोकालम्बनत्वं च उक्तम् ॥२६॥

मालतीति साध्वीजनस्याप्यादरणीयत्वम् । गर्भकः केशमध्यस्थमाल्यम् ॥ २७ ॥

पाञ्चजन्येति भगवद्भक्तजनस्यापि रसोद्दीपनत्वं विष्णुपदस्य आकाशस्य उरीकृतं विष्णोः पदं चिन्हमपि येन तस्य ॥ २८ ॥

रजतेति कामिलोकमात्रशासितृत्वं मुग्धदृशिशिरशीकरवर्षित्वं च ॥ २९ ॥

स्फटिकेति सर्वजननेत्रोद्वेगहारित्वं मानिनीजनमानकालुष्यनाशकत्वं स्वच्छत्वं च ॥ ३० ॥

विकीर्ण ताराकाराणां अतुलमौक्तिकानां पटलं येनेति शरत्कालसमुद्भासितत्वं क्षीरनीरनिधेरिति तत्कान्त्या गगनस्य श्वेतीभूतत्वात् ॥ ३१ ॥

दर्पण इव शोभादेव्याः ॥ ३२ ॥
चन्द्रनातिलकमिव रजनिरमण्याः ॥ ३३ ॥
कर्पूरपूर इव लोकलोचनानाम् ॥ ३४ ॥
एकं पुण्डरीकमिवानन्दसरोवरस्य ॥ ३५ ॥
हिण्डीरपिण्ड इव मधुरिमजलराशेः ॥ ३६ ॥
सौध इवसौन्दर्य्यदेवतायाः ॥ ३७ ॥
सैकतवलय इव आकाशगङ्गायाः ॥३८॥

मदमुदितकोकिलसमूह इव सकलकलः पुण्यराज इव सुचारुमण्डलश्रीः दाशरथिरिव सारस इव सलक्ष्मणः ॥३९॥

भगवद्भक्त इव कुमुदामोदकः संतापहारकश्च उपदेष्टेव सदोषधीशः मदन इव रतिवर्द्धनः विवेकीव अवनीतमोऽपहः सुग्रीव इव-ताराधीशः समुद्र इव सदाहिमकरः करनिकरेण वृन्दावनं मार्जयामास ॥४०॥

एव मुदित एव नभोमध्यमध्यवस्थाय स्थितश्च तरुतरुणगणानां चपलपलाशान्तरन्तरर्पितकिरणलवलवनिपातसहचरपलाशच्छायाच्छायामशावल्येन वल्येन मतितरुतलवनशोभाचालनीकारश्चालनीकारणचतुर इव क्षणं तदा वनशोभासुभगंभावुकभावुक आसीत् ॥४१॥

दर्पण इति द्वीपसमुद्रादि सर्वशोभाव्यञ्जकत्वम् ॥ ३२ ॥
चन्द्रनेति रात्रिशोभादायित्वम् ॥ ३३ ॥कर्पूर इति नयनसुखदत्वम् ॥ ३४ ॥
पुण्डरीकेति आनन्दान्तरस्यापि साफल्याधायकत्वम् ॥ ३५ ॥
हिण्डीर इति माधुर्य्यम् ॥ ३६ ॥ सौध इति सौन्दर्य्यम् ॥ ३७ ॥
सैकतवलय इति पावित्र्यम् ॥ ३८ ॥

एवमाकारसाम्येन षड्विंशतिधा उपमाय शब्दसाम्येनापि दशधा उपमीयते । सकलकलः कलकलयुक्तः पक्षे सकलाः समस्ताः कला यत्र सः । सुचारुर्मण्डलानां देशविशेषाणां श्रीः संपत्तिर्यतः सः पक्षे सुचारुणा मण्डलेन श्री शोभा यस्य सः । लक्ष्मणो रामभ्राता लक्ष्मणा सारसस्य स्त्री लक्षणं कलङ्कचिन्हं च ॥ ३९ ॥

कोः पृथिव्या एव मुदं आमोदयति विस्तारयतीति सः पक्षे स्पष्टम् । सदोषां धियं बुद्धिं द्यति नाशयतीति सः पक्षे सदैव औषधीशः शकन्ध्वादिः सतीनामोषधीनामीशो वा । रतिं स्वकान्तां सौभाग्येन वर्द्धयतीति सः पक्षे स्पष्टम् । अवन्यास्तमोऽज्ञानं अन्धकारं च अपहन्तीति सः । सदैव अहयो मकराश्च यत्र सः पक्षे हिमकिरणः ॥ ४० ॥

तादृशपलाशच्छायानां अच्छो निर्मलः आयामो विस्तारस्तस्य शावल्येन श्वेतिमश्यामलिममिश्रणेन प्रतितरुतलं वल्येन वलनीयेन सुवलनेनेत्यर्थः । वनशोभायाश्चालनीकार इव कीदृशः चालन्याः कारणं कालनं घालनमिति यावत् तत्र चतुरो निपुणः वनशोभायाः सुभगमनुकूलं सुभगंभावुकं कुर्वन् तादृशं भावुकं मङ्गलं यस्मात्सः यद्वा वनशोभायाः सुभगंभावुका या भा तदानीन्तनी कान्तिः तस्या भावुको जनकः ॥४१॥

ततश्च निविडोडुगणमुक्ताफलफलदम्बरवितानमध्यलम्बी वलद्विकिरणकिरणकेशरराजिरुचामरोरुचामरोत्तमः सित इव ॥ ४२ ॥

किंवा भावलिभावलितनभोमुक्तातपत्रस्य विगतदण्डस्य निस्यूतो धवलपट्टसूत्रपुण्डरीकविम्ब इव विरराज ॥ ४३ ॥

तमथ मथनो वकस्य कस्यचन शोभाविशेषस्य जनकं न कं रञ्जयन्त जयन्तं सर्वतोभावेन भावेन दिगवलावलाकर्षणकरैः करैर्धवलयन्तं वलयन्तं च मुदा भुवो वलयं निम्नोन्नततारहित्येन ताराहित्येन न सौहित्येन हित्येन प्रीणयन्तं समालोक्य मालोक्यचरितो निखिलरमणीसुहृदयं हृदयंगमां मुरलीं वादयामास ॥४४॥

सर्वाकर्षी यदपि युगपन्निस्वनः कृष्णवेणोः कृष्णेच्छातस्तदपि समये श्रूयते कैश्चिदेव । आव्हाने वा खगमृगगवां मोहने वाङ्गनानां यस्मिन् यर्हि प्रसरति मनस्तत्तदासौ शृणोति ॥ ४५ ॥

एकेनैव स्वरपरिमलेनैकदैवाङ्गनानां मामेवाकारयति मुरलीत्येव यत्र प्रतीतिः तज्जातीयेतरपरिचयाभावतन्मात्रगम्यां रम्यारावां मधुरमथ तां वादयामास कृष्णः ॥ ४६ ॥

अथ तेन वीचीतरङ्गरङ्गतामपहायाभाकृततया स्वशक्त्या व्यापकेन भव्यापकेन भद्रमेव तासाम्॥ ४७॥

---

इत्यधस्तनीं शोभां वर्णयित्वा उपरितनीमपि वर्णयति निविडोडुगणान्येव मुक्ताफलानि फलति यदम्बरं तदेव वितानं चन्द्रातपस्तन्मध्यलम्बी वलद्विकिरणं क्षेपः येषां ते किरणा एव केशरराजयस्तासां रुचा चमराणामुरुचामरोत्तमः सितः । अत्र इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेनेत्यस्य प्रायिकत्वात् विकिरणमित्यत्र न गुणः ॥४२॥

चतुर्दिक्ष्ववनतं उपरि तून्नतं गगनमालक्ष्य नेदं वितानं तथात्वे समन्तात्साम्यापत्तेरिति विमृश्यान्यथोत्प्रेक्षते भावलिर्नक्षत्रश्रेणिस्तस्या भा कान्तिस्तया वलितं नभ एव मुक्तातपत्रं तस्य ४३

तं तुहिनकिरणं भुवोवलय भूमण्डलं मुदा वलयन्तं प्रवर्लीकुर्वन्तं सौहित्येन प्रीणयन्तं सौहित्यं तर्पणं तृप्तिरित्यमरः । कीदृशेन निम्नोन्नततायाः राहित्यं यत्र तेन एकरूपेणेत्यर्थः आहितं अर्पितं तस्य भाव आहित्यं ताराभिर्नक्षत्रैराहित्यं अर्पितत्वं यत्र तेन हित्येन हितमर्हता मा शोभा या आलोक्यं दर्शनार्हं चरितं यस्य सः यद्वा मा इति निषेधे अलौकिकचरित्र इत्यर्थः ॥ ४४ ॥

खगमृगगवां वा आह्वाने कर्मणि कर्त्तव्ये अङ्गनानां वा मोहने कर्त्तव्ये यस्मिन् उभेऽस्य मनः प्रसरति तत् आह्वानं मोहनं वा तदा असौ शृणोति नान्य इति पितृमातृश्वशुरननान्द्रादयो न शुश्रुवुरित्यर्थः ॥ ४५ ॥

तज्जातीया इतरे ये शब्दादयो विषयास्तेषां परिचयाभावेन तन्मात्रमेव गम्यमनुभवनीयं यस्यां तां यस्याः श्रवणे विषयान्तरस्फूर्तिर्न भवतीत्यर्थः ॥ ४६ ॥

तेन वाद्येन उन्मूलितविवेकादिभिः संबन्धः । वीचीतरङ्गरङ्गता वीचीतरङ्गन्यायेन पारम्पाहिकत्वं विहाय व्यापकेन सता प्रदेशविशेषावधित्वं परित्यज्य समन्तात् स्फुरता इत्यर्थः ॥४७॥

उन्मूलितमिव हृदयं बुद्धिः पीतेव पादितेव धृतिः। आलोपितेव दृष्टिः श्रवणपथप्राप्तिमात्रेण ॥ ४८ ॥

किंच। अतनि तनूनां कम्पनमराचि मतीनामथोन्मादः। अवितः केवलमासां स्वमार्गसंचारसंस्कारः ॥ ४९ ॥

किंच। सहरिमुरलिकाया निस्वनोऽभूद्वधूनां श्रवणसविधचारी मन्मथोन्माथकारी। अविकलकुलशीलाचारचर्याभिचारो धृतिविघटनतन्त्रः कोऽपिमन्त्रः स्वतन्त्रः ॥ ५० ॥

किंच। अतिमृदु मधुरं श्लक्ष्णसूक्ष्मं च तद्वै निनदनपरिपाटीपाटवं श्रीमुरल्याः समजनि कुलपालीपद्मिनीनां विलोलीकरणकुशललीलोन्मत्तमातङ्गशीलम् ॥ ५१ ॥

तत्र सर्वतः साराधिकाया राधिकाया अपि तन्मुरलीरुतमपूर्ववदासीदासीदेव कर्णाभ्यर्णम् ॥ ५२ ॥

यतः धैर्य्यध्वंसविघूर्णनप्लवनव्रीडान्तधीविभ्रमैर्माध्वीकाचमनोत्सवायितमभूच्छ्रोत्रेण पीतं यदि। एकं त्वत्र विशिष्यते भवति यत्तस्मिन् दृशोः शोणिमा सोऽयं किंतु दृगम्बुनैव पतता निर्धौत एवाभवत् ॥ ५३ ॥

उन्मूलितमिवेति श्रीकृष्णपार्श्वे शीघ्रं समर्पयितुमिवेति भावः तेन तासां हृदयस्यातिमृदुलत्वविमलत्वादिभिः कमलायितत्वं मुरलीवाद्यस्य तु मत्तमातङ्गशुण्डायितत्वं प्रथममुक्तं ननु परामर्शवती बुद्धिरेव तत्र प्रतिबन्धिकास्तीति तत्राह बुद्धिः पीतेति बुद्धेरपारत्वगाम्भीरत्वस्वच्छत्वस्निग्धत्वादिभिः समुद्रायितत्वं तद्वाद्यस्य तु अगस्त्यायितत्वं ननु तथापि कुलवतीनां धृतिर्दुर्वारेति तत्राह पाटितेति धृतेः कठोरकाष्ठायितत्वं वाद्यस्य क्रकचत्वं ननु तदपि लज्जावतीनां द्वाराजिरस्थ्यादिषु गुरुजनदर्शनमेव तन्निवर्त्तकं स्यादिति तत्राह आलोपितेति दृष्टेःखञ्जनायितत्वं वाद्यस्य श्येनायितत्वं अत्रावेगनामा संचारी ॥ ४८ ॥

मतीनां भद्राभद्रविचारोत्थनिश्चयरूपाणां बुद्धिवृत्तिविशेषाणाम् ॥ ४९ ॥

मन्मथेन कामद्वारा उन्मथनं उत्पाटनं कर्त्तुं शीलमस्य सः। यद्वा सुन्दरीजनमनोमीनग्रहणार्थं मन्मथ एव उन्माथः कूटयन्त्रं तत्किरतीति सः। उन्माथः कूटयन्त्रं स्यादित्यमरः। धृतिविघटनमेव तन्त्रं आगमशास्त्रं यस्य सः। स्वतन्त्र इति न्यासपुरश्चरणादिनिरपेक्ष इत्यर्थः ॥ ५०

अतिमृद्वित्यादिगुणवत्वेऽपि उन्मत्तमातङ्गानामिव शीलं यस्य इत्यनेन कठोरत्वोग्रत्वप्राचुर्य्यस्यौत्स्वरूपाः तद्विरोधिनो धर्माः सिद्धा इति विरोधालङ्कारः ॥ ५१ ॥

आ ईषदपि सीददेव प्राप्नुवदेव ॥ ५२ ॥

व्रीडान्तो लज्जानाशः। अत्र एकं विशिष्यते किं तत् तस्मिन्माध्वीकाचमने दृशोः शोणिमा भवति अत्र स नास्तीति भावः। अथ क्षणं विमृश्य नास्ति कोऽपि विशेष इत्यभिप्रायेणाह सोऽयमिति ॥ ५३ ॥

किंच। किं हर्षस्यैव हर्षो रह इव रहसः किं महो वा महस्य श्रीकृष्णाग्रप्रयाणोत्सवरभसविधेः किं त्वरेव त्वरायाः। प्रत्येकं स्वस्वनामश्रुतिसरसहृदां तत्रकन्यागणानां वंशीध्वानः स आसीदभिलषितपथस्यातिदूरोऽप्यदूरः॥ ५४ ॥

एवमेकसूत्रगुम्फनकृतप्रपञ्चाः पञ्चालिकाचिततय इव समसमयसमानकृतयो मानकृतयोगरहिताः। परस्परापराहतवासना अपि परस्परापराज्ञातगमनोद्यमा नोद्यमानोद्यमानोद्यमाधारयितुं क्षमास्ताः कृष्णग्रहग्रस्ता इव ॥ ५५ ॥

द्योतो द्योतोज्ज्वला निर्जलधरा धरामागत्य गत्यनवस्थे नवस्थेमनि प्रेमणि विशृङ्खलाश्चपला इव ॥ ५६ ॥

बलवतावतानुरागसमीरणेरणेन विभज्य चालिताः कनकलता इव ॥५७॥

---

एवं परोढानां प्रायो मध्याप्रगल्भानां मोहनमुक्त्वा कन्यानां तु मौग्ध्यादौत्सुक्यावेगगर्वादिसंचारिभिः सुखालोड्यानां मोहनमपि सुकरमेवेत्याह किं हर्षस्येति साक्षान्मन्मथमन्मथ इति वत् प्रथमं वंशीध्वानो हर्षस्यैव हर्षः हर्षद आसीदिति हर्षमेव स प्रफुल्लीचकार हर्षस्तु ताः प्रफुल्लयामासेवेति। शङ्कामलवहित्थादिविरोधिसंचारिभिरपि दुर्वारो हर्षो जात इत्यर्थः ततस्तथैव रहसो रहस्यस्यापि रहस्यं सुरतौत्सुक्यं दुर्वारमभूदित्यर्थः। ततश्च महस्य मह इवेति तदेव संपद्यमान इव दुरपह्नवः सुरतोत्सवोऽन्वभूयत इत्यर्थः। तदैवाकस्माद्बहिरनुसन्धानोत्थेतददर्शनेसति तदर्थमेव श्रीकृष्णस्याग्रे यः प्रयाणोत्सवरभसविधिस्तस्माद्धेतोस्त्वरा इव एवंच अभिलषितो यः पन्थाः कदा मधुरं मुरलीस्वानं श्रोष्याम इति यो मनोरथस्तस्यातिदूरोऽपि यादृशोभिलापोऽपि प्रवेष्टुं न शक्नोतीत्यर्थः सोऽप्यदूरो निकटः प्राप्त एवाभूदित्यर्थः ॥ ५४ ॥

एवं ता व्रजसुन्दर्यः कृष्णग्रहग्रस्ता इव व्रजपुरतो व्रजपुरात् पुरतः पुरतोऽग्रतो ऽग्रतोनिष्क्रान्ता इत्यन्वयः।एकेनैव सूत्रेण गुम्फनकृतो ग्रन्थनकल्पितः प्रपंचो विस्तारो यासां तादृश्यः पञ्चालिकाचिततय इवेति गतिमत्त्वेऽपि जाड्यंव्यञ्जितम्। समे तुल्ये समय एव समानास्तुल्या एव कृतिर्व्यापारो यासां ताः। किं परपरदृष्ट्या नहि नहीत्याह ज्ञानकृतोः योग संगमस्तद्रहिताः अबुद्धिपूर्वकतयैवेत्यर्थः। अत एव परस्परं न पराज्ञातो गमनोद्यमोऽपि याभिस्ताः। ननु तासां स्वप्रतिपक्षगतेष्टानिष्टबाधकसाधकस्वभावानामज्ञानमेव भद्रं मैवं तदानीं परमानन्दसंमर्देन तासां तादृशभावाच्छादनादित्याह परस्परं न पराहता वासना याभिस्तादृशा अपियतः कृष्णग्रहेण ग्रस्ता अतस्तेन नोद्यं शीघ्रमागच्छतेति मुरल्याप्रेर्यमेव आसम्यग्धारयितु क्षमा ॥ ५५

कुलाङ्गनानां पतिश्वश्र्वादितर्जनकलिलान्तराणां तथाभावे को हेतुरिति चेत् प्रेमैवेति सिद्धान्तयन् सौन्दर्यमपि वर्णयति द्योत इति द्योवो गगनात् सकाशाद् धरामागत्य चपला विद्युत इव द्योतेन प्रकाशेनोज्ज्वलाः प्रकाशो द्योत आतप इत्यमरः। गत्या अनवस्थे अवस्थितिर्मर्यादा तद्रहिते दुष्पारे इत्यर्थः। नवः स्थेमा स्थैर्य्यं यस्य तस्मिन् प्रेमणि विशृङ्खलाः शृङ्खलारहिताः संपूर्णप्रवेशवत्य इत्यर्थः ॥ ५६ ॥

बहुधा अनुभूतचराङ्गसङ्गेऽपि श्रीकृष्णे तदैव कथमियांश्चित्तावेश इति चेत्तत्र नवनवोल्लासकस्वलक्षणोनुराग एवकारणमिति वदन् वर्णितमपि सौन्दर्य्यं विभक्तावयवतया बोधयति बलवतेति अनुराग एव समीरणः पवनस्तस्य ईरणेन प्रेरणेनक्षेपणेनेति यावत् ॥ ५७ ॥

उत्साहसोत्साहसोसूच्यमानेन संभ्रमभ्रमदनेकपेनोन्मथिताः स्थलकमलिन्य इव ५८

उत्कण्ठादेवता वतारिता इव व्रजपुरतः पुरतः पुरतो निष्क्रान्ताः ॥५९॥

कनकप्रभा इव मरुदाधूनिता नितान्तमहसो महसोपूयमाणोज्वलयाः संचारिण्यो दीपकलिका इव ॥ ६० ॥

अनुरागरागवेपमानापमानाशङ्कास्त्वरया रयालोलकुण्डलाकुण्डलावण्याः युगपदेकपदे कमनीये कृताभियोगास्तस्मिन्नेव मुरलीध्वन्यध्वन्यनुसस्रुः ॥६१॥

तत्र च तासामनेकप्रकारतया प्रसिद्धौ सिद्धोपधिवत् काश्चिदनूढा नूढाश्चाः पित्रोर्मुदं सदोह्यन्त्यो दोहयन्त्यो गास्तद्दोहनं विहाय विहायसेव ययुः ॥ ६२ ॥

काश्चित्तथैव ता वतालमधिश्रयणीमधि श्रयणीयं संपावकमारोपितमनवतार्य्य नवतार्य्यतमेनौत्कण्ठ्येन निर्ययुः ॥ ६३ ॥

काश्चिदपराः कौतुकोपरि परिवेपयन्त्यो गवेषयन्त्यो गमनपथमेव परिवेषणमपहाय हा यत्नेनैव निर्जग्मुः ॥ ६४ ॥

---

तासां तदानीमावेगाख्यः संचार्य्येव तत्सूचकः प्राभवदिति ब्रुवन् सौरभ्यसौकुमार्य्ये अपि ज्ञापयति। संभ्रमेति संभ्रम आवेगः स एव भ्रमन्मदेनानवतिष्ठन् अनेकपो हस्ती तेन कथंभूतेन उन्नतं साहसं यस्मात् तादृशो य उत्साहस्तेन सोसूच्यमानेन अतिशयेन व्यज्यमानेन ॥५८॥

अनुरागव्यञ्जकौत्सुक्यमपि दुर्वारमभूदित्याह उत्कण्ठा एव देवता वतारिता धृतावताराः तारकादित्वादितच् । वष्टिभागुरीत्यकारलोपः । उत्कण्ठा मूर्त्ता इवेत्यर्थः ॥ ५९ ॥

ततश्च पुरान्निष्क्रान्तास्ता वर्त्मनि कान्तिसंकुलतया लब्धैकीभावा उत्प्रेक्षते कनकप्रभा इति वर्णस्य पीतिमा दीपकलिका इति वस्त्वन्तरप्रकाशकत्वमप्युक्तम् ॥ ६० ॥

अनुरागस्य रागस्तैक्ष्ण्यं तस्माद्वेपमाने कम्पमाने इव अपमानाशङ्के निन्दाभये यासां ताः रयेण वेगेन आलोलाभ्यां कुण्डलाभ्यां अकुण्ठानि अविकृतानि लावण्यानि यासां ताः। कुडि वैकल्ये । युगपदेव एकस्मिन् पदे श्रीकृष्णकृतोऽभियोगोभिसन्धिर्याभिस्ताः ॥ ६१ ॥

एवं सामान्यतोऽभिसारशोभामुपमाय पुनर्विशेषतोऽपि तासां त्रिविधभेदानां क्रमेण विविधक्रियाकलापपरिहारेणाभिसारमाह तत्रेत्यादि । अनूढाः कन्याः सिद्धोपाधिपक्षे न विद्यते ऊढं प्रापणं यासां ताः । वह प्रापणे। अयुक्तान्तम् नु निश्चितमेव पित्रोर्मुदाज्ञा गृहीतनिदेशा अत एव पित्रोर्मुदं सदा ऊहयन्त्यः केन कर्मणा पित्रोः सुखं स्यादिति नित्य वितर्कयन्त्यः अत एव तदानीमपि गादोहयन्त्यः तद्दोहनं ण्यन्तात् ल्युट् भाण्डप्रदानदुग्धग्रहणवत्सविमोचनादिकं कर्म त्यक्त्वेत्यर्थः । विहायसेव आकाशमार्गेणेव ॥ ६२ ॥

ताः प्रसिद्धाः । वतेति विस्मये । अलमतिशयेन । अधिश्रयणीं चुल्लीमधि आरोपितम् । कीदृशं श्रयणीयं दर्वीचालनादिना श्रयितुं योग्यम् । नवतार्य्यतमेन नहि अवतारयितुं शक्यतमेन अवेत्यस्याकारलोपः ॥ ६३ ॥

परिवेशयन्त्य एव कौतुकोपरि वेणुश्रवणकौतुकानन्तरं गमनपथं गवेशयन्त्य अन्वेशयन्त्य इति तत्राश्रतां गरुजनानां मण्डलीतः तत्पथस्यदौर्लभ्यात् अत एव हा इति पीडायाम् ॥ ६४

काश्चन ता इतरापत्यानि कौतुकेन केनचित् गव्यं पयः पाययन्त्यो द्रुतमेव तान्यपत्यान्यपहाय भूमौ दुद्रुवुः ॥ ६५ ॥

काश्चन पूर्वमुनिरूपा रूपान्तरमासाद्य निराकुलगोकुलगोचरा गोपवधूतां धूर्तां-हस्त्वेन प्राप्य पतिमत्यो मत्योढकृष्णानुरागाःपतीन् शुश्रूषमाणास्तदपि पतिशुश्रू-षणमपहाय हायनाधिकमेव तं क्षणं मन्यमाना निश्चक्रमुः ॥ ६६ ॥

काश्चन ता अभ्यवहरन्त्यो हरन्त्यो हृदयमन्योन्यमन्योन्य परिहासेन झटिति तमभ्यवहारं हारमेव निरगुः ॥ ६७ ॥

अथ यथाश्रुति श्रुतिरूपा अपि सखीभिरनुलिप्यमानैकस्तनाः स्तनान्तरानुले-पपक्षापक्षालनेनैव द्रुततरं बहिरीयुः ॥ ६८ ॥

काश्चन ता एवाङ्गसंस्कारकारणमुद्घाटितकञ्चुलिकयालिकया मृज्यमानतन-वो नवोत्तमवयसस्तथैव तदसंस्कारं कारंकारमेव निर्याताः ॥६९॥

नित्यसिद्धाः सिद्धानुरागास्तु वस्त्राभरणविपर्य्यासपर्य्यासक्तिसुशोभव्यग्रा भ-व्यग्रामरूपाः सुरूपाः सुतरामेवासन् ॥ ७० ॥

तथाहि । हारं श्रोणितटे मणीन्द्ररसना वक्षोजयोर्नूपुरे दोष्णारङ्गदमङ्घ्रिपद्मयुग ले केशेषु नीवेर्मणिम् । नीवौ केशमणिं दधुर्मृगदृशो मन्ये प्रमोदोदयादङ्गान्येव परस्परं विदधिरे हर्षप्रसादोत्सवम् ॥७१॥

---

त्यानि तानि भूमौ अपहायेति पल्यङ्कादौ स्थापने विलम्बोऽपि सोढुमशक्य इति भावः ६५

रूपान्तर स्त्रीस्वरूपं धूर्तांहस्त्वेन खण्डितभक्त्यन्तरायत्वेन गोपवधूतां गोपनागीत्व प्राप्य मत्या-बुद्ध्याऊढः कृष्णानुरागो याभिस्ताः पतिशुश्रूषणं कोष्णोदक प्रदानादिकम् ॥ ६६ ॥

हार हारं त्यक्त्वा त्यक्त्वा ॥ ६२॥

श्रुतिरूपाः श्रुतिचर्य्याः यथाश्रुति श्रुतिमनतिक्रम्य वहिरीयुः यदवस्थतया वंशीं शुश्रुवुः तदवस्थतयैव वहिर्ययुरित्यर्थः । स्तनान्तरस्य अनुलेपपक्षे अपक्षालनेनैव प्रथम यत् क्षालनं तेन विनैवेत्यर्थः चित्रनिर्माणपक्षे विलम्बहेतोस्तासामसंमत्या अनुलेपपक्षे संमत्याऽपि न तस्य संपूर्णत्वमित्यर्थः ॥ ६८ ॥

अङ्गसंस्कारकारणम् अङ्गोद्वर्त्तनादिनिमित्तम् । आलिकया सख्या तत् अङ्गं असंस्कारं स्ना-नादिसंस्काररहितं कारं कारं कृत्वा कृत्वा विक्षिप्येति वा ॥६९॥

एव साधनसिद्धानामुक्तलक्षणानामुत्तरोत्तरमुख्यानां तादृशप्रेम्णैव लौकिकवैदिकदैहिककृत्य-स्योपरमो नित्यसिद्धानां तुतत्र कैमुत्यमेवोपपादयति इति तमप्रोच्य तासामनुरागोत्थमावेगाद्व्य-संचारिणं विभ्रमालङ्कारलिङ्गेनाह नित्यसिद्धा इति वस्त्राभरणाना विपर्य्यासस्य या पर्य्यासक्ति स्तयैव शोभना शोभा यासां ताश्च ता व्यग्राश्चेति तथा ताः भवस्य मङ्गलस्य ग्रामरूपाः ७०

हर्षप्रसादोत्सवं विदधिरे इति स्वेषां प्रेष्ठाङ्गसङ्गसम्बन्धेन भाविनीं सुखसमृद्धिमुरलीमुखादिव श्रुत्वेति भावः ॥७१॥

अक्ष्णोरेकमनञ्जितं चरणयोरेकोऽभवल्लाक्षया रक्तः कुङ्कुमकर्दमेन कुचयोर्नैकः समालेपितः । स्वाभिःकान्तिभिरेव हन्तु सुदृशामेतानि गाढं वभुर्लाभोऽयं तु विशेष एव यदियं रागोदयव्यञ्जना ॥७२॥

कासांचन । उत्तरीयमपि चान्तरीयतामन्तरीयमपि चोत्तरीयताम् । यज्जगाम किमभूत् परस्परं पूजनं तदिव नूनमङ्गयोः ॥ ७३ ॥

किंच । श्रोणीभरस्खलितकाञ्चनकाञ्चिदाममञ्जीरहीरशिखरानुषजद्गुणाग्रम् । कर्षन्त्य एव कतमा विवभुर्व्रजन्त्यो मातङ्गिका इव विशृङ्खलशृङ्खलाग्राः ॥७४॥

किंच । प्रस्थानवेगशिथिलां करकुड्मलेन धृत्वैव नीविमपरा चपलं चलन्ती। तत्कालनाभिविवरोदयदब्जकोषां नारायणस्य वपुषः सुषमां विजिग्ये ॥७५॥

कृत्वैकपादकमलेऽनुचरीकृताद्रैलाक्षारसैः सरणिमेकत एव शोणाम् । यान्त्या कयाचन हरार्द्धशरीररूपा शैलाधिराजतनया नितरां विजिग्ये ॥७६॥

काचिद्व्रजराजत वधूरनुकूलवातधूतोत्तरीयसिचयाञ्चलमाचरन्ती । संचारिणी स्वयमनङ्गरहः पताकालक्ष्मीरिवोत्तमशरीरपरिग्रहेण ॥ ७७ ॥

किंच । कस्याश्चन एकाङ्घ्रिपङ्कजतले विनिवेशितस्य विच्छिन्न एव निनदोऽजनि नूपुरस्य । मूकेन साकमतिवादिनि वावदूके वादः परं भवति हि प्रतिवादहीनः ७८

किंच । वामे दोष्णि दधेऽङ्गदं कतमया नान्यत्र यत्संभ्रमात्सौभाग्यातिशयप्रकाशनकृते तद्वै जयश्रीरभूत । तेनाङ्गान्यखिलानि संशुशुभिरे तस्या न दिव्यौषधेः शाखाद्योतनतः समस्तवपुषः किं जायते द्योतनम् ॥७९॥

---

एतानि अङ्गानि रागोदयव्यञ्जनेति कृष्णेन स्वयमेवानुभविष्यमाणत्वात् ॥७२॥

पूजनं सख्यमयसम्माननम् ॥ ७३ ॥

मञ्जीरस्य हीरशेखरे अनुषजत् वेष्टनेन परिष्वजत् गुणाग्रं डोराग्रभागो यस्य तथाभूतं काञ्चीदामकर्षन्त्यः एव विवभुः क्षणमात्रस्थित्याप्युद्ग्रन्थने विलम्बशङ्कनासक्तेर्मातङ्गिकाअनुकम्पितहस्तिन्यः। विशृङ्खलं विगतबन्धं शृङ्खलाग्रम् । अन्दुकाग्रभागो यासां ताः ॥ ७४ ॥

तस्मिन् काले नाभिविवरादुदयन् अब्जकोषो यस्यां तां सुषमां शोभां स्वनाभेरुपरि धृतनीविडोरकस्य स्वकरकमलस्य शोभया विजिग्ये जितवतीत्यर्थः ॥ ७५ ॥

एकस्मिन् पादकमले वामे अनुचर्या कृता ये आर्द्रलाक्षारसास्तैः सरणिं एकतः एकपार्श्वे एव शोणां कृत्वा यान्त्या हरार्द्धेति हरस्यापि वामशरीरार्द्धे पार्वती अत एव वामे पाद एव लाक्षारसः ननु दक्षिणे ॥ ७६ ॥    अनुकूलेति क्रियाविशेषणम् ॥ ७७ ॥

विच्छिन्न एवेति द्वितीयनूपुरसङ्गात एव उत्तरप्रत्युत्तरवद्ध्वन्यविच्छेदो भवतीत्यर्थ ।७८।

दोष्णि भुजे तद्धारणमेव जयश्रीरुत्कर्षसंपत्तिर्दृश्यते च लोके सौर्य्यश्रीर्म्यायिहंकारवतामेकरत्नवलयादिमत्वं यथा वलदेवस्यैककुण्डलित्वं न च शोभाहानिरित्याह तेनेति दिव्यौषधेः शाखामात्रस्य द्योतनतः किं समस्तवपुषो द्योतनं न जायते अपितु जायत एवेत्यर्थः ॥७९॥

किंच। कर्णाभ्यां यदपि श्रुतः स मुरलीक्वाणः कलानां निधेर्वामे काञ्चन-कुण्डलेन तदपि मानचे कर्णे परा। दोषोऽस्या न स एष किंतु मुरलीक्वाणस्य तस्यैव यचितस्य भ्रमणं चकार सुतनोर्गन्तुं च तेने त्वराम् ॥८०॥

एवं विहाय निजनिजभवनं वनं जिगमिषूणामिषूणामनङ्गीनां पराक्रमेण क्रमेण वर्द्धमानमानसविकाराणां काराणां चिरसङ्गाद्विमुक्तानामिव पथि पथि मिलितानामितरेतरं तरङ्गितोत्कण्ठया कण्ठयातजीवनानामिव तदानीममूदृशाममूदृशामतिचपलताचकितते तते तासामेव निजनाथसङ्गममहामहारम्भे दरदलदिन्दीवरवरदलमयीं कुसुमवृष्टिमिव तेनाते ॥ ८१ ॥

तेनातेने च मङ्गलमङ्गलक्ष्मीणामिव निराबाधम् ॥ ८२ ॥

एवमितरेतरेहितविभागच्छे गच्छन्तीषु तासु पतिभिर्मुनिपूर्वाः पूर्वाह्नेऽन्यरोधिषत ॥ ८३ ॥

पितृभिः कुलकन्याः कुलकन्यायेन भ्रातृबन्धुभिरन्धुभिरतिमोहानामिव श्रुतिपूर्वा अपिन्यवार्य्यन्त ॥ ८४ ॥

पर्य्यन्तपथमनुरागस्य वहन्त्यो हन्त न काश्चिदपि निवर्त्तयितुं शेकिरे चकाशिरे च कामं ता एव गोविन्दानुरागेण ॥ ८५ ॥

नित्यसिद्धास्तु तास्तुता एव सर्वतोभावेन भावेन जनेन मोहिता नमो हि

कर्णाभ्यां द्वाभ्यामेव श्रुतः न केवलमेकेन वामेनेति पारितोषिकलाभो द्वयोरेवोचित इति भावः समादधाति स एष दोषो न अस्याः किंतु मुरलीक्वाणस्य तस्यैवेति अस्याश्चित्तं भ्रामयताः तेन यस्मै यस्मै यद्यावित अनयापि तस्मै तद्दत्तामिति भावः ॥८०॥

अमूदृशा पथि पथि इतरेतरं मिलितानां गोपीनां दृशां दृष्टीनां चपलताचकितते अमूकर्त्र्यौ कुसुमवृष्टिमिव तेनाते विस्तृतवत्यौ। कस्मिन् कर्मणि तासामेव निजनाथसङ्गम एव महामहोः महोत्सवस्तस्यारम्भे तते विस्तृते इषूणामित्यस्य विशेषणं अनङ्गीनामिति अनङ्गसंबन्धिनीनामित्यर्थः इषुर्द्वयो रित्यमरः ॥ ८१ ॥

ततश्च तेन कुसुमवृष्टिविस्तारेण अङ्गलक्ष्मीणां निराबाधं मङ्गलमेव आतेने व्यस्तारि ८२

अथासां स्वजननिरोधविनिर्मोक्षौ व्यवस्थया यथायोग्यमाह एवमित्यादिना इतरेतरं ईहिता ईप्सिता विभागस्य विच्छेदस्य छा छेदो नाशो यत्र तद्यथा स्यात्तथा गच्छन्तीषु। छो छेदने तासु मध्ये मुनिपूर्वाः पूर्वाह्ने पूर्व्या बाह्ये प्रदेशे ॥ ८३ ॥

कुलकन्यायेन सम्बन्धन्यायेन कुलकस्तु पटोले स्यात् सम्बन्धिश्लोकसंहताविति मेदिनी। अन्धुभिः कूपैः पंस्येवान्धुप्रहो कूप इत्यमरः ॥ ८४ ॥

निवर्त्तयितुं न शेकिरे न शक्या अभवन् अतस्ता एव कामं स्वच्छन्दं चकाशिरे। काशृ दीप्तौ। अनुरागस्य परिपाकात् विप्रैरशक्याभिभवा इत्यर्थः ॥ ८५ ॥

नित्यसिद्धास्तु भावेन उज्ज्वलनीलमण्युक्तादिशा अरागादप्युपरिकक्षारूढेन महाभावेन हेतुना मोहिता लब्धमोहा जनेन स्तुता एव ताः केन वा निरोद्धुं शक्यन्त इति भावः। यद्यपि ...

ताभ्यः ८६ अथ मुनिरूपाणां द्वैधभावतोभावतोऽपृथकत्वेऽपि काश्चिदनुरागविजित विकषांविकषायास्तथाविधसुकृतकृतभगवदङ्गसङ्गसंभावनसुभगंभावुकभावुकतया निराबाधमेव विहाय भवनं वनं ययुः ॥ ८७ ॥

कासांचन दुष्पचे पचेलिमदशां गतवति कषाये चरमा चरमा भावदशासौ भाग्यविशेषं विदुषी समासेदुषी समासेन फलोन्मुख्यं ययजनि जनिमन्तरेणैव तदा शरीरान्तरेणैव ताः कृष्णमासेदुः ॥ ८८ ॥

यतो निष्कृपतयोग्रा वत पतयोऽग्रावतरणतो भवननिष्क्रमक्रमतः प्रागेव द्वारमारुध्यस्थितास्तासां गमनरङ्गभङ्गभवत्प्रयत्ना भवन्ति स्म ८९ ॥

धनसिद्धा अपि सर्वा महाभाग्यत्य एव तथापि तासां क्रमेण तत्तत्सङ्गवशादेव तथाभूतत्वं नित्यसिद्धानां तु उत्पत्त्यैवेति स्पष्ट एवोत्कर्ष इति भक्त्युद्रेकेण प्रणमन्नाह नम इति ॥ ८६ ॥

अथ काश्चिन्निर्गमाशक्ता निरुद्धा एव बभूवुरिति तासां स्वरूपं निरोधे कारणं च वक्तुं तत्सजातीया अन्या लब्धाभिसारास्ततो मुख्यतया विभजन् प्रथममाह द्वैधभावतः मुख्या मुख्यतयाद्विविधात्वेनेत्यर्थः भावतो भावेन औपपत्या भावनामयेन अपृथकत्वेऽपि तुल्यत्वेऽपि काश्चिन्मुख्या विकषायाः पूर्वसाधनोद्रेकेण पक्वकषायाः खण्डितप्राकृतत्वापादकविविधान्तराया इत्यर्थः अत एव अनुरागेण विकषा विघ्नाः पक्षे मञ्जिष्ठा च याभिस्ताः "कषा हिंसायां मञ्जिष्ठा विकषा जिङ्गीत्यमरः । तथाविधेन सुकृतेन साधनभक्तियोगसुपरिपाकेण कृता भगवदङ्गसङ्गेन संभावना यस्मात् तादृशं सुभगंभावुकं मङ्गलं यासां तासां भावस्तत्ता तया ।८७।

ततोऽवरासां तु तादृशसाधनोद्रेकस्याभूतचरत्वादखण्डितकषायत्वात् तादृशदेहेन भगवदङ्गसङ्गोदुर्लभ इत्याह कासांचनेति । नच चिन्मयभूमौ माथुरमण्डले अपक्वकषायाणां जन्मैव न भवतीति वाच्यं शुद्धसत्त्वमय्यां देवकीदेव्यामपि षड्गर्भसंज्ञकानां जन्मश्रुतेः प्रपञ्चगोचरायामवतारलीलायां सिद्धसाधकयोः प्रापञ्चिकजीवानामपि प्रवेशोभवतीति सिद्धान्तस्य साधितत्वात् । किंचासां तु नित्यसिद्धाङ्गनागणसङ्गाद्भाग्यविशेष एवाभीष्टनिर्वाहको द्रुतमेवाभूदित्याह कषाये दुष्पचे दुर्जरेऽपि वक्ष्यमाणप्रकारेण निरोधजनितौत्कण्ठ्यध्यानोत्थाभ्यां दुःखसुखाभ्यां पचेलिमदशां गतवति सहसैव स्वयं जीर्णत्वं प्राप्ते सति तद्देहस्यासिद्धत्वात् तासां यदि चरमा दशमी भावस्य दशा अजनि तदापि पुनर्जनिं विनापि ताःकृष्णमासेदुः।सा दशा कथंभूता चरा चपला मा शोभा यस्यां सा यद्वा भाविमङ्गलसूचनार्थामिव तदापि अचला स्थिरैव शोभा यस्यां सा।ननु रासोत्सवारम्भ तस्या अमङ्गलमय्या दशायास्तत्र प्रवेशे का शक्तिरित्यत आह भाग्यविशेषं विदुषी जानती यतः समासेन संक्षेपेणैव मुख्यं फलोन्मुख्यं श्रीकृष्णाङ्गसङ्गरूपे फले उन्मुखत्व आसेदुषी प्राप्तवतीः यद्वा सौभाग्यविशेष विदुषी ज्ञापयन्ती ज्ञापयितु अन्तर्भावितण्यर्थत्वात् एताः स्वदेहमपि विहाय मां प्राप्ता इति भगवता सौभाग्यविशेषस्य दास्यमानत्वात् अन्यत्सगमनम् ॥ ८८ ॥

उक्तमेवार्थमुक्तपौपन्यायेन प्रपञ्चयति यत् इति । निष्कृपत्वेन उग्राः पतयः तासां भवनान्निष्क्रमे यः क्रमस्तेन अग्रावतरणतः अग्रस्थसोपानावल्यवरोहणतः प्रागेव गमनरङ्गस्य भङ्गे भवन् उत्पद्यमानः प्रयत्नो येषां ते ॥ ८९ ॥

ताश्च तदा तदारोधनं वीक्ष्य कृष्णमभिसर्तुमक्षमाः क्षमासारास्तस्मिन्नेवान्तर्गृहेऽन्तर्गृहेश्वरस्य कृष्णस्यानुध्याविध्याविर्भूतस्यैव स्फुरणानन्दनन्दवशादुपभुक्तसुकृतपरससहस्रा दुःसहसहवनगमनाभावतोविरहदुःखदुःखरतादुखातजीवनज्वालया क्षीणसुकृतेतरतरस्विकर्माणः ॥९०॥

क्षीणबन्धनाः सत्यो जारतयारतया धियाधियातपारवश्येन जातनिर्वेदा वेदान्विष्यमाणं कृष्णमेकान्तकान्तभावेन सद्य एवात्मानमासादयितुं च पारवश्यदुःखं निर्मोकमिव भुजगस्य गुणोपदेहं देहं विमुच्य कृष्णाङ्गसङ्गमङ्गलमङ्गलक्ष्मीसौभाग्यं गुणरहितं हितं समवाप्य सद्य एव ताभिः सह सहर्षमेव कृष्णमभिसरन्ति स्म ९१

नैतच्चित्रं रतिमतामतादात्म्यं यदेतदहो रतिवासनासनाथानां वासनासनातनत्वेन गुणोपरमः परमस्तु भवन्नेव वासनानुरूपं रूपं निर्गुणमेव जनयति नयतिलकभूतायाः कृष्णरतेरयं हि प्रभावः प्रभावहुलः ॥ ९२ ॥

क्षमैव सारो यासां ताः इति तदापि तान् उद्दिश्य दुर्वचनं आत्महत्यां वा न चक्रुरित्यर्थः । अन्तर्गृहे गृहमध्ये अन्तरन्तःकरणमेव गृहं तस्येश्वरस्य अनुध्या अनुध्यानं तस्या विधिना अविर्भूतस्य स्फुरणे आनन्दस्य नन्दः समृद्धिस्तद्वशात् विरहदुःखस्य या दुष्टा खरता तीक्ष्णता तया हेतुना दुखाता दुरुच्छेदा या जीवनज्वाला तया। "खनु अवदारणे" ॥९०॥

क्षीणबन्धना अत एव पक्कपायाः अत्र सुकृतसुकृतेतरशब्दाभ्यां पुण्यपापे नोच्येते किंतु भगवत्स्फूर्तितदुत्कण्ठे एवेति केचिद्व्याचक्षते यावतीभ्यां च ताभ्यां वृत्ताभ्यामिव प्रौढभावः साधक सिध्यति तावत्योश्च तयोः शनैर्भोगयोरपि संप्रति युगपदेव भोगो जात इति पुण्यपापयोस्तु स्वस्वप्रतिनियतफलदातृत्वात् पापस्य तु सुतरां भगवद्विरहमयप्रेमस्फोरकत्वाभावात् "न कर्मबन्धनं जन्म वैष्णवानां च विद्यते" इति पाद्मकार्तिकमाहात्म्यानुसारेण तासां सुतरां तत् प्रारब्धजन्मत्वाभावात् यद्वा गुरुपुत्रमिहानीतमित्यादिन्यायेन प्रारब्धरक्षणारक्षणयोः स्वप्रेमवर्द्धनविदग्धशीभगवदिच्छैकमयत्वमेवानुमननीयमिति । अधियातम् अधिगतं अनुभूतं यत् पारवश्यं तेन आत्मानं प्रयोज्यकर्त्तारं कृष्णं कर्म आसादयितुं प्रापयितुं सादयितुं खण्डयितुं च निर्मोकमिवेति देहत्यागस्य प्रातीतिकत्वमात्रं न तु वास्तवत्वं यथा ज्वरितस्यैव भुजङ्गस्य कण्टकादिप्रतिबन्ध एव निर्मोकमोचनमेव ततो निष्क्रमणमेव औज्वल्यतेजस्वित्वनैरुज्यलाभ एव तथैवासां कृष्णाविच्छेदज्वरितानामेव पतिकृतप्रतिबन्ध एवेत्यादिकं योजनीयम् गुणोपदेहं प्राकृतसत्वादिगुणोपलिप्तं । दिह प्रलेपे । गुणरहितमप्राकृत कल्याणगुणमयमित्यर्थः। समवाप्य प्रकटीकृत्य ॥ ९१ ॥

रतिमतां अत एव रतिवासनासनाथानां जनानां यदेतदतादात्म्यं मोक्षाभावःएतन्न चित्रमित्यन्वयः । वासनायाः सनातनत्वेन हेतुना नतु प्राकृतया वासनाया इव नश्वरत्वेन इत्यर्थः । परम आत्यन्तिकोगुणोपरमः प्राकृतगुणशान्तिर्भवन्नुत्पद्यमान एव निर्गुणमेव रूपं स्वरूपं जनयति नयतिलकेति अन्यथा अनीतिरेव तस्याः स्यादिति भावः ॥ ९२ ॥

अथ तां प्रियः म्रियाणमात्रालिमालोक्य समुपसन्नाम्। अविकलकलाकलापच्छला-दलाच्छ्रीवलानुजोन्नुतताम् ॥ ९३ ॥

सं तु नायकोऽनुकूलः प्रतिकूलं बहिरथान्तरनुकूलम् । उपनतयमुनाकूलः पीतदुकूलो विवक्षुतामगमत् ॥ ९४ ॥

आगच्छत स्वागतमस्ति वः शिवं किं नाम कार्यं करवाणि वः प्रियम् । यथास्थितं सद्मनि पद्मलोचनास्तथैव मन्ये भवतीभिरागतम् ॥ ९५ ॥

यतः कौतुकविहारक्रमे वेप एप एवं न भवति । तथाह । अर्द्धार्द्धं परिलोच्यते वपुषि वः श्रीमण्डनं मण्डनं युष्माभिः प्रियमण्डनाभिरपि प्रारम्भि नात्रादरः । तेनै-वेदमशङ्किपङ्कजदृशो जातं तदत्याहितं येनाद्यापि ससंभ्रमागमनजा श्रान्तिर्न विश्राम्यति ॥ ९६ ॥

---

एवं सिद्धान्त समर्थ्य प्रकृतमनुसरति अथेति । अनुजुतां आसारल्यं अलास्वीचकार बलात् न तु वस्तुत इत्यर्थः । कलाकलाप इति । एषाप्येका वैदग्धी कृत्रिमताटस्थ्यप्रकटनेन प्रेमतरङ्गोद-ण्डचण्डिमप्रकाशनपाण्डित्यमति भावः । बलानुज इति ग्रन्थकृतस्तासां पक्षपातेन मत्त इत्य-सूयोक्तिः ॥ ९३ ॥

अनुकूल इति अतिरक्ततया नार्य्या त्यक्तान्यललनास्पृहः । सीतायां रामवत्सोयमनुकूलः प्रकीर्त्तित इति स्मृतेः । बह्वीषु तासु यद्यप्यानुकूल्यं न संभवति तथाप्यत्र महारासोत्सवदिने तस्य तास्वेकैकश्येन प्रकाशभेदादभिमानभेदेन वा सर्वासामपि तासां ह्लादिनी सारत्वादैक्य-विवक्षया वा तत्सङ्गमनीयां प्रतिकूलमनुकूलमित्येते वचनक्रियाविशेषणे ॥९४॥

आगच्छतेत्यादिषु यद्यपि प्रकटोभिधेयोऽर्थ उपेक्षामयो बाह्यस्तासां सौन्दर्य्यभावादिवर्ण-नात् अप्रकटोव्यञ्जनीयोऽर्थ एव विहारस्वीकारमयआन्तररतथापि क्वचित् क्वचिदभिधयाप्यसौ योजयितव्य इति । अथ तादृशवेषचेष्टादिभिरेव अनुरागाढ्यो भावस्योदयोद्रिकमनुमाय सदा-नुभूतमपि स्वं कदाप्यननुभूतचरमिव प्रथममिलितमिव मानयन्तीस्ता आलक्ष्य परिहसन्निव अनुरागरसमनुमोदयन्निव स्वयमपि तथैव ता अपरिचिन्वन्निव औदास्यमवलम्बमानः सादरं ससम्भ्रमप्रश्नमयमाह तत्र प्रथममागच्छत स्वागतमित्युक्तेः ताः प्रफुल्लमुखीर्वीक्ष्य पनर्विषण्णमुखी कर्त्तुमाह वः किं प्रियं करवाणि किमर्थमागतं तत् किं न ब्रूतेति भावः । संशयवैमनस्यवतीर्वी-क्ष्याह यथास्थितमिति तेन काश्चिदुद्वेगो जात इत्यनुमीयते स च दुष्टजनकृतः प्रकटः साधारणो वा मनसिजकृतो गुप्तस्त्वादृशीनामेव वेति अवश्यमेव जिज्ञास्यमिति भावः । हे पद्मलोचना इति मदुपरिनयनकमलवृष्टिरेव क्रियते न तु वचनसुधाभिषेक इति भावः । अत्र न जनकृतो नापि सर्वथा मनसिजकृतः किंतु त्वदनुरागकृत इति तत्सखीनां कासांचिन्मनसां मनसो न कृतं प्रत्युत्तरमपि ज्ञेयम् ॥ ९५ ॥

कुतश्चन कौतुकादागतमिति चेन्नहि नहीत्याह कौतुकेति श्रियं शोभामपि मण्डयतीति तत् अत्याहितं महाभीतिः अतस्तद्गोपयितुं नार्हत प्रगटमेव ब्रूत तत्राणमेवोऽहमधुनैव करोमीति भावः ॥ ९६ ॥

क्लिन्नानि श्रवणोत्पलानि चलितैः खेदाम्भसो बिन्दुभिर्मुक्ताभिर्ग्रथितेव चित्रमलकश्रेणीयमेणीदृशः। द्राघीयः श्वसितं तदाहतिपरिम्लानायमानद्युतो द्योतन्तेऽधरपल्लवाः स्तनपटस्तेनैव दोधूयते ॥ ९७ ॥

अथवा अत्याहितं चेद्भविष्यदभविष्यदथो पुंसामपि सामपिधानेन तरलतालता फलवती तेनात्याहितं हितं वा कथं ब्रूमः ॥ ९८ ॥

इदं वः कौतुकविलसितं विलसितं वस्तु वस्तुतः स्वातन्त्र्येण बहिरेव हि रे भवितुं नेष्टे नेष्टेन वा जनसमूहेन समूहेन वा समभावि समभावि तेनेदं स्वातन्त्र्यमिति वा कथं ब्रूमः विहारचंक्रमक्रमसमयाभावात् यदयं क्षिमदोषः प्रदोषः ॥ ९९ ॥

तथाहि। रजन्येषा घोरा भयदपशुवृन्दं वनमिदं ममैकस्याभीते रसदमवलानामरसदम्। इदं वः प्रायानां मनसि न भयं हन्त तदितो निवृत्तिर्निःश्रेयस्करादिति शृणुतैतन्म म वचः ॥ १०० ॥

---

भ्रान्तिचिह्नान्येव ब्रुवन् भङ्ग्या तासां सात्त्विकविकारोत्थमाधुर्य्यास्वादं स्वकृतं ता ज्ञापयन् वर्णयति क्लिन्नानीति स्तनपटो दोधूयत इति भाविमदोल्लासशुभसूचक स्तनकम्प एवाऽयं भवतीनामिति भावः ॥ ९७ ॥

अथवेति मौनेनैव तासां मनोगतं वाक्यमभिजानन् प्रकटमाह अत्याहितमिति सामपिधानेन सुखराहित्येनेत्यर्थः। अत्याहितं हितं वेति नात्यहितलक्षणं नापि हितलक्षणं किंचिदनुभूयत इति भावः ॥ ९८ ॥

खण्डितमेव कौतुकपक्षं पुनः संस्थाप्य पुनरपि खण्डयति इदं अर्द्धार्द्धभूषणादिधारणमपि कौतुकस्यैव विकसितं औत्सुक्यत्वराभ्यां तत्संपूर्णत्वाशक्तेः। किंच विके गर्त्ते सितं बद्धं वस्तु बहिरेव भवितुं न ईष्टे न शक्नोति रे इति सम्बोधने विलप्रायेन्तःपुरे पत्यादिनिरुद्धा यूयं कथं बहिर्निर्गता इत्यर्थः। तत्र तेषां संगतिर्युष्माकं स्वातन्त्र्यं वा हेतुरस्तु नाद्यः असंभवादेव द्वितीयस्तु कथंचित्संभवतीत्याह नेष्टेनेति इष्टेन पत्यादिना जनसमूहेन समूहेन सम्यगूहवता एता वनं गच्छन्तीति वितर्कवता न सम्यगभावि तेन हेतुना स्वातन्त्र्यं संभावितं समभावि ण्यन्तात्कर्मणि चिण्। इति वा कथं ब्रूम इति एतदपि वक्तुं न शक्यते तत्र हेतुः। विहारचंक्रमेत्यादि तेन किंचिदहस्यान्तरमेव भविष्यति तच्च भवतीनां मौनादकथ्यत्वं मन्निकटागतेश्च मदेकसंपादयिष्यमाणत्वं चानुमीयत इति भावः ॥ ९९ ॥

मनसि न भयं प्रायानामपि वोऽवलानां इतो निवृत्तिरेव नितरां श्रेयस्करादिति वाच्योऽर्थः स्पष्टः वस्तुतस्तु अघोरा अभयदेति। अकारप्रश्लेषः ममैकस्येति पुरुषान्तरस्य प्रवेशासंभवोऽपि ज्ञापितः। अवलाना न विद्यते रसदं यस्मात् अवलानां तु नाममात्रेणैव रसदमित्येकं पदं वा। इदम् इ कामस्तं ददातीति तं कामदम्। प्रायानां भवतीनां इतो न भयं अतो निवृत्तिः स्थितिरेव निःश्रेयस्करादिति ॥ १०० ॥

वनदिदृक्षयात्तयामोदमदिरामोदमदिरा मदिराक्ष्यो यदि वात्राययुः शुभवत्यो भवत्यो वृत्तमेव तद् वनस्य दर्शनम् ॥ १०१ ॥

पश्यत पश्यत । इतः फुल्ला वल्ल्यो मदमधुपझङ्कारकलया गिरा निन्दन्तीव प्रणयनयतः स्वालय इव। अतः स्थातुं वाञ्छां कुरुत न गृहं गच्छत तथा तरूणामप्योघः कुसुमहसितैश्चालयति वः ॥ १०२ ॥

किंच । छायाश्छदानां शशिनश्च दीधितीर्मूले तरूणां मिलिताः समन्ततः । विलोक्य भोक्तुं तिलतण्डुलभ्रमात्तुणाति चञ्चूपुटकैर्वयोगणः ॥ १०३ ॥

इतश्च । उदञ्चत्कालिन्दीलहरिपरिरम्भव्यसनिना मफुल्लत्कल्हारोत्पलवनविमर्दैः सुरभिणा । पिकोक्तीनां दीर्घीकरणपटुना चन्दनवनीसमीरेण स्निग्धीकृततरुतलं पश्यत वनम् ॥ १०४ ॥

एवं च । अखण्डनानाद्रुमखण्डमण्डितं विचित्रपत्रिव्रजचित्रितान्तरम् । आलोकितुं काननमत्र योषितां योग्या स्थितिर्न व्रजत व्रजं ततः ॥ १०५ ॥

अथ वचो मे शुश्रूषध्वं सुहृत्पतिवपुरपुरस्कारयोग्यं न भवतीति पतिमतीर्निगद्य पुनः सुकुमारिकाःकुमारिकाः प्राह ॥ १०६ ॥

भो भो वालाश्चारुदन्त्यो वालाश्चारुदन्त्योकसि वत्सास्तान् पाययत प्रस्नुपयः

---

अक्षय आमोदो हर्ष एव मदिरा मदहेतुर्यासां ताः। वनस्य दर्शनं वृत्तमेवेति एतत् समाप्य द्रुतमेव गृहं गच्छतेति भावः। आमोदेन सौरभ्येण मम इं कन्दर्पं शान्ति ददतीति तथा ताः। हे मदिराक्ष्यः खञ्जनाक्ष्यः निजाङ्गसौरभ्येणैव मत्काममुद्दीपयथ किमुतावलोकनेनेति भावः। वृत्तमेव वनस्य दर्शनं किन्तु तरुवल्ल्यादीनां दर्शनं विशेषतो न वृत्तमिति तत्तत्परिचायकं मां सङ्गिनं कृत्वा तदपि कुरुतेति भाव इति ॥ १०१ ॥

स्वालय इव स्वसदृश इव प्रणयनयतः सख्यरीत्या गिरा निन्दन्ति कुलजानां वने तिष्ठासां गर्हन्तीत्यर्थः। अतः स्थातुं वाञ्छा न कुरुतेति बाह्यः। वास्तुवस्तु इतो गृहं गच्छन्तीरेव युष्मान्निन्दन्ति इण् गतावित्यस्य क्विबन्तस्य शसि रूपम् "गृहं न गच्छत। अहो रसिका अप्येता यियासन्तीति कुसुमहसितैश्च वो युष्मान् आलयति वारयति। "अल वारणभूपापर्य्याप्तिषु । अन्यत् समानमिति ॥ १०२ ॥

छदानां पत्राणां वयोगणः पक्षिसमूहः पक्षद्वयेऽपि तुल्य एवार्थः ॥ १०३ ॥

वनीत्यल्पविवक्षया स्त्रीत्वम् ॥ १०४ ॥

न योग्या स्थितिरिति बाह्यः न भजतेति वास्तवः ॥ १०५ ॥

शुश्रूषध्वं श्रोतुमिच्छत शुश्रूषध्वं परिचरत शुश्रूषा परिचर्य्याप्युपासन मित्यमरः। सुहृदां श्वश्रूादीनां पत्युश्चवपुः अपुरस्कारयोग्यं अनादरार्हं न भवतीति बाह्य वास्तवस्तु न शुश्रूषध्वं यतोऽपुरस्कारयोग्यमिति संबन्धः। अन्यत् समानमिति ॥ १०६ ॥

भो भोश्चारुदन्त्यः सुन्दरदन्त्यः वालाश्च बालकाश्च ओकसि गृहे आरुदन्ति वत्सा गोवत्साश्च तान् प्रस्नुपयः मातृदुग्धं पाययत प्रस्नुपयस्य प्रकर्षेण सुष्ठु उप निकटे पतिमा दोहयत च

प्रस्तुपयत्य दोहयत च मोहयत च मोदारं चेतः ॥ १०७ ॥
मातरश्च पितरश्च सपुत्रा भ्रातरश्च पतयश्च समन्तात् । मार्गयन्ति वहुधेति न मोहं गन्तुमर्हत न हन्तुमभीप्सम् ॥ १०८ ॥
तस्माद्गच्छत मात्र तिष्ठत चिरं नो वेत्सि पक्ष्मेक्षणाः को हेतुर्न हि गम्यते विपिनतः को हेतुरत्रागतम् । उद्देश्यं यदि मेऽवलोकनमहो संपन्नमेवाथ तत् संभाव्य समयान्तरेऽपि रसदं नैतत् तथा त्वादृशाम् ॥ १०९ ॥
ध्यानतः श्रवणतोऽवलोकतः संगतिर्मम सुखावहा न तत् । यात पङ्कजदृशो न मादृशः प्रेमहत्तुमुचिता भवादृशः ॥ ११० ॥
अयि मनोरमा मनोरमां भर्तृसेवां यामवत तां मर्य्यादाछविहा विहातुं नार्हत लोकेप्सवो हि नार्य्योऽनार्य्योपक्रमा न भवन्ति ॥ १११ ॥
दुःशीलवादुःखलतादुःखलताकुसुमवर्षी यान् वर्षीयान् वा वधिरो वावधिरो वा-

उदारं चेतश्चित्तं मा मोहयत मोहं मा प्रापयत इति वाह्यः । वास्तवस्तु तान् मा पाययत मा दोहयत इति संवन्धः । मा माम् इनः कामतः उदारं दातारं ऊहयत वितर्कयत "उदारो दातृमहतो,,रित्यमरः । अन्यत्समानमिति ॥ १०७ ॥
इति हेतो गन्तुम् अर्हत मोहं वयं तु किमपि न जानीम इति मुग्धतां तु नर्हत इति वाह्यः वास्तवस्तु इति मो मोहस्तं गन्तु प्राप्तुं नार्हत अभीप्सं निजेप्सितं च न हन्तुमर्हत इति ॥ १०८ ॥
एतन्मेऽवलोकनं समयान्तरेऽपि संभाव्यम् किंच त्वादृशां साध्वीनां एतत् तथा रसदं न भवतीति वाह्योऽर्थः । वास्तवस्तु नोऽस्माकं विपिनतः सकाशात् मा गच्छत अत्र चिरं तिष्ठत हे पक्ष्मेक्षणाः अत्र आगतं को हेतुरिति चेत् को हेतुर्न गम्यते अपितु सर्व एवेत्यर्थः । त्वादृशां परमयुवतीनां तु मेऽवलोकनमेव एतत् रसदं न भवति किंत्वन्यदपि रहस्यं वर्तत इतिभावः । अन्यत् समानमिति ॥ १०९ ॥
प्रीत्याकृष्टजनानायातान् प्रति याहि याहीति कथनमनुचितामिति चेदत आह ध्यानत इति ध्यानादितः सकाशात् संगतिर्मम न सुखावहा तस्माद्यातेति वाह्यः । वास्तवस्तु ध्यानादितोऽपि संगतिरङ्गसङ्ग एव सुखावहा तस्मान्न यातेति । अन्यत् समानमिति ॥ ११० ॥
यां भर्तृसेवाम् अवत रक्षतेतां विहातुं नार्हत नहि रक्षितस्य वस्तुनस्त्याग उचित इति भावः मर्य्यादाछविहा हे मर्य्यादामार्गशोभाहन्त्र्यः अनार्य्य उपक्रमो यासां तथाभूता न भवन्ति इति वाह्योऽर्थः । वास्तवस्तु यो भर्तृसेवां रक्षतेति मल्लक्षणभर्तृसेवैव रक्ष्यते अन्या तु प्रथमत एव उपेक्षितेत्यर्थः । लोकेप्सव इति भवत्यस्तु मदीप्सवो न तु पतिलोकेप्सव इत्यर्थः । यद्वा सपरिहासमाह लोकं पुरुषम् ईप्सव कामयमाना नार्य्यः आर्य्योपक्रमा न भवन्ति भवत्यस्तु तथा भूता एवेति ॥ १११ ॥
सुनतिनिरङ्कनाभिः पतिर्न अभिलप्यते । अङ्गेति संबोधने । दुःशीलता च दुष्टा खरता तैक्ष्ण्यं खलता वा सा च ताभ्यां या दुःखरूपा लता तस्याः कुसुमं वर्षतीति सः यान् परलोकं

खिलदोषस्य जडो वा रोगी बाधनो वा सुमतिभिरङ्गनाभिरङ्गनाभिस्त्यज्यते सुतरां त्वनोदृशः पतिरिति लौकिकी वैदिकी नीतिः ॥ ११२ ॥

उभयनीतिविलक्षणनिराविलक्षणनिरातङ्का हि भवत्यः ॥ ११३ ॥

परे पुरुषेऽनुरागः सर्वतो भयद उभयलोके विरुद्धोऽयशस्करः परमजुगुप्सितश्च विशेषतस्त्वादृशीनाम् ॥ ११४ ॥

पतिरेक एव यः परः स तु दृश्य एव न भवति भवतीभिरेव दृश्यते । तत् परमहो महोन्नतोऽयं वो महिमा नहि मानमर्हति भुवने ॥११५ ॥

अतः परमतः परमतः मियहितोपदेशतो देशतोऽस्माद् गृहान् यात मानयत मे वचनमिति ॥ ११६ ॥

एवं प्रणयपरीक्षणक्षणतत्परतयारतया धियाधियाप्य वहिरुष्णमन्तरतिशीतलं तलमम्भ इव शरत्कालीनलीनमध्यान्हार्ककिरणगभीरमहाह्रदस्य ॥ ११७ ॥

---

गच्छन् म्रियमाण इत्यर्थः । वर्षीयान् वृद्धः अखिलदोषस्य अवधिं सीमां रातीति सः । अनीदृशः एतदादिदोषरहितस्तु सुतराम् ॥ ११२ ॥

उभयनीतिभ्यां विशिष्टं लक्षणं यत्र तथाभूतो निरावलो यः क्षण उत्सवस्तत्रैव निरातङ्का इति बाह्यः । वास्तवस्तु उभयनीतितोऽपि विलक्षणाश्च निराविले क्षणे रात्रिसमये निरातङ्काश्च अत एवात्रैव स्थितिरुचितेति भावः ॥ ११३ ॥

परे पुरुष इति बाह्योऽर्थः स्पष्टः । वास्तवस्तु परे श्रेष्ठे मयि भयं यतीति भयदःअभयदो वा अविरुद्धः परम अजुगुप्सितः अनिन्दित इति ॥ ११४ ॥

पति रेक एव यस्तु परः अन्यः पुरुषः स दर्शनार्ह एव न भवति तथापि भवतीभिरेव दृश्यते नतन्वीभिः साध्वीभिः तत् परमहो इत्यादिविरुद्धलक्षणा निन्दातात्पर्येति बाह्यः वास्तवस्तु एक एव योऽहं परः श्रेष्ठः सोऽन्याऽसौ द्रष्टुमप्यशक्यः कुतः पुनः स्पर्शयोग्यता भवत्विति । अन्यत्स्पष्टम् ॥ ११५ ॥

अतः परमेतदनन्तरम् अतोऽस्मादुपदेशाद्धेतोः कथंभूतात् परमतः उत्कृष्टात् मानयत आद्रियध्वम् इति बाह्यः । वास्तवस्तु मा यात मे वचनं नयत इति ॥ ११६ ॥

एवं स वनमाली बहिरुष्णमन्तरतिशीतलमित्यादिरीत्या अधियाप्य गर्भितसुरसार्थतया अधिगतं कारयित्वापि यदिदं व्याजहार तदेतद्वाक्यजातम् अनुरागान्धतया तथाप्रसिद्ध्यैव आन्तरीणं वास्तवमर्थम् अनवगाह्य बाह्यं अर्थमेव निशम्य ताः संतापस्य कामपि कोटिपरां काष्ठां ययुः प्रापुरित्यन्वयः। बाह्यार्थोपन्यासे कारणमाह प्रणयेतिप्रणयस्य प्रेम्णः परीक्षणं निजोदासीन्यप्रकटनेन याथार्थ्यजिज्ञासा तदेव क्षण उत्सवः तत्परतया आरता या धीस्तया यदुक्तं "सर्वथा ध्वंसरहितं सत्यपि ध्वंसकारणे । यद्भावबन्धनं यूनोः स प्रेमा परिकीर्तित" ॥ इति अत्राप्यग्रे वक्ष्यते भजन्त्यभजतोये वा इत्यत्रसौहृदं च सुमध्यमा इति शरत्कालीनश्चासौ लीनाःप्रविष्टा मध्याह्नार्कस्य किरणा यत्र तथाभूतश्च यो गभीरमहाह्रदःतस्याम्भइवेति बाह्यार्थस्य एव तापकत्वम् आन्तरीणार्थस्य तु तापहारकत्वमेवेत्युक्तम् ॥ ११७ ॥

मस्तूपयस्य दोहयत च मोहयत च मोदारं चेतः ॥ १०७ ॥

मातरश्च पितरश्च सपुत्रा भ्रातरश्च पतयश्च समन्तात् । मार्गयन्ति वहुधेति न मोहं गन्तुमर्हत न हन्तुमभीष्टम् ॥ १०८ ॥

तस्माद्गच्छत मात्र तिष्ठत चिरं नो वेद्मि पद्मेक्षणाः को हेतुर्न हि गम्यते विपिनतः को हेतुरत्रागतम् । उद्देश्यं यदि मेऽवलोकनमहो संपन्नमेवाद्य तत् संभाव्य समयान्तरेऽपि रसदं नैतत् तथा त्वादृशाम् ॥ १०९ ॥

ध्यानतः श्रवणतोऽवलोकतः संगतिर्मम सुखावहा न तत् । यात पङ्कजदृशो न मादृशः प्रेमहर्तुमुचिता भवादृशः ॥ ११० ॥

अयि मनोरमा मनोरमां भर्तृसेवां यामवत तां मर्य्यादाञ्चविहा विहातुं नार्हत लोकेप्सवो हि नार्य्योऽनार्य्योपक्रमा न भवन्ति ॥ १११ ॥

दुःशीलतादुःखलतादुःखलताकुसुमवर्षी यान् वर्षीयान् वा वधिरो वावधिरो वा-

उदारं चेतश्चित्तं मा मोहयत मोहं मा प्रापयत इति बाह्यः । वास्तवस्तु तान् मा पाययत मा दोहयत इति संबन्धः । मा माम् इतः कामतः उदारं दातारं ऊहयत वितर्कयत "उदारो दातृमहतो,,रित्यमरः । अन्यत्समानमिति ॥ १०७ ॥

इति हेतो गन्तुम् अर्हत मोहं वयं तु किमपि न जानीम इति मुग्धतां तु नार्हत इति बाह्यः वास्तवस्तु इति यो मोहस्तं गन्तु प्राप्तुं नार्हत अभीष्टं निजेप्सितं च न हन्तुमर्हत इति ॥ १०८ ॥

एतन्मेऽवलोकनं समयान्तरेऽपि संभाव्यम् किंच त्वादृशां साध्वीनां एतत् तथा रसदं न भवतीति बाह्योऽर्थः । वास्तवस्तु नोऽस्माकं विपिनतः सकाशात् मा गच्छत अत्र चिरं तिष्ठत हे पद्मेक्षणाः अत्र आगतं को हेतुरिति चेत् को हेतुर्न गम्यते अपितु सर्व एवेत्यर्थः । त्वादृशां धर्मयुवतीनां तु मेऽवलोकनमेव एतत् रसदं न भवति किंत्वन्यदपि रहस्यं वर्तत इतिभावः । अन्यत् समानमिति ॥ १०९ ॥

प्रीत्याकृष्टजनानायातान् प्रति याहि याहीति कथनमनुचितमिति चेदत आह ध्यानत इति ध्यानादितः सकाशात् संगतिर्मम न सुखावहा तस्माद्यातेति बाह्यः । वास्तवस्तु ध्यानादितोऽपि संगतिरङ्गमङ्ग एव सुखावहा तस्मान्न यातेति । अन्यत् समानमिति ॥ ११० ॥

यां भर्तृसेवाम् अवत रक्षतेतां विहातुं नार्हत नहि रक्षितस्य वस्तुनस्त्याग उचित इति भावः मर्य्यादाञ्चविहा हे मर्य्यादामार्गशोभाढ्य्यः अनार्य्य उपक्रमो यासां तथाभूता न भवन्ति इति बाह्योऽर्थः । वास्तवस्तु यां भर्तृसेवां रक्षतेति मल्लक्षणभर्तृसेवैव रक्ष्यते अन्या तु प्रथमत एव उपेक्षितेत्यर्थः । लोकेप्सव इति भवत्यस्तु मदीप्सवो न तु पतिलोकेप्सव इत्यर्थः । यद्वा सपरिहासमाह लोकं पुरुषम् ईप्सव कामयमाना नार्य्यः आर्य्योपक्रमा न भवन्ति भवत्यस्तु तथा भूता एवेति ॥ १११ ॥

सुमतिभिरङ्गनाभिः पतिर्न अभिलष्यते । अङ्गेति संबोधने । दुःशीलता च दुष्टा खलता निन्द्य वक्रता या सा च ताभ्यां या दुःखरूपा लता तस्याः कुसुमं वर्षतीति सः यान् परलोकं

खिलदोषस्य जडो वा रोगी चाधनो वा सुमतिभिरङ्गनाभिरङ्ग नाभित्यज्यते गुरु-र्या त्वनीदृशः पतिरिति लौकिकी वैदिकी नीतिः ॥ ११२ ॥

उभयनीतिविलक्षणनिराविलक्षणनिरातङ्का हि भवत्यः ॥ ११३ ॥

परे पुरुषेऽनुरागः सर्वतो भयद उभयलोके विरुद्धोऽयशस्करः परमजुगुप्सितश्च विशेषतस्त्वादृशीनाम् ॥ ११४ ॥

पतिरेक एव यः परः स तु दृश्य एव न भवति भवतीभिरेव दृश्यते । तत् परमहो महोन्नतोऽयं वो महिमा नहि मानमर्हति भुवने ॥११५ ॥

अतः परमतः परमतः प्रियहितोपदेशतो देशतोऽस्माद् गृहान् यात मानयत मे वचनमिति ॥ ११६ ॥

एवं प्रणयपरीक्षणक्षणतत्परतयारतया धियाधियाप्य बहिरुष्णमन्तरतिशीतल तलमम्भ इव शरत्कालीनलीनमध्यान्हार्ककिरणगभीरमहाह्रदस्य ॥ ११७ ॥

---

गच्छन् म्रियमाण इत्यर्थः । वर्षीयान् वृद्धः अखिलदोषस्य अवधिं सीमां रातीति सः । अनीदृशः एतदादिदोषरहितस्तु सुतराम् ॥ ११२ ॥

उभयनीतिभ्यां विशिष्टं लक्षणं यत्र तथाभूतो निराविलो यः क्षण उत्सवस्तत्रैव निरातङ्का इति बाह्यः । वास्तवस्तु उभयनीतितोऽपि विलक्षणाश्च निराविलेक्षणे रात्रिसमये निरातङ्काश्च अत एवात्रैव स्थितिरुचितेति भावः ॥ ११३ ॥

परे पुरुष इति बाह्योऽर्थः स्पष्टः । वास्तवस्तु परे श्रेष्ठे मयि भयं यतीति भयदःअभयदो वा अविरुद्धः परम अजुगुप्सितः अनिन्दित इति ॥ ११४ ॥

पति रेक एव यस्तु परः अन्यः पुरुषः स दर्शनार्ह एव न भवति तथापि भवतीभिरेव दृश्यते नत्वन्याभिः साध्वीभिः तत् परमहो इत्यादिविरुद्धलक्षणा निन्दातात्पर्येति बाह्यः वास्तवस्तु एक एव योऽहं परः श्रेष्ठः सोऽन्याऽसां द्रष्टुमप्यशक्यः कुतः पुनः स्पर्शयोग्यता भवत्विति । अन्यत्स्पष्टम् ॥ ११५ ॥

अतः परमेतदनन्तरम् अतोऽस्मादुपदेशाद्धेतोः कथंभूतात् परमतः उत्कृष्टात् मानयत आद्रियध्वम् इति बाह्यः । वास्तवस्तु मा यात मे वचनं नयत इति ॥ ११६ ॥

एवं स वनमाली बहिरुष्णमन्तरतिशीतलमित्यादिरीत्या अधियाप्य गर्भितसुरसार्थतया अधिगतं कारयित्वापि यदिदं व्याजहार तदेतद्वाक्यजातम् अनुरागान्धतया तयाप्रसिद्धयैव आन्तरीणं वास्तवमर्थम् अनवगाह्य बाह्यं अर्थमेव निशम्य ताः संतापस्य कामपि कोटिपरां काष्ठां ययुः प्रापुरित्यन्वयः।बाह्याऽर्थोपन्यासे कारणमाह प्रणयेतिप्रणयस्यप्रेम्णःपरीक्षणं निर्णोदासीन्यप्रकटनेन याथार्थ्यजिज्ञासा तदेव क्षण उत्सवः तत्परतया आरता या धीस्तया यदुक्तं "सर्वथा ध्वंसरहितं सत्यपि ध्वंसकारणे । यद्भावबन्धनं यूनोः स प्रेमा परिकीर्तित"ः ॥ इति अत्राप्यग्रे वक्ष्यते भजन्त्यभजतोये वा इत्यत्रसौहृदं च सुमध्यमा इति शरत्कालीनश्चासौ लीनाःप्रविष्टा मध्यान्हार्कस्य किरणा यत्र तथाभूतश्च यो गभीरमहाह्रदःतस्याम्भइवेति बाह्यार्थस्य एव तापकत्वम् आन्तरीणार्थस्य तु तापहारकत्वमेवेयुक्तम् ॥ ११७ ॥

अन्तरतिशयास्वाद्यं वहिः कण्टकाकृति कण्ठकिफलमिव ॥ ११८ ॥

अन्तःसरसं वहिःकठिनं लाङ्गलिगलितफलमिव ॥ ११९ ॥

अन्तर्मधुद्रवं वहिर्मात्तिकं क्षौद्रपटलमिव- अन्तः स्निग्धपूरं वहिरतिरूक्षं भर्जितशष्कुलीपिष्टकमिव ॥ १२० ॥

वाक्यीभूतपदकदम्बमिव अन्तराकाङ्क्षायोग्यतासत्तियुक्तं वहिर्विजातीयं कलाकलापवान् परवान् परमकौतूहलस्यस वनमालीवनमालीभिराहृतमालोच्य यादिदं व्याजहार व्याजहारयितव्यसंतापम् ॥ १२१ ॥

---

नन्ववगाहनेनालोडने वृत्ते तदाम्भोष्यौष्ण्यशैत्यव्यतिपक्तं भवति शीततलं तु दुष्प्रवेशमित्यतोऽन्यथोपमिमीते अन्तरतीति तेन वाह्यार्थस्य पृथगेव विभक्ततया परित्यज्य आन्तरीणो वास्तव एवार्थोऽत्र उपादेय इति भावः ॥ ११८ ॥

किंच वास्तवार्थस्यातिदुष्प्रवेशत्वबुद्ध्यापि न त्यागार्हत्वं यतोऽयं वलिष्ठधियां गम्य एव स्यादित्याह अन्तःसरसमिति "नारिकेलं तु लाङ्गली" त्यमरः। तेन दृढमानमुद्गरेण वाह्यार्थनिस्फोट्य सुरसो वास्तवार्थ एव निष्काश्य आस्वादनीय इतिभावः॥ ११९ ॥

अथ च वास्तवार्थलुब्धानां वाह्यार्थकृतकष्टमपि सोढुमर्हमित्याह अन्तर्मधुद्रवमिति नहि मक्षिकोपद्रवशङ्कया मधु परित्यज्यत एवेति भावः। विचारतस्तु परीक्षकतया वा परिहासरसिकतया वा विदग्धशेखरस्य तस्य एतादृशभाषणमपि गुणत्वेनैवानुमोदनीयमित्याह अन्तःस्निग्धेति नहि शष्कुल्या वल्कलं द्विष्यत इति भावः ॥ १२० ॥

विचारस्य पर्य्यवसाने तु वाह्यार्थस्य खपुष्पायमाणत्वमित्याह वाक्यीभूतेति। यदुक्तं "वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चय" इति नहि योजनकाले विजातीयता श्रोतो क्वापि तिष्ठतीति भावः श्लेषेण आकाङ्क्षा एव हन्त स्वागतेत्यादौ न त्वौदासीन्यं योग्यता औचित्यमेव परे पुरुषेऽनुरागो जुगुप्सित इत्यादौ न त्वयोग्यता आसत्तिः सहावस्थाममेव तस्माद्गच्छेतेत्यादौ नत्वपसारणं तदुक्तम् अभिधायकं।तद्व्यञ्जकं वा इति। कौतूहलस्य परवान् अधीनः इदमप्येकं तस्य कौतुकमिति भावः। व्याजेन छलेन हारयितव्यस्ताभिरेव दूरीकारयितव्यः संतापः स्वीयो यत्र तद्यथा स्यात् तथा। अत्र विधास्यमाने महावनविहारयुगपदनेककामिकासंभोगरासादौ तासां परस्परस्वपक्षत्वविपक्षत्वादिमतीनां वह्वीनां सर्वसंमेलनं दुर्घटमिति युगपदेव सर्वास्वेव तासु उपेक्षामहाज्वरं प्रक्षिप्य सर्वा एव विपक्षा एकमतीः कृत्वा पुनः स्वीकारपीयूषवर्षेण ताः संजीव्य नवोत्पन्ना इव विस्मृतविपक्षतादिभावा युगपदेकत्रैव देशे रमयिष्ये यदि पुनर्मदङ्गसङ्गेन मदं प्राप्य पुनरपि पूर्वरूपाभेवयुस्तदा तु स्वयमेवान्तर्धाय पुनर्विरहदवार्त्ताः स्वदर्शनामृतनाप्लाव्य सर्वैकमत्येन महारासं विधास्ये सर्वमेतच्च मच्चेष्टितं मत्सुखतात्पर्य्यवतीनामासां सुखायैव करिष्यतीति विमृश्य भगवानिदं वाक्यकूटं जगादेति वक्ष्यमाणस्मरसमरसमेति. गद्यतात्पर्य्यदृष्ट्या सुधीभिरत्रप्येयम् । सर्वैकमत्यसंपादनासामर्थ्यमेव महारासवासरे सन्तापः स एव व्याजेन हारयितव्य इति ॥ १२१ ॥

तदेतदनुरागान्धतया तयान्तरीणं रीणं मध्वासवमिवार्थमनवगाह्य बाह्यमर्थमेव निशम्य शम्यमानसारस्यतया शुष्का इव ता युगपदुपपादितदुःखकोटिं कोटिं काम संतापस्य ययुः ॥ १२२ ॥

तदा तस्य तेनैव वचसा च साधुशतकोटिकोटिनिपातेनेव दलितं विषवृश्चिकेनेव विद्धं कालभुजगेनेव दष्टं तुषानलेनेव दह्यमानं क्षुरेणेव क्षुण्णं महाज्वरेणेव पराभूतं शूलेनेव ग्रथितं विषकाण्डेनेव क्षतं सर्वमेवापघनं मन्यमानाः ॥ १२३ ॥

निरालोकमिव सकललोकं निःशरणमिव जगत्त्रितयं शून्यानन्दामिव विश्वं संतापमयमिव दिङ्मण्डलं नीरसमिव धरणितलं भस्मीभूतमिव भुवनतलं परलोकं गतमिवात्मानं च विज्ञाय ॥ १२४ ॥

मुहूर्तं दारुपुत्रिका इवात्मशून्याः केवलं कठिनांशशंसिकाकृतयः ॥ १२५ ॥

क्रमेण मूर्च्छोत्थिता इव संचरदन्तःकरणधर्मतयागतया संविद्देवीसहायतयाय-

---

अनुरागान्ध तयेति अयमर्थः अनुरागो नाम सदानुभूतस्यापि विषयस्य प्रतिक्षणमननुभूतत्वभानसमर्पकः प्रेम्णः कोऽपि परिणामविशेषः तस्याभ्युद्गमाद्बहुधा कृताङ्गसङ्गमपि स्वप्रेयांसं तदानीं प्रथममिलितमिव मत्वा स्वभावत एव तदैकम्यभावनावत्यस्तास्तादृशतद्वचनश्रवणेन तु दैन्यसंचारिप्राबल्यादात्मनामयोग्यत्वदृष्ट्या बाह्यमेवार्थं वास्तवत्वेन निरचैषुः व्याञ्जितस्यान्तरस्यार्थस्य तदैवावगतत्वेऽपि तत्सत्यतालिङ्गस्य स्मितादेरदर्शनादप्रमाण्यं चेति । शम्यमानं निर्वाप्यमाणम् । कोटिमुत्कर्षम् ॥ १२२ ॥

किमाकारा सा दुःखकोटिरित्यत आह तदेति । शतकोटीति केनाप्यप्रतिकार्य्यत्वम् । विषवृश्चिकेति चिरतरं तीव्रवेदनाकारित्वम् कालभुजगेति साक्षान्मारकत्वं तुषानलेति असमाप्यमानदाहदायित्वम् । क्षुरेणेति सहसैव द्वैधीकरणपटुत्वम् । महाज्वरेणेति उत्तरोत्तरेण पीडावर्द्धकत्वम् । शूलेनेति पारावारपर्य्यन्तवोधकत्वम् । विषकाण्डेनेति मर्मान्तः प्रविष्टज्वालाया निष्क्रमणासंभवः । अपघनम् अङ्गम् एतदादिधर्मवन्तं संतापं प्राप्ता इति भावः ॥ १२३ ॥

निरालोकमिति तादृशदुःखस्य सहमैवान्ध्यप्रापकत्वात् निःशरणमिति त्रापकानालोचनात् शून्यानन्दामिति तत्दुःखस्य सर्वानन्दनिर्वापकत्वशक्तेः संतापमयमिति तस्य सर्वव्यापकत्वधर्मोदयात्- नीरसमिति तस्य प्रथमं सर्वशोषकत्वशक्त्युदयात् भस्मीभूतामिति अन्ततस्तु सर्वदाहकत्वात् परलोकं गतामिति तस्य दशम्या दशाया अपि प्रापकत्वादिति एतादृशधर्मवान् स्वगत एव संतापस्तन्मयतया सर्वत्रैव संभावितः । नारायणमयं धीराः पश्यन्ति परमार्थिनः । जगद्धनमयं लुब्धाः कामुकाः कामिनीमयमितिवत् ॥ १२४ ॥

देहे ये कठिना अंशाः त्रिकककफोणिगुल्फादयःतेषां शंसिका ज्ञापिका आकृतिर्यासां ता इति अधरप्रगण्डादीनां कोमलांशानां सद्यः शोषेण स्वरूपानुपलब्धेः ॥ १२५ ॥

संवित् चेतनैव देवी तस्याः सहायतया साहाय्येन आयतया विस्तृतया हेतुना मूर्च्छोत्थिता इवेति तदानीमपि सम्यङ्मूर्च्छानपगमात् संचरन्तोऽन्त करणधर्मा यासु तासां भावस्तत्ता तया आगतया नष्टयापि पुनः प्राप्तयेत्यर्थः दुःखानुभूतेर्याभूतिः संपत्तिस्तद्दशां भतिभ-

तया। दुःखानुभूतिभूतिदशां यदि समासेदुः ॥ १२६ ॥

तदा। स्फुरितमधरैः स्विन्नं गण्डैःपरिस्रुतमक्षिभिःतमनुभिर्म्लानं वक्त्रैस्तनूयितमङ्गकैः। अहह सुदृशां लावण्यश्रीतनोरिव कीकशैर्भुजविसलताग्रेभ्यः स्रस्तं मणीमयकङ्कणैः॥ १२७॥

किंच। दयितवचसामौदासीन्ये श्रुतेऽपि न यद्गतं त्वरितमसुभिस्तेन प्रेम्णो ह्रियेव विविक्षवः। चरणकमलाङ्गुष्ठैर्दीर्घोल्लसन्नखचन्द्रमःकिरणलहरीकाण्डैरेवालिखन्नवनीतलम्॥ १२८॥

किंच। जात्यापि कोमलतराः प्रणयेन चोच्चैरुक्तोञ्ज्वितेन दयितस्य विरज्यमानाः प्राणाःप्रयान्तु नतरामिति जातमात्रः कण्ठं रुरोध सुदृशां स्वयमेव बाष्पः॥ १२९॥

किंच। यावद्घनत्वमपहाय विलोचनाभ्यां निष्क्रामति द्रव इवैष स एव बाष्पः।तूर्णीं बभूवुरबलाः क्षणमेव तावच्चित्रीकृता इव नभस्यनुरागलेखाः॥ १३०॥

किंच। अन्तर्मातुमशक्त एव सुदृशां संतापहालाहलो नेत्रैरञ्जनरञ्जिताश्रुलहरीव्याजेन रीणो बहिः। संतप्तस्तनमण्डलेषु निपतन्मात्रः स्म मा दृश्यते भूयश्चाविशदेव किन्तु हृदयं प्राणापहारोद्यतः॥ १३१॥

अथ सुदृशां निःश्वसनश्वसन एव मन्दोष्णो दोष्णोरन्तरतरलमपि हारं हारंहसा म्लापयन्नपि यन्नासाविवरतो वरतोदकत्वेनाधरदलदलनकारितां तन्नातिचित्रम्॥ १३२॥

---

स्मृति संपदी स्मरः। अयमर्थः तादृशसंतापानुभव एव मूर्छायाः कारणं मूर्च्छाग्निध्ये क्षणं तस्य श्लथीभावे मूर्च्छाया अपि श्लथीभाव इति॥ १२६॥

सुदृशां या लावण्यशोभा तस्या देहादुरितैः कीकशैःअस्थिभिरित्यर्थः। तेन लावण्यशोभा नष्टेति व्यञ्जितम्॥ १२७॥

प्रेम्णो ह्रियेवेति मम अशुद्धिः संप्रतिव्यक्तेति प्रेमैव ह्रीमान् जातः अनस्तदेकाश्रयाणां तासामपि लज्जया भूविवरप्रवेशेच्छा युक्तेतिभावः दीर्घमेव उल्लसन्ती नखचन्द्रमसः किरण लहर्य्येव काण्डो वेधनक्षोदनसमर्थो बाणो येषु तैः॥ १२८॥

प्राणा न निःसृता यत्तत कारणं संभावयति जात्यपि विशेषतः प्रणयेन च कोमलतराः प्राणाः॥ १२९॥

घनत्वमपहायेति संतापेन द्रावणात् निष्क्रामतीति तेनैवोत्फालनेन तत्रापि स्थातुमशक्तिरिवेति भावः॥ १३०॥

अन्यथैवोत्प्रेक्षते अन्तरिति नेत्रैर्नेत्रद्वारैर्बहिरपि रीणः मा दृश्यत इति हृदयस्यातितप्ततया सद्यःशोषणात् प्राणापहारोद्यत इत्यत्राय भावः प्रथमं तासां प्राणनिःसारणार्थमिव संतापहालाहलो वृद्धिं गतः ततो निजकार्यसिद्धिज्ञानार्थमिव नेत्रैर्बहिर्निःसृत्य अधुनापि प्राणा न निर्गता इति ज्ञात्वा क्रोधादिव पुनः हृदयं प्रविष्ट इति॥ १३१॥

निःश्वसनश्वसनो निश्वासवातः हा विषादे हंहसा हारं म्लापयन् अधरदलस्य दलनकारितां यद् आप प्राप्तः नासाविवरतः सकाशात्॥ १३२॥

चित्रं खल्विदमेव यदुपरतवदनानां सुवदनानां तासां सुखविगमधूसरसरसीरुहाकृतीनां वदनविम्बानां गलितेष्विव नवलावण्यामृतरसेषु सविशेषं शेपं नासाग्रजाग्रद्वस्थं तद्विन्दुविशेषमिव बीजत्वेन स्थिततयेव न निपतन्त मौक्तिकमणिमनवरतं निपतन्तोऽपि कज्जलाविला विन्दवो नयनवारां वारान्तरसंपत्तिमातपादनाय न मालिनयां बभूवुः ॥ १३३ ॥

एवं सति निजनिजप्रकृतिकृतिवैचित्र्येण विविधविवक्षया पिपक्षयापि परमामर्षादेर्विविधहृद्विकारकारणं विविधश्रियः सर्वा एव बभूवुः ॥ १३४ ॥

तथाहि काश्चन । मुखामोदोन्मत्तमधुरकलझङ्कारकलया स्वयं तानेवार्थानिव समनुकुर्वद्भिरलिभिः । दिशः श्यामाकारा नयनविगलत्कज्जलजलच्छटाभिः कुर्वत्यः सगदमगदन् गद्गदागिरः ॥ १३५ ॥

काश्चन । स्तवकैरतिदन्तकान्तभासां भ्रमरैश्चाननगन्धनिर्भरान्धैः । पुरतस्तिलतण्डुलायमानं विदधत्यो गगनाञ्चलं जजल्पुः ॥ १३६ ॥

काश्चन । अनुरागरसेनरञ्जितं स्वरशब्दार्थविशेषपूजितम् । मृदुमञ्जुगिरामधीश्वरीरसनागोचरमूचिरे वचः । १३७ ॥

---

तासां वदनविम्बानां नवलावण्यामृतरसेषु गलितेष्विव सत्सु अनवरतं निपतन्तोऽपि कज्जलाविला नयनवारां विन्दवो नासाग्रजाग्रदवस्थं मौक्तिकमणिं न मालिनयांचक्रुरित्यन्वयः । उपरतवदनानां त्यक्तकथनानां मौक्तिकं कीदृशमिव तेषां लावण्यामृतरसानां विन्दुविशेषमिव । शेषम् अद्वितीयम् । सविशेषमिति अत्रापि हानिस्तस्य न जातेति भावः । कथमिति चेत्तत्र उत्प्रेक्ष्यमाणो विशिनष्टि बीजेति श्रीकृष्णमन्दहासानन्तरं युगपदेव उत्पत्स्यमानानां लावण्यामृतरसानां बीजत्वेऽपि न स्थिततया हेतुनेव न निपतन्तं यद्यमावपतिष्यत्तदा तेनोदपत्स्यन्तेति भावः । अत एवाह वारान्तरेति अत्र निःश्वासपवनोऽधरादलं यन्मालिनयांचकार तत्रातिचित्रं सकज्जलाश्रुविन्दवो मौक्तिकमणिं यन्न मलिनयांबभूवुरिति चित्रं खल्वेतदेवेति वाक्यार्थयोजना॥१३३

प्रकृतिर्वाम्यदाक्षिण्यादिस्वभावः कृतिस्तनुरूपा चेष्टा । परमामर्षादेः प्रणयसंरम्भविवाददैन्यादेः पिपक्षया पक्तुमिच्छया तान् परिणामविशेषं प्रापयितुमिच्छयेत्यर्थः । तण्डुलान् पिपक्षतीतिवत् । त्रिविधहृद्विकारनिमित्तं विविधा एव श्रियः शोभा यासां ताः हेत्वर्थप्रयोगे सर्वविभक्तीनां प्रायदर्शनमिति प्रथमा ॥ १३४ ॥

काश्चन मुखामोदेति स्वसुहृत्सख्याः स्वयूथेश्वर्याश्च दुःखेन दुःखिन्यः दक्षिणमृद्व्यो भद्राशैव्याप्रायाः सगदं सागयं यथा स्यात् तथा ॥ १३५ ॥

काश्चन स्तवकैरतिदन्तप्रकाशेन पूर्वतो वैशिष्ट्यात् स्पष्टभाषिण्यः इमा दाक्षिणाः प्रखराः पद्माप्रभृतयो ज्ञेयाः॥ १३६ ॥

काश्चन अनुरागेति भाषणे चातुर्योदयान्मध्यस्थ्यकया तस्मादेव स्वराभ्यासप्राप्त्याहित्यया वामभध्या विशाखादय इमा गिरामधीश्वरी स्वरस्वती तस्या एव जिह्वागोचरं वच इति सेव तादृशं वक्तुं जानाति नान्या कापीति भावः ॥ १३७ ॥

चित्रं खल्विदमेव यदुपरतवदनानां सुवदनानां काश्चिदाहुः ॥ १४५ ॥
कृतीनां वदनविम्बानां गलितेष्विव नवलावण्यापादयितुमर्हसि नो विशिष्य ।संतर्प-
दवस्थं तद्बिन्दुविशेषामिव बीजत्वेन स्थिततयेव रसं न विषं पयोदाः ॥ १४६
पतन्तोऽपि कज्जलाविला विन्दवो नयनवारां बन्धूनन्धूपमान् यदगमाम तवाङ्घ्रिमूलम् ।
नयां बभूवुः ॥ १३२ ॥
एवं सति निजनिजप्रकृतिकृतिवैचित्र्ये ऽच्छाजले जलधरस्य हि चातकीनाम् १४७
देर्विविधवृद्धिकारकारणं विविध परिहासपेशलम् । पत्यपत्यसुहृदामनुवृत्तिर्धर्म इत्यु-
तथाहि कारचन । सम रत्वसौ त्वयि गुरावुपदेशो मादृशीषु पदमेष न धत्ताम् १४८
समनुकुर्वद्भिरालिभि असमूहस्य हस्यमानोऽयं तव व्याहारो हा रोपितो यदयमस्मा-
सगदमगदन् पत्यमपत्यक्तपतिसङ्गानां पतीनामपत्यमिति तत्पुरुषे पुरुषेश्वर नय-
कारचन यतस्त्वदतिरिक्तोऽरिक्तोत्तमगुणरत्नाकर रत्नाकरतनयाराधितचरणना

---

तण्डुल प्रथं ख्यातं तादृशसंतापेऽपि कात्स्न्येनानपगमशीलत्वात् ॥ १४५ ॥
कार हृदरुपा हृदि अरुम्भणो यतस्तादृशेन परुषाक्षरेण ॥ १४६ ॥
रसना एवं तस्याऽसमीक्ष्य कारित्वं प्रदर्श्य स्वेषां तु युक्तकारित्वमाहुर्युक्तमिति अन्धूपमान् कूपतुल्यान् । तकीनामित्यनेन स्वेषां भावस्य नैसर्गिकत्वस्तव्यत्वे एव न त्वौपाधिकत्वगर्हणीयत्वे इति
लावि ज्ञितम् ॥ १४७ ॥

उपर त्वयि गुरौ एष एव उपदेशोऽस्तु रात्रौ निर्जनवने सुन्दरीजनानाकृष्य स्वयं गुरुः सन्नेवमेव
शोपर नमुपदिशन् सन् सदा वर्त्तस्वेत्यर्थः । ननुः किं वक्रं परिहसथ नहि नहीत्याहुः मादृशीषु
उत शीषु एष उपदेशः पदं न धत्तां इति काक्वा अपि तु धत्तामेवेत्यर्थः । एतदर्थमेवागता वयं
तर न धर्मोपदेशं प्राप्य कृतार्थ एवाभूमेति भावः । यद्वा स्पष्टमभिधयैवाहुः त्वयि गुरौ सत्येव
मा एष उपदेशोऽस्तु न च तव गुरुत्वं नाप्यस्माभिस्त्वं गुरुः क्रियसे तव गोपजातित्वेन धर्मोप-
स देष्टृत्वानर्हत्वात् अस्माकं च यत्र श्रद्धाराहित्यादिति भावः । ननु भो हठिन्यो मुनिवचनमेवानु-
वदामि सत्यं मादृशीष्विति मादृश्योऽनधिकारिण्यः इतिभावः । यद्वा त्वयि गुरौ एष उपदे-
शोऽस्तु गुरुर्हि स्वयं धर्ममाचर्य्यैव अन्यांस्तत्र प्रवर्त्तयितुं शक्नोति त्वया तु गोहिन्यवतारे को
ऽपि पतिर्न कृतः कृतादपि महेशात् पत्युरपत्यं न जनितं नाप्यनुवृत्तिः कृतेत्यधुना तु तथैव
तत्तत्क्रियतामिति भावः ॥ १४८ ॥

अरातिसमूहस्य हन्तरिति केवलमसुरमारण एव तव रसिकत्वमिति भावः । हा पीडायां आरोपितःपरिवादःएव दत्त इत्यर्थः । पतीनामपत्यमित्यन्यसपत्नीजातमित्यर्थः अतो हेतोः पर पतिः नास्तीति तत्प्रसक्तेः मानसानां मनोजातानां अधिरूपाणां अरीणां अन्यो हन्ता न भवति । रत्नाकरतनया लक्ष्मीःसर्वनारीगणमुख्यापि नारायणस्य कान्तापि त्वामेव पतिं प्राप्तुं त्वच्चरणमाराधितवतीत्यर्थः। "यद्वाञ्छया श्रीर्ललनाचरत्तप" इत्यादेः। गोपराजनन्दनत्वेनैव कृष्णे प्राप्तनिष्ठानामपि तासामियं माहात्म्यस्फूर्त्तिः प्रेमकृतैव प्रेमाह्रासदपि महात्म्यं स्फोरयति किमुत सत् ततश्च प्रेमातिशयस्तु माहात्म्यातिशयमेव यथा आदिभरतचरिते " किंवा अरे आचरितं तपस्तपस्विन्या यदियमवनिरित्यादिगद्ये स्वमृगपदस्पर्शेन पृथिव्या अपि भाग्यं वर्णितमिति एव

काश्चन ।अतिचञ्चललोचनाम्बुः ॥
पुण्डरीकख ड दशनानां पत्पा रुप १३६ ॥
मदशोणकटाक्षवीक्षणैः कुटिलाभिःतमसुभिर्म्लानं वक्त्रैस्तनूयितमङ्ग-
नसलताग्रेभ्यः सरतं मणीमयकङ्क
म.धवमाधभाषिरे ॥ १३९ ॥

काश्चन । विनयानुनयानुरागलक्ष्मीप ...रितमसुभिस्तेन प्रेम्णो द्विगे-
द्गदस्वरेण प्रथितोत्कण्ठमकुण्ठिताः सुकण्ठ्यः ॥ ...हरीकाण्डरेखालिखन-

केवलं नयनकज्जलाविलैरश्रुभिः स्नपिततप्तवक्षसः ...रज्यमानाः
का गद्गदं निजगदुः कुमारिकाः ॥१४१॥ ...१ ॥

एवं प्रतिप्रकृति विप्रकृतिविशेषतया या यथामनीषमुक्तवत्योऽ...
मथ कालकूटकुटिलेन दुःखेन तासां तथा तथाविधेन क्रमेण प्रतिव...
निरूपयामहे ॥१४२॥

या महेन्द्रादिगुरुणाङ्गिरसेन गुरुणाङ्गिरसेन यथार्थतया कथयितुं न शक्य...

अहो नः साहसं हसन्तु न सन्तो यदयमुपक्रमो रसज्ञा रसज्ञानमदकप...
न्दनाय नायमस्माकमपराधो यतः क्षुद्रोऽपि क्षुद्रोपितवैकल्योऽकल्योऽपि दु...
मिष्टमिष्टद्रव्यमभिलषति ॥ १४४ ॥

काश्चन अतिचञ्चलेति रोषादल्पाल्पकटाक्षाणामपरिन्दीवरत्वं स्वसखीनाशोणकटाक्ष...
दृष्ट्या भद्रमुचितमेव किमत इत्यनुमोदनेनान्तः प्रसादोदयात् बहिस्तु रुषा भाषणे पारुष्या...
यथायोगं वाम्यप्राखर्याभ्यां युक्ताः श्रीराधादिसख्य इमाः ॥ १३८ ॥

मदशोणेति सौभाग्याधिक्येन मदीयतामयभावादतिवाम्योदयात् अतिरोषवत्यः श्रीराधा...
मालतिकादय आवभाषिरे इत्याहुः अत्राङ्ग ईषल्लसम्यक्त्वाभ्यामथार्भ्यां मध्यात्वप्राखर्ये अ...
यथायथमवसेये ॥ १३९ ॥

काश्चन विनयेति तदीयतामयभाववत्यः दक्षिणामृद्व्यश्चन्द्रावल्यादयः विनयादीनां परभागे
रुत्कर्षैः समभागं तुल्यमेव भागधेयं सौभाग्यं यासां ताः यावन्त एव विनयाद्युत्कर्षास्तावन्त्येव
सौभाग्यानीत्यर्थः ॥ १४० ॥

केवलमिति मुग्धात्वेन मृद्व्यो धन्यादय इमा अनूढाः ॥ १४१ ॥

प्रतिप्रकृति प्रकृत्या प्रकृत्यास्वस्वस्वभावेन या विशिष्टाः प्रकृतयः प्रकारास्ताभिरेव विशेषोयासां
तत्तया अक्तवत्यः प्रक्षितवत्यः ॥१४२ ॥

आङ्गिरसेन बृहस्पतिना कथयितुं न शक्यते किं पुनर्वर्णयितुमिति भावः । गुरुणा बृहद
आङ्गिरसेन अङ्गानां रसेन शृङ्गारेण यथार्थतया औचित्येन ॥१४३ ॥

क्षुधा बुभुक्षया रोपितं वैकल्यं यस्य सः । अकल्योप्ययोग्योऽपि यद्वा रोगयुक्तोऽपि कल्यौ
सज्जनिरामयावित्यमरः ॥ १४४ ॥

चित्रं खल्विदमेव यदुपरतवदनानां सुवदनानां ।श्चिदाहुः ॥ १४५ ॥
कृतीनां वदनविम्बानां गलिनेष्विव नवलावण्या। ।दयितुमर्हसि नो विशिष्य।संतर्प-
द्रवस्थं तद्बिन्दुविशेषामिव वीजत्वेन स्थिततयेव र। सं न विषं पयोदाः ॥ १४६
पतन्तोऽपि कज्जलाविला विन्दवो नयनवारां रसं न विषं पयोदाः ॥ १४६
नयां वभूवुः ॥ १३२ ॥ न्धूनन्धूपमान् यदगमाम तवाङ्घ्रिमूलम् ।
एवं सति निजनिजप्रकृतिकृतिवैचित्र्येऽच्छाजले जलधरस्य हि चातकीनाम् १४७
देर्विविधवृद्धिकारकारणं विविधरतिपरिहासपेशलम्।पत्यपत्यसुहृदामनुवृत्तिर्धर्म इत्यु-
तथाहि कश्चन । प्रश्नस्त्वसौ त्वयि गुरावुपदेशो मादृशीषु पदमेप न धत्ताम्१४८
समनुकुर्वद्भिरलिभिःसमूहस्य हस्यमानोऽयं तव व्याहारो हा रोपितो यदयमस्मा-
सगदमगदन् गपत्यमपत्यक्तपतिसङ्गानां पतीनामपत्यमिति तत्पुरुष पुरुषेश्वर न ध-
कश्चन:यतस्त्वदतिरिक्तोऽरिकोत्तमगुणरत्नाकर रत्नाकरतनयाराधितचरण ना

---

तण्डुल यथं स्यातं तादृशसंतापेऽपि कार्त्स्न्येनानपगमशीलत्वात् ॥ १४५ ॥
कार
रसना इरुया हृदि अरुन्नणो यतस्तादृशेन परुषाक्षरेण ॥ १४६ ॥
एवं तस्याऽसमीक्ष्य कारित्वं प्रदर्श्य स्वेषां तु युक्तकारित्वमाहुर्युक्तमिति अन्धूपमान् कूपतुल्यान्।
तकीनामित्यनेन स्वेषां भावस्य नैसर्गिकत्वस्तव्यत्वे एव न त्वौपाधिकत्वगर्हणीयत्वे इति
लाविङ्कृतम् ॥ १४७ ॥
उपर त्वयि गुरौ एष एव उपदेशोऽस्तु रात्रौ निर्जनवने सुन्दरीजनानाकृष्य स्वयं गुरुः सन्नेवमेव
शेषद मुपदिशन् सन् सदा वर्त्तस्वेत्यर्थः । ननुः किं वक्रं परिहसथ नहि नहीत्याहुः मादृशीषु
उत शीषु एष उपदेशः पदं न धत्तां इति काक्वा अपि तु धत्तामेवेत्यर्थः । एतदर्थमेवागता वयं
तस्य म धर्मोपदेशं प्राप्य कृतार्थ एवाभूमेति भावः । यद्वा स्पष्टमभिधयैवाहुः त्वयि गुरौ सत्येव
भार एष उपदेशोऽस्तु न च तव गुरुत्वं नाप्यस्माभिस्त्वं गुरुः क्रियसे तव गोपजातित्वेन धर्मोप-
स देष्टृत्वानर्हत्वात् अस्माकं च यत्र श्रद्धाराहित्यादिति भावः।ननु भो हठिन्यो मुनिवचनमेवानु-
वदामि सत्यं मादृशीष्विति मादृश्योऽनधिकारिण्यः **इतिभावः** । यद्वा त्वयि गुरौ एष उपदे-
शोऽस्तु गुरुर्हि स्वयं धर्ममाचर्य्यैव अन्यांस्तत्र प्रवर्त्तयितुं शक्नोति त्वया तु गोहित्यवतारे को
ऽपि पतिर्न कृतः कृतादपि महेशात् पत्युरपत्यं न जनितं नाप्यनुवृत्तिः कृतेत्यधुना तु तथैव
तत्तत्क्रियतामिति भावः ॥ १४८॥

अरातिसमूहस्य हन्तरिति केवलमसुरमारण एव तव रसिकत्वमिति भावः । हा पीडायां
आरोपितःपरिवादःएव दत्त इत्यर्थः । पतीनामपत्यमित्यन्यसपत्नीजातमित्यर्थः अतो हेतोः पर
पतिः नास्तीति तत्वाप्रसक्तेः मानसानां मनोजातानां अधिरूपाणां अरीणां अन्यो हन्ता न
भवति । रत्नाकरतनया लक्ष्मीःसर्वनारीगणमुख्यापि नारायणस्य कान्तापि त्वामेव पतिं प्राप्तुं
त्वच्चरणमाराधितवतीत्यर्थः।"यद्वाञ्छया श्रीर्ललनाचरत्तप" इत्यादेः। गोपराजनन्दनत्वेनैव कृष्णे
प्राप्तनिष्ठानामपि तासामियं माहात्म्यस्फूर्त्तिः प्रेमकृतैव प्रेमाह्रासदपि महात्म्यं स्फोरयति किमुत
सत् ततश्च प्रेमातिशयस्तु माहात्म्यातिशयमेव यथा आदिभरतचरित्रे " किंवा अरे आचरितं
तपस्तपस्विन्या यदियमवनिरित्यादिगद्ये स्वमृगपदस्पर्शेन पृथिव्या अपि भाग्यं वर्णितमिति एव

तः परः पतिरस्ति नारीणां नारीणां च हन्ताऽन्यो मानमानाम् ॥१४९॥

अन्या आहुः। कुर्वते त्वयि रतिं मतिभाजः प्रेयसि त्रिभुवनात्मनि नित्ये नार्तिदं क्षणविनाशि भजन्ते पत्यपत्यसुहृदादि कुतोऽन्यः ॥१५०॥

एषा हि साधुतमा धुतमाया रीतिः सामान्यानां सामान्यानां च विशेषतोऽशेषतोदहर मादृशां दृशां मनसामुद्धवो धवो भवानेव भवन्तमृतेऽमृतेऽपि नो जुगुप्सा तन्नः प्रसीद सीदतु नायमपायमनुगतो गतोत्साहो जीवलोकनिकरः १५१

छिन्धि माशामाशावकदशमुपचितां कमलिनीमिव हिमागमो मागमोम्लापयितुं नो जिजीविषाम् ॥ १५२ ॥

अपराश्चाहुः। चित्रमत्र भवतापहृतं नो गम्यतां कथमहो वत घोषः। गच्छतो न च पदे पदमेकं नाथ ते पदसरोरुहमूलात् ॥ १५३ ॥

तेन ते न-वचो नवचोर वधूजनमानसस्य मानसस्यशोषकरावग्रहग्रहणयोग्यं भवितुमर्हति ॥ १५४ ॥

इतरा अप्याहुः। मुच्यतां कपटकौतुकधूली सिच्यतामधरबिम्बमधूली। क्रान्तिकारिपरुषोदितमूलः शान्तिमेतु हृदि तापकुकूलः ॥ १५५ ॥

अपरथा मनोरथा मनोजकृताः परितापकृशानुना कृशा नु नाशयित्वा न इमास्तनूरन्याः प्रापय्य प्रापयिष्यन्ति योषिद्वधानुतापमनुभवन्तं भवन्तम् ॥ १५६ ॥

अस्माकं तूभयतो विरहभयतो विरह इति ॥ १५७ ॥

---

एव सिद्धान्तः सर्वत्रापि अनुवर्तयितव्य इति ॥१४९॥ नित्ये इति जीवात्मा व्यावृत्तः ॥१५०॥

सा प्रसिद्धा एषा मान्यानां उत्तमानां सामान्यानां कनिष्ठानां च रीतिः धुतमाया खण्डितकैतवा उद्धवः उत्सवरूपः भवन्तमृते त्वां विना अमृते सुधायामपि नोऽस्माकं जुगुप्सा घृणा १५१

आशावकदशां बालदशामभिव्याप्य उपचितां आशां मा छिन्धि। कमलिनीं हिमागम इव नोऽस्माकं जिजीविषां म्लापयितुं मा गमः मा प्राप्तो भव इत्यर्थः ॥ १५२ ॥

भवता चित्तमपहृतमिति अस्माकं को वा दोष इति भावः ॥ १५३ ॥

तेन हेतुना ते तव वचः मान एव सस्यं तस्य शोषकरोऽवग्रहः वृष्टिप्रतिबन्धः तद्ग्रहणयोग्यं न भवितुमर्हति हे नवचोर ॥ १५४ ॥

अधरबिम्बमधूली सिऽच्यतामिति क्षेत्रे जल सिच्यतामितिवत् तापकुकूलः संतापतुषाग्निः १५५

मनोरथाःकर्त्तारः परितापएव कृशानुरग्निस्तेन नोऽस्मान् कृशा नाशयित्वा नु निश्चितं अन्यास्तनूः प्रापय्य भवन्तं प्रापयिष्यन्ति हन्त निर्जीवसा एता मां प्राप्ता एव अहं तु उपेक्षया स्त्रीवधभागी केवलमभूवमित्येवमनुतापमनुभविष्यसीत्यर्थः ॥ १५६ ॥

अस्माकमिति स्पष्टं भङ्गया तु प्रेमप्रख्यापकोऽप्यर्थः संभवति स यथा ननु स्वकृतं कष्टमहंकारिणः कष्टतया न मन्यन्ते सत्यं अस्माकं उभयतः अधुना स्वीकारे वा तदभावे वा पक्षे विरहरूपं यद्भयं तस्मात्तु विरहो विच्छेद एव किंतु प्रेमहतकप्रस्तानामस्माकं हृदयं तत्त्वदीयं कष्टं सा त्वदीया दुष्कीर्तिर्वाबाधिष्यत एवेति तत् त्राणार्थमेव प्रार्थना इयमिति भावः ॥१५७॥

अपराश्चाहुः । अस्पृशाम कमलोत्सवकन्दौ यर्हिवर्हदलभूप तवाङ्घ्री । ताव-देव हि परस्य समक्षं स्यात्तुमेव न वयं प्रभवामः ॥ १९८ ॥

तदिदं भवत्परपरभागमपरापरामृष्यं समानवयो नवयोषितां लवणिमाधुर्य्यं माधुर्य्यं स्वीक्रियताम् ॥ १९९ ॥

लौकिकतापारमिता रमिता निजजनवृन्दावनमिषेण वृन्दावनमिषेण भवता वतान्तसंतापं नार्हन्ति ॥ १९० ॥

अथश्रुतिरूपा आहुः । वक्षसि स्थितवती च तुलस्याः स्पर्द्धयेव कमला यमुपास्ते । अत्र ते चरणपद्मपरागे रागवान्निकर एष वधूनाम् । अत एव प्रपन्नाः प्रपन्नार्त्तिहारक मास्मान् परिहार्षीः ॥ १९१ ॥

अथ तत्सवासना ऊचुः । तत् प्रसीद करुणाम्बुनिधे नः संगताः स्म वसतीः परिहाय । त्वत्पदाम्बुजपलाशविलासस्वादमोदमदिराधुतबुद्धीः ॥ १९२ ॥

तदधुना धुनानो मोहं पुरुषभूषण भूषणहर वरकरुणारुणापाङ्गनिरीक्षणक्षणवलवलमानसा मानसारस्येन प्रभाविह विहसितसितताछुरितदशनवसनारुण्यतारुण्यतात्कालिकशोभाविशेषाशेषार्त्तिहारिणा वचनामृतेन विपणय्य कुरुष्वोच्चैर्नो दासीर्नोदासीनो भवेति ॥ १९३ ॥

---

कमले इव उत्सवकन्दौ उत्सवसुखदातारौ ॥ १९८ ॥

तत्तस्मात् इदं नवयोषितां माधुर्य्यं स्वीक्रियतां भवत्पर एव परभागः शोभा यस्य तत् अपरैः अन्यजनैः अपरामृष्यं परामष्टुमशक्यं समानं त्वत्तुल्यमेव वयो यत्र तत् आसम्यग् धुर्य्यं आश्रयरूपम् ॥१९९॥

ननु लोकनिन्दा भविष्यतीति तत्राहुः । लौकिकतायाः पारं इताः प्राप्ताः त्यक्तलोका इत्यर्थः । इयं प्रकटसंभोगप्रार्थना रसाभासत्वेन न पर्य्यालोचनीया तस्याः प्रकृतिस्थनायिकामुखोत्थत्वेन तज्जैर्लक्षितत्वात् अत एव मधुपानमत्ताया नायिकायाः प्रकृतिस्थत्वाभावे प्रत्युत सा गुणत्वेनोक्तं आसां पुनः प्रियतमोपेक्षावाग्वज्रविशीर्णसर्वमर्मणां महासन्तापोन्मथितचित्ततया प्राप्तप्रकृतिविपर्य्ययाणां सेयमनुरागप्रख्यापनायैव उन्मादाविर्वचरूपा परमवाम्यवर्त्तिनामप्यासां मुखादेतत् शुश्रूषयैव रसिकेन्द्रेण तेन तथा व्यवसितमिति ॥१९०॥

श्रुतिरूपा इत्यैश्वर्य्यज्ञानसंस्कारवत्यो दासिमन्याः संप्रति दैन्येन तु नितरामेवेति भावः । वक्षसीति "तस्मान्नन्दात्मजोऽयं ते नारायणसमो गुणैरिति" । प्रसिद्धा गोपनन्दनस्यास्य नारायणैक्यमेव परमैश्वर्य्यमिति मन्वानाः कमलापि ते यथा दासीभावमिच्छति तथा वयमपीत्याहुः अप्यर्थे चकारः ॥१९१॥ तत्सवासना इति मुनिरूपा इति भावः ॥१९२॥

भुवः पृथिव्या एवं ऊषणं संतापस्तं हरतीति हे तादृश । अरुणापाङ्गेन निरीक्षणमेव क्षण उत्सवः स एव वलं तेन वलमान मानसं यासां ता नोऽस्मान् वचनामृतेन विपणय्य क्रीत्वा दासीः कुरुष्व । मान आदरस्तेन सह सारस्यं तेन सादरसरसतयेत्यर्थः विहसितस्य सितस्य सिततया श्वेतिम्ना छुरितस्य दशनवसनस्य आरुण्यतारुण्येन तात्कालिको यः शोभाविशेषस्तेनाशेषार्त्तिहारिणा ॥१९३॥

एवमन्या अपि तत्सवासना ऊचुः। खेललोलमणिकुण्डलभास्वद्गण्डमण्डलम-खण्डितशोभम्। वीक्ष्य ते स्मितसुधामधुरोष्ठं वक्त्रचन्द्रमभवाम हि दास्यः ॥१६४॥

मधुमधुरहसितामृतमृतसंजीवनवननकारिण्यो भयभयदमायतमायतमानसौभगमति चारु चारुणकरकमलाग्रं कमलाग्रन्थिहरं भुजदण्डयुगं विलोक्य भवाम दास्यौ दास्योचितमेममेमनसि नो धारय रयतः ॥ १६५ ॥

अथ नित्यसिद्धा ऊचुः। सकलसुभग भगवन् पुरुषरत्न गुणरत्नगुणनिकागार किं तावदासां दूषणम् ॥ १६६ ॥

काः स्त्रियस्तव मनोहरवंशीकूजिताहृतहृदः परिहाय। साधुशीलकुलशीलसुशैलीमार्य्य नार्य्यचरिताद्विचलेयुः ॥ १६७ ॥

यतस्त्रिलोकलोचनचमत्कारकारणमखिलभुवनलक्ष्मीसौभगभगवत्तास्पदं पदं सौन्दर्य्यावधेः परममाधुर्य्यधुर्य्यमतिरमणीयरमणीयत्नसाध्यरूपं रूपं तवेदमालोक्य निर्भरमेदिनी मेदिनीगतखगमृगपशुततिरतिविपुलपुलककुलकलितां तनुं धत्ते १६८

पुनः श्रुतिरूपा ऊचुः। आर्त्तिहा व्रजभुवां भवसीति व्यक्तमेव हि विभो भुवनेषु आदिपूरुष इवामरगोप्ता तेन हातुमिह नार्हसि नस्त्वम् ॥ तेनार्त्तबन्धो निर्वन्धो निर्भरोऽयं मा क्रियतां करुणानिधे विधेहि संतप्ते न उरसि शिरसि शिशिरतरं रतरञ्जि करकमलममलमलमतिमति संतापमलनकृते किङ्करीणां रीणां हृदयाधारां धारां वाष्पविपवारां वारान्तरानावर्त्तिनीं विधेहि किमतिप्रसङ्गेन नो मनो रञ्जय जय जय विकलानां सकलानां सर्वदा समुत्तापतापहाराय ॥ १६९ ॥

किंच। वंशीकलेनबडिशेन झषीरिवास्मानाकृष्य सवगुणजुषा सुरसामिषण

खेलेन लोलाभ्यां मणिकुण्डलाभ्यां भास्वद् दीप्यमानं गण्डमण्डलं यत्र तं श्लेषेण कुण्डले एव भास्वन्तौ सूर्य्यौ यत्र तद्गण्डमण्डलं यत्र तं तथाप्यखण्डितशोभम् ॥ १६४ ॥

हसितामृतमेव मृतसंजीवनं तस्य वननकारिण्यो याचिका वयं दास्यो भवाम "वनु याचने" भुजदण्डयुगं विलोक्य कथंभूतं भयस्यापि भयदं आ सम्यक् यतमानं स्थातुं प्रयत्नपरं सौभगं यत्र तत्कमलायाः शोभाया ग्रन्थिग्रन्थनं हरतीति तत् ग्रथितसर्वशोभाकमित्यर्थः। दास्योचितं प्रेमाणं माति पूरयतीति तथाभूते नोऽस्मान् ॥ १६५ ॥

भगवन् हे श्रीयुक्त गुणनिकागार नृत्यमन्दिर भवेद्गुणनिकानृत्य इतिमेदिनी ॥ १६६ ॥

हे साधुशील हे आर्य्य इति वैपरीत्यापादकं त्वच्चेष्टितं कथमिति पृच्छाम इति भावः॥१६७॥

अतिरमणीयाभिरपि रमणीभिर्यत्नसाध्यरूपं न त्वनायासलभ्यमित्यर्थः। एतत् प्रत्यर्थं तास्तीव्रतपोव्रतादिकमपि कर्त्तुमर्हन्ति नतु कदाचिदप्यतो विरन्तुमिति भावः। यतो मेदिनीगतेत्यादि। निर्भरमेदिनी अतिशयस्नेहवती ञिमिदा स्नेहने" ॥ १६८ ॥

रतरञ्जि रतं रञ्जकम्। अतिशयो यो मतिसंतापस्तस्य मलनं मर्दनं दूरीकरणमिति यावत् तत्कृते ततश्च वाष्पविपवारां धारां वारान्तरे पुनर्न आवर्त्तितुं शीलं यस्यास्तथाभूतां विधेहि। सम्यगुत्तापो यासां तद्वादस्तस्ता तस्या अपहाराय ॥ १६९ ॥

वंशीकलेनेत्यादयो राधासखीभिः सह श्रीकृष्णस्य उक्तिप्रत्युक्तय इत्येवं रससाराधिका इ-

[illegible] पेक्षणवीतिहोत्रे ॥१७०॥

[illegible] । यदितो विकलाःकुलाङ्गनाःस्युःसकला एव तदत्र मे क दोषः ॥ १७१ ॥

सद्वंशभूरकुटिला सहजैकपर्वा सारान्विता च मुरली नहि दुष्यतीयम्। अस्याः कलैवत जनं जनमेव नामग्राहं यदाह्वयसि नः स तवैव दोषः ॥ १७२ ॥

मुरली मरुदाभिमुख्यमात्रे ध्वनतीयं न मयैव वाद्यमाना। स्वयमाह्वयतीयमिच्छया वः सकलानामपि नाम नाम वेति १७३ ॥

एवं चेत्तथापि तवैव दोषः नहि तत्र भवतो भवतोऽसाधुसङ्गः समुचितः। तथाहि। छिद्रैर्युताबहुभिरेव कठोरगात्री शून्यान्तरातिमुखरा महतो न वंशात्। जाता परस्य कुलपङ्ककलङ्ककर्त्री वंशी तवेयमिह नार्हति साधुवादम् ॥ १७४ ॥

अहो नादब्रह्मोपनिषदमिवैनां भगवतीं नवच्छिद्रां मूर्त्तिस्वयमुपनतां मत्प्रणयतः। चिदानन्दाकारां मम करसरोजद्वयचरीं यशोहंसीं वंशी हसथ बहु वः साहसमिदम् ॥ १७५ ॥

इत्येवं रससाराधिका राधिका सहचरीभिः सह वचनप्रतिवचनचातुरीतुरीयदशायामपराश्च पराश्चर्य्यबोधेन विदग्धशेखरस्य खरस्यदोपेक्षाहानिमवधार्य्य यदि विकसन्मुख्यो मुख्योत्कण्ठानुचरीभूतसरसतात्पर्य्यपर्य्यवसितसितस्मितलेशाश्च यदि बभूवुः ॥१७६ ॥

---

यप्रतनगद्येन व्यक्ती भविष्यन्ति शोभनो रसः नादव्यज्यमानः शृङ्गार एव आमिषं यत्र तेन श्लेषेण सुरसं आमिषं मत्स्यलोभनीयं यत्र तेन वडिशेन। शूलाकरोपीति शूलात् पाक इति डाचू शिक इति ख्यातम् ॥ १७० ॥

सकला एव समस्ता एव श्लेषेण कलाभिः सहिता एव नान्या इति गानादिकलातंत्राविज्ञते च युष्मास्वनर्थकारिणीति भावः ॥ १७१ ॥

सहजमेकं सर्वग्रन्थिरूपस्तबश्च यस्यां यतश्च नामग्राहं नाम गृहीत्वा नाम्न्या दिशि ग्रहोरिति णमुल् ॥ १७२ ॥ नाम प्राकाश्ये नामसंज्ञाम् ॥ १७३ ॥

नन्वसाधुत्वं मुरल्याः कथमिति चेत् त्वद्वचनेनैव तदायातं प्रत्यक्षतोप्युपलभ्यते चेत्याहुः छिद्रैरिति एवं च सद्वंशभूरित्यादिना वर्णितो गुणस्तु विषकुम्भपयोमुखखलन्यायेन दोषायैव इति द्योतितम् ॥ १७४ ॥

इव शब्द एवार्थे नवछिद्राकारां मूर्त्तिं तनुं स्वयमेव कौतुकवशादुपगतां प्राप्ताम्॥१७५॥ तुरीयदशायां उत्तरकाष्ठायां अपरा अपि रससारेणाधिकागोप्यः खरस्यदायास्तीक्ष्णवेगाया उपेक्षाया हानि अवधार्य्य यदि विकसन्मुख्योवभूवुस्तदा सोऽपि स्वात्मारामः स्वात्मानं रमयन्नेव रागोत्तमास्ता रमयितुमारेभे। कीदृश्यः मुख्या या उत्कण्ठा तस्या अनुचरीभूता तदनुगामिनी या सरसता वाक्चातुर्य्यनिष्ठा तयैव सतात्पर्य्यं यथा स्यात्तथा पर्य्यवसितो निर्द्धारितः सितः निर्मलः स्मितलेशो याभिस्ता अवहित्थायदुरपह्नवस्य स्मितस्य लेशो निष्क्रान्त एव परिचितस्तस्य तात्पर्य्यमपि ताभिरवगतमित्यर्थः ॥ १७६ ॥

तदा मृदुहसितेन सितेन दशनमहसा महसारस्येन वचसा च साधु सम्मानयन्नयन्नानन्दस्य परां कोटिमतिकोटिमतिमतिमदत्तर्क्यं मदतर्क्यमाणरिरंसोऽरं सोऽपि कोटिकन्दर्पदर्पहारी स्वात्मारामो रामोत्तमा रमयितुमयितुमपि तासामनुरागपारावारपारावारयोर्मध्यमारेभे मारेभेणानुगतः ॥१७७॥

ततश्च । आनन्देन समन्ततो जयजयेत्युत्कीर्त्तितं पत्रिभिर्वल्लीभिः परितः स्मितं क्षितिरुहैः रोमाञ्चितं सर्वतः । अन्योन्यप्रियसंकथाकुलतया संयुक्तमेणीगणैः पुष्पाणां मकरन्दबिन्दुनिवहैः स्विन्नं धरण्यापि च ॥ १७८ ॥

एवं स्मरसमरसमरसचिन्तामणीरमणीरतिपरभागभागधेयाधेया व्रजपुरपुरन्दरनन्दनस्य विजिहीर्षा हीर्ष्यादिदोषरहितहिततरेतरेतरसौहृदहृदयालुतमाभिस्ताभिः समं यदि समजनि ॥ १७९ ॥

तदा युगपदेव ता वनदेवता वनचरखगमृगतरुवल्लयश्च ता मूर्च्छोत्थिता इव तदैव समुत्पन्ना इव देहान्तरमासादिता इव स्नाता इवामृतरसेन समपद्यन्त॥१८०॥

ततश्च । समेताभिस्ताभिः सहसहरिरानन्दलहरीहरिद्वृन्दाप्लावी स्मितमधुरमुग्धास्यविधुभिः । अकम्पाभिः शम्पाततिभिरिव संपालिततनुर्धराधारो धाराधर इव नवीनो व्यवहरत ॥ १८१ ॥

---

ततश्च व्यक्ताया अवहित्थाया रक्षणमनुचितमिति मत्वा हसितेनेत्यादि महसारस्येन वचसा चेति मम वाक्कूटकौतुकविलसितं भवतीभिः सम्यगेवाद्य निर्वाहितमित्यादिप्रकारकेण । ननु तासां मध्ये मध्ये कयापि तस्य रिरंसा प्रथमं किमिति न तर्कयितुं अशक्यतेति तत्राह अतिशयः कोटिरुत्कर्षो यस्यास्तथा भूतमतिगतिमद्भिरप्यतर्क्यो यो मदो मत्तता तेनैव तर्क्यमाना रिरंसा यस्य सः । यदि मदस्तर्कयितुं शक्येत तदातत्कारणभूता रिरंसापि सुखेनेत्यर्थः । ताभिस्तु परमबुद्धिमतीभिरपि स्वानुरागोन्मत्ततयैव स न तर्कित इति भावः । अयितुं गन्तुं । पारावारः समुद्रः । मारेभेण कामहस्तिना ॥ १७७ ॥

पत्रिभिः पक्षिभिः ॥ १७८ ॥

तस्य ताभिः सह विजिहीर्षाकर्मभूता स्मरसमरे कामसंग्रामे समः कृष्णतुल्य एव रसो यासां ताश्च ताः चिन्तामण्यः श्रीकृष्णाभीष्टसंपादयित्र्यश्च या रमण्यस्तासां रतिपरभागः प्रेमसौन्दर्य्यं परं श्रेष्ठं भागधेयं भाग्यं तदेव आधेयं यस्यां सा । कीदृशीभिः ईर्ष्यादिदोषरहिताश्च ताः प्रत्युत हिततराश्च प्रत्युततरां इतरेतरसौहृदेन हृदयालुत्तमाश्चेति ताभिस्तत्र कारणं तु व्याख्यातं पूर्वमेव ॥ १७९ ॥

मूर्छोत्थिता इवेति तासां शोकेन तावत्कं मोहपर्यन्तदशां प्राप्य स्थिता इवेति भावः । तदैव समुत्पन्ना इवेति ततोऽप्यग्रेतनमृत्युदशां च । देहान्तरमिति तदानीन्तनस्तादृश आनन्दश्च तस्मिन् जन्मनि कदापि ताभिर्न लब्ध इवेति भावः । अत्र हेतुः अमृतेति ॥१८०॥ संपालित इति ताभिः समन्ताद्रक्षणात् धरा । पृथ्वी आधारो यस्य स भूमिष्ठ इत्यर्थः धाराधरो मेघः ॥ १८१॥

ततश्च । सोत्कण्ठैरुपगीयमानचरितः प्रेम्णा सुकण्ठीगणैः कण्ठेनापि च वेणुनापि च कलं गायन् क्रमेणैव सः । मालामालुलितामलीन्द्रगरुतां वातैः पदालम्बिनीं बिभ्राणः प्रतिभूरुहं प्रतिलतं बभ्राम दामोदरः ॥ १८२ ॥

एवं सति समयसमयमानया प्रेमरसोक्षितयाऽलक्षितया लसदघटनघटनसमर्थप्रभावया योगमाययागमायया यथावस्थितत्वरागमनविपर्यस्तसमस्तवेशभूषाणां स्मरसमरगणीनां रमणीनां तत्कालमासामासाद्यमानसारजनिरजनिवनविहाररसमुचिता वेषभूषा महानुभावया भावयामासे न च ता अपि ताद्विदुरहोरहोऽस्याः १८३

तथाभूतासु तासु वसुधासुधायमानेन सुधाकरकरनिकरेण कलधौत जलधौतइव वनमध्ये सह ताभिर्वनविहारणरणपरपरमानन्दो मानन्दोह्यमिव १८४

चित्रैः पत्रैर्नखविदलितैः कल्पयन् पत्रलेखां नानापुष्पैः स्वकरविचितैः कञ्चुलीं निर्मिमाणः । वल्लीखण्डैस्तवकचटुलैः साधयन्नङ्गदादीन्यासांतेनेऽलककलिलतां धूलिभिः कौसुमीभिः ॥ १८५ ॥

किंच । हारं मल्लीकुसुमनिकरैः पत्रपश्यां कदम्बैरुत्तंसं च स्थलसरसिजैर्गण्डशोभां च लोध्रैः । कुन्दैःकण्ठाभरणरचनां केसरैः काञ्चिमासां कुर्वन् स्वीयांयुगपदनवां दर्शयामास शिक्षाम् ॥१८६॥

एवं तासां च । काचित्केशरकुड्मलं श्रवणयोः काचित्करे केतकीं काचिद्वक्षसि तस्य मल्लिकुसुमैराकल्प्य हारोत्तमम् । उष्णीषेऽकृत किङ्किरातमपरा यूथीस्रजः खण्डकैः काचित्कङ्कणमङ्गदं च वकुलैः काचिच्च काञ्चीगुणम् ॥१८७॥

एवं पारिप्सितेप्सितेतरविलक्षणलक्षणस्य रासविहारस्य रस्यतमानि वनविहारतौरसवनृत्यकलाजलविहाररूपाण्यङ्गानि चत्वारि ॥१८८॥

तेषु चारब्धे वनविलासे निराविलासे निरावरणरणन्मदकलकलकण्ठरोलम्बलम्बमानकलझङ्कारमाधुरीधुरीणासु दिङ्मण्डलीषु मदनमदनमद्धियो धियोढकृष्णरतयो युवतयो यूथश एव । पुन्नागेभ्यः कनकरुचिभिश्चीयमानैः परागैर्भृङ्गासङ्गादपि सु

गरुतां पक्षिणाम् ॥ १८२ ॥

अगमो दुर्ज्ञेयः अयः शुभावह विधिर्यस्यास्तया योगमायया आसां आसाद्यमानासारजनिरुत्कृष्टजन्म यया तस्यां रजनौ वनविहारे समुचिता वेषभूषा वेषेण षोडशाकल्पात्मकेन सह भूषा द्वादशाभरणात्मिका भावयामासे चक्रे इत्यर्थः ॥ १८३ ॥

करनिकरेण हेतुना कलधौतस्य रजतस्य जलेन धौत इव ॥ १८४ ॥

स्तवकेन चटुलैः शोभनैः ॥ १८५ ॥

पत्रपाश्यां ललाटालङ्कारम् ॥१८६॥

तासां च मध्ये किंकिरातं अशोकं अपरा श्रेष्ठा काचित्सर्वत्र अकृतेत्यनेनान्वयः ।१८७।

पारिप्सितस्य प्रारब्धुमिष्टस्य इप्सिततरतौलीलान्तरात् विलक्षणं लक्षणं यस्य तस्य।१८८।

निराविल आसः स्थितिर्यस्य तस्मिन् निरावरणंयथा स्यात्तथा रणतां कूजतां मदकलानां मत्तानां कलकण्ठानां कोकिलानां रोलम्बानां भृङ्गाणां लम्बमाना या कलझङ्कारमाधुरी तस्या धु

विशदां चन्द्रिकां म्लापयद्भिः। तत्राकालस्मरेण इवोद्धूतधूलीप्रपूरैर्झञ्झारक्षुभितवलयैरप्यधुः प्राणनाथम् ॥१८९॥

ततश्च। नानापुष्पैःस्वयमवचितैः कन्दुकान् कल्पयित्वा तैस्तैर्निघ्नन् युगपदभितो हन्यमानश्च ताभिः। अक्षोभेण व्यजयत वधूयूथपानां स यूथं तत्पर्व्याये जय जय जयेत्याजगे पक्षिसंघैः ॥ १९० ॥

ततश्च। दर्पोत्सेकात्सहपरिजनां राधिकां जेतुकामे कृष्णे पूर्वं जितवति सा कन्दुकैरालिवृन्दम्। तस्याः कोपभ्रुकुटिकुटिलैर्निर्जितेऽस्मिन् कटाक्षै रेणूहीं ह जितमिति मुहुस्तद्गणाः पक्षिसंघाः ॥ १९१ ॥

एवं क्षणक्षणनवनव एव तस्मिन परमरमणीये कौतुके क्वचन स एव। आचिन्वानां सुरभिसुरसं केशरं भृङ्गबाधाविन्नास्ताक्षीं चकितचकितं पाणिपद्मं धुनानाम्। पुन्नागं यद्धरसि तदहो योग्यमेतत्तवेति स्मायं स्मायं नमितवदनां स्मापयामास राधाम् ॥ १९२ ॥

एवं सकलाः कलावत्यो दयिताकल्पकल्पनायोग्यानि कुसुमानि समं समन्ततः आहरन्त्यः प्रहरन्त्यः प्रणयनिशितकटाक्षविशिखशिखरैः स्वैर्यदि विरुरुचिरेचिरेण तदा क्वचन ॥१९३॥

पादाग्रेण क्षितितलमवष्टभ्य दोर्वल्लिमुच्चैरुन्नीयैकं कुसुममतुलं दूरतो हर्तुमिच्छुः नीवीस्रंसे चकितचकिता पृष्ठभागस्य धृत्वा दोर्भ्यामुत्थापयति दयिते तत्रपे तत्र राधा ॥१९४॥

एवमत्यामोदया मत्यामोदयाथार्थ्येनान्वितमधुपरागपरभागाणि कुसुमानि तानि मानितानि समाहरन्तीषु विहरन्तीषु विशपतोऽशेपतोपपरीपाकेण समं समन्ततः प्राणनाथेन सहितासु तासु ॥ १९५ ॥

---

वीणासु। मदनमदेन काममत्ततया नमन्ती धीर्य्यासां ताः। अकालस्मरेणे उद्धतधूलीप्रपूरैरिव तादृशैः परागैः प्राणनाथम् अप्यधूः स्मरणारम्भे प्रथममाच्छादयामासुः ॥१८९॥

तत्पर्य्याये कृष्णपक्षीयैः शुकादिभिः ॥ १९० ॥

पूर्वं आलिवृन्दं जितवति कृष्णे पश्चाद्राधिकामपि जेतुकामे सति तदैव तस्याः कटाक्षैर्निर्जितेसति रेणुरचुकूजुः तद्गणाः शारिकादयः ॥ १९१ ॥

श्लेषेण पुन्नागं कृष्णम् ॥ १९२ ॥

दयितस्य कृष्णस्य आकल्पो भूषा। प्रहरन्त्य इति कान्तस्य रिरंसौद्धत्यमालक्ष्यवाग्मेनेति भावः। विशिखशिखरैः शराग्रैः ॥ १९३ ॥

दयिते कृष्णे उत्थापयति सति दुःस्पर्शकुसुमप्रापणप्रयोजनमिषेणेति भावः। तत्रपे लज्जते स्म ॥ १९४ ॥

आमोदस्य सौगन्धस्य याथार्थ्येन स्वभाविकात्वेन न तु दोहदसेकबलात् कल्पितत्वेनेत्यर्थः। अन्विताना अन्वीकृताना मधुपाना रागपरभागः आशक्तयुत्कर्षो येषु तानि अत एव मानितानि ॥ १९५ ॥

काचित्कैतवतो रजः कुसुमजं लग्नं ममाक्ष्णोरिति त्रस्ता पाणिसरोरुहेण व-लयक्वाणेन हाहाकृता । मार्जन्ती त्वरितं समेत्य दयितेनालोकयामीत्यलं. नि-र्भाष्याननपद्ममारुतमिषादक्ष्णोश्चिरं चुम्बिता ॥ १९६ ॥

एवं कुसुमकुसुमहोत्सवरसाकुलस्य कुलस्य कामहेलानां महेलानां समुपचीयमान-मानलहरिणा हरिणा सह सहसा सहसावलोकलोकरमणीयेन रमणीयेन सर्वतोऽविरतोरतोत्सवसबहुमानः स समयो रसमयो रम्यतया समजायत ॥ १९७ ॥

ततश्च । हस्ताप्राप्ये कुसुमनिकरे पाणिमुल्लास्य हर्तुं यां यामेषा स्फुटविटपिनां हन्त नासीत्समर्था । तस्याः सातिप्रणयभयतो हन्त शाखैव तासां मालीभावादिव विनमिता पाणिलग्ना बभूव ॥ १९८ ॥

एवं रुचिरसुचिरवनविहरणरणतो विरम्य रम्यतरतरलतरङ्गरङ्गपरभागभाग-धेयायास्तरणिभुवः पुलिनं विहारक्रमेण क्रमेण रमणीयूथयूथपः स ससार ॥१९९॥

कह्लारोत्पलसौरभप्रणयिना वातेन संमार्जितं कालिन्द्यैव समन्ततः स्वलहरीहस्तेन संस्कारितम् । लिप्तं पूर्णसुधाकरस्य किरणैः कर्पूरधूलिप्रभं प्रेयःप्राप्य ससौरभं त-त्र इतो बभ्राम दामोदरः ॥ २०० ॥

तत्र च घनसारसारधवलवलमानमहसि महसिद्धिकारणसितमयूखमयूखजाले च परस्परं सैकतदिवोरेकरूपभासोर्निजनिजच्छायाभिरेव सैकतमेवेदमिति निश्च-यार्हे रमणीयूथयूथपागणसहितः ॥ २०१ ॥

---

हाहाकृता हाहेतिवादिना दयितेनेति संबन्धः ॥ १९६ ॥

महेलानां महिलानां कामहेलानां कामभाववतीनां समुपचीयमाना मानस्य आदरस्य लहरी येन तेन हरिणा सह सहसेन हास्यसहितेन अवलोकनेन यो लोकरमणीयस्तेन रमणीयाति संभोगार्थं गच्छतीति तेन रमणीयेन अविरतो न विद्यते विरतं विरामो यस्येति समयस्यापि तदिच्छावशात्स्फारत्वमभूदित्यर्थः ॥ १९७ ॥

एषा राधा यां यां शाखां हर्तुं समर्था नासीत्तेषां स्फुटविटपिनां सा शाखैव तासां सर्वासामालीभावादिव तस्याः राधायाः पुनः प्रणयस्यैव भयतो भयेन हेतुना पाणिलग्ना बभूव १९८

तरङ्गाणां रङ्गपरभागात् एव भागधेयं भाग्यं यस्यास्तस्याः क्रमेण पादव्रजनेन ॥ १९९ ॥

रतोपयोगिप्रदेशस्य मार्जनसंस्कारप्रलेपादिकमपेक्षितव्यं भवतीत्यत आह कह्लारेति प्रेयः अतिप्रियं पुलिनमिति गम्यस्थं विशेष्यपदमनुपक्षनीयं तत इतोबभ्रामेति रिरंसया तदुचितस्थाननिर्धारार्थमिति भावः ॥ २०० ॥

तत्र पुलिने स क्षणमितस्ततो विहृत्य विलम्ब्य वनमध्यं अप्ययस्थाय ताभिः समं अरमतेत्यन्वयः । तत्र कीदृशे घनसारसारस्य उत्तमकर्पूरस्येव धवल वलमानं महो यस्य तस्मिन् गहस्य सिद्धिकारणं यत् सितमयूखस्य मयूखजालं तस्मिश्च तादृशे सति सैकतं सिकतामयं तटं च यौध तयोः परस्परमेकरूपभासो. सतोः किंवा सैकतं का वायोरिति संदेहजाते सतीत्यर्थः ॥ २०१ ॥

सर्वासामेव तासां कलगानगानवरतवरतरमाधुर्यधुर्यः क्षणमितस्ततो विलस्य लस्यपानमानसः पुनरपि तटनिकटविकस्वरविविधविविधकुञ्जमञ्जुलं वनमध्यमध्यवस्याय ॥ २०२ ॥

मदनमदमोदमदिरानिरातङ्कः पङ्कजपलाशलोचनो निजानन्दरतो रतोत्सवारम्भमङ्गलतामङ्गलताभिः प्रापयितुमुत्तमसमर्थाभिरताभिरेवरमणीमणीन्द्रमौलिमणिमालाभिः सममरमत ॥ २०३ ॥

प्रेमातिशुद्धमपि केवलमेष तासामारञ्जयन्मदनरागरसैरशेषम् । संप्रार्थितानि निविडस्तनपीडनानि लब्धुंसदन्तनखलेखनकौशलानि ॥ २०४ ॥

एवं नानाप्रकारकारणः प्रकृतिभेदेन वयोभेदेन च वैदग्धीभेदः स च सचमत्कारं कारं कारमेवामोदं दामोदरं मोदरं करोति स्म । ॥२०५॥

यथा । मानसेऽतिसुमहानभिलाषो ना न नेति वचसि प्रतिषेधः । सुभ्रुवां रतिविधिप्रतिषेधौ नात्मबुद्धिविषयौ बहुताते ॥२०६॥

किंच । ह्रीप्रबोधनकरः कररोधः कोपकल्पनमशोणकटाक्षम् । रोदनं च विगताश्रु वधूनां तत्परं प्रियममन्यत कृष्णः ॥२०७॥

किंच । भर्त्सनं स्मितसुधाप्लुतवर्णं पाणिधूननमलक्ष्यनिषेधम् । भ्रूलतासु भृकुटिः कृतकोपाः सर्वमन्तरनुरागमवादीत् ॥ २०८ ॥

तासां कलगानगं अनवरतमेव वरतरं यन्माधुर्य्यं तस्य धुर्य्यः । विविधं बहुविधं च वीन् पक्षिणोविशेषेण धत्त इति विविधं च यत् कुञ्जं तेन मञ्जुलम् ॥ २०२ ॥

मदनहेतुको मदमोदौ मत्तताहर्षावेव मदिरा तत्र निरातङ्कः निजानन्दरत इति ननु तासामनुरोधवशादिति कुब्जापद्ममहिष्याधिकरणे साधारणीसमञ्जसे रतीव्यावृत्ते । कथंभूताभिः रतोत्सवारम्भस्य मङ्गलतां माङ्गल्यं अङ्गलताभिर्निजगात्रैः प्रापयितुं अतिशयसमर्थाभिः श्लेषेण समर्थाख्यरतिमतीभिः अत एव रमणीमणयो लक्ष्म्यायास्ततोऽपीन्द्रतुल्यारुक्मिण्यायास्तासामपि मौलिमणिमालाभिः ॥२०३॥

तासां प्रेमोपादानक एव कामो नत्वन्यासामिव कामोपादनकः प्रेमा नापि द्वयोपादानकं द्वितयमिति वर्णनाभङ्ग्यैव बोधयन्नाह प्रेमेति एष श्रीकृष्णः तासां केवलं अत एव शुद्धमपि प्रेम मदनरागरसैरारञ्जयत् । किमर्थं संप्रार्थितानि निजवाञ्छितानि निविडैः स्तनैःपीडनानि लब्धुं प्राप्तु लोके हि परतः किंचिल्लिप्सुः प्रथमं तमनुरञ्जयतीति नीतिः ॥२०४॥

आमोदं अर्थात्तस्य हर्षं कृत्वा कृत्वा मोदरं हर्षदायिनम् ॥२०५॥

मानसेति मनसि विधिर्वचसि प्रतिषेधः इत्येतौ न बुद्धिपूर्वकौबभूवतुः किन्तुस्वाभाविकौत्कण्ठ्यवाम्यकार्य्यभूताविल्यर्थः ॥२०६॥

ह्रीप्रबोधनकरो लज्जायतीत्वमात्रज्ञापकः ॥२०७॥

कृतः कृतकः ननु स्वाभाविकः कोपो यस्यां सा ॥ २०८ ॥

किंच। चुम्बने विमुखताधरपाने पाणिनाधरदलस्य पिधानम्। श्लेषणेऽपसृतिरित्यबलानां वामतैव दयितस्य मतासीत्। द्राघीयसा सुवलितेन सुकोमलेन मत्येकमेव तरसा भुजमण्डलेन। अन्तः प्रवेशयितुकाम इव क्रमेण लीलानिधिः स रमणीगणमालिलिङ्ग ॥ २०९ ॥

किंच वामेन पाणिकमलेन विधृत्य वेणीमम्बुभ्रमय्य चिबुकाग्रमथापरेण। आलोकयन्मुकुलितेक्षणमास्यमासां माध्वीकमुग्धमधरं धयति स्म कृष्णः ॥२१० ॥

एवमेक एव राजीविनीराजीविनीतो भ्रमर इव निरपायं पायं पायमासवं स वंहिष्ठपदो मदनमोदामोदायत्तो निरन्तरायनिरन्तरायमानमानसोत्सवः स रसिकशेखरः परिरम्भाधरपानानन्तरम् ॥ २११ ॥

वक्षोरुहाम्बुरुहकोरकयुग्ममासामासादयन् स नखलेखनलक्ष्मलक्ष्मीम्। अन्तः समुद्यदनुरागविकारकण्डूकण्डूयनादिव पुनः प्रथयां चकार ॥ २१२ ॥

ततश्च। आताम्रकम्रमहसा नखलेखलक्ष्मीलक्ष्मश्रिया शुशुभिरे सुदृशामुरांसि। अन्तर्गतैरिव चिरादनुरागबीजैरासादिताङ्कुरदशैर्बहिराहृतानि ॥२१३॥

एव मङ्गमङ्गमतिमङ्गलस्पर्शरसेन करकमलेन सकलसंतापहारिणा हारिणा सिद्धौषधिपल्लवेनेव तासामखिलसौभाग्यगौरवपुंषि वपूंषि सरसीकुर्वतस्तस्य ॥२१४॥

स्फीतं पाणिसरोरुहेण सुदृशां वक्षोजयोर्मण्डले केशेष्वायतकुञ्चितेष्वतिघनेपूर्ध्वादधोलम्बितम्। श्रान्तं श्रोणिभराङ्गणे तत इतो विश्रान्ति खेदादहो लब्ध्वा नाभिहृदं सुखेन तिमितं मध्ये समाकुञ्चितम् ॥ २१५ ॥

तत्ततदेव व्यस्यन्नाह द्राघीयसेति वेष्टनसम्यक्त्वम्। सुवलितेनेति तत्र नैविड्यम्सुकोमलेनेति तत्रातिसुखदत्वम् ॥ २०९ ॥

मुकुलितेक्षणं सलज्जम् ॥ २१० ॥

राजीविनीराजी पद्मिनीश्रेणी तस्यां विनीतो दक्षिणः मदनमोद एव आमोदः सौरभं तदधीनः निरन्तरायं निर्विघ्नं यथास्यात्तथा अयमानः प्राप्नुवन्मानसोत्सवो यं सः ॥२११॥

नखानां लेखनलक्ष्मैव लक्ष्मीः शोभा पक्षे पद्माया तां आसादयन् प्रापयन्नेव सन् स कृष्णः अन्तः सम्यगुद्यन्ती या अनुरागमयः कण्डूस्तां पुनरपि कण्डूयनादिव प्रथयांचकार प्रकटयामास अनुरागमयः कंदर्पस्तासां कृष्णनखक्षतैरधिकमवर्द्धतैवेति वाक्यार्थः ॥११२॥

उरांसि वक्षःस्थलानि शुशुभिरे नखलेखा एव लक्ष्मीलक्ष्माणि संपत्तिचिन्हानि तेषां श्रिया शोभया ॥२१३॥

सौभाग्यस्य गौरवं पुष्णन्तीति तथा तानि किवन्तं पदम् ॥२१४॥

स्फीतं प्राप्तविस्तारं उर्द्धाच्छिर प्रदेशादारभ्य अधो नितम्बपर्यन्तं लम्बितं उत्तीर्णं ततश्च श्रोणिभर एव अङ्गणंतत्र इतस्ततोविश्रान्तिखेदात् श्रान्तामिति तस्यातिविस्तीर्णत्वात् मध्यसङ्कुचितमिति तस्यातिकार्श्यात् नाभिहृदे सुखेन तिमितमिति अन्तरीयनिष्काशनोपाधिलाभात् ॥२१५॥

एवं मदनमदनश्यदपत्रपापत्रपालिभिरतिरुचिरचिरमनोरागतारल्यपरवशाभिरुदयितदयितमनोरथानुकूलकूलरहितलावण्यतरङ्गिणीरङ्गिणीभिरेकैकशोऽधिकशोऽधिकमनीयवैदग्धीधुरामधुराऽमसृणभुजवल्लीवलयैः सवलयैः सरसमालिङ्गितोऽङ्कितोपपन्नप्रेमरसाङ्गसाङ्गशुचिशुचिसामग्रीसमरससमरसमाहितैः स्मितमधुमधुरैर्वदनारविन्दैराचुम्बितोऽधरकिसलयैः सलयैरिव स्फुरद्भिरद्भिरिव दशनकान्तिलहरीभिः क्षालितैरापीयमानाधरो धरोपपन्नपीयूषमयूख इव चकोरदयिताभिराभिः ॥ २१६ ॥

एवं सति। दोःशाखावलयैर्दृढं वलयितो निस्तोदितः पीवरैर्वक्षोजस्तवकैः खरैरथ नखाकारैः क्षतः कण्टकैः। क्रीडायां रमणीमणीमयलतोद्यानेषु माद्यन्मनाः श्रीमानेकक एष कृष्णमधुपः संमोदमभ्याययौ ॥ २१७ ॥

सा वधूततिरनङ्गसङ्गरे गाढसौभगरसप्रसङ्गरे। आत्रिलोकरमणीमणिश्रिये हेलनामतिमदेन शिश्रिये ॥ २१८ ॥

एवं सौभगमदनमदे मदनदेवयादसि महास्रोतसि न सुतरे तरेर्भङ्ग इव मघानां तासामन्तर्गतमदजलपूरं दूरीकरिष्यन्निव ॥ २१९ ॥

एवं माभिरपि भुजवल्लीवलयैः सोऽप्यालिङ्गितः। मदनमदेन नश्यन्ती अपत्रपालता पत्रपालिः पत्रश्रेणी यासां तथा ताभिः उदयिता प्राप्तोदया दयितस्य मनोरथानुकूला कूलरहिता अपारा या लावण्यतरङ्गिणीभिः रागवतीभिः एकैकशः एकैकाभिरताभिर्भुजवल्लीवलयैरालिङ्गितः कथंभूतैः अधिकशोभिनः कृष्णभुजकृतालिङ्गनस्य अधिकपरिशोधकाश्च ते कमनीयवैदग्धीधुरया मधुराश्च अमसृणा अम्लानाश्च ते तथा तैः अङ्कितया अङ्कित्वेन उपपन्नस्य प्रेमरसस्य अङ्गं साङ्गशुचि. निजाङ्गसहितशृङ्गाररसःतस्य शुचिभिर्विभावादिवैरूप्याभावात् शुद्धाभिः सामग्रीभिः समरसं नायकनायिकागणयोस्तुल्यरसमेव यत्समरं केलियुद्धं तत्र समाहितैः समर्पितैर्वदनारविन्दैराचुम्बितः कामपुष्पास्त्रैर्विद्ध इवेति भावः रलयोरैक्यात्सवेगैरिव ॥२१६॥

वलयितो वेष्टितः निस्तोदितः संमर्दितः ॥ २१७ ॥

प्रसङ्गरे प्रकृष्टसङ्गदायिनि। आत्रिलोकेति ततश्च तासां परस्परसपत्नविपक्षभावे समुद्भूयप्रज्वलिते सति ऐकमत्ये नष्टे प्रारिप्सितो रासो न सिद्ध्येदित्यन्तर्द्धानबीजं ज्ञेयम्। किंच। राधामथान्याश्च विहारसाम्यात्तेर्ष्या सगर्वा अवगम्य सम्यक्। प्रसादयंस्तामवसादयंस्तास्तदन्तर्व्यवान्तरधात्त कान्तः ॥२१८॥

तदेवोत्प्रेक्षादिभिः स्पष्टयन्नाह महास्रोतसि प्रेममयप्रवाहे तरेः ऐकमत्यरूपायानौकाया भङ्गे सति। स्रोतसि कथंभूते सौभगं च मदनः कामभोगश्च तौ ददातीति तथाभूते मदनदेव एव यादो यत्र तस्मिन् न सुतरे अनवच्छेदाद्दुस्तर इत्यर्थः। मदजलपूरं दूरीकरिष्यन्निति पुनरैकमत्यकामनयेति भावः ॥२१९॥

निजदुर्लीलतालताचक्रमारोप्य ता भ्रापयितुमुपक्रान्त इव ॥ २२० ॥

दुर्जरसौभगमदमदिरातिशयसेवनलसदलसदशापूर्वरूपमपूर्वरूपमदात्ययाभिधविषमगदमगदंकार इव चिकित्संस्तदुपद्रवहारि ललितमगदं संपादयिष्यान्निव ॥२२१॥

सहजधवलतालतावलतादवस्थ्ये रागान्तररस्य रस्यता न भवतीति निष्कपटस्य पटस्य तदुपशमयितुं रूपान्तरमापादयितुं च लोध्रादिकषायेण कषायितकरणाय प्रवृत्तो रङ्गाजीव इव ॥ २२२ ॥

मदनमदनमितानन्दतुन्दिलतावद्रावकंद्रावकं रसमिव विप्रलम्भलम्भनदौरवस्थ्यं सद्य एवाङ्कुरयन्निव ॥ २२३ ॥

परिपूर्ण एवानन्दचन्द्रिकापटले दुस्तरदुःखतमः स्तोममवतारयन्निव ॥२२४॥

प्रवाहे च पैयूषे पैयूषे च सरसि कालकूटकूटमुत्पादयन्निव ॥ २२५ ॥

ननु धीरललितशेखरस्य तस्य प्रेयसीगर्वखण्डनमसमञ्जसमेवेति चेत्सत्यमेवैतदित्यभ्युपगच्छन्नेवाह निजदुर्लीलेति तासां पक्षपातेन तत्र प्रणयकोप एव व्यञ्जितः ॥२२०॥

वस्तुतस्तु तासामेवाति संमाननसूचकस्य कामकलाविलासविशेषस्य महारासस्य सिद्ध्यर्थं आपाततः प्रतीयमानमपि प्रातिकूल्यं धीरललितत्वेपि न विरुध्येतेत्याह दुर्जरेति दुर्जरा प्रकारान्तरेण जरयितुमशक्या सौभगमदरूपा या मदिरा तस्यातिशयसेवनेन लसन्ती अलसदशा पूर्वरूपा प्रथमा यस्मिन् तं अपूर्वेण रूपमदेन स्वरूपगर्वेण अत्ययोतिक्रम एव अभिधा यस्य स चासौ विषमो गदो व्याधिश्चेति तं पक्षे मदात्ययनामा रोगविशेषः चिकित्सन् चिकित्सितुं अगदंकारो वैद्यः ललितं पुष्टिकरं अगदमौषधं रोगहार्य्यगदंकारो भिषग्वैद्यौ चिकित्सके इत्यमरः। रोगिजनसुखोदर्कमेव सद्वैद्यचेष्टितं भवतीति भावः ॥२२१॥

किंच न विना विप्रलम्भेन संभोगः पुष्टिमश्नुते। कषायिते हि वस्त्रादौ भूयान् रागोभिवर्द्धते। इति रसशास्त्रानुमतिमनुरुन्धानैरभिज्ञैनैतदवधीरणीयमित्याह सहजेति धवलतया श्वेतिम्ना वलस्य तादवस्थ्ये साहजिकत्वे सतीत्यर्थः निष्कपटस्य पटस्य अकृत्रिमवस्त्रस्य तत्तादवस्थ्यं सकपटत्वे तु दृष्टान्तस्य पटस्य दार्ष्टान्तस्यालम्बनविभावस्य च कषायेण विप्रलम्भेन च प्रत्युत भूयस्तिरेव स्यादिति भावः ॥२२२॥

एतदेवोक्तमौपम्यान्तरेणाह मदनेति मदनमदेन नमिता विपरिणमिता या आनन्दस्य तुन्दिलता पुष्टिस्तस्या विद्रावकं निवर्त्तकं द्रावकं चित्तद्रैत्यकारिणं अन्योऽपि वैद्यप्रयुक्तो द्रावको रसस्तुन्दपुष्टिहारी भवतीत्येकदेशश्लेषः ॥२२३॥

एवं सिद्धान्तरीत्या वर्णनपरीपाटीमिदानीं विहाय तासां पक्षपातमाश्रित्य कृष्णे सदोषोद्गारमेवाह परिपूर्णेति तमोन्धकारो गह्वरो ॥ २२४ ॥

पैयूषे पीयूषममृतं तन्मये प्रवाहे पैयूषे पीयूषोभिनवं पय इत्यमरस्तन्मये च सरसि कालकूटकूटं विषसमूहं चन्द्रिकातमसोर्नित्राणामिव सुखदुःखविधायित्वे तादृशसंभोगतादृशविप्रलम्भयोस्तु प्राणानामेव दायकत्वघातकत्वे पर्य्यालोच्य अमृतकालकूटाभ्यामेव तावुत्प्रेक्षितौ २२५

परिमलसौभाग्यभाजि नवाग्निशिखावलावग्निशिखावलावक्षेपमिव ॥२२६॥
निर्जलधरं कुलिशपातमिव निराशीविषमाशीविषविसर्पमिव ॥२२७॥
सर्वासामसंभावनाविषयो भावनाविषयश्च यन्न भवति तदकस्मादेव निरीक्षमाण एव प्रस्तुते स्तुते विलासरसे सरसे हृदि तत्रैव तिरोधानं स निखिलकलाकलापवेधा विदधाति स्म ॥ २२८ ॥

इत्यानन्दवृन्दावने कैशोरलीलालताविस्तारे रासविलासे तिरोधानविधानो नाम सप्तदशः स्तवकः ॥ १७ ॥

---

किंचातितरामन्यायप्रवृत्त्या पर्य्यवसाने तस्यावैदग्ध्यदुष्कीर्त्ती एव फलिष्येते इति सकरुणमाह परिमलेति नवानां अग्निशिखानां आवलौ श्रेण्यां अग्निशिखावलस्य वन्हिशिखाधरसमूहस्य अवक्षेप प्रक्षेपमिव काश्मीरजन्माग्निशिखमित्यमरः । कुङ्कुमावलिस्थानीया अत्र तत्प्रेयस्यो ज्ञेया ॥ २२६ ॥

निर्जलधरमित्यन्तर्द्धाने कारणाभाव उक्तः निराशीविषमिति संभावनाया अभावश्च । आशीविषः सर्पः आशी सर्पदंष्ट्रा ॥ २२७ ॥

कलाकलापस्य वेधा स्रष्टा ॥ २२८ ॥

इत्यानन्दवृन्दावनटीकायां सुखवर्तिन्यां सप्तदशस्तवकसंगमनम् । १७ ।

## अष्टादशः स्तवकः

अथैवमन्तर्हितमन्तर्हितमपि तथानुपपद्यमानया संभावनया भावनयासादितपरिहासहासपेशलं शलन्त्यो दृश्यमानमिवापि न पश्यन्त्यः श्यन्त्यश्च नयनप्रीतिं परस्परपरवितर्कं ताः पृच्छन्ति स्म ॥ १ ॥

निभालय भालयमेतं प्रापयति स्म का कुञ्जं काकुञ्जङ्घालां प्रकटयन्ती या किल पश्यतोहरेव सर्वासां नयनमाच्छिद्य वक्षोमणिं नो जहार॥२॥

तदधुना विचारयामो रयामोदितमनमा कया क नीत इति ॥३॥

कुञ्जात् कुञ्जान्तरं विचारयन्त्यः कालभुजंगमेऽजंगमे निद्राणतया समुद्दामदामनकमालाधियो जनता इव विहिततिरोभावे भावेन समुत्कया कयाचन समं कृतकुञ्जलील इति सहजार्जवेन जवेन जातप्रतीतयः ॥ ४ ॥

विचार्य्याहमानेष्येहमानेष्ये इति सकौतुकमहमहमिकया प्रतिकुञ्जमन्विष्यन्त्यो हन्त हन्तरास्मजनापर्दं पदाम्बुजस्पर्शेन सरसीभूतभूतलं विहसितुमस्मानात्मानमपवार्य्य कुञ्जोदरेस्थितवन्तं भवन्तं भद्रेण विभो विमोहन किमपरं भ्रमयसीति निर्गदं गदन्त्यश्च ॥५॥

विचारितेषु कुञ्जकुहरेषु तमनालोक्य क्रमेण जायमानसंदेहा देहादावपि तेनैव क्रमेण जायमाननिरपेक्षभावा भावावग्लायमानमुखतामरसा रसाभावेनाविचारितकुञ्जान्नविचारयन्ति स्म ॥ ६ ॥

---

विरहविधुरतासां तस्य पृच्छा द्रुमाली तदनुकृतिरथ श्रीपादलक्ष्मावलोकः। प्रियविरहितराधाचेष्टितं सर्वरामावलिवलितविलापोऽष्टादशे वर्णनीयम्। अन्तर्हितं अन्तःकरणाहितं यद्वा अन्तर्हृदये धृतमपि कृष्णं अन्तर्हितं कृतान्तर्धानम्। भावः सौहार्दादिस्तस्य नयेन नीत्या-आसादिताभ्यां प्राप्ताभ्यां परिहासहासाभ्यां पेशलं सुंदरं यथा स्यात्तथा शलन्त्यो गच्छन्त्यः श्यन्त्यः अल्पयन्त्यः ॥१॥

भालयं शोभानिकेतम् जङ्घालाम् अतिवेगवतीं काकुं प्रकटयन्ती प्रकटयितुमिति तटस्थपक्षविपक्षाणामुक्तिर्ज्ञेया ॥२॥

रयेण वेगेन निभृतविहारार्थमामोदितं मनो यस्यास्तया ॥३॥

निद्राणतया अजङ्गमे स्थिरे कालसर्पे उद्दामा वन्धनरहिता दामनकी दमनकसम्बन्धिनी माला इति धीर्य्यासां तथाभूता जनता जनसमूहस्य विहिततिरोभावेपि तस्मिन्महादुःखं दातुमुपक्रान्तेऽपीत्यर्थः कयापि सह कृतकुञ्जलीलोत्सवाविति जाता प्रतीतिर्यासां ताः ततश्चैवमेव प्रत्येकमस्मास्वपि तस्य लीला भविष्यतीति विनोदमयो भावश्च द्योतितः ॥ ४ ॥

अहमानेष्ये यूयं [illegible]
दां विदुषामपि मोहन [illegible]
था स्यात्तथा वहिः स्थित्वैव गदन्त्यः॥५॥

जायमानासंदेहा इति परिहास एवायं न वस्तुतोऽन्तर्द्धानमिति प्राक्तनो निश्चयो गलित इत्यर्थः। भा कान्तिस्तयैव अवग्लायमानं हर्षशून्यं मुखपद्मं यासां ताः चानशन्तपदम् ॥६॥

संभावनैवास्तां नैवास्तां तावदनाश्वास इति यदि कुञ्जविचारतो जातविरामा रामाततिरसौ वभूव ॥ ७ ॥

भूवलयं तदा शून्यमिव मन्यमाना तमथ दृश्यमानमिवापि न पश्यन्ती स्पृश्यमानमिवापि न स्पृशन्ती कथयन्तमिवापि जानती न तत् कथां शृण्वती वहिर्विचेयमानामिव हृदयेऽनुभवन्ती न वहिरुपलभमाना ॥ ८ ॥

श्रवणयोः कुवलयमिव श्रवणवहिर्भूतं नयनकज्जलमिव नयनदूरगामिनं वक्षसो नीलमणिमिव वक्षसोऽन्तरितम् ॥ ९ ॥

एकमपि दिशि दिशि स्फुरन्तं दिशि विदिशि सन्तमपि हृदये प्रविशन्तं करकमलेन स्पृशन्तमपि प्रतिस्पर्शनदुष्प्रापं वक्षसाश्लिष्यन्तमपि प्रत्याश्लेषानर्हं मुखचन्द्रमसा चुम्बन्तमपि प्रतिचुम्बनेऽक्षणमवगच्छन्ती ॥ १० ॥

क्षणं भित्तिपुत्तलिकेव नभसि चित्रितेव ॥ ११ ॥

उन्मूलितजीवनेव ज्वलदङ्गाराङ्लिङ्गितहृदयेव कालकूटकूटलिप्तशरीरेव करपत्रेण विदीर्यमाणवक्षःस्थलेव यदि समजनिष्ट ॥ १२ ॥

तदारुया रामावलेर्मनसि क्षते जम्बीररस इव शुष्के दारुणि दहन इव ॥ १३ ॥

मर्माणि छुरिकेव उरसि चोरगक्षतमिव शरीरे महाज्वर इव जठरे महाशूलमिव नयनयोरान्ध्यमिवश्रवणो बाधिर्य्यमिव त्वचि सुप्ततेवसंविदि महोन्माद इव कश्चन दारुणो दुःखपरिपाकः परिभवकारी वभूव ॥ १४ ॥

तत्र हेतुः संभावनेति ॥ ७ ॥

दृश्यमानमिवेत्यादि विरहे ध्यानोद्रेकोदयात् न पश्यन्तीत्यादि वहिरनुसन्धानवशात् ॥ ८ ॥

श्रवणयोरित्यादिना श्रवणदर्शनाङ्गसङ्गानामुत्तरोत्तरकालवर्तित्वस्य भूतचरत्वम् ध्वनितम् । ९।

ततश्च । भावनोद्रेकस्य परिपाकेणैव वहिरनुसन्धानेऽपि निरस्तप्राये मोहदशापूर्वरङ्ग विस्फूर्त्तिमयमुन्मादं व्यञ्जयति एकमपीत्यादिना अतएव दिशि विदिशि सन्तमित्यादिषु पूर्वत्रदिक्शब्दाप्रयोगः। प्रतिस्पर्शनदुष्प्रापमित्यादिना वाह्यानुसन्धानशेषोऽपि पीडामयो व्यञ्जितः। प्रतिचुम्बने अक्षणम् अवसररहितम् ॥ १० ॥

ततश्च मोह एवाभूदित्याह क्षणं भित्तीति, तत्रापि निरालम्बतया नभसीत्यभूतोपमा ११

मूर्छाप्येषा विरहपीडोपादानकतया महादुःखानुभवमयोपान्तभागेवाभूदित्याह उन्मूलितेति अस्माद्देहाज्जीवनं निःसृतमित्यनुभवन्तीत्यर्थः तत्कारणभूतं पीडानुभवमुत्प्रेक्षाभिव्यञ्जयति ज्वलदित्यन्तर्देहोत्था पीडाकालकूटेति वहिर्देहोत्था, तत्रापि वक्षसि स्तनमध्ये अस्तिकोऽपि विशेष इत्याह करपत्रेणेति ॥ १२ ॥

अथ तत्र तत्रान्तरवाह्ययोस्तादृश्योरपि कुत्र कुत्र प्रदेशे कीदृशी कीदृशी विशेषपीडेत्यपेक्षायामाह मनसीति, जम्बीररस इति चिटपिटायितीकारित्वं दहन इत्यन्ततो ज्वालया भस्मीभावविधायित्वं चोक्तम् ॥ १३ ॥

सुप्तता स्पर्शज्ञानराहित्यम् ॥ १४ ॥

ततश्च । अशरणमेव त्रिभुवनं निरालोक एव सर्वलोकः विदीर्य्यन्त्य इव गिरिद्रोणयः रोरुद्यन्त इव तरवः शीर्य्यन्त्य इव लतिकाः म्लापन्त्य इव चंद्रिकाः मूर्छन्त इव शकुन्तयः दवदग्धा इव हरिण्यश्च बभुवुः ॥ १५ ॥

ततश्च । कस्यापि योगिनो योगबलाच्चित्रपुत्तलिकानां व्याहार इव भुजगदंशमूर्च्छितानां मन्त्रकृतनर्त्तनावर्त्तितवाक्प्रयोग इव परस्परमालाप आसीत् ॥ १६ ॥

अहोकिमेतत् । विलासिन्यो नीलाम्बुजमिति कवर्य्यां परिदधुः ।
कलावत्यः किंवा हृदयमनयन्नेव पिशुनाः ।
न चेत् पश्यन्तीनां हरिणनयनानां वलयतः ।
कुतोऽकस्मात् कस्मादपसरतु नो जीवितमणिः ।१७।

इतिपरस्परपरमसंदेहे वितर्कपरंपरापराहतधियः पुनरपि मीमांसन्ते स्म ।१८।

यदायातं गेहादिह यदपि दृष्टः सपरूपं ।
श्रुतं यत् तस्योक्तं यदपि करुणोक्तिर्विरचिता ।
प्रसन्नेन प्रेम्णा यदपि रमितं तेन सकलं ।
तदेतत्स्वप्नो नः किमुत परमो मोहमहिमा ।१९।

इति क्षणं विमृश्य पुनरूचिरे चिरेण कण्ठरोधमुद्घाट्य । अहो । ता एव किं नहि वयं किमसौ प्रयातः कापीति यत्तदपि चेदमलीकमेव । तेनैव नीतमाखिलं

ततश्च महाभाववतीनां तासां दुःखेन जगदपि व्याप्तमित्याह अशरणमेवेति यदुक्तमुज्ज्वलनीलमणौ " अनुरागः स्वसम्वेद्यदशां प्राप्य प्रकाशितः । यावदाश्रयवृत्तिः स्याद्भाव इत्यभिधीयते " इति, तत्रापि विदीर्य्यन्त्य इत्यादिना गिरिद्रोण्यादीनां विशेषतो विदारणादिको महाभावस्य तस्यानुभावविशेषः, यदुक्तं " आसन्नजनता हृद्विलोडन " मिति ॥ १५ ॥

एवं च तादृश्यामपि दशायां स्थितानामाशयैव रक्षितप्राणमात्राणां तासां परस्परालापसामर्थ्ये युक्तिमाह कस्यापीति चित्रपुत्तलिका हि प्रथमत एवाचेतना इति द्वितीयो दृष्टान्त एव पूर्णसाधर्म्यः मंत्रेण कृतेषु नर्त्तनेष्वावर्त्तितःबलात्कारेण पुनः प्रवर्त्तित इत्यर्थः ॥ १६ ॥

कवरीभूषणमात्र एव तस्यापर्य्याप्तिमाशृंश्याहुः कलावत्य इति कलावत्यः अस्मन्मोहनादिकलायोगवत्यः पिशुनाः परदुःखदात्र्यः ॥ १७ ॥

तादृशशक्तिमतीनां किमस्मत्तो भयमिति चोरयित्वा असौ नेतव्य इत्यपरासां वितर्कान्तरमाह इतीति मीमांसन्ते स्म विचारयामासुः ॥ १८ ॥

अन्तर्धानस्य कारणानुपलम्भात् तद्विनाभूतस्य चाप्रमाण्यात् अन्तर्धानं तत्प्रतियोगिप्राकट्यं च इत्युभे अस्मदनुभवसमर्थिते अपिअलीके एवेत्याहुः यदायातमित्यादि ननु शयनं विनाकुतः स्वप्न इत्यत आहुर्मोहमहिमा इति ॥ १९ ॥

सर्वविलक्षणतादृशतदङ्गसङ्गविलासस्यादृष्टाश्रुतचरत्वेन स्वप्नमोहसिद्धत्वमसंभावयन्त्योऽन्या अन्यथैव वितर्कयन्त्यः आहुः ता एवेति । तत्तत्सर्वं सत्यमेव नतु स्वप्नादिसिद्धं किन्तु तद्वरयोऽन्या एव गोप्यस्ताः संप्रत्यपि तेन सह विहरन्त्येव केवलं तद्धर्ममात्मसु वयमध्यारोप्य क्लिश्यामहे

संभावनैवास्तां नैवास्तां तावदनाश्वास इति यदि कुञ्जविचारतो जातविरामा रामाततिरसौ बभूव ॥ ७ ॥

भूवलयं तदा शून्यमिव मन्यमाना तमथ दृश्यमानमिवापि न पश्यन्ती स्पृश्यमानमिवापि न स्पृशन्ती कथयन्तमिवापि जानती न तत् कथां शृण्वती बहिर्विचेमानामिव हृदयेऽनुभवन्ती न बहिरुपलभमाना ॥ ८ ॥

श्रवणयोः कुवलयमिव श्रवणबहिर्भूतं नयनकज्जलमिव नयनदूरगामिनं वक्षसो नीलमणिमिव वक्षसोऽन्तरितम् ॥ ९ ॥

एकमपि दिशि दिशि स्फुरन्तं दिशि विदिशि सन्तमपि हृदये प्रविशन्तं करकमलेन स्पृशन्तमपि प्रतिस्पर्शनदुष्प्रापं वक्षसाश्लिष्यन्तमपि प्रत्याश्लेषानर्हं मुखचन्द्रमसा चुम्बन्तमपि प्रतिचुम्बनेऽक्षणमवगच्छन्ती ॥ १० ॥

क्षणं भित्तिपुत्तलिकेव नभसि चित्रितेव ॥ ११ ॥

उन्मूलितजीवनेव ज्वलदङ्गारालिङ्गितहृदयेव कालकूटकूटलिप्तशरीरेव करपत्रेण विदीर्यमाणवक्षःस्थलेव यदि समजनिष्ट ॥ १२ ॥

तदास्या रामावलेर्मनसि क्षते जम्बीररस इव शुष्के दारुणि दहन इव ॥ १३ ॥

मर्माणि छुरिकेव उरसि चोरगक्षतमिव शरीरे महाज्वर इव जठरे महाशूलमिव नयनयोरान्ध्यमिवश्रवणो बाधिर्यमिव त्वचि सुप्ततेवसंविदि महोन्माद इव कश्चन दारुणो दुःखपरिपाकः परिभवकारी बभूव ॥ १४ ॥

तत्र हेतुः संभावनेति ॥ ७ ॥

दृश्यमानमिवेत्यादि विरहे ध्यानोद्रेकोदयात् न पश्यन्तीत्यादि बहिरनुसन्धानवशात् ॥ ८ ॥

श्रवणयोरित्यादिना श्रवणदर्शनाङ्गसङ्गानामुत्तरोत्तरकालवर्तित्वस्य भूतचरत्वम् ध्वनितम् । ९ ।

ततश्च । भावनोद्रेकस्य परिपाकेणैव बहिरनुसन्धानेऽपि निरस्तप्राये मोहदशापूर्वरङ्ग विस्फूर्तिमयमुन्मादं व्यञ्जयति एकमपीत्यादिना अतएव दिशि विदिशि सन्तमित्यादिषु पूर्ववदिवशब्दाप्रयोगः। प्रतिस्पर्शनदुष्प्रापमित्यादिना बाह्यानुसन्धानशेषोऽपि पीडामयो व्यञ्जितः। प्रतिचुम्बने अक्षणम अवसररहितम् ॥ १० ॥

ततश्च मोह एवाभूदित्याह क्षणं भित्तीति, तत्रापि निरालम्बतया नभसीत्यभूतोपमा ११

मूर्छाप्येषा विरहपीडोपादानकतया महादुःखानुभवमयो पान्तभागेवाभूदित्याह उन्मूलेतेति अस्माद्देहाज्जीवनं निःसृतमित्यनुभवन्तीत्यर्थः तत्कारणभूतं पीडानुभवमुत्प्रेक्षाभिव्यञ्जयति ज्वलदित्यन्तर्देहोत्था पीडाकालकूटेति बहिर्देहोत्था, तत्रापि वक्षसि स्तनमध्ये अस्तिकोऽपि विशेष इत्याह करपत्रेणेति ॥ १२ ॥

अथ तत्र तत्रान्तरबाह्ययोस्तादृशयोरपि कुत्र कुत्र प्रदेशे कीदृशी कीदृशी विशेषपीडाभ्युपेक्षायामाह मनसीति, जम्बीररस इति चिटपिटायितकारित्वं दहन इत्यन्ततो ज्वालया भस्मीभावविधायित्वं चोक्तम् ॥ १३ ॥

सुप्तता स्पर्शज्ञानराहित्यम् ॥ १४ ॥

पन्थानमपन्थानमपि वा यदि न विदुः तदा ताभिरलक्ष्यमाणैव योगमायागमा या भगवती छायेव तासामन्वनुयान्ती यान्तीव्रतां भातिकूलपकर्तां हरति सा ताभिरपि नाज्ञायत ॥२४॥

एवमितस्ततोऽनुसंदधत्योऽनुद्रुममनुलतं पप्रच्छुरपि। हन्ताश्वत्थकपित्थार्किंशुक वकुलप्लक्षाः शिवं वोऽस्त्वयं किं दृष्टो नु भवद्भिरत्र विचरन् गोपेन्द्रजः कथ्यताम् । तूष्णीं तिष्ठथ किं न वञ्चयथ नः सत्यं स वो गोचरः स्तम्भोऽयं कथमन्यथा वलवतानन्देन यः कल्पितः ॥ २५ ॥

इत्याभाष्य । अहो तदनुध्यानैकताततया नतया मनोवृत्त्या वहिर्व्यापारपारवश्येनास्माकं विज्ञप्तिममी नाकलयन्ति तदन्यतो गत्वा पृच्छाम इति कियद्दूरं गत्वा ॥२६॥

हे चाम्पेयरसालशालसरलाः पुन्नाग हे चम्पक !
*श्यामोऽनेन पथा भवद्भिरनघैर्गच्छन् समालोकितः ।*
चित्तं योऽपजहार नो ननननेत्याधूयमानैर्दलै—
र्मामिथ्या गदथान्यथा कथममूरोमोद्गमो वः स्थिरः ।२७।

इत्यालप्य तदुत्तरमनालभ्य पुनरुचिरे अहोअमी तरुणा एव तेनैव दारुणतया न प्रतिवचनं रचयन्ति भवतु पुनरन्यतोगत्वाप्रष्टव्यमिति तथा कृत्वा पुरतस्तमालमालोक्य तथा पप्रच्छुः । हंहो तमाल तव वर्णसुहृत्स कृष्णः सत्यं च भूव विषयस्तव मान्यथैतत् । श्लिष्टोऽसि तेन यदयं त्वचि ते विसर्पी लीढो मधुव्रतगणेन तदीयगन्धः ॥ २८ ॥

तदालिङ्गनेनापहृतवेदनो वेदनो नायं निवेदितं तत् किमनुयोज्यः तदन्यतो गत्वा पृच्छाम इति पुरतस्तुलसीमालोक्य ॥ २९ ॥

कल्याणि पाणिकमलं कमलेक्षणेन न्यस्तं त्वयि प्रणयनीतिरसादवश्यम् । धन्यासि हे तुलसि ! ते तुलना क्व लोके तन्नः समादिश स ते दयितः क लभ्यः ३०

गीतरासिकस्य गानेनाकर्षणसंभवादिति भावः । तीव्रतां शर्कराकण्टकाद्याघातसम्बन्धिनीम् न अज्ञायत नान्वभूयत ॥ २४ ॥

स्तम्भः सात्त्विकभेदः ॥२५॥

तस्यानुध्याने या एकतानता तया नतया नम्रीकृतया "एकतानोऽनन्यवृत्ति"रित्यमरः वहिर्व्यापाररूपं यत् पारवश्यं तेन ॥२६॥

अनघैरिति वयमेव कृताघा इति भावः ॥२७॥

तेन सख्येन हेतुनेत्यर्थः श्लेषेण लिङ्गमाहुः तदीयगन्धस्त्वचि तेविसर्पीति नन्वनृतमात्थ तदनुपलम्भादित्यतआहुर्लीढ इति अत एव संप्रति स नानुभूयत इति भावः ॥ २८ ॥

नोऽस्माकं अयं न वेद न जानाति ॥ २९ ॥

कमलेक्षणेनेति श्लेषेण त्वत्सौरभसौभाग्यापेक्षया कमलेऽप्यक्षणेन निरुत्सवेनेत्यर्थः । तुलना उपमा ॥ ३० ॥

मनआदिकं नः कः पामरो निरमिमीत वतान्यदेतत् ॥ २० ॥

एवं नानाविकल्पकल्पनानन्तरं निश्चिते श्रीकृष्णतिरोभावेऽभावे चात्मनो जीवनादेरुत्पद्यमाने सति श्रीकृष्णोन्माद एव तन्निवर्त्तकतया तासामन्तरमन्तरयांचकार ॥ २१ ॥

यथान्तर्वृत्तिनिवृत्तिनिरते तरलतरङ्गनिकरे तस्मिन्नुन्मादोर्मिमालिनि हृदयमाविश्य हृदयस्य कृष्णाकारकारणतां प्राप्तवति ॥ २२ ॥

नव्यापारा व्यापारान्तरहारिणी हारिणी कृष्णस्य गत्यनुगत्यनुरागविहसितसितमयूखमयूखसविभ्रमभ्रमदलिदलितशतपत्रपत्रतिरस्कारिहारिनयनान्तकान्तानिरीक्षणक्षणमधुमधुरालापमनोरमेहितहितमधुरिमगरिमगभीरभीराहितानेकविलासान्तरानुकारिणी काचिदवस्थावस्थापयामासनिर्यतः प्राणान् ॥२३॥

स्थितेषु तेषु प्राणेषु प्राणेश्वरमनुसंदधत्यो वातेनेतस्ततोऽस्ततोपाश्वाल्यमानाः कमलिन्य इव वनाद्वनं संचरन्त्यः संहता हृता विरहवेदनया नया तमुरुगायं गायन्त्यः

इति भावः । ननु तर्हि तदन्तर्द्धानजनितविरहबाधेयं कुत्रत्यो धर्मस्तत्राहुः किमसौ कापीति प्रयात इति यत् तत्तु अलीकमेवतत्र हेतुः तेनैवेति अयमर्थः यस्माकं मनइन्द्रियादिकं सर्वं स्वसन्नेव नीत्वैव तेन गतं नत्वेकाकितया तर्हि अस्मात् विहायान्तरधादिति कथमसावुपालम्भनीय इति । ननुयद्येवं तदासप्रातियेन पीडा अनुभूयते तन्मनआदिकं कतमत् तत्र सापेक्षमाहुः कः पामर इति अस्मान् दुःखायितुं ततोऽन्यदेव एतन्मनःआदिकं यो निरमिमीत असौ क्रूरः कः न तं ज्ञातुं वयं शक्नुम इति भावः ॥ २० ॥

आत्मनो जीवनादेरभावे नाशे उत्पद्यमानेसति तन्निवर्तकतया जीवनाद्यभावनिवर्त्तकत्वेन अन्तरं अन्तःकरणं अन्तरयांचकार, व्यवहितंचकार विरहपीडातो व्यवधानं मनसोऽभूदित्यर्थः, तस्येकृष्णतादात्म्यप्रवेशेन तस्या अपलापादिति भावः ॥ २१ ॥

उन्माद एव ऊर्मिमाली समुद्रः तस्मिन् हृदयम् आविश्य हृदयस्य कृष्णाकारे कृष्णात्मकत्वे कार्य्ये कारणतां हेतुत्वं प्राप्तवति सति काचिदवस्था कृष्णस्य गत्यनुगत्याद्यनुकारिणी निर्यतो निर्गच्छतः प्राणान् अवस्थापयामास । कथंभूते तरलश्चपलस्तरङ्गनिकरः कृष्णोन्मादोत्थहर्षादिविविधसंचारिभावसमूहो यत्र तस्मिन् अत एवान्तःकरणस्य वृत्तीनां विरहपीडामयीनां निवृत्तौ विषये निरते ॥ २२ ॥

अत एव नव्या नवीना अपारा बुद्धेरप्यगम्येत्यर्थः गतिर्गमनं च अनुगतिस्तत्कर्तृका स्वभक्तजनानुगतिश्च अनुरागश्च हसितमेव सितमयूखस्य चंद्रस्य मयूखः स च सविभ्रमं भ्रमन्नलिर्यस्तत्प्रभूतं दलितं प्रस्फुटं शतपत्रं कमलं तस्य पत्रतिरस्कारि हारि यन्नयनं तस्यान्तेन अपाङ्गेन निरीक्षणे यः क्षण उत्सवोऽवसरो वा स च मधुनोपि मधुर आलापश्च मनोरमेहितं च तथा हितानि च तानि मधुरिम्णा गरिम्णा गभीराणि भीरहितानि च यानि अनेकविलासान्तराणि तेषां अनुकारिणी ॥ २३ ॥

अस्ततोपा गतहर्षाः प्राप्तोद्वेगा इत्यर्थः । उरुगाय कृष्णम् उरु अधिकं गायतीति निरुक्त्या

पन्थानमपन्थानमपि वा यदि न विदुः तदा ताभिरलक्ष्यमाणैव योगमायागमा या भगवती छायेव तासामन्वनुयान्ती यान्तीव्रतां मातिकूल्यकतां हरति सा ताभिरपि नाज्ञायत ॥२४॥

एवमितस्ततोऽनुसंदधत्योऽनुद्रुमपनुलतं पप्रच्छुरपि। हन्ताश्वत्थकपित्थार्कंशुकवटप्लक्षाः शिवं वोऽस्त्वयं किं दृष्टो नु भवद्भिरत्र विचरन् गोपेन्द्रजः कथ्यताम् । तूष्णीं विध्रुय किं न वक्ष्यथ नः सत्यं स वो गोचरः स्तम्भोऽयं कथमन्यथा यद्बलतानन्देन यः कल्पितः ॥ २५ ॥

इत्याभाष्य । अहो तदनुध्यानैकतानतया नतया मनोवृत्त्या बहिर्व्यापारपारवश्येनास्माकं विज्ञप्तिममी नाकलयन्ति तदन्यतो गत्वा पृच्छाम इति कियद्दूरं गत्वा ॥२६॥

हे चाम्पेयरसालशालसरलाः पुन्नाग हे चम्पक !
श्यामोऽनेन पथा भवद्भिरनघैर्गच्छन् समालोकितः ।
चित्तं योऽपजहार नो ननननेत्याधूयमानैर्दलै-
र्मामिथ्या गदथान्यथा कथमयं रोमोद्गमो वः स्थिरः ।२७।

इत्यालप्य तदुत्तरमनालभ्य पुनरूचिरे अहोअमी तद्गुणा एव तेनैव दारुणतया न प्रतिवचनं रचयन्ति भवतु पुनरन्यतोगत्वामष्टव्यमिति तथा कृत्वा पुरतस्तमालमालोक्य तथा पप्रच्छुः । हंहो तमाल तव वर्णसुहृत्स कृष्णः सत्यं वभूव विषयस्तव मान्यथैतत् । श्लिष्टोऽसि तेन यदयं त्वचि ते विसर्पी लीढो मधुव्रतगणेन तदीयगन्धः ॥ २८ ॥

तदालिङ्गनेनापहृतवेदनो वेदनो नायं निवेदितं तत् किमनुयोज्यः तदन्यतं गत्वा पृच्छाम इति पुरतस्तुलसीमालोक्य ॥ २९ ॥

कल्याणि पाणिकमलं कमलेक्षणेन न्यस्तं त्वयि प्रणयनीतिरसादवश्यम् धन्यासि हे तुलसि ! ते तुलना क्व लोके तन्नः समादिश स ते दयितः क लभ्यः ३

गीतरसिकस्य गानेनाकर्षणसंभवादिति भावः । तीव्रतां शर्कराकण्टकाद्याघातसम्बन्धिनीम् अज्ञायत नान्वभूयत ॥ २४ ॥

स्तम्भः सात्विकभेदः ॥२५॥

*तस्यानुध्याने या एकतानता तया नतया नम्रीकृतया* "एकतानोऽनन्यवृत्ति"रित्यमर बहिर्व्यापाररूपं यत् पारवश्यंतेन ॥२६॥

अनघैरिति वयमेव कृताघा इति भावः ॥२७॥

तेन सख्येन हेतुनेत्यर्थः श्लेषेण लिङ्गमाहुः तदीयगन्धस्त्वचि तेविसर्पीति नन्वनूतमा तदनुपलम्भादित्यतआहुर्लीढ इति अत एव संप्रति स नानुभूयत इति भावः ॥ २८ ॥

नोऽस्माकं अयं न वेद न जानाति ॥ २९ ॥

कमलेक्षणेनेति श्लेषेण त्वत्सौरभसौभाग्यापेक्षया कमलेऽप्यक्षणेन निरुत्सवेनेत्यर्थः । तुलना उपमा ॥ ३० ॥

निजदयितः कथं नो विज्ञापनीय इति सापत्न्यविदोषो विदोषोनास्ति भवत्याः ३१

यतः । आकण्ठमाचरणसीम विलम्बमाना मालामयेन वपुषा वनमालिवक्षः। त्वं भूषयन्त्यपि विहारि तवैव मध्ये मालान्तरं न परिपालयसे रसेन ॥३२॥

तस्मादस्मद्विधजनमनःप्राणवद्ध्यादिसारः ।
हारं हारं स तव दयितो वर्त्मनानेन यातः ।
ईर्ष्याहानेः सहजकरुणा त्वं तमाख्यातुमर्हा
स्वप्राणैर्यत्सुहृदिह सुहृत्प्राणरक्षां विधत्ते ॥३३॥

तथैव तस्या अप्युत्तरमनाकर्ण्य अहो एषापि तद्गतमानसा गतमानसारेव स्पर्शानन्तरतद्विरहे तत् किमस्याः पृच्छया नहि स्वयमुत्तप्ताः परं शीतलयितुमर्हन्ति तदन्यतो गच्छाम इति तथा कृत्वा पुरो मालतीमालोक्य पप्रच्छुः ।३४।

आलि मालति स किं वनमाली नालिलिङ्ग भवतीं नयनेन ।
अन्यथा कुसुमहासविलासैः किं प्रकाशयसि मानसगर्वम् ।३५।
मल्लिके सखि न गोपय दृष्टो गोपराजतनयः स भवत्या ।
चञ्चरीक निकरच्छलतो यत् तत्तनूरुचिमचूचुरदुच्चैः ।३६।
जाति जातिसरलासि सखि त्वं नातिवञ्चय स चञ्चलचेताः ।
त्वां नखैरलिखदेव यतस्ते लोहितत्वमगमन्मुकुलानि ॥३७॥
यूथिके किमपि रोदिषि यूथी भूतभृङ्गनिनदेन निकामम् ।
पश्यतोहर इवैष मनस्ते मादृशामिव दृशैव जहार ॥३८॥

सापत्न्यरूपो विशिष्टो दोषः विदोषो विगतभुजायाः, " भुजबाहू प्रवेष्टो दोः " इत्यमरः। अन्यसुभगेव भुजाभ्यामावृत्य न तिष्ठसीत्यर्थः ॥ ३१ ॥

न परिपालयसे, अपितु पालयसे एव, सौभाग्येन कापि स्वतुल्यताया अनुपलम्भादसूयानुदयादिति भावः ॥ ३२ ॥

यद्यस्मात्सुहृत्स्वप्राणैरपि किं पुनर्वाचेति भावः ॥३३॥

स्पर्शानन्तरं तस्य विरहे सति गतमानसारा नष्टबुद्धिबलेत्यर्थः ॥३४॥

किं नालिलिङ्ग अपित्वालिलिङ्गैव वनमालीति वनमालारचनार्थमपीति भावः ॥३५॥

तदुत्तरमप्राप्य तरलेयं गर्ववती नास्मान् गणयतीति तत्प्रतिवासिनीर्मल्लिकाया अपि तत्रैव स्थित्वा पृच्छन्ति मल्लिके इति भवती अचूचुरत् अस्मन्मनश्चोरस्यापि तनुकान्ति चोरितवती ॥३६॥

चोरस्यापि चोरी शठोपर्य्यपि शाठ्यविधायिनीयं क्रूरचित्ततयेव नास्मान् वक्तीति सरलां पृच्छामेत्याहुर्जातीति चञ्चलचेता इति भवत्याः स्तनगत नखक्षतचिन्हमात्रं लक्ष्यते नतु सम्प्रयोगादिकमिति भावः ॥३७॥

इयमप्राप्तसंपूर्णसंभोगा कामपीडितैवास्ते किमुत्तरं दास्यतीत्यन्यतोऽवलोक्याहुर्यूथिके इति दृशैव दृष्टिमात्रेणैवेति अहो त्वमस्मत्तुल्यव्यसनेव हारितमानसा कथं प्रतिवक्ष्यसीति भावः ३८

इत्येवमेता अपि पृच्छन्त्यो यदि नोत्तरं लेभिरे तदान्यतो गत्वाऽगत्वाशङ्कां दूरीकृत्य कृत्यमात्रानभिज्ञाः पुनरन्यानवनिरुहानूचुः ॥ ३९ ॥

कुरु कुरुवक रक्ताशोक शोकक्षयं नः कथय कथय कृष्णो वर्त्मना केन यातः।
अहह स इह दृष्टो नेति मा जल्पतोऽस्य प्रखरनखरलूनः पल्लवोऽसुं व्यनक्ति॥४०॥

अन्यतोऽवलोक्य कथयामासुः। हे कोविदार ननु कोविद एव कृष्णसंदर्शनस्य स भवान् कथय क्व यातः। यद्दर्शनेन हृदयाद्द्रवतः स रागो निष्क्रम्य शोणकुसुमच्छलतो विभाति ॥ ४१ ॥

पुनरन्यतो गत्वा पप्रच्छुः। अपि पनस न सम्भ्रमोविधेयः कथय हरिः क्व गतोऽस्मदात्मचौरः। अहह यदवलोकहर्षतस्त्वं पृथुतरकण्टकितैः फलैर्विभासि ४२

अयि सुभगमहानुभाव जम्बूतरुवर नूनमदर्शि स त्वयैव। यदवयवरुचां सुचारुचारैरलिमलिनानि फलानि ते बभूवुः ॥ ४३ ॥

पुनः कियद्दूरं गत्वा पप्रच्छुः। धन्यासि हे सखि विलासिनि विल्वशाखे श्लाघ्यं वपुः किमपि कण्टकितं बिभर्षि। कान्तापयोधरधिया तव सत्फलेऽस्मिन् यत्पाणिपङ्कजमधाद्गतशङ्कमेषः ॥ ४४ ॥

अयि वकुल निराकुलस्त्वमेको हरिवदनेन्दुविलोकनेन जातः।
अपि तलपतितैस्तव प्रसूनैरतिकुतुकी स विनिर्ममाय मालाम् ॥ ४५ ॥

अगत्वाशङ्कामिति, अगाः स्थावरा अमी प्रश्नयोग्या इति तथाभूतत्वस्याशङ्काम्, तत्र हेतुः कृत्यमात्रेति ॥ ३९ ॥

कुरुवकः शोणाम्लानः ॥ ४० ॥

तयोरप्युत्तरमप्राप्य एतौ राजसतामसस्वभावतया स्तब्धारुणौ तीक्ष्णौ मूढौ च, तदेतौ विहाय सात्त्विकं कोविदं सौम्यं चान्वेषयाम इत्यन्यत इत्यादि। कोविदारः काञ्चनारभेदः कोइला च इति प्रसिद्धः श्लेषेण कोविदश्चासावरोऽतीक्ष्णश्चेति हे तथाभूत "रः स्मृतः पावके तीक्ष्णे" इति मेदिनी, स प्रसिद्धो रागोऽनुरागः ॥ ४१ ॥

अहो महत्तमोऽसौ समाधिलग्नो न विक्षेपयितुं योग्य इत्यलब्धोत्तरा एव ततो निश्चक्रमुरित्याह पुनरित्यादि हे पनसकण्टकिफल ॥ ४२ ॥

निजसुफलपरिपाकेण कृतार्थस्याप्तकामस्यास्य किमस्मदपेक्षयेति ततोऽप्यलब्धोत्तरा निर्गत्य पप्रच्छुरयि सुभगेति सुचारु यथा स्यात्तथा चारैः संक्रमैरलिमपि मलिनयन्ति अतिशयामानीत्यर्थः ॥ ४३ ॥

असौ फलेषु तद्वर्णधारी हृदयेऽपि नूनं तदारुणताधर्माक्रान्तो भवति यदस्मान् न प्रतिवक्तीति ततोऽपि निरगुरत आह पुनरिति ॥४४॥

इयमुन्नतवृत्तफलद्वन्द्वासगुन्नतस्तनीरस्मान् स्पर्द्धमानेव न प्रतिवक्ति तदलमेतयेति ततोऽपि निर्जग्मुरित्याह अयि वकुलेति ॥४५॥

पुनरन्यतो गत्वा । अभिनवमुकुलाग्रभङ्गरङ्गपरि चिततभखराग्रिमर्षहर्षात् ।
तव सखि सहकारशाखिशाखे मधुमिपतोऽश्रुनिपात एष योग्यः ॥ ४६ ॥

पुनरन्यतो गत्वा । अयि नीप हरिर्वनेन गच्छन्ननुकूलं तव मूलमाललम्बे ।
कुसुमं तव कन्दुकाय चिन्वन्नपि शाखामनुमीयतेऽधिरूढः ॥ ४७ ॥

अपिच । यदितः पतितानि पल्लवानि प्रलुठन्तीह कियन्ति कोरकाणि ।
भ्रमराश्च तमन्वयुर्भवन्तं बत संत्यज्य तदीयगन्धलुब्धाः ॥ ४८ ॥

तत्त्वमेव तत्त्वमेवमुद्दिश क गत्वाग दृशां बन्धुरसौ बन्धुरसौ रभ्य इति ।४९।

पुनःकियद्दूरमुपसृत्य । अपि बत यमुनातटीनिवासास्तप इव कृष्णपरं परंतरन्तः । निरुपधि परदुःखदह्यमानाः कथयत भूमिरुहो हरिः क्व यातः ॥५०॥

पुनः कियद्दूरं गत्वा । अयि विपिनलताः क्व तावदेवं सुकृतमभूदिह वो यदित्थमेनम् । मदयथफलभारभग्नदेहा इव नवयौवनसारमर्पयन्त्यः ॥ ५१ ॥

पुनरन्यतो गत्वा । अयि सहचारि कृष्णसारनारि प्रकटमकारि यशो दृशोर्भवत्या । कृतसुकृतशतानुसारि हारि प्रसभमहारि हरेर्मनो यदाभ्याम् ॥५२॥

अपिच । तदतनुतनुरूपमाधुरीभिर्नयनमपूरि न पूरितं मनस्ते । अयि धृतिमधुनापि सन्धुनाना तदनुविचिन्तनचिन्तया न शेपे ॥ ५३ ॥

तत् पृच्छामः सखि दत्तशपथाः पथा केन गतो नगतोपकारी करस्पर्शेन मद्विधचित्तहारी हारीत्या दारुणया तव दर्शनं करुणयारुणया च दृगन्तलक्ष्म्या

---

अयमतिकठिनो रतिशून्यस्तद्दर्शनेऽपि निर्विकारो न प्रतिवक्ति तदलमनेनेति ततोऽपि निर्जग्मुरित्याह पुनरिति अभिनवेति कुचाग्रे नखाघातो व्यपदेश्यः ॥४६॥

इयमस्मत्तुल्यव्यसना रोदित्येन प्रतिवचने सावकाशा इति तामप्युल्लङ्घ्य जग्मुः । अयीति चिन्वन् अवचेतुं तव शाखामधिरूढ इत्यनुमीयते ॥ ४७ ॥

भवन्तं संत्यज्य तमेवान्वयुरनुजग्मुः ॥ ४८ ॥

एवं तत्त्वं तत्तस्मात् त्वमेव उद्दिश किं तत् क गत्वासौ बन्धुर्लभ्य इति हे अगेति गमनं विनैव इत एव तद्दिशं कथयेति भावः । त्वादृशानां बन्धः ॥४९॥

त्रुटितपल्लवपुष्पचिन्हवन्तं यमुनातीरस्य पन्थानमयं दर्शयत्येव केवलं तच्चङ्क्रमेय स्पष्टं मुखेन न वक्तीति तेनैव पथा ययुरित्याह पुनःकियदिति ॥५०॥

ततोऽप्यन्योचरास्तीर्थवासिनस्तपस्विनः पुरुषाः प्रायः कठोरा एव भवन्तीति स्वभावकोमलाः स्त्रियस्तु तथाभूता न नूनं भविष्यन्तीत्यभिप्रायेणाहुःरयिविपिनेति एनं श्रीकृष्णम् ॥५१॥

एताः किल तत्सधर्मिण्य एवेत्यलमेताभिरिति स्थिरजातयो न विस्रम्भणीया इति चरजातान् प्रष्टुमुपचक्रमुरित्याह पुनरिति कृत सुकृतशतं यैस्तान् अनुसर्तुं शीलं यस्य तत् हारि संमोदनं मनोहरं हरेर्मनोऽहारि हृतम् ॥५२॥

. मधुनाना धृतिं त्यजन्तीत्यर्थः ॥५३॥

करस्पर्शेन नगानां वृक्षाणां तोपकारी तव दर्शनं च करुणया दृगन्तलक्ष्म्या कुर्वन् एवं

कुर्वन सहजसौहृदया हृदयालुतया तमाख्याहि मा वञ्चय ॥ ५४॥
इत्युक्ते दैवतस्तस्यामशङ्कं मन्दमन्दमग्रतोऽग्रतो गच्छन्त्यां पुनरन्योन्यमूचुः। हंहो सहचर्य्यः इयमेव दयावर्त्ती यावतीनां तरुलतामृगजातीनां जातीनां वने यान्ती दर्शयन्तीव कृष्णवर्त्म कृष्णवर्त्मतोऽपि दाहकरं संज्वरं नः शमयतीवेति तदनुपदं गच्छन्त्यो दैवतः पुनरपि कियद्दूरं गत्वा क्वचन स्थितवत्यां तस्यां पुनराशङ्कमानाः ॥ ५५ ॥
अये इहैव तेन सुभगंभावुकेन भावुकेन स्थीयते यदियमत्रैव स्थिता तदिहैव विचारयामः ॥ ५६ ॥
यदिदं निविडतरानोकहगहनं गहनं तन्वि पुनरवधातव्यम्॥ ५७ ॥
इति समन्ततो विचारयन्त्यः कोकिलमेकमालोक्य किंचिदूचुः। अभवदवकलय्य काकलीं ते त्वयि किल कोकिल तस्य दृष्टिपातः। निखिलजनमनोहरः स्वरस्ते भवति त्वदीयकलस्वरानुकारी ॥ ५८ ॥
अपिच। श्यामोऽसि शोणनयनोऽसि वनप्रियोऽसि सुस्निग्धवागसि रसालसलालसोऽसि।एकान्ततो विरहिणीजनदुःखदोऽसि जात्यैव तेन सह ते निविडैव मैत्री ५९
तेन जानन्नपि भवान् न तं कथयिष्यतीति संविहायान्यतो गच्छन्त्यः पुरतो मरालीमरालीभूतगमनां कांचिदालोक्य सहर्षमाहुः ॥६० ॥
एहेहि हंसि सखि शंस पतङ्गपुत्र्या किं प्रेषितासि पुरुवत्सलया त्वमत्र। आं तत्तटीमनु स वर्तत एव तस्मादस्मान् निनाययिषुराशु दिदेश सा त्वाम्॥ ६१ ॥
तदा।दिशं दिशमालि वनमालिवननकारिणीभिरस्माभिर्यया गन्तव्यम् इति पुनर्निवृत्य गच्छन्तीं तामनुगच्छन्त्यः कियद्दूरे वामतश्चक्रवाकीमवलोक्य ॥ ६२॥
हे चक्रवाकि दयितस्य वियोगदुःखं यं वीक्ष्य वीक्ष्य भवती मनसो निरास। तं नो दिदर्शयिषुरेति जवादुपेत्य निर्हेतुसौहृदजुषामयमेव मार्गः ॥ ६३ ॥

स्थावरजङ्गमानां सुखदायकोऽपि केवलमस्माकमेव दुःखदायीत्याहुः हा इति खेदे दारुणया रीत्या चित्तहारी सहजं सौहृदं याति प्राप्नोतीति सा तथा ॥५४ ॥
जातीनां मालतीनां वने यान्तीं कृष्णवर्त्मतोऽपि वह्नितोऽपि ॥ ५५ ॥
भावुकेन क्षेमेण निःशङ्कतयैवेत्यर्थः ॥ ५६ ॥
निविडतैरनोकहैर्वृक्षैर्गहनं दुर्गं गहनंदुर्गकाननयोरपी " ति मेदिनी ॥ ५७ ॥
अवकलय्य अनुभूय ॥ ५८ ॥
रसाले आम्रे सलालसो लालसावान् पक्षे रसे अलसा व्यापाररहिता लालसा यस्य सः ।अरसिको रूक्ष इत्यर्थः। सासूयोक्तिरियम्। यद्वा रसे विषये अलसा निष्पन्दा मग्नेत्यर्थः।५९।
अरालीभूतं कुटिलीभूतम् ॥ ६० ॥
शंस कथय। तटीमनु तस्यामित्यर्थः। सा हंसपुत्री। त्वामिति तत्पारोक्ष्यार्थमित्यर्थः। ६१।
वननं याचना। यया दिशा निवृत्य गच्छन्तीमिति स्वगमनेन इयं दिशं दर्शयत्येवेत्यभिप्रेतवत्य इति भावः॥ ६२ ॥ मनसो दुःखं निरास दूरीचकार उपेत्य निकटं प्राप्य ॥६३॥

इति तदभिमुखं गच्छन्त्यः पुरतः पवनामोदमाघ्राय अये चक्रवाकवध्वागमनकारणसंवादो जात एव अभ्यर्णे एवासौ भविष्यति नः प्राणापहारी ॥६४॥

यतः। अभ्यस्य सौरभरहस्यममुष्य कण्ठखेलाकुतूहलजुषो वनमालिकायाः। श्रीगात्रगन्धसुरभे रचयन्निवान्धान् पुष्पंधयान् वहति चन्दनगन्धवाहः ॥६५॥

अहो तथापि निःसन्देहं भ्रमरानेव पृच्छाम इति तानाभाष्य पप्रच्छुः। विहाय परितः स्फुटाः सुरभिगन्धपुष्पावलीर्विहायसि समीरणान्वितधिया त्वया भ्रम्यते। अयि भ्रमरमण्डलि प्रथय हेतुमस्येति तास्तदीयकलगुञ्जितैः स्वगतमर्थमेवाविदन् ॥ ६६ ॥

अथैवं निकटस्थमेव तमवगत्य गत्यनुसारेण नवयवसाखरशिखरशिवस्पर्शेन मह्या मह्यामुत्पुलकतामाशङ्क्य पुनस्तमेवार्थं द्रढयन्त्यो महीमिवाहुः ॥६७॥

अयि महि महिमा ते हन्त नातो महीयान् यदसि पुलकिताङ्गी कृष्णपादाब्जसङ्गात्। कथय क इह हेतुर्वामनाङ्घ्रिप्रसङ्गः किमु किमुत वराहस्याङ्गसंश्लेषरङ्गः ॥ ६८ ॥

किंच। अयि धरणि धिनोति धन्यता ते चरमचरं च यदस्य पादपद्मे। प्रतिपदमभिचुम्बसि प्रकामं गतिरपि तेन वतास्य मन्थरैव ॥ ॥ ६९ ॥

इत्येवं धरणिमाभाष्य गच्छन्त्यः पुरतश्चकोराकारान् कांश्चन धरणितलगतान् विहगान् पथि निरूप्य सहर्षमाहुः। एतेनैव पथा जगाम स मनोमाणिक्यहारी हि नः सत्यं यच्चरणारविन्दनखरग्लावांसुधाधोरणीः। पङ्क्तीभूय पिबन्ति हन्त परितो ये पुंश्चकोरा अमी तैरेव प्रतिपाद्यते प्रियतमः सोऽभ्यर्णवर्तीति नः ७०॥

---

अभ्यर्णे निकटे ॥ ६४ ॥

वनमालिकायाः सकाशात्सौरभरूपं रहस्यं स्वदुरवापं शास्त्रमिव अभ्यस्य स्ववशीकृत्य पुष्पन्धयान् पुष्पाजीवानपि भ्रमरानन्धान् रचयन् स्वगन्धोन्मत्तान् कुर्वन् वहति। वनमालिकायाः कथंभूतायाः श्रीगात्रस्य गन्धेन सुरभेः ॥ ६५ ॥

विहायसि आकाशे। स्वगतमर्थम् अत्रैव कृष्णो वर्तते यदङ्गसौरभौत्सुक्यमेव हेतुरिति ६६

नवानामपि यवसानामखराणि कोमलत्वादतीक्ष्णानि शिखराण्यग्राणि तेषां शिवस्पर्शेन सुखस्पर्शेन मह्याः पृथिव्या उत्पुलकतामाशङ्क्य। कथंभूतां मह्यां महनीयां आदरणीयामित्यर्थः६

कथय क इत्यादिना तौ हेतू नात्र संभवत इति द्योतितम्। तत्र वामने स्वस्वामिसंबन्धादास्यभावः वराहे कान्ताभावः तथाप्यधुना तनोर्महिमैव महीयानित्यर्थः ॥ ६८ ॥

ते तव धन्यता चरं अचरं जङ्गमं स्थावरं च धिनोति तयोरिव पार्थिवत्वात् धन्यताभिमानप्रसक्तेरितिभावः। अस्य कृष्णस्य ॥ ६९ ॥

अनया धरण्या सहैव स वर्तते इति जानीम एवेत्यलं प्रत्युत्तरापेक्षयेति परामृशुरित्यत आह इत्येवमिति। चरणारविन्दयोर्नखरा एव ग्लावश्चन्द्रास्तेषां सुधाधोरणीः अमृतप्रवाहान्। अरविन्दादाश्चन्द्रा इति नु ते तत्प्रातिकूल्यं कुर्वन्ति तदुपासका इवेत्याश्चर्य्यम् ॥ ७० ॥

एवं प्रश्नसंशयनिश्चयादिकायामुन्मादस्य मध्यमावस्थायां विरतायां पाकवस्थोपक्रमे क्रमेण सदा सद्भावभाववलेऽवलेवलेपरहिते परहिते चेतसि चेतसिद्धे सततस्फुरणकारणकान्तकृष्णाविर्भूतिभूतिवशात् कृष्णोऽहमिति मितिगम्येतरतादात्म्यतरङ्गो रङ्गोत्करकारी यदि बभूव ॥७१॥

तदा तदावेशाच्छ्रुतावलोकितचकितचमत्कारकारणे भगवतो लीलानुकारे कारेजुर्नतराम् ॥७२॥

तत्र च कृष्णलीलातादात्म्यं सजातीयजातीयसकलसामग्रीकं सजातीयविजातीयविशेषसामग्रीद्वयद्वयसं च भवति ॥७३॥

तत्र सजातीया मनोनुकूला कूलावघातिनी नदी कूलमिव घनरसा द्रुतं द्रुतं करोति मनः विजातीया विरसतादा तादात्म्याय न घटते तत्र मनसोऽनिवेशावेशाभावात् ॥ ७४ ॥

इति प्रागूढगूढभावया सहैव वर्त्तमानयानया विरोधेनासामानुकूल्याय लीलाकैवल्यावल्याशङ्कया योगमायया एव विजातीयसामग्रीपरिग्रहग्रहिलतया कृते स्वीका

मदायांत गेहादित्यादिभिरुक्ता तदीयसंभोगविरहयोरवास्तवत्ववास्तवत्वपरामर्शमयी उन्मादस्य प्रथमावस्था मध्यमावस्था त्वेवं प्रश्नेत्यनेनोक्तलक्षणा पाकावस्था च तादात्म्यमयी वक्ष्यमाणा तथान्तर्वर्त्तीति गद्येन प्रथमावस्थानन्तरं निर्दिष्टा च ज्ञेया। पाकावस्थाया उपक्रमे आरम्भे सति कृष्णोऽहमिति तादात्म्यतरङ्गो यदि रङ्गोत्करकारी तत्तल्लीलासाक्षात्कारात् तद्विरहदुःखापलापाच्च सुखदो यदि बभूव तदा तदात्मवेशादेव लीलानुकारे का नतरां रेजुः अपितु सर्वा एव इत्यन्वयः। चेतसिद्धे ज्ञानसिद्धे चेतसि सततस्फुरणमेव कारणं यस्यास्तथाभूता या कान्तस्य कृष्णस्याविर्भूतिःसैव भूतिः संपत्तिस्तद्वशात् कृष्णोऽहमिति अतिधनतृष्णान्धस्य यथा धनतादात्म्यं भवति तथा मितिगम्यः परिमेयस्तदितरोऽपरिमेयः तदात्म्यतरङ्गः। सद्भावः सती भावना तस्य भावः सत्ता बलं यस्य तस्मिन् अवलेपरहिते प्रसङ्गान्तरालिप्ते अत एव परहिते ॥७१॥

श्रुतं पूतनावधादेः अवलोकितं गोवर्द्धनधारणादेः ताभ्यां चकितचमत्कारौ त्रस्तत्वाद्भुतत्वे तयोःकारणे ॥७२॥

सजातीयजातीया सजातीयजातौ भवा सकला सामग्री यत्र तद्यथा वस्त्रहरणाद्यनुकरणे पूतनावधाद्यनुकारे तु सजातीयविजातीयविशेषरूपं सामग्रीद्वयं प्रमाणं यस्य तत्। प्रमाणार्थे द्वयसच् ॥७३॥

सजातीया सामग्री घनरसा सान्द्रास्वादा द्रुतं शीघ्रमेव मनो द्रुतं द्रवीभूतं करोति पक्षे घनरसैर्जलैरासम्यक् द्रुतं गलितं विजातीया पूतनादिका विरसतां वैरस्यं ददातीति सा मनसो अनिवेशेन अरोचकत्वादप्रवेशेन हेतुनाआवेशाभावात् ॥७४॥

प्रागेव आसां गोपीनां आनुकूल्याय ऊढो गूढभावो यया तया अत एव इदानीं लीलाकैवल्यस्य आवल्यं दौर्बल्यं पूतनाद्यसद्भावादङ्गवैकल्यमित्यर्थः। तदाशङ्कया विजातीयेति तर्ह्यहमेव पूत-

रे कृतां विजातीयजातीयसामग्रीमग्रीयां पूतनाकृतिं कृतिं दृष्ट्वा काचन बाला-बालाकारकृष्णायमानायमानावेगजवेन तदङ्कमारुह्य स्तनपयस्तदपादपारपारवश्यं गतवती ॥७५॥

कृष्णभावनाया नायासोऽत्र लघुतरोऽपि रोपित आसीत् मन्ये स एव तासां तथातथालीलः सचन्तरं प्रविवेश नैतत्त्वादात्म्यमिति ॥७६॥

एवं तस्यामेव शकटाकृतिं कृतिं कुर्वाणायामन्या कापि बालकृष्णायमाना चारुदती रुदती श्रद्धयेव सलयकिसलयकिशोरसमधुरेण मधुरेण चरणतलेन तामिव शकटाकारां पातयामास ॥७७॥

एवं च। अन्तः कृष्णतया बहिर्निजनिजाकारेषु तद्धीहतेः कृष्णः संविदि संविवेश सुदृशां संविद्य कृष्णेऽविशत् । कृष्णोऽस्मीति निराकुलस्मृतिजुषां तासामथो श्रेणयः स्वान्तर्वर्तिघना इव स्थिरतरा वभ्राजिरे विद्युतः॥७८॥

किंच । घनज्योत्स्नाजालं मुदिरपरिपूर्णान्तरमिव प्रमीलद्रोलम्बं कनकनलिनीमण्डलमिव । अभूत्तासामन्तर्विहितहरितादात्म्यरभसाच्छरीराणां द्वन्द्वं दलितनवकाश्मीरजमहः ॥७९॥

एवमन्तरस्थेन हरिप्रतिबिम्बेन तदनुगतसकलेन्द्रियवृत्तितया कृष्णोऽहमिति भावप्रभावग्रहतेन्द्रिया सकौतुकजनयितृणा तृणावर्तहननेन पूर्ववृत्तेनापि प्रथममिव करिष्यमाणेनेव समुल्लसितहृदया हृदयाभिज्ञया तयैव योगमाययाकृतत

---

नाकाकृतिधारिणी स्यामिति स्वीकारे कृते सति । क्वापि कृत्रिमाम् अयमाना रिङ्गतीत्यर्थः अपात् अपिवत् अपारं यत् पारवश्यं तत् अति बाल्यादिति भावः ॥ ७५ ॥

कृष्णभावनायाः आयासः यत्नः लघुतरोऽपि स्वल्पोऽपि रोपितो नासीत् किंतु स साहाजिक एवेत्यर्थः ॥७६॥

तस्या योगमायाया सलयेन सनाट्येन किसलयकिशोरेण पल्लवोत्तमेन समा धूरुतकर्दभावो यस्य तेन ॥७७॥

सदृशां संविदि बुद्धौ कृष्णः सम्यक् विवेश संविदपि कृष्णेऽविशत् कुत एतदवसीयत इत्यत-आह अन्तःअंतःकरणस्य कृष्णतया कृष्णात्मकत्वेन हेतुना बहिर्निजनिजाकारेषु या तद्धीहतिःस्वीलक्षणनिजनिजाकारबुद्धिनाशस्तते हेतोः कृष्णोस्मीति धीप्राप्तिरित्यर्थः । स्वस्यान्तर्वर्ती घनोमेघो यासां ताः विद्युत इव ॥७८॥

घनज्योत्स्नेति मेघस्योपरि निश्चिताश्चन्द्रिका इति तासां बुद्धेः कृष्णाधिकरणकत्वं प्रमीलदिति कमलिनीवृन्दोपरि निश्चला भृङ्गा इति तस्याः कृष्णाधेयकत्वं चोक्तं एवमन्तरस्यैव वैलक्षण्यमभूत्तनु शरीराणामित्याह शरीराणामिति । दलितेति पूर्ववदेवेति भावः ॥७९॥

करिष्यमाणेनेव तृणावर्तहननेन सम्यगुल्लसितं हृदयं यस्याः सा गोपी तयैव योगमायया जड इव कथंभूतया न कृता तस्य तृणावर्तस्येवाकारकल्पना यया तथाभूतयापि तस्यै तामुत्साहयितुम् औचित्येन योग्यतया तद्भावं तृणावर्तत्वं आ सम्यक् बोधयन्त्येव तृणावर्तोऽहं कंसप्रेरित इत्यागतो हरामीति ज्ञापयन्त्येवेत्यर्थः । महावात्यारूपस्य तृणावर्ताकारस्य कल्पनं तदानीं न

दाकारकल्पनया नयापिहितोऽचिलेन तस्यै तद्भावमावोधयन्त्येव साजहे इव ।८०।

सापि तामसुरोऽयं तृणावर्त्तो मया नाशित इति प्रतिपद्यते स्म ॥८१॥

काचिज्जानुकरोपसर्पविधिना कूजन्मणीमेखला रिङ्गन्ती शनकैर्विवृत्तवदना तन्नादभीतानना । शङ्कापङ्किललोचनं क्षणमथस्थित्वा पुनर्निर्भयं गच्छन्ती शिशुकृष्णकेलिगमनं मूर्त्तं तथैवाकरोत् ॥८२॥

काप्यन्या नवनीतचौर्य्यकलुषक्रान्तेव भीतानना स्वाभिप्रायविदा तयैव जननीभावं समायातया । देव्या श्रोणितटे गुणैः पुरुतरैर्वद्धेव साश्रुदृशोः कृष्णोऽहंकुपितप्रसूनियमितोऽस्मीति स्म संत्रस्यति ॥८३॥

. सैव जानुकरचंक्रमणेन क्षोणिमूलमवलम्ब्य चलन्ती । अर्जुनाविव तया भ्रमक्लृप्ते आकृती भ्रमत एव बभञ्ज ॥ ८४ ॥

एवं काचन कृष्णवत्सवत्सपालवलबलभद्रः स्वयं वने विहरामीति मीतिपरा वत्सकासुरहननं करिष्य इति प्रतीतिप्रतीतिसमुत्सुका तयैव वत्सवत्सवालवलवलभद्रवत्सकासुरान् स्फोरयित्वाकृततथाप्रत्ययावत्सकासुरहननमनुचकार ॥ ८५ ॥

काचिद्वेणुं करकिशलये सन्निधायेव लीलालोलाताम्राङ्गुलिदलकुलं वादयन्तीव मन्दम् । तारास्निग्धे शवलि धवले धूमले कालि नीले ही एहीति श्रवणसुखदं नर्चिकीराजुहाव ॥ ८६ ॥

किंच । काचित्कस्याश्चन भुजशिरस्याद्धाना सलीलं पीनाभोगां भुजविसलतां काश्चिदाभाषमाणा । कृष्णोऽहं पश्यत मम गतिं मञ्जुलां मन्दमन्दामित्यानन्दोल्लसितललितप्रौढगर्वं चचाल ॥ ८७ ॥

तास्ताः लीलाः स्वयमनुकरोत्येवमास्वादहेतोर्मन्ये तासां हृदयकुहरं सन्निविष्टः स एव । नो चेदन्तः करणविरतौ संविदः सन्निरोधे तासां चेष्टा वचनवपुषो र्जायतेकस्य हेतोः ॥ ८८ ॥

---

रसाग्रहमिति तन्न कृतमिति ज्ञेयम् । सा कथंभूता नयेन तदुचितकृष्णभावेन अपिहिता अनाच्छन्ना एषोऽहं कृष्णस्त्वामपि सहरामीति दर्शितस्ववलेत्यर्थः ॥८०॥

अत एवाह सापीति ॥८१॥ निर्भयं गच्छन्तीति सोऽयं ममैव मेखलारव इति प्रत्यभिज्ञानवतीत्यर्थः ॥८२॥

कलुषमपराधः तयैव देव्या योगमायया ॥८३॥

अर्जुनाविव क्लृप्ते आकृती बभञ्ज ॥ ८४ ॥

वत्सपालानां वलं च वलभद्रश्च ताभ्यां सह वर्त्तमानः कृष्णवत् कृष्ण इव मीतिपरा ज्ञानपरा " मीतिर्गत्यां मत्यां मिति कल्पद्रुमोक्तेः, इति या प्रतीतिस्तया प्रतीतिर्हर्षस्तत्र समुत्सुका "प्रतीतः सादरे ज्ञाते हृष्टप्रज्ञातयोस्त्रिष्विति मेदिनी"। तयैव योगमाययैव, वत्सवत् वत्सानिव८५

लीलया आलोल आताम्रं अङ्गुलिदलकुलं यत्र तद्यथा स्यात्तथा ॥ ८६ ॥

भुजशिरसि स्कन्धे ॥ ८७ ॥

संविदश्चेतनायाः संनिरोधे वृत्ते अन्तःकरणानां विरतौ सत्यां व्यापाररहित्ये सति ॥८८॥

एवमपरा पराहतात्मसहजभावा भावारूढकृष्णा कृष्णानटनिकटस्थितात्मानं कृष्णत्वेन जानती कृष्णाहितकृष्णाहितर्दनचिकीर्षयेव कण्डूलहृदया हृदयाभावेऽपि तत्कालकालिकालियमर्दनलीलालीलासती किंचिदवादीत् ॥ ८९ ॥

मत्खेलाकुतुकास्पदं तरणिजां दुष्टां वृथा मा कृथा याहीतो भुजगाधमेति परुषं रोषाद्वदन्ती मुहुः । नृत्यन्तीमिव जानती फणिमणिव्राते तनूमात्मनो देव्या योगबलात् प्रतीतिविषयं कालीयमभ्यालपत् ॥ ९० ॥

अथापरा परात्मनाथेन सममेकात्मतामासाद्य कृष्णोऽहमिति मितिरहितं भावमावहन्ती हन्तीव स्म यदि निजस्वभावं तदा विलोकयेव तस्मिन्नेव कालेऽकालेरितं दावकृष्णवर्त्मानं कृष्णवर्त्मानन्दवशतया तदुपशमाय माययेव शक्तिविशेषमवतारयन्ती तारयन्तीव ततो बन्धुजनानपि किंचिदूचे ॥ ९१ ॥

मा भैष्ट भो दवहुताशनतः समिद्धात् त्रातास्मि सर्वविपदां भवथापशङ्काः । आलोकयध्वमधुनैव पिबामि भीता यूयं भविष्यथ ततो नयने पिधद्ध्वम् ॥ ९२ ॥

एव मन्यतमात्मनाथमात्मनाथ वहन्ती तादात्म्यवता वतातिरहस्यहस्यमानतास्वीकारा स्वीकारानभिज्ञा वस्त्राहरणकारिहारितच्चारतानुकारेण वस्त्राण्यादाय कदम्बारोहरोहत्महर्षामिवात्मानं विदती चारुदती चारुतरमावभाषे ॥ ९३ ॥

एकैकशः समुपसीदथ किं मिलित्वा किं वा निजं निजमितो वसनं क्रमेण । आदातुमर्हथ न चेन्नतरां मदास्ये क्रोधेन किं मम करिष्यति हन्तभूपः ॥ एवमन्यान्यायमिव कृष्णकैवल्यमावल्यमासस्वभाववैधुर्याद्विजवनितानितान्तसौभाग्य-

कृष्णस्य कृष्णाया यमुनाया वा अहितः कृष्णाहिः कालियस्तस्य तर्दनं पराभवः हृदयाभावेऽपि हृदोऽयः शुभावहविधिस्तदभावेऽपि तत्कालं कलयितुं ज्ञापयितुं तु शीलं यस्यास्तथाभूता कालियमर्दनलीला तस्यां लीः संश्लेषस्तां लातीति सा ॥ ८९ ॥

आत्मनस्तनूं नृत्यन्तीमिव जानती कालीयं अभ्यालपत् देव्या योगबलाद्धेतोरेव प्रतीतिविषयम् ॥ ९० ॥

अकालेरित अकालेऽपि प्रेरितं दावकृष्णवर्त्मान दावाग्निं विलोक्य इव कृष्णस्य वर्त्मनि पथि आनन्दवशतया शक्तिविशेषम् अवतारयन्तीव प्रकटयन्तीव ॥ ९१ ॥

समिद्धात् प्रज्वलिताद् यदि भीता भविष्यथ ततः ॥ ९२ ॥

अन्यतमा गोपी तादात्म्यवता आत्मना बुद्धया आत्मनाथं श्रीकृष्णं वहन्ती श्रीकृष्णोऽहमिति जानतीत्यर्थः । वत आश्चर्य्ये अतिरहस्येन हस्यमानतायां सत्यामिव स्वीकारो यस्याः स आवभाषे । स्वीकारानभिज्ञा इति कर्म पदं द्वितीयाबहुवचनान्तम् । वस्त्रहरणकारिणो हारि तचारिं तदनुकारेण । चारुदतीति मन्दहास्यव्यञ्जकम् " दन्तछन्दोऽप्यस्ति सर्वत्रे " इत्यमरटीका अप्रान्ते, त्यत्र चकाराद्वा शिखरदतीत्यादिवत् सिद्धिः ॥ ९३ ॥

सन्यायमिवावादीदितिसम्बन्धः । लीलावतारे लीलाप्रकाशेसाति । वत अद्भुते । आरोचर्माणः सम्यगतिशयं स्वन्नानन्दस्यासारो धारासम्पातो यस्मिन् तादृशे सारे वचन विला-

यतारे यतारेरीयमाणानन्दासारे सारे वचनविलासे कृतमतिः पुरतः पुरतः समागता इव ता मत्वा समधुरस्मितमवादीत् ॥९४॥

कल्याण्यः स्वागतं वो ननु निरवकरं गार्हमेध्यं तपो वः प्रीतिः श्रद्धा सभक्तिर्मयि च सुविदिता हन्त युष्माकमेषा । दृष्टोऽहं यात नातः परमपि सुभगाः स्थातुमत्रोचितं वो मद्भावः स्यात्सुरस्यः श्रवणगुणकथाचिन्तनैर्नाङ्गसङ्गैः ॥९५॥

अथापरा पराभूतान्तःकरणा प्रियतादा प्रियतादात्म्येन रसदमूर्द्धन्यधन्यगोवर्द्धनधरशिखरधरणलीलानुकारे तत्कालसमुपसन्नसुघनघनघटाघटाननगलज्जलधाराधारायमाणमवनितलमालोक्येव कातरतरवदनान् गोगोपवनितादीनप्यालोक्येव साश्वासमाह ॥९६॥

मा भैष्ट भो मयलदारुणवातदर्पघोरकर्षतो भजत चेतसि धैर्य्यमार्य्याः। एकातपत्रमिव भूवलयं करोमि गोवर्द्धनेन करपद्मदलीकृतेन ॥९७॥

किंच । सन्देहं मा कुरुत करतो मामकीनाद्गिरीन्द्रः स्रस्तो भावीत्यहह गिरि मेऽप्रत्ययं मा स्म कृद्ध्वम् । साब्धिद्वीपक्षितिधरकुलं भूतलं नागराजो धत्ते नैकाचलमुदसितुं नागराजोऽयमीशः ॥९८॥

इति निगदन्ती गदन्तीव्रमिव स्वजनानां दूरयन्ती रयन्तीक्ष्णमासाद्य सौरभरभसपरिभूतीभवदमृणालमृणाललतिकयेव समुन्नीतया सुन्नीतया वामया वामया भुजया जयारम्भपताकादण्डनिभया भयापहरणाय निजोत्तरीयमुल्लास्य दक्षिणकरतलाग्रेण दक्षिणश्रोणितलमालम्ब्य तस्थुषी पुनराह ॥१९९॥

प्रविशत शतगव्यूतिव्यूतिललितं शतपत्रच्छत्रस्येवास्य तलमिति॥१००॥

से विषये । पुरतोऽग्रतः । पुरतःपुरात् ॥ ९४ ॥

सभक्तिः भक्त्या सहिता ॥ ९५ ॥

प्रियेण सह यत्तादात्म्यं तेन प्रियतां प्रेमाणं । आदत्ते धारयतीति सा यद्वा दयते रक्षति व्यनक्तीत्यर्थः । देङ् रक्षणे, इत्यस्मात् । सुघना सुनिबिडा या मेघघटा तस्याः सकाशात् घटाननादिव घटमुखादिव गलतां जलधाराणां आधारायमाणम् ॥ ९६ ॥

एकं आतपत्रं यत्र तथाभूतं श्लेषेण एकच्छत्रां पृथ्वीं कुर्वता मया साम्राज्यं प्राप्य यूयं प्रतिपाल्यध्वे का चिन्तेतिभावः ॥९७॥

मम गिरि वाचि अप्रतीतिं मा कृद्ध्वम् नागराजोऽनन्तः । एकमचलं गोवर्द्धनं अपि उदसितुम् उत्क्षेप्तुम् । अयं नागराजो न ईशः अपितु ईश एव । नागराणां अजो राजा महाविनोदीत्यर्थः । अजश्छागे हरिब्रह्मविधुस्मरनृपे हरे इति मेदिनी ॥९८॥

गदं पीडां । तीक्ष्णं रयं वेगम् । सौरभस्य रभसेन वेगेन परिभूतीभवत् अमृणालम् उशीरं यतस्तथाभूतया मृणाललतिकयेव वामया भुजया वामया मनोहरया ॥९९॥

शतगव्यूतीनां व्यूत्या सर्वतः समसन्निवेशसंतत्या ललितम् । गव्यूतिः स्त्री क्रोशयुगमित्यमरः । व्यूतिरिति वेञ्तन्तुसन्ताने ॥१००॥

अथ कापि स्वयं स्वयन्त्रितमहिम्ना स्वमुरलीनादेनाकृष्य समानीता नीतावात्मकुलस्य कृतावहेला हेलावतीर्गोकुलरमणीमणीरागता रागतात्पर्य्यपर्य्यवसानभूताःप्रभूताः प्रणयनपस्पृहातुरः सरमालोकयन्तीरिवालोक्य रासरससरसकृष्णतादात्म्याष्टमग्रहग्रहणतिरोभूतस्वभावा चन्द्रमण्डलीव कृष्ण इव सहासपरिहासपरिपेशलं किंचिदवादीत् ॥ १०१ ॥

साध्व्यः स्वागतमास्यतां किमपि वः क्षेमं समादिश्यतां प्रेयो वः करवाम किं, कथमहो सर्वाः सहैवागताः । हन्त व्यस्तसमस्तवेशवसनालङ्कारविन्यासतां येयं काप्यनुभीयते सुमहती साचा त्वरा वः कथम् ॥ १०२ ॥

घोरेयं रजनी वनं च सुमहद्घोरं वनस्था अमी घोरा एव हि जन्तवः कथमिह स्थेयं गणैस्त्वादृशाम् ।तस्माद्गच्छत मन्दिरं कुसुमिता धौताः सुधांशोः करैर्दृष्टाः काननभूमयः सुरभिणा वातेन शीतीकृताः ॥ १०३ ॥

न स्थेयमत्र निशि पङ्कजपत्रनेत्राः स्त्रीभिः समं परमधर्मविदा जनेन । ध्यानाद्गुणश्रवणतो गुणकीर्त्तनाद्वा रम्या यथा मम रतिर्न तथाङ्गसङ्गैः ॥ १०४ ॥

इत्येवं कृष्णानुकृतिकृतिकौशलशलत्तादात्म्यतया तया कलमधुरं मधुराञ्जि निगद्याहमन्तर्दधामीति मनसि मतीतिमती कृष्णवदन्तर्द्धानलीलां यदि तदानुचकार १०५
तदा तस्याश्चेतरासामपि सद्य एव सहैव तादात्म्यनिद्राभङ्गः समपद्यत ॥१०६॥

---

आत्मकुलस्य नीतौ स्वीयकुलधर्ममर्य्यादायां हेला शृङ्गारसूचकभावविशेषस्तद्वतीः रागस्य तात्पर्य्यमङ्गस्तत्रैव पर्य्यवसानभूताः धर्मप्राधान्येन निर्देशस्तदाधिक्यद्योतकः प्रभूता बह्वीः। अष्टमो महो राहुः । परिपेशलमतिचतुरम् ॥ १०१ ॥

प्रेयोऽतिप्रियम् ॥ १०२ ॥

मन्दिरं व्रजं वस्तुतस्तु लतामन्दिरम् । कुसुमिता भूमयो दृष्टा एव किं पुनरतिदिदृक्षयेतिभावः ॥ १०३ ॥

परमातिशयेन अधर्मविदा अतिकामिना मया जनेन सह न स्थेयमिति प्रकटः ।परमं धर्मं वेत्तीति तादृशेन मया सह न स्थेयम् । अपितु स्थेयमेवेत्यान्तरोऽर्थः । अङ्गसङ्गैर्यथा रतिर्मम रम्या तथा ध्यानादिना नेत्यान्तरोऽर्थः । प्रकटार्थः । स्पष्ट एव ॥ १०४ ॥

कृष्णस्यानुकृतिरनुकरणं तत्र कृतिकौशलं कि याथैपुण्यं तस्मादेव शलत् प्राप्नुवत्तादात्म्यं यास्तासां भावस्तत्ता तया मधुरं मधुराञ्जि मधुरतोऽपि रञ्जकम् ॥१०५॥

तादात्म्यनिद्राभङ्ग इति इतरासां तद्विरहे अनुक्रियमाणे मूलविरहस्यैवोदयात् अन्तर्हितश्यास्तस्यास्तु अनुकरिष्यमाणस्य ततः परस्य कृष्णलीलान्तरस्यानुपलम्भात् तासां विरहवैकल्येन स्वैकस्यस्याप्युत्थापितत्वाच इति विवेचनीयम् ॥१०६॥

ततश्च प्रकृतायां जाग्रद्दशायाम् । आयातं मनआदिभिर्विकसितं नेत्रादिभिर्जीवितं संतापेन समुत्थितं बत निद्रा संमूर्च्छितं चिन्तया । भूयः प्रागिव कृष्णमार्गणविधौ कामं कुरङ्गीदृशः सर्वा दिक्षु विदिक्षु दत्तनयना कातर्य्यमभ्याययुः ॥ १०७ ॥

एवं विस्मृततन्मयीभावा भावाधिविरसा धैर्य्यवत्योऽपि स्वयमेवगच्छताऽच्छतारहितेन धैर्य्येण पर्य्याकुलेक्षणाः ॥ १०८ ॥

क्षणादेव मरुद्वेगेन निर्वासिसीव रसोरसोन्तरे व्यक्तानीव पत्राङ्कुराणि किंवा तासामेव हृदयस्थानि यानि तान्येव नयनविवरेभ्यो निर्गत्य भुवि निपतितानि किंवा विपिनलक्ष्म्यैव स्वकरकमलेन लिखितानि किंवा कमलजादिभिरुपासनार्थं विलिख्य रक्षितानि यानि तान्येव सपदि दिवो विच्युतानि किंवा सरणिलतायाः पार्श्वद्वयवर्त्तीनि विचित्राणि नवीनपत्राणि श्रीकृष्णचरणकमललक्ष्माणि लक्षयांचक्रुः ॥ १०९ ॥

लक्षयित्वा च त्वाचमुद्दर्पमुद्दर्पयन्त्यो झटिति घटितानन्दचमत्काराः परस्परमूचुरिदमहो महोदयोऽस्माकमतिसौभाग्यस्य ॥ ११० ॥

यतः । इतो व्यातन्वन्ति ध्वजकमलवज्राङ्कुशमयीर्लसल्लेखालक्ष्मीः पुरु पुरुपरत्नमणयिनीः । करैरामृष्टानि प्रकृतिमधुरैः शीतमहसा पदानि व्यक्तान्याकलयतहरेः पङ्कजदृशः ॥ १११ ॥

---

प्रकृतायामिति पूर्वव्याख्यानुसृत्या पाकावस्थां परित्यज्य पुनर्मध्यमावस्थां प्राप्ते सत्युन्माद इत्यर्थः । विदाज्ञानेन चिन्तया संमूर्च्छितम् अभिव्याप्तम् संमूर्च्छनमभिव्याप्तिरित्यमरः ॥१०७॥

एवं विस्मृतयन्मयीभावास्ताः वेगादेव श्रीकृष्णचरणकमललक्ष्माणि लक्षयाञ्चक्रुरित्यन्वयः भा तन्मयीभावदशायां कान्तिविशेषस्तस्यावधि अपगमे सति विरसा स्वादृशसारस्येनापि रहित इत्यर्थः । धैर्य्यवत्योऽपि परमाग्रहेण धैर्य्यं दधत्योऽपि । अच्छता याथार्थ्येन नैर्मल्यं तद्रहितेन कृत्रिमेणेत्यर्थः ॥१०८॥

रसा पृथ्वी तस्या उरसोऽन्तरे वक्षोमध्ये मरुद्वेगेनैव निर्वासति गलितवसने पत्राङ्कुराणीति पृथ्व्यास्तादृशसौभाग्योदयेन श्लाघाविवक्षया तासामेवेति तदानीं यत्र यत्र नेत्राणि पतितानि तत्रैव चिह्नानीति तेषां वैभवविवक्षया विपिनलक्ष्म्येति तेषां सुवलितत्वसौन्दर्य्ययोर्विवक्षया कमलजादीति तेषां माहात्म्यविवक्षया विच्युतानीति तासां वैकल्यदर्शनव्याकुलाना तेषां तत्रासावधानत्वादिति भावः । सरणीति तेषां अन्यसौन्दर्य्यसम्पादकत्वविवक्षया उत्प्रेक्षा १०९

त्वाचं त्वक्सम्बधिनं उद्दर्पं रोमाञ्चमित्यर्थः । उद्दर्पयन्त्यः उच्चैः प्रगल्भयन्त्यः "जिधृषा प्रागल्भ्ये" व्यन्तः ॥ ११० ॥

शीतमहसा चन्द्रेण कर्त्रा करैः किरणैः प्रदीपैरिव आमृष्टानि सम्यगुज्ज्वली कृतानीत्यर्थः । कीदृशानि ध्वजादिमयीर्लसद्रेखासम्पत्तीर्व्यातन्वन्ति विख्यापयन्ति । पुरु यथा स्यात्तथा कलयत ॥ १११ ॥

किंच। निम्ना पार्ष्णौ कियदिव शिखास्वङ्गुलीनां च किंचिन्मध्योत्ताना ललितसिक ता कोमलायां पदव्याम्। चित्राम्भोजादिभिरिह हरेर्भाति पादाङ्कलेखा सीमन्तस्य क्षितिमृगदृशो बालपाश्यालतेव ॥ ११२ ॥

यत्रहि। ध्वजः सर्वोत्कर्षैः कमलमवनीं शीतलयितुं पविर्नोहत्यर्थं हृदयखन नायाङ्कुशमिदम्। अथैषामन्योन्यं विसदृशगुणानामपि सहस्थितिः शोभां धत्ते हरति च मनो लोचनवताम् ॥ ११३ ॥

किंच। अहो माधुर्य्याणामहह महिमा तच्चरणयोर्यदङ्केऽपि क्षोण्यामपतदिह मुग्धे मधुकरः। प्रसूनानां धूलौ भवति विमुखो नास्य तदयं महाभागो मन्ये जयति परमो भागवतवत् ॥ ११४ ॥

धन्याधूलिरियं धुनोति धरणेर्दुःखं धुनीतेतरां धीराणां धुरमंहसो धृति मतां धैर्य्याध्वरध्वंसिनी। श्रीगोविन्दपदारविन्दतलयोर्यामिन्दरा सुन्दरी नन्दं शोऽप्यरविन्दजोऽपि दिविषद्वृन्दैः समं वन्दते ॥ ११५ ॥

तद्वयमपि चोरसि रसिकशेखरस्य रस्यतमामिमामिदानीमतिदुरन्तसन्ततस न्तापतापहारकृते विदधामो धूलिमिति कयाचिदुक्ते काचिदपरा परामर्शवती नि जगाद ॥ ११६ ॥

धूलिग्रहणतो विरम्यतां रम्यतां मास्याः पदपद्व्या विलोपयन्तु भवत्य ए कैकशः परामर्शेन विलोचनतो लोचनतोपकारीण्यत्र सन्तिचमानि मा निलोडयत कराभिघातेनेति तान्येव निभालयन्त्यः ॥ ११७ ॥

---

पार्ष्णौ अङ्गुलीनां शिखासु च कियदिव निम्ना। किंचिन्मध्यप्रदेशे उत्ताना। ननु ता तत्रत्यानामङ्कानां कथं व्यक्तिरत आह सिकता इति। तथापि सिकतासु प्रायोऽवगाढतय तद्व्यक्तिरिति भावः। पादाङ्कलेखा चरणचिन्हश्रेणी ॥ ११२

ध्वज इति महागर्वत्वं कमलमिति कृपालुत्वम्। पविरिति निर्दयत्वं अङ्कुशमिति तत्राप्यति क्रौर्य्यम्। तस्य पात्रभेदे कयाचित्वामप्रखरया समर्थितम्, किंचैतदत्याश्चर्य्यमिति दक्षिण प्रखरा आह: अथैषामिति ॥ ११३ ॥

तदुपविष्टं कमपि भ्रमरमालक्ष्याहः अहो इति ॥ ११४ ॥

धीराणां अंहसो दुःखस्य धुरं भारं धुनीते खण्डयति धृतिमतांधृतिं दिधीर्षतामित्यर्थः ११

रस्यतमा इमां धूली उरसि विदधामः। अतिदुरन्तः संततः सन्तापो यासां तासां भावस्तत्त तस्या अपहारकृते दूरीकरणार्थम् ॥ ११६ ॥

पदपद्व्याश्चरणचिह्नपथस्य रम्यतां माविलोपयन्तु एकैकशः भवतीनां सर्वासां मध्ये एकैकशः प्रत्येकमेव परामर्शेन विलोचनतः ध्वजोयमङ्कुशः खल्वयमिति विचारेणावलोक दित्यर्थः। निलोडनं विलापनम् ॥ ११७ ॥

सह भीताया नीतायामिसौभाग्यरसाया रसायाँ दिवोऽपि दुरापायाः कस्या श्चित् प्रियतमाया मायारहितहितसौहृदाया हृदायातवल्लभप्रणयसौलभ्यलभ्यमानमानायाः सहजप्रणयसुखाराधाया राधायाश्चरणलाञ्छनानि लाञ्छनानि सौभाग्यविशेषस्येव विलोक्याहुः ॥ ११८ ॥

अहो किमिदम् । एकस्यामिव लतिकामतल्लिकायां वैजात्यं किसलयसन्ततेर्यदेतत् । भाविन्याः प्रियपदलाञ्छनानि यत्र दृश्यन्ते प्रियपदलाञ्छनाश्रितानि ११९

किंच । यथास्याः पादाब्जप्रतिकृतिततिः कृष्णपदयोः पदैः सार्द्धं श्रेणीभवनरुचिरेयं विलसति । तथा मन्ये प्रेयो भुजशिरसि दत्त्वा भुजलतां कृतालम्बाया सीदिव मदगजेनोन्मदगजी ॥१२०॥

तदियमेव केवलं वलं वहति सौभाग्यस्य यदयमदयमतिरपहाय हा–यतमाना मानापहारेणापि तदनुगतये नस्तामेकामेव कामे ववद्धमतिरपन्हुत्य रमते ॥१२१॥

क्षणं विचिन्त्य पुनरूचिरे चिरेण । धन्येयं जगतीगतोन्नतरधूरत्नेपु रत्नोत्तमं सौभाग्योत्सवभूः प्रभूतसुकृता राधैव निर्द्धारितम् । ज्योत्स्नाचन्द्रमसं विना पिकगिरां लक्ष्मीर्वसन्तं विना विद्युद्वारिधरं विना न भवितुं संभावनामर्हति ।।१२२।

इति निश्चिते चन्द्रावली सखी मुखविजितपद्मा पद्मागुणश्यामां श्यामां प्राह १२३

अयि श्यामे स्वपक्ष पक्षपातिता पातिता खलु तया यतस्तदेकमात्रजीवनां वना-

---

नीतः प्राप्तः आयामी सौभाग्यरसो यया तस्याः हृदि स्ववक्षसि आयातः सम्यक् प्राप्तो यो वल्लभस्तस्य प्रणयसौलभ्येन लभ्यमानः प्राप्यमाणो मानो गर्वो यया तस्याः ॥११८॥

लतिकामतल्लिकायां प्रशस्तलतायां सरण्यामित्यर्थः । किसलयसन्ततेः पल्लवकुलस्य वैजात्यं प्रामदक्षिणतो विजातीयाकारत्वम् ॥ ११९ ॥

श्रेणीभवनरुचिरा श्रेणीभावेन रुचिरा भुजलतां दक्षिणभुजाम् ॥१२०॥

तदनुगतये तस्या एवानुगतिं प्राप्तुं नोऽस्मान् मानापहारेण निरादरेणअपि अपहाय परित्यज्य यतमानास्तत् प्राप्त्यर्थं यत्नवतीरप्यगणनिमिस्यनेन तासयतमानामपीति व्यञ्जितं यद्वा मानापहारेणापि तदनुगतये निजादराद्यभिनापि तदनुगत्यर्थमित्यर्थः तां अपन्हुत्य चोरयित्वा ।।१२१।

प्रभूतसुकृता प्रचुरपुण्या ज्योत्स्नेति तेन वयं कदाचित् तत्सङ्गत्वयोऽपि ज्योत्स्नाद्युपमानयोग्या न भवितुं प्रभवाम इति भावः ज्योत्स्नादिभिर्विना चन्द्रादीनामपि न साफल्यमिति तया विना नैव तस्य शोभेति च भावः । तत्र ज्योत्स्नाचन्द्राभ्यां तयोर्माधुर्य्यं पिकगीर्वसन्ताभ्यां साद्गुण्यं विद्युद्वारिधराभ्यां सौख्यं च वर्णितम् १२२॥

इति निश्चिते सुहृत्पक्षे सौभाग्यातिशये निर्द्धारिते सति इत्यर्थः ॥१२३॥

सपक्षस्य पक्षपातिता आनुकूल्यं पातिता खण्डिता तया त्वत्सुहृदा राधया । सर्वा एव दयिता वल्लभा यस्य तम् । दयितमिति परमदक्षिणनायकस्य तस्यानभिप्रेताचरणात् विप्रियेव सेत्यपि सूचितम् । एकैव रन्तुमेवेत्यनेन तस्यास्तस्मिन् काम एव नतु प्रेमेत्यपि ध्वनितम् ।

न्तरे भवतीं निर्माल्यमिव विहाय हा यया सर्वदयितं दयितं तमपहृत्य स्वयमेकैव रन्तुमहो त्वयि तत्सौहृदं हृदन्तरगामि न भवति ॥१२४॥
श्यामाइ पश्ये सहजमत्सरमते स रमतेरकौशल्यात् ॥१२५॥
शृणु तावत् । सा कृष्णप्रणयोत्सवामृतरसस्रोतस्वतीस्रोतसि क्षिप्ताङ्गी शिशुतावधि स्ववपुषि स्वाच्छन्द्यहीना वपुः । यत्र क्वापि महारयेण महता तच्छ्रोतसा नीयते तस्माद्वारयितुं न पारयति सा शैवालवद्गमःसते ॥१२६॥
तदियं नाक्षेपणीया पणीया हि सर्वतो भावेन । जातं सहैव वपुषा सह वर्द्धमानमैक्येन नो पृथागिति प्रतिपद्यमानम् । आसाद्य कालमुपकोपमसौ त्यजन्ती नैवापराध्यति हि गन्धफली कदापि ॥१२७॥
तेन समये प्राणतुल्या अपि सखीस्त्यजन्त्या न खलु रसवत्या सौहार्दतो हीयते ॥१२८॥
अन्या आहुः। श्यामे सपक्षा हि सपक्षाहितं कदापि नेक्षन्ते तेन त्वया त्वयातयामप्रणययेदमुक्तं युक्तम् । वस्तुतस्तु तस्याः प्रधानतया नेदमध्यवसितं सितम् १२९
यतो निष्कृषेयं पेयं सर्वगोपरमणीमणीनां कृष्णस्य तमधरमधरयन्ती चकोरीं स्वयमेकैव पिबति ॥१३०॥
तदिमानि मा नितान्तसन्तोषकारीणि तस्याः पदचिन्हानि इति तानि नयनसुखास्पदानि पदानि विलोकयन्त्यो यन्त्यो भावशाबल्यं भावशाबल्यं तदनुसारेण ललितं चलन्त्यः कियद्दूरेऽदू रेणपु दृष्टिम् ॥१३१॥

अहो आश्चर्य्यमेतत् काममाहात्म्यं यतस्तस्याः सौहृदं त्वयि हृदन्तरगामि मनोऽन्तर्वर्त्ति न भवति किन्तु बाह्यमेवेत्यर्थः ॥१२४॥
सहजैव मत्सरमतिर्यस्या हे तथाभूते सर मत्साम्मुख्यादपसर तत्र हेतुर्मतेरकौशल्यादीति तव मतिरमङ्गला दुष्टेवेत्यर्थः ॥ १२५ ॥
शृणुतावदिति अयमर्थः तस्याः स्वचेष्टितस्य सर्वस्य स्वबुद्धिपूर्वकत्वे सति त्वदुक्तं सम्भवेदपि तस्यास्तु स्वप्रेमाधीनप्रियतमपरतन्त्रायास्तथा किमपि नैवेत्यत आह सा इति। स्वाच्छन्द्यहीनेति कृष्णवशगेव तद्वपुरिति भावः ॥ १२६ ॥
पणीया स्तव्या। गन्धफली चम्पकः उपकोपे कोषवहिर्वर्त्ति पुटकम्। तत्पुष्टिप्रापणाय उपकोप एव ततो निष्पतति तस्याः को दोष इति भावः । ततश्चास्माकमेव सुखसम्पत्तिरियमिति सूचितम् ॥ १२७ ॥ समये सुरतसम्बन्धिनीति भावः ॥ १२८ ॥
अन्या इति चन्द्रावली सपक्षाः तेन हेतुना त्वया तु अयातयामः अजीर्णः प्रणयो यस्यास्तया सितं बद्धम् ॥ १२९ ॥
अधरयन्ती पानपरिपाट्या न्यक् कुर्वती ॥ १३० ॥
इति तानीति राधासपक्षा एवेति ज्ञेयम् । भावशाबल्यं हर्षगर्वप्रणयकोपदैन्यादिभावसंमर्दमन्यः प्राप्नुवत्यः अत एव तादृशसंचारिभावानां भावशेन प्रकारवशेन आवल्यं यत्र तद्यथा यास्तथा तेषां चरणचिन्हानां अनुसारेण चलन्त्यो रेणपु दृष्टि अदुः ॥ १३१ ॥

दत्तदृष्टयस्तत्र ता वधूपदानि धूपदानि नालोक्य वितर्कयामासुः ॥ १३२ ॥
अहो किमिदम्। आलोक्यते न रमणी पदलक्ष्मलक्ष्मी रम्याणि भान्ति पर-
मत्र हरेः पदानि। आं ज्ञातमां स्वरतृणाङ्कुरखिन्नपादामुन्नीय वक्षसि वधूमय-
मत्र यातः ॥ १३३ ॥
निश्चितमेवैतत्। उरसा सरसायितेन रामां वहतस्तद्भरतो वतेश्वरस्य। पदप-
ङ्कजलक्षणानि निम्नान्यवनौ कोमलवालुकाचितायाम् ॥ १३४ ॥
तदपि दयिते कृष्णस्य अनुभवानुभवार्जितसुकृतकृतसौभाग्यगरिमाणं मधुरि-
माणं मधुकरीव मदकरिवराढा रूढानुरागतोऽगतोत्सवासि सर्वदा सर्वदातरि
प्रिये विप्रियेऽपि सौभगवती भवती ॥ १३५ ॥
सहायातं दृष्टः सह स हरिरश्रावि च समं तदालापो रूक्षस्तदनु सह लब्धो र-
निरसः। इदानीं कृष्णस्त्वां वहति तृणकल्पाः त्यजति नः फलेनैव व्यक्तं भवति सुकृतं
दुष्कृतमपि ॥ तदहो तत्र पदानामवलोकतोऽनवलोकनमेव नो दुःखाकरमभूत् १३६
इति पुनः कियद्दूरं गत्वा पुनर्निर्वर्ण्य अहो तद्भरवहनासहनासन्नपरिश्रमेणेव व-
क्षःस्थलस्थलक्ष्मीपरिभाविनी सेह समुत्तारिता ॥ १३७ ॥
उत्तार्य च श्रान्त इव तामभिमुखीकृत्य तस्थौ पश्यत पश्यत। अन्योन्याभि-
मुखा स्थितेसुभगयोर्द्वे द्वे पदोर्लक्ष्मणी दृश्यते यदहो रहस्यकथनासक्ते इवेत्यूहि-
तम्। अन्योन्यांसविपक्तबाहुगमनक्षोभादिव श्रान्तयोर्लीलालस्यवयस्यभावपिशुनं
निर्व्यूढमालिङ्गनम् ॥ १३८ ॥
इति तर्कयन्त्यो विपक्षपक्षपातिन्यः प्रसूयासूयामिव निर्हेतुत्वरतुवरभावकठोर-
तापन्नमनसोऽबभूवुः ॥ १३९ ॥

---

धूपदानि सन्तापखण्डकानि "तप धूप सन्तापे ॥ १३२ ॥
रमणीपदलक्ष्मलक्ष्मीर्नालोक्यते ॥ १३३ ॥
ईश्वरस्य वोढुं समर्थस्य ॥ १३४ ॥
अपि कृष्णस्य दयिते अनुभवं प्रतिजन्म अर्जितैः सुकृतैः कृतं निष्पादितं सौभाग्यगरिमा-
णं अनुभव उपलभस्व रूढादनुरागतो हेतोः अगतोत्सवा त्वमसि प्रिये विप्रिये भवती विप्रिये
अपि इत्येतदेव संभाव्यत इत्यर्थः ॥ १३५ ॥
अवलोकतः सकाशादनवलोकनमिति तत्र ततोऽपि सौभाग्यप्राकट्योपलब्धेरिति भावः।
दुःखाकरमिति चन्द्रावल्यादिमुखम्लानिमालक्ष्य स्वेषां तदैक्यमारोपयितुं तदरवानामुक्तिः १३६
इवेत्युत्प्रेक्षायाम् वस्तुतः श्रमाभाव इत्यर्थः। वक्षःस्थलस्थां लक्ष्मीं परिभवितुं शीलं यस्याः सा १३
श्रान्तयोरिवेत्युत्प्रेक्षेव अत एव लीलयैव यदालस्यं तस्मिन् सति सख्यसूचकमालिङ्गनं
निर्व्यूढम् ॥ १३८ ॥
तुवरभावो वैरस्यं तुवरस्तु कषायोऽस्त्रीत्यमरः ॥ १३९ ॥

सपक्षपक्षपातिन्यस्तु सहजसौहृदहृदयालुतया तस्याः सौभाग्यविशेषविलोकनतः कनतः सक्षणाः क्षणादेव निर्वाणवाणवेधसदृशविरहानला न लाघवमात्मनो विदुः मत्यत निविडमोदमेदुरतारता एव बुभुवुः ॥ १४० ॥

इत्येवं पुनः संभूय भूय एव तानि तानि चरणलक्ष्माणि लक्षीकृत्य चलन्त्यो नातिदूरे निरूप्य रूप्यसलिलसेचनकासेचनकायमाने शशधरकरनिकरनितान्तकान्ते भूरसि रसिकशेखरस्य खरस्यदराहितं गमनमनन्तरं वितर्कयामासुः १४१

नेक्ष्यन्तेऽङ्कुशकेतुवज्रकमलाकाराणि लक्ष्माण्यहो व्यक्तं केवलमङ्गुलीदलशिखालक्ष्मैव तन्मन्महे । उच्चतुपाणि पदाग्रजाग्रदवनि प्रोन्नीय दोमण्डलीं शाखाग्रं नमयन् प्रसूनमचिनोदस्मिन् मियार्थे मियः ॥ १४२ ॥

इति पुनश्चरणचिह्नानि तान्यनुसरन्त्यो विगतविघ्नमुपघ्नमुपसन्नं लक्ष्मान्तरं विलोक्य वितर्कयांचक्रिरे ॥ १४३ ॥

अहो पश्यत पश्यत । कर्पूरोपमवालुके पथि पदोर्यन्न्यस्तयोः पार्श्वयोरेवाङ्कोऽयमभीक्ष्यते सुललितः सूक्ष्मान्तरीयस्य च । नो तस्याः किमपीति तां गमयता स्वाङ्कं निरातङ्कतस्तेनास्मिन्नुपविश्य तत्कवरिकाबन्धः प्रसूनैः कृतः ॥ १४४ ॥

तत्रैव क्वचन दृष्टिं निक्षिप्य अहो चित्रम् । पादघातेन तस्या रसकतुकहठात् किंकिरातं पुरस्तात् तत्कालादप्यकाले कुसुमभरभृतं केशरं चास्यमद्यैः । दृष्ट्वा जातेऽभिलाषेऽनुनयविनयतः कारिते तत् प्रयोगे सद्यस्तत्तत्प्रसूनावचयनरभसात्तं च तं चारुरोह ॥ १४५ ॥

पश्यत किंकिरातस्य मूले नवपल्लवोद्गम इव तत्पादपात्रकाङ्कः केसरस्य च रस्यचमत्कारकारीणि कुसुमान्यपि परिहरतामलीनां सन्निपातः मूल एव यत्र

हृदयालुतया सहृदयतया । कनतः प्रदीप्तात्सुखपदादिति यावत् । निर्वाणः शान्तो बाणवेधसदृशो विरहानलो यासां ताः ॥ १४० ॥

अनन्तरमतिदूरे रसिकशेखरस्य भूरसि वक्षःस्थलरूपे पुलिने गमनं निरूप्य वितर्कयामासुरित्यन्वयः । कथंभूते रूप्यसलिलेनेव यत्सेचनं तेन यत् कं सुखं तेन आसेचनकायमाने "तदासेचनकं तृप्तेर्नास्यन्तो यस्य दर्शना" दित्यमरः ।॥१४१॥

पदाग्रमेव जाग्रत्सावधानतयासंलग्नं अवनौ यत्र तद्यथा स्यात् तथा प्रोन्नीय ॥ १४२ ॥

उपघ्नम् आश्रयम् उपसन्नम् प्राप्तवत् ॥ १४३ ॥

यद्यस्मात् पार्श्वयोः पार्श्वद्वये न्यस्तयोः पदोः कृष्णपदयोरेवाङ्कोऽभीक्ष्यते तथा तस्यैव सूक्ष्मं यदन्तरीयं तस्य च ॥ १४४ ॥

तस्याः पादाघातेन किंकिरातं अशोकं तथा तस्या एव आस्यमद्यैः मुखमद्यजलैः केशरं बकुलं च कुसुमभरभृतं दृष्ट्वा रसकौतुके यो हठस्तस्मादेव अभिलाषे जाते सति ततश्च अनुनयविनयाभ्यां तत् प्रयोगे कारिते सति तं च तं च किंकिरातं च अशोकं च ॥ १४५ ॥

अनयोर्यावकरसमुखमदगण्डूषयोरशोषेण अविलम्बभवत्वादशुष्कत्वेन सविधवर्तिता एतन्नि-

तस्या मुखमदिरागण्डूपनिक्षेपः अनयोरशोपेणैव लक्ष्यते तयोः सविधवर्त्तिता तेनैवात्र तौ विचिनुम इति तथा विचिक्युः ॥ १४६ ॥

अथ यामादाय दायलब्धं धनमिव तिरोबभूव तया सह स हरिरतिरतिरागपरभागोऽपरभागोत्तमाय कामी दीनः स्त्री च दुरात्मा नहि कामित्वेऽपि दीनो-लीलाकामित्वात् नैता अपि सामान्यस्त्रीवत् मदङ्गसङ्गमङ्गलवत्वात् तेन मद्व्यतिरिक्तः कामी दीन एव तद्व्यतिरिक्ताः स्त्रियो दुरात्मान इति कामिनां दैन्यं स्त्रीणां च दुरात्मतां दर्शयन् आत्मतुल्यास्त्वारमते इति आत्मारामोऽखण्डप्रणयः सन् रेमे १४७

अथ सा परमकोमलहृदया हृदयालुतमानामग्रणीः शुभगानां सुभगानां सुचिरदुरापताका पताकेव केवलमात्मनिष्ठया रतनिष्ठयारतनामसा विचारयामास १४८

मय्येकस्यामतिशयरतिः प्राणनाथो मदाल्यस्ता विच्छेदादहहदधते हा कथं प्राणयामि । तस्माद्वाम्यं किमपि करवै येन नेतो निदूरं गच्छेदेष क्रमत इह तास्ताश्च सर्वा मिलन्ति॥१४९॥

इति विचार्य चार्य्यचरिता निजगाद हन्त निरुपमप्रणयरसाकूपार पारये नाहं गन्तुमपरं परं हि मे श्रमवैकल्यं जातं चलनसामग्री न दृश्यते कथमहं यामि यामिनीयमायामिनी भवति रसिक सिकतास्वमूषु क्षणमिहोपविश्यताम्॥१५०॥

इत्युक्तः स च सचमत्कारमिव तस्यास्तदिदमुदितं दिनं कुर्वाणो वाणोपममिव वहिर्मत्वा तस्याः सहजमप्यमदं तु दन्तुरं समदमिव वहिर्जानन् ॥ १५१ ॥

---

फट एव स्थितिः ॥ १४६ ॥

तिरोबभूव पक्षे निरपेक्षो बभूवेत्यर्थः । दायलब्धधनत्वेनोपमानात्सर्वा कर्षणानुरञ्जनसंभोगादिकमप्येतल्लाभापेक्षयेति द्योतितम् । अतिशयो रतौ रागस्तेनैव परभाग उत्कर्षो यस्य सः । अपरभागोत्तमाय अपरमपि भागोत्तममुत्कृष्टं रतिभागं लब्धुं रेमे एतत्प्रसङ्ग एव “रेमे तया स्वात्मरत आत्मारामोऽप्यखण्डितः । कामिनां दर्शयन् दैन्यं स्त्रीणां चैव दुरात्मताम् । ” इत्येतत्पद्यं विरुद्धव्याख्यानान्तरवारणाय व्याचष्टे कामी इत्यादि लीलयैव नतु जीववत् कर्मपारतंत्र्येण यत्कामित्वं तस्मात् ॥१४७॥

सा राधा शुभं मङ्गलं गच्छन्ति प्राप्नुवन्तीति तासां सुभगानां सौभाग्यवतीनामपि सुचिरा दुरापता दुर्लभता यस्याः सा “ कप् समासान्तः ” पताका वैजयन्तीरूपा आत्मनिष्ठयात्मवर्त्तिन्या रतनिष्ठया सुरतनिष्ठया अरतं न सम्यक् मुदितं मानसं यस्याः सा स्वप्राणतुल्यासु सखीषु तादृशविलासालाभभावनयेत्यर्थः ॥१४८॥

मय्येकस्यामित्यत्रायमाशयः । यदिदं मत्सौभाग्यसुखं चेत्ताभिः स्वनयनविषयीक्रियते तदेव सफलं तासां सुखं च तास्वप्येतादृशविलासः सिध्यतिचेत् मम सुखं प्रत्युत विच्छेददुःखमेव समजनीति । मदाल्यो ललिताविशाखाद्याः ॥१४९॥ अकूपारः । समुद्रः ॥ १५० ॥

इदमुदितं वाक्यं दिनं कुर्वाणः खण्डितं कर्त्तुम् । वाणोपममिवेति इदमपि भवत्या निदेशं प्रतिपालयितुमर्हामीति नर्मणैव कृत्रिमासहिष्णुतां प्रकाशयेत्यर्थः।अत एव इव वहिःशब्दो तथैव सहजं अमदं गर्वरहितं अपि तस्या उदितं समदं अत एव दन्तुरमिव वहिर्जानन्नुत्काऽप्यर्थे १५१

अन्तस्तु स्वावचकान्तायाःकान्तायाः समुचितमेव मदं मदन्तरं ममदयन्तमेतमेत-स्यामपि तिरोधाने तीर्थे करोमीति विचारयन् बहिर्मदापनोदविशेषदारुणभावो-ऽरुणभावोधितकमलनयनो नयनोदकं किमपि जगाद ॥ १९२ ॥

चलनसामग्री यदि न दृश्यते तदा मदीयमिममंसमंसल्लावण्यलक्ष्मीकं कृता-र्थीकुरुष्वारोहेणेति वदन् दृश्यमान एव तत्रैव वर्त्तमान एव तदक्षिगोचरतां विजहौ ॥ १९३ ॥

तस्यास्तु तदा तदन्तर्धाने सति सा वाग्वैदग्धी सुखावगाहकृते वसुधासुधा तरङ्गिणीः विपतरङ्गिणीत्वामागतेव अनुलेपनार्थमानीतं सुगन्धसारगन्धसारपङ्कं-

स्वाधीनभर्तृकाया। नायिकाया मदन्तरं मम धीरललितस्यानुकूलनायकस्य मनः कर्म प्रम-दयन्तं सुखयन्तमपि एतं मदं एतस्यामपि विषये तीर्थे हेतुं मदापनोदो गर्वखण्डनमेव विनो-दविशेषस्तेनैव दारुणभावोऽपर्यालोचो यस्य सः। कृत्रिमस्तु तदभावोऽपि प्रकटित इत्याह। अरुणभया शोणकान्त्या बोधिते ज्ञापिततत्वे कमलनयनोयस्य सः। नयनोदकं नीतिख-ण्डकम् ॥ १९२ ॥

अंसला प्रबला लावण्यलक्ष्मीर्यत्र तम्। अत्रेदं चतुरशिरोमणिना विचारितं यदस्या मतम-नुरुन्धता मया अनया सह सिकतासुप्रवेष्टव्यं तदास्याः सखीभिःसंभूयैव चन्द्रावल्यादिष्वपि मिलितासु हर्षगर्वरोषेर्ष्यासूयामानादिदुर्वारभावसैन्यपराक्रमः सहसा समाधातुमशक्यः मास्तु स-माधानमेतस्याः सौभाग्यगर्वपर्वत एव विनष्टु सर्वमिति चेत् प्रारिप्सिता महारासलीला सर्वैक-मत्या विना न सिध्येत् यदि पुनरनया सह विहरता पर्य्यटितव्यं तदाप्युद्गतसखीविच्छेद-वेदनातुरायामस्यां संप्रति न तत्र सारस्यम्। तासां विच्छेदानलज्वालापि न चिररक्षितुमे-र्हा दशम्या अपि दशायाः समुद्गमसंभवात्। तस्मादितोऽप्यन्तर्धायास्याः संभोगरसच-मत्कारमिव विप्रलम्भरसचमत्कारमपि मिलितवतीस्ताः सर्वाः सर्वतो विलक्षणानुभावसाक्षा-त्कारेणानुभाव्य तासामपि मुखैरेतत्प्रेमाणमसमोर्ध्वतया स्तावयित्वा ताभिर्मिलितायाः पुनर-या विचित्रविलापं स्वकर्णगोचरीकृत्य तेनैव कृपाविक्लिद्यदन्तरीभूय स्वकठोरतां धर्तुमसमर्थः सहसैव स्वदर्शनामृतवृष्ट्या सर्वा एव सञ्जीव्य स्वयमपि अस्यास्तासां च तदासमुच्छलितवि-विधभावामृतसिन्धौ संमज्य कृतार्थीभूय विरहमहाविपदुत्तीर्णतया लब्धपुनर्जनुषामिव सर्वासा-मासां त्यक्तमिथःप्रातिलोम्यानां प्रातिकमत्यानां वृन्देन महारासंसम्पादयिष्य इति। अत्र यद्य-पि तदालोके कदाप्यस्य नान्यासङ्गः स्मृतिं व्रजेदिति उज्ज्वलनीलमण्युक्तेः श्रीराधासङ्गिनोऽस्य मनसि नैतादृशविचारः सम्भावनीयः तदपि रासलीलासिद्ध्यर्थं तदीयलीलाशक्त्यैव विचारित-मिदं तस्मिन्नुपचरितम्। तस्य तु तदीयं विचारः। इयं कृत्रिममेव मदमुपन्यस्यति चेत् अ-हमपि कृत्रिममेव सनर्मैवान्तर्धास्ये ततश्च सर्वसंमेलनरूपे अन्तराये आपतिते सति कौतुकं द्रक्ष्या मि किं भवेदिति ॥१९३॥

सा वाग्वैदग्धी "सिचयमुदञ्चय हृदयादल्पं विलिखाम्यद्भुतमकराकल्पम् इत्यादिस्वाधीनका न्तोचिता सुखावगाहार्थं वसुधायां पृथिव्यामपि सुधातरङ्गिणी तदन्तर्धाने सति सासमर्थ्यमाणा

ज्वलदङ्गारतामिव समुपागतं नयनभूषणार्थमाहृतं सिद्धकज्जलं कज्जलं विपद्दूषितमिवसम्पन्नम् ॥ १९४ ॥

कण्ठाभरणीकर्त्तुमुपहृतो मुक्ताहारो भोगीव लेलिहानतामाससाद मुखसारस्यकारणमास्वादितं नागवल्लीदलं नागवल्लीदलं बभूव अङ्गभूषणाय भूषणायतनता तत् कालकालकूटकूटकौटिल्यायितेव यदि समजनि ॥ १९५ ॥

तदा सगद्गदगदनरोचिषा गलदुष्णसकज्जलजलधारया मसीमलीमसीभूतसूत्रनिपातकलेखयेव खरतरसन्तापकरपत्रकरणकविदारणविदारणविदा रणरणकसूत्रधारेण टङ्किता तदुरःस्थली समजनि ॥ १९६ ॥

ततश्च । मुक्तकण्ठं सा विललाप । हा नाथ ! हा रमण ! हा प्रणयैकसिन्धो ! क्वासि प्रिय प्रकटय स्वविलोकनं मे । आं वेद्मि यद्यपि भवन्तमिहैव सन्तं दूरे दृशोरिति तथाप्यसुभिर्दुनोमि ॥ १९७ ॥

यावच्च जीवितमिदं वहिरेति लोलं तावद्विमुच्य रुपमक्षिपथं प्रयाहि । नो चेदजीवितमिदं वपुरस्मदीयं वोढासि सत्यमहहांसतटेन सत्यम् ॥ १९८ ॥

विपत्तरङ्गिणीत्वमागतेव स्वकुचयोरनुलेपनार्थं मानीतम् । स्वाधीनेन तेन कान्तेनैवेत्यर्थः । कज्जलं कुत्सितं जलम् ॥१९४॥

भूषणेषु हारमेखलादिषु आ सम्यक् यतते ग्रन्थनादिप्रयत्नपरो भवतीति भूषणायतनस्तस्य भावस्तत्ता ॥१९५॥

रणरणकं कान्तवियोगचिन्ताविशेषः तदेव सूत्रधारस्तक्षा तेन। कथंभूतेन खरतरः सन्ताप एव करपत्रं क्रकचास्त्रं तत्करणकं विदारणेवेत्ति जानातीति स तथा तेन ॥१९६॥

त्वां विना गत्यन्तरं मे नास्तीत्याह नाथेति । तथात्वमपि न सम्बन्धसामान्येनेत्याह रमणेति । तथाभूतत्वमपि न कामेनेत्याह प्रणयेति । तादृशत्वमपि नास्मदनुरोधवशादित्याह प्रियेति प्रीणासि प्रीतिं प्राप्नोष्येव करोष्येव वा इत्यर्थः । नन्वहं नर्मणैवान्तर्धाय त्वत्समीप एवास्मि तत्राह आमिति तथापि दृशोर्दूरे भवसीति हेतोः असुभिर्दुनोमि प्राणहेतुकैव ममपीडेत्यर्थः । त्वत्प्राप्त्याशया प्राणान् हातुं त्वद्विच्छेदेन च धर्त्तुं च न शक्नोमीति भावः ॥१९७॥

तदपि तयोर्द्वयोर्मध्ये त्वद्विच्छेदस्यैव प्राबल्यात्तेनैव छिन्नाशाशृङ्खलाः प्राणा निष्क्रामिष्यन्त्येवेत्याह यावदिति । तदपि मदपेक्षया धृतिमालम्ब्य क्षणं स्थास्यतीति मम जीवितं मा विश्वसीरित्याह लोलमिति । ननु निष्क्राम्यतु जीवितं मम का क्षतिरितिचेन्मैवं ब्रवीः । त्वमपि मयि विषये परमप्रेमवानेवानुभूतो मद्वियोगदुःखं प्राप्स्यस्येवेत्याह नो चेदिति । अहह खेदे अजीवितं गतप्राणं वपुः अंसतटेन वोढासि सत्यं सत्यम् अवश्यमेवेत्यर्थः । हन्तहन्तप्रियतमामहं किमिति नावहं क्षाणिक्यापि मदपेक्षया यया प्राणाएव त्यक्ता इति शोकेन मदेहं वहन् वने वने पर्य्यटिष्यसीति यत्ते भाविनी पीडा सैव ममासह्यकष्टम्। त्वद्विच्छेदः। प्राणत्यागश्चेति द्वयं त्वकिंचित्करमेवेति भावः ॥ १९८ ॥

नैवापराद्धमिह किंचन गर्वहेतोर्नैवोदितं वच इदं रुषितोऽसि येन । तासां समागमनमूलविलम्बहेतोर्नोपारये चलितुमित्यवदं न गर्वात् ॥ १५९ ॥

आगत्य ताभिरिह हन्त विपद्दशेयं नो दृश्यते सुभग यावदहो प्रियायाः । तावद्विभावय विभो वदनेन्दुबिम्बं नो गर्ह्यते प्रणयिता तव यावदाभिः ॥ १६० ॥

एकाकिनीमिह वने किमहो विहातुं हा हन्त साहसमिदं भवता व्यधायि । अन्योन्यसङ्गसुखतः किल ता न तादृक् खिद्यन्तियाति विरतिं कथितो हि बाष्पः ॥ १६१ ॥

धिग्यामिनीं न रमते यदि यामिनीशो धिक् पद्मिनीं यदि न पश्यति पद्मिनीशः । धिग्जीवितं यदवहेलति जीवितेशो भुक्तः प्रियेण हि गुणो गुणतामुपैति ॥ १६२ ॥

इति मनसि सरसमसृणतानाविले विलेशयमिवमाविष्टं तत्कालोदयितदयितवियोगखेदं खेदंदह्यमाननिदाघनिदाघधामानमिव समुत्पन्नं तमसहमाना सह मानाभि-

ननु मदन्तर्धानकारणं भवत्यैव न पारये गन्तुमित्युक्तगर्वया उपस्थापितंमम को दोषस्तत्राह नैवापराद्धमित्यादि । रुषितोऽसि येनेति फलतो रोष एवायं तेन नर्मेति तदनौचित्यं सूचितम् ॥ १५९ ॥

किञ्च प्रेमपरिपाटीविदो महारसिकेन्द्रस्य तवेयमप्यविमृष्य कारिता दैवाद्यदभूत् तदपि सा लोके मा प्रकटीभवतु तत्प्राकट्ये च सति तद्भवद्दुर्यशएव ममासह्य कष्टमतोऽधुनैव प्रत्यक्षीभूय तत्समाधत्स्वेत्याह आगत्येति । हे सुभग तव प्रियायाः त्वद्दत्तसौभाग्याया अपीत्यर्थः किञ्च नो दृश्यते यावदिति यत्प्राणसख्यस्ता ईदृशमद्दशादर्शनमात्रादेव शोकात् प्राणास्त्यक्ष्यन्ति ता अपि मा घातयेति भावः । तव प्रणयिता नो गर्ह्यते यावदिति त्वत्प्रेम्णि गर्हिते सति तत्समाधानाय न मे वागवसरोऽप्यस्तीति भावः ॥ १६० ॥

ननु ता अपि यथा त्यक्तास्तथा त्वमपि त्यक्ता ऐकधर्म्यापादनार्थमिति चेन्मैव वादीरित्याह एकाकिनीमिति । साहसमिति तासां दुःखदानमात्रार्थमेव मम तु वधार्थमेव फलतो व्यवसायावगतेरिति भावः । तत्र हेतुं स्वस्य महानुरागवत्वं दैन्यादपलप्य यादृमेव हेत्वन्तरमाह अन्योन्येति न दुःखमस्माभिः सहेति न्यायात् । कथितो हि बाष्प इति परस्परकथने परस्पर सान्त्वनमपि स्यादिति भावः ॥ १६१ ॥

ननु सौन्दर्य्यमाधुर्यगाम्भीर्यादिसकलगुणनिकायं कायं किमिति सहसैव जिहाससीत्यत आह धिगिति । यामिनीशं विना विच्छुरताया अपि यामिन्याः स्वगुणोद्गारोऽतिधिक्कार इति ततः किंचिदुत्तमा पद्मिनी निजेशं विना स्वगुणमनुद्गारयन्तीमात्रक्ष्म स्वमते तद्द्वयस्य सचैव धिक्कारास्पदामित्याह धिग्जीवितमिति । भुक्तः प्रियेणेति तद्योगं विना गुणानां वैफल्यात् तथा मम कायस्यापि वैयर्थ्यमिति भावः ॥ १६२ ॥

सरसमसृणतानाविले सारस्यमार्दवाभ्यां निर्दूषणेऽपीत्यर्थः । निदाघस्य ग्रीष्मतो निदाघधामानं सूर्यम् । माने तदभिप्रायज्ञाने अभियोग उद्यमस्तेन सह वर्तन्ती उपरागमां या श्या-

योगेन नश्यदवस्थावस्थानम्लानचेतना तनाधुपचितयातना तत्क्षणमसमयसुहृदेव गुरुतरमूर्छया मूर्च्छया व्यानशे ॥ १६३ ॥

ततश्च । प्रेमप्रवादभयतो जनलज्जया च श्वासोऽपि को बहिरियाय सरोरुहाक्ष्याः । म्लाना मृणाललतिकेव तनूरमुष्या हा हन्त हन्त सिकतापतिता बभूव ॥१६४

ततश्च । वल्यः पुष्परसैः सहैव सिपिचुर्भङ्ग्यो भृशं वीजयांचक्रुः पत्त्रविधूननैः खगघटा हाहेति नादं व्यधुः । सारङ्ग्यो गलदश्रुकातरदृशः साशङ्कमावव्रिरे वन्यैरेव समादधे परिजनैः कालोचितं सेवनम् ॥१६५॥

किंच । स्वच्छायैव सरोजिनी दलमयी शय्येव तस्या अभूज्ज्योत्स्नेवाजनि गन्धसारसलिलासेकः शरीरोपरि । बाहू एव मृणालवल्लिवलयस्तस्या वियोगज्वरे मूर्च्छैवाभवदुत्तमा प्रियसखी दुःखानुभूतिच्छिदे ॥१६६॥

ततश्च । किशलयफलैर्लोलैर्वृक्षः करैरिव ताडयन् विहगविरुतैस्तारैरार्तस्वरैरिव विक्रुशन् । कुसुममधुनः स्यन्दैः कुर्वन्निवाश्रुविमोक्षणं प्रियपरिजनप्रायो बभूव लतागणः ॥१६७॥

एवं तथा स्थितायामेतस्यां चरणलक्ष्मणानुसारसारसारस्येन तत इतो विचिन्वत्यस्ता एव मृगनयना नयनान्तैरकस्मादेव नातिदूरे तत्क्षणादेव नभसः पतितां निर्जलदां सौदामिनीमिव गुरुतया भुवि निपतितां कौमुदीनां सारपट्टलीमिव त्रैलोक्यलक्ष्म्या मुकुटकोटितो विच्युतां कनकरत्नमालामिव ॥१६८॥

---

स्था दशमी दशेत्यर्थः तस्या अवस्थानेन आसन्नतया म्लाना चेतना यस्याः सा । गुरुतरा मूर्छा विस्तारो यस्यास्तया व्यानशे आव्रियत मूर्छा मोहसमुच्छ्राययोः ॥१६३॥

श्वासो न बहिरियाय किंतु अन्तरेव किंचिच्चलति स्मेत्यर्थः । तत्रहेतुद्वयं प्रेमेत्यादि अयमर्थः श्वासो यदि बहिः प्रसरेदेव तदा अहो प्रियतमेनोपेक्षितया अप्यस्या जीवनमस्तीति लोकनिन्दातो लज्जा स्यात् यदि च अन्तरपि न प्रसरेत् तदा मयि शान्तायां मत्प्रियतमो मद्वियोगशोकपीडां प्राप्स्यतीति तद्दुःखमगणयित्वैव स्वदुःखासहिष्णुतया प्राणानहमत्यजमिति स्वस्य प्रेमवत्तीत्वभावनया प्रेम्णः प्रवादतः प्रसिद्धेर्भयं स्यादिति ॥१६४॥

तत्कालोचितोपचारश्च स्वयमेव प्रावर्त्ततेत्याह वल्य इति । तत्र वल्यादीनां त्रयाणां तत्तद्गुणप्रेक्षयापि भवेत् सारङ्गीणां तु साहजिकमेवेति भेदः ॥१६५॥

गन्धसारसलिलं चन्दनद्रवः ॥१६६॥

तत्परिजनेषु भाविनं तच्छोकानुभावं तदानीं तत्रत्या लता एव प्रथममभ्यनैषुरित्याह किशलयेति ॥१६७॥

ततश्च सा मृगनयना अकस्मादेव नातिदूरे नयनान्तैस्तामेकाकिनीं गोचरीकृत्य पुनरपि सशोकं स्मेत्यन्वयः । सौदामिनीति सौन्दर्य्यं वर्णितम् । कौमुदीति माधुर्य्यम् । त्रैलोक्येति ताभ्यां असमोर्ध्वत्वम् ॥१६८॥

नैवापराद्धमिह किंचन गर्वहेतोर्नैवोदितं वच इदं रुषितोऽसि येन । तासां समागमनमूलविलम्बहेतोर्नोपारये चलितुमित्यवदं न गर्वात् ॥ १५९ ॥

आगत्य ताभिरिह हन्त विपद्दशेयं नो दृश्यते सुभग यावददो प्रियायाः । तावद्विभावय विभो वदनेन्दुबिम्बं नो गर्ह्यते प्रणयिता तव यावदाभिः ॥ १६० ॥

एकाकिनीमिह वने किमहो विहातुं हा हन्त साहसमिदं भवता व्यधायि । अन्योन्यसङ्गसुखतः किल ता न तादृक् खिद्यन्तियाति विरतिं कथितो हि बाष्पः ॥ १६१ ॥

धिग्यामिनीं न रमते यदि यामिनीशो धिक् पद्मिनीं यदि न पश्यति पद्मिनीशः । धिग्जीवितं यदवहेलति जीवितेशो भुक्तः प्रियेण हि गुणो गुणतामुपैति ॥ १६२ ॥

इति मनसि सरसमसृणतानाविले विलेशयमिवप्रविष्टं तत्कालोदयितदयितवियोगखेदं खेदंदह्यमाननिदाघनिदाघधामानमिव समुत्पन्नं तमसहमाना सह मानाभि-

ननु मदन्तर्धानकारणं भवत्यैव न पारये गन्तुमित्यात्तगर्वया उपस्थापितं मम को दोषस्तत्राह नैवापराद्धमित्यादि । रुषितोऽसि येनेति फलतो रोष एवायं तेन नर्मेति तदनौचित्यं सूचितम् ॥ १५९ ॥

किञ्च प्रेमपरिपाटीविदो महारसिकेन्द्रस्य तवेयमव्याविमृश्य कारिता दैवाद्यद्यभूत् तदपि सा लोके मा प्रकटीभवतु तत्प्राकट्ये च सति तद्भवद्दुर्यश एव ममासह्य कष्टमतोऽधुनैव प्रसन्नीभूय तत्समाधत्स्वेत्याह आगत्येति । हे सुभग तव प्रियायाः स्वदत्तसौभाग्याया अपीत्यर्थः किञ्च नो दृश्यते यावदिति यत्प्राणसख्यस्ता ईदृशमद्दशादर्शनमात्रादेव शोकात् प्राणास्त्यक्ष्यन्ति ता अपि मा घातयेति भावः । तव प्रणयिता नो गर्ह्यते यावदिति त्वत्प्रेम्णि गर्हिते सति तत्समाधानाय न मे वागवसरोऽप्यस्तीति भावः ॥ १६० ॥

ननु ता अपि यथा त्यक्तास्तथा त्वमपि त्यक्ता ऐकधर्म्यापादनार्थमिति चेन्मैव वादीरित्याह एकाकिनीमिति । साहसमिति तासां दुःखदानमात्रार्थमेव मम तु वधार्थमेव फलतो व्यवसायावगतेरिति भावः । तत्र हेतुं स्वस्य महानुरागवत्वं दैन्यादप्रख्याप्य बाह्यमेव हेत्वन्तरमाह अन्योन्येति न दुःखपञ्चभिः सहे ति न्यायात् । कथितो हि बाष्प इति परस्परकथने परस्पर सान्त्वनमिपि स्यादिति भावः ॥ १६१ ॥

ननु सौन्दर्य्यमाधुर्यगाम्भीर्याद्यखिलगुणनिकायं कायं किमिति सहसैव जिहाससीत्यत आह धिगिति । यामिनीशं विना धिक्कृताया अपि यामिन्याः स्वगुणोद्गारोऽतिधिक्कार इति ततः किंचिदुत्तमां पद्मिनीं निजेशं विना स्वगुणमनुद्गारयन्तीमालक्ष्य रमते तद्द्वयस्य सचैव धिक्कारास्पदमित्याह धिग्जीवितमिति । भुक्तः प्रियेणेति तद्भोगं विना गुणानां वैफल्यात् तथा मति कायस्यापि वैयर्थ्यमिति भावः ॥ १६२ ॥

सरसमसृणतानाविले सारस्यमार्दवाभ्यां निर्दूषणेऽपीत्यर्थः । निदाघस्य ग्रीष्मर्तोर्निदाघधामानं सूर्यम् । मानं तदभिप्रायज्ञाने अभियोग उद्यमस्तेन सह नश्यन्ती उपगच्छन्ती या तत्-

योगेन नश्यद्वस्थावस्थानम्लानचेतना तनावुपचितयातना तत्क्षणमसमयसुहृदेव गुरुतरमूर्छया मूर्च्छया व्यानशे ॥ १६३ ॥

ततश्च । प्रेमप्रवादभयतो जनलज्जया च श्वासोऽपि को बहिरियाय सरोरुहाक्ष्याः । म्लाना मृणाललतिकेव तनूरमुष्या हा हन्त हन्त सिकतापतिता बभूव १६४

ततश्च । वल्यः पुष्परसैः सहैव सिषिचुर्भृङ्ग्यो भृशं वीजयांचक्रुः पत्त्रविधूननैः खगघटा हाहेति नादं व्यधुः । सारङ्ग्यो गलदश्रुकातरदृशः साशङ्कमावव्रिरे वन्यैरेव समादधे परिजनैः कालोचितं सेवनम् ॥१६५॥

किंच । स्वच्छायैव सरोजिनी दलमयी शय्येव तस्या अभूज्ज्योत्स्नेवाजनि गन्धसारसलिलासेकः शरीरोपरि । बाहू एव मृणालवल्लिवलयस्तस्या वियोगज्वरे मूर्च्छैवाभवदुत्तमा प्रियसखी दुःखानुभूतिच्छिदे ॥१६६॥

ततश्च । किशलयकुलैर्लोलैर्वक्षः करैरिव ताडयन् विहगविरुतैस्तारैरार्त्तस्वरैरिव विक्रुशन् । कुसुममधुनः स्यन्दैः कुर्वन्निवाश्रुविमोक्षणं प्रियपरिजनव्रातमायो बभूव लतागणः ॥१६७॥

एवं तथा स्थितायामेतस्यां चरणलक्ष्मणानुसारसारसारस्येन तत इतो विचिन्वत्यस्ता एव मृगनयना नयनान्तैरकस्मादेव नातिदूरे तत्क्षणादेव नभसः पतितां निर्जलदां सौदामिनीमिव गुरुतया भुवि निपतितां कौमुदीनां सारपटलीमिव त्रैलोक्यलक्ष्म्या मुकुटकोटितो विच्युतां कनकरत्नमालामिव ॥१६८॥

---

स्था दशमी दशेत्यर्थः तस्या अवस्थानेन आसन्नतया म्लाना चेतना यस्याः सा । गुरुतरा मूर्छा विस्तारो यस्यास्तया व्यानशे आव्रियत मूर्छा मोहसमुच्छ्राययोः ॥१६३॥

श्वासो न बहिरियाय किंतु अन्तरेव किंचिच्चलति स्मेत्यर्थः । तत्रहेतुद्वयं प्रेमेत्यादि अयमर्थः श्वासो यदि बहिः प्रसरेदेव तदा अहो प्रियतमेनोपेक्षिताया अप्यस्या जीवनमस्तीति लोकनिन्दातो लज्जा स्यात् यदि च अन्तरपि न प्रसरेत् तदा मयि शान्तायां मत्प्रियतमो मद्वियोगशोकपीडां प्राप्स्यतीति तद्दुःखमगणयित्वैव स्वदुःखासहिष्णुतया प्राणानहमत्यजमिति स्वस्य प्रेमवतीत्वभावनया प्रेम्णःप्रवादतः प्रसिद्धेर्भयं स्यादिति ॥१६४॥

तत्कालोचितोपचारश्च स्वयमेव प्रावर्त्ततेत्याह वल्य इति । तत्र वल्यादीनां त्रयाणां तत्तदुत्प्रेक्षयापि भवेत् सारङ्गीणां तु साहजिकमेवेति भेदः ॥१६५॥

गन्धसारसलिलं चन्दनद्रवः ॥१६६॥

तत्परिजनेषु भाविनं तच्छोकानुभावं तदानीं तत्रत्या [illegible] भ्यनैपुरित्याह किशलयेति ॥१६७॥

ततश्च ता मृगनयना अकस्मादेव नातिदूरे नयन[illegible] रीकाय [illegible] संशेरते स्मेत्यन्वयः । सौदामिनीति सौन्दर्य्यं वर्णितम् । क[illegible] र्य्यम् । [illegible] म्यां असमोर्ध्वत्वम् ॥१६८॥

धरयैव समुद्गीर्णां निजसौभाग्यकनकसम्पत्तिमिव स्वयमुज्झितां कुङ्कुमवाटिकामिव ॥ १६९ ॥

विपिनलक्ष्म्यैवाङ्कपालीकृतां कामपि हिरण्मयीं स्थलकमलिनीमिव ॥ १७०

कुसुमधनुषश्च्युतां चम्पकमालामिव भुव एव गोरोचनातिलकलेखामिव १७१

काननलक्ष्मीगृहस्य किमतैलपूरितां दीपकलिकामिव कृतशयनां ज्वलन्तीं दिव्यौषधिलतिकामिव तामेकाकिनीं गोचरीकृत्य ॥ १७२ ॥

अहो किमिदं सैवेयं यामस्मान् विहाय विद्युतमिव जलदश्चन्द्रिकामिव चन्द्रः प्रभामिव मणिवरो गृहीत्वान्तरधात् गोकुलराजतनयोऽनयोदयेन दारुणो दारुणोऽपि ॥ १७३ ॥

भवति चेत्सैव कथमेका खरमञ्जरी मञ्जरीकर्कशचेतसा तेनैव किमेषापि निःसहाया हा थापिता विरहवेदनाम् ॥ १७४ ॥

किंवा चिरसुरतविहरणरणपरिश्रमेण निद्रायामस्याः स चात्रैव कुत्रापि वर्त्तते नास्माकं समाकम्पमानमानसानां विरहरहस्यातङ्केन दुर्भगानां नयनविषयीभवति अस्याः पुनः समीप एव वर्त्तते ॥१७५॥

अथवास्माकमेव संसरणध्वनिमध्वानि मन्दमपि समाकर्ण्यापससार सारस्यहीनतया तथा सति स तिलको रसिकानां पुरेव रे बहुमतामिमां सह सहजमि-

धरयेत्यनर्घमहारत्नभूतत्वेन सौभाग्यम्। कुङ्कुमेति सौरूप्यसौरभ्ये ॥ १६९ ॥

स्थलकमलिनीमिति स्वभावतः शैत्यसौगन्ध्यमार्दवानि । एवमुपर्य्यधो मध्यत आगमनसंभावना विकल्पिता ॥ १७० ॥

कुसुमधनुष इति कान्तदर्शीकारिकेलिकलावैदग्ध्यम्। गोरोचनातिलकेति परमादरार्हत्वम् १७१

दीपकलिकेति वस्त्वन्तरस्यापि प्रकाशस्वरूपत्वम् तत्रातैलपूरितामिति। विरहवैकल्यवशात् क्षणक्षणतस्तेजोह्रासः। काननलक्ष्मीगृहस्येति तां विना तस्य वैकल्यं च। तथात्वे तैदग्ध्यं प्रसक्तमिति तद्वारणार्थं दिव्यौषधीलतामिति ॥ १७२ ॥

अहो किमित्यादिश्यामलादीनां वाक्यम्। विद्युतं विनापि जलदो नातिनिःशोभो भवतीत्यत आहुः चन्द्रिकामिति चन्द्रिकां विना तु चन्द्रो दिने भ्रष्टशोभ एव भवतीति भावः। तथापि तत्तद्विनाभूतयोस्तयोःसत्तामालक्ष्याविनाभावेनोपमिमते प्रभामिवेति दारुणः काष्ठादपि १७३

भवतिचेदिति ललितायाः सगद्गदमाहुः खरमञ्जरी अपामार्गः ॥ १७४ ॥

अतिदुर्भगायास्त्यागो न सम्भवतीत्यत आहुः मङ्गलायाः किं वेति निद्रायां वृत्तायामित्यर्थः रहसि वि[illegible]दतत्वे आतङ्केन आ सम्यक् कम्पमानमानसानाम्। रहस्तत्व रतोगुह्ये इति मान'। १[illegible]

[illegible]म्यादिनाप्युपलक्ष्येतासावित्यत आहुर्भद्राया अथवेति। ताः

यां किमिव नानैषीत् । आहोस्विदस्या एव कमपि मदमदक्षिणतां कांचिदालोक्य सहजमानी मा नीतवानिमामपि संज्ञे नाप्येवं यतो न तस्य तथेयमवैदग्धी दग्धीकृत्य विरहदवदहनेनैनामतदर्हामेकामेकान्तकठोरतया स्वयमन्तर्धास्यति १७६

सैवेयं वा न भवति यतो दृश्यते नात्र कृष्णः सैवैषाति प्रतिफलति यत् तद्भिनो भ्रान्तिरेव । सर्वासां न मदविहृतये माधुरी नाम देवी काचिन्मूर्त्ता जयति जगतीमोहमुत्पादयन्ती ॥१७७॥

इति निकटमुपसर्पन्त्यः पुनरपि संशेरते स्म । नाप्येवं यतः । म्लाना मृणालीव निपत्य वर्त्तते स्पन्दो न मन्दोऽपि च लक्ष्यते ततः । इयं हि मूर्त्तिः करुणस्य किं न वा मूर्च्छैव किंवा प्रियविप्रयोगजा॥ इति निकटतरमुपसर्पन्ति स्म १७८

ततश्च तासामागमनमाकलय्य प्रसूयासूयामिव सा तस्या मूर्छा सखी तां तत्याज ॥ १७९ ॥

गतायां तस्यां सा सुप्तप्रबुद्धेव हा नाथ क्वासीति कलकोमलगद्गदगदनपरा न परापरविवेकवती विवर्त्तमानावर्त्तमानास्ताः प्रति नातिदूरे यदि नयने व्यापारयामास ॥ १८० ॥

तदा अपि सैवेयमिति सहर्षविषादविस्मयसंभ्रमौत्कण्ठ्यमुपकण्ठमुपसर्पन्त्यः कनककमलिनीमूलं निष्कलङ्कं कलहंसवध्व इव सुरसरितं सरिदन्तराणीव ॥१८१॥

प्रति पुनः श्यामाद्या आहुस्तथा सतीति । तत्रदोषदर्शिन्यश्चन्द्रावल्याद्या आहुराहोस्विदिति । ताः प्रति पुनः श्यामाद्या आहुर्नाप्येवमिति ॥१७६॥

इति तस्यास्तादृगवस्थत्वे सर्वानेव वितर्कान् खण्डितवत्यो वितर्कान्तरमसंभावयन्त्यस्तत्स्यामेव संशयाना एव सर्वत उत्कर्षमानयन्त्यःश्यामाद्या आहुः सैवेयमिति तर्हि केयमित्यत आहुः सर्वासामिति ॥१७७॥

ललिताद्याः सखेदमाहुःम्लानेति । करुणस्य किं वा मूर्च्छैवाति मूर्त्तिधारिणीत्यर्थः १७८

असूयां प्रसूय उत्पाद्य क्वचेत्यर्थः सम्प्रत्येता एव सख्य । आसतां किं मया विपत्कालमात्रसहाययेति विभाव्येति भावः ॥ १७९ ॥

विवर्त्तमाना पार्श्वे परिवर्त्तयन्ती । आवर्त्तमाना आवृत्य तिष्ठन्तीः प्रति । नयने नेत्रयुगम् ॥ १८० ॥

सहर्षेति तत्प्रेमवैयग्न्यदर्शनेन चन्द्रावल्यादीनामपि साहजिकसौहार्दोदयात् तत्परिचये हर्षः तादृगवस्थादर्शने विषादः । महासुभगाया अपि तथाभूतत्वे विस्मयः । सम्वादेन तद्वार्त्ताज्ञानार्थमौत्कण्ठ्यं तत एव संभ्रमः कमलिनीत्वकलहंसीत्वाभ्यां तस्यां तासां सर्वासामपि साहजिक इव सौहार्दोदय उक्तः अत एव सुरनदीत्वनद्यन्तरत्वाभ्यां तदानीं बाह्याभ्यन्तरमेलनमाश्रयाश्रयिभावश्च ॥ १८१ ॥

स्थायितां मासवतीं रतिं सर्वभावानां श्रेणय इव स्वरसप्तकसम्पदं सर्वाः श्रुतय इव ॥ १८२ ॥

सुकविकवितां रसभावगुणालङ्कारसंपद इव उपमालंकृतिं रूपकाद्यलंकृतय इव १८३

अमृतकरकिरणकन्दलीं चकोरललना इव नवोद्यानलक्ष्मीं नानाविधविहगवध्व इव कमलाकरसम्पदं कमलिनीविततय इव सकलाः परितः परिवव्रुः १८४

परिवृत्य च। काचिद्वीजयति स्म पल्लवकुलैः काचित्कचानां ततिं वन्धाति स्म चकार काचन करेणास्याम्बुजोन्मार्जनम्। ऊचे काचन मद्विधेव भवती हा हन्त कष्टां दशामेतां मासवती कथं क स तव प्राणाधिनाथः शठः ॥ १८५ ॥

अस्मान् विहाय भवतीं यदसाविहार्षीत्तेनैव हि प्रशमितो विरहज्वरो नः। सोऽयं पुनर्द्विगुण एव वभूवधिङ्नो यद्वीक्ष्यते तव दशेयमभूतपूर्वा ॥१८६॥

न कश्चित्तेदोषः सुमुखि मनसो वाथ वचसो जगत्येव ख्याता त्वमसि गुणरत्नावलिखनिः। त्वयि प्रेमा तस्य प्रथित इति सर्वस्य विषयः कुतो जाता तस्य व्यवसितिरियं हन्त कठिना ॥१८७॥

एतेन ते सुमुखि कष्टतरेण दुःखे नास्माकमन्तरितमन्तरगामि दुःखम्। भैपज्यमात्रपरिभूतिकृतो विषस्य वीर्यं हि नश्यति महाविपसङ्गमेन ॥१८८॥

तत्कथय भाविनि किंवीजमिदं ते वैशसम् तत्रैव काचिदन्याह किं पृच्छत भोः सख्यः तस्यैव प्रेम्ण एवायं स्वभावः। तत्प्रेम को वत विभावयितुं समर्थस्तुल्यं विषेण सुधयाप्यनुरागिणीषु। सन्तापयन्ति रसयन्ति विमूर्छयन्ति संजीवयन्ति युगपद्वत यस्य भावाः ॥१८९॥

---

तत्र हेतुप्रदर्शनार्थं सर्वभावत्वस्थायिरतित्वाभ्यामंशांशिभावः सर्वभावानां विभावानुभावसात्विकसंचारिणां स्वरत्वश्रुतित्वाभ्यां सर्वसम्पूर्णगुणवत्त्वतद्गुणैकदेशवत्वे ॥१८२॥

रसादित्वकवितात्वाभ्यां प्रकाश्यप्रकाशकभावो नित्यसयोगश्च। रूपकादित्वोपमात्वाभ्यां व्याप्यव्यापकभावः ॥१८३॥

चकोरत्वसुधाकरत्वाभ्यां पोष्यपोषकभावः। दृष्टान्तोयं तस्याः सखीरालक्षेत्यवसीयते। विहगत्वोद्यानत्वाभ्यामाकृष्याकर्षकभावः। तटस्थपक्षभाति पक्षानप्यालयायमुपन्यस्तः। नलिनीत्वकमलाकरत्वाभ्यां आधार्याधारकभावः। सुहृत्पक्षानालक्ष्यायं परस्परस्निग्धतया १८४

काचिदित्यत्र वीजनादिकर्त्र्यो वाष्परुद्धकण्ठ्यो निजसख्य एव ज्ञेयाः। ऊचे काचनेतीयं चन्द्रावली ॥१८५॥

अस्मान् विहायेत्यपि वाक्यं प्रायः प्रतिपक्षतटस्थपक्षाणामेव शुद्धसौहार्दप्रकाशनमयम् १८६

न कश्चिदिति विपक्षसखीवितर्क्यमाणतद्दोषवारणपराणां सुहृत्पक्षाणां वाक्यम् ।१८७।

एतेनेति वयसा न्यूनानां प्रायो धन्यादिकन्यानामुक्तिः ॥१८८॥

वैशसं कष्टम्। काचिदन्येति तज्जातीयप्रेमानुभाविनी प्रखरेयं श्यामैव। सन्तापयन्तीत्यादिना तापनह्लादनयोर्मारणजीवनयोश्च विरुद्धधर्मत्वं तत्रापि ...

इति तस्या वचनावसाने सानेकप्रयत्नेनामूषां मूषां प्रेमहेमावार्त्तिनीमिव हृदय वृत्तिपुटाद्युद्घाट्य सवाष्पोष्ण सकलं कलंसमुज्जगार यदि ॥१९०॥

तदा तदाकर्णनेन विस्मितविस्मितमुख्यस्तामग्रतः कृत्वा समवेतीभूय भूय एव तमितस्ततो गवेषयितुं वेपयितुं च निजनिजमनो ज्वरं दिशि विदिशि विहित-संचारा घनतरविटपवितानच्छादितहिमकरकरनिकरतया तमोबहुलं वनप्रदेशं समासाद्य भग्नप्रक्रमास्ततो निवृत्तिरे ॥ १९१ ॥

निवृत्य च तरणिदुहितुः कूलमनुकूलमनुसृत्यमसृणतरघनसारधूलिधवलबल-मानसौभाग्यपरभागपुलिनोपरि समुपविश्य तन्मनस्का मनस्कारारोपिततद्गुणा वचसा च साधिततद्गानास्तदवेक्षणक्षणसङ्कल्पाकल्पाः कलकोमलगद्गदगदनमुत्क-ण्ठमत्युत्कण्ठं रुदन्मुखा मुखामोदमिलिताभिः कलझङ्कारकलयानुरुदतीभिरिव मधुकरवधूभिः प्रतिपाल्यमानाः क्षणं गमयामासुः ॥ १९२ ॥

तद्गानमाधुर्यं विप्रलम्भरसस्य हृदयमिव दम्भोलेरपि द्रावयत् गिरि-तरुलतानामन्तःकरणमिवाकर्षत् यदभूत् तदनुवर्णने कः क्षमतां मतान्तरे बाष्परुद्ध-कण्ठतया गिरां देवी च नानुकथयितुमीष्टे ॥ १९३ ॥

तथापि श्रीशुककथितानुसारेण शुककथितानुसारेण कथ्यते ॥ १९४ ॥

इत्यानन्दवृन्दावनेकैशोरलीलीलताविस्तारे रासक्रीडायां कृष्णान्तर्धानं नामाष्टादशः स्तवकः ॥ १८ ॥

---

सा राधा अमूषामनेकप्रयत्नेन प्रेमैव हेम तदावर्त्तयितुं शीलं यस्यास्तां मूषां पुटपाकं "मूस" इति ख्यातां उद्घाट्य तात्तथात्वेन प्रत्याय्येत्यर्थः सकलं समस्तवृत्तम् ॥१९०॥

विस्मितं विस्मययुक्तं विस्मितं विगतस्मितं च मुखं यासां ताः। गवेषयितुं अन्वेष्टुम्। निजमनः कर्म ज्वरं वेपयितुं व्यापयितुम्। गवेषणेन प्रत्युत ज्वरवृद्धिरेव भविष्यतीति ता न जानन्तीति भावः ॥ १९१ ॥

मनस्कारेण चिन्तया आरोपितास्तस्य गुणा एव न तु दोषा याभिस्ताः। कलकोमलेत्यादित्रयं रोदनक्रियाविशेषणम् ॥ १९२ ॥

हृदयमिव सारभूतमित्यर्थः। मतान्तरे च अनुवर्णनसामर्थ्ये च पक्षे अस्य वर्णयितुः १९३

श्रीशुको वैयासकिः तस्य कथित "जयतितेऽधिक"मित्यादि तदनुसारेण। तत्रापि शुको यथा स्वपाठयितृवचनमनुकथयति अर्थादिकं किमपि न वेत्ति तथैव मयेत्यर्थः ॥१९४॥

इत्यानन्दवृन्दावनटीकायां सुखवर्त्तिन्यामष्टादशस्तवकसंगमनम् ॥ १८ ॥

एकोनविंशः स्तवकः ।

अथ कोमलमञ्जुलस्वरं यदरोदीदबलागणस्तदा । तद्भून्मृगपक्षिसंसदां श्रुतिरम्यं हृदयस्य दाहकम् ॥ १ ॥

सुहृशां प्रियकीर्तिकीर्तनैः करुणक्रन्दनकण्ठनिस्वनः । स्थिरजंगमचित्तकर्षणे कलितं गानमिव व्यराजत ॥ २ ॥

विरहो रस एव मूर्त्तिमान् यदभूत् कोमलरोदनस्वनः । तमथ स्वरतालमूर्च्छनाश्रुतयस्तुल्यशुचोऽनुभेजिरे ॥ ३ ॥

जयति प्रिय तेऽवतारतो व्रज एवाश्रयते यमिन्दिरा । वत तत्र वसन्नयं जनः कथमेवं लभते पराभवम् ॥ ४ ॥

अनुरागिणमङ्गनागणं वनभूमावपहाय तावकम् । कथमन्तरधाः कृपानिधे प्रिय दृश्यो भव तस्य चक्षुषाम् ॥ ५ ॥

अनुकाननकुञ्जमन्दिरं प्रतिवर्त्म प्रतिवृक्षवीरुधम् । तव मार्गणखिन्नचेतसः स्वजनानन्दय दृश्यतां गतः ॥ ६ ॥

निशितेन दृगञ्चलेन हे सविषेणेव शरेण नोपमः । विनिकृन्तसि हन्त योषि-

एकोनविंशे गोपीनां विलापः कृष्णदर्शनम् । नानाभावप्रकटनं सप्रश्नोत्तरकौतुकम् । स्वान्त.स्वान्तप्रान्तरेक्रान्तकान्तासन्तापोक्तीः पान्थतां सरच्य्य । शर्मास्पृष्टो धन्वधर्मो स मेने ताः सन्दर्श्यात्मानमानन्दसिन्धुम् । प्रथमं तासां विलापस्य स्वरूपं निरूपयति त्रिभिः । तद्रोदनं श्रुतिरम्यं कर्णसुखदं सौस्वर्य्यात् । हृदयदाहकं संतापमयत्वात् ।१। गानमिवेति तास्तु न गानत्वेनानुसंदधुरित्यर्थः ॥ २ ॥

तर्हि कथं तस्य गानायमानत्वमत आह विरह इत्यादि । स्वराद्या एव तदनुवर्त्तित्वात् तुल्यदुःखाः सत्यस्तं स्वनम् । अनुभेजिरे तदन्तः प्रविश्यानुवदन्त्यस्तं गानाकारं चक्रुरित्यर्थ ३ यं व्रजं इन्दिरालक्ष्मीः । तत्रेति व्रजवासिजनमात्र एव तदारभ्य सुखपूर्णे वृत्ते सत्यपि अयमस्मल्लक्षणो जन एव कथं दुःखीति भावः ॥ ४ ॥

उक्तन्यायेन जयेप्राप्तव्ये प्रत्युत पराभवप्राप्तिरेवास्माकमभूत । ननु मत्प्रातिकूल्याचरणहेतुकैव साध्यास्तामिति चेत्सत्यम् तत्तु न स्वेषु वय लक्षयाम इत्याहुः अनुरागिणमिति । तव निर्दयत्वे च संभवेत् तदपि न लक्षितपूर्वमित्याहुः कृपानिधे इति न केवलमन्यजनेष्विवास्मास्वपि कृपानिधित्वमात्रं यतो हे प्रियेति । ननु तर्हि केन प्रकारेणैतद्दुःखं शमयेयमत आहुः दृश्यो भवेति । ननु भावनाभरतः सदा सर्वत्र पश्यथैवमामत आहुश्चक्षुषामिति ॥ ५ ॥

नन्वत्र वन एवास्मि भवत्स एवमामन्विष्य यत्नात् किमिति न पश्यन्तीत्यत आहुरनुकाननमिति । दृश्यतां दृश्यत्वं प्राप्तः सन् । अनेन जयति प्रियेति पद्यत्रयेण " जयति तेऽधिकं जन्मना व्रज" इति मूलपद्यमनुस्मृतम् ॥ ६ ॥

ननु किं मया पूर्वं विप्रकृत यतो भवतीनामेतत्कष्टं समजनीत्यत आहुर्निशितेनेति । विनिकृन्तसीति तव सर्वादिकं शीलमेवैतदिति वर्त्तमानकालत्वम् । योषितामिति नहि योषित्सु शरक्षेप उचित इति भावः । ननु भो नीति तन्त्रोपदेष्ट्रयो योषित्स्वेव कटाक्षशरो निक्षेप्तुम्-

नो तदयं किं वत नैव नो वधः ॥ ७ ॥

अथ नो वध एव ते मतो यदि हा हन्त वृथा स्म रक्षिताः। विषवारिदवानलादितो घनवर्षाकरकादिपाततः ॥ ८ ॥

अथवा सकलाव्रजेऽविता वत यूयं च तथेति भाषसे। परुषैरुदितैर्विनाश्य किं पुनरस्माकममूनपाल्यः ॥ ९ ॥

न तवेहितहेतुरीक्ष्यते परमस्वेच्छ ! कुतूहलात् परः। न वत व्यतिरिक्तमिष्यते मृतसंजीवनतः कुतूहलम् ॥ १० ॥

नहि जीवयितुं परिश्रमस्तव दूरास्थितजीविना हि नः। तव दर्शन एव तद्भवेत् त्वदृते नो न हि जीवितं परम् ११ ॥

नहि वल्लववंशजो भवान् गतभीर्वल्लवयोषितां वधे। सहवाससगोत्रसम्पदे वत

चितो विदग्धस्य नान्येषु सत्यं । त्वं कौतुकेनोपहससि अस्माकं तु प्राणत्याग इत्याहुस्तदयमिति । नोऽस्माकं अयं किं नैव वधः अपितु वध एव अयं भावः । कटाक्षशरं प्रहृत्य यथा योषितो न म्रियन्ते तथा तदुत्तरं तत्समुचितं सन्धुक्षणमपि विदग्धजनः करोति त्वं तु न तथ करोषीति । त्वयि स्त्रीवध एव फलिष्यतीति भावः ॥ ७ ॥

ओमिति ब्रुवन्तं तमाहुरथेति । मतोऽभिप्रेतः । करका वर्षोपलः । वृथा रक्षिता वयमिति नोपेदयतं वध्यजनो न पुष्यते „ इति नीतेः । प्रतिपालितजनवधे च हत्यावैशिष्ट्यमिति भावः ॥ ८ ॥

सकलानां सर्वव्रजवासिनां अवने पालने कर्त्तव्ये यूयं च तदन्तःपातिन्योऽविता दैवाद्रक्षिता अभूत् अन्यजनासंपृक्ततया यदि प्राप्तो अभविष्यत तदा त्वहनिष्यमेवेति भावः । इति भाषसे चेत् तदा परुषैरुदितैर्वाक्यैः । "तयात मा चिरं घोष" मित्यादिभिरस्माकमेकत्रैव पृथक् प्राप्तानां असून् प्राणान् विनाश्य पुनर्मन्दहसितप्रदर्शनौषधेन किं किमर्थमपाल्यः रक्षितवानासि ॥ ९ ॥

तत्र तूष्णीं स्थितमिवालक्ष्य स्वयमेव तत्कारणमाहुः न तवेति । ईहितस्य तादृशचेष्टितस्य हेतुः कुतूहलात् परोऽन्ये न लक्ष्यते यतः परमा स्वेच्छैव यस्य हे तादृश। कुतूहलस्यापि वैविध्ये मृतसंजीवनतो व्यतिरिक्तम्। अन्यत कुतूहलं न इष्यते युक्तया न लभ्यते आदौ जन्तुर्मृतः क्रियते पश्चात्संजीव्यते पुनरपि मार्य्यते पुनश्च संजीव्यते इत्येवंलक्षणमेव कुतूहलं तथैवोपलम्भात् ॥१०॥

ननु मारणं सुकरमेव मृतस्य संजीवनं दुष्करमित्यत आहुः नहीति । दूरे स्थितं जीवितं यासां ता अस्मान्। तत् जीवनं भवेत् यतस्त्वदृते त्वां विना परमन्यत् जीवितं नहि अतः स्वस्य दर्शनादर्शने एव त्वत्वास्माकं जीवनमरणे करोषीत्यर्थः ॥११॥

हंहो तत् कौतूहलं च महामदद्दुर्लीलराजपुत्राणां जात्यन्तर एव श्रुतं न तु स्वजातिमात्र एवतत्र तु स्वप्रियबन्धुवर्गेपि तदित्याहुर्नहीति । नहि गतभीः अपितु गतभीरेवेत्यर्थः । यः को

त्वददर्शनशोकशोषिता दयिताप्याययितुंत्वमर्हसि ॥ १८ ॥
अघहन्तृ नुतं कवीश्वरैः श्रुतिकान्तं वत तप्तजीवनम् ।
कथयन्ति भवत्कथामृतं मृतसंजीवनमन्वहं बुधाः ॥ १९ ॥
अनुरागवतां तु चेतसाममृतं वा किमु वा हलाहलः ।
सुखदं च सुदुःखदं तन्नहि विद्मस्तव कीदृशं वचः ॥॥२० ॥
अमृतेन निषेवितं वहिः क्षुरसारोद्धृतधारमन्तरे ।
चरितं च वचश्च ते समं रतिमन्तोहि विदन्ति तत्त्वतः ॥२१॥
हसितं प्रणयार्द्रमीक्षितं किमपि ध्येयमपीहितं तव ।
निभृताश्च हृदिस्पृशः कथाः कितव क्षोभयतेऽखिलं हि नः॥ २२॥
अणुमात्रमपीह वर्त्तते नतरां प्रेम हि मादृशीषु वः ।
तिलमात्रमपीह तु क्रमं न समर्था वयमीक्षितुं तव ॥ २३ ॥
व्रजति व्रजतो गवां व्रजं विपिने चारयितुं यदा भवान् ।
चरणौ तव खिद्यतस्तृणैरितिनः खिद्यति मानसं तदा ॥२४॥
नवपद्मपलाशकोमलं क्व तव श्रीमयमङ्घ्रि युग्मकम् ।
क्व स तीक्ष्णतरस्तृणाङ्कुरः स्मरणं तन्मरणाय नो भवेत् ॥२५॥

---

तेजभावव्यञ्जना । पद्यद्वयेनानेन मधुरयागिरेति ॥ १८ ॥

किंच त्वद्वियोगमहाव्याधेः प्रसिद्धं यदौषधं सद्भिः सेव्यते तत् प्रत्युत सेवितमस्मार्कं त्वं द्वि
गुणोच्चकारैवेत्याहुस्त्रिभिः । अघहंत्रिति उत्तरपद्यार्थमनुसृत्य । वयं तु दुःखवर्द्धकमपि कथया
ः । तथा नुतं च निन्दितं च श्रुतिकान्तं च श्रुतितापकं च तप्तजीवनं च जीवनसन्तापकं
मृतसंजीवनं च जीवनमारकं च ॥ १९ ॥

अमृतं वा हलाहलो वेति । आस्वादनतृष्णयोर्युगपदेवातिवर्द्धनादिति भावः । विरहे तु
[illegible]मारकत्वेनाप्राप्त्या तृष्णाधिक्येन सुतरामेव दुःखदत्वम् ॥ २० ॥

नासि नु निन्दामि च पिबामि चेति न्यायेन तर्हि किं तदेव मुहुरनुशील्यते तत्राहुः अमृतेने
तत्र उक्तार्थमेवचरितं च वचश्चेति । तथा तव चरित्रमध्ये वयं पतितास्तथा वचस्यपीति
य हे । अघहन्तृ इति पद्यत्रयेण “ तवकथामृतामिति ॥ २१ ॥

वैविध्य किंच त्वच्चेष्टितं सर्वमपि पूर्वं सुखदमपि दुःखोदर्कमेवेत्यधुनैवावगतमित्याहुर्हसितमिति ।
तःन “ प्रहसितमिति ॥ २२ ॥

किंच प्रेमशून्यो भवानेव सुखी प्रेमवत्यो वयं त्वत्कृते सदैव दुःखिन्य इत्याहुः अणुमा-
त्रमपीति ॥ २३ ॥

तदेव प्रपञ्चयन्ति व्रजतीति ॥ २४ ॥

ननु पर्य्यटतां जगज्जनानां मध्ये ममैव चरणौ तृणैः खिद्यत इति कथमवगतं कथं वा
तयोः खेदो युष्मन्मानसे एव सङ्क्रान्तस्तत्राहुः नवपद्मेति । युग्मकमित्यनुकम्पायां कन् । स्म-
रणमित्यनुमानादेव इति भावः । ततश्च तथा श्रवणदर्शनयोस्तवतिकैमुत्यमानीतम् । अनेन श्लो-
कत्रयेण “ चलसि यद्व्रजा „ दिति ॥ २५ ॥

सकलं दिनमेवमेव हे रमण त्वद्वनखेदचिन्तया । अथ मर्मणि मर्मणि भ्रमन् व्यथयत्येव स कोऽपि हृद्वणः ॥ २६ ॥

अथ तद्दिवसावसानतो विपिनान्तात्व्रजमध्यमाविशन् घनगोखुरधूलिधूसरैरलकैश्चारु मुखं च दर्शयन् । हृदये मनसोऽप्यगोचरं कुसुमेषुं सहसा प्रवेशयन् विविधैरभिलाषकल्पनैः कलिलं नाथ करोषि नो मनः ॥ २७ ॥

अयमेष्यति नोऽद्यमन्दिरं रजनावित्यभिलाषरंहसा ।
सकलां रजनिं प्रजागरैरतिखेदाद्गमयामहे वयम् ॥ २८ ॥
इति नैव कदापि नो भवान् सुखदोऽभूदनुभूतसौहृदः ।
अकरोत् प्रियमद्य यत् क्षणं वत तस्मिन् परिणाम ईदृशः ॥ २९ ॥
प्रणताभिमतप्रदं विधेरपि वन्द्यं धरणीविभूषणम् ।
स्मृतिमात्रविपद्विशोषणं पदपद्मं स्तनयोर्विधेहि नः ॥३०॥
दरघर्मपयो मधुद्रवं नखचन्द्रद्युति वृन्दकेशरम् ।
लसताचलदङ्गुलीदलं पदपद्मं स्तनपूर्णकुम्भयोः ॥ ३१ ॥
रतिवर्द्धनमर्दनं शुचां मुरलीचुम्बनलब्धसौभगम् ।
विषयान्तररागनाशनं मधुरं पायय नोऽधरामृतम् ॥३२॥

मुरलीकृतपानमाननं नहि वः पेयमिति स्म माभिधाः । न मधु ज्वरदाहनाशनं सरघोच्छिष्टमितीह हीयते ॥ ३३ ॥

अटतो विपिने दिने तव स्मितपीयूषसुपेशलं मुखम् । न दृशां विषयो यदा

---

नच तत्स्मरणं क्षणिकं नापि सा मनोव्यथा एकदेशवर्तिनी नाप्युपशमवतीत्याहुः सकलमिति । अथेत्यत एवार्थे श्लोकादौ योज्यम् ॥ २६ ॥

अथ तदनन्तरम् । सहसा दर्शनसमकालमेवेत्यर्थः । कलिलं व्यामिश्रम् ॥ २७ ॥

कीदृशमभिलाषकल्पनमत आहुः अयमेष्यतीति ॥ २८ ॥

अनुभूतं सौहृदं यस्य सः । श्लोकपञ्चकेन दिनपरिक्षय इति ॥ २९ ॥

अथेत्थं दोषारोपेण विमुखीभूयापगतं दूष्यन्तमिव कान्तं मत्वा कृतानुतापाः पुनरनुरञ्जयन्त्य आहुः प्रणतेति ॥ ३० ॥

चरणस्य पद्मत्वमुपपादयन्ति दरघर्मेति । श्लोकद्वयेन प्रणतकामद मिति ॥ ३१ ॥
अथ तथैव दत्ताङ्गसङ्गमिव तं मत्वा जातस्मरोन्मादाः सुरतधाष्टर्यमर्पयन्ते रतिवर्द्धनमिति ३२

तस्यौष्ठपानव्याजेन निजातिलोभ्यत्वमेव व्यञ्जयन्त्यः आहुः मुरलीति निष्प्राणाया अपि मुरल्या लोभधाष्टर्यमुत्पादयन्ति किमुतास्माकमित्यपि द्योतितम् । सरघा मधुमक्षिका न हीयते न त्यज्यते । श्लोकद्वयेन " सुरतवर्द्धनं शोकनाशन " मिति ॥ ३३ ॥

व्यतिरेकेण तु दुःखस्य दुःसहत्वमाहुः अटत इति । युगायतवत् प्रतय इव निमेषो मनः

भवेत् त्रुटिरेकापि तदा युगायते । विषयोऽपि दृशां यदा भवेद्वदनं ते कमलेन्दुनिन्दकम् । नयनस्य निमेष एव नो व्यथयत्येव मनो युगान्तवत् ॥ ३४ ॥

अथ पतिभिर्निरुद्ध्यमाना मानापगमे या गुणदेहं देहं विहाय कृष्णाङ्गसङ्गसमुचितं देहमासादितास्ता एव साभिमानमाक्रोशन्त्य ऊचुः ॥ ३५ ॥

पतिपुत्रसुहृत्सहोदरान् तृणकल्पानतिमुच्य तेऽन्तिकम् । कितवोपगताः पुनः कथं विपिने नो निशि कष्टमत्यजः ॥ ३६ ॥

पुनः सकला एव सकला एवमूचुः । हसितं मृदु चारु वीक्षितं रहसि प्रेमवचःस्मरोदयम् । भुजयोरुरसश्च रस्यतां विमृशन्नो हृदयं विमुह्यति ॥ ३७ ॥

व्रजकाननवासिनां मुदे भवतो व्यक्तिरितीयतीं प्रथाम् ।
व्यभिचारवतीं स्म मा कृथाःप्रथयास्मन्मनसो रुजां क्षयम् ॥ ३८ ॥

तव तच्चरणाम्बुजं विभो कठिनेषु स्तनमण्डलेषु यत् । सभयं विभृमो वनेऽमुना विचरन्नो दुनुषे तृणाङ्कुरैः ॥ ३९ ॥

कठिनाः कुचमण्डला हि नो मृदवः स्युर्न ममाङ्घ्रिसङ्गतः ।
इतरे तृणशर्करादयो ह्यपि भेद्यन्ति न तैर्मम व्यथा ॥ ४० ॥

---

कर्म व्यथयति । क्षणस्य कल्पता निमेषासहतेति । महाभावानुभावो । श्लोकद्वयेन “ अटति यद्भवानह्नि काननं ” मिति ॥ ३४ ॥

मानस्य ज्ञानस्यापगमे मूर्छायां सत्यामित्यर्थः । गुणदेहं सत्त्वादिगुणारब्धम् ॥ ३५ ॥

पतिपुत्रेति जनिष्यमाणपुत्रशोकत्याग एव पुत्रत्यागः । कितवेति पुनरपि देहं त्याजयितुं प्रयतसे इति भावः । अनेन “ पतिसुतान्वये ” ति । तत्र च “ गतिविद ,, इति पदस्यास्मद्देहत्यागरूपां गतिं जानत एव तवान्तिकमिति व्याख्यानवशात्तद्गमात्रमभिप्रेत्य पद्यस्योन्नीतम् ॥ ३६ ॥

एव मूचुरित्यहो त्वन्मोहनतया सर्वा एव वयमतिचतुरा अपि निर्गुणा नैकस्या अपि रक्षेति । मोहनवस्तून्येव गणयन्ति हसितमिति । एवं व्यस्ततया पठेव समस्ततया तु निजभुजवक्षःसमीक्षणपूर्वकहसितपुरःसरास्मदवलोकनप्राप्तितं सप्रेम कामकलामयं वचनमेतदेव महामोहनमिति विमृशत् विचारेणास्वादयत् सदित्यर्थः । अनेन रहसि संविदमिति ॥ ३७ ॥

कृतमपराधं पश्यया स्वपरानिर्मल्यरक्षणानुरोधेनाप्यस्मांस्त्रायस्वेत्याहुः व्रजेति । अनेन व्रजवनौकसामिति ॥ ३८ ॥

अहो चित्रमस्मान् विहाय स्वकष्टमप्युररीकुरुषे तेनाप्यस्मान् पुनःदुःखयितुमित्याहुः तवेति । सभयं बिभृम इति स्तनस्पर्शेन तस्य सुखमस्तीत्यननुसन्धायैव बिभ्रतोऽपि काठिन्यं विमृश्य सभयमेव बिभृम इत्यर्थः । अमुनाचरणाम्बुजेन नोऽस्मानेव दुनुषे अतो दुन्वन् सन्निति भावः ॥ ३९ ॥

भेद्यन्ति अङ्घ्रिसंगतो द्रवन्ति कोमलायन्त इत्यर्थः । ञिमिदा स्नेहने ॥ ४० ॥

सकलं दिनमेवमेव हे रमण त्वद्वनखेदचिन्तया । अथ मर्मणि मर्मणि भ्रमन् व्यथयत्येव स कोऽपि हृद्व्रणः ॥ २६ ॥

अथ तद्दिवसावसानतो विपिनान्ताद्व्रजमध्यमाविशन् घनगोखुरधूलिधूसरैरलकैश्चारु मुखं च दर्शयन् । हृदये मनसोऽप्यगोचरं कुसुमेषुं सहसा प्रवेशयन् विविधैरभिलाषकल्पनैः कलिलं नाथ करोषि नो मनः ॥ २७ ॥

अयमेष्यति नोऽद्यमन्दिरं रजनावित्यभिलापरंहसा ।
सकलां रजनिं प्रजागरैरतिखेदाद्गमयामहे वयम् ॥ २८ ॥
इति नैव कदापि नो भवान् सुखदोऽभूदनुभूतसौहृदः ।
अकरोत् प्रियमद्य यत् क्षणं बत तस्मिन् परिणाम ईदृशः ॥ २९ ॥
प्रणताभिमतप्रदं विधेरपि वन्द्यं धरणीविभूषणम् ।
स्मृतिमात्रविपद्विशोषणं पदपद्मं स्तनयोर्विधेहि नः ॥३०॥
दरघर्मपयो मधुद्रवं नखचन्द्रद्युति वृन्दकेशरम् ।
लसताच्चलदङ्गुलीदलं पदपद्मं स्तनपूर्णकुम्भयोः ॥ ३१ ॥
रतिवर्द्धनमर्दनं शुचां मुरलीचुम्बनलब्धसौभगम् ।
विषयान्तररागनाशनं मधुरं पायय नोऽधरामृतम् ॥३२॥

मुरलीकृतपानमाननं नहि वः पेयमिति स्म माभिधाः । न मधु ज्वरदाहनाशनं सरघोच्छिष्टमितीह हीयते ॥ ३३ ॥

अटतो विपिने दिने तव स्मितपीयूषसुपेशलं मुखम् । न दृशां विषयो यद

---

नच तत्स्मरणं क्षणिकं नापि सा मनोव्यथा एकदेशवर्त्तिनी नाप्युपशमवतीत्याहुः सकलमिति अथेत्यत एवार्थे श्लोकादौ योज्यम् ॥ २६ ॥

अथ तदनन्तरम् । सहसा दर्शनसमकालमेवेत्यर्थः । कलिलं व्यामिश्रम् ॥ २७ ॥

कीदृशमभिलाषकल्पनमत आहुः अयमेष्यतीति ॥ २८ ॥

अनुभूतं सौहृदं यस्य सः । श्लोकपञ्चकेन दिनपरिक्षय इति ॥ २९ ॥

अथेत्थं दोषारोपेण विमुखीभूयापगतं रुष्यन्तमिव कान्तं मत्वा कृतानुतापाः पुनरनुरञ्जयन्त्य आहुः प्रणतेति ॥ ३० ॥

चरणस्य पद्मत्वमुपपादयन्ति दरघर्मेति । श्लोकद्वयेन प्रणतकामद मिति ॥ ३१ ॥

अथ तथैव दत्ताङ्गसङ्गमिव तं मत्वा जातस्मरोन्मादाः सुरतधाष्टर्यमर्थयन्ते रतिवर्द्धनमिति ३२

तस्यौषधत्वव्याजेन निजातिलोभ्यत्वमेव व्यञ्जयन्त्य आहुः मुरलीति निष्प्राणाया अपि मुरल्या लोभधाष्टर्यमुत्पादयन्ति किमुतास्माकामित्यपि द्योतितम् । सरघा मधुमक्षिका न हीयते न त्यज्यते । श्लोकद्वयेन "सुरतवर्द्धनं शोकनाशन" मिति ॥ ३३ ॥

व्यतिरेकेण तु दुःखस्य दुःसहत्वमाहुः अटत इति । युगान्तवत् प्रलय इव निमेषो मनः

इति चेदृतमेव नो मृषा कुलिशं यद्द्रवति त्वदीक्षणात् ।
कुलिशादपि निष्ठुरात्मनां किमुरोजाः कठिना न सन्तु नः ॥ ४१ ॥
कुसुमादपि कोमलं मनस्तव यत् मैति महाकठोरताम् ।
तदपि ह्यतिदारुणात्मनां वत् यादृच्छिकसङ्गतो हि नः ॥ ४२ ॥
असमञ्जसमेतदुच्चकैर्युगपद्भूरिवधूवधस्तव ।
इति नो वितथा मतिर्वृथा व्रजतोऽसून् प्रसभं रुणत्सि नः॥४३॥
अथवा कुहकैककौतुकी हृदये नः प्रकटं परिस्फुरन् ।
निरुणत्सि बहिर्विनिर्यतो वत नोऽसूनिति तेऽतिकौतुकम् ॥ ४४ ॥
न वयं बहुभिर्गवेषणैरहह त्वामवलोकितुं क्षमाः ।
इति नाथ भवद्गवेषणे स्वयमेव प्रसरन्ति नोऽसवः ॥ ४५ ॥
मम लब्धिरहोगदिच्छया न विना तेन कृतं समुद्यमैः ।
इति चेन्मनसिस्फुरद्दृशां त्यज गच्छन्तु बहिर्वतासवः ॥ ४६ ॥
अयिजीवितनाथ जीवितैर्भवदन्येपकृते वहिर्गतैः । त्वमवश्यमवेक्ष्यसेऽचिरान्न हि भृत्येषु पराङ्मुखः प्रभुः ॥ ४७॥
इति रोदनरीतिकोमलः कलकण्ठीकुलकण्ठनिस्वनः । मृगपक्षिवधूररोदयत्तरुवल्ली हृदयान्यदारयत् ॥ ४८ ॥

ऋतमेव सत्यमेव नैवतन्मृषा वदसीत्यर्थः । निष्ठुरात्मनामिति त्वद्विच्छेदेऽप्यात्मनामनिष्क्रमणादिति भावः ॥४१॥

हन्त किं वक्तव्यमस्मत्काठिन्यगौरवं येन त्वमपि कठिनीकृतोऽभूरित्याहुः कुसुमादपीति। यद्वा वचनभङ्गया तस्य स्वाभाविकमेव नैष्ठुर्य्यं स्वेषां तु नैसर्गिकमेव सारल्यं व्याजस्तुत्या द्रढयन्त्य आहुः कठिनाः कुचमण्डला इत्यादि । एतत्पद्यचतुष्टयेन " यत् ते सुजातचरणाम्बुरुहे ,, ति ॥ ४२ ॥

तथैव व्याजस्तुत्या तस्य निष्कृपत्वमाहुः असमञ्जसमिति । व्रजतोऽपि प्राणान् बलादेव रुणत्सि अहो कृपालुत्वमिति भावः। वस्तुतस्तु निर्यान्तोऽपि प्राणास्त्वदाशयैव पीडोद्रेकदिप्सयैव न निर्यान्ति अतो मारणादप्यधिकदुःखदोऽसीति भावः ॥ ४३ ॥

किंच आशाबन्धतोऽप्यपर्य्याप्ताः प्राणास्त्वत्स्फूर्त्यैव रक्षन्ते इत्याहुः अथवेति । वहिरन्तर्धाय असून् यापयसि पुनर्हृदये परिस्फुरन् निरुणत्सि इति निश्वक्रामणनिरोधनमयं तवैतदतिकौतुकमिति ॥ ४४ ॥

किंच तदप्यतः परं निरोद्धुमसून् न पारयिष्यसीत्युत्प्रेक्षणेनाहुः न वयमिति । स्वयमेवेति यदि यूयं श्रान्तास्तर्हि वयमेवान्वेष्टुमितो निःसराम इत्यसम्यं प्रकुर्व्वेवेत्यर्थः ॥ ४५ ॥

इति चेदिति । तवेच्छा तु नैव भविष्यतीति वयं जानीम एवेति भावः ॥ ४६ ॥

विलापगीतं उपसंहरन्त्यः सन्यायमाहुः अयि जीवितेति ॥ ४७ ॥

मृगेति अधिरूढभावस्यानुभावोऽयं यदुक्तं तिरश्चामपि रोदनमिति ॥ ४८ ॥

निकटस्थित एव तत्र स प्रणयी गोकुलराजनन्दनः ।
कृतकं कठिनत्वमावहन्नपि सोढुं प्रबभूव नापरम् ॥ ४९ ॥

पुनरपि विलपन्त्यो मुक्तकण्ठं रुदत्यः प्रियगुणगणमुच्चैः कोमलं कीर्त्तयन्त्यः ।
तमथ समयमीयुः प्राणनिर्याणतो वा सुखदमवधिभूतं प्राणनाथागमाद्वा ॥ ५० ॥

एवं सति स तिरोभावतो भावतोपेणोपरतो रत्नोत्तंस इव मूर्त्तःसकरुणारुणापाङ्गेपुणा तासामन्तः क्रान्तिलतां समूलमुन्मूलयन्निव स्मितचन्द्रिकया कयाचन मनोरुगन्धकारं विद्रावयन्निव ॥ ५१ ॥

मधुरिमगरिमगभीरतया मुहुरुदितरुदितक्रमादिकं कदापि नानुभूतमिति मितिरहितां संविदं प्रतिफलयन्निव ॥ ५२ ॥

तदेव प्रथमं प्रथमङ्गलमङ्गलक्ष्मीसौभाग्यं दर्शितमिव प्रतिबोधयन् विरहरंहसा पदितस्ततो गवेषितं तदपि स्वप्नविलसितमिवानुभावयन् ॥ ५३ ॥

प्रमदमदनानन्दरसेन तासां हृदयं सुहृदयं सुधालयन्निव वपुरपि विरहाकृशानुकृशानुतप्तं तत्कालमेव तृप्तिशीतलतया स्तवपुरं वपुरन्तरतां प्रापयन्निव निष्क्रम्य गतं जीवितं पुनरपि स्थानस्थितं कारयन्निव ॥ ५४ ॥

विरह इति नामधेयं कदापि श्रवणयोर्न जातमिति भावं भावन्दितं कुर्वन्निव ५५

कृतकं कृत्रिमम् ॥ ४९ ॥

तं समयम् । अवधिभूतं सन्तं सुखदम् । ईयुः इयवत्यः । तस्यावधिभूतत्वेन सुखदत्वे हेतुद्वयं प्राणनिर्याणतो वा प्राणनाथागमाद्वा इति । अयमर्थः सर्वाभिः संमत्या सम्भूयायं क्षणात्मकः समय एवावधित्वेन व्यवस्थापितः । यद्यत्र स नायाति तदा प्राणांस्त्यक्त्वा सुखिन्यः स्याम,यद्यायाति तदा प्राणवत्य एव सुखिन्यः स्याम इत्युभयथाप्ययं समयः सुखदोऽस्त्विति ता निरणैषुरिति ॥ ५० ॥

एवं सति स कृष्णातिरोभावत उपरतः प्रादुरासीदित्यन्वयः । अन्तः क्रान्तीति मनःपीडाया एव कृपाकटाक्षेपुणा निवर्त्यत्वे लतात्वं ततोऽप्यतिशयेन स्मितचन्द्रिकया च अन्धकारत्वं चोत्प्रेक्षितं नतु वस्तुभेदस्य ॥ ५१ ॥

*मधुरिम्णो गरिमा गौरवं तस्य गभीरतया गाम्भीर्येण मितिरहितां अपरिमितां संविदं ज्ञानम्* ॥ ५२ ॥

प्रथं ख्यातं मङ्गलं यत्र तत् अङ्गलक्ष्मीसौभाग्यं प्रथममेव दर्शितमिति अभिसारान्तमारभ्येतावन्तं कालमभिव्याप्यैव दर्शितमिति ज्ञापयन् न तु विटापान्ते इदानीमित्यर्थः । ततश्च विरहेति स्वप्नेति तासहृविच्छेदस्यानुभवलोपादिति भावः ॥ ५३ ॥

अयं सुहृत् विरहकृशानुना कृशं च अनुतप्तं च तथाभूतं वपुः स्तवपुरं स्तवस्य प्रशंसायाः पुरं वासस्थानं यद्वा वपुरन्तरताम् इत्यस्य विशेषणमेतत् स्तवं दिशतीति स्तवपुरताम् ५४

भा कान्तिस्तया वन्दितं प्रदीप्तं भावान्तरालुप्तमित्यर्थः ॥ ५५ ॥

एक एव युगपदेव सर्वा एव समालिङ्गन्निव गरिमधुरामधुराधरसंयोगं विनापि युगपदेव सकलानामिव विलसत्कपोलचुम्बनचातुरीमुरीकुर्वन्निव तत्रैव स्थितोऽपि कुतश्चिदिवागतः साक्षान्मन्मथमन्मथ इव पीतांशुकांशुकान्तो विलोलवनमालस्तासां हृदयाकाशादिवावनितलादिव वनान्तरादिव न कुतोऽपीवागतस्तथैव स्थित इव प्रादुरासीत् ॥ ५६ ॥

अकस्मात्कस्मात् कारणादिव समुद्गतं पूर्णसुधाकरमिव कुमुदिन्यः दुरवग्रहाव-साने तत्कालोदितं नवधाराधरमिव चातकयुवतयः अभितो वनं समुज्ज्वलज्ज्व-लनसंतापदह्यमाना निर्मेघमासारं सारङ्गरमण्य इव परपुरप्रवेशमारचय्य चि-रान्निवर्त्तमानमात्मानं सद्यस्तनवस्तनव इव तमालोक्य युगपदेव समुल्लसिता व-भ्रुवुरसितापाङ्ग्यः तत्समकालमेव प्रमोदेन सह समुत्तस्थुः वपुषा सह सकलसंतापं विसस्मरुः उत्कण्ठया सह समीपमभिसस्रुः ॥ ५७ ॥

ततश्च । काचित्कराम्बुरुहमञ्जलिना स्म धत्ते काप्यंससीमनि भुजं मदरूपि-तायाम् । ताम्बूलचर्वितमसुष्य दधार काचित् पाणौ हिरण्मयपतद्ग्रहकान्तिकान्ते ५८

काचित्तत्स्तनमुकुलयोस्तत्पदाब्जं निधाय प्रत्यग्रोद्यन्नवकिसलयाच्छाद्यमा-नाननस्य । भाविक्रीडोत्सवरससमारम्भसंसूचकस्य स्वाङ्के शोभामधित सुतनुः स्वर्णकुम्भद्वयस्य ॥ ५९ ॥

काचिद्भाले भ्रुकुटिकुटिले तन्वती भ्रूतरङ्गान् चञ्चत्कोणैररुणतरुणैरञ्जना-ङ्कैरपाङ्गैः । कन्दर्पस्य प्रमदगरलेनेव दिग्धैः पृषत्कैर्निघ्नत्यालोकत कुतुकिनी द-न्तदष्टाधरश्रीः ॥ ६० ॥

---

समालिङ्गन्निवेति तद्दर्शनमप्यालिङ्गनजन्यसुखदायकमित्यर्थः । गरिमधुरया गौरवातिशयेन मधुरस्याधरस्य संयोगं विनापीति चुम्बनसुखमपि दर्शनादेवोपलब्धमित्यर्थः ॥ ५६ ॥

कुमुदिन्य इति तं विना वस्त्वन्तरेण प्रफुल्लतानवाप्तेः । चातक्य इति तं विना तृष्णोत्थ-विलापानपगमात्सारङ्गरमण्य इति तं विना बाह्याभ्यन्तरसंतापाशान्तेः , तनव इति तं विना स्वसत्ताया अप्यनवाप्तेः । तत्र दुरवग्रहः स्वदर्शनादानप्रौढिः स एवावग्रहोवृष्टिप्रतिबन्धः तदन्ते । परपुरप्रवेशं परलोकगमनं कृत्वा सद्यस्तत्क्षणादेव तनवो देहाः तनवोऽति कृशाः ५७

अञ्जलिना स्म धत्त इति विनयवती दक्षिणमृद्वीयम् अंससीमनीति दक्षिणप्रखरेयम् ता-म्बूलचर्वितेति दक्षिणमृद्वी सेवापरेयम् । पतद्ग्रह आलबाटीति पीकदानी इति वा ख्यातः ५८

काचित्तत्सेति प्रखरेयम् । प्रत्यग्रेणाभिनवेन उद्यता नवकिशलयेन आच्छाद्यमान-माननं यस्य तत्तथा तस्य स्वर्णकुम्भद्वयस्य शोभां स्वाङ्के अधित ॥ ५९ ॥

काचित् भाल इति रोषावेशेनेव कुटिलभावोद्गारप्राखर्व्येऽपि मध्येवेयं पूर्ववद्बाहुधारणादि-प्रागल्भ्याप्रकाशनात् वामा च । प्रकृष्टो मद एव गरलं तेन । पृषत्कैर्बाणैः । निघ्नतीति क-राम्बुरुहधारिण्यादिकान्ताभिः संपृक्तमपि तं दूरस्थितैव सतीयं क्षोभयतीति सौभाग्योद्रेकः सूचितः कुतुकिनी विलासवतीत्यन्तरुल्लासेन वस्तुतः कोपाभावश्च ॥ ६० ॥

अनिशमनिमिषाभ्यां लोचनाभ्यामथैका मुखकमलमधूलीमापिबत् प्राणबन्धोः अलभत न पिपासापारमेषा तदासीदियमपि च नितान्तं पीयमानापि पूर्णा ६१

तं कापि लोचनपथेन निवेश्य चित्ते तेनैव निर्गमनशङ्कनतो नताक्षी। तत्कालमेव विनिमीलितलोचनैव रोमाञ्चिता विधुमुखी चिरमालिलिङ्ग ॥ ६२ ॥

ततश्च। काचित्काञ्चनमञ्जरीव विनमद्गात्री मनोरागजैरावेगैः पृथुवेपथुर्विलुलचेकृष्णं विलोक्याग्रतः। संग्रामोत्सवकौतुकोत्सुकतया सद्यः प्रसूनायुधो गर्वेणैव चकार चम्पकधनुःकम्पस्य सम्पादकम् ॥ ६३ ॥

ततश्च। अभ्युन्नीय परस्पराङ्गुलिदलन्यासाङ्कितपाणिद्वयं लीलालस्यविलुप्तये तनुलतामुल्लासयन्ती तिरः। मूर्ध्नः सीमनि मण्डलीकृतमतिस्मेरस्य दर्पोदयाद्वक्त्रेन्दोः परिधीचकार भुजयोर्युग्मं चकोरेक्षणा ॥ ६४ ॥

ततश्च। वामा वामकराङ्गुलीदलयुगेनातन्वती छोटिकां निर्याहीति ह्रियोपसारणविधेः संकेतमुद्रामिव। ईर्षान्तःसरतेव दन्तमहसा सार्द्धं बहिर्निःसृतौ तस्या एव हि वर्त्मकल्पनकृतारम्भेव जृम्भां व्यधात् ॥ ६५ ॥

आनीय काप्युरसि पाणिदलेन वेणीमेणीदृगुन्नतपयोधरयोर्निवेश्य। दोर्भ्यां निपीड्य निविडं विनिमीलिताक्षी रोमाञ्चकञ्चुकतनूश्चिरमालिलिङ्ग ॥ ६६ ॥

एषा गोपी इयमपि मुखकमलमधूलीमिति तदङ्गस्पर्शनाभावकरणाद्वामेयं पूर्वस्यास्तादृशकटाक्षशराघातजातक्षोभस्य तस्य संत्रस्तमुखकमलमधुल्याः पानजनितहर्षेण विस्मृतस्वप्राखर्य्या तदानीं मध्यायमानैव तत्सखीयं वामा ॥ ६१ ॥

तेनैव लोचनपथेनैव पुनर्निर्गमनं ततः शङ्कनत एव हेतोस्तत्कालमेव विशेषेण निमीलिते लोचने यया सा। नताक्षी कुटिलाक्षीति एषापि वामा मध्या च ज्ञेया। वैष्णवतोषणीव्याख्यानुसारेण कराम्बुरुहधारिण्याया एताः क्रमेण चन्द्रावलीश्यामलाशैव्यापद्माराधाललिताविशाखाः सतव्याख्याताः। व्याख्यास्यमानास्तदितरास्ता अपि स्वाभियोगवलस्तत्तद्गुणयोगादिभ्यस्ता ज्ञेयाः तत्र तत्र वाम्यप्राखर्य्यादि स्वयमूह्यम् ॥ ६२ ॥

विनमद्गात्रीति लज्जया हस्तयुगोन्नमनं विनैव गात्रं मोटयन्तीत्यर्थः ॥ ६३ ॥

अभ्युन्नीयेति प्राखर्य्यात् कान्तं मोहयितुमिव। हस्तयुगोन्नमनमस्याः पूर्वतो विशेषः। परिधिर्मण्डलम् ॥ ६४ ॥

वामा वाम्यभावविशेषवती नायिका। वामकराङ्गुलीदलयुगेन वामाङ्गुष्ठमध्यमाभ्यामित्यर्थः। छोटिकां तद्ध्वनिम् तस्या ह्रियः सार्द्धं बहिर्निःसृतौ बहिर्निःसरणनिमित्तं दन्तमहसा स्वदीपकेनैव वर्त्मकल्पनार्थं कृत आरम्भो यया सा ॥ ६५ ॥

उरसि वेणीमर्नीयेति संभोगप्रार्थनाभियोगः ॥ ६६ ॥

किंच । आघ्राय धूनितशिरः सरसं च वीक्ष्य व्याधुन्वती मधुकरीं पुरतः पतन्तीम् । स्विद्यत्कपोलफलका पुलकाङ्कुरेण लीलारविन्दमरविन्दमुखी चुचुम्ब ६७

काचिच्चकोरनयना नयनाञ्चलेन लीलालसेन दयिताननमीक्षमाणा । आलीजनासतटवेल्लितबाहुवल्लिर्मूर्चैव सौभगमहाधनमत्तताभूत् ॥ ६८ ॥

दोर्भ्यां लसत्कनककङ्कणझङ्कृताभ्यामामोच्य कापि कवरीं पुनराबबन्ध । ध्वान्तभ्रमादिह निलीय किमस्ति मानो नो वेति तं निरसितुं तमिवान्विवेष ६९

भुजाया वामायाः कलमधुरझङ्कारिवलयं सलीलं धूतायाः करदलकनीयोङ्गुलिकया । वितन्वाना वामश्रुतिकुहरकण्डूमथ परा व्यधात्कामक्रीडासमरजयघण्टाध्वनिमिव ॥७०॥

करेणासव्येन प्रचलवलयालिध्वनिभृता व्यधूनात्तन्वङ्गीललितमथ लीलासरसिजम् । तदासीदेतस्याः कुसुमशरसंग्रामविजयी महानेवावर्तो नभसि नवलावण्यसरितः ॥ ७१ ॥

मुदितमदनमोदामर्षघर्माम्बुसिक्तं निजवपुरथ काचित्स्वोत्तरीयाञ्चलेन । व्यजयत कृतहेलं लीलया वीजयन्ती स्मरसमरपताका मारुतेनाधुतेव ॥७२॥

अन्तः प्रफुल्लदभिलाषलताततीनामौत्सुक्यमारुतजवेन बहिर्विधूतैः । पुष्पैरिव स्मितभरैर्विदधे विदग्धा कृष्णावलोकनमहोत्सवपुष्पवर्षम् ॥७३॥

---

धूनितशिरो यथा स्यात्तथा आघ्राय शिरोधूननमतिमाधुर्यानुभवोत्थविस्मयाभिनयः। सरसं सोल्लासं भावविशेषसहितं च । व्याधुन्वती तिरस्कुर्वती दक्षिणपाणिनेत्यर्थः । अयं स्वविपक्षपक्षाक्षेपाभिनयः। अरविन्दमुखीति योग्यं योग्येन युज्यत इति मुखचुम्बनाभियोगे न्यायो व्यञ्जितः ६७

दयिताननमीक्षमाणेति तद्व्यापारे लज्जासंकोचयोरभिनयेच्छा प्रकटा तदवधानेच्छा तु वास्तवी । आलीजनेत्यालिङ्गनाभियोगः ॥ ६८ ॥

आमोच्य पुनराबबन्धेति अनुभावज्ञापितसुरतान्ताभियोगः ध्वान्तेत्युत्प्रेक्षया वाम्यापगमात्तत्रातिधार्ष्ट्यमपि द्योतितम् ॥६९॥

करस्य दलभूता कनीयसी या अङ्गुलिस्तया ॥७०॥

तत् विधूननमेव आवर्त्त आसीत् अभवदित्यन्वयः । कुसुमशरसंग्रामे विजयः सूच्यत्वेन वर्त्तते यस्य सः ॥७१॥

मुदितात् उल्लसितान्मदनोद्रेकेतोमोदः कान्तदर्शनआनन्दः अमर्षस्तदीयकैतवानुसन्धानजो रोषस्तदनुभावरूपं यद्घर्माम्बु तेन सिक्तम् ॥७२॥

कृष्णावलोकनोत्सवो यो महोत्सवस्तत्र करणीयं पुष्पवर्षं स्मितभरैरेव विदधे । कैरिव अन्तः प्रफुल्लन्तीनां अभिलाषलताततीनां पुष्पैरिव तेन च तासामङ्कुरितपल्लवितत्वपुष्पितत्वेषु जातेषु फलितत्वमपि नेदिष्ठमेवेति द्योतितम् ॥७३॥

किंच । आनन्दजैर्नवकुरङ्गविलोचनाया बाष्पाम्बुभिर्नयनयुग्मकमापुपूरे । कृष्णं विलोकयसि धन्यमसीति गाढं प्रेम्णा द्रुतेन मनसेव तदालिलिङ्गे ॥७४॥

किंच । एकाञ्च काञ्चनमयप्रतिमायमानां स्तम्भः प्रियेक्षणकृतः सहसा व्यधत्त । तामिव किं त्रिजगतीललनाललामं सौभाग्यभारगरिमैव पराबभूव ॥७५॥

किंच । आमूलतो मुकुलितेव कदम्बशाखा काचिद्बभूव विपुलैः पुलकैः किमयाः । बाणान् स्मरस्य विरहे हृदि सम्प्रविष्टान् श्रीकृष्णचुम्बकमणिर्बहिराचकर्ष ७६

किंच । अम्भः कणाकुलितकाञ्चनपद्मिनीव सिष्वेद काचन चिराय चमूरुनेत्रा । प्राणाधिनाथमुखचन्द्रविलोकनेऽस्या यत्स्यन्दते स्म बत मानस चन्द्रकान्तः ७७

किंच । कृष्णं विलोक्य चलचारुचकोरनेत्रा सञ्चारिचम्पकलतेव चिरं चकम्पे । अस्याः प्रविश्य वपुषि स्मरसिन्धुरेन्द्रो हृद्भूमिकम्पमिव मत्ततया व्यधत्त काचिद्विकस्वरपिकस्वरसारतोऽपि चारुस्वरा विधुमुखी स्वरभङ्गमाप । वीणास्वभावकलकोमलनिक्वणापि स्निग्धा घनाम्बुभिरपस्वरमेव धत्ते ॥ ७८ ॥

वेणीं विमुच्य कुटिलां निजबाहुमूले काचित्कुरङ्गनयना भुजगीभ्रमेण । विन्नासविक्षुभितनेत्रगरालितभ्रू क्षिप्त्वोत्तरीयसहितामपसर्पमीये ॥ ७९ ॥

अभिमुखमवलोक्य कापि भृङ्गं करकमलेन सलीलमुद्धुनाना । सललितमवगुण्ठनाञ्चलेन व्यधित वधूरधरोष्ठसंपिधानम् ॥ ८० ॥

काचिन्नोपससार नान्तरमुदं व्यानञ्ज कञ्जेक्षणा नोचे किंचन किंतु कान्तवदनं दृष्ट्वा शिरो धुन्वती । लीलाकूणितकोणशोणनयनं हेलाभ्रमद्भ्रूलतं सीमन्तोपरि व-

कृष्णं विलोकयसीति अयमर्थः कर्णेन्द्रियादिद्वारा कृष्णमनुभवतोऽपि मम न तादृशं सुखं यथा त्वद्द्वारेति त्वमेव धन्यमसीत्युक्त्वा प्रेम्णा द्रुतेन प्रेमहेतुकद्रवयता मनसा कर्त्रा तत् नयनयुग्मकं आलिलिङ्गे इव अत एव तद्द्रव एव नयनयुग्मान्निःसृतोऽयमित्युत्प्रेक्षा व्यञ्जितेति । तदानीं नयनतादात्म्यं मनसा प्राप्तमिति पर्य्यवसितो भावः ॥ ७४ ॥

व्यधत्त कृतवान् । ललामं तिलकम् । भारगरिमैवेति अत एवास्याः स्पन्दनसामर्थ्यं नास्तीवेति ॥ ७५ ॥

विपुलैः पुलकैः कदम्बशाखा तद्रूपेव बभूव । विरहे कृष्णविच्छेदकाले ॥ ७६ ॥

स्यन्दते स्म सुस्राव ॥ ७७ ॥

विकस्वरो यः पिकानां स्वरसारस्ततोऽपि । घनाम्बुभिरिति दार्ष्टान्तिकपक्षे कृष्णदर्शनामृतैः ७८

उत्तरीयसहितामेव वेणीं क्षिप्त्वा अपसर्पं पलायनमीये प्राप स्वीचकार इत्यर्थः । निजस्कन्धे कृष्णबाहुस्पर्शाभियोगोऽयम् ॥ ७९ ॥

अधरोष्ठसंपिधानमिति कृष्णकर्तृकस्वाधरपानाभियोगः ॥ ८० ॥

शिरो धुन्वतीति भद्रेण मया त्वं ज्ञातोऽसीतिभावः । कूणितकोणेति तादृशकष्टदातरि त्वयि दृष्टिमापातु मद्दृष्टे इति भावः । शोणेति तदपि मां पुनरपि दुःखयितुमधुना किमिति

द्धपाणिपुटकं सासूयमेवानमत् ॥ ८१ ॥

काचित्कृष्णमुखं सकृत् कुटिलितापाङ्गेन हेलालसं दृष्ट्वा वामभुजालतां सहचरीस्कन्धान्तिके बिभ्रती। आमन्दस्मितमुत्सवालसलसद्भ्रूभङ्गमल्पाक्षरं जल्पन्ती प्रतिपाद्य शून्यमपि तद्वन्द्वर्थमेवामनत् ॥ ८२ ॥

स्वीयोत्तरीयशकलेन सलीलमन्या पाण्यम्बुजेन कलकङ्कणझङ्कृतेन। माणेश्वरं प्रगयतः परिवीजयन्तीस्रस्तेऽपि तत्र करधूननमेव चक्रे। श्रान्तं मुहुर्वनरुहोदरसोदरेण हा हन्तपाकयुगलेन कथं ह्यनेन। इत्येकिका स्वकरपङ्कजकोरकाभ्यां संवाहनं व्यधित पादयुगस्य शौरेः ॥ ८३ ॥

एवं सहजमपुष्छसदलावलावण्यसुधासरसीसरसिभवदचयवानामपि तत्कालोदयितदयितविलोकनकनदेवंविधांवविधावशिष्टप्रभावभावशवलवलमानमाननीयमाधुरीधुरीणतया तदा यदविरामरामणीयकमासामासासास ॥ ८४ ॥

तदनुवदितुं का वाणी वाणीयसी मन्दधिषणो धिषणो वा को वराकः ॥ ८५ ॥

ततश्च ततश्चरमरमणीयतापरिपाकेन केनचिन्मधुरिम्णा व्रजराजतनयो राजतनयोपपन्नेन मधुरिम्णा परस्परविसदृशाभ्यां हिमकिरणकिरणकन्दलीमृदुलमेदुरदुरवसेयसिकतानिचयाभ्यां लोचनलोभनीयमुपर्युपरि परिमललालसालसालिकुलकोलाहलकाहलकान्तध्वनिध्वनितं कुवलयवलयहल्लकहल्लीशकाशित्वादक्षेण

संनिधत्से इति शेषः। हेलेति तेन किं मम यदहमतः परं विज्ञा अभवमित्यवज्ञा। सासूयमेवानमदिति अतः परं त्वत्समीपमपि मया त्यक्तमेवेति भावः ॥८१॥

स्कन्धान्तिके नतु स्कन्धोपरि इति कृष्णेन तर्कयिष्यमाणस्वाभियोगशङ्कयेति भावः। कुटिलितापाङ्गेनेत्यमर्षः। हेलालसमितिगर्वः मन्दस्मितमितिहर्षः। उत्सवेति औत्सुक्यम्। अल्पाक्षरं जल्पन्तीति सखिअखण्डश्रीखण्डालम्बिनी नीलोत्पलमाला स्पृहणीया भवादृशीभिरिति। वन्हर्थं वाच्यव्यङ्ग्यवस्तुबाहुल्ययुक्तम्। आमनत् अभ्यस्तवती ॥८२॥

दासीनां चेष्टितमाह द्वाभ्यां स्वीयेति तत्र उत्तरीयशकले स्रस्ते सतीति भाववैवश्यादिति भावः ॥ ८३ ॥

तदेवमासां केचिदनुभावरूपाः स्तम्भकम्पादयः केचिन्नायकमनोमोहनार्थाः कर्णकण्डूयनगात्रमोटनादयः केचित्संभोगविशेषस्पृहासूचनार्था लीलाकमलाघ्राणवेणीपरिरम्भादयः सर्व एव भावाः सहजिकलावण्यमायाएवेत्युपसंहरति एवमिति। विशिष्टाःप्रभावाः कृष्णवशीकाररूपा येषां यद्वा विशिष्टां प्रभां भवन्तीति तथा तेषां भावानां शबलेन वैचित्र्या वलमाना च माननीया च या माधुरी तस्या धुरीणतया। आसमास आस्ते स्म दयायासश्चेत्याम् ८४

वाणी सरस्वती वा का अणीयसी अतिक्षुद्रेत्यर्थः। धिषणोबृहस्पतिः ॥ ८५ ॥

व्रजराजतनयस्तपनतनयापुलिनमासाद्य व्रजरमणीमणीभिः सह विरुरुचे इत्यन्वयः। ततो विस्तृतः। राजतस्य रजतविकारस्येव नयो नीतिः स्वभाव्यं तेनोपपन्नेन। हिमकिरणस्य चन्द्रस्य किरणकन्दली च मृदुलः कोमलो मेदुरो निबिडो दुरवसेयः छविबाहुल्येन दुःशकनिश्चयो यः सिकतानिचयस्ताभ्याम्। परिमललालसाभिर्लसतीति तस्यालिकुलस्य कोलाहल

दक्षिणमरुता चारुताचारं तपनतनयापुलिनमासाद्य पुरतरशोभावलिभावलिवलितो यामिनीनाथ इव ॥८६॥

प्रमदमदनमोदमसरसरसमानसमानसर्वस्वाभिः स्वाभिः शक्तिभिरिवानन्दमयी भिराभिराभिराम्यावधिभूताभिर्व्रजरमणीमणीभिर्विरुरुचे ॥८७॥

स्वकामितरमितरहस्यलाभासन्नतया श्रुतयो लब्धतदनुरूपरूपसम्पद्विशिष्टतनवो नवोदितभाग्यवशाद्यथा मनोरथसिद्धिमवापुस्तथा नित्यसिद्धा अपि तदा तदा लोकाह्लादविधुताधि स्वमहिमानमजानत्य इव स्वात्मानमभिमन्यन्ते स्म ॥८८॥

ततश्च तस्मिन्नेव पुलिनेऽलिनेतृपरिशीलितविविधोत्पलपलत्पलपलाशपेशलसमीरसमीरणशीतले विलसत्कामहेला महेलावितत्तयोवितततयोयुज्यमानकुचकुङ्कुमारुणसुगन्धिभिरुत्तरीयैरुपर्युपरि परिपातितैर्मृदुहसितसितदशनमरीचिवीचिविकाशपुरःसरमिहोपविश्यतामिति त्रिभुवनकमनीयासनमासनमाकल्पयामासुः॥८९ ॥

ततश्च । तत्र प्रीत्योपविश्य व्यजयत स यथा काममुद्दामधामा योगीन्द्राणां न तद्वद्विमलतममनः पुण्डरीकासनेऽपि । नापि त्रैलोक्यलक्ष्मीकृतललितमहारत्नसिंहासनान्तर्न्यप्येवाधारशक्तिप्रभृतिभूतमहायोगपीठोदरेऽपि ॥ ९० ॥

किंच। तस्मिन् कान्ताकदम्बस्तनकलशलसत्कुङ्कुमामोदमुग्धस्निग्धेदुग्धेन्दुकुन्दद्युति पुलिनगते चारुचेलासने सः। आसीनः पीनवक्षास्त्रिभुवनरमणीरत्नसंमोहलीलाराज्ये त्रैलोक्यलक्ष्म्या गमित इव बभौ यौवराज्याभिषेकम् ॥ ९१ ॥

अथ तथोपविष्टवति भगवति भगणपरिवृते चन्द्रमसीव मसीवदासितपयसो यमुनायाः पुलिनपरिसरे परितः परितस्थुषीषु रमणीमणीषु काश्चन सरसचातुरीतुरीयदशाकुशलाः सुरसतरमृदुलमेदुरदरवगाहमनोरागखेदस्वेदसलिलकणमञ्जुलेन करकमलदलेन कृतकरचरणसंवाहनाः सादरदरमदरमदरज्यमानमानसं मृदु-

एव काहलस्य वाद्यभेदस्य कान्तो ध्वनिस्तेन ध्वनितम् । हल्लीशकं मण्डलनृत्यम् । चारुतामाचरतीति तथा तत् । भावलिवलितो नक्षत्रश्रेण्या विराजितः ॥८६॥

प्रकृष्टो नवयौवनोत्थो मदश्च मदनश्च मोदप्रसरश्च तैः सरसं मानसं यासां ताश्च मान एव सर्वस्वं यासां ताश्च तथा ताभिः ॥८७॥

नित्यसिद्धाः श्रीराधायाः तन्नित्यसङ्गित्वमपि तासां कदाचित् स्वानुभवासाधितमस्तीति भावः ॥ ८८ ॥

अलय एव नेतारो नायकास्तैः परिशीलितानां विविधोत्पलानां पलत् पलानि चलदंशानि पलाशानि पत्राणि यतस्तथाभूतो यः पेशलः समीरस्तस्य सम्यगीरणेन शीतले । त्रिभुवनकमनीयं असनं दीप्तिर्यस्य तत् ॥८९॥

आधारशक्तिप्रभृतिभिः शेषकमठाद्यैः भूतम् भृतम् ॥९०॥ गमितः प्रापितः ॥९१॥

मनोरागहेतुको यः खेदस्तत एवस्वेदसलिलम् । सादरदरं सगौरवं सभयं च अदरमदेन

मधुरेण वचसा च साकूतेन हृद्गतं किमपि पिपृच्छिषवः प्रथमं प्रथमक्षसा प्रासङ्गिकत्वेन प्रश्नोत्तरसमादिवचनरचनाविशेषं निर्मिमते स्म ॥ ९२ ॥

तत्र प्रश्नोत्तरसमं यथा प्रश्नः सीमन्तिनीनां उत्तरं कृष्णस्येति प्रथमः क्रमः । कोऽमलधीः कोमलधीः का महिता हन्त कामहिता । कोऽपचयः कोपचयो मधुरा का पश्य मधुराका ॥ ९३ ॥

किंच। के वलभाजः के वलभाजः के सन्त एव के सन्तः । कासाररसविलासा विलसति कासाररसविलासैव ॥ ९४ ॥

एवं कृष्णस्य प्रश्ने उत्तरं तासां यथा । क उपास्यो यो रसवान् कः सरसो यः पदं प्रेम्णः । किं प्रेमयद्वियोगं कः स वियोगो न येन जीवन्ति ॥ ९५ ॥

किं दुःखं प्रियविरहः किं प्रियमतिदुर्लभं यदिह । किं दुर्लभं प्रकारैरखिलैरपि लभ्यते नहि यत् ॥ ९६ ॥

एवमितरेतरतरतमभावेन शब्दार्थवैचित्र्येण प्रश्नोत्तरचातुरीतुरीभिः क्षेपेणवि-

अनल्पमत्ततया रज्यमानमाक्रम्यमाणं मानसमेव यत्र तद्यथा स्यादेवम् । मृदुमधुरेणेति अवहित्थया कृत्रिमहर्षप्रकाशनम् ॥९२॥

अमलधीः कः महिता श्रेष्ठा का अपचयः कः मधुरा माधुर्यवती का इति तासां प्रश्नचतुष्टये तथैव प्रत्युक्तवति श्रीकृष्णे हहो भवानेव कठोरधीः वयं तु कामे हिता भवाम एव कोपसमूहोऽपि न पारयेऽहं चलितुमित्युक्तिमात्र एव भवता कृतः वसन्तराकातोऽप्यतिमधुरा अद्यतनी शारदी राका दुःखदानेन विरसीकृतैवेति स्ववचनेनैव बद्धो भवानिति तासां कटाक्षकूणनं ज्ञेयम् ॥९३॥

वलभाजो वलवन्तः के इति प्रश्ने के वलभाजः के वलं ये भजन्ति ते इति उत्तरे तथाभूता गोप्य एव इत्यायाताम् । सन्तः पण्डिताः के इतिप्रश्ने के सुखे संतः वर्त्तमानाः केनाप्युद्वेजयितुमशक्या इत्युत्तरे गोप्यो वयं मुग्धास्त्वयोद्वेजिता भवेमेत्यपण्डिता इति स्वाभिमतम्। सारे रसे विलासो यस्याः सा केति प्रश्ने कासारस्य तडागस्य रसे जले विलासो यस्याः सा पद्मिनीत्युत्तरे गोप्यः पद्मिनीजातय एवेति स्वेषामेव पूर्ववज्जय इति ॥९४॥

पदं आश्रयः । न येन जीवन्तीत्यस्मद्वियोगेऽपि तव दुःखलेशाभावलिङ्गेन प्रेमशून्यत्वप्रसक्तया त्वत् प्रश्नेनैव तवारसवत्त्वं स्फुटीकृतमिति तासां तस्मिन् पूर्ववद्भ्रिनिकोचः ॥९५॥

अतिदुर्लभमिति स्पृहणीयमथ चातिदुर्लभमित्यर्थः लब्धुमशक्यमित्युक्तौस्पृहाया अन्तर्भावावगमात् ततश्च द्वीपान्तरस्थतृणशर्करादिवस्तुनि नातिप्र्याणिः ततश्च सर्वप्रकारैर्दुर्लभस्य कृष्णस्य वियोगेनैव ता दुःखिन्य एव गोप्य इति भावः ॥ ९६ ॥

इतरेतरं परस्परं तारतम्येन या प्रश्नोत्तरचातुरी सैव तुरी माकु इति ख्याता । प्रथमे श्लोके कृष्णस्य दोषाः स्वेषां गुणाः द्वितीये स्वेषां गुणाः एव तृतीये कृष्णस्यानुपास्यत्वप्रसक्त्या

लसत्कपटं पटं वर्णमयमिव रचयित्वा पुनः प्रकृतमेव मनोगतमगतमंदा मनसीपत्कुपिता अति ता अतिसरसतरं वहिरवहितमनसो हि तमनसो भञ्जकमूचुः ॥९७॥

आकर्णय नो नयनोत्सव सन्दुवितर्कं किमपि । केचिद्भजन्ति भजतोऽभजतोऽपि हन्त केचिद्भजन्ति भजतोऽभजतोऽपिनैवकेचिद्भजन्ति तदिदं वद नो विविच्य पीताम्बर त्वमखिलस्य विदां वरोऽसि ॥ ९८ ॥

अथ रमणीमणीसभासभाजनभाजननचमत्कारकार एष व्रजपुरपुरन्दरनन्दनस्तमिमं प्रियतमायतमानपिशुनं प्रश्नमात्मनिष्ठप्रणयासूयासूयातयाम विदित्वा मधुमधुरतरंतरङ्गिणा नयनकमलाञ्चलेन निरीक्षमाणो मृदुहसितामृतमृतसंजीवनरसविशेषेण सरसयन्नुवाच ॥ ९९ ॥

प्रियाः मतिभजन्ति ये भजत एव तेषामहो ऋणस्य परिशोधनप्रतिममेव तत्केवलम् । भजन्त्यभजतोऽपि ये सहजजन्तुमात्रस्निहो भवन्ति पितराविव स्वतनयेषु ते वत्सलाः ॥१००॥

एवं प्रश्नद्वयस्योत्तरं दत्त्वा तृतीयप्रश्नस्य समुचितमुत्तरं मुत्तरङ्गभङ्ग्याह । भजन्ति भजतो न ये त्वभजतः कथं ते भजन्त्वहो वत भवन्ति ते भुवि चतुर्विधाः सुभ्रुवः । परात्मनि लसद्धियोनिजसुखेन पूर्णान्तराः कृतोपकृतिविद्रुहः सुकठिनाः कृतघ्ना अपि ॥१०१॥

एवमुत्तमत्वेन द्वौ अधमत्वेन द्वावित्युक्ते सस्मितकूणितापाङ्गपाङ्गव्यचटुलमितरे-

दोषाधिक्यमेव चतुर्थे तु तस्य दु.खदत्वेन तदतीव व्यञ्जितमिति तारतम्यं तेन यत्र प्रथमयोः शब्दवैचित्र्यं चरमयोरर्थवैचित्र्यं तेन विलसत् प्रकाशमानमेव यत्कपटं तदेव वर्णमयं पट वस्त्रं रचयित्वा । अवहितमनसः सावधानाः । हि एवार्थे । तं श्रीकृष्ण अनसः शकटस्य भञ्जकम् ॥ ९७ ॥

केचित् भजतो भजन्ति न त्वभजत इत्यर्थः । तदन्ये केचित् अभजतोऽपि भजन्ति किं पुनः भजत इत्यर्थः । तदन्ये केचित् भजतोऽपि नैव भजन्ति अभजतोऽपि नैव । इति त्रिविधा जनास्ते के इति प्रश्नः ॥९८॥

भा कान्तितस्या जननेन चमत्कारकारः । प्रियतमानां आयतस्य मानस्य पिशुनं सूचकम् । आत्मनिष्ठेन प्रणयेन असूयायाः सूरुद्भवस्तया यातयामं विरसं कठोरमित्यर्थः ।९९।

भजतो जनान् । तत् प्रतिभजनम् ॥ १०० ॥

परात्मनीत्यात्मारामाः । निजसुखेनेत्याप्तकामाः । कृता उपकृतिर्येन तस्मै द्रुह्यन्ति न भजन्ति प्रत्युत पीडयन्तीत्यर्थः अत एव सुकठिनाः इत्यस्यैव विशेषणं कृतघ्नाः कृतमुपकारं घ्नन्ति न मन्यन्त इत्यर्थः ॥१०१॥

एवमुत्तमत्वेनेति । चतुर्थेनीप ...

कूणितो योऽपाङ्गस्तस्य पाङ्गव्ये ... गुणाममुखगमनाशक्तिमध्या चटुलं चञ्चलं यथा स्यादेवं परस्परमेवालोकयन्तीर्दयिताः प्रेयसीरालोक्य । अयं भावः । अस्य कृतघ्न-

तर मालोकयन्तीरालोक्य दयिता दयिताक्षरं पुनरुवाच ॥ १०२ ॥

किमहो महोन्नतधियः सुहृदा हृदा परस्परं परं तर्कमीहध्वे प्रश्नत्रयेणापि वो नाहमपराध्यामि तथाहि। भवतीर्न भजामि यद्भजन्ती रभजन्तीर्भवतीश्च नो भजामि। अत एव गतं भवद्विधानामहह प्रश्नयुगं चमूरुनेत्राः ॥ १०३ ॥

तृतीयप्रश्नेऽपि यच्चातुर्विध्यं तत्राप्यहमतिचत्वा एव। यतोऽहं नात्मारामो यद्भवतीनां करुणालापेनाकृष्टोऽस्मि नापि निजसुखेनैव पूर्णः पूर्वोक्तयुक्तेरेव नापि कृतोपकारधुक् कठिनस्तेनैव हेतुना नापि कृतघ्नः तस्यैव हेतोः तर्हि कथमेवं भजन्तीरस्मान्न भजसीति चेदुच्यते तदाकर्णयन्तु निर्णयन्तु निर्भरमस्मदुदितम् १०४

अहमनुभजतो भजामि नो यत् तदिह तदुत्कलिकाविवृद्धिहेतोः। उपनतधनहानितो यथायं भजति जनस्तदनुस्मृतौ नियमः ॥ १०५ ॥

इत्युक्तेपि विम्लानकमला कमलाकरलक्ष्मीपरिषदिव दिवसनाथसमक्षं विमसन्नवदना वदनालक्षितहृदयमालिन्यावनमालिन्या बद्धनयननलिनदामा यदि समजनि वधूराजी राजीवनयनोऽपि स तदा पुनरूचे ॥ १०६ ॥

इदं यदुदितं तत्सामान्याश्रयं मान्याश्रयं तु नैतत्। यतः। न परममहतः परास्ति वृद्धिर्न भगवतः परतः परात् परोऽस्ति। नहि भवति रतेरितोऽतिभूमिश्वरमदृशा न दशान्तरं प्रयाति ॥ १०७ ॥

किंच। अयमवधिमियाय वोऽनुरागःक्रमपरमेतु मृगेक्षणाः प्रकर्षम्। उपरि परिचितः सितोपलाया भवति नहीक्षुरसस्य कोऽपि पाकः ॥१०८॥

किंच। स्थितमनुभजतैव वः समीपे नयनपथान्तरितेन मादृशेन। अथ किमपरथा यियासवो वः परमसवो न निवारिता बभूवुः ॥१०९॥

स्वापादनार्थमस्माभिर्गूढमन्यतया पृष्टोऽयं ततोऽप्यधिकं स्वान्तर्धानेनास्मद्द्रोहाचरणात् भजज्जनविद्रोहित्वं स्वमुखेनैवाङ्गीकुरुते स्म अतः स्वजयेन हर्षबोधकं स्मितं हन्त स्वीकृतनिजागसि प्रेष्ठे किमिति मन्युः कृत इति लज्जया अपाङ्गस्य कूणनं अतोऽस्मिन् संप्रति प्रसाद एवोचितः तमकृतवतीनां लज्जयैव अपाङ्गस्य तस्मिन् पङ्गुता ॥ १०२ ॥

प्रश्नयुगं गतं मयि न फलितमित्यर्थः तेन नाहं स्वार्थपरो नापि लौकिककृपालुरिति व्यञ्जितम् १०३

अतिचत्वाः चतुर एवैतानतिक्रम्य वर्तमान इत्यर्थः। पूर्वोक्तयुक्तेरिति करुणालापेनाकृष्टोस्मीत्यतः। एवं सर्वत्र। अस्मदुदितं मद्वाक्यम्। निर्णयन्तु निःशेषेण नयन्तु भवत्यः ॥१०४

अनुभजतो अनुवृत्या भजतो जनान् ॥ १०५ ॥

दिवसनाथसमक्षमिति नहि दिवसनाथः कमलानि म्लापयितुमर्हतीति भावः ॥ १०६ ॥

मान्याः आदरणीयाः श्रेष्ठाः भवद्विधा इत्यर्थः। तदाश्रयंतु न। अतिभूमिरुत्कर्षः१०७

अवधिं महाभावपर्यन्तम् ॥ १०८ ॥

नयनपथान्तरितेन युष्मन्नेत्रपथमात्रव्यवहितेन युष्मांस्तु स्पष्टमवलोकयतैव सतेत्यर्थः। एतत् सद्वाक्यं स्वानुभवेनापि प्रमाणीकर्तुमर्हथेत्याह अथ किमिति ॥ १०९ ॥

तदपि यदतिसाहसं मयैतत् ।
कृतमिह तत् सुदृशो मम क्षमध्वम् ॥
क्वचन च समये ह्यसेवमानं ।
न घनमसूयति विद्युतां समाजः ॥ ११०

किंच । दयितरचितमुच्चैः प्रातिकूल्यं च काले ।
जनयति दयितानामानुकूल्यप्रकारम् ॥
अतिमुदमभितापो मर्ममर्मप्रसक्तां ।
रचयति नलिनीनां घर्मजो घर्मभासः ॥ १११ ॥

किंतु । अयि मयि भवतीभिर्यः क्षणेनानुरागः ।
समतनि न मयासौ हन्त देयाद्युपापि ॥
प्रतिविधिमुपनेतुं शक्यते तेन यूयं ।
स्वयमुपकृतभावं स्वैर्गुणैः संप्रयात ॥ ११२ ॥

इत्यानन्दवृन्दावने कैशोरलीलालताविस्तारे रासलीलायां प्रादुर्भावभावुको नामोनविंशः स्तवकः ॥१९॥

न घनं न मेघम् परम्परितश्लेषेण न निविडं नातिशयमित्यर्थं अतः संप्रत्यपि प्रसीदतेति भावः ॥ ११० ॥

घर्मभासः सूर्यस्य घर्मजोऽभितापो मर्माणि मर्माणि प्रसक्तामतिमुदं रचयति ॥ १११ ॥

उक्तलक्षणं सर्वमिदं वाक्चातुर्यमात्रं मया स्वपराजयापन्हवायैवोपनीतम् परमार्थं तु शृणुतेति सगद्गदमाह किं त्विति । असौ अनुरागः प्रतिविधिम् उपनेतु प्रापयितुं न शक्यते, तत्प्रतिरूपे मम नास्त्येवानुराग इति भावः उपकृतभावम्। उपकृतत्वम् उपकारमित्यर्थः । संप्रयात प्राप्नुत, अनेनोपकृतामिति स्वयमेवाङ्गीकुरुतेत्यर्थः ॥११२॥

इत्यानन्दवृन्दावनटीकाया सुखवर्तिन्यामेकोनविंशस्तवकसंगमनम् ॥१९॥

---

## विंशः स्तवकः

अथ प्राणप्रिया प्राणप्रियाननचन्द्रगलितेन ललितेन लपितसुधारसेन निर्वापितहृदयतापानला पानलालित्यमन्तरेणापि मत्तेव यदि समुज्जृम्भमाणमधुरिमगिरमणिरत्नसभा सभाजिता सती विजयते स्म ॥ १ ॥

जयते स्मरकोटिलावण्यं दयितस्य तस्य नयनोत्सवपुषे वपुषे स्पृहावती च बभूव भूवलयस्य सौभाग्यवती तदनन्तरम् ॥ २ ॥

तराङ्गितकौतुकेन केनचिदपि क्वचन च न चमत्कारकारिणापि नटेनाविष्कृतं शुभरतेन भरतेन मुनिना निनायितं हल्लीशकतयैव यत् तदेव तदा तालबन्धमण्डलभेदेन स्वयमेव रासत्वेन सृज्यमानमानन्दकन्दकमनाविलासलास्यविशेषं विधित्सुनाधित्सुना च तासां मनसि चमत्कारं कमपि निजगदे जगदेकविस्मापकेन तेन रमणीयमणीयशः पताकानिकर इव दयितासमाजः ॥ ३ ॥

शृणु तावदयि दयितामण्डल मण्डलतया स्थीयतामास्थीयतामानन्दकारिणि मदुदिते ॥ ४ ॥

इदमतिप्रकृष्टकृष्टमदीकृतघनसारसारकेदारसदृशमतिविसारितरंहसातिरंहसा रामणीयकेन यमुनयानया नयादिव प्रकाशितं निरङ्कुशकुशलमगं स्वहृदयमिव पुलिनमवलोक्य मण्डलीभूय भूयसीषु भवतीषु स्थितवतीषु स्थितमस्य विलोकयितुं युज्यते भवतीनां परिमण्डलोऽत्र भाति न वेति ॥ ५ ॥

---

हल्लीशकभ्रमणहस्तकतालरागवाद्यस्वरोद्घटननर्त्तनतद्विरामम् । सम्भ्रमः पुनर्नटनरत्यमलाम्बुखेला माध्वीकपानशयनं विवृतानि विंशे । अथ यदि रमणिरत्नसभा लपितसुधारसेन सभाजिता सती विजयते स्म तदनन्तरं तस्य वपुषे स्पृहावती च बभूव तदा तेन कान्तेन स दयितासमाजः किमपि निजगदे इत्यन्वयः । प्राणेभ्योऽपि प्रियस्य श्रीकृष्णस्याननचन्द्रगलितेन । प्राणप्रिया कृष्णप्राणतुल्या ॥ १ ॥

जयते तिरस्कुर्वते ॥ २ ॥

केनचिदपि नटेन यत् नाविष्कृतं अशक्तेरिति भावः । न चाभूतचरत्वेन निर्मूलत्वाऽप्रमाण्यं शङ्कनीयमित्याह शुभरतेनेति । निनायितं नितरामभिनायितम् । हल्लीशकतयेति यदुक्तं " बहुस्त्रीकर्तृकं नृत्यं हल्लीशकमिति स्मृत " मिति । न आविलस्य दोषस्य आसः स्थितिर्यत्र स चासौ लास्यविशेषश्चेति तम् । रमणीयानां मणीनां माल्यावयवानां यानि यशांसि श्लाघास्तेषां पताकानिकर इव कनकमणिमालातुल्याकार इत्यर्थः ॥ ३ ॥

आस्थीयतां विश्वस्यताम् ॥ ४ ॥

अतिप्रकृष्टं यथा स्यात् तथा कृष्टः कर्षणेन दूरीकृतो मदः काठिन्यभागो यस्य तथाभूतीकृतं घनसारसारं श्रेष्ठकर्पूरमयं यत् केदारं क्षेत्रं तत्सदृशम् । सारितं विस्तारितं रंहो येन ...ऽपेन रामणीयकेन ॥ ५ ॥

तत ऊचिरेऽचिरेणैव ताः प्रभाप्रभावजितकुवलयवलयसदृशावस्थानेन स्थानेन भवति भवद्दूरवर्त्तित्वमस्माकं स्माकम्पते हृदयं नापरं दूरीभवितुमुत्सहामहे सहामहे नापरं दुःखमिति ॥ ६ ॥

स पुनरुवाच पश्यत मे शिक्षाकौशलं कौशलन्तु के तत् यदहमन्तरा वर्त्तमानोऽपि सरसखेलाविभ्रमभ्रमणलाघवेन सर्वासामेव वो जनं जनं रञ्जयन् प्रकटमेव सदा निकटवर्त्ती भवामीति तथा गदितेन दितेन सन्देहेन तदद्भुतावलोकनकनत्कौतुकया चक्रुष्णमभितोऽभितोषेण परस्परकरकमलदलकलितबन्धानुबन्धानुक्रमेण क्रमेण-मण्डलीभावभावनयापसर्पन्तीनां तनुभिः संभूय भूयस्तया पुलिनमेव विसारितरं तरङ्गपटलीभिरिव चन्द्रिकाम्भोनिधेरानशे ॥ ७ ॥

ततश्च तत्कृष्णमनोरथतरोर्महामूलस्य लस्यमानप्रणयसुधासेकसलिलनिर्गमानि वारि कनकालवालमिव ॥ ८ ॥

कृष्णमहापद्कलभवन्दीकरणाय विलासरससम्राजा वितानितं कनकवागुराव-लयमिव ॥ ९ ॥

कृष्णमनोमीनग्रहाग्रहाकुलेन कुसुमशरजालिकेन विस्तारितं कुचकोरकतुम्बी-फलफलितलालित्यं वलयाकृति काञ्चनजालमिव ॥ १० ॥

कृष्णदुर्गमताकारि वदनतुहिनकिरणबिम्बनिकरकनककुम्भ विशेषशोभमा-नं चपलवेणिदण्डतिमिरपताकाकुलाकुलायमानं कौमुदीदुर्गमिव ॥ ११ ॥

भूवलयविलासलक्ष्म्या विलासकनकमहाताटङ्कमण्डलमिव ॥ १२ ॥

मिहिरदुहितृपुलिनलक्ष्मी वक्षसो वलयाकारं चम्पकमाल्यमिव ॥ १३ ॥

---

स्मेति यमकार्थमनधिकार्थम् । हृदयं आकम्पते ॥ ६ ॥

शलन्तुप्राप्नुवन्तु । आनशे व्याप्तम् ॥ ७ ॥

लस्यकामनः काम्यमानः प्रणयः प्रेमैव सुधाभिषेकस्तत्सम्बन्धिसलिलानां निर्गमं निवार-यितुं शीलमस्येति । अनेन तासां तथाभूतानां कृष्णाभिलापपोषकनिश्चलप्रेमवत्त्वं व्यञ्जितम् ८

कृष्णमहामदकलभेति तदीयमावहेलादीनां चेष्टानामपि कृष्णवशीकारित्वम् ॥ ९ ॥

कृष्णमनोमीनेति तदीयाङ्गदत्तसाम्राज्यस्य कन्दर्पस्यापि कृष्णमनोव्याकुलीकारिविक्रमत्वम् । कुचकोरका एव तुम्बीफलानि जातिभेदेन वर्तुलाकाराणि तानि ज्ञेयानि अत एव कोरकैः प्रथ-मसुपमा ॥ १० ॥

कृष्णस्य दुर्गमता निःसरणासामर्थ्यमित्यर्थः । वदनान्येव चन्द्रबिम्बसमूहा उपरिभागे येषां तथाभूतैः कनककुम्भविशेषैः शोभमानम् । कौमुदीदुर्गमिवेति पूर्वोक्तयोर्वशीकरणोपमानयोर्वा-गुराजालयोर्वशीकार्य्यकष्टदापित्वरूपोदोषः प्रसक्त आसीदिति तद्वारणार्थमुत्प्रेक्षेऊर्ध्वीयम् ११

भूवलयेति ऊर्ध्वाधोवर्त्तिसमस्तलोकेभ्योऽपि भूर्लोकस्य तदानीं सौभाग्यं सूचितम् १२

मिहिरेति तत्रापि यमुनापुलिनप्रदेशस्य नितराम् ॥ १३ ॥

कृष्णरत्नसानुमभितः कनकमयमानसोत्तरगिरिवरवलयमिव ॥१४॥

सम्पूर्णमहसः कृष्णकलानिधेर्महापरिधिरिव ॥१५॥

रतिरसकलाकलापकुलालस्य लालस्यमाननटनघटघटनाचक्रमिव ॥१६॥

यमुनापुलिनकर्पूरकेदारतलतो निर्बीजमेव तत्समयसमुद्भिन्नं परस्परशाखाग्रसंश्लेषविशेषदर्शनीयं हिमकणगणगुणितशोभं वलयाकारं कनककल्पलतानिकुरम्बमिव ॥ १७ ॥

चित्रकाव्यमिव सदा सुकरसर्वतोभद्रं प्रतिलोमानुलोमपादक्रमं च एकाक्षरचरणं च सुललितभाषासमं च ॥ १८ ॥

शब्दालंकरणमिव सदाश्लेषं छेकवृत्त्यानुप्रासं पुनरुक्तवदाभासभासुरम् ।१९।

नयनमिव मध्यकृष्णं छन्द इव सदा विषमसमभावरमणीयभावं रमणीमण्डलमाभाति स्म ॥२०॥

---

तादृशाकारकान्तागणवेष्टितं नृत्योचितस्थानविमर्शार्थं क्षणं स्थिरतया तिष्ठन्तमुत्प्रेक्षते कृष्णरत्नसानुमिति । रत्नसानुः सुमेरुः ॥ १४ ॥

ततश्च विचारितस्थानं प्रति तथाभूततयैव मन्दं मन्दं गच्छन्तमुत्प्रेक्षते सम्पूर्णमहस इति १५

गत्वा च तत्र प्रथमं चक्रभ्रमिनाट्यमारममाणमुत्प्रेक्षते रतिरसेति ॥ १६ ॥

ततश्च नाट्यमानसमाप्तौ विश्रामार्थं क्षणं तथा भूततया तिष्ठन्तमुत्प्रेक्षते यमुनापुलिनेति हिमकणगणेति श्रमविन्दूनामुपमा ॥ १७ ॥

सर्वतोभद्रं तन्नामा संदर्भविशेषः पक्षे सुकरं सर्वत एव भद्रं सुखं यत्र तत् । प्रतिलोमानुलोमाभ्यां पादक्रमो यत्र तत् यत्र श्लोके तेषामेवाक्षराणां प्रतिलोमपाठेनैकश्चरणस्तेषामेवानुलोमपाठेनान्यश्चरण इत्यर्थः पक्षे कदाचित् प्रतिलोमेन कदाचिदनुलोमेन च नृत्यवशात् पादक्रमो यत्र तत्। एकैरेवाक्षरैश्चरणः पादो यत्र तत् पक्षे एकं तुल्यमेव अक्षरं स्खलनहीनं चलनं गतिर्यत्र तत् । सुललिताभ्यांभाषाभ्यां प्राकृतसंस्कृतमयीभ्यां समं तुल्यं पक्षे भाषा उक्तिप्रत्युक्तिमयवाणी तया समं शोभनं सर्वसाधुसमानेषु समं स्यादभिधेय वदिति मेदिनी १८

सदैव श्लेषः पक्षे सन्नाश्लेष आलिङ्गनं यत्र तत् । छेक इति वृत्तिरिति अनुप्रासो यत्र तत् यदुक्तं "वर्णसाम्यमनुप्रासश्छेकवृत्तिगतो द्विधे"ति पक्षे छेको विदग्धोवृत्तेः करचरणादिचालनव्यापारस्य अनुकूलः प्रासः प्रकृष्टविन्यासो यत्र तत। पुनरुक्तवदाभासनाम्ना अलङ्कारेण भासुरं दीप्तं पक्षे पुनरुक्तवदाभासते तथा तच्च भासुरं च तत् एकस्यापि तन्मण्डलस्य गतिलाघवेन द्वितयत्रितयवत्तदा भानमभूदित्यर्थः ॥ १९ ॥

विषमभावेनभिन्नचिन्हचतुष्पादत्वेन समभावेन तुल्यमात्राकचतुष्पादत्वेन च रमणीये भाव सत्ता यस्य तत् पक्षे गतिभेदेन मण्डलस्य कदाचिद्वैषम्यं कदाचित्साम्यं च इति ।२०।

तस्मिन्नेव समये देव्या योगमायया तत्तसमयोचितवेषभूषाभिर्यदलङ्कृतं तत्र तासां गोचर आसीदपितु कृष्णस्यातिमनोहरमभूदहो तस्याः कृष्णहृदयानुरञ्जकत्वं तत्र प्रथममेव रमणीमणीभावेनासामान्यतया मान्यतया च सर्वानुमत्या कृष्णेन सहैव मध्यमध्यवस्थिता वृषभानुपुत्री चित्रीभूता सतीव परितोषवती रमणीमण्डलीमालोकयाञ्चकार ॥ २१ ॥

तदनु सा मण्डली बहुविस्तारभियाभियातशङ्का परस्परसंसक्ततया कवितागतशिथिलवन्धदोषमिव दूरीचिकीर्षुर्गाढं बन्धमङ्गीकर्त्तुमितरेतरेषामंसविन्यस्तबाहुमूलं स्थितवती राजति स्म ॥ २२ ॥

तत्र मध्यमध्यवस्थितस्य तस्य रसिकशेखरस्य सारस्यदेन स्यदेन प्रवेशसमकालमेव मुक्तपरस्परांसतटयोर्द्वयोर्द्वयोर्मध्ये पुरः पश्चाद्भावेन प्रविश्य कण्ठतटं भुजवलयाभ्यामवगृह्य विभ्रमतो भ्रमतोऽलातचक्रमिव तद्भ्रमणं चित्रकाव्यमिव गोमूत्रिकाबन्धप्रायं प्रतिलोमानुलोमक्रमेण भवदद्दयङ्कर्त्तं तदासीत् २३ ॥

येन तं सकला एव कलावत्य एव स्वस्वनिकटस्थमेव मन्यन्ते स्म एव तस्य भ्रमणलाघवम् ॥ २४ ॥

तेन च । एकस्या दक्षिणांसे वरभुजवलयं वाममन्यं परस्या वामांसे न्यस्य गाढं युगपदभिमुखे द्वे समाश्लिष्य कान्ते । ताभ्यां दत्तमवेशस्त्वरितमनुगतः पृष्ठमेकां विमुञ्चन्नन्यां गृह्णन् पुरस्तात् स पुनरुपसरत्येवमेव क्रमेण ॥ २५ ॥

एवं प्रतिलोमानुलोमाभ्यां स्पष्टमेव गोमूत्रिकाबन्धमुपपादयता प्रत्येकमेव तासां पुरपश्चाद्भागपरिवर्त्तेण लाघवकौशलेन भ्रमता तासां तस्याश्च मध्यगताया मुख्यायाः परमकौतुकमाततान ॥ २६ ॥

---

रमणीषु मणीभावेन श्रेष्ठत्वेनेत्यर्थः ॥ २१ ॥

अंसे स्कन्धे विन्यस्तं बाहुमूलं यत्र तद्यथा स्यात्तथा ॥ २२ ॥

पुरः पश्चाद्भावेन प्रविश्येति मण्डलमध्यस्थां राधिकां परित्यज्यैवातिलाघवेन मण्डलस्थयोर्द्वयोर्द्वयोरेकं मध्यं तयोः पुरोभावेन प्रविश्य तत् पृष्ठतः परावृत्यान्य मध्यं पश्चाद्भावेन तयोः प्रविश्य तदनन्तरं च तदग्रतः परावृत्यं अपरंमध्यं पुनः पुरोभावेन प्रविश्य पुनरपि तत्पृष्ठतः परावृत्यापरं च मध्यं पश्चाद्भावेनेत्येवं सम्पूर्णमण्डलभ्रमणानन्तरं मण्डलमध्यस्थराधिकांसं वामभुजेनाश्लिष्य पुनर्मण्डलस्थालामुक्तन्यायेन मध्यमध्यप्रवेश इत्येवमग्रिमश्लोके स्पष्टं भावि विभ्रमतो विलासेनेत्यर्थः । गोमूत्रिकाबन्ध इति स यथा अक्षरपङ्क्तेः प्रत्यक्षरं प्रति मध्येन पुरः पश्चात् परिवर्त्तनेनरेखाविन्यासेन भवति तथेत्यर्थः ॥ २३ ॥

सकला एव कलावत्य एव निकटस्थमेवेति पूर्णमण्डलमध्ये तस्य राधासाहित्यदर्शनात् कचित् प्रसक्ताया ईर्ष्याया अभ्युपगमः सूचितः ॥ २४ ॥

पुनःपुरस्तात् उपसरतीति अग्रदेशो गत्वा विमुच्येति शेषः ॥२५॥

उक्तमेवार्थमनुकरोत्यन्योपनाद् एवमिति॥ २६ ॥

एतस्मिन्नेव समये सुखावलोकनाशया निकटमालम्बितं ज्योतिश्चक्रमिव विमानश्रेणिसंकुलमपि निर्विमानं लेखावलिवलितमपि निर्लेखं सदा सदारचारणाकिन्नरसिद्धसाध्यगन्धर्वविद्याधरप्रभृतिभृतनिरन्तरसमाजं विभ्रदम्बरतलं रराज ॥२७॥

ततश्च । चित्रकाव्यमिव ललितमुरजबन्धं पार्थिवशङ्करकदम्बमिव निर्दोषमृदङ्गं क्रयविक्रयशीलनमिव पणवाहितं बन्धुजनवपुरिव ललितालिङ्ग्यं नाटकमिव विलसदङ्क्यं मधुकुलमिव श्लाघ्यतमानकदुन्दुभि गगनमिव विततं घनाभ इव सुघनं सूचीमूलमिव सशुषिरं महारत्नमिव सदानद्धं देवताभिवाद्यं वाद्यं नदति स्म २८

नन्दनवनवनदेवताभिरेव ताभिरेवानवरतं वृष्यमाणानि समधुकराणि दिवः सानन्दहर्षनयनजलबिन्दुनिकुरम्बाणीव निपतन्ति स्म कुसुमानि यशो यशोदानन्दनस्य तस्य ललितकलस्वरं स्वराङ्गनाभिः सह सहर्षं गन्धर्वाश्च गायन्ति स्म। ततश्च । मुखरनूपुरकङ्कणकिङ्किणीकलकलः सुदृशां च हरेश्च सः । समकिरद्रसनारसनाशनः श्रवणयोरमृतान्यमृतान्धसाम् ॥ २९ ॥

ततश्च । तस्यैवं भ्रमतो जवेन सुदृशौ द्वे द्वे समालिङ्गतो मध्यं मध्यमनुप्रविश्य वपुषा तेनैव सा मण्डली । किं ज्योत्स्नातिमिरैः किमु स्थिरतडिन्मेघैरथो चम्पककश्यामाब्जैरुत काञ्चनेन्द्रमणिभिः क्लृप्तामजैषीत्स्रजम् ॥ ३० ॥

---

निःशेषेण विगतं मानं परिमाणं यत्र तत् लेखावलिर्देवश्रेणी निर्लेखा निर्गतो लेख इयत्ता यतस्तत् २७

मुरजबन्धो मुरजाकृतिघटितश्लोकाक्षरः पक्षे ललितो मुरजस्य बन्धो वाद्यप्रबन्धो यत्र तत् । निर्दोषाभिः शर्करातुषादिरहिताभिः मृद्भिरङ्गं यस्य तत् पक्षे स्पष्टम् । पणैर्मूल्यैर्वाहितं पक्षे पणवेन आहितम् । ललितं यथा स्यात्तथा आलिङ्ग्य आलिङ्गनार्हं पक्षे ललितआलिङ्ग्यो मृदङ्गभेदो यत्र तत्र । विलसतः शोभनानङ्कानर्हतीति तत् पक्षे अङ्क्योऽपि मृदङ्गभेदः यदुक्तं हरीतक्याकृतिस्त्वङ्क्यो यवमध्यस्तथोर्ध्वकः । गोपुच्छाकृतिरालिङ्ग्यो मध्यदक्षिणवामगाः ,, इति। आनकदुन्दुभिर्वसुदेवः पक्षे आनकदुन्दुभी वाद्यभेदौ । गगनमित्यादि स्पष्टम् पक्षे ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् वंश्यादिकं तु शुषिरं कांस्यतालादिकं घनमित्यमरः ॥ २८ ॥

अमृतान्धसां अमृतभोजिनां देवानां श्रवणयोः कर्णद्वये अमृतानि समकिरत् निचिक्षेप । रसनया जिह्वया यो रस आस्वादस्तं नाशयतीति सः अतः परं न ते अरोचकं अमृताहाराद्विभ्यन्तीति भावः ॥ २९ ॥

तेनैव एकेनैव वपुषा सा मण्डली ज्योत्स्नातिमिरादिभिः क्लृप्तामपि स्रजं अजैषीत् । ज्योत्स्नातिमिरयोः कान्तितारतम्यं परस्परवैरं चेति अतस्तडिन्मेघयोः कान्तिनैमित्त्येन परस्परसङ्गेन चोत्कर्षः किन्तु तडिता मेघकान्त्याच्छादनरूपो दोष इति चम्पकश्यामाब्जाभ्यामुपमा पुनरपि निविडालिङ्गनसङ्गमाभावपर्यं काञ्चनेन्द्रमणिभ्यामिति ॥३०॥

होमधूमावलीमिव सत्रिपताकाम् ॥ ३६ ॥
मृणालवल्लीमिव हंसास्यलुलिताम् ॥ ३७ ॥
द्वितीयाचन्द्रलेखामिव कर्त्तरीमुखशोभाम् ॥ ३८ ॥
पलाशकुसुमश्रेणिमिव शुकतुण्डाभाम् ॥ ३९ ॥
तप्तसुवर्णादिसूत्रावलिमिव संदंशाकृष्टाम् ॥ ४० ॥
हरमूर्त्तिमिव विलसत् खटकामुखाम् ॥ ४१ ॥
मधुकरश्रेणीमिव पद्मकोशोत्कण्ठिताम् ॥ ४२ ॥
अहितुण्डिकव्यवसितिमिव खेल्यमानाहितुण्डाम् ॥ ४३ ॥
सीवनशिल्पकलामिव सदोपयुक्तसूचीमुखाम् ॥ ४४ ॥
मार्गशीर्षपूर्णिमामिव मृगशीर्षयुक्ताम् ॥ ४५ ॥
अष्टमीतिथिमिव विलसदर्धचन्द्राम् ॥ ४६ ॥
किंबहुना कार्त्तवीर्य्यमूर्त्तिमिव विशुद्धसहस्रहस्तां हस्ताध्यायदेवतामनुगृह्य

सत्रिपताकां सत्रिणां याज्ञिकानां पताकातुल्यां पक्षे त्रिपताकेन सहितां त्रिपताकः पताकस्तु वक्रितानामिकाङ्गुले रिति ॥३६॥

हंसास्येन लुलिता मर्दितां मृदुलीकृतां च "तर्जनीमध्यमाङ्गुष्ठामिलिताग्राः परे पुनः। अङ्गुलीविरले चोर्ध्वेहंसास्यो हस्तकस्तु सः" इति ॥३७॥

कर्त्तर्य्यां मुखस्य शोभेव शोभा यस्यास्तां पक्षे कर्त्तरीमुखनामाहस्तकः "तर्जनीमध्यमे भिन्ने वक्रितानामिका पुनः। पताकस्य यदा स स्यात् कर्त्तरीमुखहस्तकः" इति ॥३८॥

पलाशेति स्पष्ट "तर्जन्यनामिकाङ्गुष्ठा वक्रा मध्या प्रसारिता। पताकस्य यदा तु स्याच्छुकतुण्डकहस्तकः" इति॥३९॥

संदंशः सांडाशीति ख्याता पक्षे हस्तकभेदः तर्जन्यङ्गुष्ठकौचैव मिलिताग्रावकुञ्चितौ। विरलोर्ध्वाः पराङ्गुल्यः संदंशः स तु कथ्यते ॥ ४० ॥

खटका वाद्यभेदः पक्षे खटकामुखो हस्तकः वक्रिते मध्यमाङ्गुल्यौ विरलोर्ध्वेपरे पुनः। तर्जन्यङ्गुष्ठकौ चाग्रे मिलितौ खटकामुखः,,इति ॥ ४१ ॥

मधुकरेति स्पष्टं धनुर्लताग्रमिलिताङ्गुलीकः पद्मकोशकः ,, इति ॥ ४२ ॥

आहितुण्डिको व्यालग्राही, "पताको निम्नमध्यो यः स तु स्यादाहितुण्डिकः" इति ४३

सीवनेतिस्पष्टं अङ्गुष्ठमध्यमे संयुक्ताग्रे चोर्ध्वाथ तर्जनी। कनिष्ठानामिके चोर्ध्वे सूचीमुख इति स्मृतः। ,, इति ॥ ४४ ॥

मार्गेति स्पष्टं नामिकामध्या मिलिताग्राः परेऽङ्गुली। ऊर्ध्वे यत्र पुनः स्यातां मृगशीर्षः स हस्तकः ॥ ४५ ॥

अष्टमीति स्पष्ट "पताकाङ्गुष्ठकश्चेत्तु स्यादाकृष्टोऽन्यतः पुनः। अर्धचन्द्र इति प्रोक्तो भरतादिमुनीश्वरैः" इत्यर्द्धचन्द्रलक्षणम् ॥ ४६ ॥

तदनुगामिनी प्रबन्धध्रुवगानदेवतामितिसंबन्धः। तदितरैर्महातालेतरैः क्षुद्रतालैरित्यर्थः।

तदनुगामिनीं चच्चत्पुटचाचपुटहंसलीलगजलीलसिंहनन्दनादिमहातालैरादितालैकतालीरूपकप्रतिमण्ठनिसारुयतित्रिपुटाड्डुकप्रभृतिभिरपरैश्च तदितरैः ॥ ४७ ॥

हरिविलासस्वरार्थादिस्वरपाठविरुदादिवलितनानाप्रबन्धध्रुवगानदेवतां द्रविडतैलङ्गपाश्चात्यादिदेशीयगानदेवतां च ॥ ४८ ॥

मालवमल्लारभैरवकेदारसारङ्गनटकर्णाटकामोदसामदेशागगान्धारवङ्गालवसन्तादिरागनिकरगुर्ज्जरीवहुलगुर्ज्जरीवाराटीदेशिकाभैरवीवेलावलीरामकिरीधन्नासिकाश्रीपालीगौरीतोडीगौण्डगिरीकल्याणिकापौरवीसैन्धवीशोभनवत्याशा-

चच्चत्पुटचाचपुटौ मार्गतालौ। हंसलीलगजलीलसिंहनन्दनाख्यो देशीतालाः। आदिशब्दात् पट्टितापुत्रकसंपक्वेष्टकोद्दट्टाख्ययोऽन्ये मार्गतालाश्च ज्ञेयाः । आदितालादयोऽष्टौ अल्पमात्राका देशीतालाः । एतेषां लक्षणानि "गुरुद्वयं लघुश्चैकः प्लुतश्चच्चतपुटो मतः" "गुरुरेको लघू मध्ये गुरुश्चाचपुटो मतः" हंसलीले विरामान्तं लघुद्वयमुदाहृतम्" "चत्वारो लघवोयत्र गजलीलः स उच्यते" "गुरुद्वयं लघुश्चैकः प्लुतो लश्च गुरुस्तथा। द्रुतौ गुरू लप्लुतौ चलप्लुतौ गुरुरेककः । लघू पुनश्च चत्वारो निःशब्दा लघवो यदा । तदा तालोऽयमाख्यातः सिंहनन्दनसंज्ञकः लघुनैकेनादिताल इति। एको द्रुतश्चैकतालीति द्रुतौ लौ रूपकः स्मृत इति लघुर्गुरुर्लघुश्चैकः प्रतिमण्ठः प्रकीर्त्तित इति। लघुद्वयं विरामान्त निसारो परिकीर्तितमिति द्रुतद्वयं लघुश्चैव यतितालः प्रकीर्त्तित इति द्रुतत्रयं विरामान्तं त्रिपुटः परिकीर्त्तित इति। द्रुतौ लघूभवेतां चेत्तदासावड्डुतालक इति ॥ ४७ ॥

हरिविलासस्वरार्थौ प्रबन्धभेदौ तदादयो ये स्वरपाठविरुदादिभिर्वलिता नानाप्रबन्धा ध्रुवाश्च तदीयगानदेवताम् । यत्रैकखण्ड उद्ग्राहस्तथैव ध्रुवसंज्ञकः । रचितान्यपदाभोगः स स्याद्धरिविलासकः॥ " "यत्र सप्ताक्षरैरेव षड्जादिस्वरवाचकैः। क्रमव्युत्क्रमव्यस्तैश्च समस्तैर्वाञ्छितार्थकैः । उद्ग्राहध्रुवको स्यातामाभोगोन्यपदैः पुनः । स्वरार्थः स्यादिष्टतालो मोक्ष उद्ग्राहके भवेदि „ ति । स्वरपाठविरुदादीनि प्रबन्धाङ्गानि षट् । स्वरः सरिगमेत्यादिविरुदंगुणकीर्तनम् । शौर्य्यदानद्वयस्यापि पदं तदितरत् स्मृतम् तेनकस्तेन तेनेति पाठो वाद्याक्षरोत्करः। तालश्चचत्पुटादिः स्यादिति ज्ञेयम् मनीषिभिः। इतितल्लक्षणानि। प्रबन्धोऽतिक्षुद्रो द्रविडभाषाबद्धश्चिन्दुनामा यथा यथा च तैलङ्गभाषाबद्धो धरुनामा तथैव पाश्चात्यव्रजादिभाषाबद्धो ध्रुवविष्णुपदसंज्ञः ॥ ४८ ॥

सप्त स्वराः षड्जादयः यदुक्तं षड्जर्षभौ च गान्धारो मध्यमः पञ्चमस्तथा। धैवतश्च निषादश्च स्वराः स्युःश्रुतिसंभवाः ॥ मयूरचातकच्छागक्रौञ्चकोकिलदर्दुराः । मातङ्गश्च स्वरानाहुः क्रमेणैतान् सुदुर्गमान्। इति एकविंशतिमूर्छनाःस्वरारोहावरोहरूपाः यदुक्तं क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम् । मूर्छनेत्युच्यते ग्रामत्रये ताः सप्त सप्त च। इति ग्रामत्रयं षड्जग्राममध्यमग्रामगान्धारग्रामाः तदुक्तं स्वराणां सुव्यवस्थानां-समूहो ग्राम उच्यते। षड्जग्रामः पञ्चमे स्वचतुर्थश्रुतिसंस्थिते । स्वोपान्त्यः श्रुतिसंस्थेऽस्मिन् मध्यमग्राम इष्यते॥ रिमयोः श्रुतिमेकैकां गान्धारश्चेत् समाश्रितः । पश्रुतिं धो निषादस्तु धश्रुतिं सश्रुतिं श्रितः॥ गान्धारग्राममाचष्ट

वरीदेशवराडीगौडापठमञ्जरीललितादेवक्रीमागधीकौशिकीप्रभृतिरागरागिणीग-णदेवतां च सप्तस्वरैकविंशतिमूर्छनाग्रामत्रयजात्यष्टादशकश्रुतिद्वाविंशतिकमातुधातु-देवतां चेति गानाध्यायलक्ष्मीं मूर्त्तिमतीं चानुकम्प्य ॥ ४९ ॥

वंशीमुरलिकापाविकोपाङ्गादिविविधशुषिरं वीणामहतीकविलासिकाविपञ्चीस्वर-मण्डलिकाकच्छपीरुद्रवीणाकिन्नरीप्रभृतिततविततिमृदुमृदङ्गडमरुडम्फादिविविधा नद्धमन्दिरादिघनं चेति चतुर्विधवाद्याध्यायदेवतां च ॥ ५० ॥

द्रुतविलम्बितमध्यलयलक्ष्मीमङ्गहारश्रियं च स्वयमागतामनुजगृह्णुः ॥५१॥

तश्च तासामेव मध्ये । स्वरमण्डलिकां विपञ्चिकां महतीं रूपवतीं च तुम्बु-रीम् । कविलासिकया समं समादधतीभिः कियतीभिरुदये ॥ ५२ ॥

ततश्च । मूर्त्ताः सङ्गीतशास्त्रोपनिषद इव ताश्चित्रमेवाविरासन्नासन्ने रासली-लारहसि सहसितश्रीमुखाम्भोजकोशाः । वैणिक्यो वैणविक्यः सरसमुदभवन्मौर-जिक्या समेता गायन्त्यस्तालधारिण्यपि करकलितोपाङ्गमौपाङ्गिकी च ॥ ५३ ॥

वाग्गेयकारकगुणैरुपलक्षितानां सङ्गीततन्त्ररहसामपि पारगाणाम् । शुद्धाङ्गशुद्ध-तरकर्कशमार्गलास्यनेत्री व्यरोचत ततिर्वरनर्त्तकीनाम् ॥ ५४ ॥

तत्र च । गीतं द्वेधा मार्गदेशीयभेदात् त्रिंशच्चत्वारश्च मार्गप्रभेदाः । तेषां तालाः पञ्चचच्चत्पुटाद्याश्चत्वारिंशद् द्वौ च देश्यां प्रसिद्धाः ॥ ५५ ॥

---

तदा तन्नारदो मुनिः इति । गान्धारः सपरीवारो ग्रामस्तु दिवि गीयते । इति च । जात-योऽष्टादश यदुक्तं याभ्यो रागाःसम्भवन्ति जातयस्ताःसमीरिताः । ताःसप्त शुद्धा विकृता एकादश उदाहृताः इति । श्रुतयो द्वाविंशतिः यदुक्तं पञ्चस्थानोद्भवो नादो विभक्तो मारुता-हतः । द्वाविंशतिः स्युः श्रुतयः श्रवणाच्छ्रुतयो मता इति । तत्र षड्जस्य चतस्रः श्रुतयः ऋषभस्य तिस्रः गान्धारस्य द्वे मध्यमस्य चतस्रः । पञ्चमस्यापि चतस्रः धैवतस्य तिस्रः नि-षादस्य द्वे एवं द्वाविंशतिः पदानि वाक्यानि च तालादिनिबद्धानि चेन्मातुः तत्र निबद्धो रागस्तु धातुः यदुक्तं वाङ्मातुरुच्यते गेयं धातुरित्यभिधीयते इति ॥ ४९ ॥

वंश्यादयो लोकत एव प्रसिद्धा इति न लिखिताः ॥५०॥

द्रुतविलम्बितमध्यभेदेन त्रिविधो लयः यदुक्तं क्रियानन्तरविश्रान्तिर्लयः स त्रिविधो मतः। द्रुतो मध्यो विलम्बश्च द्रुतः शीघ्रतमो मतः । द्विगुणद्विगुणौ ज्ञेयौ तस्मान्मध्यविलम्बिता इति। अङ्गहारोऽङ्गविक्षेपविशेषः परिकीर्त्तितः ॥५१॥

कियतीभिर्वैणिकीभिः उदये उद्गतं तत्रोद्गतमिति यावत् ॥५२॥

सहसितं सहासं श्रीयुक्तं मुखमेवाम्बुजकोशो यासां ताः वैणिक्यो वीणाधारिण्यः वैणविक्यो वेणुवादिन्यः करकलितोपाङ्गं यथा स्यात्तथा औपाङ्गिकी च ॥ ५३ ॥

वाग्गेयेति तदुक्तं वाच्यं गेयं च कुरुते यः स वाग्गेयकारकइति तस्य गुणैः ॥५४॥

गीतं द्वेधेति गानवाद्यनृत्येषु ब्रह्मविरचितनियमयुक्तं यत् तत् मार्गसंज्ञकम्। तद्देशप्रियत्वात्तत्-देशीभ्या कल्पितं यत्तद्देशीनामकम्। चचत् पुटाद्याश्चच्चत् पुटचाचपुटपञ्चपुत्रकसंपक्वेष्ट-कोद्धट्टाः इति पञ्च प्रसिद्धाः संगीतशास्त्रतत्प्रवेत्यर्थः ॥ ५५ ॥

ततश्च तालपादः स्वयमुल्लास ।थैया तथतथथैया तथतथथैया तथत्तितथथैया ।
थैया तथतथथैया थगथगथगतात्तिथदिगणथैः ।
ततश्चैनं शब्दं गृहीत्वा । स्वरं लघुगुरुप्लुतद्रुतविराममात्राविधौ सशब्दकमशब्दकं कलितकांस्यतालोत्तमम् । कराब्जमपसव्यसव्यत उपर्य्यधो निक्षिपन्त्यथाष्टममुपारटत् किमपि तालधारिण्यसौ ॥ ९६ ॥

ततश्च । शब्दास्ते मौरजिक्या मुरजवरमुखे पाणिनोद्घाट्यमाना औपाङ्गिक्याप्युपाङ्गं स्फुरदधरदलं निर्म्मिरे कम्प्रकण्ठम् । गायन्यो रागराजीः समयसमुचिता हूंकृयाभिः कलाभिर्यन्त्रे झङ्कारयन्तोऽखिलरवमिलने दत्तकर्णा विरेजुः ९७

सप्त स्वराः सदनुवादिविवादिवादिसंवादिनः स्थलवशेन चतुर्विभेदाः।ताश्चैकविंशतिरपि श्रुतयो यथास्वं ग्रामास्त्रयः श्रुतिसमा अथ मूर्छनाश्च ॥ ९८ ॥

त्रिलक्षी तानानां नवशतयुतैः सप्तदशभिः सहस्रैर्युक्ताष्टादश परिचिता जातिरपि च । त्रिधाः रागाः पञ्चाशदथ परिपूर्णादिभिदया विशुद्धाः संकीर्णा अपि वहुविधाः प्रादुरभवन् ॥ ९९ ॥

---

तालधारिणी कलितकांस्यतालोत्तमं गृहीतकांस्यमयकरतालं कराब्जं अपसव्यसव्यतो दक्षिणवामतः उपर्य्यधो निक्षिपन्ती सती किमप्यनिर्वचनीयं यथास्यात्तथा अष्टमं स्वरं उपारटत् षड्जायाः सप्त स्वरा इव तस्यास्तालोऽप्येकः स्वरं एवाभवदित्यर्थ । कीदृशं लघ्वादिविधौ सशब्दकमशब्दकं च यदुक्तं पञ्चलघ्वक्षरोच्चारमिता मात्रेह कथ्यते । एकमात्रो लघुर्ज्ञेयो द्विमात्रो दीर्घ उच्यते । त्रिमात्रस्तु प्लुतो ज्ञेयो मात्रार्द्धं द्रुतमुच्यते । लघुद्रुतद्वयार्द्धं तु विरामः परिकीर्तितः इति । क्रिया तु द्विविधा प्रोक्ता निःशब्दा च सशब्दिका इति ॥ ९६ ॥

मौरजिक्या मुरजवादिन्या पाणिनैव उद्घाट्यमानाः शब्दा उपाङ्गधारिण्या उपाङ्गं निर्म्मिरे उपाङ्गं उद्घाटयामासिरे इत्यर्थः । स्फुरदधरदलं कम्प्रकण्ठमिति उपाङ्गविशेषणं क्रियाविशेषणं वा ॥ ९७ ॥

सप्त स्वरा इत्यस्यानान्तरश्लोकार्धेन प्रादुरभवन्नित्यनेनान्वयः । सन्तश्च ते अनुवाद्यादयश्चेति तथा ते तदुक्तं चतुर्विधाः स्वरा वादी सम्वादीच विवाद्यपि । अनुवादी च वादीतु प्रयोगे वहुलः स्वरः । राजस्वरः स विज्ञेयोऽनुवादी भृत्यवन्मतः । विवादी शत्रुवज्ज्ञेयो रागभङ्गकरो मतः । सम्वादी मन्त्रिवत् प्रोक्तः स्वरशास्त्रविशारदैः ,, इति । श्रुतिसमाः तत्तच्छ्रुत्युचिता ग्रामाः ॥ ९८ ॥

तानानामेकोनपञ्चाशत्संख्यत्वेन प्रसिद्धानामपि त्रिलक्षीति तदुक्तं " मूर्च्छना एव तानाः स्युः शुद्धा आरोहणं श्रिताः । तेषां भूरितरा भेदाः कस्तान् कार्त्स्न्येन वक्ष्यतीति । परिपूर्णादिभिदया रागाः पञ्चाशत् मुख्याः त्रिधा प्रथमं त्रिविधाः ततश्च विशुद्धाः संकीर्णाः अपि कारान्सालगाश्चेति वहुविधाः यदुक्तं " स च रागस्त्रिधा पूर्णषाडवौडवभेदतः । तत्र सप्तस्वरः पूर्णः षट्स्वरैः षाडवो मतः । पञ्चस्वरैरौडवः स्यात् प्रत्येकं त्रिविधस्तु सः । शुद्धसालगसंकीर्णभेदैर्भरतसंमतः । अन्योपजीवितारूपः शुद्धोऽन्यस्योपजीवनात् । सालगः स तु विज्ञेयः संकीर्णो द्वयजीवनादिति ॥ ९९ ॥

तत्र श्रुतिजातिमूर्छनानां गमकानां चापि पञ्चदशकानाम् । व्यक्तिर्न कण्ठतट इति विधिना विहिते चलाचले वीणे ॥ ६० ॥

चित्रं चित्रमहो महाद्दरासारम्भलीलायाम् ॥ कण्ठैरेव हितासां तयोः परीक्षा परस्परं चक्रे ॥ ६१ ॥

ततश्च । आदिर्यतिर्निसारुस्तथाडुतालस्तथा त्रिपुटसंज्ञः । रूपकझम्पकमण्ठास्तथैकताली च रङ्गकः सूडः ॥ ६२ ॥

ध्रुवलक्षणमण्डलक्षणावथ सूडावपि शुद्धसालगौ । विविधा विषमा गतिस्तयोस्तत एतावपि रेजतुस्तदा ॥ ६३ ॥

ततश्च प्रबन्धगानानुबन्धे । थैथैथैथै तिगडतिगथै थेति पाठानुकृत्या विन्यस्यन्त्यो भुवि पदतलं दोलितामन्तरिक्षे । वामावर्त्ते सकृदथ सकृद्दक्षिणावर्त्ते एवं नृत्यन्त्यस्ता सरसमधुर मण्डलस्ताः विरेजुः ॥ ६४ ॥

वक्त्रेगानं तदभिनयनं पाणिपद्मे पदाब्जे तालो ग्रीवाभुवि विधुवनं दोलनं नेत्रयुग्मे । वामावामस्खलनवलना तारकायां दृगन्तः कृष्णे प्रेमा मनसि युगपत्तुल्यमासामथासीत् ॥ ६५ ॥

---

गमकानां स्वरकम्पनानां यदुक्तं स्वरस्य कम्पो गमक इति । चलाचले इति यदुक्तं स्वराणां चालनाद्वीणा चलवीणेति कथ्यते । अचला शुद्धविकृतस्वरैर्युक्तात्र संमता इति । श्रुत्यादीनां व्यक्तिरित्यर्थः ॥६०॥

तयोर्वीणयोः चलवीणायां अचलवीणायां च तासां श्रुत्यादीनां परीक्षा कण्ठैरेव कर्तृभिश्चक्रे कृता । काण्ठोन्नीतश्रुत्यादिदृष्ट्यैव ते वीणे प्रमाणीक्रियेते इत्यर्थः । परस्परमिति कदाचित्ताभ्यामपि स्वप्रमाण्यं प्रौढ्या संस्थाप्य कण्ठेषु परीक्षा चक्रे इति विधिसर्गदूरवर्तिन्यस्ता गोप्य इति भावः ॥६१॥

अथ तत्र प्रबन्धगानमनुकथयिष्यन् सूडाख्यप्रबन्धलक्षणस्य मतभेदेन वैविध्यात् तं स्वयमेव लक्षयति आदिरिति आदितालः तदादिभिरेव तावन्तैर्नवभिस्तालैः सूडो भवति । रङ्गपतीतिरङ्गकः ॥६२॥

ध्रुवस्य लक्षणं यत्र मण्ठस्य लक्षणं यत्र स च स च तावपि शुद्धसालगौ सूडौ ततः कण्ठत एव रेजतुः । अथ तयोः सूडयोर्विविधा गतिरपि रराजेति वचनविपरिणामेन सम्बन्धः "एलाकरणढेङ्कीभिर्वर्तन्या गोवंडेन च । लम्भरासैकतालीभिरष्टाभिः सूड उच्यते इति शुद्धसूडलक्षणम् अ यो ध्रुवस्ततो मण्ठः प्रतिमण्ठो निसारुकः । अडुतालस्ततो रास एकतालीति सप्त ते इति सालगसूडलक्षणं च रत्नाकरानुक्तं ग्रन्थकृता न सम्मतमित्यवसीयते ।६३,

सकृदेकवारं वामावर्त्ते अथ तथैवैकवारं दक्षिणावर्त्ते चेत्येवम् ॥ ६४ ॥

नृत्याङ्गभूतानां गानभिनयादीनां पृथक् पृथगवस्थिति परिपाटीमाह वक्त्र इति । ग्रीवाभुवि ग्रीवाप्रदेशे विधुवनं वाद्यादेर्गीतार्थस्य वास्वादनसूचकं कम्पनम् । नेत्रयोर्दोलनं सम्यक्तास्वादनतारतम्यावधारणार्थम् । वामावामयोः सव्यदक्षिणयोः स्खलनस्य गतिलाघवानुकूलपरिवर्तनस्य वलना मुद्रितावम् ॥ ६५ ॥

गानं तु भिन्नमभवत्सुदृशो जगुस्तं चन्द्रादिकं स तु जगौ ललितानि चासाम् ॥७१॥

तासां तालविमोक्षनिर्भरहतिक्षोभेण निःसारिणा पादाम्भोरुहशीधुनैव पुलिनं तत्सिक्तमासीदिव । यत्तादृश्यतिमात्रचित्रनटनावेगेऽपि नैकं रजो धूतं किंतु रजांसि तान्यपि तदानन्देन जाड्यं ययुः ॥ ७२ ॥

किंच । प्रत्येकं सुदृशां कपोलफलके बिम्बोद्गतं नृत्यतः श्रीकृष्णस्य वपुः सनृत्यमपि तद् ब्रूते स्म तं किंचन । तासामाननपद्मधूननविधिव्याधूतमासां यथा नानानासुरसा तथात्र भवतो नृत्यस्य लक्ष्मीरिति ॥ ७३ ॥

नृत्यन्त्यः कतिचित्सरोरुहदृशः प्रारब्धनृत्यान्तरे कृष्णालिङ्गनमङ्गलोत्सवनवप्रोद्भूतरोमोद्गमाः । जातोत्कण्ठमकुण्ठकण्ठकुहरं प्रोन्नीय रागान्तरं गायन्ति स्म निशम्य यत् मुमुहुः सङ्गीतदेव्योऽपि च ॥७४॥

असंकीर्णान् जातिश्रुतिगमकवर्गेण सरसान् सगान्धारग्रामान् विशकलितभेदान् स्वरगणान् । समुन्निन्ये काचित्समममयाभिदा तेन च मुहुः पुपूजे सा साध्वित्यनुपममुदा मोदितहृदा ॥७५॥

सगरिमपधनिषु सकलालंकृतिमणिभिः सुमञ्जलश्रुतिषु । स्वरसमुदयेषु तासां धामसु च प्रीतिमाययौ कृष्णः ॥७६॥

ताथिक ता धिगिति ननाद यन्मृदङ्गस्तच्छ्रुत्वा सुरपुरनर्तकीसमानः । आश्वासं समलभत स्वकीयनिन्दावादोऽपि श्रवणरसायनः स तासाम् ॥७७॥

एवं स्वातंत्र्येण नर्तित्वा समनन्तरमनन्तरसोऽन्तरसोपूयमाणमदमदनानन्दो मु-

इति । आसां ललितानि चेति । यथा । वदनं मधुरिमसदनं चलनं दलनं करीन्द्रकीर्त्तीनाम् । हसितं दृगभिलषितं तव सवयो वर्ण्यतां केन ॥ इति ॥ ७१ ॥

शीधुनेति प्रस्वेदरूपमधुनेत्यर्थः ॥ ७२ ॥

बिम्बोद्गतं प्रतिबिम्बितमित्यर्थः । तत् कृष्णस्य सनृत्यं वपुः कर्तृ तं श्रीकृष्णं नृत्यन्तं किंचन ब्रूते स्म । आसां यथा नृत्यस्य लक्ष्मीः । सुरसा तथा भवतः । नानाना इति प्रौढ्या निषेधत्रयम् ॥ ७३ ॥

उल्लासेन नवं नवं यथा स्यात्तथा प्रोद्भूतो रोमोद्गमो यासां ताः ॥७४॥

विशकलिताः अखण्डिताः सम्पूर्णा एव भेदा येषां तान् ॥७५॥

तासां स्वरसमुदयेषु धामसु रूपेषु च श्रीकृष्णः प्रीतिम् आययौ प्राप्तः । द्वयेषु कथंभूतेषु सगरिमपधनिषु षड्जगान्धारऋषभमध्यमपञ्चमधैवतनिषादेषु । पक्षे स इति कृष्णविशेषणं गौरवं दाति रक्षति यदनं लावण्यमाधुर्यादि तद्वत्सु । सकलाः कलसहिताः सकौशला वा अलंकृति मणयः आलयपतभूतमुख्यालंकाराः तैः सुमञ्जुलाः श्रुतयो द्वाविंशतिर्येषां तेषु पक्षे स्पष्टम् । श्रुतिः श्रोत्रं स्पातिः श्राणं वा ॥७६॥

ता नर्तकी धिक् ॥ ७७ ॥

५ । स्वातन्त्र्येण नर्तित्वा दोर्भ्यां यथानालिङ्गनमनर्थं । कीदृशी भवेद् श्रीकृष्णस्य सर्वेत-

कुन्दो नृत्यन्तीषु वादयन्तीषु मण्डलस्थासु रमणीमणीषु । वैदग्ध्यैवास्य देव्या स्वयमिव रचितां सर्वखेदापनुत्त्यै सौहित्योपायसिद्धौषधिमिव सरसां प्रेमपीयूषचर्याम् । दोर्भ्यामालिङ्गय राधां सतडिदिव घनो हेमवल्लयेव रुद्धस्तापिच्छः पिच्छमौलिः सह नटनकलाकौतुकेनाननर्त्त ॥ ७८ ॥

भग्नावस्थितपन्मथेषु कलिकाकूटेर्मणिश्रुम्बको राधा तेन समं ननर्त्त यदिदं तद्वीक्ष्य ताः सुभ्रुवः । तस्या लास्यकलानुकूल्यकलने जातस्पृहा अप्यमूर्गान्धर्वितुं तथानुनटितुं नैश्वर्य्यमापेदिरे ॥ ७९ ॥

गुणसंमसारणविकारदीर्घहस्वभावाःकिल ये अभ्यासधर्मास्ते किल न सर्वत्रेति नैतदाश्चर्यं अभ्यासमन्तरेणापि तस्यास्तद्गुणानां स्वभावसिद्धत्वात् ॥ ८० ॥

यदालोक्य उर्वशी वशीभूता अपरा अप्सरसः सरसस्त्रपामयस्य पयोऽवलम्बिर इव गताश्चारण्यसीमानं मानं जहुः सिद्धनार्यो नार्य्योचितचरिता गन्धर्वादेवमुनिवध्वश्च केवलं कुसुमानि किरन्ति स्म स्मरन्ति स्म स्मरगरिमसौभाग्यम् ॥ ८१ ॥

राधाकृष्णौ स्वरौघं गरिमनिरिगमधैवतासग्रहाभ्यामारोहैवर्णारोहेण च गमकमपि रम्यमुल्लासयन्तौ । तेना तेनेति नानारसमथ नटनं गानमप्यूढरागौ तेनाते नेतिलोकं सरभसकुतुकोल्लासमन्योन्यजिष्णू ॥ ८२ ॥

---

दापनुत्त्यै वैदग्ध्या देव्यैव स्वयं रचिताम् । सौहित्य तृप्तिः । सतडिदित्यादिदृष्टान्तद्वयेन सौन्दर्य्यमुत्कर्षितत्वे उक्ते ॥ ७८ ॥ ऐश्वर्य्यं न आपेदिरे न शक्ता बभूवुरित्यर्थः ॥ ७९ ॥

बोभूयते चिरिणुते चकार ददौ पापच्यते इत्यादिषु क्रमेण ये "गुणो यङ्लुकोः" रित्यादिलक्षणगुणादयोऽभ्यासधर्माः द्विरुक्तस्य पूर्वोऽभ्यासस्तदीया धर्मास्ते न सर्वत्र न सार्वत्रिका कचिद्व्यभिचरन्त्यपीत्यर्थः यदुक्तं "अभ्यासविकारेष्वपवादा नोत्सर्गान् बाधन्त" इति । पक्षे गुणानां नृत्यगीतपाण्डित्यादीनां सम्यक् प्रसारणं आविष्करणं तच्च विकाराणां औत्सुक्यमदचापल्यावेगादीनां मनोविकाराणां दीर्घह्रस्वभावा दैर्घ्यह्रस्वत्वानि कदाचिद्बहुत्वं कदाचिदल्पत्वमित्यर्थः ते च ते तथा अभ्यासः पौनःपुन्येनानुशीलनं तद्धर्माः तत्र भावा इत्यर्थः तथाभूता अपि न सर्वत्र नहि सर्वेषु जनेष्वेवाभ्यासमात्रेणैव ते भवन्तीत्यर्थः तस्या राधायाः तद्गुणानां तेषां गुणानां स्वभावसिद्धत्वात् अभ्यासं विनापि नित्यं सत्ता वर्त्तत एवेत्यर्थः ॥ ८० ॥

यदालोक्य इदं नृत्यं आलोक्य पर्य्यालोच्य इत्यर्थः त्रपामयस्य सरसः तडागस्य पयोऽवलम्बिरे मग्ना बभूवुरित्यर्थः चारण्यः चारणस्त्रियः अरण्यसीमानं लज्जया वनान्तम् कुसुमानि किरन्ति स्मेति तत्र सर्वमार्गमिति भावः ॥ ८१ ॥

स्वरौघं षड्जादिं ग्रहश्च सह ताभ्यां सह तदुक्तं अंशस्तु व्यञ्जको गेये यस्य सर्वेऽनुगामिनः । ग्रहः स्वरसङ्गतो गानो न्यासादीनां प्रवेशक इति । सह आग्रह इत्युक्तो यो गीतादौ समर्पितः । न्यासः स्वरस्तु स प्रोक्तो यो गीतस्य समाप्तिकृदिति । तेना तेना इत्याद्यपि मङ्गलसूचकम् तेनाते विस्तारयन्तौ । न इति लोके लौकिकप्रकाशरहितं यथा स्यात्तथेत्यर्थः शब्दानुकरणे अव्ययोऽयमाकारः ॥ ८२ ॥

तालावसानसमये करपद्मकोशन्यासं हरिः प्रियतमोरसि संविधत्ते। वामेन पाणिसरसीरुहकोरकेण सापि प्रियस्य विनिरस्यति बाहुदण्डम् ॥ ८३ ॥

एवं च वञ्चनरहितप्रणयोन्मुखेन निखिलसुन्दरीहृदयदरीहृदयमतिसहृदयो हृदयोदितमदनमोदामोदातिलालसोऽलसोऽपि क्षणमपि ताभिर्मण्डलगताभिराभीरभीरुभिः सार्द्धं क्षणमध्यस्थितया समं निःसमं नर्तति ॥८४॥

एवमाहितवलयसवलयसरसनृत्यविलासेन रुचिरं चिरं समयं गमयित्वा प्रतिव्यक्ति व्यक्तिमापत्स्यमानं पृथक् पृथक् तरतमभावेन भावेन चाङ्गिकेन सुकोमलकरकमलकमनीयामलास्यं लास्यं दिदृक्षुरुवाच ॥ ८५ ॥

अये क्षणमधुना विरम्यतां रम्यतां पुनरालोकयिष्ये तदुचितं विश्रमणमिति सर्वासु हिमवालुकासहिमवालुकासमवेते पुलिनोदरे दरेहितालस्यलस्यमानतया सलीलमुपविष्टासु तासु तस्मिन्नपि ॥ ८६ ॥

समयकोविदा विदामग्रणीः सपरिजनवृन्दा वृन्दा वृन्दावनदेवता योगमाया च सा याचमाना तस्य च तासां च प्रीतिविशेषमशेषमतिमनोहरं मणिमयचषकतिरस्कारि पलाशपलाशपुटकपटलोपनीतमतिशीतमतिमधुरफलफलरसकुसुमरसादिकं रसादितमपरिमितमितरानिर्वाह्यमतिरम्यताम्बूलमाल्यानुलेपसहितं हितं तत्समयस्य समुपनिन्यतुः ॥८७॥

तदवलोक्य वयस्यगणैः सह कृतं पुलिनजेमनमनवरतानन्दतुन्दिलेन वयस्याजनैः सह करिष्यमाणपुलिनजेमनमनसा मनसा विस्मारयतेव तेन ताभिः सन्धिवैदग्धिकया कमपि समयं गमयितुमारम्भे विधीयमाने दिविदिविषदो भाविकौतुकदिदृक्षयासयाभिलाषा नापसमृपुः नापि सापराधतया तत् पुनरहो रहोजेमनं च ददृशुः पिनुस्वस्वपदैरेव तिरस्कारिणीं विस्तारयामासुः ॥८८॥

तयोर्नाट्याङ्गसम्पादनेनैव शृङ्गारविलासचातुरीमाह तालावसानेति ॥ ८३ ॥

हृदयदरीं हरतीति क्विप्। अयं श्रीकृष्णोऽतिसहृदयः ॥८४॥

आहितोऽर्पितो वलये रासमण्डले सवलयः सरसश्च यो नृत्यविलासस्तेन प्रतिव्यक्ति जने जने व्यक्तिं प्राकट्यमापत्स्यमानं प्राप्स्यमानं सुकोमलाभ्यां करकमलाभ्यां कमनीयं च तत् अमलं आस्यं यत्र तद्योति तथा तत् ॥८५॥

हिमवालुका कर्पूरः। लस्यमानतया काम्यमानत्वेन। तस्मिन्नप्युपविष्टे सति ॥८६॥

पलाशस्य किंशुकवृक्षस्य पलाशपुटकानां दलपुटकानाम्। अतिमधुरं फलं परिणामो यस्य तादृशं फलरसं रसादितं रसैः स्वादैरादितम् अखण्डितं अतिरसकृतमित्यर्थः ।८७।

वयस्यगणैः सह कृतं पुलिनजेमनं विस्मारयतेव मनसा करणेन तेन कृष्णेन कर्त्रा सन्धिवैदग्धिकया सहभोजनवैदग्ध्येन समयं गमयितुमारम्भे क्रियमाणे सति तेन कर्मभूतेन वयस्याजनैः सह करिष्यमाणे पुलिनजेमने मनो यस्य तेन तिरस्कारिणी अन्तःपटम् प्रतिसीरा जवनिका स्यात्तिरस्कारिणी च इत्यमरः ॥८८॥

एवमतिकौतुकेन केनाचिद् रहसि हसितोपहसितादिना मदनमदनटनतरसा रसान्तरमाप्ताविव विवर्जितह्रीसंकोचे वलवत्तरतरङ्गे प्रेमानन्दसरस्वति स्वतिसहजे सह–जेमनं फलफलरसपानकादेर्विधाय वनदेवताभिरपिहितादराभिराभिराम्यतः समुपनीतशीतसलिलमाचम्य घनसारसारस्यमूलताम्बूलवीटिकामितरेतरतरलतरकौतुकोपनीयमानामास्वाद्य ॥ ८९ ॥

तरणितनयया नययापितेन कुमुदगन्धिना मरुता रुतानि दीर्घीकुर्वता मदकलकलहंससारसानां मृदुमधुरेण मन्दमुपवीज्यमानोऽज्यमानोऽतिसारस्येन पुनरपि वीरपानानन्तरं कामसंग्रामकलामिव लास्यलीलामारभमाणो लीलोपवेशमपहाय समुत्तस्थौ ॥ ९० ॥

उत्थाय च । पूर्वं गानाद्यकृत यदसौ हन्त तस्यातिरिक्तं रागं वंश्या स्वयमथ जगौ दुर्गमं गीतविद्भिः । ग्रामं गान्धारकमुपनयत्येष तस्यानुगाने गायन्यस्ताः पुनरनुययुर्मौरजिकयादियुक्ताः ॥ ९१ ॥

तंत्री कण्ठादिसर्वस्वरमिलनविधौ चारुसम्पन्नमात्रे पङ्क्तीभूय स्थितानां कनकदलरुचां गायनीनां पुरस्तात् । स्थित्वा तालावसाने झटिति झणझणत्कारि संगीतविद्योद्गीर्णे धामेव काचिन्नटनरसकलाचार्यवर्य्याविरासीत् ॥९२ ॥

आकुञ्चज्जानु कृत्वा पृथुनि कटितटे वाममर्द्धेन्दुमन्यद्व्याकोशं पद्मकोशं मृदुललितमथोन्नीयकुञ्चत्कफोणि । क्षीणक्षीणावलग्नं ह्रसितवलिसमुच्छूनवक्षोजभारं तस्थौ सव्यापसव्यस्खलद्दलसलसचारकैर्दृष्टिपातैः ॥ ९३ ॥

अङ्गैः प्रस्वेदमेघज्जतुभिरिव नवैरङ्गमङ्गं स्पृशद्भिर्दुःसाधां नृत्यकृद्भिर्विषमगतिभिदां हेलयोल्लासयन्ती । लीलोत्सर्पापसर्पक्रमविधुतभुजा सारणाकुञ्चनाभ्यां

प्रेमानन्द एव सरस्वान् समुद्रस्तस्मिन् बलवत्तरतरंगे सति । कथं भूते सुष्ठु अतिसहजे निरुपाधिके इत्यर्थः मदनमदेनैव नटनतरो नाट्यवेगस्तेन रसान्तरप्राप्ताविव सत्यां विवर्जितो ह्रीसंकोचो यत्र तस्मिन् । अपिहितादराभिः अनाच्छादितसंमानाभिः । अभिरामस्य भाव आभिराम्यम् ॥८९॥ तरणितनयया नयेन नीत्या यापितेन प्रस्थापितेन ॥९०॥ स्पष्टम् ॥९१॥

तासां परस्सहस्राणां परस्परवैलक्षण्येन प्रत्येकमेव पर्यायेण नृत्यं कार्त्स्न्येन वर्णयितुमशक्नुवन् दिग्दर्शनार्थमेकस्याः कस्याः कस्याश्चन राधासख्या नृत्यं वर्णयति तंत्रीत्यादिना । कनककदलरुचामित्यनेन तासां मण्डलीभावमभिव्यज्य तन्मध्ये संगीतविद्योद्गीर्णं धामेवेत्यनेन अस्याः कर्णिकायमानत्वं व्यञ्जितम् ॥ ९२ ॥

वामं जानु अर्द्धेन्दुम् । अर्द्धेन्दुमिव आकुञ्चत् कृत्वा अन्यत् दक्षिणं जानु व्याकोशं प्रफुल्लं पद्मकोशमिव कृत्वा तस्थौ । यद्वा अर्द्धेन्दुपद्मकोशौ हस्तकविशेषौ । वामदक्षिणाभ्यां पाणिभ्याम् उन्नीय अभिनीयेत्यर्थः । ललितमित्यादीनि पञ्च क्रियाविशेषणानि ॥ ९३ ॥

प्रक्षेपेन स्वेदेन मेघाद्रिः क्लिद्यद्भिर्जतुभिरिवेत्यनेन कटिललाटग्रीवाजान्वादयङ्गानामाकुञ्च-

हस्तैर्हंसास्यमुख्यैरभिनयकुशला मन्दमन्दं ननर्त्त ॥ ९४ ॥

क्षीणक्षीणोदरमतिशयस्फारवक्षोजभारं पार्ष्णिद्वन्द्वोपरि परिलुठद्वेणि शाम्यद्वलीकम् । पृष्ठु भुग्ना व्यजयत करौ धुन्वती तालमोक्षे स्मारं सज्जीकृतमिव धनुश्चाम्यकं व्युत्क्रमेण ॥९५॥

सा जानुभ्यां क्षितितलमवष्टभ्य विस्फार्य बाहू वक्त्रामोदभ्रमदलिकुलं लोलहारावतंसम् । राजत्तेजः परिधि क्वणितालंकृति व्याजुघूर्णे नेमस्त्रिप्ता कुसुमधनुषः काश्चनी चक्रिकेव ॥९६॥

पादाङ्गुल्यायलम्ब्य क्षितितलमलघुस्फारवक्षोजगानुः पार्ष्णिद्वन्द्वोपविष्टा ह्रसिनवलिनमन्नीवि विस्तीर्णवक्षाः । अङ्गुष्ठौ बद्धमुष्ट्योः कुचभुवि करयोर्न्यस्य तालानुकृत्यालंकारान् कूजयन्ती गदति तथतथै थैनथै थैतथेति ॥९७॥

युक्तानां कण्ठतंत्रीचयशुषिरघनानद्धवाद्यैकतायां पश्चात्तस्थं सराजम्बुजलतमदतीचारु ताम्बूलवीटीम् । भ्रश्यन्मञ्जीरबन्धे प्रणयिपरिजनोपात्तपादा समन्तादञ्चलया वीज्यमाना श्वसितचलकुचा सा विशश्राम रामा ॥९८॥

विश्रम्य च क्षणं पुनर्गायन्त्यादिषु गीतान्तरावतारमेलनालापव्यालितयं सम्पादयन्तीषु प्रविश्य अभिरूपज्येष्ठा ज्येष्ठा मदनगर्वतर्जनी तर्जनी भुवनसौरूप्यसारमध्यमा मध्यमा रतिमदनामिकानामिकावैचित्र्यैकनिष्ठा कनिष्ठा चेति ललितकरशाखामधुरिमा ॥ ९९ ॥

---

नेनान्योन्यस्पर्शसम्भाव्यं तस्या नास्तीति द्योतितम् । हस्तैर्हस्तकैर्हंसास्यकर्त्तरीमुखपद्मकोशादिभिः ॥ ९४ ॥

क्षीणादपि क्षीणमुदरं यत्र तद्यथा स्यात्तथेति पूरकश्वासेन पृष्ठवक्रिम्णा तथाभावात् शाम्यद्वलीकमिति तथाभावे त्रिवलिविलोपात् ॥ ९५ ॥

वक्त्रामोदेत्यादीनि व्याजुघूर्णे इति क्रियाविशेषणानि चत्वारि भ्रमदलीति मुखस्य चतुर्दिक्षु भ्रमतोऽनुगमनात् । राजन्तस्तेजसां कान्तीनां गात्रगौरिमहारादिश्वेतिमाबिम्बाधरारुणिमश्यामरादिश्यामलिम्ना परिधयो मण्डलानि यतस्तद्यथा स्यात्तथा ॥ ९६ ॥

. पार्ष्णिद्वन्द्वे उन्नतीकृते उपविष्टा कृतोपवेशा आसादितश्रोणिदेशेत्यर्थः । ह्रसिनवलीति वक्ष उन्नमने त्रिवलिह्रासात् । नमन्नीवि इति पूरकश्वासेन नीव्याः किंचित् शैथिल्यात् । बद्धमुष्ट्योः करयोः अङ्गुष्ठौ कुचभुवि कुचाग्रे विन्यस्य ॥ ९७ ॥

ततश्च गानसमाप्तौ सहसैव मण्डलमध्यादन्तर्धाय तत् पश्चात् प्रदेशे तिष्ठन्त्यास्तस्या विश्रामप्रकारमाह युक्तानामिति । कण्ठेन सह तंत्र्यादिवाद्यानां एकतायां एकीभावे युक्तानां उशुकानां गायन्त्यादीनां पश्चात् पृष्ठदेशे स्थित्वा । चलकुचेति कुचशब्देन कञ्चुलिका लक्षिता ९८

अभिरूपमाभिरूप्यम् । भुवनेषु यत्सौरूप्यसारं श्रेष्ठसौन्दर्य्यं तस्यापि मध्ये मा शोभा यस्याः रतेः कामपत्न्याः अपि मन्दं नमयतीति तथा सा । इति हेतोर्लक्षितः करशाखानां वर्णिशिष्टानां ज्येष्ठादीनां मधुरिमा यस्याः सा ॥ ९९ ॥

एवं प्रत्येकमेव नृत्यमालोक्य पुनः सकलाभिः कलाभिः परीतः सकलाभिरेव ताभिः सह प्रकीर्णनटनक्रममारभमाणः सरसतरतरङ्गितमानसो नृत्यति नर्त्तयति गायति गापयति स्मेत्यायामिनीं यामिनीं निमेषमात्रमिव यापयन् क्रीडति स्म ततः प्रकीर्णकनृत्ये कदाचिदेकीभूय कदाचिन्मण्डलीभूय कदाचिदेकैकशः कदाचित्संभूय च नृत्यन्तीनां गायन्तीनांच तासां काचित्कृष्णेन समं सह गायति नृत्यति स्म च । ततः । सह नर्त्तनगानतत्परौ श्रमजालस्पस्फुरस्यविग्रहौ । श्लथमानकुचांशुकौ हरेः पृथुमंसं भुजया समग्रहीत् १०६ ॥

ततश्च । तमालस्य स्कन्धे श्लथपतितशाखेव पवने—

क्रमात् खिन्ना हैमी व्रततिरिव सांऽशोभतभृशम्
वपुष्मत्यो रत्यो लसदलसभावोपहतयो
परिष्वक्तो मूर्त्तः समघटत शृङ्गार इव सः ॥ १०७ ॥
काचित्कूजितकाञ्चिकिङ्किणिरणन्मञ्जीरमान्दोलतो
हारेण श्रवणोत्पलेन ललितां चीनाञ्चलेनापि च ।
कृष्णांसे कृतवामबाहुवलया लीलाविलासालसं
गायन्ती नटति स्म तामनुनटन् कृष्णस्तदेवोजगौ

कृष्णस्य पीतवसनाञ्चलमम्बुजाक्षी वामेन पद्मललितेन करेण धृत्वा । शश्वत् प्रसर्पमपसर्पमपीहमानो नृत्यन्स्यहो तमपि नर्त्तयति स्म काचित् ॥ १०८ ॥

काचित्तु । कृष्णप्रणीतमुरलीकलगानरीत्या हेलावशेन लयतालसमं नटन्ती
लीलाकृतं स्खलनमस्य दृशाक्षिपन्ती स्वं तालभङ्गमथ संवरयांबभूव १०९
कांचिद्वीणां मधुरमृदुलं वादयन्तीं सलीलं
गायं गायं हरिमतिमुदा सस्मयं नर्त्तयन्तीम् ।
नान्यैर्गम्यां गतिमथ चलन् कौतुकादेववाद्य-
भ्रंशे संभालनबहुतरव्यग्रचित्तां चकार ॥ ११० ॥

---

असं भुजया समग्रहीदिति सुसख्यमिद स्खलनवारणार्थम् ॥ १०६ ॥

तमालस्येति दृष्टान्तद्वयेन वाह्याभ्यन्तरशोभाविलासपरावधित्वं दर्शितम् । रत्या स्थायिभावरूपया शृङ्गार आद्यो रसः ॥ १०८ ॥

कृष्णांसे कृतवामबाहुवलयेत्यनेन शृङ्गारे इव नाट्येऽप्यस्याः पुरुषायितत्वं सूचितम् ३०८

लीलाकौतुकेन कृतं बुद्धिपूर्वकमेव स्खलनं गानस्य तालभङ्गरूपं दृशा दृष्ट्या आक्षिपन्ती मामनमन्तं मन्नृत्यतालभङ्गाय यतमानो भवान् स्वगानतालभङ्गमपि करोतीति भङ्ग्येण मः शा ज्ञातं तदपि मत् स्खलनं त्वया कर्त्तुं दुःशकमेवेति संज्ञया ज्ञापयन्ती सतीत्यर्थः ॥१०९॥

अथ तदीयवाद्यानुसारेण क्षणं नर्त्तित्वेत्यर्थः । अन्यैर्न गम्यां दुर्ज्ञेयां गतिं चलन् सत् कौतुकात् तद्वाद्यशिक्षापरीक्षणार्थमिति भावः । वाद्यभ्रंशे सम्यक् भालनं मद्वाद्यभ्रशो हन्तात्र मा भूदित्येवं तत्र बहुतरं व्यग्रं चित्तं यस्यास्तथाभूताम् ॥ ११० ॥

श्लिष्यति कांचन चुम्बति कांचन कस्याश्चनाधरं पिबति ।
नृत्यन्नेवं हि कृष्णो रमयांचक्रे वधूरखिलाः ।
आसीन्न सा तत्र मनाङ् न यो या नृत्ये च तत्रो यदकृष्णदृष्टम् ।
कृष्णस्य दृष्टिश्च न सा न यस्यामेकैकशः श्लेषणचुम्बनादि ॥ १११ ॥

ततश्च । मुक्तावलीमिव जुगुम्फ ललाटमूले घर्माङ्कुरान् सहचरीव समस्तमङ्गम् माध्वीकपीतिरिव सालसयांचकार श्रान्तिः कुरङ्गकदृशां श्रियमापुपोष ॥११२॥

ततः । दधाना दोर्युग्मं भुजशिरसि पार्श्वे विलसतो ।
हरेर्लीलालस्यादकृततनुवल्लीविवलनाम् ॥
ध्रुवं सौभाग्यानां* भरमसहमानेव कतमा ।
क्षणं विश्रामार्थं व्यथित दयितस्योपरि वधूः ॥ ११३ ॥

तत्र तत्रपे न कापि कापिशायनमत्तेव तेवमाना मानाधिक्यवती ललितलावण्याश्रमेण श्रमेण विलुलिता कृष्णेन भुजशिरसि रसिकभावेन विन्यस्तं न्यस्तं रत्नदण्डमिव भुजदण्डं लसत्परिमलमलयजरसालिप्तमहो महोत्पलसौरभरभसं स्वभावतो भावतोषतरङ्गेणरङ्गेण समाघ्राय तदनुलोमलोमहर्षोत्कर्षोत्कमनाश्चुम्बनेनोपभुक्तवती ॥ ११४ ॥

कृष्णोऽपि कस्याश्चन सालस्यलास्यलावण्यचलन्मणिकुण्डलताण्डवमतिक्रान्ति-

अखिला इत्यनेनोक्तमर्थं विवृण्वान आह आसीदिति तेन यूथेश्वरीसखीतत्परिवारवृन्दानां सर्वेषामेव साङ्गरासप्राप्तिरभूदिति दर्शितम् ॥ १११ ॥

श्रान्तिः कर्त्री श्रियं शोभां आपुपोष । श्रान्तिमेव द्विधापमिमानः शोभां स्पष्टयति । सहचरी सखी इव ललाटे घर्माङ्कुरान् मुक्तावलीमिव जुगुम्फ । माध्वीकपीतिरिव समस्तमङ्गं अलसयांचकार इति ॥ ११२ ॥

विलसतो हरेर्भुजशिरसि एकस्मिन्नेव स्कन्धे दोर्युग्मं बाहुयुगलं दधाना सती लीलया यदालस्यं तस्माद्धेतोस्तनुवल्लीविवलनां स्वगात्रलतामोटनं अकृत अकरोत् । ततश्च तस्या अतिसुसल्यामृतसिक्तः श्रीकृष्णःस्वंकृतार्थं मन्यते स्मेत्याह ध्रुवमित्यादिना व्यक्तया उत्प्रेक्षया ॥ ११३ ॥

कापिशायनं मधु तेन मत्ता इव तत्र न तत्रपे न लज्जते स्म । तेवमाना क्रीडन्ती "तेवृ देवने" । अत एव क्रीडाभरोत्थेन श्रमेण विलुलिता । कथंभूतेन ललितं यल्लावण्यं तस्याश्रमभूतेन अतिशोभासंपादकेनेत्यर्थः । रसिकभावेन रसिकतया कृष्णेन विन्यस्तं भुजशिरसि स्कन्धे भुजदण्डं न्यस्तं न्यासरूपेण स्थापितम् " पुमानुपनिधिर्न्यास " इत्यमरः चुम्बनेनोपभुक्तवती ॥ ११४ ॥

कस्याश्चन वदनचन्द्रमसमालोक्य चिबुकं उन्नमय्य तस्या अधरे ताम्बूलचर्वितं विततार

* भरमिति असहमाना इति व्यथित इति च क्रियाद्वयस्यापि कर्मकारकम् ।
* वधूरिति अकृत व्यथित इति क्रियाद्वयस्यापि कर्तृकारकम् ।

कृतिकृतिनि गण्डे श्रमजनिताळस्यलस्यमानतया गण्डं निधाय वर्तमानाया माना यामवत्या वदनचन्द्रमसमसमोर्ध्वमालोक्य चिबुकमुन्नमय्य मधुमधुरिमधरेऽधरेताम्बूलचर्वितं वितन्द्रचन्द्राननो वितताार ॥ ११५ ॥

काचन सौभगभगवत्तापरिमलानटन्ती नटन्ती गायन्ती श्रान्ता श्रान्ताभिरामा रामा। दीर्घोच्छ्वासप्रचलसिचये हारहिल्लोललीलं हेलां विभ्रत्युरसि कुचयोः कृष्णपाणिं न्यधत्त। तावप्येकाम्बुरुहपिहितस्वर्णकुम्भाविवास्तामत्यासत्तेःफलमिदमहो यन्न पार्थक्यमेति ॥ ११६ ॥

एवं तासां श्रमजलकणक्लिन्नकर्णोत्पलानां मान्द्यं याते कुवलयदृशां नृत्यवेगे क्रमेण। तूष्णींकत्वं ययुरथ मणीकिङ्किणीनूपुराद्या मन्ये तेषामपि समजनि श्रेयसी श्रान्तिबाधा ॥ ११७ ॥

तथापि तेषां मन्दमन्दकळकोमलझङ्कारकाकलिकया सविभ्रमभ्रमणेन गानेन च सचमत्कारं काश्चन कृष्णेन समं ननृतुः ॥ ११८ ॥

आयामवती यामवती सा वरं न्यंसीत् न पुनरासां रासान्तरङ्गतरङ्गलीलाइतिस्थिते ११९

आश्लेषाधरपानचुम्बनरसालापस्मितालोकनै-
रासां रासविलासकौतुकजुषां यूथैः[२] सयूथाधिपैः
स्वच्छायावलिभिः स्वचेष्टितकलानैपुण्यभाग्भिर्यथा
बालैः श्रीरमणोत्तमोऽप्यरमत प्रेम्णा स मुग्धो हरिः ॥१२०॥

कृष्णाङ्गसङ्गसुखमग्नधियस्तदिच्छास्रोतोनिवेशिततनूलतिका मृगाक्ष्यः। नैवाम्बराणि कुचकञ्चुलिकाश्च केशपाशांश्च हन्त विविदुः स्खलितानि तानि १२१

दद्दौ। कथंभूतायाः गण्डे कृष्णगण्डे गण्डं स्वगण्डं निधाय वर्त्तमानायाः मानस्यादरस्य आयामवत्याः। गण्डे कीदृशे आलस्यलास्ययोर्लावण्येन सहिते चलन्ती ये मणिकुण्डलेतयोस्ताण्डवस्य प्रतिकृतेः प्रतिमायाः कृतौ निर्माणे कृतिनि निपुणे ॥ ११५ ॥

सौभगमेव भगवत्ता ऐश्वर्य्यं तस्याः परिमलान् विद्यातीः अटन्ती प्राप्नुवती उरसि वक्षसि द्वयोरपि कुचयोः एवं कृष्णपाणिं न्यधत्त तावपि कुचावपि अत्यासत्तेः अत्यासन्नतायाः ११६

श्रेयसी अत्यधिका ११७ तेषां किङ्किणीनूपुरादीनाम् ११७ यामवती यामिनी ॥११९॥

आनन्दिनीभिः समं स्वाभिः शक्तिभिरित्यभेतनवाक्येन स्वरूपभूतशक्तित्वेन निरूपयिष्यमाणानामपि तासां स्वच्छायावलिभिरुपमान "रेमे रमेशो व्रजसुन्दरीभिर्यथार्भकः स्वप्रतिबिम्बविभ्रम" इति मूलवाक्यानुरोधेनैव तच्च अन्यदुर्धरतन्नृत्यगीतादिविलासवत्वस्याशंयैव विवक्षयेत्यत आह स्वचेष्टितेति तथैव कृष्णस्य मुग्धेन बालेनोपमानं तत्प्रेममाधुर्य्यातिरोधापिमहैश्वर्य्यकत्वस्यांशस्य विवक्षयेत्यत आह श्रीरमणेति श्रीरमणोत्तमः श्रीपतेरप्यपि मुग्धो बाल इति व्यक्तिरेन तासां माहात्म्येन भङ्ग्या छायात्वं निषिध्य स्वरूपशक्तित्वमेवोपस्थापितमिति ॥१२०॥

तदेवमपि ताभिः प्रेमसुखमयः सर्वो विलासः स्वेच्छामय एवेत्याह कृष्णेति ।१२१।

२ तानिच ताश्च तांश्चेति तानि नपुंसकमनपुंसकेनेति नपुंसकशेषः पाक्षिकमेकवत्त्वञ्च ।

एवं विहरतो हरतो निखिलभुवनवनजाक्षीणां मनांसि तस्य निखिलसौभगवतो भगवतो व्रजराजपुत्रस्य विक्रीडितमीडितमीश्वरैरपि समालोक्य दिवि दिविषद्वध्वो मुमुहुर्मुहुर्रहो रहो निरुपमदधिकरणकरणरणकपराहतधियः समनोरथावताराणां ताराणां ततयश्च हरिहरिहरि णाङ्कोऽपि रासारम्भमारभ्य गतिवैक्लव्येन निष्पन्द एवाभवदत एवोचितमायामिनी यामिनीति ॥१२२॥

ततश्च । यावत्यो या मदनमदतः सुभ्रुवो रागवत्यः श्रीकृष्णेन स्वयमपि तथा तावता रागिणैव । सम्पूर्णार्थाः प्रतिजनमहो कारयामासिरे ता मर्य्यादा हि प्रणयरहसां सैव सत्रायकस्य ॥ १२३ ॥

श्रान्तानां रमणकलाभिरङ्गनानां स्वेदाम्भः स्मितसुभगान्मुखेन्दुविम्बात् । प्रेमार्द्रः करकमलेन कोमलेन प्रत्येकं हरिरपसारयांचकार ॥ स्पर्शेन पाणिकमलस्य पुनः प्रकामं स्विद्यत्सु वक्त्रकमलेषु मृगेक्षणानाम् । स्वेदापनोदकुशलो यदि नैष आसीत्ता एव चेलशकलैर्ममृजुर्मुखानि ॥ १२४ ॥

लावण्यसारसरसानि विलासलास्यवैदग्ध्यमुग्धमधुराणि तदीहितानि कारुण्यमात्रपिशुनानि जगुः सुगीतबन्धेन ता निजनिजप्रतिभाकृतेन ॥ १२५ ॥

एवं श्रमहतीरतिमहती रतिकलाकलापजनिता नितान्तालस्यदस्यदभाजः सलिललीलया लयावाप्तिविरताः कारयितुं ताभिःक्षिप्रमदाभिः प्रमदाभिः समं समन्ततो मृदु मधुरं मधुरञ्जिभिर्मधुकरगायकैः सह गायन्तीभिर्विमलकुमुदकमलाकमलाकरबन्धुनन्दिनीधारा ॥ १२६ ॥

धाराधरमहसा महसानन्देन तेन चिरपुलिनखेलाविलसत्करेणुभिः करेणुभिः सह मदकलकलभेनेव समवजगाहे ॥ १२७ ॥

---

रहो गूढमेव मनोरथस्यावतारः प्रादुर्भावः तत्सहिताच म् आयामिनी दैर्घ्यवती ।१२२।

तत्रश्च परःसहस्रेषु निभृतनिकुञ्जेषु प्रत्येकमेव ताः संप्रयोगादिलीलया रमयामासेत्याह यावत्य इति मदनमदतो हेतोः संपूर्णार्थाः कारयामासिरे "रामोराज्यमकारय" दितिवच्चक्रिरे इत्यर्थः ॥ १२३ ॥

पुनः खिद्यत्सु तत् स्पर्शोत्थहर्षेण इति भावः ॥ १२४ ॥

कारुण्यमात्रपिशुनानीति लावण्यविलासादिविशिष्टानां तदीहितानां प्रकाशिका तत् कृपैव अतस्तामेव तानि पिशुनयन्ति सूचयन्तीत्यर्थः ॥ १२५ ॥

श्रमहतीः श्रमबाधाः लयावाप्त्या विरताः कारयितुं ताभिस्तेन कृष्णेन कमलाकरबन्धुनन्दिनीधारा समवजगाहे । श्रमहतीः कथंभूताः नितान्तमालस्यं ददाति यः स्यदो वेगस्तं भजन्ति धारयन्तीति तथा ताः । धारा कीदृशी विमलानि कुमुदानि यस्मिंस्तथाभूतं कमलं जलं यस्यां सा ॥ १२६ ॥

धाराधरमहसा मेघरुचिना कृष्णेन महे उत्सवे सानन्देन । चिरं पुलिनखेलाभिर्विलसन्तः के मस्तके रेणवो यासां ताभिः ॥ १२७ ॥

ततश्च । वक्त्रैरम्भोरुहवरवनं दोर्लताभिर्मृणाली श्रेणिर्वक्षोरुहकलशकैश्चक्रनाम्नां समाजः । गत्वा हंसीततिरतितरां हन्त जिग्ये वधूभिर्भास्वत्कन्यासलिलगलसं लम्बमानाभिराभिः ॥ १२८ ॥

वक्त्रैः स्वर्णसरोजमण्डलमयं नीरोपरिष्टादभो वक्षोजैर्मदचक्रवाकमिथुनश्रेणीजुषो वीचयः । दोर्भिश्चारुमृणालवल्लिवलिता आपस्तदासन् वधूवृन्दे गच्छति मित्रभानुदुहितुस्तत्कुक्षिदघ्नं पयः ॥१२९॥

ततश्च । लब्ध्वा तासां तनुपरिमलान् पद्मिनीः मोज्झ्य भृङ्गैरभ्युद्यातैस्तरणितनयैवादरादुज्जगाम । हंसैस्तुल्योड्डयनचपलैश्चामरत्वं प्रयातैः श्रान्ताः सर्वाः प्रणयरभसाद्वीजयामास सैव ॥१३०॥

भृङ्गैस्तासामुपरि परितो मण्डलीभूय सद्भिस्तत्पर्यन्तेष्वपि दिविपदां पुष्पवर्षैः पतद्भिः । नीलं वातावधुतमभितः सारिमुक्तावलीकं शोभाहेतोरतनुत किमु व्योमलक्ष्मीर्वितानम् ॥१३१॥

ततश्च । अन्योन्यास्यैः करसरसिजैस्ताडयन्तीषु तोयं मध्ये कृत्वा दयितमभितो मण्डलत्वं गतासु । तासूत्कास्तरणिदुहितुः रोमहर्षा इव श्रीकृष्णस्योरः परिसरमयुस्तोकतुङ्गास्तरङ्गाः॥अन्योन्यग्रथिताङ्गुलीकलिकयोः कृत्वाम्बु पाण्योः समापीड्योच्चैर्जलयंत्रवत् करभयोः प्रान्तेन निक्षिप्यता । धाराभिर्मुहुरायताभिरबलावृन्देन सिक्तो हरिर्मन्ये मन्मथवारुणास्त्ररहसा मूर्च्छन् विद्धो बभौ ॥१३२॥

ततश्च । निःसंहारं तदिदमतनोर्वारुणास्त्रं विदित्वा शक्तोऽप्यस्य प्रतिकृतिविधौ लीलया वारि मग्नः । नीवीदाम्नां हरणकुतुकी तद्धृतिव्यग्रहस्तं भग्नाः सर्वाः पुनरतितरामेक एवासिषेच ॥ १३३ ॥

ततश्च । प्रत्येकं ताः सपदि पयसो द्वन्द्वयुद्धेन जित्वा कृष्णेनास्मिन् पणितमखिलं हारमाकृष्य नीतम् । पृष्ठं याता लघुलघुतरां पीडयित्वास्य बाहू राधा सर्वं यदि हृतवती तामधावत्तदासौ ॥ १३४ ॥

---

कलशकैरित्यल्पार्थे कः ॥ १२८ ॥

चक्रवाकजुषो वीचय इति कुक्षिदघ्नेऽपि जले तरङ्गाणामुच्छूनत्वेन स्तनपर्यन्तस्पर्शादिति भवः ॥ १२९ ॥ उज्जगाम अभ्युत्थितवती ॥ १३० ॥

सारिण्यो मुक्ता एव वटीकं पटलप्रान्तं यत्र तत् ॥ १३१ ॥

अबलावृन्देनकर्तृभूतेन पाण्योरम्बु कृत्वा उच्चैः समापीड्य जलयंत्र इव जलयंत्रेणेव निक्षिप्यता निक्षेपकेण करभयोः प्रान्तेन निमित्तेन सतीभिर्धाराभिः सिक्तः क्षिपतेर्दैवादिकस्य रूपम्" मणिबन्धादाकनिष्ठं करस्य करभो बहि ,, रित्यमरः ॥ १३२ ॥

तस्या नीवेर्धृतौ व्यग्रहस्तं यथा स्यात्तथा भग्ना विद्रुताः ॥ १३३ ॥

आकृष्य नीतं स्वकक्षदेशे स्थापितं अखिलमेव हारं पृष्ठ याता सती हृतवती । कथमित्यत आह अस्य बाहू पीडयित्वा मृणाल्या वा अङ्गुल्या वारिरेखां कनकरूपेण पीडनेन कण्डूतिमुत्पाद्य कक्षमुद्रायामुद्घाटितायां सत्यां स्वयमकस्मादेव जले पतितमित्यर्थः ॥ १३४ ॥

आचिन्वानां कमलममलं कापि गाधेऽपि नीरे गम्भीरत्वाभिनयचकिता शङ्कया पङ्किलाक्षीम् । दोर्भ्यां वक्षोभुवि मुनिविडापीडमुत्थाप्यमानां कान्तेनैनां सरसकुतुकं ताः समीक्षां बभूवुः ॥ १३५ ॥

ततश्च कदाचन । राधादेव्या चपलशफरीघट्टनाशङ्कितायाः कण्ठग्राहं भयचकितया गाढमाश्लिष्यमाणः । मत्याश्लिष्यन्ननुपधि मुहुः श्लाघमानः शफर्यास्तत्सौहृद्यं हरिरतितरां सिष्मिये मोदमानः ॥ १३६ ॥

एवं च कदाचन । पद्मैः पद्मैः स्वयमवचितैस्तन्मृणालैर्मृणालैर्लीलायुद्धं यदजनि मिथस्तत्र योषिन्मणीनाम् । तासां तस्मिन्नजनि कुतुकं पश्यतस्तत्प्रमोदात् कृष्णस्यैव प्रहरणवशेनेव रुग्णं मनोऽभूत् ॥ १३७ ॥

ततश्च । कृष्णे कर्षति कोकयुग्ममबला दोर्भ्यां व्यधुः स्वस्तिकं कण्ठे चारुमृणालमर्पयति ताश्चक्रुर्भुजान् भङ्गुरान् । पद्मं जिघ्रति पाणिभिः पिदधिरे वक्त्रं जलक्रीडने ताभिस्तस्य बभूव सौरतरसः कोऽपीङ्गितैरिङ्गितैः ॥ १३८ ॥

ततश्च । निर्लेपः कुचमण्डलो मृगदृशां हारावली निर्गुणा नेत्राम्भोरुहमञ्जनेन रहितं नीरागमोष्ठाधरम् । निर्ग्रन्थिर्मणिमेखला कचततिर्मोक्षं गता काचन श्रीरासीद्द्विगुणैव सा घनरसे मग्नस्य योग्यं हि तत् ॥ १३९ ॥

पद्मैः केशाभरणममलैरुत्पलैः कर्णभूषां हारं कृत्वा विसलतिकया मेखलां शैवलेन । क्रीडापान्ते मणिमयशिरोभूषणादीनि तानि प्रेम्णा नार्यो दिनमणिभुवे प्रीतिदेयानि चक्रुः ॥ १४० ॥

उल्लास्य वामकरवारिरुहेण वारि झङ्कारिकङ्कणकलेन च दक्षिणेन । संताड्य चारु जलमण्डुकवाद्यलीला मातेनुरुत्सवसमाप्तिफलाभिषिक्ताः ॥ १४१ ॥

---

गाधेऽपि नीरे गम्भीरत्वस्याभिनयेन अभिलनं नीरमिदं नूनमगाधमेव भविष्यति कथमितो निर्गमिष्यामीति स्वाङ्गचेष्टया चकितां स्वाकर्षणार्थं अनुधावन्तं कृष्णमालोक्य शङ्कयापङ्किलाक्षीं व्याकुलितनेत्राम् ॥ १३५ ॥

ततश्च कदाचनेति तदाकर्षणपरिरम्भादिनिर्वाहान्ते सामञ्जस्येन द्वयोश्चलने वृत्ते सतोत्पर्यः । घट्टना फरफरात् कारेण उच्छलितत्वम् । अनुपधि उपाधिशून्यं सौहृद्यम् ॥ १३६ ॥

मिथः तासामेव परस्परं यत् युद्धं अजनि तस्मिन् युद्धे तासां कुतुकमेव अजनि न तु पीडा तत् पश्यतः कृष्णस्यैव मनो रुग्णं कामपीडितमासीत् प्रहरणवशेन इवेत्युत्प्रेक्षा ॥ १३७ ॥

पाणिभ्यां कोकयुग्मं कर्षतीति स्तनालम्भनसूचनं स्वस्तिकमिति तद्वारणार्थं वक्षसि आसनमुद्रया हस्तधारणं एवमेव कण्ठे इत्यादिना व्यञ्जितयोः परिरम्भाधरपानयोर्वारणार्थं भङ्गुरानित्यादि ॥ १३८ ॥

घनरसे जले पक्षे सम्भोगात्मकशृङ्गाररसे ॥ १३९ ॥

सम्भोगान्ते तासां स्वाधीनभर्तृकाभावेन प्रसाधनमाह पद्मैरिति । ननु ताभिः पूर्वमिदानि मणिमयमण्डनानि क धारितानीत्यत आह क्रीडापान्त इत्यादि । दिनमणिभुवे यमुनायै ॥ १४० ॥

उल्लास्येति निर्वापनसमये वाद्य समुचितमेवेति भावः ॥ १४१ ॥

एकैकस्यै स्फटिकचषकैः पूरयित्वा प्रदातुं स्वेच्छापूर्वं नयत सुदृशो यूथपायै विभज्य । इत्येतासां मियसहचरीं कौतुकान् माह कृष्णस्तास्तेस्यांशं तदभिमुखतो न्यस्य भक्तुस्तथैव ॥ १४७ ॥

एवं सति । कर्पूराभे किरणसुधया मोक्षिते शीतधाम्नः मत्यामृष्टे कमलकुमुदामोदिना मारुतेन । प्रादुर्भूतः स खलु शुभ्रभे सैकते भानुपुत्र्याः मत्यासन्ने सुरतसमरे वीरपानप्रमोदः ॥ १४८ ॥

प्रतिचषकं प्रतिबिम्बितशशिबिम्बं विलसदुत्पलामोदम् । उपरिभ्रमदलिलेलितं पुरतस्तासां रराज माध्वीकम् ॥ १४९ ॥

आदौ पाने नयनयुगयोः शोणिमानं द्वितीये वाग्वैवश्यं व्यधिकरणतां हासभीत्योस्तृतीये । दृष्टुं पश्चाद्विहसितुमपि प्राणनाथं तथान्याः पानक्रीडापरिषदि दधे पातुमिच्छां न काचित् ॥ १५० ॥

आतन्वाने अमृतमधुनोर्व्यत्ययेनैव मैत्रीं चन्द्राम्भोजे इव वदनयोर्मण्डले कारयन्तौ । अन्योन्यश्रीवदनचषकोपात्तमन्योन्यदत्तं राधाकृष्णौसममपिवतां साधरोष्ठोपदंशम् ॥ १५१ ॥

एवं प्रवृत्ते मधुपानमहे महेभ्यो मधुरिममणिभिः समदसिन्धुरसौ मदसिन्धुरसौभाग्यः सिन्धुरीभिरिव ताभिर्मधुमदमदनमदतोऽनमदतोदमना मत्तलीलालीलाविचर्धीरधीर इव सन्नपि सन्नपिपासानां पूर्वपानेनैव क्षिप्तमदानां प्रमदानां मदाविलविलसितां सखीभिः सह वाचं वाचंयम इव शुश्राव ॥ १५२ ॥

हे सुदृशः एकैकस्यै यूथपायै विभज्य प्रदातुं स्फटिकचषकैः पूरयित्वा मधूनि नयत १४७ सैकते सिकतामयपुलिने ॥१४८॥ उपरिभ्रमन्तोऽलयो यत्र तत् ॥१४९॥

काचित माध्वीकं पातुमिच्छां न दधे किमर्थं आदौ प्रथमे पाने नयनयोः शोणिमानं द्रष्टुं हासभीत्योर्व्यधिकरणतां हासोत्पादके वस्तुनि विषये भीतिं भीत्युत्पादके हासं द्रष्टुं पश्चात् विहसितुं परिहसितुमिति । एतत्सुखं पानसुखतोऽप्यधिकमिति मन्वानेत्यर्थः । अपिकाराद्व्यजनाद्यैः परिचरितुम् ॥१५०॥

आतन्वाने इति । श्रीवदनमेव चषकं पा- नैदंशस्तदन्तरास्वादनीयं वस्तु तत्सहितम् । किं कुर्वन्तौ चन्द्राम्भोजे चन्द्रकमलरूपे वदनयोर्मण्डले अमृतमधुनोर्व्यत्ययेनैव मैत्रीं आतन्वाते कारयन्तौ । अयमर्थः । राधामुखं चन्द्रः कृष्णमुखं कमलं अतस्तयोः प... स्य अमृतं कमले प्रविशति कमलस्य मधु चन्द्रे प्रविशति मधुमाश्चन्द्रो... परस्परमैत्र्या धर्मविपर्यासः ॥१५१॥

...महेभ्यो महाढ्य "इभ्य आढ्यो धनी" त्यमरः । मदसिन्धुरस्य मत्त... सः । अनमत् अनम्रीभवत् अत एवातोदं निरंकुशं मनो यस्य सः । ... ...चारिता ...दिता धीर्विचारो यस्य सः । सन्नपिपासानां गततृष्णानाम् ॥

आलीन्दुर्मे पिबति मधु किं पीयतामालि सार्धं स्तेऽनोयं यत्तव मुखरुचां कण्ठलग्नेन भाव्यम् । दन्तैश्छेद्योऽमृतमयतया सत्यमस्यावशिष्टं नो पास्यामीत्यथ मधुमती पाणिना मध्वपास्थम् ॥ १५३ ॥

हा कष्टं द्यौः प्रपतति कथं हन्त घूर्णते भूर्नाथ त्वं मां धधर पतता कम्प मे गात्रयष्टिः । इत्थं छद्मस्खलितहसितैरक्षरैर्व्याहरन्ती आसात्काचिद्भुजलतिकया कृष्णकण्ठं दधार ॥ १५४ ॥

भ्राम्यतामुपरि भृङ्गगणानां वीक्ष्य बिम्बमथ कल्कविकल्पात् । वल्लभाय ददती मधुनिन्ये स्वाञ्चलेन चपकाच्चपकान्तः ॥ १५५ ॥

एवं मधुमदाधिका राधिका रामणीयकाधिकारा मत्तलीलां मथयतायतानन्देन सह वनमालिनालिनाम्ना संबोधितेन तेन च तदनुवदता किंचिदवादीत् १५६

आलि मेयन् हरिरसि शठः कृष्णा मे संप्रसीद श्यामे स त्वामभिसरति किं नाथ मे त्वं ह्युपास्यः। इत्यन्योन्यमकृतिविकृतीभावतोऽनन्वितार्थं व्याजल्पन्तौ कुसुमधनुषं निन्यतुर्मूढभावम् ॥ १५७ ॥

मधुचषके प्रतिबिम्बितं चन्द्रमालोक्याह आलीन्दुरिति । अपीतमाध्वीका सखी तामुपहसन्ती प्रत्याह हे आलि तर्हि इन्दुना सार्धमेव पीयतां यस्मात् अयमिन्दुस्तव मुखरुचां स्तेनश्चोरः । पुनः सा प्राह कण्ठेति । सखी प्रत्याह तर्हि दन्तैश्छेद्यः । सा प्राह अस्यावशिष्टं उच्छिष्टम् ॥ १५३ ॥

छद्मं च स्खलितं च हसितं च इति तथाभूतैरक्षरैः । पपततीति वाक्यत्रये अक्षरवृद्धिः। मे मम गात्रयष्टिः पतितेत्यर्थे पपता अत्र विपर्यासरूपमक्षरस्खलनम् । कम्पते इति वक्तव्ये कम्प इत्यक्षरह्रासः ॥१५४॥

बिम्बं मधुनि प्रतिबिम्बं कल्कविकल्पात् मधुनः कल्कोऽयं भविष्यतीति सन्देहाद्धेतोः वल्लभाय मधु ददती दातुं चषकात् एकस्मात् चषकात् चषकान्तः अन्यस्य चषकस्य मध्यं स्वाञ्चलेन सशोध्य निन्ये ॥१५५॥

मधुमदेन अधिका राधिका आलिनाम्ना सख्या एव नाम्ना संबोधितेन तेन वनमालिना सह किंचिदवादीत् । रामणीयके अधिकारो यस्याः स

हे आलि हे सा
राधया संबो
हे प्रेयन् इति कृष्णेन सं
बोधिता राधा तत
हरिः
शठोऽसीति मानाभासमात्र
स्य राधयोक्तं ततो
इति वक्तव्ये
देति कृ
रम्य
न्त्या राधया हे श्याम
किमिति
स्वामी
ततः कृष्णेन हे नाथ
नाम्या
मे
नाथ दासी तवास्मीत्य

पाकं याते मधुमदरसे प्राप्तसंस्कारशेषे वृद्धिं याति स्मरभुजबले चोभयोर्मिथ्याभावात् । रम्या रामाविलनिरसकौ प्राणनाथेन साकं दीर्घोद्रेकां सुरतकलया यापयामास रात्रिम् ॥ १५८ ॥

सान्द्रानन्दकलेवरेण रसिकेनानन्दिनीभिः समं स्वाभिः शक्तिभिराभिरेव परितो गोपाङ्गनानामभिः । इत्थं काव्यकथायथार्थविधये माध्वीकपानादिकां साध्वीद्धां सुरतोत्सवं च दधता कामः कृतार्थीकृतः ॥ १५९ ॥

अथ गगनविटङ्कपारावतेनेव पीयूषदीधितिना भुक्तावशिष्टासु कतिपयधीषु लाजास्विव दिविषद्वधूभिः कुसुमधिया कुसुमैः सह वृष्टपरिशिष्टासु ॥ १६० ॥

रजनिरमण्या रजनिरमणेन त्रोटितस्य देवच्छन्दस्य निपत्य विसृमराणां मुक्तानां पुनर्ग्रथनाय समाहृतानां शेषभूतासु कियतीषु मुक्तास्विव परिमेयतां गतासु तारासु ॥ १६१ ॥

द्वीपात् द्वीपान्तरं चलता कलधौतमयेन गगनपयोधिमध्ये चलनप्रातिकूल्यकारिणा मरुतेव तेन रासविलासेन चिरं विलम्बय्य रक्षितेन चन्द्रमःपोतेन चि-

पाकं याते जीर्णे सतीत्यर्थः तथापि प्राप्तः संस्कारशेषो यत्र तथाभूते याथार्थ्येन स्वपरप्रत्यभिज्ञायां वृत्तायामपि सम्यक्त्वतानपगम एवेत्यर्थः । अत एव स्मरस्य भुजबले वृद्धिं याति गच्छति सति पूर्वमतिमधून्मादघूर्णालस्यादिभिः स्मरविलासो वैदग्धीरहितः शिथिल एवासीदिति भावः । उभयोर्मधुमदशेषकामावेशयोः ॥ १५८ ॥

साङ्गोपाङ्गां रासक्रीडामुपसंहरति सान्द्रेति । स्वाभिः स्वरूपभूताभिः आनन्दिनीभिर्ह्लादिनी त्यभिधानाभिः "विष्णुशक्तिः परा प्रोक्ता" इति "ह्लादिनी सन्धिनी सवित्त्वय्येका सर्वसंश्रये" इति आनन्दचिन्मयरसप्रतिभाविताभिः "इति ह्लादिनी या महाशक्तिः सर्वशक्तिवरीयसी ,, ति विष्णुपुराणब्रह्मसंहितातंत्रादिप्रामाण्यादेवेति भावः । काव्येषु विविधकविकृतेषु कथाः प्राकृतनायकोऽम्बनमेन तेष्वसम्भावितत्वेन च व्यर्था एव याः तासामपि यथार्थकृतये-ता यथार्थीकर्त्तुं तासां स्वयमेवालम्बनीभूयेति भावः ॥ १५९ ॥

रात्रिविरामं वर्णयन्ति । तारासु परिमेयतां गतासु सतीषु विभावरी शरीरपरित्यागाय कृतोद्यमा इव यदा समजनिष्ट तदा खे आकाशे देववधूततिरपि अति अतिशयेन रोपितहृद्यशल्येव तिरोबभूव अन्तरधात् इत्यन्वयः। तारासु कास्विव कुसुमैः सह वृष्टपरिशिष्टासु कतिपयधीषु कतिपयानां पूर्णीषु लाजास्विव । तर्हि अपरा वह्न्योलाजाः क गता इत्यत आह गगनमेव विटङ्कः कपोतपालिका तस्य पारावतेन श्वेतकपोतेनेव चन्द्रेण भुक्तावशिष्टासु १६०

तेजस्वित्वमालक्ष्य उत्प्रेक्षते रजनीति । रजनिरमण्या इति षष्ठ्यन्तं तृतीयान्तं च रजनिरेव रमणी तस्या देवच्छन्दस्य हारविशेषस्य रजनिरमणेन चन्द्रेण विहारवशात् त्रोटितस्य मुक्तानां पुनर्ग्रथनाय तया समाहृतानां मध्ये कियतीषु देवच्छन्दोऽसौ शतयष्टिक,,इत्यमरः १६१

कलधौतमयेन रौप्यमयेन चन्द्रमा एव पोतो मण्डलाकारो नौकाविशेषस्तेन पुनः रासविलासे स-

आलीन्दुमें पिबति मधु किं पीयतामालि सार्धं स्तेऽनोयं यत्तव मुखरुचां कण्ठलग्नेन भाव्यम् । दन्तैश्छेद्योऽमृतमयतया सत्यमस्यावशिष्टं नो पास्यामीत्यथ मधुमती पाणिना मध्वपास्यम् ॥ १९३ ॥

हा कष्टं द्यौः प्रपतति कथं हन्त घूर्णते भूर्नाथ त्वं मां धधर पतता कम्प मे गात्रयष्टिः । इत्थं वृद्धस्खलितहसितैरक्षरैर्व्याहरन्ती त्रासात्काचिद्भुजलतिकया कृष्णकण्ठं दधार ॥ १९४ ॥

भ्राम्यतामुपरि भृङ्गगणानां वीक्ष्य बिम्बमथ कल्कविकल्पात् । वल्लभाय ददती मधुनिम्ने स्वाञ्चलेन चपकाच्चपकान्तः ॥ १९५ ॥

एवं मधुमदाधिका राधिका रामणीयकाधिकारा मत्तलीलां मधयत्तायतानन्देन सह वनमालिनालिनाम्ना संबोधितेन तेन च तदनुवदता किंचिदवादीत् १९६

आलि प्रेयन् हरिरसि शठः कृष्णा मे संमसीद श्यामे स त्वामभिसरति किं नाथ मे त्वं ह्युपास्यः। इत्यन्योन्यप्रकृतिविकृतीभावतोऽनन्वितार्थं व्याजल्पन्तौ कुसुमधनुषं निन्यतुर्मूढभावम् ॥ १९७ ॥

मधुचषके प्रतिबिम्बितं चन्द्रमालोक्याह आलीन्दुरिति । अपीतमाध्वीका सखी तामुपहसन्ती प्रत्याह हे आलि तर्हि इन्दुना सार्धमेव पीयतां यदस्मात् अयमिन्दुस्तव मुखरुचां स्तेनश्चोरः । पुनःसा प्राह कण्ठेति । सखी प्रत्याह तर्हि दन्तैश्छेद्यः । सा प्राह अस्यावशिष्टं उच्छिष्टम् ॥ १९३ ॥

वृद्धं च स्खलितं च हसितं च इति तथाभूतैरक्षरैः । पपततीति वाक्यत्रये अक्षरवृद्धिः। मे मम गात्रयष्टिः पतितेत्यर्थे पपता अत्र विपर्यासरूपमक्षरस्खलनम् । कम्पते इति वक्तव्ये कम्प इत्यक्षरह्रासः ॥१९४॥

बिम्बं मधुनि प्रतिबिम्बं कल्कविकल्पात् मधुनः कल्कोऽयं भविष्यतीति सन्देहाद्धेतोः वल्लभाय मधु ददती दातुं चपकात् एकरागात् चपकात् चपकान्तः अन्यस्य चपकस्य मध्यं स्वाञ्चलेन संशोध्य निम्ने ॥१९५॥

मधुमदेन अधिका राधिका आलिनाम्ना सख्या एव नाम्ना संबोधितेन तेन वनमालिना सह किंचिदवादीत् । रामणीयके अधिकारो यस्याः सा ॥१९६॥

हे आलि हे सखि इति प्रथम राधया संबोधितः कृष्णः ततः हे प्रेयन् इति कृष्णेन संबोधिता राधा ततश्च हरति चोरयतीति हरिः स्त्रीचोरस्त्वमालि शठोऽसीति मानाभासमालम्ब्य राधयोक्तं ततो हे राधे त्वं प्रसीदेति वक्तव्ये कृष्ण मे संप्रसीदेति कृष्णेनोक्तं ततो रुष्यन्त्या राधया हे श्याम सा त्वामभिसरति किमिति वक्तव्ये श्यामे स त्वामभिसरति किमित्युक्तं ततः कृष्णेन हे नाथे त्वमेव मे उपास्या नान्या इति वक्तव्ये नाथ मे त्वं ह्युपास्य इत्युक्तम् नाथ दासी तवास्मीत्यलङ्कारकौस्तुभे पाठः । मूढभावं निन्यतुः मोहप्रापयामासतुरित्यर्थः ॥१९७॥

पाकं याते मधुमदरसे मात्रसंस्कारशेषे वृद्धिं याति स्मरभुजबले चोभयोर्मिश्रभावात् । रम्या रामाविनिनिरसङ्को प्राणनाथेन सार्कं दीर्घोद्रेकां सुरतकलया यापयामास रात्रिम् ॥ १५८ ॥

सान्द्रानन्दकलेवरेण रसिकेनानन्दिनीभिः समं स्वाभिः शक्तिभिराभिरेव परितो गोपाङ्गनानामभिः । इत्थं काव्यकथायथार्थविषये माध्वीकपानादिकां साध्वीद्दां सुरतोत्सवं च दधता कामः कृतार्थीकृतः ॥ १५९ ॥

अथ गगनविटङ्कपारावतेनेव पीयूषदीधितिना भुक्तावशिष्टासु कतिपयथीषु लाजास्विव दिविषद्वधूभिः कुसुमधिया कुसुमैः सह वृष्टपरिशिष्टासु ॥ १६० ॥

रजनिरमण्या रजनिरमणेन त्रोटितस्य देवच्छन्दस्य निपत्य विसृमराणां मुक्तानां पुनर्ग्रथनाय समाहृतानां शेषभूतासु कियतीषु मुक्तास्विव परिमेयतां गतासु तारासु ॥ १६१ ॥

द्वीपात् द्वीपान्तरं चलता कलधौतमयेन गगनपयोधिमध्ये चलनमातिकूल्यकारिणा मरुतेव तेन रासविलासेन चिरं विलम्बयय रक्षितेन चन्द्रमःपोतेन चि-

पाकं याते जीर्णे सतीत्यर्थः तथापि प्राप्तः संस्कारशेषो यत्र तथाभूते याथार्थ्येन स्वपरप्रत्यभिज्ञायां वृत्तायामपि सम्यक्स्ततानपगम एवेत्यर्थः । अत एव स्मरस्य भुजबले वृद्धिं याति गच्छति सति पूर्वमतिमधून्मादघूर्णालस्यादिभिः स्मरविलासो वैदग्धीरहितः शिथिल एवासीदिति भावः । उभयोर्मधुमदशेषकामावेशयोः ॥ १५८ ॥

साङ्गोपाङ्गां रासक्रीडामुपसहरति सान्द्रेति । स्वाभिः स्वरूपभूताभिः आनन्दिनीभिर्ह्लादिनीत्यभिधानाभिः “ विष्णुशक्तिः परा प्रोक्ता ” इति “ ह्लादिनी सन्धिनी संवित्त्वय्येका सर्वसंश्रये ” इति आनन्दचिन्मयरसप्रतिभाविताभिः “ इति ह्लादिनी या महाशक्तिः सर्वशक्तिवरीयसी ,, ति विष्णुपुराणब्रह्मसंहितातंत्रादिप्रामाण्यादेवेति भावः । काव्येषु विविधकविकृतेषु कथाः प्राकृतनायकालम्बनत्वेन तेष्वसम्भावितत्वेन च व्यर्था एव याः तासामपि यथार्थीकृतये-ता यथार्थीकर्तुं तासां स्वयमेवालम्बनीभूयेति भावः ॥ १५९ ॥

रात्रिविरामं वर्णयति । तारासु परिमेयतां गतासु सतीषु विभावरी शरीरपरित्यागाय कृतोद्यमा इव यदा समजनिष्ट तदा खे आकाशे देववधूततिरपि अति अतिशयेन रोपितहृद्रयशल्येव तिरोबभूव अन्तरधात् इत्यन्वयः। तारासु कास्विव कुसुमैः सह वृष्टपरिशिष्टासु कतिपयथीषु कतिपयानां पूरणीषु लाजास्विव । तर्हि अपरा बह्व्यो लाजाः क्व गता इत्यत आह गगनमेव विटङ्कः कपोतपालिका तस्य पारावतेन श्वेतकपोतेनेव चन्द्रेण भुक्तावशिष्टासु १६०

तेजस्वित्वमालक्ष्य उत्प्रेक्षते रजनीति । रजनिरमण्या इति षष्ठ्यन्तं तृतीयान्तं च रजनिरेव रमणी तस्या देवच्छन्दस्य हारविशेषस्य रजनिरमणेन चन्द्रेण विहारवशात् त्रोटितस्य मुक्तानां पुनर्ग्रथनाय तया समाहृतानां मध्ये कियतीषु देवच्छन्दोऽसौ शतयष्टिक,,इत्यमरः १६१

कलधौतमयेन रौप्यमयेन चन्द्रमा एव पोतो मण्डलाकारो नौकाविशेषस्तेन पुनः रासविलासे स-

रात् पुनश्चलता प्रतीचीदिग्द्वीपनिकटे समासाद्यमाने सति विभावरी वरीयसा भविष्यद्भगवद्विरहदुःखेनेव शरीरपरित्यागाय कृतोद्यमेव यद्यजनिष्ट तदा तदाकलनखेदेव खे देववधूततिरपि तिरोऽतिरोपितहृदयशल्येव बभूव ॥ १६२ ॥

एवं विलासविरता निशोऽवसानेऽतिदीर्घदीर्घायाः। सपदि पतिम्मन्यानां पुनरागमन् योषितः सदनम् ॥ १६३ ॥

तेऽपि च न पतिम्मन्यास्ताः सुदृशः स्माभ्यसूयन्ति। छायारूपतया ताः पार्श्वस्था इत्यमंसताविरतम् ॥ परपुरुषत्वं तस्य न परनारीत्वं च नो तासाम्। परपुरुषत्वं तस्मिन् परनारीत्वं च तास्वेव ॥ १६४ ॥

विक्रीडितमिदममलं तस्य च तासां च सर्वदा सिद्धम्। लोकानुग्रहहेतोः केवलमवनौ प्रकाशमायातम् ॥ १६५ ॥

आकर्णयति य एतत्कर्णयुतः कर्णरमणीयम्। यो वर्णयति च न तयोः सौभाग्यं स्याद्वचोविषयः ॥ १६६ ॥

इत्यानन्दवृन्दावनेकैशोरलीलालताविस्तारे रासविलासो नाम विंशस्तवकः॥ २०॥

मात्ति सति चलता सता प्रतीचीदिग्द्वीपस्य निकटे प्राप्यमाणे सति वरीयसा अतिवृहता तदाकलनेन तद्दर्शनेन खेदो यस्याः सा ॥ १६२ ॥

सपदि तत्क्षणादेव "लोकवल्लीलाकैवल्या" दिति न्यायेन प्रभातागमचकिता इति भावः १६३

लोकदृष्ट्या प्रसक्तं वैधर्म्यं सिद्धान्तरीत्या निरस्यंस्तस्य प्रयोजनभूतां रसपुष्टिं च व्यञ्जयन्नाह परपुरुषत्वमिति। तस्य शक्तिमत्त्वात् तासां च ह्लादिन्याख्यस्वरूपशक्तित्वात् परत्वमेव तावन्नास्तीति भावः। शृङ्गाररसपुष्टिमय्या लोकरीत्या तु तस्मिन्नेव परपुरुषत्वं तास्वेव परनारीत्वमिति एवकारस्योभयत्रान्वयात् द्वारकानाथवैकुण्ठनाथादिस्वरूपेषु रुक्मिणीलक्ष्म्यादिह्लादिनीवंशेषु च निरुपधिगाढरागानभिव्यक्तेर्वशीकारम्भावदर्शनाच्चस्वीयात्वपतित्वलीलाविष्कारेण न तथा रसपुष्टिरिति सूचितम्। अत एवोक्तं " यत्र निषेधविशेषः सुदुर्लभत्वं च यन्मृगाक्षीणाम्। तत्रैव नागराणां निर्भरमासज्जते हृदय " मिति। यत्तु परकीयायामधर्महेतुकत्वेनानौचित्याद्रसाभासत्वमुक्तं तत् प्राकृतनायकमात्रस्यैव न तु धर्माधर्माभ्यां नियन्तुमशक्यं नियन्तृचूडामणीन्द्रं श्रीकृष्णं यदुक्तं "लघुत्वमत्र यत् प्रोक्तं तत्तु प्राकृतनायके" इति नेष्टा यदङ्गिनि रसे कविभिः परोढा तद्गोकुलाम्बुजदृशां कुलमन्तरेणेति ॥ १६४ ॥

नचैषा रीतिः प्रकटप्रकाश एव केवलं किन्त्वप्रकटप्रकाशेऽप्येषैव लीला नित्यसिद्धैवेत्याह विक्रीडितमिति ॥ १६५ ॥

अनिर्वाच्यं सौभाग्यं स्यादित्यनेन व्रजजनवल्लभत्वं स्यादिति सौभाग्यपदेनिवेशयतीतिद्योतितम् १६६

याल्लयेषु मधुरा हरिगाथास्तासु कृष्णचरितान्यमृतानि।
तेष्वपि प्रमदद्विव्यवुर्मीमे रासकेलिमनु मज्जतु चेतः।
इत्यानन्दवृन्दावने टीकायां सुखवर्तिन्यां विंशस्तवकसंगमनम्। २०।

## एकविंशः स्तवकः

अथ लोकाचारचारवोपपन्नमहोला होलाका नाम खेला खेलालसैर्दिविषद्भिरपि विलोकयितुमाकाङ्क्षणीयाक्षणीया व्रजवलये जवलयेन यदि कदाचनवबले ? नववले तदा तस्मिन्नुत्सवे स वेणुपाणिः कुतूहली हली चानुवृन्दावनमहि महिम्ना तस्य महस्य विगतत्रपे तत्र पेशलताशलता वैदग्ध्येन मुग्धे तादृशां सुदृशां सुभगानां मण्डले मण्डलेपेनेव चिक्कणे कौतुकपीयूषयूषस्य स्वस्वानुरागवतीजनेन पृथक् पृथगुपगीयमानौ ॥ २ ॥

मानौचित्येन पृथक् पृथक् विहरन्तौ हरन्तौ निजनिजरमणीमनो मनोरमालेपमालामालावसनालङ्कारचमत्कृतिकृतिनौ सरागं रागं कमपि चालयन्तौ तत्स्वरग्रामग्राममूर्छनर्छनातिदक्षताक्षतानन्दौ देशाचारवशतोऽवशतोपतया सह सहचरैरपि मर्णयिभिः ॥ ३ ॥

श्रवणसुखकरकरतालिकाचक्रवलयझङ्कारानुकूलमधुरतावादिवादित्रसममसमदचर्चचर्चरीद्विपदिकादिकान्तगानपरैरपरैरपि परिजनैः सम समन्ततो मधुरजनिमधुरजनिशोभातिशये हिमकरकरनिपातशातशावल्यवल्यसौभगे तरुतरुणिमाविरामरामणीयके काननोद्देशे केकाननोद्देशे चिरं विलेसतुः ॥ ४ ॥

होलाकेल्यनुरागरागनिकरप्रोद्दानकौतूहले रासारामभृताविरामरमणे रामे सरामेहरौ । वंशीचौर्य्यमनु प्रहासनपटौजल्पस्यनल्पं घटौ दैवादागतशङ्खचूडमवधीदत्रैकविंशे हरिः ॥ शारदीं रासलीलामुपवर्ण्य तादृशीं वासन्तीं होलाकालीलामनुवर्णयति अथेति होलाका नाम खेला यदि कदाचन फाल्गुनादिमासे ववले प्रावर्त्तत तदा स कृष्णो वेणुपाणिः कुतूहली हली च स्वस्वानुरागवतीजनेन पृथक् पृथगुपगीयमानौ विलेसतुरित्यन्वयः । लोकाचारस्य चारवेण चारुतया उपपन्नं मह उत्सवं लातीति तथा सा । महस्तूत्सवतेजसोरिति । नानार्थसान्तवर्गः । व्रजमण्डले क्षणीया प्रतिक्षणभवाः प्रातः मध्यान्हप्रदोषनिशीथादिकालनियमोऽपि तत्र नास्तीति भावः । जवलयेन शीघ्रयोगेन ववले यदि प्रवला बभूव ॥ १ ॥

अनुवृन्दावनमहि वृन्दावनभूमि लक्ष्यीकृत्य सुदृशां मण्डले पेशलतया सौन्दर्य्येण चातुर्य्येण वा शलता प्रचरता वैदग्ध्येन मुग्धे मनोहरे कौतुकमेव पीयूषं तस्य यूषस्य द्रवस्य मण्डलेपेनेव चिक्कणे ॥ २ ॥

स्वराणां ग्रामाणां ग्रामस्य समूहस्य मूर्छनायाश्च ऋच्छने गतौ अतिदक्षतया अक्षतानन्दौ अनुपहतहर्षौ । अवशतोपो येषां तत्तया सहचरैरपि सह अतिमहत्त्वात् प्राबल्याच्च हर्षो येषां न वशीभूत अत एव हर्षस्यैव ये वशास्तैरित्यर्थः ॥ ३ ॥

मधुरतया मधुरतो वा वादितु शीलं यस्य तथाभूतं यद्वादित्रं मृदङ्गादिवाद्यं तत्समा तदनुरूपा मदचर्चा कस्तूरीचर्चैव या चर्चरी तया सहितानां द्विपदिकादीनां कान्तगानपरैः । मधुरा जनिरुत्पत्तिर्यस्यास्तथाभूता या मधुरजनिर्वसन्तरात्रिस्तया शोभातिशयो यस्मिंस्तथाभूते काननोद्देशे केकानां मयूरवाणीनां अननोद्देशो जीवनोद्देशो यत्र तस्मिन् हिमकरस्य करनिपातेन शातं सुखदं शावल्यं वैचित्र्यं तेन वल्यं सौभगं यस्य तस्मिन् ॥ ४ ॥

तत्र च । वारुणीमदविघूर्णितेक्षणो गण्डमण्डलचलैककुण्डलः । स्वानुरागिरमणीभिरावभौ गाननर्त्तनकुतूहली हली ॥ किंच । विश्लथेन वपुषो हिमगौराद्वाससातिशितिना कृतशोभः । अर्द्धमर्द्धमुरसः स्खलतेव भ्राजते स्म तिमिरेण शशाङ्कः ॥ ५ ॥

किंच । क्षणं नटति चर्चरीद्विपदिकादिगानक्रमे बलः प्रमदविह्वलः स्वयमभून्मदो मूर्तिमान् । क्षणं हसति गायति क्षणमपि प्रियाभिः समं रजः किरति कौङ्कुमं सुरभिकाममसिन्दूरवत् ॥ ६ ॥

चन्द्रावली निजसखीनिकरेण राधा प्राणप्रियेण ललितादिसखीजनेन । श्यामा निजालिनिचयेन निजेन भद्रा स्वालीकुलेन निवहैः सह यूथपानाम् । अन्योन्यहासपरिहासविलासपूर्वं सैन्दूरकौङ्कुमरजोनिकरं किरन्त्यः । वीणादिवादनविधानरसेन मुक्तकण्ठं जगुर्द्विपदिकां मदिरायताक्ष्य. ॥ ७ ॥

कृष्णः कलेन मुरलीनिनदेन तासां विद्रावयन् सुचिरसंचितगानगर्वम् । काश्मीररेणुनिकरेण समं समन्तात्ताभिः प्रमोदरभसेन विकीर्य्यते स्म ॥ ८ ॥

अवाङ्मुखतया वरं सहत एव मुग्धभ्रुवां सझङ्करणकङ्कणं करतलेन कीर्णं रजः । मदाविलकलाकुलः कलभराजवन्निश्चलः समुज्झति न चर्चरीरुचिरवेणुगानं हरिः ९

एवं खेलाविक्रमक्रमतः सविभ्रमभ्रमणवशात् बलदेवालम्बिनीनां नितम्बिनीनां नितरामुन्मदानां दानान्ध्यबन्धुरसिन्धुरसिंहवत् कुतूहलिना हलिना सह तत्रैव सान्निध्ये सति ॥ १० ॥

गायन्त्यो गोपयन्त्यश्चलवलयकरोत्तालतालानुकारं नृत्यन्त्यो नर्त्तयन्त्यः पदकपललसन्मञ्जमञ्जीरघोषैः । रामा रामानुरक्ता ऋजुसरसदृशो लौकिकेनोपहासेनादूरादेवराङ्गे सकुतकमकिरन् कौङ्कुमीः केलिधूलीः ॥ ११ ॥

ततश्च । कृष्णापाङ्गेङ्गितज्ञैः सहचरनिकरैर्लोहितश्वेतपीतान् पिष्टातानुत्किरद्भिर्युगपदुपचितैर्द्राव्यमाणासु तासु । गाम्भीर्य्यस्निग्धमुग्धोल्लसितविहसितः कूजिते नैव वेणोः कृष्णस्ताः पर्य्यहासीदथ परिजहसुः सुस्वनं कृष्णवध्वः॥ १२॥

---

हिमगौराद्वपुषः सकाशात् विश्लथेन अतिशितिना अतिश्यामेन वाससा अन्तरीयेण च अर्द्धं अर्द्धं उरसः सकाशात स्खलतेव ॥५॥ स्पष्टम्॥ ६ ॥

सपक्षसुहृत्पक्षतटस्थपक्षप्रतिपक्षत्वरूपचातुर्विध्येऽपि तासां होलाकोत्सवे मिथः सौहार्दमेवोदगादित्याह चन्द्रावलीति ॥ ७ ॥ ताभि कर्त्रीभिः कृष्णो विकीर्य्यते स्मेत्यन्वयः ॥ ८ ॥

कलभराजपक्षे, मदेनाविलः कलेनाकुलश्चेति सः हरिपक्षे मृगमदरसलिप्तो वैदग्धीपूर्णश्चेति सः ॥ ९ ॥

दानान्ध्येन बन्धुरश्चासौ सिन्धुरसिंहो मत्तगजोत्तमश्चेति तथा तेनेव ॥ १० ॥

ऋजुसरसदृश इत्यनेन भ्रातृजायात्वाभिव्यञ्जनोचितो भाव एव तासां कृष्णे दर्शितः ११

पिष्टातान् सुगन्धधूलीः "पिष्टातः पटवासक" इत्यमरः ॥ १२ ॥

एवं करकिशलयवलयललितोत्तालतालपुरःसरं होहो हीहीति हासपरिहासपरिपाट्या परितः परिसरत्सु कृष्णजनेषु तत्कुतूहलहलहलाशब्देन कुपितो मदकलकलभ इव मदमत्तप्रवरो हि रोहिणीसुतः केलिधूलीधूलीलया खेलाजित्वरो जित्वरो भवन्नभिधावति स्म ॥ १३ ॥

तदवसरे सिंहावलोकन्यायेन गतयाप्यागतयेव लज्जया जयाकाङ्क्षिण्येव हृतमतिभामतिभानास्वपसृतासु तासु कृष्णवनितासभासु भासुरतया समुपसर्पत्सु सहचरेषु स भगवानेककुण्डली कुण्डलीन्द्रभोगभुजो भुजोपपीडं हसन्नेव सहचरानापीड्य केलिधूलिभिर्धूसरयामास ॥ १४ ॥

तैरथ रथचरणपाणिसहचरैर्वेलात् बलात्स्वं मोचयित्वा संभूय भूयः सकलैरेव युगपदसाध्वसं साध्वसंभ्रान्तः स खलु खेलाकौतुकेन केनचिदगणितगौरवैरवैकमखरमुखरम्यैः सिन्दूरपांशुभिरुदंशुभिरुदच्यमानैः पर्य्यभावि ॥१५॥

दरहसितसितदशनज्योत्स्नास्नानसरसदशनवसनं स नन्दकुमारो मा रोचतेऽयं वोऽन्यायो मे यदेकाकिनमार्यमनार्यमनास्त्वादृशो गणः संभूय परिभवतीति यदि निवारयामास ॥१६॥

तदातदाकमलरागरागपरिष्वक्तं हीरकस्तम्भमिव जवारुचिजवारुचिरं महास्फटिकाङ्कुरमिव ॥१७॥

बालारुणारुणायितं सुमहिमहिमगिरिशिखरमिव ॥१८॥

प्रचलकोककोकनदकाननाक्रान्तं पुण्डरीकखण्डमिव ॥१९॥

संध्यारागपरभागपरभासुरं पूर्णचन्द्रमण्डलमिवः ॥२०॥

करकिशलययोर्लवेन श्लेषेण ललितः उत्तालः उत्कटः श्रेष्ठो वा यस्तालस्तत्पुरस्सरम् । उत्ताल उत्कटे श्रेष्ठे इति मेदनी । हि यतो मदेन मत्तप्रवरः अतः कुपितः केलिधूलीनां धूथालनं तल्लीलया खेलैव आजिर्युद्धं तत्र त्वरा यस्य सः ॥ १३ ॥

कुण्डलीन्द्रभोगभुजः शेषनागशरीरसदृशभुजद्वयः भुजोपपीडं भुजाभ्यामुपपीड्य ॥१४॥

रथचरणपाणेः कृष्णस्य सहचरैः स बलदेवः साध्वसंभ्रान्तोऽपि पर्य्यभावि अजीयत ।१५।

वो युष्माकं अयमन्यायो मे मह्यं मा रोचते ॥१६॥

कमलरागस्य रागेण रक्तिम्ना परिष्वक्तमित्यनेनातिकोमलानां सिन्दूररेणूनां काठिन्यं प्रसक्तमित्यन्ययोपमिमीते जवानां रुचिजवेन कान्तिवेगेन आ सम्यक् रुचिरम् ॥१७॥

तेनापि स्फटिकस्य स्वीयवर्णातिलोपान्नातिसारस्यामित्यत आह बालारुणेन प्रातरुदितसूर्य्येण अरुणायितम् ॥१८॥

अनेनाप्यतिशीतलानां तेषां औष्ण्यं प्रसक्तमित्यन्यथाह प्रचलाः कोकाश्चक्रवाका यत्र तदित्युपमानस्यैव विशेषणं प्रक्रान्तयमकभङ्गभयाभावाय ॥१९॥

अत्रापि कोकनदवर्णेनारुणीभावो नास्ति पुण्डरीकस्येत्यत आह संध्यारागेति अत्र तेषां मृदुलत्वं अनुष्णत्वं चन्द्रस्य स्वरूपातिरोधानं चेति सर्वं समञ्जसम् ॥२०॥

सिन्दूररेणुरूषितं मदकौतुकशवलं वलं विलोक्य तद्वनिता नितान्तरागिण्यः पुनस्तमभितोऽभितोषेण सह नृत्यगीतवाद्याभिनयेन विहारविक्रमतः क्रमतः किपदन्तरिता यदि बभूवुः ॥ २१ ॥

तदा तदारात् कृष्णमहेला कामहेला कापि कापिशायनपानमत्तयेव महनीयमहनीयमानोत्कण्ठया समुल्लास ॥ २२ ॥

कथं ह्रियतेऽस्य वंशिका वंशिकागुरुभेभुजाभोगतो गतोल्लासश्च कथमयं सम्पद्यते तद्वियोगेन ॥ २३ ॥

योगेन यस्याः कूजितेनास्माकमेतावति गानकौशल्ये शल्येन विद्धमिव वैदग्ध्यं भवति । तदियमवश्यं वंशी वशीभावमापादनीयेति परस्परं मन्त्रणानैपुण्यपुण्यता मुद्राव्य ॥२४ ॥

न साक्षादाकृष्यामवलिमुरलीनास्यकरतो विरामोऽस्यानास्याप्यवतरतिवैवश्यस ॥ मयः॥कथंकारंभूयादपहरणमस्याइतिदरस्मितंकर्णेकर्णेनिभृतमलपन्पङ्कजदृशः ॥२५

एवं निभृतभृतयुक्तयो विवशीकरिष्यमाणपुरुषवृषभा वृषभानुपुत्रीमुपसृत्य सुभगे यदि कृष्णवंशीवशीकरणलोभवती भवती कदा कृतकृतकवाम्या क्षणं भवतु तदा कृष्णस्य वंशीवादनप्रगल्भतां अपयास्यति यास्यति नः सङ्गीतमतिकौशलमिति कथयन्तीषु निभृत सर्वासु ॥ २६ ॥

पूर्वानुवृत्तेन अमर्षेण मदकौतुकाभ्यां च संचारिभ्यां शवलं जातशवलीभावम् । नृत्यगीतवाद्यैरभिवाद्येन आपादरणीयेन अभिनयेन ॥ २१ ॥

कृष्णेन सार्द्धं यदिरामकान्ताः खेलन्त्य एवाचिरतो जिताः स्युः । कृष्णं सकान्तं ससखिन्जं हली जिगीषयाधावति तर्हि मत्तः। कृष्णः सखीनेव नियोधयन् स्वयं तैस्तं विजित्यैव यदैति दूरम्। तदा बलः खेलति स प्रियाभिः कृष्णस्तदा स्वाभिरिति व्यवस्था । अत एव तदा तदारात् दूरं श्रीराधादिभिर्निजकान्ताभिः कृष्णेन खेलायां प्रक्रम्यमाणायां सत्यामित्यर्थः । कापिशायनं मधु । महनीया श्लाघनीया च महे उत्सवे नीयमाना च या उत्कण्ठा तया ॥ २२ ॥

अस्य कृष्णस्य भुजाया भुजस्य सर्पतुल्यस्य भोगः फणतुल्यो यः पाणिस्तस्मात् वंशिकाया अगुरोरिव सुरभिर्यस्य तस्मात् । "वंशिकागुरुराजार्हलोहाक्रिमिजजेक्षक" मित्यमरः ॥ २३ ॥

मन्त्राणां नैपुण्यस्य पुण्यता चारुता "पुण्यं तु चार्वपी"त्यमरः ॥ २४ ॥

कथंकारमिति न साक्षादित्यादिना अपहरणस्य त्रयाणामुपायानामुक्तानां मध्ये कः खल्वत्र फलिष्यतीति भावः ॥२५॥

तत्र तृतीय एवोपायः प्रबलः सुकरश्च ताभिर्निर्णीत इत्याह एवमिति । विवशीकरिष्यमाणः पुरुषः वृषभः कृष्णो याभिस्ताः कृतं कृतकं कृत्रिमं वाम्यं मानलक्षणं यया तथाभूता भवती भवतु । ततश्च त्वत्प्रसादमनुपलभ्य विवशीभविष्यतोऽस्य कृष्णस्य वंशीं प्रयत्नवधाने सति तां सुखेन वयं चोरयाम इति भावः ॥२६॥

कुसुमासवस्तु वस्तुतो न जानन्नपिसहजवाचालतालताकुसुमपरिमलया मति-भया भयाभावतः कृष्णं जगाद । वयस्य इमाः खलु मुरलीगानानुरूपं सुरूपं सुष्ठु गातुमसमर्था मुरलीमपहर्तुं मन्त्रयन्ते तदिमां मयि समर्प्यकण्ठेनैव गीयतां । मम ब्राह्मणस्य प्रभाप्रभावतो निकटं प्रकटं प्रयास्यन्ति नेमाः ॥ २७ ॥

कृष्ण आह वयस्य ! भवतो वसन्तोत्सव एव दृष्टा ब्राह्मणस्य प्रभावाः प्र-भावाहुल्यंच तदद्य मुरलीरक्षणरक्षणक्षमता तव साधीयसी भविष्यतीति कः सन्देहः ॥ २८ ॥

स आह भो वयस्य ! यस्य मन्त्रणतो भवान् सर्वोत्कर्षशाली शालीनः सो-ऽहं मुरलीं रक्षितुमेव समर्थो न भवेयं भवे यं कोऽपि द्रष्टुमपि नेष्टे मेष्टे मयि त-त्राविश्वासं कार्षीः ॥ २९ ॥

कृष्ण आह यदि भवत्करतलतोऽतल्पतोषमहोत्सवसबहुमदाभिराभिराकृष्यते मुरली तदा किमध्यवसेयं सेयं वा कथं लप्स्यते । स आह दृश्यतां मत्तपः प्रभाव इति निःसाध्वसं मुरलीमाकृष्य कक्षे कृत्वा वयस्य कण्ठेनैव गीयताम् । कृष्णः यथा रुचितं भवते इति गातुमुपक्रमते ॥ ३० ॥

ततश्च । कृष्णे गायति चर्चरीमतिकलां कण्ठेनवीणाजिता स्तभ्नाति स्म क-लिन्दजा तरुलताश्रेण्योऽश्रुवर्षं दधुः । शृण्वन्तः श्रवणोपकण्ठगलितं स्वेदाम्बुत-न्माधुरी धारास्यन्दधिया लिहन्ति रभसादन्योन्यमेणीगणाः ॥ ३१ ॥

तदा तदाश्रुत्य श्रुत्यतिसुखदं स्वरग्राममश्रुतिजातिजातिकौशलं कुसुमासवः स बहुगर्वमाह । भो ललिते ललितेयं चर्चरीगीतिरुद्गीता प्रियवयस्येन वयस्येनद्रा-नकौशलं न श्रुतम् । गर्ववत्यो भवत्यो भविकविकसदीदृशं न गातुमर्हन्ति ।३२।

किञ्च ताभिरचिन्तनीयो दैवघटितः कोऽपन्य एव वंशीहरणे उत्तम उपायोऽभवदित्याह कुसुमासवस्त्वित्यादिना प्रबन्धेन ॥२७॥

प्रभावाहुल्यं च दृष्टम् ॥ २८ ॥

शालीनः श्रेष्ठः । भवे संसारे यं मां कोऽपि जनः श्लेषेण को ब्रह्मापि द्रष्टुमपि किं पुन-र्धर्तुं न ईष्टे न शक्नोति एतेन स्वस्य ईश्वरवन्माहात्म्यं वस्तुतस्तु पलायनविद्यापाण्डित्यमेव ध्वनितम् । तत्र मयि इष्टे प्रिये सख्यौ अविश्वासं मा कार्षीः ॥ २९ ॥

अतल्पो गम्भीरस्तोषो यत्र तथाभूते महोत्सवे बहुमदसहिताभिः ॥ ३० ॥

वीणाजिता वीणाजयिना । श्रवणयोरुपकण्ठे निकटे गलितं स्वेदाम्बु हर्षोत्थं अन्योन्यं लि-हन्ति तत्र कारणमुत्प्रेक्षते तस्य गानस्य माधुरीधारायाः स्यन्दः क्षरणम् । गानमाधुरीधारेवेयं श्रवणयोः पूर्णीभूय तत्रामान्ती स्यन्दते तदेनां लिहामेतीव बुद्ध्या इत्यर्थः ॥ ३१ ॥

श्रुतिजातिजं च तत् । अतिकौशलं चेति तत् । वयसि मध्ये एनत एतत् भविकं सुखं यथा स्यात्तथाविकसत् प्रकाशमानम् ॥३२॥

सङ्गीतविधाह। अये विगतचर्च चर्चरीमितोऽपि समीचीनां चीनांशुकधारिणीयं ललिता यदि गातुं चमते तच्चमते तदा मुरलीं हारयसि। मतिकृपण पण एष क्रियताम् ॥ ३३ ॥

स आह। संगीतविधे संगीतविधेयं मदेकमात्रबोध्या बोध्यानपथेऽपि दुर्गमेति मया समयासन्नबोधेन समीचीनामति यदि निरुच्यते रुच्यतेयमस्यास्तदैव दैवत योग्याभवति। साह विमवटो नेदं वेदगानं वेदगा नन्दन्ति येन तदस्य बोधे को भवान्। कृष्णः स्मयमानो गायन्नेव कुसुमासवं तादृशा दृशा ददर्श तदा तदाकूतज्ञता तादृशा दृशास्य जायते ॥३४॥

ततश्च विदिताकूतः पुनराह कुसुमासवः। अयि! समदे! मदे! मदेकबोध्यतां संगीतस्य यदि न प्रमापयसि पयांसि स्तब्धता अश्रुजलाविलता लतातरुषु विपुलपुलकता खगमृगादिषु यदि वयस्यगानवञ्चवर्तीनामपि गाने भवति तदा कथंचित्समता मता भवति। समीचीनता न तावत्कुतोऽपि लभ्यते। यदयं कृत एव मुरलीपणः यदि मानयसि नय सिद्धगानचूतं तदा त्वयापि प्रियसखीपणः क्रियताम्। ललिताह कुमनीष कुमनीषद्व विरसयति दुर्विदग्धः ॥ ३५ ॥

यतः सर्वमेव द्यूतं प्रति पणप्रतिपणयोः समतैव निरुच्यते न खलु काचकाञ्चनयोः समता। कुसुमासव आह। भवति भवति हि प्रियवयस्यस्य मुरली काचः सखी ते काञ्चनम्। ललिताह। कोऽत्र सन्देहः साम्यं चेदिच्छसि तदा अन्तोभवता भवता वयस्यः पणीक्रियताम्। कुसुमासव आह, गीयतामेष मयानामयानामग्रण्या पणीकृतो वयस्यः ॥ ३६ ॥

ललिता गातुमुपक्रमते। गान्धारग्रामसंधापितगरिमधुराधूतगान्धर्वविधं गन्धर्वीगर्वखर्वीकरणपटु नटद्भ्रूलतं रक्तकण्ठी। त्रिस्थानस्पर्शि नानाविधगमकगमं साह सोत्साहनश्यद्व्रीडाक्रीडारसेनालपदतिलतोदारकेदाररागम् ॥ ३७ ॥

एवं सरागं रागं केदारमालप्य भाषया सौरसेन्या रसे न्यायपेशलया लयान्वितं गीतञ्च जगौ ॥ ३८ ॥

---

विगतचर्च हे गतविचार चर्चा सङ्ख्या विचारणेत्यमरः। तच्चमते हे क्रूरबुद्धे ।३३।

यादृशा दृशा दृष्ट्या अस्य कुसुमासवस्य तदाकूतज्ञता कृष्णाभिप्रायज्ञातृत्वं जायते तादृशा ददर्श कृष्णः। तरुलतादीनामपि सात्त्विकविकारं मद्गानोत्थापितं दर्शयित्वा प्रतिप्रणं च राधां कृत्वा ललितां जयेति नेत्रसंज्ञया उक्तवानितिभावः ॥३४॥

हे कुमनीष कुबुद्धे! कु पृथ्वी अर्नापत् अनल्पमेव दुर्विदग्धो विरसयति स तु भवानेवेति भावः ॥ ३५ ॥ सर्वमेव द्यूतं प्रति सर्वस्मिन्नेव द्यूतेत्यर्थः ॥ ३६ ॥

गान्धारग्रामे संधापिता सम्यग्धारिता या गरिमधुरा गौरवाधिक्यं तेन धूता खण्डिता गन्धर्वकर्तृका गानविद्या येन तत् इति। आलपदिति क्रियाविशेषणम्। पक्षे गरिमधुरा गान्धारऋषभमध्यमस्वरातिशयः। त्रीणि स्थानानि आरोहणावरोहसमाख्यानि ऊर्ध्वाधोमध्यानि। नानाविधगमकं गमयति व्यञ्जयतीति तत् ॥ ३७ ॥ स्पष्टम् ॥ ३८ ॥

सअलकलाणिअमण्डलो वड्ढिअपेम्मसमुद्दओ । पउमिणिमुद्दापण्डिओरेहइ सामलचन्दओ ॥ ३९ ॥

चूअङ्कुरकिदसेहरोकुसुमाअरपिअखेलओ । रमणीमणिवच्छपादओरेहइवुंदावनप्पिओ ॥ ४० ॥

तदा तदाकर्ण्य सगर्वमाह कुसुमासवः । हीही पराजितं भोः पराजितं ललितयेति वाद् समुद्दम्य नृत्यतस्तस्य कक्षान्मुरली पततति स्म तां निपतितामालोक्य सत्वरया रयादेव संगीतविद्यया सायासाभावेनैव निन्हुत्य रक्षिताक्षितावेकोऽपि न जानाति स्म नातिस्मयवती सा च निजवर्गे कस्यैचित् कथितवतीति स्थिते मैव तमुवाचालं वाचालं भोः कथमकाण्डे प्रहर्षममत्तोसि किमिति मत्तवच्चरीनृत्यते विचारयतु रयतुलितकोटिद्वयस्तवैव वयस्यः कस्य भय इति ॥४१॥

स आह पण्डितंमन्ये मन्ये साक्षादेवायं भवतीनामेव पराजयः । यतश्चर्चरीगानमुद्दिश्यैव पणः कृतः । इयं तु द्विपदिकाखण्डमेव गायति स्मेति स्मेरमुखि विचार्य्यतां पराजयो भवति न वेति कथिते सति यौगपद्येन पद्येन ते तं विजहसतुः ॥ ४१ ॥

अविदग्ध चर्चरी वा द्विपदी वा जम्भली वेति नामनि का वैचित्री ग्रामस्वरमूर्च्छनासु परमेपा पश्यास्या गानमाधुर्य्यमहिमानम् ॥ ४२ ॥

*अश्मानो य इमे मणीन्द्रवपुषो दृत्ताळवालात्मकाः ।*
सर्वे विद्रुतिमागता यदवमन्नम्भस्तदेतत् पुनः ।
जातस्तम्भमलम्भयत् कठिनतां येयं तया सर्वतो ।
वृक्षाणां प्रतिमूलमेव निबिडा व्यातेनिरे वेदयः ॥ ४४ ॥

सकलकलामृतमण्डलो वर्द्धितप्रेमसमुद्रः पद्मिनीनां मुद्रा मुदां रादानं तत्र पण्डितः पक्षे स्पष्टम् राजते श्यामलचन्द्रः ॥ ३९ ॥

चूताङ्कुरकृतशेखरः कुसुमाकरप्रियखेलः रमणिमणिपक्षपातो राजते वृन्दावनप्रियः । कोकिलपक्षे चूताङ्कुरस्य कृतपर्य्याप्तशेखरो यतः तद्भक्षणार्थं तस्य तदुपरिवर्त्तित्वात् । रमणीमणयः संभुक्ताङ्गनाः कुसुमाकरः वसन्तः वनप्रियः कोकिलश्च ॥ ४० ॥

सा मुरली आयासाभावेन अयत्नेन ॥ ४१ ॥

द्विपादिका खण्डमेव गायति स्मेति । चर्चरिकागानासामर्थ्यमेव पराजयव्यञ्जकमितिभावः ते ललिता संगीतविद्ये ॥ १२ ॥

पश्यास्या इत्येकस्याः संगीतविद्याया वचनम् ॥ ४३ ॥

अश्मानो विद्रुतिमागताः सन्तो यदम्भोऽवमन् । तत् अम्भः कर्मजातस्तम्भं सत् या ललितेयं कठिनतां अलम्भयत् । तया कठिनतया वेदयो व्यातेनिरे प्रकाशिताः निर्मिता इत्यर्थः ॥ ४४ ॥

अतः कालिन्द्या देवतात्मकत्वेन वृन्दावनतरुलतानामपि ज्ञानवत्त्वेन खगमृगादीनामपि चेतनतया युक्तमेव भवद्वयस्य गानेन तथा तथात्वम् । अस्यां गाने त्वयं विशेषः । यदमी अश्मानोऽप्येवमासन्निति जितमस्माभिरेव तदयं त्वया स्ववयस्यः स्वयमानीय दीयताम् । सुबल आह अयि संगीतविषेऽविषेव कथं जडीभावमापद्यसेऽद्य सव न भवसि । यदनेन कथं कृष्णो हार्यतां । हार्यतां तावदधीनस्याधीनस्यामनन्ति न केऽपीति ॥ ४५ ॥

कृष्ण आह कुसुमासव मा सबहुमानो भवितुमर्हसीदानीं यत उत्सवमदमत्तमत्तकाशिनीभिर्जितकाशिनीभिर्जितः एवं भवानास्मानं मोचयितुमसमर्थोऽनर्थकारी दुरवस्थावस्थानमेष्यति तदधुना दीयतां मे मुरली, नो चेत्त्वया सहसा सह सापि यास्यति । कुसुमासव आह वयस्य मयैव जितं तद्भवता प्रभवता महर्षेण समानीयतामासां प्रियसखी ॥ ४६ ॥

ललिताह निरपत्रप पत्रपशो यद्ज्ञानमूलः किल विचारकृपण ! पण एष कृतः स एव भञ्जयं विख्यापयति ॥ ४७ ॥

कुसुमासव आह वयस्य चेदेवं जातलोभ वदसि भवदासिद्धान्तमर्य्यादं तदा नीयतां ते मुरली पलाय्यते मयेति मुरलीं विचारयन्ननवलोक्य भो वयस्य मुरली प्रथममेव भयचपला पलायिता मत्कक्षतलतोऽक्षतलतोद्यानान्तरं मन्ये सर्वाः स्मयन्ते स्म ॥ ४८ ॥

इत्येवमवसरे कियद्दूरतो निविडखेलाभिरामासु दयितरामासु रामासु सतीषु कश्चिद्धनदानुजीवी जीवीभूतानां मध्येऽधमतमो मतमोहः ।४९।

---

अधीनस्य आयत्तस्य अप्रधानस्यैव हार्य्यता आमनन्ति अयमर्थः अधीनस्य अधिकस्य इनस्य प्रभोः प्रधानस्य हार्य्यतां केऽपि न आमनन्ति अयमर्थः अन्यतःपराजितेन प्रधानेन अप्रधानभूतः स्वाधीनो जनो हार्य्यते न त्वप्रधानेन । अधीनेन प्रधानभूतः प्रभुर्हारयितुं शर्क्यते तत्र तस्य स्वत्वाभावात् प्रत्युत स्वामित्वात् स्वयमेव तेन स्वामिना स हारितः स्यादिति । तेन त्वया पराजितः कुसुमासवं प्रधानभूत नायक कृष्णं हारयितुं न शक्नोसि किन्तु स्वजनकृतापराधः स्वामिनि प्रति फलतीति न्यायेन कृष्ण एव कुसुमासवं हारयितुमर्हतीति ४५

मत्तकाशिनीभिर्युवतिभिः ।वरारोहा मत्तकाशिन्युत्तमा नरवर्णिनीत्यमरः । जितकाशिनीभिर्विजयगर्ववतीभिः सापिमुरल्यपि ॥ ४६ ॥

पत्रपशो वाहनरूपपशो । पत्रं वाहनपक्षयो रित्यमरः । उष्ट्राश्वहस्त्यादीनामेकतमतुल्येत्यर्थः हे विचारकृपण ! परामर्षशून्य इत्यर्थः ॥ ४७ ॥

हे जातलोभ ! मया दत्तां विजयरूपां स्वप्रतिष्ठां महतीमप्यनादृत्य कुतश्चिल्लोभाद्देवैतासामधीनतामङ्गीकर्त्तुमिच्छसीत्यर्थः । भवत एव न सिद्धान्तमर्य्यादा यत्र तद्यथा स्यात्तथा चेद्वदसि । न क्षताः खण्डिता लता यत्र तादृशमुद्यानम् । भयरहितस्थानमिति भावः ।४८।

दयितो रामो यासां तासु रामासु खेलाभिरामासु सतीषु धनदानुजीवी कुबेरकिङ्करः। मते ज्ञाने विचाररूपे मोहो मूढता यस्यसःनिर्बुद्धिरित्यर्थः ॥४९॥

तरुणतरमार्त्तण्डमरीचिमरीचिकाचाकचक्यचिक्कणकनकशिलासु विमलसलिलपरिपूर्णतडागधिया प्रांशुतरतरुशिखरतः खरतरनिदाघतप्तः सवेगमुत्प्लुत्य कृतमपातो मूढ इव ॥ ५० ॥

समुज्ज्वलं ज्वलन्तीषु दहनशिखासु दिव्यौषधीविपिनेपिनद्धशोभालोभादिव तदपहरणरणकौतुकी पतङ्ग इव ॥ ५१ ॥

फणधरफणामणिजिहीर्षया तदभिमुखमापतन्मण्डूक इव ॥ ५२ ॥

केशरिकिशोरपटलीषु कार्त्तस्वरभास्वरासु परिपक्वशालिधिया बुभुक्षुरुपसर्पन् गवय इव मृत्युनाहूत इव कश्चन शङ्खचूडो नाम रामरामारत्नापजिहीर्षया यत्तापसदः समापपात ॥ ५३ ॥

तमतिकरालमालोक्य समुपपन्नभयविस्तारास्ता रामरमण्यो मण्यो तमूर्द्धानमूर्धाननं प्रबलतरतरक्षुवीक्षणक्षुभितभीतिचकितचमूरुबाला इव भो राम भोः कृष्ण पाहि नः पाहीति सत्रासं विचुक्रुशुः ॥ ५४ ॥

तमार्त्तस्वरं स्वरंहसा प्रबलो बलो यावन्न शृणोति स्म तावदेव तरस्वीतरस्वीकारविमुखो मुखोदीरितमपि गीतमपहाय गिरिधरो धरोपरितः पदकमलमलम्भयन्निव द्रुतद्रुत एव तमन्वधात ततोऽतिप्रतिघाप्रतिघातरुग्णमानसो बलश्च ५५

एवं वीरप्रवरौ हि रौहिणेयकृष्णौ विलोक्य बहुधाप्रमानौ बहुधावमानौत्कट्यमात्मनो गन्यमानः स पामरो रमणीमणीर्विहाय विहायसेव धावन् प्राणपरीप्सया प्रतो चपलायां पलायांचक्रे ॥ ५६ ॥

अथ स केशरीशरीरत्वा धावमानः पुन्नागो नागोत्तममिव पलायमानमपि तमधमं धमन्तमतिपरुषं रुषं वहन्तमपि क्षोभयतोभयतो वेगेन विष्पतिभं प्रतिभङ्गं

---

निर्बुद्धित्वमेवोत्प्रेक्षाभिर्व्यञ्जयति तरुणतरेति ॥ ५० ॥

न केवलं शिलासंचूर्णिताङ्गत्वेन तज्ज्वालातितप्तत्वेन च तस्य तत्र दुःखमात्रस्यैव लाभः किन्तु स्पर्शमात्रेणैव प्राणनाशोऽपीत्याह समुज्ज्वलमिति ॥ ५१ ॥

नापि केवलं प्राणनाश एव किंतु भयविद्रवणलकर्पणभुजदण्डपीडानुभवपूर्वक एवेत्याह फणधरेति, तदभिमुखे तस्य मुखं लक्षीकृत्य आ सम्यक् उत्प्लुत्य पतन् ॥ ५२ ॥

किं च तस्य पामरस्य रामप्रेयसीनां स्पर्शयोग्यता न संभवतीति पूर्वासूत्प्रेक्षासु प्रसक्तां तां वारयन्नाह केशरीति । उपसर्पन् निकटे गच्छन् मृत्युनाहूत इत्यत्र कृष्णनिकटे मारणार्थमिच्छाक्षेपलब्धेन श्लेषेण मृत्योः कृष्णवशीभूतत्वं तदागमनस्य मरणप्रयोजनप्रयोजकत्वं च व्यञ्जितम् ॥ ५३ ॥

मणिना आ सम्यक् ऊतो मथितो मूर्द्धा यस्य तम् ॥ ५४ ॥

*तरस्वी त्वरितः इतरस्य क्रीडादिकार्य्यस्य स्वीकारे विमुखः द्रुतद्रुतः शीघ्रं गत एव अतिप्रतिघा अतिकोपः ॥ ५५ ॥*

बहुधा बहुप्रकारस्य अवमानस्य औत्कट्यं मतो बुद्धो चपलायां सत्याम् ॥ ५६ ॥

नागोत्तमं महाहस्तिनं प्रति । केशरीशरीरत्वा श्रेष्ठसिंहरूपेण पुन्नागः पुरुषश्रेष्ठः कृष्णः क्षोभयता क्षोभं जनयता उभयतो वेगेन स्वपलायनवेगेन पृष्ठधावितकृष्णवेगेन च भङ्गं प्रति यतमानं

यतमानं श्येन इव वलिभुजं भुजंगमिव विनतासुतो विनतासुतोषकरः ॥९७॥

कचे गृहीत्वा मुष्टीकृतेन कमलकोमलेनापि करतलेन जरठकमठपृष्ठकठोरमपि तस्य मस्तकमस्तकल्याणस्य विनिपात्य परिपाट्यपरिमितं च तस्य मूर्धचारिमणि मातिचारिमणि प्रथमानं प्रथमानन्दं वहन् तमादाय समालोकमानानां वनितानां पुरतो महाबलाय बलाय ज्यायसे समुपजहार प्रमोदसमुद्दामो दामोदरः ॥९८॥

ततश्च असमाप्तमहोत्सवावेशानां रसविलासकलाचिन्तामणीनां स्वरमणीनां स्वरग्रामग्रामश्रुतिश्रुतिमनोरमगानजुषां सजुषां सहचराणां च सन्निधिमासाद्य साद्यमानं तमुत्सवं सवन्धुरविभ्रमो निर्वास्यमानं दीपं पुनरुज्ज्वलयन्निव शुष्यमाणं सरः पुनरगाधयन्निव भग्नं प्रासादं पुनर्जीर्णोद्धारेण नवीकुर्वन्निव समुज्जृम्भयन् ९९

अनुसंधीयमानमुरलीकतयालीकतयाचोरी त्वं चोरीकृतमुरलीचौर्यासीति चन्द्रावलीसहचरीणां मदनमदनमद्धियां विलासविशेषालम्बिनीनां नितंविनीनां नितरां जनं जनं वक्षसोऽञ्चलमुद्घाट्य मुरलीं विचारयन् यदि प्रजगल्भे तदा ताभिरभिरम्यपरिहासहासललितं भ्रूतरङ्गरङ्गभ्रुकुटिकुटिलाक्षं भर्त्सयामासे ।६०।

अयि कुसुमासव सहचर तत्र समुचित एव तावदविचारः स्वत्करतलतो मुरली संव्यानं नः कथं विशतु यद्यस्माभिरपाहारि हारिणी ते मरली तदा नः समुद्दण्डो दण्डो ध्रियते न चेत्तव सकौस्तुभकण्ठहारहारः क्रियते ॥६१॥

चन्द्रावली बलीयसा प्रागल्भ्येनाह अयि बलावलेपतोऽवलावलेऽपतोद कुसुमासवेन तवकरतलतो मुरलीप्रसभमाकृष्य अस्माभिर्हरणीयेत्याजह्रे तन्न संस्मरसि ।६२।

---

बलिभुजं काकं बलादावरणे श्येन इव मारणे विनतासुतो गरुड इव विनतानां विनम्राणां आ सम्यक् सुष्ठु तोषकरः सुखदायी ॥ ९७ ॥

अस्तकल्याणस्य गतशुभस्य अतिचारिमणि अतिचारुतायां प्रथमानं ख्यातम् । प्रथं विस्तृतमानन्दं तं प्रसिद्धम् ॥ ९८ ॥

सजुषां जुट् प्रीतिस्तत्सहितानाम् । साद्यमानं अन्तरा शङ्खचूडागमेन विशीर्य्यमाणम्। उज्ज्वलयन्निति पुनरधिकस्नेहदानेनेति अगाधयन्नित्यतिविलासरसवृष्ट्येति नवीकुर्वन्निति तत्र निजप्रयत्नविशेषेणापि इति प्रेमविलासप्रयत्नविशेषा दर्शिताः । उत्सवं समुज्जृम्भयन् अति प्रकाशयन् ॥ ९९ ॥

अनुसंधीयमाना मुरली येन तत्तया अलीकतया मिथ्यापवादेनैव त्वं च । उरीकृतं मुरलीचौर्य्यं यया सा असीति ॥६०॥

संव्यानं उत्तरीयम् । नचेद्यदि नापाहारीत्यर्थः । तदा कौस्तुभेन सहितस्य कण्ठहारस्य हरणं क्रियते, इति पणः क्रियतामिति भावः ॥६१॥

बलावलेपतो बलाहंकारतः। बलावले स्त्रीसमूहे विषये। अपतोदयति पीडयतीति हे तथाभूत यद्वा अपतोद गतव्यथ निःशङ्केत्यर्थः ॥६२॥

कुसुमासव आह अस्माभिर्हरणीयेति ते वच एव तस्या हरणे प्रमाणं मया प्रसभमाकृष्य हृतेत्यत्र प्रमाणमुच्यताम् । साह सर्वा एव। स आह सर्वा एव मे विपक्षाः । साह भवद्वयस्यः प्रमाणम्। स आह नैतदपि तथाचेत् कुतो वः संव्यानं विचारितमनेनसानेन साधीयसी तन्नूनं भवतीभिरेवापहृता मुरली कालीका ते व्याहृतिः ॥ ६३ ॥

इति तेनोदिते नो दितेन प्रतिभया भयाभावस्फुरद्रूपेण पुनः कृष्ण ऊचे ६४

वयस्य तव करकमलसङ्गी संगीतविद्ययैवापहृतो वेणुरेताभिः इत्याकर्ण्य सङ्गीतविद्या विद्यायातयामा सचकितकितवनेत्रं लघु लघु चकललिता ललिताकरे मुरलीमर्पयामास ॥ ६५ ॥

ततस्तदाकारविकारविशेषमालोक्य पुनर्भङ्गुरिताबटु बटुराह वयस्य मुरलीतस्करा करालेयं स्वयमेव व्यक्ता यतो मया संगीतविद्ययेति संगीतागमाधिष्ठातृदेवतामुद्दिश्य परिहसितं तदाकर्ण्य स्वं प्रति प्रतिपन्नाशङ्का शं कारयामास संकोचस्य ॥६६॥

चौरस्य लक्षणमिदमेवेति । सा तु ललिताकरे मुरलीमाधाय सदर्पमुपसृत्य सस्मयस्मयमानाह किमात्थ रे वटोऽवटोसि कपटस्य महोत्सवं समयामयाखेलन्त्या कदा कथमपहृता मुरली तया हृतयाऽहृदयालो मम वा किं प्रयोजनं जनं मृषा दूषयतस्तव स्तवकितमंहोरंहोऽरं भविष्यति रे वाचाल वाचालमनया नयास्पदया दयावशान्न ते शास्तिः क्रियते ॥ ६७ ॥

सर्वाः स्मयन्ते स्म । एवं मुरल्यपहरणरणसाहसहसदबलाबलात्कारतो रतोत्सवादप्यधिकसरसमसममामोदमुपलभमानो दुरवनमालीको वनमाली कोमलमनाः क्रमशो जनं जनं विचार्य्य समुज्झितासु तासु ललितां ललिताम्बुजकरेण यदि स्म जिघ्रति ॥ ६८ ॥

---

अनेनसा निर्दोषेण अनेन वयस्येन ते तव व्याहृतिः का कुत्सिता अलीका ॥६३॥

तेन कुसुमासवेन इत्युदिते सति पुनः कृष्ण ऊचे । तेन किंभूतेन प्रतिभया नो दितेन नखण्डितेन प्रतिभायुक्तेनैवेत्यर्थः ॥ ६४ ॥

विद्यासु अयातयामा अतिनिपुणेत्यर्थः । सचकिते कितवे इतरालक्ष्यभावत्वेन धूर्त्ते च नेत्रे यत्र तद्यथा स्यात्तथा ॥ ६५ ॥

संकोचस्य शं कल्याणं कारयामास । संकोचो यस्याः प्रबलितोऽभूदित्यर्थः ॥ ६६॥

तेनैव किमायातमित्यत आह चौरस्य इति । अवटो गर्तः गर्त्तावटौभुवि श्वभ्र इत्यमरः। समया मध्ये समयान्तिकमध्ययोरित्यमरः । अंहसोऽपराधस्य रंहो वेगः । अरं अतिशयेन ६७

दुरवनमाः वाम्यवशादेव नम्रीकर्त्तुमशक्या आल्यः सख्यो यस्य सः । तथाप्ययं तु कोमलमनाः । जिघ्रति स्म इति तस्याः कमलिनीत्वं तस्य च भ्रमरत्वं स्पृशति स्म इत्यर्थः । ६८।

यतमानं श्येन इव बलिभुजं भुजंगमिव विनतासुतो विनतासुतोषकरः ॥९७॥

कचे गृहीत्वा मुष्टीकृतेन कमलकोमलेनापि करतलेन जरठकमठपृष्ठकठोरमपि तस्य मस्तकमस्तकल्याणस्य विनिपात्य परिपात्यपरिमितं च तस्य मूर्धचारिमणि मातिचारिमणि प्रथमानं प्रथमानन्दं वहन् तमादाय समालोकमानानां वनितानां पुरतो महाबलाय बलाय ज्यायसे समुपजहार प्रमोदसमुद्रामो दामोदरः ॥९८॥

ततश्च असमासमहोत्सवावेशानां रसविलासकलाचिन्तामणीनां स्वरमणीनां स्वरग्रामग्रामश्रुतिश्रुतिमनोरमगानजुषां सजुषां सहचराणां च सन्निधिमासाद्य सायमानं तमुत्सवं सवन्धुराविभ्रमो निर्वास्यमानं दीपं पुनरुज्ज्वलयन्निव शुष्यमाणं सरः पुनरगाधयन्निव भग्नं प्रासादं पुनर्जीर्णोद्धारेण नवीकुर्वन्निव समुज्जृम्भयन् ९९

अनुसंधीयमानमुरलीकतयालीकतयाचोरी त्वं चोरीकृतमुरलीचौर्यासीति चन्द्रावलीसहचरीणां मदनमदनमद्भिर्या विलासविशेषालम्बिनीनां नितंविनीनां नितरां जनं जनं वक्षसोऽञ्चलमुद्घाट्य मुरलीं विचारयन् यदि मन्नगल्भे तदा ताभिरभिरम्पपरिहाससहासललितं भ्रूतरङ्गरङ्गभ्रुकुटिकुटिलाक्षं भर्त्सयामासे ।६०।

अयि कुसुमासव सहचर तव समुचित एप तावदविचारः त्वत्करतलतो मुरली संव्यानं नः कथं विशतु यद्यस्माभिरपाहारि हारिणी ते मुरली तदा नः समुद्दण्डो दण्डो ध्रियते न चेत्तव सकौस्तुभकण्ठहारहारः क्रियते ॥६१॥

चन्द्रावली बलीयसा प्रागल्भ्येनाह अयि बलावलेपतोऽवलावलेऽपतोद कुसुमासवेन तवकरतलतो मुरलीप्रसभमाकृष्य अस्माभिर्हरणीयेत्याजह्रे तन्न संस्मरसि ।६२।

---

बलिभुजं काकं बलादावरणे श्येन इव मारणे विनतासुतो गरुड इव विनतानां विनम्राणां आ सम्यक् सुष्ठु तोपकरः सुखदायी ॥ ९७ ॥

अस्तकल्याणस्य गतशुभस्य अतिचारिमणि अतिचारुतायां प्रथमानं ख्यातम् । प्रथं विस्तृतमानन्दं तं प्रसिद्धम् ॥ ९८ ॥

सजुषां जुट् प्रीतिस्तत्सहितानाम् । सायमानं अन्तरा शङ्खचूडागमेन विशीर्य्यमाणम् । उज्ज्वलयन्निति पुनरधिकस्नेहदानेनेति अगाधयन्नित्यति विलासरसवृष्ट्येति नवीकुर्वन्निति तत्र निजप्रयत्नविशेषेणापि इति प्रेमविलासप्रयत्नविशेषा दर्शिताः । उत्सवं समुज्जृम्भयन् अति प्रकाशयन् ॥ ९९ ॥

अनुसंधीयमाना मुरली येन तत्तया अलीकतया मिथ्यापवादेनैव त्वं च । उरीकृतं मुरलीचौर्य्यं यया सा असीति ॥६०॥

संव्यानं उत्तरीयम् । नचेयदि नापाहारीत्यर्थः । तदा कौस्तुभेन सहितस्य कण्ठहारस्य हरणं क्रियते, इति पणः क्रियतामिति भावः ॥६१॥

बलावलेपतो बलाहंकारतः। बलाबले स्त्रीसमूहे विषये। अपतोदयति पीडयतीति हे तथाभूत मद्रा अपतोद गतव्यथ निःशङ्केत्यर्थः ॥६२॥

कुसुमासव आह अस्माभिर्हरणीयेति ते वच एव तस्या हरणे प्रमाणं मया प्रसभमाकृष्य हृतेत्यत्र प्रमाणमुच्यताम्। साह सर्वा एव। स आह सर्वा एव मे विपक्षाः। साह भवद्वयस्यः प्रमाणम्। स आह नैतदपि तथाचेत् कुतो वः संख्यानं विचारितमनेनसानेन साधीयसी तन्नूनं भवतीभिरेवापहृता मुरली कालीका ते व्याहृतिः ॥ ६३ ॥

इति तेनोदिते नो दितेन प्रतिभया भयाभावस्फुरद्रूपेण पुनः कृष्ण ऊचे ६४

वयस्य तव करकमलसङ्गी संगीतविद्ययैवापहृतो वेणुर्नैताभिः इत्याकर्ण्य सङ्गीतविद्या विद्यायातयामा सचकितकितवनेत्रं लघु लघु चलनललिता ललिताकरे मुरलीमर्पयामास ॥ ६५ ॥

ततस्तदाकारविकारविशेषमालोक्य पुनर्भङ्गुरितावटु वटुराह वयस्य मुरलीतस्करा कथञ्चेयं स्वयमेव व्यक्ता यतो मया संगीतविद्ययेति संगीतागमाधिष्ठातृदेवतामुद्दिश्य परिहसितं तदाकर्ण्य स्वं प्रति प्रतिपन्नाशङ्का शं कारयामास संकोचस्य ॥६६॥

चौरस्य लक्षणमिदमेवेति। सा तु ललिताकरे मुरलीमाधाय सदर्पमुपसृत्य सस्मयस्मयमानाह किमात्थ रे वटोऽवटोसि कपटस्य महोत्सवं समयामयाखेलन्त्या कदा कथमपहृता मुरली तया हृतयाऽहृदयालो मम वा किं प्रयोजनं जनं मृषा दूषयतस्तव स्तवकितमंहोरंहोऽरं भविष्यति रे वाचाल वाचालमनया नयास्पदया दयावशान्न ते शास्तिः क्रियते ॥ ६७ ॥

सर्वाः स्मयन्ते स्म। एवं मुरल्यपहरणरणसाहसहसद्बलाबलात्कारतो रसोत्सवादप्यधिकसरसमसममामोदमुपलभमानो दुरवनमालीको वनमाली कोमलमनाः क्रमशो जनं जनं विचार्य्य समुज्झितासु तासु ललितां ललिताम्बुजकरेण यदि स्म जिघ्रति ॥ ६८ ॥

---

अनेनसा निर्दोषेण अनेन वयस्येन ते तव व्याहृतिः का कुत्सिता अलीका ॥६३॥

तेन कुसुमासवेन इत्युदिते सति पुनः कृष्ण ऊचे। तेन किंभूतेन प्रतिभया नो दितेन नखण्डितेन प्रतिभायुक्तेनैवेत्यर्थः ॥ ६४ ॥

विद्यासु अयातयामा अतिनिपुणेत्यर्थः। सचकिते कितवे इतरालक्ष्यभावत्वेन धूर्त्ते च नेत्रे यत्र तद्यथा स्यात्तथा ॥ ६५ ॥

संकोचस्य शं कल्याणं कारयामास। संकोचो यस्याः प्रत्रजितोऽभूदित्यर्थः ॥ ६६॥

तेनैव किमायातमित्यत आह चौरस्य इति। अवटो गर्तः गर्त्तावटौभुवि श्वभ्र इत्यमरः॥ समया मध्ये समयान्तिकमध्ययोरित्यमरः। अंहसोऽपराधस्य रंहो वेगः। अरं अतिशयेन ६७

दुरवनमाः साम्यवशादेव नम्रीकर्त्तुमशक्या आल्यः सख्यो यस्य सः। तथा स्वयं तु कोमलमनाः। जिघ्रति स्म इति तस्याः कमलिनीत्वं तस्य च भ्रमरत्वं स्पृशति स्म इत्यर्थः। ६८।

स्मयानवहितनवाहितसौभाग्यगर्वार्हिता तर्हि तातल्यमानकलाकलापालक्षितमेव तमेव वेणुं सा विदग्धभावद्वृषभा वृषभानुपुत्रीकरे निःक्षिप्य निःसाध्वसं साध्वसंकोचा संमुखमुपसृत्य व्याहरति स्म ॥ ६९ ॥

रतिस्मयमत्त मत्त एव ते मदोद्धुरता विरता विशेषेण भविष्यति यदि निरघामघार्दन मा संस्प्रष्टुमाकांक्षसि ॥ ७० ॥

पश्याहं निर्मुरलीकालीका न मे वागिति संव्यानं दुधाव धावमानैर्दशनकिरणैः सितदीधितिं हसन्ती पुनरूचे ॥ ७१ ॥

स्मर स्मरमदविभ्रान्त धनदानुचरं धावता वतोर्वीतले वा पपाताऽसौ मुरलिका ७२

वृथावृथा वरा वरारोहाणां तत्तीरेताः । कुसुमासव आह वयस्य तर्हि वेणोरवावरी वरीयस्येव ॥ ७३ ॥

कृष्ण आह भवत्येवमेव मेदुरमते पारिशेष्यप्रमाणेनैतस्यामेव वर्त्तमानां तर्कयामो यामोऽपि विचारयितुमित्युपक्रामति मतिमतां वरे पीताम्बरे पीतासव इव घूर्णायमाननयने ॥ ७४ ॥

नयनेतृतयातदग्रजेनोपढौकितं तमेव मणिमणिमाद्यष्टसिद्धिसिद्धितोऽपि सुखरं सुखरञ्जनमनुपमन महसा महसारस्यवती काचित् प्रियताला तालाङ्कस्य प्रिया समानीय हन्त गुणभराधिके राधिके शृणु यद्दामा दामोदराग्रजेन ते समुपढौकितं मणिमादातुमर्हसीत्युवाच ॥ ७५ ॥

वाचमाकर्ण्य तां तरसादरसादखिन्नं करयुगलमुद्दम्य मुदम्यमानमानसायां तमाददत्यां सुदत्यां सुतरां श्लथोत्तरीयतया मुरली यदि निपपात ॥ ७६ ॥

---

स्मयेन मदेन अनवहितं अवधानमेव नास्ति यस्याः सा चासौ नवेन हितसौभाग्यगर्वेण अर्हिता पूजिता चेति सा । तथा तातल्यमानः अतिशयेनप्रतिष्ठाप्यमानः कलानां कलापो यया सा "तल प्रतिष्ठायां" । विदग्धभावेन वैदग्ध्येन वृषभा श्रेष्ठा ॥ ६९ ॥

निरघां निरपराधां मां यदि स्प्रष्टुमाकाङ्क्षसि तदा मत्तः सकाशादेव तवमदोद्धुरता विरता भविष्यति ॥ ७० ॥

दुधाव कम्पयामास ॥ ७१ ॥

धनदानुचर शङ्खचूडम् ॥७२॥

वृथा व्यर्थमेव आवृथाः आवृतवानसि अवावरी चोरी, ओणृ अपनयने । वरीयसी राधा ७३

एतस्यां राधायाम् ॥७४॥

नये नीतिविषये नेतृतया नायकतया नीतिप्रवीणतयेत्यर्थः । सुखरं सुखदम् । खस्य स्वर्गस्यापि रञ्जनम् । प्रयतो लातीति प्रियताला प्रेमवतीत्यर्थः । तालाङ्कस्य बलदेवस्य ॥७५॥

तरसा वेगेन आदरस्तेन सादो विसरणम् । आवेगव्यञ्जकं स्खलनमित्यर्थः । तेन खिन्नम् मुदा आनन्देन दम्यमानं मानसं यस्यास्तथाभूतायामिति मुरल्यनवधाने हेतुरुक्तः । तस्यां राधायां तं मणिं आददत्यां सत्यां श्लथोत्तरीयतया यदि मुरली निपपात तदा स कृष्णो लज्जितो उपजहासेत्यन्वयः ॥७६॥

तदा तदालोकेन मुखरो मुखरोचिराविश्यं वितन्वता तन्वताद्वस्थ्यम् च प्रकटयता कुसुमासवेन सकरतालिकमुच्चैर्हसता सहसहचरगणहीहीतिकोलाहलो ललितामुपजहास स हाससरसतया ॥ ७७ ॥

ललिते सत्यमुक्तमत्तोभवत्या भवत्या धनदानुचरं धावतो वतोर्वीतले पतितासौ मुरली कथमन्यथा वात्सल्यकुतूहलिना हलिना कृतप्रसादादगादरादाने स्वावहेलावहे लालसे मानवती नवतीव्रतररोपवशतो भुवीयं निपतिष्यति ॥७८॥

कुसुमासव आह ।-अहो नेदमाश्चर्यं या खलु छिद्ररहितां हितां मियवयस्यस्य वयस्यस्य धिपणधिपणयापि न सुखावगाह्यां धियं चोरयति सेयं वार्षभानवी नवीनचौर्य्यविद्येव छिद्रवती महितामखिलजनमनोऽवगाह्यामिमां मुरलीं चोरयिष्यति'यत् ॥ ७९ ॥

तद्वयस्य नीयतां ते मुरली या मयाऽनीते नीतेति निरणायि भवतापि तापिच्छरुचिना ॥ ८० ॥

इति तेनानीय दत्तामादत्तामादरेणदामोदरोऽदरोल्लसदामोदरो मन्दमधुरमथ तां वादयमानो महामहावसानं हावसानन्दाभिराभिराभिराम्यवतीभिः कारयामास ॥ ८१ ॥

इत्यानन्दवृन्दावने कैशोरलीलालताविस्तारे मुरलीचौर्य्यविलासोनामै कविंशःस्तवकः ॥२१॥

---

तनोर्देहस्य अताद्वस्थ्यं कन्धराग्रीवोन्नमनभङ्गुरगत्यादिभिर्वैकृत्यमित्यर्थः सहचरगणानां हीहीति कोलाहलेन सह वर्त्तमानः ॥ ७७ ॥

हलिना कृतस्य प्रसादस्य अदरेण अनल्पेन आदरेण आदाने सति स्वस्य अवहेलामवज्ञा आवहति प्रापयतीति तथाभूते मणिविषयके लालसे सती मानवती मानिनी ॥७८॥

या वयस्यस्य धियं चोरयति सेयं मुरलीं यत् चोरयिष्यति तदिदमहो नाश्चर्यमित्यन्वयः। छिद्ररहितां सान्द्राम् धिषणधिषणया बृहस्पतिबुद्ध्यापि कर्त्र्या आत्मनो वयसि न सुखावगाह्याम् अवगाढुमशक्यामित्यर्थः ॥७९॥

या मया नीता इति भवतापि निरणायि निर्णीता किं पुनरेताभिरित्यर्थः । हे अनीते नीतरहित अविश्वासिन्निति यावत् । तापिच्छस्तमालः ॥८०॥

हावेन हावाख्यभावोद्गमेन सानन्दाभिः यदुक्तं ग्रीवारेचकसंयुक्तोभ्रूनेत्रादिविकाराकृत । भावादीषत् प्रकाशो यः स हाव इति कथ्यत इति ॥८१॥

इत्यानन्दवृन्दावनटीकायां सुखवर्त्तिन्यां एकविंशतिस्तवकसंगमनम् ॥२१॥

## द्वाविंशः स्तवकः

अथान्येद्युरन्येद्युरमणीगणगणनातिरिक्तमोदमेदुरा दुराराधा राधारमणविलासा ये ये मधुरा मधुरास्त्रिषु त्रिषु भुवनेषु दुरासदा रासदाः समपद्यन्त तेषां मध्ये या ध्येयाधिकं रसवासनासनाथानां दोलोत्सवलीलाली लावण्यवतीभिः सह सहर्षमसावकारि वकारिणा साधुना साधुना मकारेण वर्णनीया भवितुमर्हति १

तथाहि श्रीवृन्दावन एव कापि वलते दोलोत्सवस्य स्थली
यत्प्रान्ते समरोपितेव परितः कल्पद्रुमाणां ततिः ।
शाखाग्रैरितरेतरं सपरिष्वक्तेव लेखायिता
काण्डानामृजुदीर्घवृत्तवपुषां मध्येषु शून्यान्तरा॥ २ ॥

किंच । तेषामेव महार्हरत्नमणिचतुष्प्राचीरतां गच्छतां
चञ्चच्चामरचारुचेलशकलमालम्बमुक्तास्रजाम् ।
नानारत्नफलप्रसूनविहगश्रेणीजुषामन्तरे
प्रांशुः काचन काञ्चनेन रचिता वेदिश्चतुष्कोणिका ॥३॥
यत्कोणेषु चतुर्षु चारुविटपैरन्योन्यसंसर्गिण-
श्चत्वारो हरिचन्दनाः प्रसविनः सौन्दर्य्यसारश्रियाम् ।
यैः शाखाभिरकारि कश्चन चतुर्द्वारश्चतुस्तम्भवान्
भास्वद्रत्नचतुश्छदिः प्रसृमरस्तुङ्गो मणीमण्डपः ॥ ४ ॥
यच्छाखाग्रविलम्बिनीभिरनतिस्थूलाभिरान्दोलिनी
बद्धा काञ्चनरज्जुभिर्विजयते प्रेङ्खोलखट्वाहरेः ।
या प्राग्दक्षिणपश्चिमोत्तरगते तुल्येसमस्ताङ्गणे
सर्वाभिर्मम संमुखीति ककुभां लक्ष्मीभिरालोक्यते ॥५॥

---

द्वाविंशतितमे दोलमण्डलोपरिमण्डितः । कृष्णः स्वप्रेयसीर्हर्षवर्धिणीः समखेलयत् । लीलालीलीलाश्रेणी । लावण्यवतीभिर्गोपीभिः ॥ १ ॥

सम तुल्यकालमेव रोपिता इवेति समप्रमाणत्व स्वतः सिद्धत्वं च व्यञ्जितम् । काण्डानां शाखाभिः समं यथा स्यात्तथा परिष्वक्तेव लेखायिता श्रेणीभूय स्थिता शून्यान्तरा शून्यावकाशा ।२।

चञ्चच्चामरेति । चामरादिकं तदुपरि स्थाने स्थाने वनदेवताभिर्न्यस्तमिति ज्ञेयम् । प्रांशुरुच्चा ॥ ३ ॥

हरिचन्दनाः पारिजातभेदाः यैर्हरिचन्दनैः कर्तृभिः शाखाभिः करणैर्मणीमण्डपोऽकारि । कथंभूतः चत्वारि द्वाराणि यस्य सः ॥ ४ ॥

प्रागादिचतुर्दिग्गते सर्वतोभद्रे प्राङ्गणे तुल्ये तुल्यप्रमाणके जाता एकत्वं, समास्तेषु चतुर्ष्वङ्गणेष्वभिमुखः । या प्रेङ्खोलखट्वा दिशां लक्ष्मीभिः सर्वाभिः कर्तृभिः मम संमुखीनं सम्मुख मुखमस्या इत्यालोक्यते ॥ ५ ॥

एवं पर्य्यन्तभुवो भुवो महामहाकारा ये देवतरवो वत रवोत्तमाना नववयसां वयसां कुलाकुला रामणीयकचतुरचतुरस्रतया चतुर्हरितां हरितां द्युतिं कारयन्तो रयं तोषस्य निष्पादयन्तो वर्त्तन्तेस्म तेषामन्तरन्तरुभयोरुभयोर्वेदिमध्या वेदिमध्यानां दोलस्थली ॥ ६ ॥

तस्याम्। द्वयोर्द्वयोः स्कन्धविलम्बिनीभिर्वद्धा दृढं काञ्चनशृङ्खलाभिः। समानरेखावदनुचनीचाः मेङ्खोलिकानां ततयश्चतस्रः ॥ ७ ॥

मध्यमण्डपमभितोऽभितोपसंपादनसत्वरेषु चत्वरेष चतुर्ष चिन्तामणिरुचिरुचिरेषु समसमदविसृमरसृमरपालिपालितेषु समपरिसरेषु ॥ ८ ॥

एकैकं कनकजालमयमुल्लोचमुल्लोचनद्वयं द्वयं दलदलितविद्रुमाणां द्रुमाणां महोराशिखरेषु शिखरेषु तानितं समासाद्य तच्छायान्तरापतितहिमकरकरखण्डखण्ड निर्वाहितकौतुकोन्नतिलातिलतण्डुलनिकराधियाधियतहरिणाङ्गनागणाननाघातेषु ९ दिग्भेदादेव देवतानामपि भेदाववोधो नतु तदा तदाकारतो भवति येषु चत्वारि

एवं दोलमण्डप मध्यगतं राधाकृष्णयोर्वर्णयित्वा यूथेश्वरीणामन्यासामपि व्यवस्थया दोलस्थलीं निरूपयति। एवमिति। रामणीयके चतुरं यच्चतुरस्रं तत्तया ये देवतरवो मध्यगतदोलमण्डपस्य पर्य्यन्तभुवोवर्त्तन्ते स्म तेषामेव उभयोरुभयोर्वृक्षयोरन्तर-त. मध्ये मध्ये वेदिमध्या वेदिमध्यगता वेदिमध्यानां कृशमध्यानां सुन्दरीणां दोलस्थली। पर्य्यन्ते दोलमण्डपस्य प्राङ्गणप्रदेशे भूरुत्पत्तिर्येषां ते। भुवः पृथिव्या महामहाकारा महोत्सवरूपाः रवोत्तमाना उत्तमकूजनवतां नववयसां तरुणानां वयसां पक्षिणां कुलैः समूहैराकुला व्याप्ताः। चतुर्हरितां चतुर्दिशां हरितां हरिद्वर्णां द्युतिं कारयन्तः ॥ ६ ॥

चतस्रस्ततयो मध्यगदोलमण्डपचतुर्द्वाराभिमुखाः चतस्रः श्रेण्यः ॥७॥

मध्यमण्डप अभितः तच्चतुर्दिक्षु चिन्तामणिरुचिरुचिरेषु चतुर्षु चत्वरेषु प्राङ्गणेषु दिग्भेदादेव देवानामपि किंपुनर्मनुष्याणां भेदेनाववोधः इदमन्यत् चत्वर दक्षिणदिग्वर्त्तित्वात् इदं च ततोऽप्यन्यत् पश्चिमदिग्वर्त्तित्वात्, इत्येतन्मात्रहेतुभेदेनाववोधः न तु तदाकारतो तेषां परस्परमाकारवैलक्षण्याभावादिति। समानां समदानां विसृमराणां भ्रमणशीलानां सृमराणां मृगभेदानां पालिभिः श्रेणिभिः पालितेषु ते तत्र सदा खेलन्तीत्यर्थः ॥ ८ ॥

तेषु च एकैकं कनकजालमयं उल्लोचं चन्द्रातपं द्रुमाणां शिखरेषु तानितं प्रथितम्। द्रुमाणां कथंभूतानां दलैःपत्रैः तिरस्कृतविद्रुमरत्ननाम्। शिखरेषु किंभूतेषु महसां राशिभिः खरेषु तीक्ष्णेषु अन्यदुष्प्रधर्षेष्वित्यर्थः। उल्लोचं कीदृशम्। ऊर्ध्वीकृताभ्यां लोचनाभ्यां द्वयम्। द्वयं द्वयोर्हितं नेत्रसुखदमित्यर्थः। तादृशम्। उल्लोचं समासाद्य प्राप्य तच्छायाया अन्तर्मध्ये आपतितैः हिमकरस्य करखण्डखण्डैर्निर्वाहितो कौतुकोन्नतिं लाति स्वीकरोति या तिलतण्डुलनिकरधीस्तया अधियातानां लोभादागतानां हरिणाङ्गनानां गणस्य आननेषु आघातो येष्वस्तेषु ॥ ९ ॥

येषु चत्वरेषु चत्वारि रूपाणि रूपिमश्लोकरूपा मुक्ताजालमयानीति पूर्ववितानशोभान

त्वारिप्सितदोलोत्सवशोभावितानानि वितानानि वनदेवताभिरेव नह्यन्ते स्म १०

यथा—वृन्दारण्यभुवः प्रणामविधिनादिक्सुभ्रुवां विश्लथा। मुक्ताकञ्चुलिकाः स्थिरेण मरुता धार्य्यन्त एताः किमु। स्वस्वस्थानसमीपतः किमथवा तद्वन्दनार्थं मुदा। पौर्वापर्य्यमपास्य सादरमधस्ताराvalी लम्बते ॥ ११ ॥

किंच या वितानावलिः। तज्रेणुलिलिक्षयेव नभसः श्रीणां रसज्ञाकुलैर्न्यञ्चश्च लचारुचीनशकलैरान्दोलयन्निर्बभौ। मन्दस्पन्दिमरुद्विधूननमृदुप्रेङ्खोलमुक्तामणि—प्रालम्बा चलकिङ्किणीकुलकलस्वानैः श्रवः प्रेयसी ॥१२॥

किंच। पर्य्यन्तेषु समानचामरचयैर्ज्योत्स्नातडागोदराद्बुद्बुदीनैरिव हंसकैर्गगनैः किं वा सिताम्भोरुहैः। माळानामपि खण्डकैस्तत इतो नानाप्रसूनोज्ज्वलैः सश्रद्धं वनदेवतापरिषदा सञ्चस्करे सा पुनः ॥१३॥

धूपैरागुरवैर्महासुरभिभिः सद्धूमलेखोल्लसत् कर्पूरत्रसरेणुभिर्दिगबलालोमावलीसन्निभैः। च्योतद्भिर्मकरन्दबिन्दुनिकरैः कल्पद्रुमेभ्यो मुहुः सौरभ्यातिशयं विशिष्य गमितैः सा धूपितासीत्स्थली ॥ १४ ॥

ततश्च। दिव्यो देवा अपि सरभसं चित्रवादित्रवादाः सिद्धा विद्याधरपरिषदश्चारणाः किन्नराश्च प्रागेवासन्नभसि परितो वीतमानैर्विमानैर्नेह्यौत्कण्ठ्यं भवति सपद्यपेक्षमुत्कण्ठितानाम् ॥ १५ ॥

ततश्च। सर्वस्माद्वनादेव ता देवता वनानामनानामतयो विविधमनाविलविलसत्परमुत्सवोपकरणं समादाय मादायतनतयानतया चित्तवृत्त्या वृन्दावनावनावागत्य निस्तुलसौहृदहृदयालुतादिगुणवृन्दया वृन्दया सह सहचरीभावमाकल्प्य कल्पशेपा दोलामणितरुमण्डपावल्या वल्याभिः कुसुममालाभिर्मण्डनिका निरुपमकमनीयजालाकृतीर्विदधते स्म ॥ १६ ॥

पगमः। अस्त्री वितानमुल्लोच इत्यमरः ॥ १० ॥

मुक्ताकञ्चुलिकाभिरखण्डिता चतुरस्रता न भवतीति वितानानां तारावल्युपमा ॥ ११ ॥

तज्रेणवो वृन्दारण्यभुवो रेणूनां लिलिक्षयेव लेढुमिच्छयेव नभसः श्रीणां आकाशलक्ष्मीणां रसज्ञाकुलैर्जिह्वासमूहैरिव चीनशकलैर्वितानपर्यन्तस्थैरित्यर्थः। मन्दस्पन्दिना मरुता यद्विधूननं तेन मृदुः प्रेङ्खोलो येषां तथाभूता मुक्तामणिमयाः प्रालम्बा यस्याः सा ॥ १२ ॥

हंसकैरिति श्वेतिमचाञ्चल्यादिभिः सिताम्भोरुहैरिति सौरभ्यमार्दवसममण्डलताभिः सञ्चस्करे संस्क्रियते स्म ॥ १३ ॥

सतीषु धूमलेखासु उल्लसन्तः कर्पूराणां त्रसरेणवो यत्र तैः। पुनः किंभूतैः कल्पद्रुमेभ्यः च्योतद्भिर्मकरन्दबिन्दुनिकरैः कर्तृभिः सौरभ्यातिशयं गमितैः प्रापितैः ॥ १४ ॥

वीतमानैरपरिमितैर्विमानैः सह देव्यादयः प्रागेव दोलनदोलनात् पूर्वमेव चित्रवादित्राणि वादयन्त आसन् अभवन् तत्र न्यायो न ह्यौत्कण्ठ्यमिति ॥ १५ ॥

अनानामतयः सामग्र्येनैकमतयः। मादो हर्षस्तस्यायतनमाश्रयस्तत्तया। वृन्दावनावनौ वृन्दावनभूमौ। वल्याभिरुत्तमाभिः कुसुममालाभिः। कल्पशेपाः मण्डनिकाः ॥ १६ ॥

अभितोऽभितोपेणावलोकनरसविकिरो विकिरोत्कराश्च समन्ततः समन्ततः समागत्य परितो दोलस्थलीस्थलीलातरुषु प्रतिशाखं प्रतिपल्लवमासीना जातहृदयान्दोला दोलायमानकृष्णदिदृक्षासदृक्षासन्नसन्नवामोदतया तूष्णीकाः सन्तः कृष्णगुणगणगणनामेव कुर्वते स्म ॥ १७ ॥

तथा सकला एव हरिणजातयो जातयोगेन परमकौतुकेन केनचिदितस्ततोऽस्ततोदेन मनसा प्रतिलताकुञ्जाजिरे रराजिरे राजिरेषा च तदा तासां विचित्रा चित्रार्पिता इवासीत् ॥ १८ ॥

ततश्चाकस्मात् । न चाकृष्टा वेणोः क्वणितकलया नापि भवनक्रियां त्यक्त्वा याता न च गुरुविरोधक्षतधियः । कलाकेलीचिन्तामणय इव दिग्भ्यः किमथवा समुद्भीर्णाः कल्पद्रुभिरथ समीयुर्मृगदृशः ॥ १९ ॥

अन्तःश्रोणि विराजिता मृदुघनैश्चण्डातकैः कौङ्कुमैस्तेषां तूपरि सूक्ष्मचीनानिचयैरागुल्फविस्फारिभिः चञ्चत्कञ्चुलिका विशेषविलसद्वक्षोरुहा निर्भरं काञ्चीकल्पितनीविबन्धविषयस्तुल्यश्रियोऽपूर्वभुः ॥ २० ॥

काश्चित्कौसुमचापचापललसत्स्कन्धाः शरैः कौसुमैः । काञ्चीदामगतैः कराम्बुजकृतैः सैन्दूरकैः कन्दुकैः । तस्मिन् कौतुकदोलखेलनकलारङ्गाजिरे रेजिरे । संग्रामोत्सवदेवता इव तनूभृत्यो मनोजन्मनः ॥ २१ ॥

काश्चित्कौङ्कुमधूलिधोरणिभृतां वासोञ्चलीं लीलया तिर्यक् काञ्चनकाञ्चिसीम्नि जघने बद्धां दधत्यो बभुः । याभिर्यचिरसञ्चितं रतिकलावैदग्ध्यविद्याधनं क्रेतुं कृष्णमनोमणिं तदिव ता ग्रन्थौ निधायागताः ॥ २२ ॥

विकिराणां पक्षिणामुत्कराः समूहाः । नगौकोवाजिविकिरपतत्पत्ररथाण्डजा इत्यमरः । अवलोकनरसं विकिरन्तीति क्विप् ते तथा । समन्ततः सर्वतः । समं सहैव । ततः । दोलायमानस्य कृष्णस्य दिदृक्षया सदृक्षः सदृशः एव आसन्नः सन्नन्नुत्तमः नव आमोदो येषां तत्तया ॥ १७ ॥

जातो योगः संयोगो यस्य तेन कौतुकेन अस्ततोदेन गतव्यथेन मनसा । तासां राजिः श्रेणिः ॥ १८ ॥

न चाकृष्टा इत्यादिना दोलोत्सवादिषु गुरुजनादिवारणासंभवात्स्वाच्छन्द्यमेवेति व्यञ्जितम् दिग्भ्य इति कल्पद्रुभिरित्याभ्यां किं दूरादागताः किं वा तत एवोद्भूता इति संदेहो व्यञ्जितः ॥१९॥

अन्तः श्रोणि नितम्बादिप्रदेशे मृदूनि कोमलानि च घनानि च तैश्चण्डातकैरर्द्धोरुपर्य्यन्तविधायिभिर्नृत्यगीतोत्सवाद्युपयोगिभिश्चाल्पैरतिप्रसिद्धविचित्रवस्त्रैर्विराजिताः । अर्द्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकमित्यमरः । तदुपरि विचित्रान्तरीयकैः सेयां तूपरि कौङ्कुमैः कुङ्कुमरसाक्तैः२० कौसुमानां चापानां धनुषां चापलेन चपलतया लसन् स्कन्धो यासां ताः ॥२१॥

क्रेतुमित्यनेन तद्वैदग्ध्यविद्याधनस्य कृष्णवशीकारित्वं व्यञ्जितम् ॥२२॥

श्च्योतैरागुरवैर्महासुरभिभिः कस्तूरिकाकर्दमैः कार्पूरैरपि रेणुभिर्मलयजक्षोदैश्च संपूरिताः। वाष्पच्छेद्यतया महामणिमयस्थाल्यन्तरस्थापिताः काश्चिज्जातुपकूपिकाः करतलेनादाय तत्राययुः ॥ २३ ॥

काश्चित्कुङ्कुमवारिभिर्मलयजाम्भोभिश्च कस्तूरिका पाथोभिः कुसुमद्रवैरपि पृथक् संपूरितं पौरटम्। बिभ्रत्यो जलयन्त्रजालमतुलं शिल्पेन नानात्मना रेजुर्मन्मथयुद्धयान्त्रिकततेर्मूर्त्ता इवौजः श्रियः ॥ २४ ॥

एवं ताभिः स्त्रीरत्नभूताभिरभिभूताभिरामाभिरामहोत्सवरसेनातनुसेनातनुसौभाग्यहारिणीभिर्हारिणीभिरहंपूर्विकयाऽपूर्विकया पौर्वापर्य्यापर्यालोचनेनैव खेलासौकर्य्यचतुरं चतुरङ्गनपरिसरं परिसरन्तीभिर्यदि मदकलकलकण्ठकण्ठविकस्वरस्वरपरिहासकः स कश्चन कल कलः कलयांचक्रे तदैव ॥ २५ ॥

श्रीराधिकांसविनिवेशितवामबाहुर्वंशीविलासविलसत्तरवामपाणिः। चारुप्रकोष्ठचलकङ्कणमन्यदोष्णा लीलासरोरुहविधूननलब्धलक्ष्मीः ॥ २६ ॥

अन्तःस्थशोणकुसुमद्युतिवामिसामिवासःकिरीटतटगुम्फितबर्हिबर्हः। मन्दभ्रमद्भ्रमरपक्षमरुद्विलोलकर्णोत्पलंमकरकुण्डलमादधानः ॥ २७ ॥

सुश्लक्ष्णसूक्ष्मतमकञ्चुकचुम्बिताङ्गः केयूरकङ्कणमणीन्द्ररुचा सुचारुः। कण्ठोपकण्ठचलकौस्तुभरश्मिपूरशोणायमानवरमौक्तिकदामधामा ॥ २८ ॥

लीलाविलासगमनक्रममन्दमन्दशब्दायमानमणिनूपुरकिङ्किणीकः। ओष्ठाधरे ललितया ललितोपनीतं ताम्बूलपूलकमदन् मदमत्तमूर्त्तिः ॥ २९ ॥

नीरध्राम्बररमणीमणीन्द्रवीथीं स्वाभाभिर्मणिमययष्टिकोपमाभिः। उत्सार्य्य प्रसभमिवाहितप्रवेशः श्रीकृष्णो मणितरुमण्डपं विवेश ॥ ३० ॥

जय जयजयेत्युच्चैर्नादाः खगैरुपतेनिरे मुकुलपुलकैरन्तर्मोदा द्रुमैरभिनिर्न्यिरे। अजनि सुमनःशीधुस्यन्दैर्लताभिरुदश्रुभिः सह दयितया दोलाक्रीडं हरावधिरोहति ३१

आगुरवैरगुरुसम्बन्धिभिःश्च्योतैर्द्रवैः२३यान्त्रिकततेर्यन्त्रवारिसमूहस्यतेजःसंपत्तयेमूर्त्तिमत्य इव२४

अभिरामेण महोत्सवरसेन अभिभूताभिः वशीकृताभिः अतनुसेनायाः कन्दर्पसैन्यस्य अतनु सम्पूर्णं सौभाग्यं हर्तुं शीलं यासां ताभिः। कश्चन कलकलः एहि आयातास्मि पश्य दर्शय देहि नय संस्कुरु आरोहय ब्रूहि परिभाषयेत्याद्यात्मकः ॥२५॥

अन्यदोष्णा दक्षिणहस्तेन चारुणि प्रकोष्ठे चलं कङ्कणं यतस्तद्यथास्यात्तथेति विधूननक्रियाविशेषणम्। तरुमण्डपं विवेशेत्युत्तरेणान्वयः ॥२६॥

अन्तःस्थस्य शोणकुसुमस्य द्युतिवमनशीलं यत्सामिवासः किरीटं तिरश्चीनोष्णीषं तस्य तटे गुम्फितं बर्हिबर्हं येन सः ॥ २७ ॥ कण्ठोपकण्ठकण्ठनिकटे ॥ २८ ॥

ताम्बूलस्य पूलकं वीटिकाम् ॥ २९ ॥ अम्बररमण्यः स्वर्गाङ्गनाः ॥ ३० ॥

अधिरोहति आरोहति सति ॥ ३१ ॥

सतडितमिव स्निग्धं धाराधरं द्रुममण्डपोपरि परिगतं दर्शं दर्शं महर्षवशं गताः। परिचितमपि प्रेम्णापूर्वं विदन्त इवोन्मदाश्चकुवुरभितः केओ केओ इति प्रचलाकिनः ॥ ३२ ॥

अथ नभसि भसितिम्नातिम्नातानि नन्दनवनकुसुमानि सुमानितानि मधुकरनिकरेण करेण किरन्तीभिर्ललितसंचारचारणकिंपुरुषपुरुषनारीभिः ॥३३॥

मृदुतरकरकिसलयसलयविमर्दमर्दलसुपणपणववरलम्पटपटहादिवादित्रवादित्रपारहितसिद्धवधूनिचयसमवेताभिरतिभासुरसुरतरङ्गिणीतरङ्गरुचाऽमरचामरनिचयेन चुम्ब्यमानकरकमलाभिरमलाभिरमरनारीभिरुर्वशीवशीभूताभिरप्सरोभिरपि वियति वियति निरवकाशताम् ॥ ३४ ॥

मथ्यमानचान्द्रिकाफेनधवलवलमानकशिपुना पुनानेनेव नयनवतां नयनवतो कृतास्तरां रुचिरुचिरोपबर्हामहामतिरामणीयकस्य कस्यचित्सकलसौन्दर्य्योपर्य्यङ्किकां पर्य्यङ्किकां दोलस्य लस्यमानमानसतया समारोढुं स्म व्रजतिव्रजतिलकनन्दनः ३५

नीराजितो मधुरमङ्गलगानपूर्वं दीपैर्महामणिमयैर्वनदेवताभिः व्यापारयन्नयनमद्भुतदोलशिल्पे श्रीराधया सह बभौ कुतुकीमुकुन्दः। वामे वामविलोचनाचयमणी राधा सलीलं हरेर्हस्तालम्बकरम्बितेन रहसा संजातरोमोत्सवा। आरूढस्य मणीन्द्रदोलनमहप्रेङ्खोलिकां कौतुकादुत्थायोपविवेशतत्सहचरीसंघः समन्तादभूत ३६

दर्शं दर्शं दृष्ट्वा दृष्ट्वा प्रचलाकिनः मयूराः परिचितमपि तं प्रेम्णा अनुरागेण अपूर्वमिव केओ केओ इति के यूयं भोः के यूयं भोः इति चुकुवुः। ओ संबोधन आह्वाने स्मरणे चानुकम्पने. इतिमेदिनी। अपभ्रंशभाषापीयं प्राच्यानां केहो केहो इति पाश्चात्यानामपि ३२

अथ नभसि नन्दनवनकुसुमानि किरन्तीभिरमरनार्य्यादिभिर्हेतुभिर्निरवकाशतां वियति विशेषेण प्राप्नुवति सति व्रजतिलकनन्दनः कृष्णो दोलस्य पर्य्यङ्किकां समारोढुं व्रजति स्म इत्यन्वयः। कुसुमानि कथंभूतानि भस्य नक्षत्रस्य सितिम्ना श्वेतिम्ना अतिम्नातानि अत्युज्ज्वलितानि सुष्ठु मानितानि अतिसौरभ्याद्धेतोरादृतानि ॥३३॥

करकिशलयानां सलयो विमर्दो यत्र तथाभूतो मर्दलश्च सुपणो बहुमूल्यः पणवश्च वरलम्पटः पटहश्च तदादिवादित्रवादिनीनां त्रपारहितसिद्धवधूनां निचयेन समवेताभिःसुरतरङ्गिण्यास्तरङ्गस्येव रुक्कान्तिर्यस्य तथाभूतेन, अमरचामरनिचयेन ॥३४॥

कशिपुना वस्त्रेण कृतास्तरान् कशिपु त्वन्नमाच्छादनं द्वयमित्यमरः। कथंभूतेन नयनवतां चक्षुष्मतां नयस्य रूपग्रहणस्य नवतां नवीनत्वं पुनानेनेव पवित्रीकुर्वतेव नयनवतया प्राकृतवस्तुरूपग्रहणमपि पूर्वं यत्कृतं तदपि यदवलोकनमाहात्म्यात् पवित्रं जातमित्यर्थः। सकलसौन्दर्य्यमपि उपरि अङ्कयति चिह्नयतीति ताम् ॥ ३५ ॥

प्रेङ्खोलिकां आरूढस्य हरेर्वामे राधा। उपविवेश वामविलोचनाचयस्य युवतिसमूहस्य मणिः रत्नरूपा हरेर्हस्तालम्बेन स्कन्धोपरि वामहस्तन्यासेन करम्बितं संबद्धं यद्रहः स्मरविलसितं तेन हेतुना संजातो रोमोत्सवो यस्याः सा तस्याः सहचरीसंघः समन्तादभूत् पुपुदिशु ।३६।

एवं चक्षुष्मताऽमतिमतिसुन्दरीदरीदृश्यमानेन रामणीयकेन केनचिदाहरन्तीं तां दोलोत्सवमेङ्खोलिकां भगवति सति समारूढे रूढेन लावण्यामृतस्रोतस्वतीस्रोतस्वतीव तरलेन माधुर्य्यतरङ्गभरेण रेणव इव सर्वेषां धैर्य्यमर्य्यादा यदि क्षालिता बभूवुस्तदा तदालोकनकनदुत्कण्ठाः कण्ठागतप्राणा इव देवा देवाङ्गनाश्च विहाय विहायसो मध्यमध्यवसितदिदृक्षासदृक्षासन्नश्राद्धावशात् तदुचितं नभोदेशं समाशिश्रियिरे ॥ ३७ ॥

ततश्च । मेङ्खोलिकारोहरोहदद्भुतमहामधुरिमाणं तमालोक्य स्वस्वदोलपर्य्यङ्कोपर्य्यङ्कोढकेलिधूलयो लयोत्तमेन मङ्गलगानेन विकस्वरस्वरपरिमलाः परितः प्रधानाः कमलदृशोऽमूदृशो मूर्छितानन्दाः समारुरुहुः ॥ ३८ ॥

तद्यथा । चन्द्रावलीप्रभृतयः पुरतोमुरारेर्भद्रादयः परिजनैः सह दक्षिणेन्याः । श्यामादयो निजगणैः सह वामभागे धन्यादयः सहचरीभिरथास्य पश्चात् । एवं वलितमत्याशं प्रत्याशं समारूढदोलपर्य्यङ्किकासु तासु सुतासु गोदुहां कृष्णदोलसमोच्छ्रायलब्धशोभासु भासुरतयानारतया नानावधतया तदा तदात्यन्तिकमाश्चर्य्यमासीत् ॥ ३९ ॥

ततश्च । समगदमेदुरताभी रताभी रसदसदस्यतायां पूरितचतुरङ्गनाभिरङ्गनाभिराख्ये मङ्गलमधुरगानकले कलेवरनिर्जितकनकलतारामरामणीयकाभिर्मृदुलवीणापरिवादिनीवादिनीभिरपराभिरपराभिदुरदुरवगाहमोदाभिरपि निर्मितेऽमिते नादमाधुरीधुरीणे श्रुतिहर्षहर्षे सति ॥ ४० ॥

धृत्वा मेङ्खोलिकाया गुणमतिकलितं पाणिनैकेन लीलालावण्यैर्दोलयन्त्यो निजतनुलतिकां भृङ्गसंघेन सार्धम् । मुष्टिग्राह्यं गृहीत्वा निबिडनियमितादञ्चलात् केलिधूलीरन्येनावल्गुवल्गन्मणिमयवलयं चिक्षिपुः पङ्कजाक्ष्यः ॥ ४१ ॥

चक्षुष्मता अतिशयेन मतिरेव सुन्दरी रमणी तयादरीदृश्यमानेन अतिशयेन दृश्यमानेन रामणीयकेनकेनचिदानिर्वचनीयेन तामतिसुन्दरीम् आहरन्तीम् आकर्षन्तीं प्रेङ्खोलिकांसमारूढे सति भगवति । लावण्यामृतस्य स्रोतस्वती नदी तस्याः स्रोतःसु अतीव चपलेन ॥३७॥

स्वस्वदोलपर्य्यङ्कोपरि । अङ्के काञ्चीबन्धप्रदेशे ऊढाः केलिधूलयो याभिस्ताः ॥३८॥

वलिता प्रत्याशा दोलनाभिलाषो यत्र तद्यथा स्यात्तथा प्रत्याशं दिशि दिशीत्यर्थः अनारतया निरन्तरया भासुरतया सुन्दरतया कृष्णदोलस्य सम एव य उच्छ्राय उन्नतिस्तेन लब्धशोभासु ॥ ३९ ॥

समा एव मदेन मेदुरता यासां ताभिः रसदा या सदस्यता सभ्यता तस्यां रताभिः. पूरितानि चत्वारि प्राङ्गणानि याभिस्ताभिः अपरैरभिदुरो भेत्तुमशक्योदुरवगाहो मोदो यासां ताभिः ॥ ४० ॥

एकेन पाणिना प्रेङ्खोलिकाया वामभागस्था वामेन दक्षिणभागस्था दक्षिणेन पाणिना धृत्वा इत्यर्थः ॥ ४१ ॥

ततश्च । धूलीनां धोरणिः सा नभसि तत इतो धूपमानानिलेन ध्वान्तं व्योम्नि व्यतानीद्विकचनवजवाजाललक्ष्मीविडम्बि दिव्यो देवाश्च दृष्टिव्यवधिविधुरिताः पुष्पवर्षप्रकर्षैर्माध्वीकस्यन्दकन्दैर्मुहुरुदयि मुहुर्यत्नपूर्वं निरासुः ॥ ४२ ॥

ततश्च । पर्य्यन्तस्थैः प्रियपरिजनैश्चारुदोलायमानौ वृन्दाद्याभिर्जयजयजयेत्युच्यमानौ समन्तात् । लीलालोलं स्वयमपि मुदा केलिधूलीः किरन्तौ राधाकृष्णौ युवतिनिकरे रेजतुः कीर्यमाणौ ॥ ४३ ॥

ततश्च । दोलन्तीभिः प्रियपरिभवप्राप्तये प्रेयसीभिः क्षिप्ते खेलारजसि मरुता धूपमाने समन्तात् । भूयः क्षिप्ता जतुपुटिकया गन्धसारादिपङ्का यन्त्रोन्मुक्ताः किमिव गुलिकाः कामदेवस्य पेतुः ॥ ४४ ॥

ततश्च राधाकृष्णयोः परितः परितस्थुषीभिः कलावतीभिर्गन्धादिपङ्ककूपिकानिःक्षेपचतुराश्चतुराशावलयदोलारोहिरोहिणीरमणमण्डलस्य इव कुवलयदृशस्तास्तदीया एव गन्धादिकूपिकाः परिमलद्बुहस्तेन गृहीत्वा निहन्यन्ते स्म ॥ ४५ ॥

न खलु तासामेकापि तयोरङ्गरङ्गशयोर्ललाग यदि पुनरपि ताः संभूय भूयसा कौतुकेन केनचिद्युगपदेव पदे वर्त्तमाना जिगीषायामपर्य्युपर्युपचितामहमहमिकामावहन्त्यस्त्रिचतुरास्त्रिचतुरा एव गन्धादिकूपिका एकैकं निचिक्षिपुः ॥ ४६ ॥

ततश्च । आवेगस्य जवेन तेन महता निर्भज्य विभ्रश्यतो भूमौ जातुपकोषतोऽतिमृदुत्वात् निसृत्य दूरं गतैः । गन्धैरागुरवैर्घनैर्मलयजक्षोदैश्च गोलायितैर्भित्त्वाण्डं खगपोतकैरिव वहिर्भूतैर्निपेतेऽभितः ॥ ४७ ॥

तेषां ये व्रजराजसूनुनिकटे वेगात्समं सर्वतः क्षिप्तानां निपतन्ति तानरहयन् पार्श्वस्थिताः सुभ्रुवः । ये वा केऽपि लगन्ति तस्य जलदश्यामे प्रतीकेऽभि तस्ता-

---

दृष्टेर्दर्शनस्य व्यवधिना धूलिजालकृतव्यवधानेन विधुरिता व्याकुला मुहुरुदयि धूलिध्वान्तं मुहुरेव यत्नपूर्वं निरासुर्दूरीचक्रुः । कैः पुष्पवर्षप्रकर्षैः किंभूतैः माध्वीकस्य मकरन्दस्य स्यन्देन क्षरणेन कन्दैर्जलदैरिवेत्यर्थः ॥ ४२ ॥

युवतिनिकरैश्चन्द्रावल्यादिभिः ॥ ४३ ॥ गन्धसारादीनां चन्दनादीनां पङ्काः ॥ ४४ ॥

परितः सर्वतः परितस्थुषीभिः स्थितवतीभिः सखीभिः कर्त्रीभिः गन्धादिकूपिकानां निक्षेपे चतुरास्ताः कुवलयदृशश्चन्द्रावल्यादयः कर्मभूता निहन्यन्ते स्म तदीयास्ताभिः क्षिप्ता एव या गन्धादिकूपिकास्ता एव हस्तेन गृहीत्वा ताभिरेव इत्यर्थः ॥ ४५ ॥

जिगीषायां पदे जिगीषारूपे व्यवसाये वर्त्तमानास्त्रिचतुरास्त्रिसृश्चतस्रो वा सुन्दर्य्य एकैकं प्रत्येकमेव तिसृश्चतस्रो वा कूपिका युगपच्चिक्षिपुः ॥ ४६ ॥

विभ्रश्यतो जातुपकोषतः सकाशात् ॥ ४७ ॥

तेषां क्षिप्तानां गन्धादीनां मध्ये । अरहयन् निवारयामासुरित्यर्थः । प्रतीके अङ्गे । अभिनमुखीति भावविशेषोदयात् । पाणिना लुप्यतामितभिर्देणैव तदङ्गस्पर्शोऽपि घटितः । अत एव

नालुम्पति राधिका स्मितमुखी स्वेदच्युता पाणिना ॥ ४८ ॥

एवं दोलायमानमानकुतुकितचकोरकीकृतकोरकीकृतलोचनचमूरुलोचनाच॰ लोचनाह्लादनमादनव्रतधरः ॥४९॥

तदितरविधावलसो वलसोदरोऽदरोगीर्णमदघूर्णमाननयनो विलासचतुरं॰ तुरङ्गनाभिमुख्यं मुख्यं पक्ष्मभिलपन् ॥५०॥

कदाचित्केलिकलाकलापदक्षिणा दक्षिणाशावर्तिनी रमणीमणीर्दोलन्तीः॰ रन्तीश्चारुण्यविलसत्करेणुचयं करेणुचयं जयन्तीर्वैजयन्तीर्वैदग्धीनामिव ॥५१॥

कदाचिच्च वलमानमुत्तरामुत्तराशाविलासिविलासिनीश्रेणिम् ॥५२॥

कदाचिदपि रसविलासैरपश्चिमाशां पश्चिमाशां प्रतिपद्य दोलन्तीं कुवलय॰ लयतिरस्कारिदृशां तादृशां तारुण्यवतीनामालीमालीजनैस्तथाविधैः सहिताम् ५

कदाचन पूर्वकाष्ठापूर्वकाष्ठापरिप्राप्तदोलारोहा वरारोहा वराभोदवतीरवेच॰ माणो दोलन्नेव गुणवाराधिकया राधिकया सह करपद्मपद्मरागरुचिधूलीधूली लया सर्वा एव पराभूत ॥ ५४ ॥

एवं स्मितविकसितवदननीरजोरजोभरेण ताः पराभूय भूय एव रसकुतूह॰ लविक्रमेण क्रमेण हरिहरिदादिहरिचतुष्टयतुष्टय एव तत्तदभिमुखीभूय दोलत द्विविध एव दोल आसीत् ॥ ५५ ॥

स्वेदच्युतेति सात्विकविकारः प्रस्वेदः ॥ ४८ ॥

दोलायमानानि धैर्य्यापगमे सति चपलीभूतानि च मानकुतुकितानि गर्वौत्सुक्ययुक्तानि च चकोरकीकृतानि सौभाग्यरसास्वादयोराधिक्यात् चन्द्रानुकम्पितचकोरसदृशीकृतानि च तदानी-मेव किंचिदुन्मोदयत्वशात्कोरकीकृतानि च लोचनानि यस्यास्तथाभूता या चमूरुलोचनाचमूः हरि-णनयनाविततिः तस्याः उत अधिकं लोचनाह्लादमेव मादनव्रतं कन्दर्पप्रणीतनियमं धरतीति तथा सः ॥ ४९ ॥

तत्रैवनिष्ठाकैवल्येन तस्य धीरललितत्वं सूचयन्नाह तदितरविधौ अलस इति । चतुर्षु पू-र्वादिदिग्गतेषु अङ्गनेषु प्राङ्गणेषु आभिमुख्येन तथाभूतं पक्ष्मभिलपन् इच्छयाङ्गीकुर्वन् ॥५०॥

कदाचिद्दक्षिणाशावर्तिनी रमणीमणीर्दोलन्तीरवेक्षमाणः करपद्मधृतपद्मरागरुचिधूलीनां धू-लीलया पराबभूव । आरुण्येन विलसत् कं सुखं यस्मात् तथाभूतं रेणुचयं करेणुचयं हस्ति नीसमूहं जयन्तीर्वैजयन्तीः पताकाः ॥५१॥

वलवानमुत्तरां अतिशयेन प्रवलानन्दां उत्तरस्यां दिशि विलसितुं शीलं यस्याः सा चासौ विलासिनीश्रेणिश्चेति ताम् ॥५२॥

अपश्चिमा अनपकृष्टा आशा मनोरथो यस्यास्तां तारुण्यवती नामालीं श्रेणिम् ॥५३॥

पूर्वकाष्ठायां पूर्वदिशि अपूर्वा या काष्ठा कृष्णदोलपर्य्यङ्कस्य कृष्णस्य च संमुखत्वात् अ-द्भुत उत्कर्षस्तां परिप्राप्तं दोलं पर्य्यङ्कं आरोहन्तीति ताः काष्ठोत्कर्षस्थितौ इ॰ । गुणश्रेण्या गुणसमूहेन अधिकया ॥ ५४ ॥

हरिहरित् पूर्वादिक् तदादिदिक्चतुष्टयस्य तुष्टये दोलतो दोलनतः ॥ ५५

तथाहि । सांमुख्यं यदि पूर्वपश्चिमदिशोर्दोलस्तदा संमुखः सांमुख्यं यदि दक्षिणोत्तरदिशोर्दोलस्तदा पार्श्वगः । एवं संमुखपार्श्वदोलकुतुके हारस्य वन्यस्रजः श्रीमत्कुण्डलयोश्च तस्य समभूद्दोलोत्सवस्तादृशः ॥ ९६॥

एवमहरहरहो रहोविलासा विलासाम्बुधेस्तस्य नित्यभूताः प्रकटाप्रकटतयैव समज्जृम्भन्ते स्म ॥ ९७ ॥

न तस्यास्ते शक्तिर्नहि भवितुमीदृक् प्रभवतो न सिद्धादेर्भेदाश्च कमलदृशस्ताश्च विविधाः । न वृन्दारण्यस्यार्हति न खलु तस्याप्रकटता कथं तस्मिन्नित्यं न भवतु हरेः केलिकलितम् ॥ ९८ ॥

किन्तु स एकः कान्तानां पुरि पुरि सहस्राष्टकयुगमसंख्यानां पाणिग्रहणकुतुके तत्र

पूर्वपश्चिमदिशोर्यदि सांमुख्यं पूर्वाभिमुखीभूय पश्चिमाभिमुखीभूय वा यदा कृष्णो दोलती त्यर्थः दोलस्तदा संमुखः दोलनक्रियापि पूर्वाभिमुखी पश्चिमाभिमुखी चेति तस्याः स्वमुखाभिमतनदेशचारित्वेन सांमुख्यात् । दक्षिणोत्तरदिशोर्यदि सांमुख्यं दक्षिणाभिमुखीभूय उत्तराभिमुखीभूय वा यदि कृष्णो दोलतीत्यर्थः दोलस्तदा पार्श्वग इति दोलक्रियायाः सदैव पूर्वपश्चिमाभिमुखीभावेन स्थितैकरूप्यात् । एवमेव हारस्येति हारादीनामपि कृष्णस्य पूर्वाभिमुखत्वे संमुख एव दोलोत्सवः दक्षिणाभिमुखत्वे पार्श्वगस्तिरश्चीनतयेति ॥९६॥

अथ गोप्यः कृष्णे वनं याते तमनु द्रुतचेतसः । कृष्णलीलाः प्रगायन्त्यो निन्युर्दुःखेन वासरान् । इत्यादिकदशमस्कन्धपञ्चत्रिंशाध्यायगतप्रतियुगलपद्यगीतवंशीवादनलीलायाः श्रीव्रजसुन्दरीजनविरहमयत्वं तदुपरितनारिष्टकेश्यादिवधलीलायाश्चानतिमाङ्गल्यं तदुपरितनाक्रूरागमनादिलीलायाश्चानुरागभक्तजनविक्षोभकत्वं तदुपरितनरङ्गप्रवेशादिलीलानामवृन्दावनीयत्वं च पर्यालोच्य निखिलसहृदयसमुदयमुकुटमणिः सोऽयं ग्रन्थकारः सुखमयदोलोत्सवरसावसर एव स्वग्रन्थपरिसमाप्तिमभिलषन्नाह एव मिति । अहो आश्चर्यभूताः रहोविलासा रहस्यलीलाः प्रकटाप्रकटतयैव त एव विलासा यदि कदाचित् प्रपञ्चगोचरीकृतास्तदा प्रकटतया यदा च तदगोचरीकृतास्तदा अप्रकटतयेत्यर्थः ॥९७॥

ननु तेषां प्रपञ्चागोचरत्वेन सत्वे किं प्रामाणमिति चेत् "जयति जननिवासो" "व्रजपुरवनितानां वर्द्धयन् कामदेव" मित्यादिश्रीभागवतादिवचनसूचितलीलानित्यत्वप्रमाणिता तद्विनया शक्तिरेवेत्यविश्वासनिरासाय साक्षेपमाह न तस्यास्ते इति । तस्य प्रभवतः प्रभोः कृष्णस्य ईदृक् भवितुं उक्तन्यायेन प्रकटाप्रकटनित्यलीलास्पदीभवितुं शक्तिर्नास्ति न अपितु अस्त्येवेत्यर्थः । ताश्च तत् प्रेयस्य कमलदृशोऽनयुक्तयोः न भासते न अपितु भासत एव । कीदृश्यः सिद्धादेर्भेदात् सिद्धा नित्यसिद्धाः श्रुतिरूपा मुनिरूपा इतिभेदात् त्रिविधाः । तस्य विलासस्थानस्य वृन्दारण्यस्याप्यप्रकटता प्राकृतलोकादृश्यत्वं नार्हति न अपितु अर्हत्येव । अतः कथं केलिकलितं नित्यं न भवतु हे महाशयाः इदं तावन्मया पृष्टत्वमेव प्रतिगृह्यतामिति भावः ॥९८

किन्त्विति पुनरेव प्रकटाप्रकटाश्च सर्वा एव लीला नित्यभूता एव वर्तन्त इत्यर्थः । तथाहि । अनन्तकोटिब्रह्माण्डतत्पुरेष्वेपु मध्ये यदा यत्र ब्रह्माण्डपुरे तेन या लीला प्रकाश्य

नालम्पति राधिका स्मितमुखी स्वेदच्युता पाणिना ॥ ४८ ॥

एवं दोलायमानमानकुतुकितचकोरकीकृतकोरकीकृतलोचनचमूरुलोचनाचमूलोचनाह्लादनमादनवृतधरः ॥४९॥

तदितरविधावलसो वलसोदरोऽदरोगीर्णमदघूर्णमाननयनो विलासचतुरं चतुरङ्गनाभिमुख्यं मुख्यं पक्ष्मभिलपन् ॥५०॥

कदाचित्केलिकलाकलापदक्षिणा दक्षिणाशावर्त्तिनी रमणीमणीर्दोलन्तीरन्तीश्चारुण्यविलसत्करेणुचयं करेणुचयं जयन्तीर्वैजयन्तीर्वैदग्धीनामिव ॥५१॥

कदाचिच्च वलमानमुत्तरामुत्तराशाविलासिविलासिनीश्रेणिम् ॥५२॥

कदाचिदपि रसविलासैरपश्चिमाशां पश्चिमाशां प्रतिपद्य दोलन्तीं कुवलयवलयतिरस्कारिदृशां तादृशां तारुण्यवतीनामालीमालीजनैस्तथाविधैः सहिताम् ५३

कदाचन पूर्वकाष्ठापूर्वकाष्ठापरिप्राप्तदोलारोहा वरारोहा वराभोदवतीरवेक्षमाणो दोलन्नेव गुणवाराधिकया राधिकया सह करपद्मपद्मरागरुचिधूलीधूलीलया सर्वा एव पराभूव ॥ ५४ ॥

एवं स्मितविकसितवदननीरजोरजोभरेण ताः पराभूय भूय एव रसकुतूहलविक्रमेण क्रमेण हरिहरिदादिहरिचतुष्टयतुष्टय एव तत्तदभिमुखीभूय दोलतो द्विविध एव दोल आसीत् ॥ ५५ ॥

स्वेदच्युतेति सात्विकविकारः प्रस्वेदः ॥ ४८ ॥

दोलायमानानि धैर्यापगमे सति चपलीभूतानि च मानकुतुकितानि गर्वौत्सुक्ययुक्तानि च चकोरकीकृतानि सौभाग्यरसास्वादयोराधिक्यात् चन्द्रानुकम्पितचकोरसदृशीकृतानि च तदानीमेव किंचिल्लज्जोदयवशात्कोरकीकृतानि च लोचनानि यस्यास्तथाभूता या चमूरुलोचनाचमूः हरिणनयनाविततिः तस्याः उरु अधिकं लोचनाह्लादमेव मादनव्रतं कन्दर्पप्रणीतनियमं धरतीति तथा सः ॥ ४९ ॥

तत्रैवनिष्ठाकैवल्येन तस्य धीरललितत्वं सूचयन्नाह तदितरविधौ अलस इति । चतुर्षु पूर्वादिदिग्गतेषु अङ्गनेषु प्राङ्गणेषु आभिमुख्येन तथाभूतं पक्ष्मभिलपन् इच्छयाङ्गीकुर्वन् ॥५०॥

कदाचिद्दक्षिणाशावर्त्तिनी रमणीमणीर्दोलन्तीरवेक्षमाणः करपद्मधृतपद्मरागरुचिधूलीना धूलीलया पराबभूव । आरुण्येन विलसत् कं सुखं यस्मात् तथाभूतं रेणुचयं करेणुचयं हस्तिनीसमूहं जयन्तीर्वैजयन्तीः पताकाः ॥५१॥

वलमानमत्यर्थं अतिशयेन प्रवलानन्दां उत्तरस्यां दिशि विलसितुं शीलं यस्याः सा चासौ विलासिनीश्रेणिश्चेति ताम् ॥५२॥

अपश्चिमा अनपकृष्टा आशा मनोरथो यस्यास्तां तारुण्यवती नामाली श्रेणिम् ॥५३॥

पूर्वकाष्ठायां पूर्वदिशि अपूर्वा या काष्ठा कृष्णदोलपर्य्यङ्कस्य कृष्णस्य च संमुखत्वात् अद्भुत उत्कर्षस्तां परिप्राप्तं दोलं पर्य्यङ्कं आरोहन्तीति ताः काष्ठोत्कर्षस्थिती दिशी इत्यमरः । गुणवारेण गुणसमूहेन अधिकया ॥ ५४ ॥

हरिः हरित् पूर्वादिक् तदादिदिक्चतुष्टयस्य तुष्ट्ये दोलतो दोलनतः ॥ ५५ ॥